सुधी-ग्रन्थमाला—१



SUDHI SERIES—1



# काशिकावृत्तिः

सम्पादकौ

स्वामी द्वारिकादासशास्त्री

आचार्यकालिकाप्रसादशुक्लः

*Sudhi Series-1*

# NYĀSA OR PAÑCIKĀ COMMENTARY
## OF ĀCĀRYA JINENDRABUDDHIPĀDA

AND

# PADAMAÑJARĪ
## OF HARADATTA MIŚRA

ON

# THE KĀŚIKĀVṚTTI

**[ Commentary on The Aṣṭādhyāyī of Pāṇini ]**
OF VĀMANA—JAYĀDITYA

**PART I**

**( CHAPTER FIRST )**

*CRITICALLY EDITED BY*

SWĀMI DWĀRIKĀ DĀS ŚASTRI
*Ācārya (Vyākaraṇa, Pāli & Bauddha Darśan)*

AND

Pt. KĀLIKA PRASĀD SHUKLA
*M. A., Vyākaraṇācārya*

SUDHI PRAKASHAN
VARANASI
1983

सुधीग्रन्थमालायाः प्रथमं पुष्पम्



बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितया

न्यासापरपर्यायकाशिकाविवरणपञ्चिकया

विद्वद्वरहरदत्तमिश्रविरचितया

पदमञ्जरीव्याख्यया च सहिता

श्रीमद्वामनजयादित्यविरचिता

# काशिकावृत्तिः

[ पाणिनीयाष्टाध्यायीव्याख्या ]

( प्रथमोऽध्यायः )

प्रथमो भागः


सम्पादकौ

स्वामी द्वारिकादासशास्त्री
व्याकरणपालिसाहित्यबौद्धदर्शनाचार्यः

आचार्यकालिकाप्रसादशुक्लः
एम० ए०, व्याकरणाचार्यः



सुधीप्रकाशनम्

वाराणसी

१९८३

व्याख्याद्वयोपेतायाः काशिकावृत्तेः

# द्वितीयं संस्करणम्

सिद्धिः साध्ये सतामस्तु प्रसादात् तस्य धूर्जटेः ।
जाह्नवीफेनलेखेव यन्मूर्ध्नि शशिनः कला ॥

मान्या विद्वन्मूर्धन्याः !

महान् प्रमोदावसरोऽयं यत् स्वल्प एव कालेऽस्या न्यास-पदमञ्जरीव्याख्याद्वयोपेतायाः काशिकावृत्तेः प्रथमं संस्करणं भवतां ग्रन्थालयेषु स्वकीयस्थित्या आत्मनो महत्त्वमतिष्ठिपत् ।

इदानीमियं व्याख्याद्वयोपेता वृत्तिरापणे नास्तीति अस्या द्वितीयं संस्करणमावश्यकमिति कृत्वाऽस्माभिरयं प्रयत्नः सुधीप्रकाशनेन समारब्धः । अत्रापि पूर्वसंस्करणवत् क्रमशः षट्सु भागेषु इयं वृत्तिश्चित्रमुद्रणविधिना प्रकाशमाप्स्यति ।

ततश्चास्याः 'काशिकावृत्त्युपस्कार'-नामा सप्तमो भागोऽस्य संस्करणस्यापूर्वा महती चोपलब्धिः भविष्यति । यतो हि तत्र वृत्ति व्याख्याद्वयं चाधिकृत्य सर्वं बहु वक्तव्यं समालोच्यं वा सम्पादकौ वक्ष्यतः, समालोचयिष्यतश्च । एतदर्थमस्माभिः सम्पादकौ सविनयं प्रार्थितौ ।

अतः इदं द्वितीयं संस्करणमपि पूर्ववद् विदुषामन्तेवासिनां चादरं प्राप्स्यतीत्याशास्महे ।

सुधीप्रकाशनम्,
वाराणसी

—प्रकाशकः

( प्रथमसंस्करणतः )

वाराणसेयसंस्कृतविश्वविद्यालयस्य वेदान्तविभागाध्यक्षाणां
सर्वतन्त्रस्वतन्त्राणां श्रीमतां रघुनाथशर्ममहाभागानां

## शुभाशंसनम्

इदं खलु विलोकयतो विमृशतश्च मम मानसमवारितप्रसरमुद्वेलमुल्लोलकल्लोलजालमुल्लासमासादयति यत् काशिकावृत्ति-पदमञ्जरी-न्यासग्रन्थैर्ग्रथितस्य ग्रन्थस्य प्रथमोऽध्यायः प्राङ्मनोरथपथातीतोऽपि साम्प्रतं दृग्गोचरतामायाति।

एतस्य शुक्लस्य सुकृतस्य कर्मणः कर्त्तारौ—वैयाकरणमूर्धन्यः पण्डितश्रीकालिकाप्रसादशुक्लमहोदयः, लब्धव्याकरणाचार्यपदवीकः स्वामी श्रीद्वारिकादासमहानुभावश्च; ग्रन्थस्यास्य सम्पादकाविमौ साम्प्रतमनवरतं सुश्लोक्यावग्रे च भविष्यति भविष्यतः, शताब्द्याः परतः सुलोक्यौ चैनेनैव सुकृतेन।

आशासे अस्मिन् प्रवर्त्तमाने प्रवर्द्धमाने च भाषापरिष्कारविरोधिनि विषयमात्रपरिष्कारप्रवणे कराले काले समावर्त्तनाय त्वरयति च च्छात्रवर्गे नूनमयं ग्रन्थोऽनूनमनवमं च पदमवाप्स्यत्यरमलङ्घ्य।

इदञ्चापरमप्याशासे

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति राजनीतिरपस्पशा॥

इति प्राक् परोक्षं कविभिः स्तूयमानोऽयं ग्रन्थ इतः परं प्रत्यक्षमपि स्तुतिं लप्स्यत इति।

अध्येषये च कुतुकाक्रान्तस्वान्तो गीर्वाणवागनुरक्तान् विपश्चितो यदस्य ग्रन्थस्य श्रुत्यङ्गस्य श्रवणमननाभ्यां श्रोत्रं संस्कुर्वन्त्विति।

वसन्तपञ्चमी २०२१ वै०
वाराणसी

रघुनाथशर्मा

## ( प्रथमसंस्करणतः )




# प्रकाशकीयम्

देवैरपि स्पृहणीयस्यास्य महनीयस्यार्यावर्त्तस्य प्राचीनेतिवृत्तसङ्कलनेन गौरवमावहन्ती सुरभारतीयं विश्वस्याखिलासु भाषास्वतिप्राचीनतमा। प्रातःस्मरणीयैर्विगतविविधकल्मषैर्मुनिभिः, आचार्यैः, पण्डितपुङ्गवैश्चास्यामेव देववाण्यां तानि तानि सन्दर्भरत्नानि ग्रथितानि, यैर्देशस्यास्य माहात्म्यं परां काष्ठां नीतम्।

परमिदानीं महदिदमसन्तोषकरमेव यदीदृश्या भाषाया भूयांसो ग्रन्थमणयः कालवशादेवं पारोक्ष्यमुपागताः, मन्ये ते विरचिता एव नासन्! तेषु केचित् लब्धात्मलाभा अपि कतिपयैः प्रकाशकैर्विकृतिं नीताः, केषाञ्चित्पत्त्राणि भ्रष्टानि, केषाञ्चिदङ्कनं न मनोहारि, केषाञ्चिच्च तत्रस्थः संदर्भ एव व्यत्यस्तः।

अतः, बहोः कालादस्माकं मनस्ययं विचारः पदमादधदासीद्यत् कश्चिन्मनस्वी दोषानिमाञ्चिरस्यादर्शभूतान् दुर्लभान् संस्कृतसन्दर्भान् प्रकाशयेत्, येन संस्कृतसमाजस्य चिरायोपकृतिर्भवेत्। एतद्धियैवास्माभिरिदं *प्राच्यभारतीप्रकाशनं* समारब्धम्। अत्र वयं यथासमयं सुदुर्लभान् संस्कृतभाषानिबद्धान् महत्त्वशालिनो ग्रन्थान् मुद्रापयित्वा प्रकाशयिष्यामः।

अस्य प्रथमं प्रकाशनम्—*माधवीया धातुवृत्तिः*, यत्र हि पाणिनीयधातुपाठमाश्रित्य *श्रीमत्सायणाचार्येण* धातूनामतिविस्तृतं साङ्गोपाङ्गं व्याख्यानं कृतम्। ग्रन्थोऽयं वैयाकरणानां कियानुपकारकोऽस्तीति मात्सर्यरागविधुरा भाषातत्त्वविदो विद्वांसो विदन्त्येव।

ततश्चेदानीमयमनेकेभ्यो वर्षेभ्यो लुप्तप्रायोऽपरो ग्रन्थः पाणिनीयशब्दानुशासनसम्बद्धः *काशिकावृत्तिनामा विद्वद्वरवामन-जयादित्यविरचितः, आचार्यजिनेन्द्रबुद्धिपादकृतन्यासेन श्रीहरदत्तमिश्रकृतपदमञ्जरीव्याख्यया* च सह षट्सु भागेषु विभज्य प्राकाश्यं नीयते, यस्य प्रथमो भागः प्रथमाध्यायमात्रम् प्रकाश्यते।

एतद्ग्रन्थरत्नस्य साधु सम्पादनार्थमस्माभिर्भृशं प्रार्थिताविमौ विद्वद्धौरेयौ—प्रथमः पण्डितप्रकाण्डः शास्त्रार्थमहारथी श्रीकालिकाप्रसाद-शुक्लमहोदयः, एम. ए., व्याकरणाचार्यः, यो हि वाराणसेयसंस्कृत-विश्वविद्यालयेऽनुसन्धानसहायकपदमलङ्करोति; अपरश्च विद्वत्पुङ्गवः स्वामिश्रीद्वारिकादासमहाभागः, व्याकरणपालिसाहित्यबौद्धदर्शनाचार्यः, वाराणसेयविद्वत्समाजे प्राप्तप्रतिष्ठः। आभ्यां पण्डितप्रकाण्डाभ्याम-परेऽप्यनेके ग्रन्थाष्टीकिताः, सम्पादिताश्च।

तदेवमनयोः शास्त्रविचारदक्षयोः साहाय्येनैतद्ग्रन्थरत्नस्यावशिष्ट-भागानामपि प्रकाशनमनुपदमेव भविष्यतीत्याशासाना वयं ग्रन्थरत्नमिदं विदुषां समक्षं समुपस्थापयामः।

प्राच्यभारतीभवनम्,
वाराणसी
१२।८।६५

प्रकाशकः

( प्रथमसंस्करणतः )

## सम्पादकीयम्

पाणिनीयं शब्दशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

भाषामधिकृत्य वैज्ञानिकसरण्या यावत्सुव्यवस्थितं सुदृढञ्च भारतीयैर्मनीषिभिर्विचारितम्, न तावदन्यत्र दृग्गोचरीभवति। भाषाया वर्गीकारः प्रकृतिप्रत्ययविश्लेषणम्, पदानां मूलभूतशब्दान्वेषणम्, धातुप्रत्ययवाच्यनिश्चयनम, पदार्थानां परस्परं सम्बन्धनिरूपणम्, प्रकृतिप्रत्ययार्थसंसर्गस्थापनञ्च भारतीयसंस्कृतशाब्दिकानां बुद्धिवैभवस्य परां काष्ठां बोधयति। देशेऽस्मिन् शताब्दीर्यावत् मेधाविनो वैयाकरणमूर्धन्याश्शब्दविद्यावगमाय माहात्म्यसम्पन्नानि तानि तानि शास्त्राणि निरमासिषुरिति न परोक्षं प्रेक्षावताम्। अमीषां शब्दशास्त्राणां सामर्थ्येनैव संस्कृतभाषा पराममरतां भजति। किमधिकम्, वैदेशिकैरपि विद्वन्मूर्धन्यैरेषां शब्दशास्त्राणां स्वकीयेषु भाषाशास्त्रेषु बहुतमामुपयोगः कृत इति केषां सुमनसां नाविदितचरम्। अथ च आसृष्टेरद्य यावत् व्यवस्थितभाषाशास्त्रराहित्येनाप्यनेका भाषा नातिचरमेव विलयं गताः, दुरवबोधा वा जाताः; परन्तु संस्कृतभाषाशाब्दिकानां विपुलयानुकम्पया संस्कृतं वाङ्मयं परःसहस्रं परप्रहारान् सोढ्वाऽपि जीवत् सत् सुतरां सुगमतां गच्छति।

भाषां स्थिरयितुं व्यवस्थापयितुं वा प्रातिशाख्यादिषु प्राचीनतमग्रन्थेषु निर्दिष्टेषु सङ्केतितेषु, सम्प्रति स्वसत्तामासादयत्सु चानेकेषु शब्दानुशासनेषु पाणिनीयशब्दानुशासनमेव सर्वातिशायीति केन तिरोधातुं साहसमाद्रियेत! संस्कृतवाङ्मयमधिगन्तुमपेक्ष्यमाणसकलसामग्रीसम्भृतमिदं पाणिनीयाष्टकमस्ति। यस्य रचनापरिपाटी न केनाप्यद्यावधि मनागप्यतिशयितेत्यतोऽधिकं सम्प्रति अप्रस्तुतप्रशंसाप्रसङ्गकलङ्को मा भूदिति विरम्यते। एतावदपि, विद्वत्समाजस्य सेवायां सादरमुपायनीक्रियमाणोऽयं व्याख्याद्वयोपेतो ग्रन्थोऽपि तदेव पाणिनीयाष्टकमुपजीव्य विरचित इति कृत्वा निवेदितम्।

## काशिकावृत्तिः

गच्छति काले पाणिनीयाष्टकसूत्राणि सारवन्त्यपि अल्पाक्षरत्वात्, असन्दिग्धान्यपि विश्वतोमुखत्वात् मध्यमधियां मन्दधियाञ्च कृते दुरवगाहाणि जातानि। तेषामिदं मान्द्यमवलोक्य अनुग्रहैकहृदयो भगवान् पतञ्जलिस्तेषु सूत्रेषु महाभाष्यं प्रणिनाय। यत्र सर्वाण्येव दुरूहाणि पाणिनीयसूत्राणि सरलया प्राञ्जलया च भाषया तथा व्याख्यातानि येन वराका अपि कियतैवायासेन दुरधिगममेतच्छास्त्रं पारं गच्छेयुः। ततोऽप्यवरस्मिन् काले महाभाष्यस्यास्य गूढाशयतया तत्रत्यानामभ्युपगमवादानां सिद्धान्तानाञ्च दुरधिगमतया मन्दमतीनां ततोऽभीष्टसिद्धावन्तरायमालोच्य कुणि-श्रीभूति-देवनन्दि-दुर्विनीत-चूर्णि-निर्ल्लूरादिविद्वद्भिस्तानि सूत्राणि ताभिस्ताभिर्वृत्तिभिरुपबृंहितानि; परन्तु करालेन कलिकालेन ताः सर्वा एवाकरुणं कवलिताः। इदानीं संस्कृत-समाजस्तासामुद्धरणमात्रैकशरणः संवृत्तः। अथापि भगवतो भूतभाव-नस्यासीमयानुकम्पया साम्प्रतमियं *काशिकावृत्तिरेव* पाणिनीयाष्टकसमु-पासकान् सूपकरोति। पाणिनीयसूत्राष्टकस्योपलब्धवृत्तिषु सर्वतः प्राचीनतमेयं काशिकावृत्तिः। अस्यां प्रतिसूत्रमनुवृत्ति-वृत्त्युदाहरण-प्रत्युदाहरणानि शङ्का-समाधानपुरःसराणि समुपलभ्यन्ते। वृत्तेरस्याः प्रौढा प्रतिपादनशैली च प्रौढानामपि चेतांसि चमत्करोति।

सा चेयं वृत्तिः पञ्चमाध्यायपर्यन्तम् (६५०-७०० ख्रै० श०) विद्वद्वर-जयादित्येन विरचिता, शेषाश्चान्त्यास्त्रयोऽध्याया विद्वत्कुलपतिना वामनेन विरचिताः—इति विद्वत्सम्प्रदायः। वृत्तेरस्या न्यासव्याख्यापर्यालोचनेनेद-मनुमीयते यदाभ्यां विद्वद्भ्यां पृथक् पृथगपि द्वे वृत्ती विरचिते; परं कालक्रमेण ते कथं विलुप्ते जाते, अथ वा तयोरेव सारमादायैषा नवीना वृत्तिस्ताभ्यामेव विद्वद्भ्यां परिष्कृता, अन्यैर्वा विद्वद्भिरर्वाचीने काले इत्थं प्रतिसंस्कृता—इत्येतत्सर्वं ग्रन्थस्यास्य भूमिकायां यथावसरं विस्तरतो विचारयिष्यते।

यद्यपि विदुषोरनयोः क्वचिद्यत्र-तत्र महाभाष्यतो वैमत्यं दरीदृश्यते; परं नैतेनैवास्या माहात्म्यं क्षीयेत! अथाप्यस्यां बहुत्र भाष्यानुक्ता-नामपि विषयाणां मनोहारि प्रतिपादनं विपश्चिदपश्चिमानामपि मनांसि बलादावर्जयति—इति सर्वथैवाभ्यसनीयेयं वृत्तिः।

## व्याख्याद्वयी—न्यासः, पदमञ्जरी च

अस्या वृत्तेरक्षुण्णं माहात्म्यमुररीकृत्यानेकैर्विद्वद्वरेण्यैरत्र पूर्णपाण्डित्याष्टीकाः विरचिताः। परं हन्त! तामिमां व्याख्याद्वयीमतिरिच्य ताः सर्वा एव नामतोऽपि विलयमिताः। तत्रैका— बोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचिता न्यासापरनामधेया 'काशिकाविवरणपञ्जिका', अपरा च विद्वद्वरहरदत्तमिश्रविरचिता 'पदमञ्जरी' च भगवत्या भारत्या भाण्डागारं बिभृतः। यद्यपि तत्र तत्र शास्त्रार्थविषयो महताडम्बरेण पदमञ्जर्यामेव विस्तरतः स्फोटितस्तथापि श्रीजिनेन्द्रबुद्धिपादानां व्याख्याशैली प्रौढा, पाण्डित्यपूर्णा, अधिगमितयाथातथ्या च; अतस्तस्या एव महत्त्वमधिकतरां वर्त्ततेऽधिगन्तॄणामधिजिगमिषूणाञ्च कृते—इति द्वे अपीमे व्याख्ये अस्मिन् संस्करणे काशिकया सहैव समायोजिते। एतत्समायोजनमेवास्य संस्करणस्यापूर्वं महत्त्वं ख्यापयिष्यति।

अथ चान्ते—यद्यपि कालक्रमसमीक्षणे, न्यासस्य प्राचीनत्वं स्फुटतरमिति काशिकातोऽनन्तरं तस्यैव स्थानं निधित्सितमासीद्, तथाप्यस्माभिः पदमञ्जर्या वर्तमानविद्वत्समाजे शास्त्रार्थसरणावभ्यर्हितत्वात्तस्या एव पूर्वनिपातः कृत इति क्षन्तव्या वयमेतिह्यैकचक्षुष्कैर्विद्वद्भिः।

## सम्पादनशैली

गूढाशयायाः काशिकावृत्तेः, प्रतिपदं शास्त्रार्थमुद्रां बिभ्राणायाः पदमञ्जर्याः, स्पष्टपदाया अपि गभीरार्थायाः काशिकाविवरणपञ्जिकाया यथायथं सम्पादनं बालक्रीडेव नानुमेया! आभिः पदे पदे यथा वयं व्यामोहे निपातितास्तदस्माकमेवानुभवैकगम्यम्। अथापि *प्राच्यभारतीप्रकाशनाध्यक्षाणां* प्राच्यसंस्कृतग्रन्थानां प्रकाशने कल्पनातीतमुत्साहं पर्यालोचं पर्यालोचम्, अविगणय्यापि महान्तमायासं सम्पादनेऽस्मिन् कर्मणि वयं व्यापृता अभूम। वृत्तीनामासां गाम्भीर्यमालोच्य परिश्रमं चास्माकमनुमाय साधुत्वासाधुत्वे विद्वांस एव प्रमाणम्।

अस्माभिरनुसृता सम्पादनशैली चेयम्—

(क) प्रायः प्रतिपृष्ठम् अनुकाशिकावृत्ति व्याख्ये स्थापिते।

(ख) व्याख्याद्वयेऽपि प्रतीकरूपाणि पदानि विभिन्नाक्षरैर्मुद्रापितानि, येन द्रष्टॄणां चक्षूंषि सद्य एव तत्राभिनिपतेयुः।

(ग) वृत्तौ व्याख्याद्वये वा समागतान्यन्यग्रन्थकर्तॄणां नामानि, उद्धरणानि च तथैव विभिन्नाक्षरैर्मुद्रापितानि; एककद्विकचिह्नादिभिश्च (' ' " ") संयोजितानि बोद्धॄणां सौकर्याय।

(घ) यत्र तत्र सत्यावश्यकत्वे टिप्पण्यादयोऽपि संयोजिताः।

(ङ) वृत्तेः, व्याख्याद्वयस्य च भाषाजाटिल्यनिरासार्थं तत्र तत्र दुरवगमः सन्धिजालोऽप्यस्माभिर्निरस्तः, येनायासमन्तरैवान्तेवासिनामप्यत्र सुखावगतिर्भवेत्, ग्रन्थस्यास्य च सौन्दर्यमक्षुण्णं स्यात्।

(च) अत एवास्माभिरधुनोपयुज्यमानानि विरामादिचिह्नानि अप्यत्र सर्वत्र सर्वथोपयोजितानि, येन ग्रन्थकर्तुर्हृदयं वाचकैः सपद्यासादितं भवेत्।

(छ) अनुसन्धित्सूनां विषयान्वेषणे समयव्ययो मा भूदिति प्रतिपृष्ठं कोणप्रदेशे व्याख्यायमानं सूत्रम्, अध्यायः, पादश्च स्थापितम्।

(ज) व्याख्यायमानानि सूत्राणि सर्वत्र (वृत्तौ, व्याख्याद्वये च) विभिन्नाक्षरैरेव मुद्रापितानि। वृत्तौ च सूत्राणामष्टाध्यायीगत-सङ्ख्यापि प्रदत्ता।

(झ) ग्रन्थस्य प्रारम्भ एवाक्षरक्रमेण प्रथमाध्यायगतसूत्रसूची सङ्कलिता।

एवं प्रकाशकानां त्वरया विवशैस्त्वरमाणैरप्यस्माभिर्ग्रन्थस्य महत्त्व-मवधारयद्भिरत्र हृदयेनैतत्कार्यं सम्पादितम्, यथा कश्चन प्रामाणिकः कुर्यात्। अद्यापि याः काश्चन त्रुटयः प्रमादात्सम्भूतास्ता विद्वद्भिः काले काले उद्बोधनीयाः, येनागामिनामध्यायानां सम्पादनावसरे कृतज्ञैरस्माभि-स्तथाविधास्त्रुटयो निवारिताः स्युरिति। तथा हि—

मर्त्यैरसर्वविदुरैर्विहिते क्व नाम ग्रन्थेऽस्ति दोषविरहः सुचिरन्तनेऽपि!

अन्ते च—वृत्तिम्, वृत्तिकारम्, वृत्तिस्थविषयञ्चाधिकृत्य, पदमञ्जरीम्, पदमञ्जरीकारम्, पदमञ्जरीस्थविषयञ्च; एवमेव न्यासम्, न्यासकारम्, न्यासस्थविषयञ्चाधिकृत्य यद् बहु वक्तव्यं समालोच्यं चास्ति, तत्सर्वं ग्रन्थस्यास्यान्तिमे भागे ग्रन्थभूमिकायां वक्ष्याम इति तावन्तं कालं क्षन्तव्या वयं विद्वद्भिरिति।

वसन्तपञ्चमी २०२१ वै० }
वाराणसी

सम्पादकौ

# सूत्रसूची

प्रथमाध्यायस्थसूत्राणामेतद्वृत्त्यनुसारिणाम् ।
सूची प्रदर्श्यते तावदक्षरक्रमपूर्विका ॥

## व्याकरणप्रशस्तिः

आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः ।
प्रथमं छन्दसामङ्गं प्राहुर्व्याकरणं बुधाः ॥

❀ ❀ ❀

तद् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् ।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते ॥

❀ ❀ ❀

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः ॥

—श्रीभर्तृहरिपादाः

❀ ❀ ❀

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥

❀ ❀ ❀

रूपान्तरेण ते देवा विचरन्ति महीतले ।
ये व्याकरणसंस्कारपवित्रितमुखा नराः ॥

—श्रीहरदत्तमिश्राः
( पदमञ्जरीकाराः )

❀ तस्मै श्रीगुरवे नमः ❀

# काशिकावृत्तिः

वृत्तौ भाष्ये तथा धातुनामपारायणादिषु ।
विप्रकीर्णस्य तन्त्रस्य क्रियते सारसंग्रहः ॥ १ ॥

## पदमञ्जरी

व्यक्तप्रधानपुरुषात्मकमस्वतन्त्रमेतत्समस्तमधितिष्ठति यः स्वतन्त्रः ।
तस्मै शिवाय परमाय दशाव्ययाय साम्बाय सादरमयं विहितः प्रणामः ॥१॥

स्वं स्वं मनोरथमवाप्तुमपेतविघ्नं यस्य प्रसादमनवाप्य न शक्नुवन्ति ।
पद्मासनप्रभृतयः प्रथमेऽपि देवास्तद्वस्तु हस्तिमुखमस्तु मयि प्रसन्नम् ॥२॥

तातं [1]*पद्मकुमाराख्यं*[1] प्रणम्याम्बां *श्रियं* तथा ।
ज्येष्ठं चाग्निकुमाराख्यम्[3] आचार्य*मपराजितम्* ॥ ३ ॥

यश्चिराय हरदत्त*संज्ञया* विश्रुतो दशसु दिक्षु दक्षिणः ।
उज्जहार पद*मञ्जरी*मसौ शब्दशास्त्रसहकारपादपात् ॥ ४ ॥

तामिमामनुपधेन चेतसा भावयन्तु भुवि भव्यबुद्धयः ।
कः खलु प्रणयिनि प्रियंवदे मत्सरी भवति मद्विधे जने ॥ ५ ॥

अविचारितरमणीयं कामं व्याख्याशतं भवतु वृत्तेः ।
हृदयङ्गमा भविष्यति गुणगृह्याणामियं व्याख्या ॥ ६ ॥

## काशिकाविवरणपञ्जिका ( न्यासः )

जयन्ति ते सदा सन्तः सर्वथा[4] यैरुपार्जितम्[4] ।
गुणानां सुमहद् वृन्दं दोषाणां च विमार्जनम् ॥ १ ॥

अन्यतः[5] सारमादाय[5] कृतैषा काशिका यथा ।
वृत्तिस्तस्या यथाशक्ति क्रियते पञ्जिका[6] तथा ॥ २ ॥

---

१. 'रुद्र०' इति पा० । २. '०रार्यम्' इति पा० । ३. '०रार्यम्' इति पा० ।
४–४. 'सर्वोया यैरुपार्जितम्', 'सर्वोपायैरुपार्जितम्' इति पा० ।
५–५. 'सर्वतः सारमाकृष्य' इति पा० । ६. 'पञ्जिका' इति मुद्रितपुस्तके पाठः ।

### पदमञ्जरी

इष्टदेवनमस्कारः कार्यः स[1] नेह[1] किंकृतः।
वृत्तौ सूत्रे तथा भाष्ये वार्त्तिके च तदुच्यते॥७॥
मनसा वचसा च कर्मणा कृत एवायमिहानिवेशितः।
न हि दर्भपवित्रपाणिताद्यपरं मङ्गलमत्र कीर्त्यते॥८॥

वृत्त्यन्तरेष्वसन्तं गुणं वदन् वृत्तिकृन्निजे ग्रन्थे प्रेक्षावतां प्रवृत्त्यै क्रियमाणं वस्तु निर्दिशति—*वृत्तौ भाष्ये इति*। वस्तुनिर्दिष्टे सति तेनार्थेनार्थिनः प्रवर्त्तन्ते, इतरे नेत्युपयुक्तो ग्रन्थादौ वस्तुनिर्देशः। वृत्त्यन्तरेष्वसम्भविनो गुणस्य कथनं तु प्रवृत्तिनियमार्थम्, कथमपरथा प्रवृत्तिर्विहाय वृत्त्यन्तराण्यस्याम्! स पुनर्गुणो वृत्त्यादिषु विप्रकीर्णस्य तन्त्रस्य यः सारभूतोंऽशस्तत्संग्रहात्मकत्वम्।

तत्र सूत्रार्थप्रधानो ग्रन्थो *वृत्तिः*, सा चेह पाणिनिप्रणीतानां सूत्राणां *कुणि*-प्रभृतिभिराचार्यैर्विरचितं विवरणम्। आक्षेपसमाधानपरो ग्रन्थो *भाष्यम्*, तदिह कात्यायनप्रणीतानां वाक्यानां पतञ्जलिप्रणीतं विवरणम्। तथाशब्दः समुच्चये। पारायणशब्दः प्रत्येकमभिसम्बध्यते—धातुपारायणं नामपारायणमिति। यत्र धातु-

### न्यासः

वृत्तावित्यादि। अथ किमर्थः काशिकारम्भेऽस्य श्लोकस्योपन्यासः? तस्याम-गौरवपरिहार्थः, गौरवप्रतिपादनार्थश्च। अत्र ह्यसति प्रागन्यासु वृत्तिषु रचितासु पश्चादियं रचितेति पुनरुक्ततादोषं सम्भावयतां तस्यामगौरवं स्यात्, न तु गौरवम्। अस्मिंस्तु सति न भवत्येष दोषः; यस्मादनेन स विशेषस्तस्या आख्यायते सम्यगशेष-शब्दव्युत्पत्तिहेतुः, यस्मिन् सति पुनरुक्ततादोषसम्भावनाऽगौरवहेतुर्न भवति, गौरवं चोत्पद्यते। स पुनर्विशेषो वृत्त्यादिषु विप्रकीर्णस्य तन्त्रस्य यः सारसंग्रहस्तद्युक्तता। न चासौ प्राच्यासु वृत्तिषु सम्भवतीति कुतः पुनरुक्ततादोषसम्भावना! तस्यां चासत्यां नागौरवं भवति; किं तर्हि? पूर्वोक्ताद् विशेषाद् गौरवमेव। तत्र च वृत्तिः—पाणिनि-प्रणीतानां सूत्राणां विवरणं चूल्लिभट्टिनल्लूरादिविरचितम्[2]। भाष्यं कात्यायनप्रणी-तानां[2] वाक्यानां विवरणं पतञ्जलिप्रणीतम्। तथेति समुच्चये। धातुनामपारायणादिषु चेत्यर्थः। अथ वा, सादृश्ये। यथा वृत्त्यादौ विप्रकीर्णस्य तन्त्रस्य सारसंग्रहः क्रियते तथा धातुनामपारायणादिष्विति यावत्। धातवो भूवादयः, नामानि प्रातिपदिकानि, तेषाम् पारं पर्यन्तं निष्ठामयन्ते गच्छन्ति याभ्यां शास्त्राभ्यां ते धातुनामपारायणे। पारायणशब्दः प्रत्येकमभिसम्बध्यते—धातुपारायणं नामपारायणञ्चेति। ते आदी येषामिति बहुव्रीहिः। आदिशब्देन शिक्षादीनां ग्रहणम्। विप्रकीर्णस्येति। विक्षिप्तस्य,

---

१-१. 'सन्नेह' इति मुद्रितः पाठः।

२-२. 'चूल्लिभट्टिनिल्लूरादिविरचितम्। भाष्यं वररुचिप्रणीतानाम्' इति वङ्गीयपाठः।

इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ २ ॥

पदमञ्जरी

प्रक्रिया तद्धातुपारायणम्, यत्र गणशब्दानां निर्वचनं तन्नामपारायणम्। आदि-शब्देन शिक्षोणादिफिषादेर्ग्रहणम्। *विप्रकीर्णस्य*=विक्षिप्तस्य, तन्त्रस्य='तन्त्रं प्रधाने सिद्धान्ते तन्तुवाये परिच्छदे' इति *निघण्टुः*, इह तु सिद्धान्तवचनः। तत्रापि व्याकरणशास्त्रे वर्त्तते, वृत्त्यादिसमभिव्याहारात्। तस्य यः *सार* उत्कृष्टोंऽशस्तस्य *संग्रहः क्रियते*, संगृह्यत इत्यर्थः।

तत्प्रकारं दर्शयति—*इष्ट्युपसंख्यानवतीति*। सूत्रेणासंगृहीतं लक्ष्यं येन संगृह्यते तदुपलक्षणमिष्ट्युपसंख्यानग्रहणम्। तेन वक्तव्यादीनामपि ग्रहणम्। वृत्त्यन्तरेषु सूत्राण्येव व्याख्यायन्ते, इयं पुनरिष्ट्यादिमती। तथा *शुद्धगणा*। वक्ष्यति 'लोहितडाज्भ्यः क्यष्वचनम्, भृशादिष्वितराणि.....' इति, 'कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यते' इति च, सैपा गणस्य शुद्धिः। वृत्त्यन्तरेषु तु गणपाठ एव नास्ति, प्रागेव शुद्धिः! 'णेरणौ' इत्यादौ गूढः सूत्रार्थो विवृतो यया सा *विवृतगूढ-सूत्रार्था*। गूढग्रहणं सूत्रार्थमात्रोपलक्षणम्। सूत्रार्थप्रधानेत्यर्थः। अनेन वृत्तिलक्षण-

न्यासः

विस्तारितस्येत्यर्थः। तन्त्रस्य व्याकरणशास्त्रस्येत्यर्थः। तद्धि तन्त्रमिव तन्त्रम्। दैर्घ्येण प्रसारितास्तन्तवस्तन्त्रमित्युच्यन्ते। यथा तदनेकस्य तिरश्चीनस्य तन्तोरनुग्राहकम्, तथेद-मप्यनेकस्य लक्ष्यस्येति, एतदस्य तन्त्रेण साधर्म्यम्। अथ वा—तन्त्र्यन्ते व्युत्पाद्यन्ते शब्दा अनेनेति तन्त्रं व्याकरणम्। अनेकार्थत्वाद्धातूनाम् 'तन्त्रि कुटुम्बधारणे' इत्येप धातुरत्र व्युत्पादने वर्त्तते। अथ वा, तन्त्रं सिद्धान्तः, 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः। सारसंग्रह इति। सारशब्दोऽयं नपुंसकलिङ्गो न्यायादनपेते वर्तते। तथा च अर्द्धर्चा-दिषु वक्ष्यति—'सारशब्द उत्कर्षे पुंल्लिङ्गो न्यायादनपेते नपुंसके' इति। सम्यक् समन्ताद्वा गृह्यते लक्ष्यं लक्षणञ्चानेनेति संग्रहः। 'ग्रहवृदृनिश्चिगमश्च' इति करणेऽप्। सारश्चासौ संग्रहश्चेति सारसंग्रहः। स पुनरयमेव काशिकाख्यो वृत्तिविशेषः। अत्र सारशब्देन निर्दोषतोद्भाविता। न हि सदोपस्य शास्त्रस्य न्यायादनपेतत्वमुपपद्यते; न्यायेन तस्य बोध्यमानत्वात्। संग्रहशब्देनापि गुणवत्ता ख्याप्यते। न ह्यन्यथा सम्यक् सर्वं लक्षणं लक्ष्यञ्चानेन शक्यते संग्रहीतुम्।

के पुनरत्र गुणाः? इष्ट्युपसंख्यानवत्त्वम्, शुद्धगणत्वम्, विवृतगूढसूत्रार्थत्वम्; व्युत्पन्नरूपसिद्धित्वञ्च। तथा च वक्ष्यति शास्त्रान्ते[1]—

इष्ट्युपसंख्यानवती शुद्धगणा विवृतगूढसूत्रार्था।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥ इति।

---

१. मुद्रितकाशिकासंस्करणेपु तु शास्त्रादावप्ययं श्लोक उपलभ्यते।

व्याकरणस्य शरीरं परिनिष्ठितशास्त्रकृत्यमेतावत्[1]।
शिष्टः परिकरबन्धः क्रियतेऽस्य ग्रन्थकारेण* ॥ २ ॥

पदमञ्जरी

मुक्तम्। व्युत्पन्नानां शब्दरूपाणां सिद्धिर्यस्यां सा *व्युत्पन्नरूपसिद्धिः*, उदाहरण मण्डितेत्यर्थः। यदि वोदाहृतशब्दरूपं यथा सिद्धयति तथा व्युत्पत्तिः क्रियते यस्यां सा *व्युत्पन्नरूपसिद्धिः*। दुर्निरूपेषु पदेषु कचित्प्रक्रियाऽभिधीयत इत्यर्थः। *वृत्तिरिति* ग्रन्थाभिधानम्। *काशिकेति* देशतोऽभिधानम्। काशिषु भवा 'काश्यादिभ्यष्ठञ्ञिठौ' काशिका॥

यथा पुनरयमंशः सारभूतः, तथा दर्शयति—*व्याकरणस्य* इति। एतावदेव हि शास्त्रशरीरं यदिष्ट्युपसंख्यानादि, एतावति हि शास्त्रकृत्यं परिनितिष्ठति = परिसमाप्यते। अस्यैव तु शास्त्रशरीरस्य परिकरबन्धो रक्षाबन्धः परिशिष्टोंऽशो ग्रन्थकारेण=भाष्यकारादिना, क्रियते आक्षेपसमाधानादिमुखेनायमेवांश उपस्थाप्यत इत्यर्थः। अत्र च व्याकरणविषया वृत्तिः क्रियत इति वचनात्तस्य यत्प्रयोजनं तदेवास्या अपीत्यर्थादुक्तं भवति।

अथ व्याकरणस्यैव किं प्रयोजनम्? किमनेन प्रश्नेन[2]! सर्वथाऽध्येयं व्याकरणम्। श्रूयते हि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति सन्ध्योपासनादिवदवश्यं कर्तव्यं व्याकरणाध्ययनमित्युक्तं भवति। तत्र यथाऽनुपासीनः सन्ध्यां प्रत्यवैति, तथाऽनधीयानोऽपि व्याकरणम्। तत्र व्याकरणं ज्यौतिषं निरुक्तं शिक्षा छन्दोविचितिः कल्पसूत्राण्यङ्गानि। अङ्गत्वं चाङ्गसंस्तवात्।

मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे॥
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते।

इत्युपकारकत्वाच्च।

न्यासः

अथ वा, संग्रहशब्दोऽयं भावसाधनः—संग्रहणं संग्रहः=संक्षेपः, शास्त्रभेदेन विप्रकीर्णस्य तन्त्रस्य पिण्डीकृत्यैकत्रावस्थापनमिति यावत्। सारशब्दस्तु प्रधानवचनः। यावता ग्रन्थसन्दर्भेण परिपूर्णता शब्दव्युत्पत्तेर्भवति स सारः। सारस्य संग्रहः सारसंग्रहः, तस्य करणं सुखोद्ग्रहणार्थम्। एकत्र हि व्यवस्थितस्य सुकरमुद्ग्रहणं भवति, दुष्करन्तु विप्रकीर्णस्य। सारग्रहणं परिकरबन्धनिरासार्थम्। स हि तस्योपकारकत्वादङ्गम्, अप्रधानम्। इतरस्तु तेनैवोपकार्यत्वादङ्गि, प्रधानम्।

* न्यासकारः श्लोकमिमं न व्याख्यातवान्।  1. 'कार्यं' इति पा०।
2. 'पृष्टेन' इति पा०।

## अथ शब्दानुशासनम् ॥

पदमञ्जरी

तत्र *व्याकरणम*र्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकरोति। *ज्यौतिष*मप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनं च कालविशेषं प्रतिपादयति। *निरुक्तं* तु व्याकरणस्यैव कार्त्स्न्यम्। *छन्दोविचिति*रपि 'गायत्र्या यजति' 'त्रिष्टुभा शंसति' इत्यादौ श्रुतानां गायत्र्यादिशब्दानां लक्षणतोऽर्थमाचष्टे। *शिक्षा*ऽप्यध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकारं प्रतिपादयति। *कल्पसूत्रा*ण्यपि प्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गेनोपेतस्य कर्मणः प्रयोगं कल्पयन्ति। षट्सु चाङ्गेषु व्याकरणं प्रधानम्; पदपदार्थज्ञानस्य तदायत्तत्वात्।

वृत्तिकारस्तु प्रयोजनप्रवणत्वात्प्रेक्षावत्प्रवृत्तेः सम्भवाच्च प्रयोजनस्य, भाष्यकारेण पठितं साक्षात्प्रयोजनमाह—*अथेति*। अथेत्ययं शब्दोऽधिकारार्थः। अधिकारः= प्रस्तावः, प्रारम्भः। तमथशब्दो द्योतयति। शब्दानुशासनमित्येतावत्युच्यमाने सन्देहः स्यात्—किं शब्दानुशासनं प्रारभ्यते? उत श्रूयते? इति। अथशब्दे तु सति क्रियान्तरव्यवच्छेदेन प्रस्तूयत इत्येषोऽर्थो निश्चीयते। विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतो ज्ञाप्यन्ते येन तच्छास्त्रमत्र *शब्दानुशासनम्*। अनुपूर्वो हि

न्यासः

अथेत्यादि। अथ शब्दोऽधिकारार्थः, अधिकारः=प्रस्तावः, शब्दानुशासनशास्त्रं प्रस्तूयत इत्यमुमर्थमथशब्दो द्योतयति। 'शब्दानुशासनम्' इत्येतावति ह्यभिहिते संदेहः स्यात्—किं शब्दानुशासनमारभ्यते? पठ्यते? श्रूयते वा? इति, अथशब्दप्रयोगे त्वर्थान्तरव्यवच्छेदेन प्रस्तूयत इत्येषोऽर्थो निश्चीयते। अनुशिष्यन्ते संस्क्रियन्ते व्युत्पाद्यन्तेऽनेन शब्दा इत्यनुशासनम्। शब्दानामनुशासनं शब्दानुशासनम्।

अत्र केचिच्चोदयन्ति—"'उभयप्राप्तौ कर्मणि' इत्यनेनात्र षष्ठी, ततश्च 'कर्मणि च' इत्यनेन समासप्रतिषेधेन भवितव्यम्" इति, एतच्चायुक्तम्; यत्र ह्युभयोः प्राप्तिस्तत्रानेन कर्मणि षष्ठी विधीयते। क्व चोभयोः प्राप्तिः? यत्र सामर्थ्यप्राप्तमुभयोः कर्तृकर्मणोरुपादानम्, यथा—आश्चर्यो गवां दोहोऽशिक्षितेनागोपालकेनेति, एवं नाम दुर्दोहानां गवामशिक्षितेनागोपालकेन दोह इत्याश्चर्यभूतोऽत्र गवां दोहः प्रतिपादयितुमिष्टः; स च यदि दुर्दोहानां गवामुपादानं क्रियते, अशिक्षितस्यागोपालकस्य च कर्त्तुः, एवं शक्यः प्रतिपादयितुमाश्चर्यशब्दः, नान्यथेति सामर्थ्यप्राप्तमुभयोरुपादानम्। शब्दानुशासनमित्यत्र तु शब्दानामिदमनुशासनम्, नार्थानाम्—इत्येतावतोऽर्थस्य विवक्षितत्वात्, तस्याचार्यस्य कर्त्तुरुपादानमन्तरेणापि प्रतिपादयितुं शक्यत्वादाचार्योपादानमकिञ्चित्करम्। तस्मान्नात्रास्ति द्वयोरपि=कर्तृकर्मणोः सामर्थ्यप्राप्तमुपादानम्। ततश्चोभयप्राप्तिरपि नास्त्येव। असत्याञ्च तस्यां न 'उभयप्राप्तौ कर्मणि' इत्यनेन षष्ठी, केन तर्हि? 'कर्तृकर्मणोः कृति' इत्यनेन। ततश्चेध्मप्रव्रश्चनवत् समासो भविष्यति। अथ वा, शेषलक्षणैवेयं षष्ठीत्यचोद्यमेतत्।

पदमञ्जरी

शासिर्विविच्य ज्ञापने दृष्टः। तद्यथा—'अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः' इति, 'सं पूषन्विदुषा नय यो अञ्जसानुशासति'[1] इति च। ततः करणे ल्युट्, शब्दानामनुशासनं शब्दानुशासनमिति कर्मणि षष्ठ्या समासः। अत्र च शब्दानामिदमनुशासनं नार्थानामित्यर्थव्यावृत्तिपरायां चोदनायां कर्तृविशेषस्याविवक्षितत्वादुभयप्राप्त्यभावान्न 'उभयप्राप्तौ कर्मणि' इत्यनेन षष्ठी, किं तर्हि ? 'कर्तृकर्मणोः कृति' इत्यनेनेति। 'कर्मणि च' इति न निषिद्धः समासः।

अनिदंप्रथमाः शब्दाः साधवः परिकीर्त्तिताः।
त एव शक्तिवैकल्यप्रमादालसतादिभिः॥
अन्यथोच्चारिताः पुंभिरपशब्दा इतीरिताः।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः॥

यद्यपि लोके गवादयो गाव्यादयश्च सममेव प्रयुज्यन्ते, वाचकत्वाभिमानोऽपि सम एव तेषु लौकिकानां साधीयान् गाव्यादिषु; तथापि गवादयोऽनादयः साधवस्त एव साक्षाद्वाचकाः। गाव्यादयस्तु बालादिभिरशक्त्यादिना गवाद्युच्चारणेच्छयैव तथा तथोच्चार्यन्ते। आदिमन्तोऽपभ्रंशाः, ते च स्वयमवाचका अपि प्रथमं गवादिशब्दस्मरणद्वारेणार्थधियं जनयन्ति। ये च तत्रैव प्रथमे व्यवहारे व्युत्पाद्यन्ते, तेषां गवादिवत्तेष्वेव वाचकत्वाभिमानः। एवं तन्मूलानामपि।

तत्र ये साधवस्ते शास्त्रेणानुशिष्यन्तेऽसाधुभ्यो विविक्ताः प्रकृतिप्रत्ययविभागेन ज्ञाप्यन्ते—इमे साधव इति। कथं पुनरिदमाचार्येण पाणिनिनाऽवगतमेते साधव इति ? आपिशलेन पूर्वव्याकरणेन। *आपिशलिना* तर्हि केनावगतम् ? ततः पूर्वेण व्याकरणेन। यद्येवम्, अन्धपरम्पराप्रसङ्गः, तद्यथा—शुक्लं क्षीरमित्यन्धेनोक्ते, केनेदमवगतमिति पृष्टो यदान्धान्तरं मूलं निर्दिशति, सोऽप्यन्धान्तरम्, तदा नैतद्वचः शौक्ल्ये प्रमाणं भवति, तादृगेतत् ? नैष दोषः; सर्वे एव हि ते स्वे स्वे काले गाव्यादिभ्यो विविक्तान् गवादिशब्दान् प्रत्यक्षत एवोपलभन्ते। चत्वारो वेदा ऋग्यजुःसामथर्वणलक्षणाः। तत्र ऋग्वेद एकविंशतिधा भिन्नः, एकशतं यजुःशाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः, षडङ्गानि, मीमांसान्यायविस्तरः, अष्टादश पुराणानि, अनन्तान्युपपुराणानि, अष्टादश स्मृतयः, अनन्ता उपस्मृतयः, भारतरामायणादिरितिहासः, आयुर्वेदः, धनुर्वेदः, गान्धर्वोऽर्थशास्त्रं काव्यानि नाटकानि—एतावान् प्रयोगस्य विषयः। तद्यस्यात्र सर्वत्र निष्ठा, स तावत्सर्वानेव व्याकरणानुगतान् शब्दान् प्रत्यक्षयति। व्याकरणेन च पूर्वस्मिन्नपि काले तेषां सत्तामनुसन्धत्ते, एषा अस्मदादीनां गतिः। *पाणिनि*रपि स्वकाले शब्दान् प्रत्यक्षयन्नापिशलादिना पूर्वस्मिन्नपि काले सत्तामनुसन्धत्ते। एवमापिशलिः; अनादिरयं संसारः। कथं पुनरस्मदादीनां सर्वलक्ष्यदर्शित्वम् ? मा भूद-

---

१. छान्दसोऽयं प्रयोगः।

पदमञ्जरी

स्मदादीनाम्, अस्मद्विशिष्टानां महर्षीणां सम्भवति। यस्य वा ईश्वरानुग्रहः स स प्रत्यक्षयति। अत्रैव हि लौकिकाः स्मरन्ति—

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥ इति।

अक्षरसमाम्नायं च व्याचक्षते देवसूत्राणीति।

अथ वा कस्यचित्केचिदपरस्यापरे तथा।
अन्यस्यान्ये तथा शब्दाः सन्ति दर्शनगोचराः॥

तथा च—

यद्विस्मृतमदृष्टं वा सूत्रकारेण तत्स्फुटम्।
वाक्यकारो ब्रवीत्येवं तेनादृष्टं च भाष्यकृत्॥

अत एव च पाणिनीयमेतत्त्रिमुनि व्याकरणं वदन्ति सन्तः। श्रवणेन्द्रियगोचरांश्च शब्दा इति नास्त्यन्धपरम्पराप्रसङ्गः। यस्मात्स्वे स्वे काले सर्वे शब्दाः प्रत्यक्षतो गृह्यन्ते, पूर्वपूर्वव्याकरणवशेन तु तस्मिंस्तस्मिन् काले सत्तानुसन्धीयत इत्येतावत्। तस्मान्नास्त्यन्धपरम्पराप्रसङ्गः। न हि चक्षुष्मति मूले कथिते पयसः शौक्ल्यमप्रमाणं भवति।

यद्यपीतिहासपुराणादिष्वपशब्दा अपि संभवन्ति, तथापि येषामेव पूर्वपूर्वव्याकरणवशेन तस्मिंस्तस्मिन्काले सत्तानुसन्धानं त एवानादयः साधव इति निर्णीयते।

यथैव वेदवाक्यानां पाठे सत्यपि सङ्करे।
बहूनामभियुक्तानामुपदेशेन निर्णयः॥

आह—

अनादिता चेत्साधुत्वं संज्ञाशब्देषु का गतिः?
उच्यते, नामकरणे गृह्येषु नियमश्रुतेः॥
यथाकामं न संज्ञानां विनियोगः समस्ति नः।
तस्मादनादिता संज्ञास्वपि नैव विरुध्यते॥
यास्तत्तद्देशभाषाभिः संज्ञास्तासां न साधुता।
लृकारवार्त्तिके चैतद्व्यक्तं कात्यायनोऽब्रवीत्॥

न हि यथारुचि संज्ञा शक्यते कर्तुं गृह्येषु नियमविधानात्। तत्र *आपस्तम्बः*—'द्व्यक्षरं चतुरक्षरं वा नाम पूर्वमाख्यातोत्तरम्' इत्याह। *बौधायनस्त्वधिकमप्याह*—'ऋष्यणूकं देवतानूकं वा' इति। ऋष्यणूकम् = ऋष्यभिधायि, देवतानूकम्=देवताभिधायि। 'कृतं कुर्यात्, न तद्धितम्' इति गृह्यान्तरम्। तस्मादनादिप्रयुक्तानामेव 'द्रविणोदा' 'वसिष्ठः, 'रुद्रः', इत्यादीनां संज्ञात्वेन विनियोगः। या पुनर्देश-

पदमञ्जरी

भाषाभिः संज्ञाः कुचिमञ्जीत्यादयः, न तासां साधुत्वम् । तदेतत् लृकारोपदेशस्य प्रयोजननिराकरणावसरे वार्त्तिककारेणाप्युक्तम्—'न्याय्यभावात्कल्पनं संज्ञादिषु' इति । यदृच्छया कश्चित् लृतको नाम, तस्मै दध्य्लृतकाय देहीति अच्कार्यं यथा स्यादिति लृकार उपदिश्यते; तत्र न्याय्यभावात् न्याय्य ऋतकशब्दः, स हि कृदन्तः ऋतीयतेः कुनि ऋतक इति । ततश्च तस्यैव संज्ञात्वेन कल्पनं युक्तम्, स एव संज्ञात्वेन कल्पयितव्य इत्यर्थः । आदिशब्देनैतद्दर्शयति—क्रियाशब्दा अपि न लक्षणमस्तीत्येव प्रयोक्तव्याः, किं तर्हि ? अनादिप्रयुक्ता एवेति । तेषु चानादिमत्त्वमाप्तोपदेशादवगन्तव्यम् । यथा—'न हि वचिरन्तिपरः प्रयुज्यते' इति ।

अस्त्वेवं शास्त्रीये नामकरणे,

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते टिघुभादयः ।
कथं नु तासां साधुत्वं नैव ताः साधवो मताः ॥
अनपभ्रंशरूपत्वात् नाप्यासामपशब्दता ।
हस्तचेष्टा यथा लोके तथा सङ्केतिता इमाः ॥

ततश्च—

नासां प्रयोगेऽभ्युदयः प्रत्यवायोऽपि वा भवेत् ।
लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥

तदेवमनादिरनपभ्रष्टता साधुत्वमिति स्थितम् । अपरे तु—अभ्युदययोग्यतां साधुत्वमातिष्ठन्ते । सा च व्याकरणपरम्परयाऽवसीयत इत्याहुः । अपर आह—शब्दावान्तरजातिः साधुत्वम्, सा च व्याकरणपरिकर्म्मिते चेतसि चकास्ति रत्नतत्त्वमिव परीक्षकाणाम् । आह च—

'अनपभ्रष्टतानादिर्यद्वाऽभ्युदययोग्यता ।
व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता' ॥ इति ।

अस्त्वेवं साधुत्वम्, अस्तु च व्याकरणं साधूनां प्रज्ञापनम्, किं पुनरेतैः प्रज्ञापितैः प्रयोजनम् ? मा भूदन्यत्, ज्ञानमेव प्रयोजनम् । श्रूयते हि 'यो वा इमां वाचं पदशोऽक्षरशः स्वरशश्च वेद स आर्त्विजीनः स्याद्' इति । आर्त्विजीनः = यजमानः, ऋत्विजमर्हतीति । अथ वा आर्त्विजीनः = ऋत्विक्कर्मार्हतीति याजकोऽप्यार्त्विजीनः, 'यज्ञर्त्विग्भ्यां घखञौ' इति सूत्रेण 'यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम्' इति वार्त्तिकेन च खञ्, 'विद्वान् यजेत्, विद्वान्याजयेत्' इति द्वयोरपि विदुषोरधिकारात् । स्मर्यते च—

'यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ[1] पङ्क्तिपावनपावनौ' ॥ इति ।

---

१. 'पुरुषौ पुण्यौ' इति पा० ।

पदमञ्जरी

'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति' ॥ इति च।

तथा—

'निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते' ॥ इति।

तदेवं साधूनां शब्दानां प्रकृतिप्रत्ययादिविभागेन ज्ञानमेव तावत् पुरुषार्थः। न च तत्रोपायान्तरं लघीयोऽस्ति, अन्यदतो व्याकरणात्। यस्य चैतन्नास्ति, तस्याध्ययनमेव निष्फलम्। श्रूयते हि—

'यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' ॥

अविज्ञातम्=प्रकृत्यादिविभागेनाविज्ञातार्थमिति नैरुक्ताः। अर्थज्ञानमपि व्याकरणायत्तमेव। किं च साधूनां प्रज्ञापनं प्रयोगोऽपि तेषामेव यथा स्यादिति। तद्विह साधून् प्रज्ञापयत आचार्यस्य, साधुभिरेव भाषितव्यं नासाधुभिरित्यभिमतं लक्ष्यते। अनया स्मृत्या मूलभूता श्रुतिरप्यनुमीयते, यथाष्टकादिषु—

'ननु चार्थाभिधानाय प्रयोगः शब्दगोचरः।
प्राप्त इत्यविधेयस्स्यात् क्षुधितस्येव भोजनम्' ॥

उच्यते—

'अर्थप्रयुक्ते शब्दानां प्रयोगे समुपस्थिते।
धर्माय नियमः शास्त्रे प्राङ्मुखत्वादिवद्भवेत्' ॥

क्षुदुपघाताय भोजने प्रवृत्तिः, शक्यं च यत्किञ्चन दिङ्मुखेन भुञ्जानेनापि क्षुदपहन्तुम्; अथ च तत्र धर्माय नियमः क्रियते—'प्राङ्मुखोऽन्नानि भुञ्जीत' इति, तद्वदिहापि साधुभिरसाधुभिश्च भाषणे प्राप्ते नियमः क्रियते—'साधुभिरेव भाषेत, एतैर्भाषमाणस्य धर्मो भवति, धर्मादभ्युदयः' इति। श्रूयते च 'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति' इति। स्मर्यते च—

'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः' ॥ इति

कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु मध्ये पठितोऽयं श्लोकः। तथा साधुष्वपि सामान्यलक्षणान्विताद्विशेषलक्षणान्वितस्य प्रयोगे फलविशेषः स्मर्यते—

'नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः।
अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः' ॥ इति।

अयमर्थः—कमेः 'आयादय आर्धधातुके वा' इति णिङभावपक्षे लुङि 'कमेरुपसङ्ख्यानम्' इति चङो विशेषलक्षणम्, णिङ्भावपक्षे तु 'णिश्रिद्रुस्रुभ्यः' इति सामान्यलक्षणम्। तत्र ये विशेषलक्षणस्य स्मरन्तः 'अचकमत' इति प्रयुञ्जते, ते सुयुक्तै-

पदमञ्जरी

वंडवारथैरिष्टसुखं नाकं स्वर्गं यान्ति, ये तु सामान्यलक्षणवशेनाचीकमतेति भाषन्ते, ते पादौ कर्षन्तः स्वर्गं यान्ति इति। चङ्विधौ भाष्यकारेण पठितोऽयं श्लोकः। तदेवं साधून् प्रयुञ्जानस्याभ्युदयो भवतीति नियमार्थः। अपर आह—गम्यागम्यवद्भक्ष्याभक्ष्यवच्चायं नियमः। तद्यथा—रागात् स्त्रीषु प्रसजन्तं प्रत्युच्यते 'इयं गम्येयमगम्या' इति, शक्यते च यां काञ्चिदपि गच्छतो रागविगमः कर्तुम्, तत्र नियमः—'इयमेव गम्या, अन्यां गच्छन् प्रत्यवेयात्' इति। तथा क्षुधा मांसभक्षणे प्रवृत्तिः, शक्यं च यत्किञ्चिन्मांसं भक्षयता क्षुदुपहन्तुम्, तत्र नियमः—'पञ्च पञ्चनखा भक्ष्याः' पञ्चैव गोधादयो भक्ष्याः, अन्यत्र प्रत्यवायः' इति; तद्वदिहापि साधुभिरेव भाषेत, अन्यैर्भाषमाणः प्रत्यवेयात्, इति नियमार्थं इति। तथा च *ब्राह्मणम्*—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः, तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः' इति। अत्र 'हेलयो हेलयः' इति वाक्यद्विर्वचनमपशब्दः। 'हैहेप्रयोगे हैहयोः' इति प्राप्तस्य प्लुतस्याकरणमित्यन्ये। अरिशब्दे रेफस्य लत्वमित्यपरे। तथा—

'दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥'

इत्यपशब्दप्रयोगे प्रत्यवाय उदाहृतः। 'मन्त्रो हीनः' इति प्रसिद्धः पाठः। स्वरेण स्वरतः आद्यादित्वात्तसिः। मिथ्याप्रयुक्तः=यदर्थप्रतिपादनाय प्रयुक्तः शब्दस्ततोऽर्थान्तरं स्वरवर्णदोषान्प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः। वागेव वज्रो वाग्वज्रः। यथेत्युदाहरणे। इन्द्रशत्रुः=इन्द्रशत्रुशब्दः, स हि स्वरकृतादपराधाद्यजमानं हिंसितवान्। इन्द्रमभिचरता हतपुत्रेण त्वष्ट्रा 'इन्द्रशत्रुर्वर्धस्व' इति मन्त्रः प्रयुक्तः, तत्रेन्द्रस्य शत्रुरिति षष्ठीसमासार्थे विवक्षितेऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्तः प्रयुक्तः। तत्र बहुव्रीह्यर्थोपसंहारादिन्द्र एवास्य शत्रुरभवत्।

कः पुनर्बहुव्रीहितत्पुरुषयोरर्थभेदः, यावता यस्येन्द्रः शत्रुः इन्द्रस्याप्यसौ शत्रुरेव, सपत्नपर्यायः शत्रुशब्दः? नैष दोषः, क्रियाशब्दोऽत्र शत्रुशब्दः, शातयिता शत्रुरिति। तत्रेन्द्रस्य शातयिता भूत्वा वर्धस्वेति षष्ठीसमासेऽर्थः। बहुव्रीहौ त्विन्द्रशातयितृक इति। ततश्च स्पष्ट एवार्थभेदः। कथं पुनरत्राद्युदात्तत्वस्य वान्तोदात्तत्वस्य वा प्रसङ्गः, यावता यज्ञकर्मणीत्येकश्रुत्या भवितव्यम्? अयमप्यदोषः; तत्र हि जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयते, स्वेच्छया प्रयुज्यमानश्च मन्त्रो न भवति। यदि वा एकश्रुत्यभावादेवात्र प्रत्यवायः। तथा 'यस्तु प्रयुङ्क्ते' इति श्लोकेन दुष्यति चापशब्दैरिति दोषो दर्शितः; तस्मादपशब्दप्रयोगेऽधर्म इति तदेतद्यज्ञकर्मणि सर्वेषामभिमतम्। तथा च प्रायश्चित्तविधिरपि

पदमञ्जरी

तत्र भवति 'आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेत्' इति। प्रायश्चित्ते भवा प्रायश्चित्तीया। यज्ञकर्मणोऽन्यत्र न प्रत्यवाय इति केचित्। अन्ये तु तत्रापि कियन्तं प्रत्यवायमिच्छन्ति। तथा च 'नानृतं वदेद्' इति निषेधः। द्विविधं ह्यनृतम्—शब्दानृतम्, अर्थानृतं च। तथा हि—शब्दस्य अर्थस्य वाऽन्यथा प्रतिपत्तिहेतुरुच्चारणमनृतम्, तदत्र प्रतिषिध्यते। यथाऽर्थानृतं वदतः प्रत्यवायः, एवं शब्दानृतमपीत्यलम्। इयता स्थितमेतत्–शब्दानुशासनमित्यन्वर्थसंज्ञोच्चारणेन व्याकरणप्रयोजनमन्वाख्यायत इति।

अथ किं सूत्रकारेण नेदमुक्तं प्रयोजनम्।
यथा तन्त्रान्तरेष्वादौ प्रयोजनमुदीर्यते ?

उच्यते;

काणादे पाणिनीये वा कुत्र लोकः प्रवर्त्तते।
उक्तं प्रयोजनं यत्र यत्र वा नैतदीरितम्॥

तस्मात्—

यत्र प्रयोजनं व्यक्तं तत्र लोकः प्रवर्त्तते।
न त्ववश्यमिदं वाच्यं ग्रन्थादाविति मन्महे॥

किञ्च- प्रयोजनवचनस्य किं प्रयोजनम् ? तदर्थिनां तत्र प्रवृत्तिरिति चेत्, न; पुंवाक्यानां विप्रलम्भभूयिष्ठत्वात्तेभ्य उत्पन्नोऽपि प्रत्ययो द्रागेव लीयते, ततश्च सकलशास्त्रश्रवणोत्तरकालं तन्निश्चयो भवति, ततः किं न प्रयोजनश्रवणमात्रादेव प्रवृत्तिः, अयं सूत्रकारो गुडजिह्विकान्यायेन यत्किञ्चित्प्रयोजनमुक्त्वा अन्यस्मिन्नेव स्वाभिमते प्रवर्त्तयेदिति सम्भावयन्तो न प्रयोजनप्रतिपादनमाद्रियते, तत्कथं प्रवर्त्तेरन्! अथ सन्देहात्प्रवृत्तिः? अस्त्वेवं शास्त्रे, प्रयोजनवाक्ये तु कथं प्रवृत्तिः ? न हि तस्य प्रयोजनमुक्तम्। अथ तस्याप्युच्येत ? तस्यापीत्यनवस्था स्यात्। अथ सूत्रकारः स्वयमेवोपसृत्य तत्र तत्र प्रवर्त्तयति, शास्त्रेऽप्येवमेवास्तु, किं प्रयोजनवचनेन! भाष्यकारस्तु विवरणकारपदवीमवगाहमानः प्रयोजनप्रतिपादनमाश्रयते, वृत्तिकारोऽपि तदेव पठितवान्।

तथा वेदरक्षापि प्रयोजनं व्याकरणस्य। ननु नियतानुपूर्वीकस्य शिष्याचारपरम्परया धार्यमाणशरीरस्य वेदस्य का नाम रक्षा व्याकरणेन ? सत्यम्; ये भाषायामदृष्टा लोपागमवर्णविकाराः केवलं छन्दस्येव दृश्यन्ते, ते केवलप्रयोगशरणैः प्रामादिकाः संभाव्येरन्; वैयाकरणस्तु 'लोपस्त आत्मनेपदेषु' इति लक्षणदर्शी तदेव रूपं स्थापयति।

तथा ऊहोऽपि प्रयोजनम्। यत्राङ्गजातं पूर्णमुपदिष्टम्, सा प्रकृतिः–दर्शपूर्णमासादिः; यत्र न, सा विकृतिः–'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादिः। तत्र

पदमञ्जरी

वैकृतस्य विधेरुपकारापेक्षायां तन्मुखेन प्राकृतमङ्गजातं प्राप्यते। तत्र यस्याङ्गस्य प्रकृतौ यो जन्यतयोपकारः क्लृप्तः, यथा 'व्रीहीनवहन्ति' इत्यत्रावघातस्य वैतुष्यम्, तस्य विकृतावसम्भवेन निवृत्तिः, यथा कृष्णलेष्ववघातस्य। यथा चान्यदङ्ग-जातं प्राप्यते, एवं मन्त्रोऽपि। तस्य चानुष्ठेयार्थप्रकाशनं कार्यं प्रकृतौ। तत्र प्रकृतौ यस्य मन्त्रस्य यदभिधेयं तत्साकल्येनाभिधेयं विकृतौ नास्ति तस्य सर्वस्यैव निवृत्तिः, यथा कृष्णलेष्ववघातमन्त्रस्य। 'अवरक्षो दिवः सपत्नं वध्या-सम्' इति। यस्य त्वेकदेशस्याभिधेयं नास्ति, तस्य तावन्मात्रं निवर्तते, यथा– 'अग्नये जुष्टं निर्वपामि' इत्यत्र देवताभिधायि पदं सौर्यादिषु निवर्त्तते। न च विभक्तेरलुप्तद्वारत्वादेकारस्यावस्थानप्रसङ्गः, अकारान्तव्यतिरिक्तेष्वेव ह्येकारस्य संप्रदानं वाच्यम्, तत्र तु यशब्दस्य वाच्यम्; ततश्चेकारान्तेऽग्निशब्दे निवर्त्तमाने एकारोऽपि निवर्तेत। ततः सौर्ये कर्मणि देवताभिधायि चतुर्थ्यन्तं यपदमूह्यं सूर्यायेति। तथा 'देवीरापः शुद्धा स्थ' इति अप्सु विनियुक्तो मन्त्रः, तस्याज्ये ऊँहो देवाज्यं शुद्धमसीति। तथा पुरोडाशेऽवदानमन्त्रः–'मा भेर्मा संविक्था' इति, तस्य धानासूहः—मा भैष्ट मा संविजिध्वमित्यादिः। न चैतदवैयाकरणानां सुकरम्।

तथाऽसन्देहः। 'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इत्याम्नायते। तत्र सन्देहः– किं स्थूला पृषती स्थूलपृषती? आहोस्वित् स्थूलानि पृषन्ति यस्याः सा स्थूल-पृषतीति? तत्र वैयाकरणः पूर्वपदप्रकृतिस्वरेण बहुव्रीह्यर्थं निश्चिनोति। तदेवम्

उपासनीयं यत्नेन शास्त्रं व्याकरणं महत्।
प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम्॥

किं बहुना,

इदमाद्यं पदस्थानं मुक्तिसोपानपर्वणाम्।
इयं सा मोक्षमाणानमजिह्मा राजपद्धतिः॥
रूपान्तरेण ते देवा विचरन्ति महीतले।
ये व्याकरणसंस्कारपवित्रितमुखा नराः॥

न्यासः

व्याकरणस्य चेदमन्वर्थं नाम शब्दानुशासनमिति। अतस्तेनैव सूचितत्वात् प्रयो-जनस्यानभिधानम्। येन हि शब्दा अनुशिष्यन्ते, तस्य तदुद्देशे प्रवृत्तिः। यस्य च यदुद्दिश्य प्रवृत्तिः, तत्तस्य प्रयोजनं भवति। तदेतदुक्तं भवति—शब्दानुशिष्टिरस्य प्रयोजनमिति। एतच्च साक्षात् प्रयोजनम्, पारम्पर्येण तु वेदरक्षणादीनि प्रयोजनानि भाष्यादवधार्याणि। सम्बन्धस्तु साध्यसाधनभावलक्षणः। शब्दानुशिष्टेः साध्यायाः; व्याकरणस्य साधनस्य च यः सम्बन्धः, स प्रयोजन एवान्तर्भूतः।

**केषां शब्दानाम् ? लौकिकानां वैदिकानां च।**

पदमञ्जरी

*केषां शब्दानामिति*। कथं पुनरनुशासने गुणीभूतानां शब्दानां किंशब्देन परामर्शो युज्यते ? स्यादयं दोषः, यदि केषामित्येतावदुच्येत। तदा हि शब्दानामित्यनुषङ्ग आश्रयणीयः, तच्च गुणीभूतस्यानुपपन्नम्। इह तु शब्दानामिति स्वशब्देनोपादीयते, तत्तु प्रकृतगुणभूतशब्दपरमित्येतावत्। तच्च नानुपपन्नम्; बुद्धौ सन्निहितत्वात्, राजपुरुषोऽयम्, कस्य राज्ञ इतिवत्। पृच्छतश्चायमभिप्रायः–'शब्दानुशासनम्' इत्यत्र शब्दशब्दः सामान्यवचनः। सन्ति च समुद्रघोषादयः शब्दाः, येषु वर्णाभिव्यक्तिरपि नास्ति; सन्ति च गाव्यादयोऽपभ्रंशाः, सन्ति च गवादयोऽनादयः साधवः, तत्राविशेषात्सर्वेषामनुशासनं प्राप्नोतीति। इतरोऽपि शब्दानुशासनशब्दस्य व्याकरणे योगरूढत्वात् तस्य च वेदाङ्गत्वात् समुद्रघोष-गाव्यादिव्युत्पादनस्य च वेदानुपयोगित्वादाह–*लौकिकानां वैदिकानां चेति*। लोके विदिता लौकिकाः–'लोकसर्वलोकाभ्यां ठञ्'। यद्यपि गाव्यादयोऽपि लोके विदिताः, तथापि ते न सर्वलोके विदिताः; प्रतिदेशं भिन्नत्वादपशब्दानाम्। लोकशब्दश्चायं सर्वस्मिल्लोके वर्त्तते, सङ्कोचकाभावात्। अतः सर्वलोकप्रसिद्धानां गवादीनामित्यर्थः। साधूनामिति यावत्। वेदे भवा वैदिकाः, अध्यात्मादित्वात् ठञ्। वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनार्थं पृथग् ग्रहणम्, यथा–'ब्राह्मणा आगताः, वसिष्ठोऽप्यागत' इति।

न्यासः

केषां शब्दानामिति। कथं पुनरनुशासने गुणीभूतानां शब्दानां किंशब्देन प्रत्यवमर्शो भवति ? नैष दोषः; प्रधाने ह्यन्तर्भूतस्याप्युपसर्जनस्य बुद्ध्या प्रविभज्य किंशब्देन प्रत्यवमर्शो दृष्टः, यथा–राजपुरुषोऽयम्, कस्य राज्ञ इति। कः पुनरत्र प्रष्टुरभिप्रायः ? एवं मन्यते—शब्दानुशासनमित्यत्र शब्दशब्दः सामान्यवचनः। न च सामान्यशब्दः प्रकरणादिरहितो विशेषे वर्त्तितुमुत्सहते, सन्ति च समुद्रघोषादयोऽपि बहवः शब्दाः, अतस्तेषामपि व्युत्पादनं प्राप्नोतीति ? इह तु व्याकरणं प्रस्तुतम्, तच्च वेदाङ्गम्, अङ्गञ्चोपकारकं भवति। एवञ्च तद् वेदस्योपकारकं भवति यदि तेनैव वैदिकाः शब्दाः संस्क्रियन्ते, लौकिकाश्च तदुपकारिणः। वैदिकोपकारित्वं तु लौकिकानाम्; तैस्तदर्थस्याख्यानात्। तस्माच्छब्दानुशासनाधिकाराद् विशिष्टा एवात्र शब्दा व्युत्पादयितुमभीष्टाः, न तु समुद्रघोषादयोऽपि। तथाविधशब्दव्युत्पादने हि व्याकरणस्यावेदाङ्गतापि स्यादिति मन्यमान आह—

लौकिकानामित्यादि। लोके विदिता लौकिकाः; तत्र विदित इत्यनुवर्तमाने 'लोकसर्वलोकाट्ठञ्' इति ठञ्। अथ वा, लोके भवा लौकिकाः—अध्यात्मादित्वाट्ठञ्।

**कथमनुशासनम्? प्रकृत्यादिविभागकल्पनया सामान्यविशेषवता लक्षणेन॥**

**पदमञ्जरी**

नन्वन्वाख्याने प्रतिपदपाठोऽभ्युपायः, तत्रान्वाख्याने त्रयः प्रकाराः—शब्दापशब्दोभयोपदेशभेदेन। शब्देषु ह्युद्दिष्टेषु गम्यत एतत्—अतोन्येऽपशब्दा इति, यथा-'पञ्च पञ्चनखा भक्ष्याः' इति। भक्ष्यनियमादन्येऽभक्ष्या इति गम्यते, तथाऽपशब्दोपदेशोऽप्यन्ये सुशब्दा इति गम्यते। यथा—'अभक्ष्यो ग्रामकुक्कुटः' इत्युक्ते 'आरण्यो भक्ष्यः' इति गम्यते। हेयोपादेयोपदेशोऽपि स्पष्टंप्र तिपत्तिर्भवति, यथा—'अपथमिदम्, एष पन्थाः' इति। आनन्त्याच्छब्दानां सर्वथाप्यसम्भव एव। एवं हि श्रूयते-'बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां शब्दानां शब्दपारायणं प्रोवाच, न चान्तं जगाम' इति। बृहस्पतिः प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं च वर्षसहस्रमध्ययनकालः, न चान्तगमनमासीद्यस्य, तस्य कुतोऽद्यत्वे स्वल्पायुषि प्रजायाम्! यस्सर्वथा चिरं जीवति, स वर्षशतं जीवति। न चान्योऽभ्युपायोऽस्तीति मन्यमान आह—*कथमिति*। कथं व्याकरणेन शब्दानुशासनम्? कथं वा व्याकरणं शब्दानामनुशासनम्? न कथंचिदित्यर्थः। येनाल्पेनैव यत्नेन महतो महतः शब्दौघान्प्रतिपद्यन्ते, तदुपायान्तरं दर्शयति—*प्रकृत्यादिविभागकल्पनयेति*। तत्र प्रतिपन्नशब्दोपदेश

**न्यासः**

एवं वैदिकाः। वैदिकानां लौकिकेभ्यः पृथगुपादानं प्राधान्यख्यापनार्थम्। यथा—'ब्राह्मणा आयाताः, वसिष्ठोऽप्यायातः' इति। अत्र ब्राह्मणत्वादेव वसिष्ठस्याप्यागमने सिद्धे प्राधान्यख्यापनार्थं तस्य पृथगुपादानम्। प्राधान्यख्यापनन्तु वैदिकानां यत्नेनापभ्रंशनिरासार्थम्। तेषां ह्यपभ्रंशो याज्ञे कर्मणि महान् प्रत्यवायो दृष्टः—'हेलयो हेलयः' इति। अथवा ये लोकयात्राहेतवो भाषाशब्दास्तैरेव लौकिकत्वं प्रसिद्धमिति वैदिकानां पृथगुपादानम्। तत्र लौकिका अनियतवर्णानुपूर्वीकाः—गौः, अश्वः, पुरुषः, हस्तीत्येवमादयः। वैदिकास्तु नियतानुपूर्वीकाः—'शन्नो देवीरभिष्टये' इत्येवमादयः।

इह ह्यन्वाख्याने प्रतिपदपाठोऽभ्युपेयः। तस्यापि त्रयः प्रकाराः—शब्दापशब्दोभयोपदेशभेदेन। आनन्त्याच्च शब्दानां स सर्वथाप्यसम्भवः। एवं हि श्रूयते—'बृहस्पतिः किलेन्द्राय दिव्यं वर्षसहस्रं प्रतिपदविहितानां पारायणं प्रोवाच, न चान्तं जगाम' इति। तदीदृशे वक्तर्यध्येतर्यध्ययनकाले च नान्तगमनमभूद्यस्य, तस्य कुतोऽद्यत्वे भविष्यति स्वल्पायुषि प्रजायाम्! न चान्योऽभ्युपायोऽस्तीति मन्यमान आह—कथमित्यादि। कथमनुशासनम्? न केनचित् प्रकारेण शब्दानां व्याकरणमनुशासनमित्यर्थः। अथ वा भावसाधनोऽत्रानुशासनशब्दः। अनुशिष्टिरनुशासनम् = संस्कारः, न कथञ्चिच्छब्दानां संस्कारः सम्भवतीति यावद्।

येनाल्पेनैव प्रयत्नेन महतः शब्दौघान् प्रतिपद्येत, तदुपायान्तरं दर्शयितुमाह—प्रकृत्यादिविभागपरिकल्पनयेत्यादि। प्रत्ययात् प्रथमं क्रियत इति प्रकृतिः, प्रकृति-

पदमञ्जरी

एव तावदाश्रित:; नियतत्वात्। अपशब्दा हि प्रतिदेशं प्रतिगृहं प्रतिपुरुषं प्रत्यवस्थं भिन्नाश्चानवस्थिता:, न ते लक्षणेनानुशास्तुं शक्यन्ते। उपेयस्य चार्थस्य साक्षात्प्रतिपत्तिर्युक्ता। प्रत्ययात्पूर्वं क्रियत इति प्रकृतिः। आदिशब्देन प्रत्ययविकारागमानां ग्रहणम्। तेषां विभागोऽसंकीर्णरूपता, तस्य कल्पना=अवयवकल्पिका बुद्धि:, तया हेतुभूतया शब्दानामनुशासनं व्याकरणेन। व्याकरणं वा कल्पनाग्रहणेन। 'कल्पनामात्रं प्रकृत्यादिविभागो न पारमार्थिकः' इति वैयाकरणसिद्धान्तं दर्शयति। अत एव व्युत्पत्तेरनियमो दृश्यते—'वसेस्तव्यत्कर्तरि णिच्च' वसतीति वास्तव्य:, तद्धितान्तो वा— वास्तुनि भवो वास्तव्य इति। तथा 'गिरौ डश्छन्दसि' गिरौ शेते गिरिश:, तद्धितो वा— गिरिरस्यास्तीति लोमादित्वाच्छ:, गिरिश इति। नन्वेवं प्रतिशब्दं प्रकृतिप्रत्ययविभाग उच्यमाने गुरुतरमापद्यते; तद्यथा—पचति इत्यत्र शब्दे पचिप्रकृति:, तिप्प्रत्यय:, शब्विकरण इत्यादि, तत्कोऽयमभ्युपायो दर्शित:? अत आह—*सामान्यविशेषवता लक्षणेनेति*। करणे एषा तृतीया, कल्पनायां च करणता। वृत्तौ 'च' शब्दो न पठितव्य:, एकस्मिन् हि साध्ये हेतुद्वयसमावेशे समुच्चयो भवति। इह तु कल्पनायां लक्षणं करणम्, कल्पना त्वनुशासने हेतु:। तदयमर्थ:—सामान्यविशेषवता लक्षणेन करणभूतेन या प्रकृत्यादिविभागकल्पना तया, हेतुभूतया शब्दानामनुशासनं व्याकरणम्, व्याकरणेन वा शब्दानामनुशिष्टिरिति। तत्रोत्सर्गलक्षणं सामान्यवत्; तद्यथा—'कर्मण्यण्' इति। तत्र धातोरित्येतत्कर्मणीत्येतच्च सामान्यम्। अनेन च कुम्भकारो नगरकार इत्यादिकं महान्तं शब्दौघं प्रतिपद्यते। विशेषलक्षणं विशेषवत्; तद्यथा—'आतोऽनुपसर्गे क:' इत्यत्रात इति, अनुपसर्गे इति च विशेष:। अनेन गोद: कम्बलद इत्यादिकं महान्तं शब्दौघं प्रतिपद्यते। एवमन्यत्रापि द्रष्टव्यम्। क्वचित्पठ्यते—'लाघवं भवति' इति, अपाठ एव ज्यायान्।

न्यासः

रादिर्येषां ते प्रकृत्यादय:; आदिशब्द: प्रत्ययादीनां परिग्रहार्थ, तेषां विभागोऽसंकीर्णरूपता, तस्य कल्पना परिकल्पिकया बुद्ध्या परिकल्पनम्; तया परिकल्पनया शब्दानामनुशासनं व्याकरणमनुशिष्टिर्वा। हेतावियं तृतीया। न हि तया विना व्याकरणमनुशासनं भवति, नापि तेन विनानुशिष्टि: शब्दानां शक्यते कर्तुम्। परिकल्पनयेत्यनेनैतत् प्रतिपादयति। कल्पनामात्रं [1]प्रकृत्यादिविभाग:, परमार्थवस्तु; प्रत्यस्तमित[1]-प्रकृत्यादिविभाग: समुदाय एव कस्यचिदर्थस्य वाचक इति।

सामान्यविशेषवता लक्षणेनेति। करण एषा तृतीया। सामान्यञ्च विशेषश्च सामान्यविशेषौ तौ यस्मिन् लक्षणे स्तस्तत् सामान्यविशेषवल्लक्षणम्। तत्रोत्सर्गलक्षणं सामान्य-

१. 'प्रकृत्यादिविभागपरमार्थवस्तुप्रत्यस्तमिते' इति मुद्रितः पाठः।

# प्रत्याहारप्रकरणम्

**अथ किमर्थो वर्णानामुपदेशः ? प्रत्याहारार्थः । प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थः ॥**

पदमञ्जरी

*अथ किमर्थो वर्णानामुपदेश इति* । न तावदविकृतवर्णस्वरूपज्ञापनार्थः[1]; तस्य कलाध्मातादिदोषरहितस्य लोकत एव सिद्धत्वात्, अन्यथा दीर्घप्लुतादेरप्युपदेशः कर्तव्यस्स्यात् । न च ग्रहणकशास्त्रेण तेषां सिद्धिः; तस्य स्वरूपस्योच्चारणैकसमधिगम्यत्वात् । अथ तेषां लोकतो गर्गादिविदादिपाठस्य तन्त्रेणोभयार्थत्वाद्वा परिज्ञानम्, ह्रस्वादिष्वप्येवमेवास्तु । न च 'वृद्धिरादैच्' इत्यादिवत्संज्ञापरिभाषादिरूपता, येन पारम्पर्येणापि तावदुपयुज्येत, तस्मान्नार्थ उपदेशेनेति प्रश्नः । *प्रत्याहारार्थ इति* । प्रत्याह्रियन्ते=संक्षिप्यन्तेऽस्मिन्वर्णा इति प्रत्याहारः–विशिष्टानुपूर्वीको विशिष्टानुबन्धयुक्तश्चाक्षरसमाम्नायः, स यथा स्यादित्येवमर्थ इत्यर्थः । संक्षेपो राशीकरणम् । प्रत्याहारो वा किमर्थ इत्याह—*प्रत्याहारो लाघवेन शास्त्रप्रवृत्त्यर्थ इति* । सति हि प्रत्याहारे 'आदिरन्त्येन सहेता' इत्येतत्प्रवर्तते, तत्प्रवृत्तौ चाकारादीनां वर्णानामणित्यादिकास्संज्ञाः संपद्यन्ते, ताभिश्च व्यवहारे लाघवं भवति । असति तु प्रत्याहारे सन्निवेशविशेषापेक्षयोराद्यन्तयोरभावाद् 'आदिरन्त्येन' इत्यस्याप्रवृत्तावणादिसंज्ञाऽभावादकारादीनां यावतां कार्यमिष्यते, तावन्तः स्वरूपेणैव ग्राह्याः स्युः; ततश्च गौरवप्रसङ्ग इत्यर्थः । अथ वा—प्रत्याह्रियन्ते संक्षिप्यन्त इति संक्षेपः सकोचः प्रत्याहारोऽणादिसंज्ञा । सति हि वर्णोपदेशे पूर्वोक्ताक्षरसमाम्नायस्तावत्संपद्यते । तेनाणादयः संज्ञाः, ततो लाघवेन शास्त्रप्रवृत्तिरित्यर्थः ॥

न्यासः

वत्, यथा 'कर्मण्यण्' इति । तत्र हि 'धातोः' इत्येतत् 'कर्मणि' इत्येतच्च सामान्यम् । अपवादलक्षणं विशेषवत्, यथा–'आतोऽनुपसर्गे कः' इति । अत्रात इत्येतद्, अनुपसर्ग इति च विशेषः । तत्र सामान्यवता लक्षणेन प्रकृत्यादिविभागपरिकल्पनया कुम्भकारः, काण्डलावः, शरलावः—इत्येवमादिकं महान्तं शब्दौघं प्रतिपद्यते । विशेषवता तु पार्ष्णित्रः, गोदः, कम्बलद इत्येवमादिकम् । एवमन्यत्रापि वेदितव्यम् ।

**अथेत्यादि** । एवं मन्यते—शब्दानुशासनमधिकृतम् , तत्र येन शब्दा अनुशिष्यन्ते तस्यैवोपदेशो युक्तः, न चैषामुपदेशेन कस्यचिच्छब्दस्य संस्कारः क्रियते; ततश्चाप्रस्तुताभिधानमिति प्रश्नस्याभिप्रायः । **वर्णानामिति** । वर्णा अकारादयः, तेषामाद्युच्चारणमुपदेशः । **प्रत्याहारार्थ इति** । प्रत्याहारः 'अइउण्' इत्येवमादिको विशिष्टानु-

---

१. '०दविप्लुत०' इति पा० ।

## अ इ उ ण् ॥ १ ॥

'अ इ उ' इत्यनेन क्रमेण वर्णानुपदिश्यान्ते णकारमितं करोति

पदमञ्जरी

*अइउण्* ॥ कोऽस्य सूत्रस्यार्थः ? किमभिधेयं पृच्छ्यते ? किं वा प्रयोजनम् ? तत्राभिधेयं नास्त्येव, अभिधेयशून्यस्यापि प्रयोग उपपद्यते, प्रयोजनार्थो हि शब्दानां प्रयोगः । विद्यते चात्र प्रयोजनम्, अणादिसंज्ञानिष्पत्तिः । अथेह कस्मादाद्गुणादिकमच्कार्यं न भवति ? उच्यते; अत्र च सत्यस्मिन् सन्निवेशे 'हलन्त्यम्' इत्यस्मिन्प्रवृत्ते आदिरन्त्येनेत्यनेनाच्संज्ञा निर्वर्त्यते, अतोऽस्मात्सन्निवेशात्प्रागकारादीनामच्त्वाभावात् तत्कार्याभावः । अथ वा चादिषु पाठान्निपातत्वम्, निपातत्वात्प्रगृह्यसंज्ञा, प्रगृह्यत्वात्प्रकृतिभावः । किं निपातव्यक्तिरेकैवात्र निर्दिश्यते, ननु सर्वा एव व्यक्तयो निर्देष्टुमिष्टाः ? सत्यम्; तथापि सर्वासां युगपदुच्चारयितुमशक्यत्वादेकैव निर्देश्या, सा च निपातव्यक्तिरेकैव युक्ता, तन्निर्देशे संहिताकार्याभावादिष्टस्य रूपस्य स्फुटमवगमात् ।

*अनेन क्रमेणेति* । अनेन क्रमस्य विवक्षितत्वं दर्शयति । एवं ह्यण्ग्रहणेष्वकारादीनां त्रयाणां ग्रहणम्, इण्ग्रहणेष्वकारस्याग्रहणम्, उग्ग्रहणेष्वकारेकारयोर्द्वयोरप्यग्रहणमुपपद्यत इति भावः । *वर्णानिति* । यद्यमी वर्णाः, ..रप्रत्ययः कस्मान्न

न्यासः

पूर्वोक्तो विशिष्टानुबन्धकश्चाक्षरसमाम्नायः, प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा अस्मिन्निति कृत्वा । स यथा स्यादित्येवमर्थो वर्णानामुपदेशः । स्यादेतत् ! तस्यापि प्रकृतानुपयोगित्वात् तदवस्थ एवैष दोष इत्यत आह—प्रत्याहारो लाघवेनेत्यादि । लघोर्भावो लाघवम्, तत् पुनरल्पप्रयासः । अल्पप्रयाससाध्यं हि वस्त्वल्पप्रयत्नयोगाल्लघूच्यते । तेन लाघवेन शास्त्रस्य 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्येवमादेः प्रवृत्त्यर्थोऽभिनिर्वृत्त्यर्थ इत्यर्थः । सति हि प्रत्याहारे 'आदिरन्त्येन सहेता' इत्येतत् प्रवर्त्तते । तत्प्रवृत्तौ चाकारादीनामणित्येवमादिकाः संज्ञाः सिध्यन्ति । ततश्च यत्राकारादीनां ग्रहणमिष्टं तत्राणित्येवमादिकयैव संज्ञया बहवोऽपि ते निर्दिश्यन्त इति लाघवेन शास्त्रस्याभिनिर्वृत्तिर्भवति । तस्मिंश्चासति 'आदिरन्त्येन सहेता' इत्येवमादेः शास्त्रस्य प्रवृत्तिर्न स्यात्; आद्यन्तयोरभावात् । न ह्यसति सन्निवेशविशेषे तावुपपद्येते, असत्याञ्च तत्प्रवृत्तौ पूर्वोक्ताः संज्ञा न स्युः । ततश्च यत्र यत्र सूत्रेऽकारादीनां यावतां ग्रहणमिष्टम्, तत्र ते तावन्तः स्वरूपेणैव निर्दिश्येरन्निति लाघवेन शास्त्रस्य प्रवृत्तिर्न स्यात् । तदेवं प्रकृतस्यैवाल्पप्रयासेन निष्पादनार्थत्वान्न भवति पूर्वदोषावसरः ।

**अ इ उ ण्** ॥ अथ कस्मादिहाद्गुणादिकमच्कार्यं न भवति ? 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावात् । प्रगृह्यत्वं तु तेषाम् 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञाविधानात् ।

प्रत्याहारार्थम् । तस्य ग्रहणं भवत्येकेन 'उरण् रपरः' इत्यकारेण ।

पदमञ्जरी

भवति ? उच्यते; 'वर्णात्कारः' इत्यस्य नायमर्थो वर्णादुच्चार्यमाणात्कारः प्रत्ययो भवतीति । एवं हि विज्ञायमाने ककार इत्यादावुच्चार्यमाणस्याज्झल्समुदायस्यावर्णत्वात्कारप्रत्ययो न स्यात्, किं तर्हि ? 'निर्देश' इत्यनुवृत्तेः यस्योच्चार्यमाणस्य प्रयोगस्थो वर्णो निर्देश्यः प्रतिपाद्यः, तस्माद्वर्णाद्वर्णस्य प्रतिपादकात्कारप्रत्यय इत्यर्थः। अत्र चानुपूर्वीसंपादन एव तात्पर्यम्, न तु 'कविपुत्रः' इत्यादिषु दृष्टानामकारादीनां प्रतिपादन इति कारप्रत्ययाभावः। *अन्त इति* । यद्यपि णकारस्य पूर्वोत्तरवर्णापेक्षया मध्यभावस्तथापि पूर्वापेक्षमन्त्यत्वमस्त्येव, 'हलन्त्यम्' इत्यत्र ह्यन्त्यत्वमाश्रितम्, न मध्यत्वं प्रतिषिद्धम्; तच्चान्त्यत्वमस्त्येव, मध्यत्वं तु सदप्यनाश्रितत्वादकिञ्चित्करमिति भावः। नन्वेवमप्यप्रधानत्वाद् यथाच्कार्यं न भवति तथेत्संज्ञापि न स्यादित्याशङ्क्याह—*इतमिति* । अप्राधान्यमणादिसंज्ञास्वनन्तर्भावात्स्यात्, स च 'सहेता' इति वचनादित्संज्ञापूर्वक इति भावः। *तस्येत्यादि* । तस्येति कर्मणि षष्ठी, ग्रहणमुपादानम् । तच्च शब्दविषयं सदुच्चारणं संपद्यते। उच्चारणवचन एव वा ग्रहिः, 'ग्रहणवता प्रातिपदिकेन' इति यथा। *एकेनेति* । सहार्थयोगे तृतीया। तस्य णकारस्यैकेनादिनाऽकारेण सह प्रदेशेषु संज्ञात्वेनोच्चारणं भवति, न केवलस्य, आदिरन्त्येनेतिवचनान्नापि वर्णान्तरसहितस्येत्यर्थः। अथ वा—तस्येति कर्त्तरि षष्ठी। ग्रहणमुपादानमेव। स णकार एकेनैवादिना सहितो ग्राहको भवति, न त्वनेकेन, नापि वर्णान्तरेण, न च केवल इत्यर्थः। *'उरण् रपरः' इत्यकारेणेति* । अत्राकारेणेत्येतावद्विवक्षितम्, 'उरण् रपरः'

न्यासः

निपातत्वन्तु चादिषु पाठात् । अत एव निपातत्वादर्थवत्त्वेऽनर्थवत्त्वे चोत्पन्नाया विभक्तेः श्रवणं न भवति । इहानर्थवत्त्वे विभक्त्युत्पत्तिरनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञोपसंख्यानाद् वेदितव्या । अनेन क्रमेणेति ।.अनयाऽऽनुपूर्व्या । किं पुनः कारणमयमेव क्रम आश्रीयते, न क्रमान्तरम् ? तदुच्यते; इहाण्ग्रहणेन त्रयाणामप्येपामकारादीनां ग्रहणमिष्यते, इण्ग्रहणे त्वकारस्य ग्रहणं नेष्यते, उणग्रहणे ( उग्रहणे ) पुनरकारेकारयोर्द्वयोरपि । एतच्च क्रमान्तराश्रयणे न सम्पद्यत इत्येष्वेवं क्रम आश्रीयते ।

'वर्णात् कारः' इति कारप्रत्ययस्योपसंख्यानादिह च तदकरणान्नैते वर्णाः, अपि तु च्छायानुकारिणोऽन्य एव सन्ध्यक्षरादिवर्णैकदेशा इति कस्यचिदाशङ्का स्यात्; अतस्तन्निराकरणायाह—वर्णानिति । कारप्रत्ययस्तु 'रोगाख्यायां ण्वुल् बहुलम्' इत्यत्रोपसंख्यायते । तेन बहुलवचनात् सत्यपि वर्णत्वे न भवतीति भावः । णकारस्य पूर्वोत्तरवर्णान्तःपातित्वात् मध्यभावः, नान्त्यत्वम्; अत इत्संज्ञया न भवितव्यम् ? अथापि कथञ्चि-

## ह्रस्वमवर्णं प्रयोगे संवृतम्। दीर्घप्लुतयोस्तु विवृतत्वम्।

**पदमञ्जरी**

इत्युपलक्षणम्, 'उरण् रपरः' इत्यादावकारेणेत्यर्थः। अत एवाकारेणेत्युक्तम्। 'उरण् रपरः' इत्यस्य तु विवक्षितत्वे तन्न वक्तव्यम्। अथ 'इणः षीध्वम्' इत्यादाविकारेण ग्रहणं कस्मान्न भवति? 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इत्यत्रेकारोकारयोर्द्वयोः स्वरूपेण निर्देशाद्। अन्यथा हि 'इणः' इति ब्रूयात्। न च पूर्वेण परेण वेति सन्देहः; पूर्वेणेति व्याख्यानात्। 'य्वोः' इत्यपि हि निर्देशे किं ह्रस्वयोर्ग्रहणम्, उत दीर्घयोः, अथ यकारवकारयोरिति सन्देहाद् व्याख्यानत एव निर्णयः। *ह्रस्वमवर्णमित्यादि*। प्रयुज्यत इति प्रयोगो धात्वादिः, तत्र ह्रस्वमवर्णं संवृतम्। संवृतादयः शब्दा उभयवचना द्रव्यमाहुर्गुणं च, यथा—शुक्लादयः। संवृतगुणयुक्तमित्यर्थः। *विवृतत्वमिति*। गुणवचनात्त्वप्रत्ययः। विवृतगुणत्वमित्यर्थः। तथा च

**न्यासः**

दन्त्यत्वं स्यात्? एवमपि वक्ष्यमाणेन न्यायेनाप्रधानत्वाद् यथा तत्राच्कार्यमस्य न भवति तथेत्संज्ञापि न भवेदिति यस्य भ्रान्तिः स्यात्, तं प्रत्यन्त इत्युक्तम्, इतमिति च। यद्यपि पूर्वोत्तरवर्णापेक्षयास्य मध्यमभावः, तथापि पूर्ववर्णापेक्षयान्त्यत्वमस्त्येव। सति च तस्मिन्नप्रधानस्यापीत्संज्ञया भवितव्यम्; उपदेशसामर्थ्यात्। अन्यथा हि तदुपदेशवैयर्थ्यं स्यात्। 'आदिरन्त्येन सहेता' इत्यनेनाणित्येवमादिकाः संज्ञा यथा स्युरित्येवमर्थो णकारादीनामनुबन्धानामुपदेशः। स च तदर्थोऽसत्यामित्संज्ञायां न स्यादित्यभिप्रायः। तस्येत्यादि। एकेनेति सहार्थयोगे तृतीया, तस्येति कर्मणि षष्ठी। तस्य णकारस्य प्रदेशवाक्येषु संज्ञिप्रत्यायनार्थमेकेनैवाकारेण सहोपादानं भवति। स ह्यकारादीनां वर्णानामकारसहित एव संज्ञा, न केवलः, नापि वर्णान्तरसहितः। तस्मात् प्रत्यायनार्थं तेनैव सहोपादीयते, न केवलः, नापि वर्णान्तरसहितः।

अन्ये त्वाहुः—तस्येति कर्त्तरि षष्ठी; एकेनेति च सहयोगे तृतीया। तेनायमर्थः—आदिवर्णसहितो णकारोऽन्येषां मध्यपातिनां वर्णानां ग्राहको भवत्यादिवर्णस्य चेति।

अपरे आहुः—अनेकार्थत्वाद्धातूनां गृह्णातिरत्रोच्चारणे वर्त्तते 'ग्रहणवता प्रातिपदिकेन' इति यथा। तेनायमर्थः—तस्यैकेन सहोच्चारणं भवतीति। अथ 'इणः षीध्वम्' इत्यत्रेकारेणास्य ग्रहणं न भवतीति कुतोऽवसितम्? 'अचि श्नुधातुभ्रुवां य्वोः' इतीकारोकारयोः संसृज्य निर्देशात्। यदीकारेणास्य ग्रहणं स्यात् ततो लाघवार्थम् 'इण्' इत्येव निर्दिशेत्। 'य्वोः' इति संसृज्य निर्देशेऽर्धचतस्रो मात्रा भवन्ति, इणिति निर्देशे तिस्रः; तत्र लघीयसा न्यासेन सिद्धे यद् गरीयांसं प्रयत्नमारभते ततो ज्ञायते नास्य णकारस्येकारेण ग्रहणम् भवतीति। इह तर्हि 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युकारेण ग्रहणं कस्मान्न भवति? उकारादन्यस्य ग्राह्यस्याभावात्, तस्य च स्वरूपेणैव निर्देशात्।

**ह्रस्वमवर्णमित्यादि**। प्रयुज्यत इति प्रयोगो धात्वादिः। **ह्रस्वमवर्णं प्रयोगे**

तेषां सावर्ण्यप्रसिद्ध्यर्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते ।

पदमञ्जरी

*शिक्षा*–'विवृतकरणास्स्वराः, तेभ्य ए ओ विवृततरौ, ताभ्यामै औ, ताभ्यामप्याकारः, संवृतोऽकारः' इति। *तेषां सावर्ण्यप्रसिद्ध्यर्थमिति*। अन्यथा भिन्नत्वात्प्रयत्नस्यासति सावर्ण्ये दण्डाढकमित्यादौ दीर्घप्लुतयोः परतः 'अकः सवर्णे दीर्घः' इति दीर्घत्वं न स्यात्। ननु च सत्यपि विवृतत्वे नैव प्लुतस्य दीर्घत्वं प्राप्नोति, तस्मिन्कर्तव्ये प्लुतस्यासिद्धत्वात् ? स्वरसन्धिषु प्लुतस्य सिद्धत्वज्ञापनाददोषः। *विवृत इति*। विवृततर इत्यर्थः। न हि विवृतस्य विवृततरेण सावर्ण्यमुपपद्यते; प्रयत्नभेदात्। विवृतोऽपि हि प्रतिज्ञायमानो यद्याक्षरसमाम्नायिक एव प्रतिज्ञायेत, ततो धातुप्रातिपदिकप्रत्ययनिपातस्थस्याकारस्य संवृतत्वा-

न्यासः

संवृतम्। संवृतगुणयोगात् संवृतम्। यथा शुक्लगुणयोगात् शुक्लः पट इति। दीर्घप्लुतयोस्तु विवृतत्वमिति। विवृतगुणयोगित्वमित्यर्थः। तथा चाहुः शिक्षाकाराः—'विवृतकरणाः स्वराः, तेभ्य ए ओ विवृततरौ, ताभ्यामपि ए औ, एताभ्यामप्याकारः संवृतोऽकारः' इति। तेषामित्यादि। तेषां ह्रस्वादीनाम् 'तुल्यास्यप्रयत्नं सवर्णम्' इति सवर्णसंज्ञा यथा स्यादित्येवमर्थमिह शास्त्रे ह्रस्वोऽकारो विवृतगुणोऽभ्युपगम्यते। अन्यथा हि भिन्नत्वात् प्रयत्नस्यासति सावर्ण्ये दण्डाढकमित्यादौ 'अकः सवर्णे दीर्घः' इति दीर्घत्वं न स्यात्। ननु च सत्यपि विवृतत्वप्रतिज्ञानेनैव ह्रस्वप्लुतयोरकः सवर्णे दीर्घत्वं प्राप्नोति, तस्मिन् कर्तव्ये प्लुतस्यासिद्धत्वात्, नैष दोषः; 'सिद्धः प्लुतः स्वरसन्धिषु' इति स्वरसन्धिषु प्लुतस्य सिद्धत्वात्, इतरथा हि 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावविधानमनर्थकं स्यात्। अत्र च यद्यपि 'विवृतः प्रतिज्ञायते' इत्युक्तम्, तथापि तेषां सावर्ण्यप्रसिद्ध्यर्थमिति वचनाद् विवृततर इति गम्यते। न हि विवृतस्य विवृततरेण सावर्ण्यमुपपद्यते; प्रयत्नभेदात्,. विवृतत्वप्रतिज्ञानसामर्थ्याद्वा। अविवृततरस्यापि विवृततरेण सावर्ण्यं भविष्यति। यदि 'इह' इत्येतावदेवोच्येत, तदा प्रत्यासत्तेः प्रकृतस्त्राक्षाक्षरसमाम्नायिक एव विवृतः प्रतिज्ञायत इति विज्ञायेत, न धातुप्रातिपदिकप्रत्ययनिपातस्थः; ततः प्रयत्नभेदादसति सावर्ण्ये आक्षरसमाम्नायिकेन तस्याग्रहणादत्त्वं न स्यात्। तस्मिंश्चासति शाम्यतीत्यत्राच्परिभाषानुपस्थानात् स्थानिनोऽकारस्याच्त्वाभावात् 'शमामष्टानां दीर्घः श्यनि' इति दीर्घत्वं न स्यात्। दृषद् इत्यत्र प्रातिपादिकस्यान्त उदात्तो भवतीति अन्तोदात्तत्वं न स्यात्; तस्याज्धर्मत्वात्। नायक इत्यत्र प्रत्ययस्याकारस्यानच्त्वात् तत्रायादेशो न स्यात्। अवनमतीत्यत्र 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वं न स्यात्। किञ्च अनुवृत्तिनिर्देशस्येनाकारेणासति सावर्ण्ये दीर्घस्य ग्रहणं न स्यात्। तत्र को दोषः ? 'अस्य च्वौ' इतीईव स्यादीत्वम्–शुक्लीभवतीति; मालीभवतीत्यत्र तु न स्यात्। 'यस्येति च' इतीईव स्याद-

पदमञ्जरी

दच्त्वं न स्यात्। ततश्च 'शमामष्टानां दीर्घः' अकारस्य न स्यात्, अन्त्यस्यैव तु स्यात्। दृषदित्यन्तोदात्तो न स्यात्। नायक इति प्रत्ययाकारस्यानच्त्वादायादेशो न स्यात्। प्रपचतीति प्रशब्दाकारस्य 'निपाता आद्युदात्ताः' इत्याद्युदात्तो न स्यात्। 'अस्य च्वौ' इत्यादावुपात्तस्य संवृतत्वादनण्त्वादसति ग्राहकत्वेऽकारस्यैव ग्रहणाच्छुक्लीभवतीत्यादावेव स्यात्, मालीभवतीत्यादौ तु न स्यात्। अथाक्षरसमाम्नायिकस्यैव विवृतत्वप्रतिज्ञाने किं प्रयोजनम्, न ह्ययं क्वचिदपि पुनः प्रयुज्यते ? उच्यते; यत्र 'अकः सवर्णे दीर्घः' इत्यादौ प्रत्याहारग्रहणं तत्रादिरन्त्येनेतिवचनादनयोरेवाकारककारयोरनुकरणमिति, तेन प्रत्याहारगतेनाकारेण विवृतेन प्रयोगस्थयोर्दीर्घप्लुतयोः सावर्ण्यग्रहणे सति खट्वाढकमित्यादौ दीर्घत्वादि कार्यं यथा स्यात्। असति हि विवृतत्वे 'अस्य च्वौ' इत्यादिवत्प्रत्याहारेष्वपि संवृतस्य प्रयोगस्थस्य ह्रस्वस्यैव हि कार्यं स्यात्। सति तु विवृतत्वे दीर्घप्लुतयोरपीत्यस्त्येवाक्षरसमाम्नायिकमात्रस्यापि विवृतत्वप्रतिज्ञाने फलम्। अतः पूर्वोक्तदोषप्रसङ्गादेव यो नाम कश्चिदकारः स सर्वो विवृतः प्रतिज्ञायते। तदाह—*इह शास्त्र इति*। इहेत्येतावत्युक्ते सति सन्निधानादक्षरसमाम्नाय इत्यर्थःस्यादिति शास्त्रग्रहणम्। ननु च 'अस्य च्वौ' इत्यादौ सत्यपि विवृतत्वे नैव सवर्णानां ग्रहणं सिद्ध्यति; अनण्त्वात्। प्रत्युच्चारणं ह्यन्ये चान्ये चाकारादयः; तदिह सर्वेषां विवृतत्वेऽपि सावर्ण्यमात्रं सिद्ध्यति, न त्वण्त्वमपि। येऽक्षरसमाम्नाय उपदिष्टाः, त एवाण्; 'आदिरन्त्येन' इति वचनात्। ततश्च 'अकः सवर्णे' इत्यादौ प्रत्याहार एव सवर्णग्रहणं स्यात्, न 'अस्य च्वौ' इत्यादौ। एतच्चोद्यमिकारादिष्वपि समानम्। तेऽपि 'इको यणचि' इत्यादावेव ग्राहकास्स्युः, न 'यस्येति च' इत्यादौ। ननु प्रत्यभिज्ञानादुच्चारणस्य चाभिव्यञ्जकत्वात्सर्वेषूच्चारणेषु एक एवाकारः, तत्कस्यानण्त्वमाशङ्क्यते। यद्येवम्, अनुबन्धकार्याणि संकीर्येरन्—'कर्मण्यण्', 'आतोऽनुपसर्गे कः' इत्यादिषु पुनःपुनरेक एवाकार

न्यासः

कारलोपः—दाक्षिः, प्लाक्षिरिति; वालाकिरित्यत्र तु न स्यात्। तस्माद्यावत् किञ्चिदवर्णमात्रमिह शास्त्रे तस्य सर्वस्य विवृतत्वं प्रतिज्ञायत इति प्रदर्शनार्थं शास्त्रग्रहणं कृतम्। ननु च सत्यपि सावर्ण्ये नैवानुवृत्तिनिर्देशस्थेनाकारेण सवर्णानां ग्रहणं सिध्यति, अनण्त्वात्। न ह्यनुवृत्तिनिर्देशे येऽकारादयस्तेऽणः, किं तर्हि ? ये अक्षरसमाम्नाये। जातिपक्षाश्रयाददोष इति चेत् ? न; जातिपक्षे ग्रहणकशास्त्रस्य प्रत्याख्यानात् नैव दोषः। इह हि व्यक्तिषु द्वयमस्ति—सादृश्यम्, भेदश्च। तत्र कदाचित् किञ्चित्प्राधान्येन विवक्ष्यते, यदा सादृश्यं विवक्ष्यते तदा तस्य भागस्य सदृशस्य सर्वासु व्यक्तिषु समानत्वाद् अग्रेपव्यक्त्याक्षेपो भवति; भेदस्यापरामृष्टत्वात्। सोऽयं प्रत्याहारे सदृशभागः

पदमञ्जरी

उच्चार्यते, स च नानानुबन्धयुक्त इति सर्वत्र सर्वानुबन्धकार्यप्रसङ्गः, 'अ सांप्रतिके' इत्यस्य चानुबन्धकार्यप्रसङ्गः ? लोकवद्व्यवस्था भविष्यति; तद्यथा—लोके इह मुण्डो भव, इह जटिलो भव, इह शिखी भव, इह तूष्णीको भवेत्येकस्यापि धर्मिणो देशभेदेन धर्मभेद उक्ते, यो यत्र धर्म उक्तः स तत्रैव व्यवतिष्ठते, न पुनर्धर्मिण एकत्वादन्यत्रापि भवति; तद्वदिहापि 'गोद्व्यचः' इत्यत्र चाश्वादिप्रतिषेधोऽलिङ्गमावृत्तिकृतमपि द्व्यच्त्वमाश्रीयत इति । तेन घटेन तरति घटिकः, धनस्य निमित्तं धन्यमित्यादौ द्व्यज्लक्षणौ ठन्यतौ भविष्यतः । आवृत्तिकृतादेव द्व्यज्व्यपदेशात् स्वाश्रयस्यैकाज्व्यपदेशस्य निवृत्तत्वात् किरिणेत्यादौ 'सावेकाचः' इति विभक्तेरुदात्तत्वं न भविष्यति ।

स्यादेतत्—एकश्चेदकारस्तमेकदैक एवोच्चारयेत्, न बहवः सहेति, न; दर्शनस्पर्शनादिवदुपपत्तेः, यथैकमेव पटमेकदैव कश्चित्स्पृशति कश्चित्पश्यति । तादृगेतदुच्चारणं नामेति ? सत्यम्; एकत्वेऽप्यकारस्य न कश्चिद्दोषः, युक्तिवशात्तु प्रत्युच्चारणं भिन्नोऽकार आश्रितः । तथा हि—दण्ड + अग्रमित्यकारयोः कालव्यवायो दृश्यते, दण्डेति शब्दव्यवायश्च; न चैकस्य कालशब्दव्यवाय उपपद्यते, नानात्वे तूपपद्यते, यथा–'अइउण्' इत्यत्राकारेकारयोः, यथा वा अहिरिति । ननु यथा एकस्यापि घटादेस्स्वव्यञ्जकप्रदीपसंनिधानासंनिधानाभ्यामुपलब्ध्यनुपलब्धी, तथैकस्याप्यकारस्य व्यञ्जकध्वनिसन्निधानात्प्रथममुपलब्धस्य; मध्ये च तदसन्निधानादनुपलब्धस्य; पश्चात्तत्सन्निधानादुपलब्धिरिति उपलब्ध्योरेव कालव्यवायः, नाकारस्य ? नैतत्प्रतीतिसाक्षिकमुच्यते—लौकिकाः ह्यकारयोरेव व्यवायं प्रतिपद्यन्ते येऽस्मिन् दुस्तर्के शिक्षिता न भवन्ति । किञ्च, अनुनासिकत्वादीनां विरुद्धानां धर्माणामेक एवाश्रयोऽकार उपलभ्यते, अतो विरुद्धधर्माध्यासाद् गवाश्वादिवद्भेदोऽनुमातव्यः । प्रत्यभिज्ञा च जातिनिबन्धना, जालादिवत् । व्यक्तिप्रत्यभिज्ञा त्वसिद्धा, भेदस्यैव प्रतिपुरुषं प्रसिद्धेः । तथा च कुड्यान्तर्हितेषु वक्तृषु शब्दविशेषाद्वक्तृविशेषं निश्चिन्वन्ति, न चैतदस्यैव प्रतिभासे सत्युपपद्यते । एवं तर्हि सैव जातिरत्र निर्दिश्यते, ततश्च सर्वेषामण्त्वं भविष्यति ? यद्येवम्, 'अणुदित्सवर्णस्य च' इत्यण्ग्रहणमनर्थकम् । एवं ह्यक्षरसमाम्नायवद् 'अस्य च्वौ' इत्यादावपि जातिनिर्देश एवास्तु, किमण्ग्रहणेन ! एवं तर्हि नैवात्र जातिर्निर्दिश्यते, नाप्येकैव ह्रस्वव्यक्तिः, षडपि ह्रस्वव्यक्तयो निर्दिश्यन्ते, तदेतदेवं कथं भवति ? सादृश्यप्रधानो निर्देशः । सादृश्यं च षण्णामपि ह्रस्वव्यक्तीनामस्तीत्येकव्यक्तिनिर्देशेऽपि तद्रूपस्याविवक्षितत्वात् षण्णामप्ययं निर्देशः संपद्यत इति सर्वासामण्त्वसिद्धिः । एवं च कृत्वा यदत्र विवृतोच्चारणं तदेव धात्वादिगतस्याप्यकारस्य विवृतत्वोच्चारणं संपन्नमिति न तेषां पृथग्विवृतत्वं प्रतिज्ञातमिति सर्वमवदातम्

तस्य प्रयोगार्थम् 'अ अ' इति शास्त्रान्ते प्रत्यापत्तिः करिष्यते ॥

पदमञ्जरी

कथं पुनर्ज्ञायते विवृतः प्रतिज्ञायते इत्याह—*तस्येत्यादि*। यदि पूर्वमकारो विवृतो न प्रतिज्ञातः स्यात्, ततस्तस्य = विवृतस्य। *प्रयोगार्थम्*। अर्थशब्दो निवृत्तिवचनः, प्रयोगनिवृत्त्यर्थं प्रत्यापत्तिं न कुर्यात्। अथ वा—तस्येति संवृतः परामृश्यते, तस्य संवृतस्य प्रयोगो यथा स्यादित्येवमर्थमित्यर्थः। स्वरूपाद्धि प्रच्युतस्य पुनस्तत्प्राप्तये यत्नोऽर्थवान् भवति। ननु चातिखट्व इत्यादावाकारस्य विवृतस्य ह्रस्वो विधीयमान आन्तरतम्याद्विवृतो भवेत्, तस्य प्रयोगो मा भूदिति प्रत्यापत्तिवचनमर्थवत्? नैतदेवम्; ह्रस्वादेशेषु 'अचश्च' इत्युपस्थानादचो ह्रस्वेन भाव्यम्, असति च विवृतत्वेऽकार आकारं न गृह्णातीति आकारस्य ह्रस्वो नैव स्यादिति कस्य प्रत्यापत्तिः स्यात्। यस्तर्हि 'आपोन्यतरस्याम्' इत्याकारस्यैव ह्रस्वः, तस्य प्रत्यापत्तिःस्यात्। एवं मन्यते—नैव लोके न च वेदे विवृताकारोऽस्ति, कस्तर्हि? संवृतः, योऽस्ति स भविष्यति। अथ वा यदि विवृतः प्रतिज्ञायते, प्रयोगोऽपि तस्य तथाभूतस्य प्राप्नोतीत्याशङ्क्याह—*तस्येत्यादि*। अस्मिन्पक्षे ज्ञापकस्यानुपन्यस्तत्वान्न काचिदनुपपत्तिः, विवृतत्वप्रतिज्ञानं तु व्याख्यानादवसेयम्। यदि प्रत्यापत्तिः क्रियते, तथैव प्रत्यापत्त्या सर्वोऽकारः संवृतः संपन्न इति पुनरपि सावर्ण्यं न स्यादित्यत आह—*शास्त्रान्त इति*। शास्त्रान्ते क्रियमाणा प्रत्यापत्तिः सर्वेष्वेव शास्त्रकार्येष्वभियातीति भावः ॥

न्यासः

प्रधान उपदेश इति सर्वासामवर्णव्यक्तीनामनुवृत्तिनिर्देशस्थानामण्त्वमुपपद्यते। कः पुनरस्य सादृश्यस्यावर्णजातेश्च विशेषः? अयमस्ति विशेषः—एतच्च सादृश्यं ह्रस्वास्वेवावर्णव्यक्तिषु वर्त्तते, न दीर्घप्लुतासु। अवर्णजातिस्तु दीर्घप्लुतास्वपि वर्त्तत इति गतमेतत्।

अथ कथमेतदवगम्यते अकार इह शास्त्रे विवृतः प्रतिज्ञायत इत्यत आह—तस्येत्यादि। यदि पूर्वं विवृतोऽकारो न प्रतिज्ञायेत, ततस्तस्याप्रयोगार्थम् 'अ अ' इत्यनेन प्रत्यापत्तिं न कुर्यात्। स्वरूपाद्धि प्रच्युतस्य पुनस्तत्प्राप्तिः = प्रत्यापत्तिः, सा कथमविचलितस्वरूपस्यैवोपपद्येत? अथ वा, यदि विवृतः प्रतिज्ञायते, तदा तस्य शास्त्रस्य परिसमाप्तावपि तथाभूतस्यैव प्रयोगः स्यात्? इति पूर्वपक्षमाशङ्क्याह—तस्येत्यादि। अर्थशब्दो निवृत्तिवचनः, यथा—मशकार्थो धूम इति। तस्य विवृतस्य प्रयोगनिवृत्तिर्यथा स्यादित्यर्थः। अथ वा—अर्थशब्दः प्रयोजनवचनः, तस्येत्यनेन संवृतः प्रत्यवमृश्यते, प्रयोगोऽर्थः प्रयोजनं यस्य तत् तथोक्तम्। क्रियाविशेषणत्वान्नपुंसकत्वम्। तदेतदुक्तं भवति—तस्य संवृतस्य स्वरूपात् प्रच्युतस्य प्रयोगनिमित्तं प्रत्यापत्तिः करिष्यते; यतः शास्त्रपरिसमाप्तौ ततो न भवति तथाभूतस्यैवायं प्रयोग इति।

## ऋ लृ क् ॥ २ ॥

'ऋ लृ' इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ककारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः—'अकः सवर्णे दीर्घः' इत्यकारेण, 'इको गुणवृद्धी' इतीकारेण, 'उगितश्च' इत्युकारेण। अकारादयो वर्णाः प्रचुरप्रयोगविषयास्तेषां सुज्ञानमुपदेशे प्रयोजनम्।

### पदमञ्जरी

ऋलृक् ॥ इह प्रयोजनार्थो वर्णानामुपदेशः, न स्वरूपज्ञापनार्थः। लृकारोपदेशस्य च न किञ्चित्प्रयोजनं दृश्यत इति तदुपदेशमाक्षेप्तुकामः किं पुनः कारणम् लृकारोपदेशस्यैव प्रयोजनं पृच्छति, न पुनर्वर्णान्तरोपदेशस्य' इत्याशङ्कां निराकुर्वन्नाह—*अकारादयो वर्णा इति*। वर्णशब्द उभयलिङ्गः, तथा च पूर्वत्र 'ह्रस्वमवर्णम्' इत्युक्तम्, इह च वर्णा इति।

*प्रचुरप्रयोगविषया इति*। प्रयुज्यते इति प्रयोगः = धात्वादिः, प्रचुरः प्रभूतः प्रयोगो विषयो येषामिति त्रिपदो बहुव्रीहिः। अथ वा प्रयुक्तिः=प्रयोगस्तस्य विषयः प्रयोगविषयस्ततः प्रचुरशब्देन बहुव्रीहिः। *सुज्ञानम् [उपदेशे] प्रयोजनमिति*। तद्यथा—दण्डाग्रम्, दध्यत्र, देवच्छत्रमित्यादौ स्थानित्वं निमित्तत्वमित्यादि।

### न्यासः

ऋलृक् ॥ तस्य ग्रहणं भवति त्रिभिरिति। कथं त्रिभिर्ग्रहणं लभ्यते ? यदि समुदायानुबन्धः, अवयवानुबन्धो न; अथ चाऽवयवानुबन्धः, न तदा समुदायानुबन्ध इत्येकेनैव ग्रहणं स्यात् ? नैष दोषः; प्रतिज्ञया त्वनुबन्धानां व्यवहारः। प्रतिज्ञा तु पौरुषेयी, पुरुषश्चोभयत्र प्रतिज्ञानं कुर्वन्न विरमति; विरोधाभावात्। न हि समुदायानुबन्धता अवयवानुबन्धप्रतिज्ञया विरुध्यते; इतरया न चेतरेति। तस्माद् युक्तमुक्तम्—त्रिभिर्ग्रहणं भवतीति। एवं सर्वत्र योजनीयम्।

इह शास्त्रे वर्णानामुपदेशः प्रयोजनवशात्। लृकारोपदेशस्य न किञ्चित् प्रयोजनं सम्भवतीत्यभिप्रायेणाह—अकारादयो वर्णा इति। प्रयुज्यते इति प्रयोगः = धात्वादिः; अनन्यत्रभावो विषयार्थः, प्रचुरः प्रभूतः प्रयोगो विषयो येषामिति बहुव्रीहिः। अथ वा, प्रयुक्तिः प्रयोगः = उच्चारणम्, तस्य विषय इति षष्ठीसमासः। तस्य प्रचुरशब्देन बहुव्रीहिः। तेषां सुज्ञानमुपदेशे प्रयोजनमिति। सुखेन ज्ञायत इति सुज्ञानम्। एतश्च प्रयोजनं किमर्थम् ? लृकारस्यैवोपदेशे प्रयोजनं पृच्छ्यत इति, अस्य वचनस्यावकाशनिरासार्थमुक्तम्। यदि ह्येतन्नोच्येत, लृकारस्यैव तु केवलं प्रयोजनं पृच्छ्यते इति, तदा स्यादस्य वचनस्यावकाशः।

लृकारस्तु क्लृपिस्थ एव प्रयुज्यते। क्लृपेश्च 'पूर्वत्रासिद्धम्' इति लत्वमसिद्धम्, तस्यासिद्धत्वाद् ऋकार एव अच्कार्याणि भविष्यन्तीति किमर्थम् लृकार उपदिश्यते? लत्वविधानाद्यानि पराण्यच्कार्याणि तानि लृकारे यथा स्युरिति। कानि पुनस्तानि? प्लुतः, स्वरितः, द्विर्वचनम्—क्लृ३प्तशिखः, प्रक्लृप्तः, क्लॄप्तः[1], क्लृप्तवानिति।

**पदमञ्जरी**

*लृकारस्त्विति*। तुशब्दोऽकारादिभ्यो विशेषं दर्शयति—*क्लृपिस्थ एवेति*। स्यादेतत्—क्लृपिस्थस्य तस्याच्कार्यार्थं उपदेश इति, तत्राह—*क्लृपेश्चेति*। न हि तस्याप्ययमौपदेशिकः, किं तर्हि? 'कृपो रो लः' इति विधानेन संपादितः, स चासिद्ध इत्यर्थः। ततः किमित्याह—*तस्यासिद्धत्वादिति*। *अच्कार्याणि भविष्यन्तीति*। कल्पत इति धातोरन्त इत्युदात्तत्वम्, क्लृप्तमिति हि शेषनिघातः, कल्पनमिति 'इको गुणवृद्धी' इत्यादीनि। *किमर्थम् लृकार उपदिश्यते इति*। न हि तस्य 'इको यणचि' इत्यादौ स्थानित्वं निमित्तत्वं वा संभवतीति भावः। *लत्वविधानादिति*। लत्वं विधीयते येन लत्वविधानं सूत्रम् 'कृपो रो लः' इत्येतत्, तस्मात्पराणीत्यर्थः। एतेन तेषु लत्वस्य सिद्धत्वं दर्शयति—*क्लृ३प्तशिख इति*। अत्र 'गुरोरनृतः' इति प्लुते कर्तव्ये लृकारस्य सिद्धत्वात् तस्य चानच्त्वादचो विधीयमानः प्लुतो न स्यात्। *प्रक्लृप्त इति*। अन्तर्भावितण्यर्थात्कर्मणि क्तः, 'गतिरनन्तरः' इति शेषनिघातः। अत्र 'उदात्तादनुदात्तस्य स्वरितः' इत्यस्मिन्कर्तव्ये लृकारस्य सिद्धत्वात्तस्य चानच्त्वादचो विधीयमानस्स्वरितो न स्यात्। ननु च नाचः स्वरितो विधीयते, सत्यम्; अनुदात्तसंज्ञा त्वचो विधीयते; एवं स्वरितसंज्ञाऽपि, ततश्च स्थान्यादेशयोरुभयोरपि लृकारयोरनच्त्वात् स्वरितो न स्यादेव। *क्लृप्तवानिति*।

**न्यासः**

लृकारस्तु क्लृपिस्थ एव प्रयुज्यत इति। तुशब्दोऽकारादिभ्यो विशेषार्थः। स्यादेतत्—क्लृपिसम्बन्धिनस्तस्य यान्यच्कार्याणि तदर्थमुपदेशः कर्तव्य इत्यत आह—क्लृपेश्चेत्यादि। यद्यसिद्धत्वं ततः किमित्याह—तत्र ऋकार एवेत्यादि। लत्वविधानाद् यानीत्यादि। लत्वं विधीयते येन शास्त्रेण तल्लत्वविधानम्। करणे ल्युट्। अ थवा-भावे विधिर्विधानम्। लत्वस्य विधानमिति षष्ठीसमासः। ततः पराणीत्यादि। एतेन लत्वस्य तेषु सिद्धत्वं दर्शयति। पूर्वत्र हि परमसिद्धम्, न तु परस्मिन् पूर्वम्। क्लृ३प्तशिख इति। क्लृप्ता शिखा यस्येति बहुव्रीहिः। अत्र 'गुरोरनृतः' इत्यादिना प्लुतो विधीयते। स च 'अचश्च' इत्येवं स्थानिनमुपस्थापयति। लृकारस्याप्यनुपदेशाद-

---

१. उदाहरणमिदं न्यासानुसारि।

यच्चाशक्तिजमसाधुशब्दरूपं तदनुकरणस्यापि साधुत्वमिष्यते ।

पदमञ्जरी

अत्र 'अनचि च' इति पकारस्य द्विर्वचनं न स्यात् । यद्यपि पूर्वमपि द्विर्वचनस्योदाहणं सम्भवति, तथापि स्पष्टार्थमिदमुदाहरणमुपन्यस्तम् । ननु च 'कृपो रो लः' इत्येतत्सूत्रं स्वरितविधानात्परम् 'अ अ' इत्येतस्मात्पूर्वमस्तु, एवं हि लत्वास्यासिद्धत्वात् प्लुतस्वरितद्विर्वचनान्यपि लृकारस्यैव सिद्धयन्ति ? नैतदस्ति; 'कृपो रो लः' इत्येतस्मिन्नुत्कृष्यमाणे 'ग्रो यङि' इत्येतदप्युत्क्रष्टव्यम्, ततश्च निजेगिल्यते इति 'हलि च' इति दीर्घत्वं स्यात्, तस्मिन् कर्त्तव्ये लत्वासिद्धत्वादिति यथान्यासमेव साधीयः । क्लृपिस्थ एव प्रयुज्यत इत्येतदपि शिथिलयन्नाह—*यच्चाशक्तिजमिति* । साधुशब्दोच्चारणशक्तेरन्या शक्तिरेवात्राशक्तिः, न ह्यशक्तेर्जन्म । नन्वसाध्वनुकरणमप्यसाध्वेव, यथा ब्रह्महत्यानुकरणम् । यो हि 'एवमसौ ब्राह्मणं हन्ति' इति ब्राह्मणं हन्ति सोऽपि प्रत्यवैति ? विषमोऽयमुपन्यासः; न तत्रानुकरणात् प्रत्यवायः, किं तर्हि ? अविकलं तत्, क्रियानुष्ठानादेव । एवं यदि पुनरनुकरणात्प्रत्यवायः स्याद्, 'एवमसौ ब्राह्मणं हन्ति' इति कदलीस्तम्भं छिन्दन्नपि प्रत्यवेयात्, तद्वदिहापि य एवं कुमार्या लृतकशब्दः प्रयुक्तः, तमेव यद्यनुकुर्वन् प्रयुञ्जीत, ततः स्यादसाधुः, अयं तु शब्दान्तरं प्रयुङ्क्ते । कथम् ? अर्थभेदात् । कुमार्या प्रयुक्तस्य पुरुषविशेषोऽर्थः, अनुकरणस्य तु कुमार्या प्रयुक्तमनुकार्यंशब्दरूपम् । अत एवाह—*असाधुशब्दरूपं तदनुकरणस्यापीति* । न चाप-

न्यासः

सत्यच्त्वे स न स्यात् । प्रक्लृप्त इति । अत्र 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इति प्रशब्दाकार उदात्तो भवति । लृकारोऽपि धातुस्वरेण उदात्त एव । निष्ठाप्रत्ययस्वरे कृते 'अनुदात्तं पदमेकवर्जम्' इति पश्चात् सोऽनुदात्तो भवति । 'कुगतिप्रादयः' इति समासे कृते समासान्तोदात्तत्वे प्रसक्ते 'गतिरनन्तरः' इति पूर्वपदप्रकृतिभावेन प्रशब्द एवोदात्तः, तस्मात् परस्य लृकारस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वं विधीयते, तदसत्यच्त्वे न स्यात्; तस्याज्धर्मत्वात् । क्लृप्तः, क्लृप्तवानिति । 'अनचि च' इति अच उत्तरस्य यरो द्विर्वचनं विधीयते, तदप्यनच्त्वे न स्यात् । यदुक्तम् 'क्लृपिस्थ एव प्रयुज्यते' इति, तद् विघटयन् प्रयोजनान्तरं दर्शयितुमाह—यच्चेत्यादि । साधुशब्दोच्चारणशक्तेरन्या शक्तिः = अशक्तिः, ततो जातम् अशक्तिजम् । तदनुकरणस्यापि साधुत्वमिष्यत इति । अर्थभेदेन शब्दान्तरत्वात्, शिष्टप्रयुक्तत्वाच्च, तदन्यसाधुशब्दवत् । ननु चानुकार्यस्यासाधुत्वादनुकरणस्यासाधुत्वेन भाव्यम् 'प्रकृतिवदनुकरणं भवति' इति वचनात्, नैतदस्ति; शास्त्रीया हि तत्र प्रकृतिराश्रीयते । प्रकृतिवदिति च शास्त्रनिबन्धनमेव कार्यमतिदिश्यते । न चाशक्तिजमसाधुशब्दरूपं शास्त्रीया प्रकृतिः, नाप्यप-

तत्स्थस्यापि लृकारस्याच्कार्यप्रतिपत्त्यर्थम् लृकारोपदेशः क्रियते। 'ऋतकः' इति प्रयोक्तव्ये शक्तिवैकल्यात् कुमारी 'लृतकः' इति प्रयुङ्क्ते, तदन्योऽनुकरोति—कुमार्य्लृतक इत्याहेति ॥

पदमञ्जरी

शब्दपदार्थकत्वादपशब्दत्वम्, अन्यथा ह्यपशब्द इत्येवायमपशब्दस्स्यात्। नापि 'प्रकृतिवदनुकरणं भवति' इत्यपशब्दत्वम्, शास्त्रीया हि तत्र प्रकृतिर्गृह्यते। शास्त्रीयं च कार्यमतिदिश्यते; न चापशब्दश्शास्त्रीया प्रकृतिः, न चाप्यपशब्दत्वं शास्त्रीयं कार्यम्; अतोऽशक्तिजानुकरणमपि साध्वेव। इष्यते इत्यनेनैतद्दर्शयति—न्यायसिद्धमप्येतच्छिष्टानामिच्छया नियम्यत इति। तेन किं सिद्धं भवति? लृवर्णस्य दीर्घा न सन्तीत्येतत्सिद्धं भवति; अन्यथा 'ऋत इद्धातोः' इत्येतच्छक्तिवैकल्याद्—'लृत' इति पठन्तीं कुमारीं यदा शिष्टोऽनुकुर्यात् कुमार्य्लृतक इत्याहेति तदा लृवर्णस्य दीर्घप्रयोगः साधुरेव स्यात्। 'इको यणचि' इत्यत्रासत्यपि लृकारोपदेशे वैषम्यात् संख्यातानुदेशाभावेऽपि आन्तरतम्यात्सिद्धमिष्टम्। गमिप्रभृतीनाम्लृकारस्येत्संज्ञापि 'पुषादिद्युताद्य्लृदितः' इति ज्ञापकात्सिद्धा। अतः पूर्वोक्तान्येव प्रयोजनानि। ननु च तान्यपि 'ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या' इति सवर्णसंज्ञया सिद्ध्यन्ति, सा चावश्यं वक्तव्या, पितृ + लृकार इत्यत्र सवर्णदीर्घत्वं स्यात्? सत्यम्; सवर्णसंज्ञाश्रयणे सा तावद्वक्तव्या; क्लृ३प्तशिख इत्यत्र प्लुतसिद्धये यत्नः कर्त्तव्यः, 'अनृतः' इति प्रतिषेधप्रसङ्गात्; लृकारोपदेशो तु स तावदुपदेश्यः, स्वरसन्धिप्रकरणे च लृकारस्य ऋकारवद्भावो वाच्य इत्यविशेषात् सूत्रकार लृकारमुपदिदेश।

न्यासः

शब्दत्वं शास्त्रनिबन्धनं कार्यम्। न हि शक्यं व्याकरणेनाप्यपशब्दत्वमाख्यातुम्, तस्य साधुशब्दसंस्कारायैव प्रवृत्तत्वात्। तस्मादपशब्दस्याप्यनुकरणं साध्वेव। तत्र तत्स्थस्यापि लृकारस्याच्कार्याणि न स्युः, यद्यसु तस्योपदेशो न स्यात्। कुमार्य्लृतक इति। अत्राच्त्वे सति लृकारस्य तत्र परतो यणादेशो भवति। ननु च 'इको यणचि' इत्यत्र संख्यातानुदेशोऽपि लृकारोपदेशस्य प्रयोजनमुपपद्यत एव। असति लृकारोपदेशे त्रयः स्थानिनः, चत्वारश्च आदेशाः स्युरिति वैषम्यात् संख्यातानुदेशो न स्यात्। तस्मात् संख्यातानुदेशोऽपि तस्य युक्तं प्रयोजनम्? न चैतदस्ति; मा भूत्संख्यातानुदेशः, असत्यपि तस्मिन् 'स्थानेऽन्तरतमः' इति परिभाषया व्यवस्था भविष्यति। इत्संज्ञा तर्ह्यपरं प्रयोजनम्, उपदेशे ह्यसति 'गम्लृ सृप्लृ गतौ' इत्यादिषु 'उपदेशेऽजनुनासिकः' इतीत्संज्ञा न स्यात्। तस्यां चासत्याम् 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति अङ् न स्यात्, नैतदस्ति; असत्यप्युपदेशे अस्मादेव लृदितो धातोरङ्विधानादित्संज्ञा विधास्यते।

## ए ओ ङ् ॥ ३ ॥

'ए ओ' इत्येतौ वर्णावुपदिश्य अन्ते ङकारमितं करोति प्रत्याहारार्थम् ।

### पदमञ्जरी

ए ओ ङ् ॥ अत्र 'पूर्वांश्च' इति नोक्तम्; पूर्वैः सहास्य ग्रहणासम्भवात् । अथ 'षिद्भिदादिभ्योऽङ्' 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यकारेण ग्रहणं कस्मान्न भवति? 'आदिरन्त्येन' इत्यत्र 'अणुदित्सवर्णस्य च' इत्यतः 'अप्रत्ययः' इत्यनुवृत्तेः। एवञ्च 'रोः सुपि' इत्यत्राप्रत्यय इति निषेधात् स्वरूपग्रहणम्। 'सुपि च' इत्यत्र तु प्रतिषेधो न भवति; यञादौ सुपीति विशेषणात्, उत्तरत्र च 'बहुवचने झलि' इति। सुप्तिङन्तं पदम्' इत्यत्रापि तिङ्साहचर्यात् सुबिति प्रत्याहारः। 'शास इदङ्-हलोः' इत्यत्र प्रत्याहारे सति अङादौ हलादौ चेत्वं विधीयेत, ततश्चाङ्हलोरित्य-नर्थकम्। एतावन्तो हि प्रत्ययाः–अङादयो हलादयश्च । व्यतिशासे इत्यत्र तु क्ङितीत्यनुवृत्तेरेवाप्रसङ्गः; अतोऽङ्ग्रहणसामर्थ्यात् स्वरूपग्रहणम् । 'ऋदृशोऽङि' इति न प्रत्याहारः; 'ऋच्छत्यृताम्' इति ऋतां लिटि पुनर्गुणविधानात् । 'सनि च' 'इङश्च' इति न प्रत्याहारः; 'इको झल्' इति कित्त्वविधानात्, 'अज्झनगमां सनि' इति दीर्घविधानाच्च । न हीङन्तानां सनि गम्यादेशे इगन्ता अजन्ता वा धातवः सनि संभवेयुः । 'परिमाणाख्यायां सर्वेभ्यः', 'इङश्च' इति न प्रत्याहारः; यदि स्यात्, ऋकारान्तानामेङन्तानां च सामान्यलक्षणेनैव घञः सिद्धत्वादिवर्णो-वर्णान्तेष्वजपोर्बाधाय घञ्विधिस्स्यात्। न च तयोरपि वचनसामर्थ्यान्नित्यो बाध इति विकल्पस्स्यात् ; ततश्च तद्विधावेव वा ग्रहणं कुर्यात् । 'क्रीङ्जीनां णौ' इति न प्रत्याहारः; क्रीज्योः पृथगुपादानाद्धातुसाहचर्याच्च । 'इङ्धार्योः' इति न प्रत्याहारः; धारिसाहचर्यात् ।

### न्यासः

इति नाक्षु प्रयोजनमुपदेशस्य । तस्मात् पूर्वोक्तान्येव प्रयोजनानि । तानि च ऋकार-लृकारयोः सवर्णसंज्ञा वक्तव्येत्येतदनाश्रित्योक्तानि। अत्र ह्याश्रिते सत्यसत्यपि लृकारोपदेशे 'अणुदित्सवर्णस्य च' इति ऋकारेण गृह्यमाणे लृकारस्य ग्रहणादेव सिध्यन्ति ।

ए ओ ङ् ॥ 'पूर्वांश्च' इति नोक्तम्; पूर्वैरस्य ग्रहणासम्भवात् । अथ 'षिद्भिदादि-भ्योऽङ्' इत्यत्राकारेणास्य कस्माद् ग्रहणं न भवति ? तत्र केचिदाहुः—'आदिरन्त्येन सहेता' इत्यत्र 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यतोऽप्रत्ययग्रहणमनुवर्त्तते, तेनायमर्थः सम्पद्यते—आदिरन्त्येन ग्राहको भवति, न चेत् प्रत्ययो भवतीति । प्रत्ययश्चायम्, तेन ग्राहको न भवति। एवञ्च 'सुप्तिङन्तं पदम्' इत्यादावपि प्रत्ययो ग्राहको न स्यात्। तस्मादनभिधानादिह प्रत्याहारग्रहणं न भवतीति वेदितव्यम्। अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति । न च 'षिद्भिदादिभ्योऽङ्' इति अकारादिप्रत्ययोत्पत्तौ विव-

तस्य ग्रहणं भवत्येकेन—'एङि पररूपम्' इत्येकारेण ।

ऐ औ च् ॥ ४ ॥

'ऐ औ' इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते चकारमितं करोति

पदमञ्जरी

ऐऔच् ॥ इह 'आदिरन्त्येन सहेता' इति मध्यवर्तिनामजित्येषा संज्ञा भवन्ती इकारादीनामिव णकारादीनामपि प्राप्नोति, ततश्च दधि णकारः, दधि करोति,

न्यासः

क्षितार्थाभिधानं भवति । इह तर्हि 'शास इदङ्हलोः' 'ऋदृशोऽङि गुणः' इति चाकारेण प्रत्याहारग्रहणं कस्मान्न भवति ? च्लिसदृशस्य चङ्सदृशस्य चाङो ग्रहणात् । 'शास इदङ्हलोः' इत्यत्र हि 'भञ्जेश्च च्लिणि' इत्यनुवर्त्तते । 'ऋदृशोऽङि' इत्यत्रापि 'णौ चङ्युपधाया ह्रस्वः' इति । अतो मण्डूकप्लुतिन्यायेन चङ्ग्रहणेन समानाधिकरणेनाङ् विशेष्यते—चङ्यङीतीति, न चाङ् चङ् भवति; अतिविलक्षणत्वात् । तत्र सामर्थ्यादिवार्थो गम्यते । परपदार्थेषु हि प्रयुज्यमानाः शब्दा अन्तरेणापि इवशब्दप्रयोगमिवार्थं गमयन्ति, यथा—अग्निर्माणवकः, गौर्वाहीक इति । तेनायमर्थो भवति—चङीवाङीति, चङ्सदृशोऽङित्यर्थः । कश्च चङ्सदृशोऽङ् ? यश्च्लेः स्थाने विहितः । तथा च च्लिस्थानिकस्यैवाङो ग्रहणं सम्पद्यते, न तु प्रत्याहारस्य । एवं 'शास इदङ्हलोः' इत्यत्रापि च्लिग्रहणेनाङि विशेष्यमाणे च्लिस्थानिकस्यैवाङो ग्रहणं वेदितव्यम् । इह तर्हि 'सनि च' 'इङश्च' इति, 'परिमाणाख्यायां सर्वेभ्यः' 'इङश्च' इति च कस्मादिकारेण प्रत्याहारग्रहणं न भवति ? पूर्वत्र तावन्न भवति, 'इको झल्' इति कित्त्वविधानात् । प्रत्याहारे ह्येतस्मिन् सनि गम्यादेशविधानादिगन्तत्वाभावे गुणस्याप्राप्त्या कित्त्वविधानमनर्थकं स्यात् । पूर्वत्र तावन्न भवति, यदि हि स्यात्, इक इति ककारेणैव प्रत्याहारं कुर्यात् । न ह्यङन्ताद्धातोः परस्य सनः सम्भवोऽस्ति; यतः प्रत्याहारग्रहणं ङकारेणार्थवद् भवति । परत्रापि न भवति; वैयर्थ्यप्रसङ्गात् । तथा हि इकारान्तेभ्यः 'एरच्' इत्यचा भवितव्यम्, उकारान्तेभ्योऽपि 'ऋदोरप्' इत्यपा । लृकारान्ता न सन्त्येव । एजन्तानां प्रागेव प्रत्ययोत्पत्तेः 'आदेच उपदेशेऽशिति' इत्यात्त्वेन भवितव्यम्, अतस्तेऽपि प्रत्ययविधानकाले न सन्त्येवेति । ऋकार एक एवावशिष्यते, ततो यदि घञ् विधित्सितः, अपार्थकं प्रत्याहारग्रहणं स्यात् , उरित्येव ब्रूयात् । 'क्रीङ्जीनां णौ' इत्यत्रापि क्रीणातिजयत्योः पृथगुपादानाद् इकारेण ग्रहणं न भवति । इकारान्तानां मध्ये तयोरेव यथा स्यादिति नियमार्थं पृथगुपादानमिति चेत् , न; एवमपि ककारेणैव प्रत्याहारं कुर्यात्, एजन्तानामात्त्वस्य सामान्यलक्षणेनैव सिद्धत्वात् । 'इङ्धार्य्योः शत्रकृच्छ्रिणि' इत्यत्रापि धारयतिना धातुना साहचर्याद् 'इङ्' इति धातोर्ग्रहणम् , न प्रत्याहारस्येति वेदितव्यम् ।

ऐ औ च् ॥ इह 'आदिरन्त्येन सहेता' इत्यनेन सूत्रेणाकारादीनामजित्येषा संज्ञा

प्रत्याहारार्थम् । तस्य ग्रहणं भवति चतुर्भिः—'अचः परस्मिन्पूर्वविधौ' इत्यकारेण, 'इच एकाचोऽम् प्रत्ययवच्च' इति इकारेण, 'एचोऽय-वायावः' इति एकारेण, 'वृद्धिरादैच्' इति ऐकारेण ।

प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न ।
आचारादप्रधानत्वाल्लोपश्च बलवत्तरः ॥

पदमञ्जरी

दधि ङकार इति यणादेशः प्राप्नोति । एवमग्ग्रहणे णकारस्यापि ग्रहणे सुगण् णकार इति 'अकः सवर्णे दीर्घः' प्राप्नोति, तथा अड्ग्रहणे चकारस्यापि ग्रहणाद् रुचीनामित्यादौ 'अड्व्यवाये' इति णत्वं स्यात् । एवं सर्वेष्वेव प्रत्याहारेषु मध्यवर्त्ति-नामनुबन्धानां तत्तत्प्रत्याहारनिबन्धनं कार्यं प्राप्नोतीत्यभिप्रायेणाह—*प्रत्याहारेऽनु-बन्धानामिति* । प्रत्याहारे=अक्षरसमाम्नाये येऽनुबन्धास्तेषाम् । अज्ग्रहणेषु, उप-लक्षणमेतत्, अजादिप्रत्याहारग्रहणेषु कथं ग्रहणं न भवति ? प्राप्नोत्येवेत्यर्थः । *आचा-रादिति* । आचरणमाचारः, आचार्यस्य प्रवृत्तिः 'उणादयो बहुलम्', 'तृषिमृषिकृशेः काश्यपस्य', 'अचि ङमुट्' इति, ततो ज्ञापकान्न भवति । सामान्यापेक्षं च ज्ञापकमिति कार्यान्तरमपि तत्र तत्र न भवति । *अप्रधानत्वादिति* । अणादिसंज्ञाप्रणयनार्थमनु-

न्यासः

विधीयते । सा च यथा इकारादीनां भवति, तथा णकारादीनामप्यनुबद्धानां स्यात् ; तेषामपि तत्रोपदेशात् । ततश्च तया प्रदेशान्तरे 'इको यणचि' इत्येवमादौ तेषु प्रातिपदिकेषु यथा दध्यत्रेत्यादौ यणादेशो भवति, तथा दधि णकारीयतीत्यादावपि स्यादित्यभिप्रायेणाह—प्रत्याहार इत्यादि । कथमज्ग्रहणेषु नेति कार्यमिति शेषः । 'अच्' इत्यस्याः संज्ञायाः प्रदेशवाक्येषु ग्रहणानि उच्चारणानि अज्ग्रहणानि । तेषु सत्सु णकारा-दीनां कथमच्कार्यं न भवेत् । भवेदेवेत्यर्थः । आचारादिति । आचरणमाचारः— आचार्यप्रवृत्तिः, ततो ज्ञापकान्न भवति । यदयम् 'उणादयो बहुलम्', 'तृषिमृषिकृशेः काश्यपस्य', 'ङमो ह्रस्वादचि ङमुण् नित्यम्', 'ङसिङसोश्च' इति णकारादिषु परतो यणादेशं न करोति, ततो ज्ञापयति 'सत्यामप्यच्संज्ञायामच्कार्याणि न भवन्ति' इति । अथ वा—'अजित्येषैव संज्ञैषां न भवति' इत्येषोऽर्थोऽनया आचार्यप्रवृत्त्या ज्ञाप्यते । यदि हि संज्ञा स्यात् आचार्यस्तेष्वच्कार्याणि कुर्यात् । एवं ज्ञापकेन संज्ञाऽभावं प्रतिपाद्य, इदानीं न्यायेन प्रतिपादयितुमाह—अप्रधानत्वादिति । अणित्येव-मादिकाः संज्ञाः प्रणेतुं तद्रूपप्रतिपादनाय अनुबन्धा उच्चार्यन्ते । ततश्च परार्थ-मुपादीयमानत्वादप्राधान्यमनुभवन्ति । इतरे तु स्वार्थमुपादीयन्त इति तेषां प्राधा-न्यम् । तेन तेषामेवाजिति एषा संज्ञा भवति, नानुबन्धानाम् । प्रधानाप्रधानसन्निधौ

पदमञ्जरी

बन्धोच्चारणम् । तत्राकारादारभ्य आ चकारान्मध्यवर्तिनामच्संज्ञा भवन्ती स्वप्रवृत्तेः प्राग्येषां स्वार्थमुपादानं निश्चितं न परार्थमेव तेषां प्रधानानां भवति । तत्र च येषामृकारादीनां न क्वचिदपि संज्ञास्वरूपान्तर्भावस्तेषां तावत्स्वार्थमेवो-पादानम्, इकारादीनामप्यणादिसंज्ञासु न कथञ्चिदपि प्राधान्यम् । इगादिसंज्ञासु संज्ञास्वरूपान्तर्भावेऽपि स्वरूपमित्यनुवृत्तेः स्वार्थमप्युपादानं न परार्थमेव । णकारादीनां तु परार्थमेवेत्यप्राधान्यम् । किं च णकारादीनामच्संज्ञा प्राप्नोति लोपश्च, तत्र परत्वान्नित्यत्वाच्च लोपे कृते संज्ञाप्रवृत्तिकालेऽसत्त्वादपि तेषामजादिसंज्ञाऽभाव इत्याह—*लोपश्चेति* । स्वार्थ एव तरप्, 'अल्पाच्तरम्' इति यथा । यस्मिंस्तु प्रत्याहारे योऽनुबन्धोऽपेक्षितः, तस्य वचनसामर्थ्यात्तत्प्रवृत्तेः प्राग्लोपाभावः ।

इहाकारादयो वर्णाः सभागा इष्यन्ते; यदाह 'तस्यादित उदात्तमर्धह्रस्वम्' पूर्वस्यार्धस्यादुत्तरस्येदूताविति । सन्ति च केषांचिद्भागा वर्णान्तरबुद्धिबोध्याः—आकारादिष्वकारादयः, एकारैकारयोरकारेकारौ, ओकारौकारयोरकारोकारौ, ऋकारे रेफः, ऌकारे लकारः । ते तत्तदकारादिग्रहणेन गृह्येरन्न वेति सन्देहः । तदर्थं च किमकारादिसंघातमात्रमाकारादयो वनादिवच्छरीरादिवद्वा, किं वा वर्णान्तरमेतत्सदृशावयवं नृसिंहादिवदिति सन्देहः । किं तावत्प्राप्तम् ? संघातमात्रमिति ; कुतः ? अकारादिरूपप्रत्यभिज्ञानात्, क्रमेणोपलब्धेश्च । 'ए ओ' इति ह्युक्ते पूर्वमकारः, पश्चादिदुतौ इति प्रतिपत्तिः, स्थानक्रमाभिधानाच्च ए ऐ कण्ठ्यतालव्यौ, ओऔ कण्ठ्योष्ठ्याविति । नह्येकस्य वर्णस्य स्थानद्वयेन क्रमेण निष्पत्तिः । सूत्रकारोऽप्याह—'एचोः प्लुतिप्रसङ्गे तदवयवाविदुतौ प्लवेते' इति । *आश्वलायनोऽ*-प्याह—'विविच्य सन्ध्यक्षराणामकारम्' इति । अतः संघातमात्रत्वात्तद्ग्रहणेन ग्रहणे सति अग्ने इन्द्रः[1], वायो उदकमित्यत्र सवर्णदीर्घत्वं प्राप्नोति । 'विप्रतिषेधे

न्यासः

हि प्रधानमेव कार्येण सम्बन्धमनुभवति, नेतरत् । तथा चाह भाष्यकारः—'प्रधाने कार्यसंप्रत्ययात् सिद्धम्' इति । यद्येवम् , अकारस्याप्येषा संज्ञा न स्यात् , संज्ञाप्रतिपादने तस्याप्यङ्गभावोऽस्त्येव ? 'स्वस्य च रूपस्य' इत्यनुवृत्तिसामर्थ्यात् तस्य भवतीत्यदोषः । एतेनानन्तरोक्तेन कारणद्वयेन संज्ञाविधानकालेऽनुबन्धानां सन्निधानमभ्युपेत्य संज्ञाया अभावः प्रतिपादितः । इदानीं तत्रासन्निहितत्वादेव सा न भविष्यतीति प्रतिपादयितुमाह—लोपश्चेत्यादि । बलवानेव बलवत्तरः, स्वार्थे एव तरप् ; 'अल्पाच्तरम्' इति यथा । अनुबन्धा हि इत्संज्ञकाः, तेन तेषामच्संज्ञायाः प्रागेव 'तस्य लोपः' इति लोपेन भवितव्यम् ; तस्य बलवत्त्वात् । तदसतां तेषां कुतः संज्ञा ? तस्याञ्चासत्यां कुतोऽज्ग्रहणेष्वच्कार्यस्य सम्भवः ? बलवत्त्वं तु लोपस्य परत्वान्नित्य-

१ 'इदम्' इति पाठः ।

वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न

पदमञ्जरी

परं कार्यम्' इति परत्वादन्तरङ्गत्वाच्चावयवप्रतिपत्तिपूर्वकत्वात्समुदायप्रतिपत्तेः, अग्ने एतीति 'एङः पदान्तात्' इति स्यात्, आलूय प्रलूयेति तुक्, खट्वाभिरित्यत्रैस्, यातेत्यतो लोपः, वाचा तरति वाचो निमित्तमिति द्व्यज्लक्षणौ ठन्यतौ स्याताम्। एवमाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—*वर्णेष्वित्यादि*। *वर्णैकदेशा इति*। पुनर्वर्णग्रहणं वर्णानां सतामेकदेशा एते, न पुनर्वर्णसमूहानामिति ज्ञापनार्थम्, तेन वर्णैकत्वव्यवस्थापक एकत्वप्रतिभासो निर्णीतः। न ह्याकारादेः पदस्येव वर्णसमूहत्वेन प्रतिभासः, किन्त्वेकवर्णतया। अकारादिभागसंवेदनं त्वेकवर्णत्वेऽपि तस्य सभागत्वात्, भागानां चाकारादिसादृश्यादुपपन्नम्, तदाह—*वर्णान्तरसमानाकृतय इति*। भागानामेव च क्रमोपलब्धिः स्थानभेदोऽप्ये-

न्यासः

त्वाच्च। संज्ञाशास्त्राद्धि लोपशास्त्रं परम्, अतस्तस्यापि परत्वम्। कृताकृतप्रसङ्गित्वान्नित्यत्वम्। कृतायामपि संज्ञायां लोपेन भवितव्यम्, अकृतायामपि। न तु लोपे कृते संज्ञा भवति, संज्ञिनामसत्त्वात्। यद्येवम्, यथा अजन्तःपातिनां णकारादीनामनुबन्धानां प्रथमं लोपो भवति तथा चकारस्यापि स्यात्, ततश्चाजिति संज्ञा न निष्पद्यते ? वचनसामर्थ्यात् तस्य प्राग्लोपो न भविष्यति। लुप्तेऽपि वा तस्मिन् भूतपूर्वेण तेन सहितः अकारः संज्ञा भविष्यति। अजन्तःपातिनां तु लुप्तानां णकारादीनां नार्हति संज्ञा भवितुम्; इकारादिषु सावकाशत्वात्।

इहैते अकारादयो वर्णा अनेकावयवा इष्यन्ते, 'तस्यादित उदात्तमर्धह्रस्वम्' 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' इति वचनात्। सन्ति च केषाञ्चित् केचिदवयवा वर्णान्तरसरूपाः, तद्यथा—ऋकारे रेफः, लृकारे लकारः, एकारे च ऐकारे चाकारेकारौ, ओकारे च औकारे च अकारोकारौ। दीर्घेष्वाकारादिषु ह्रस्वा अकारादयः। तत्र य एते ऋकारादिवर्णानामवयवास्ते किं वर्णग्रहणेन गृह्येरन् ? न वा ? तत्र पूर्वस्मिन् कल्पे—अग्ने इह, वायो उदकमित्यकः सवर्णे दीर्घत्वं प्राप्नोति, प्रणीय, आलूयेति ह्रस्वाश्रयस्तुक्। एवमादयोऽन्येऽप्यस्मिन् पक्षे दोषाः प्रसजन्ति, ते च भाष्यादवधार्याः। इतरत्र तु नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्त्तव्यम्। नुड्विधौ तावत्—'ऋधु वृद्धौ' लिट्, आनृधतुः, आनृधुरित्यत्र ऋकारे रेफस्य हल्ग्रहणेनाग्रहणात् द्विहल्त्वाभावे 'तस्मान्नुड् द्विहलः' इति नुड् न प्राप्नोति; लादेशविधौ—क्लृप्तः, क्लृप्तवानिति रेफस्य 'कृपो रो लः' इति लत्वं न सिध्यति; विनामविधौ—मातृणाम्, पितृणामिति णत्वं न स्यादित्यत आह—वर्णेष्वित्यादि। वर्णेषु ऋकारादिषु। वर्णैकदेशा इति। रेफादय इति। वर्णात्मभूतत्वज्ञापनार्थमेकदेशा इत्युक्तम्। एतदुक्तं भवति—वर्णानामात्मभूता एकदेशा वर्णैकदेशा इति। यदि हि

भवति। तच्छायानुकारिणो हि ते, न पुनस्त एव। पृथक्प्रयत्ननिर्वर्त्यं

पदमञ्जरी

कवर्णत्वेऽपि वकारवदुपपन्नः, सूत्रकारवचनमपि सदृशभागानबन्धनमेवास्तु, अतोऽकारप्रत्यभिज्ञानादेरन्यथापि सिद्धत्वादबाधितान्यथानुपपन्ना चैकत्वबुद्धिरेकवर्णत्वे प्रमाणम्। *तेष्विति*। एकदेशेषु। *तत्कार्यमिति*। वर्णान्तरकार्यं सवर्णदीर्घत्वादि न भवति। किं कारणमित्याह—*तच्छायानुकारिणो हीति*। तच्छाया= तदाकारः। एवं प्रत्यक्षेणैवयं साधयित्वा तत्र विप्रतिपन्नं प्रत्यनुमानमाह— *पृथगित्यादि*। इच्छायोनिरात्मगुणोऽत्र प्रयत्नः, न पुनः स्पृष्टतादिर्वर्णगुणः। इहैकप्रयत्ननिर्वर्त्यं एको वर्णं एकेच्छापूर्वकश्चैकप्रयत्नः। तत्र यथा एकवर्णोच्चारणेच्छापूर्वकैकप्रयत्ननिर्वर्त्यत्वादकारादीनां सभागत्वेऽप्येकत्वम्, तथा एकारादेरपि। न हि कश्चिदेकाराद्युच्चारयन् प्रयत्नस्य तत्कारणभूताया इच्छाया वा भिन्नत्वमुपैति। अतो नरसिंहवज्जात्यन्तरत्वादकारादीनामभावादेव तत्कार्याणामभावः। यद्येवम्, 'तस्मान्नुड् द्विहलः' इति नुट् आनर्धेत्यादावेव स्याद्, आनृधतुरित्यादौ न स्याद्; ऋकारस्थस्य रेफस्याहल्त्वात्। तथा 'कृपो रो लः' इति लत्वं कल्प्ता, चलीक्लृप्यते, कल्पयिष्यत इत्यादौ शुद्धस्यैव रेफस्य स्यात् शुद्धो लकारः, न तु क्लृप्त इत्यादावृकारस्य लृकारः। 'रषाभ्याम्' इति णत्वमातीर्णमि-

न्यासः

'एकदेशाः' इत्येतावदुच्येत, ततः कस्यचिद् भ्रान्तिः स्यात्—'अर्थान्तरभूता एवैते एकदेशाः' इति। वर्णैकदेशास्तूर्य्यादयोऽपि सन्तीति तद्व्यवच्छेदार्थमाह—*वर्णान्तरसमानाकृतय इति*। वर्णान्तरवत् समानाकृतिर्येषां ते वर्णान्तरसमानाकृतयोऽवयवाः। ततोऽन्यैर्वर्णैरनवयवभूतैस्तुल्यकृतय इत्यर्थः। *तेष्विति*। वर्णैकदेशेषु। *तत्कार्यमिति*। वर्णान्तरकार्य्यम्—अकः सवर्णे दीर्घत्वादि। किं पुनः कारणं न भवतीत्याह—*तच्छायानुकारिणो हीत्यादि*। तच्छाया=तदाकारः। वर्णान्तराणामकारादीनामाकारमात्रम्। तेऽनुकुर्वन्ति; तत्तुल्यरूपत्वात्, न तु त एव। न हि तदाकारानुकारित्वमात्रेणैव तत्त्वं भवति। तथा हि गवि गवयावयवानुकारिणोऽवयवाः सन्ति, न च तेषां तत्स्वभावता। किं पुनः कारणं ते त एव न भवन्तीत्याह— *पृथगित्यादि*। प्रयत्नः प्रयतनम्=स्थानकरणव्यापारः। वर्णान्तरहेतोः प्रयत्नात् पृथगन्येन प्रकारेण यं निर्वर्त्त्यं निष्पाद्यं वर्णमाचार्या इच्छन्ति, तदेते वर्णा अवयवाः। यदि वर्णाः स्युः, प्रयत्नान्तरनिर्वर्त्त्याः स्युः, न चैवम्। तथा हि—समुदायार्थो यः प्रयत्नः तेनैव ते निष्पाद्यन्ते। तदेवम् अग्रहणकपक्षमाश्रयतैव ग्रहणकपक्षभाविनो ये दोषास्तेषां प्रसङ्गः प्रतिक्षिप्तः। ननु च ग्रहणपक्षोऽपि भाष्ये व्यवस्थापितः; तदनुषङ्गिणां दोषाणां परिहारात्, तत् कस्मात् स परित्यक्तः? बहुप्रतिविधेयत्वात्। अग्रहणकपक्षे स्वल्पं प्रतिविधेयम्। अतः स एव वृत्तिकारेणाश्रितः।

हि वर्णमिच्छन्त्याचार्याः। नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्। नुड्विधौ ऋकारग्रहणम्—आनृधतुः, आनृधुः। लादेशे

पदमञ्जरी

त्यादावेव स्यात्, तिसृणां मातृणामित्यादौ तु न स्यादित्यत आह-*नुड्विधीत्यादि*। सकारनकारस्थानिकस्य मूर्द्धन्यस्य *विनाम* इति पूर्वाचार्याणां संज्ञा। इह तु णकारस्य ग्रहणम्। नुड्विधौ तावद् द्विहल्ग्रहणं न करिष्यते। न चैवमाटतुरित्यादावपि प्रसङ्गः, 'अश्नोतेश्च' इत्यस्य नियमार्थत्वाद्—अकारोपधस्य यदि भवति अश्नोतेरेवेति, अश्नातिनिवृत्त्यर्थं हि 'नाश्न' इत्येव ब्रूयात्। लत्वे 'च रो लः' इति प्रामान्यनिर्देशादृकारलृकारस्थयोश्च रेफलकारयोर्निष्कृष्य स्थान्यादेशभावायोगादेकदेशविकारद्वारेण ऋकारस्यैव लृकारः। अत्र च प्रमाणम्—'लुटि च क्लृपः' इति निर्देशः। णत्वेऽपि 'र' इति सामान्यनिर्देशादृकारस्थोऽपि तावद्रेफो गृह्यते। न च परयाऽज्भक्त्या व्यवधानम्, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इत्यत्र व्यवायेऽपीति

न्यासः

यदि तर्हि न गृह्यन्ते, नुडादिविधिषु ऋकारग्रहणं कर्त्तव्यतया स्थितमेवेत्यत आह—नुड्विधिलादेशविनामेष्वित्यादि। नुडादिविधिषु यद्दोषमापतति ऋकारविषये तस्य प्रतिविधानं कर्त्तव्यमित्यर्थः। तत्र नुड्विधौ तावत्—ऋकारस्थो रेफो हल्ग्रहणेन गृह्यते। तेनात्रापि द्विहलोऽङ्गस्य नुड् भवति—आनृधतुः, आनृधुरिति। एतत् स्वयमेव वृत्तिकारेण प्रतिपादनं कृतम्। अथ किमयमृकारस्थो रेफो वर्णात्मकः? नेत्याह। इदानीमेव ह्युक्तम्—'तच्छायानुकारिणो हि ते, न पुनस्त एव' इति। ये तर्हि हकारादयो वर्णा अक्षरसमाम्नाये उपदिष्टास्ते किं वर्णात्मकाः? नेत्याह। तथा हि 'हयवरट्' इत्यादौ वक्ष्यति—'इत्येतान् वर्णानुपदिश्य' इति। अथ कथमिदानीं वर्णात्मनां हलां ग्रहणेन ऋकारस्थस्यापि अवर्णात्मनो रेफस्य ग्रहणं भवति? द्विहल्ग्रहणसामर्थ्यादित्यभिप्रायः। तत्र हि 'तस्मान्नुड्' इत्येतावदेव वक्तव्यम्। न चैवमुच्यमाने आटतुः, आटुरित्यादावपि प्रसङ्गो भवति; 'अश्नोतेश्च' इत्यस्य नियमार्थत्वात्—अद्विहलो यदि भवति तदाश्नोतेरेव, नान्यस्येति। अश्नातिनिवृत्त्यर्थं तदिति चेत्? वार्त्तमेतत्। यदि ह्येतावत् प्रयोजनं स्यात्, 'नाश्नः' इत्येवं प्रतिषेधं कुर्यात्। तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्—द्विहल्छायानुकारिणो हि यथा स्यादिति। यस्याप्येको मुख्यो हल्, अपरोऽवयवः, तत्समानाकृतित्वादुपचारेण हल् व्यपदेशार्हः, तस्यापि यथा स्यादित्येवमर्थः। एतच्च कथं लभ्यते? यदि हलित्येषा श्रुतिस्तत्र हल्छायानुकारिण्यामपि ऋकारस्थायां रेफव्यक्तौ वर्त्तते, नान्यथा। तस्माद् द्विहल्ग्रहणेन ऋकारस्थो रेफोऽपि गृह्यते; अन्यथा द्विहल्ग्रहणमनर्थकं स्यात्। 'रेफः' इति परप्रसिद्ध्या तत्रो-

ऋकारग्रहणम्—क्लृप्तः, क्लृप्तवान्। विनामे ऋकारग्रहणम्—कर्तॄणाम्।

पदमञ्जरी

विभज्य सामान्येन व्यवायेऽपि णत्वविधानात्। न चैवं वर्णान्तरव्यवायेऽपि प्रसङ्गः; अट्कुप्वाङ्नुम्भिरिति नियमार्थत्वात्—आक्षरसमाम्नायिकैस्तत्प्रत्यायितैर्वा व्यवाये यदि भवति, एभिरेवेति। क्षुभ्नादिषु वा नृनमनतृप्नोतिग्रहणं ज्ञापकमिति प्रतिविधानम्॥

न्यासः

क्तम्। वर्णग्रहणवादिनां हि ऋकारभागोऽपि 'रेफः' इति प्रसिद्धः। सादृश्यादेवमुक्तम्। भवति हि सादृश्यादतस्मिन्नपि तद्व्यपदेशः, यथा—अग्निर्माणवक इति। अथ वा 'रादिफः' इत्यत्र 'वर्णात् कारः' इत्यतो 'वर्णात्' इति नानुवर्त्तते, तेनावर्णात्मकादपि रादिफो भवति, बहुलवचनाद्वा। अत एव लृकारस्थाल्लकारसरूपादवयवाद् अवर्णात्मनोऽपि कारप्रत्ययो भवतीति वेदितव्यम्। लादेशविधावपि—'र' इति सामान्यमुपादीयते। तेन यः केवलो रेफः, यश्च ऋकारस्थः—तयोर्द्वयोरपि ग्रहणम्। 'ल' इत्यपि सामान्यमेव। ततोऽयं केवलस्य रेफस्य स्थाने केवल एव लकार आदेशो विधीयते। ऋकारस्याप्येकदेशविकारद्वारेण लृकारः। तथा च 'लुटि च क्लृपः' इत्येवमादयो निर्देशा उपपद्यन्त इति। एतत् 'कृपो रो लः' इत्यत्र स्वयमेव वृत्तिकृता प्रतिपादितम् 'र इति सामान्यमुपादीयते'[1] इति। वर्णत्वावर्णत्वकृतं भेदमुत्सृज्य यत् सामान्यमवर्णात्मिकायां वर्णात्मिकायाञ्च रेफव्यक्तौ वर्त्तते यतस्तयोर्वर्णत्वावर्णत्वभेदभिन्नयोरपि 'र' इति शब्दप्रत्ययौ अभिन्नौ भवतः, तावुपादीयेते[2]; न तु वर्णात्मिकैव रेफव्यक्तिः। तेनेति। सामान्योपादानेन द्वयोरपि ग्रहणं भवतीति। तस्य सामान्यस्य द्वयोरपि सद्भावात्। ल इत्यपि सामान्यमेवेति। 'उपादीयते' इत्यपेक्षते[3]। अत्रापि यश्च केवलो लकारः, यश्च लृकारस्थः—तयोर्द्वयोरपि ग्रहणमित्येतद्वक्तव्यं स्यात्। पूर्वानुसारेण गम्यमानत्वान्नोक्तम्। ततोऽयमित्यादि। यत एवं द्वयोरपि रेफलकारयोर्ग्रहणम्, तस्मात् केवलस्य रेफस्य स्थाने लकारोऽयमादेशो विधीयते। अन्तरतमत्वादृकारस्यापि लृकारः। ननु च सत्यपि द्वयोरपि ग्रहणे ऋकारस्य स्थाने लृकारो भवतीत्येतत् कुतो लभ्यते ? न हि ऋकारस्थो रेफ ऋकारो भवति, किं तर्हि ? तदवयवः। नापि लृकारस्थो लकार ऋकारो भवति, किं तर्हि ? तदवयवः। तत्र द्वयोरपि ग्रहणे सति ऋकारस्थस्यापि रेफस्य लृकारस्थो लकारो वर्णैकदेशतयान्तरतमो भवतीत्ययमेवार्थो लभ्यते, न तु ऋकारस्य हि स्थाने लृकारो भवतीत्येतस्य चोद्यस्यापाकरणार्थमेक-

---

१ 'कृपो रो लः' (८।२।१८) इति सूत्रस्था काशिका द्रष्टव्या।

२. 'अतः' इति शेषः।

३. मुद्रितकाशिकासंस्करणेषु तु 'उपादीयते' इति पाठ उपलभ्यत एव।

### न्यासः

देशविकारद्वारेणेत्युक्तम्। तदेकदेश ऋकारस्थावयवो रेफस्तस्य विकार लृकारावयवो लकारः। अथ वा एकदेशः। अथ वा एकदेशलृकारस्थो लकारः, स एव विकारः। ऋकारस्थस्य रेफस्य स एव एकदेशविकारः। द्वारं मुखम्, उपाय इति यावत्। तेन समस्तस्यैव ऋकारस्य स्थाने समस्त एव लृकार आदेशो विधीयते। यदि हि ऋकार-लृकाराभ्यां तत्स्थयोश्च रेफलकारयोः पृथग्भावः सम्भवेत्, तदा ऋकारैकदेशस्य रेफस्य केवलस्य लृकारैकदेशो लकारः केवलः शक्यते विधातुम्। न च तयोस्ततः पृथग्भावः सम्भवति। तस्माद् यथोक्तेन प्रकारेण ऋकारस्य लृकारादेशो विधीयते। अनन्त-रोक्तस्यार्थस्य दृढीकरणाय तथा च इत्यादेरुपन्यासः। यत एवमेकदेशद्वारेण ऋकारस्य स्थाने लृकार आदेशो विधीयते। एवञ्च सति 'लुटि च क्लृपः' इत्येवमादयो निर्देशा उपपद्यन्ते, नान्यथा। आदिशब्देन 'ऋदुपधाच्चाक्लृपिचृतेः' 'तासि च क्लृपः' इत्ये-तयोर्निर्देशयोर्ग्रहणम्। विनामविधावपि 'ऋवर्णाच्चेति वक्तव्यम्' इत्युक्त्वा "रश्रुति-सामान्यनिर्देशाद्वा सिद्धम्। अवर्णभक्त्या च व्यवधाने णत्वं भवतीति क्षुभ्नादिषु नृनमनतृप्नोतिग्रहणं णत्वप्रतिषेधार्थं द्रष्टव्यम्। अथ वा ऋवर्णादपि णत्वं भवतीत्येतदेव तेन ज्ञाप्यते[1]" इति वृत्तिकृता स्वयमेव प्रतिविहितम्। रश्रुतिसामान्यनिर्देशात् सिद्धम् इति। 'र' इति श्रुतिः = उपलब्धिर्यस्य स रश्रुतिः=रेफः। तस्य केवलस्य ऋकारस्थस्य च वर्णत्वावर्णत्वकृतभेदं परित्यज्य यत् सामान्यं रेफमात्रं तदिह निर्दिश्यते, न तु वर्णात्मिकैव रेफव्यक्तिः। तेन सिद्धं तिसृणाम्, चतसृणाम्, मातृणाम्, पितृणाम् इत्यादावपि णत्वम्; ऋकारेऽपि तस्य रश्रुतिसामान्यस्य विद्यमानत्वात्। स्यादेतत्—ऋकारे त्रयो वर्णावयवाः, तन्मध्ये रेफोऽर्द्धमात्रात्मा, तत्र रश्रुतिसामान्यस्य निर्देशेनैव सिध्यति। यासौ रेफात् पराऽवर्णभक्तिस्तस्या व्यवधानादित्यस्य चोद्यस्य परिहारायोत्तरो ज्ञापकग्रन्थः–यदयं क्षुभ्नादिषु णत्वप्रतिषेधाय नृनमनशब्दं तृप्नोतिशब्दञ्च पठति, तेनैतज्ज्ञाप्यते 'अवर्णभागव्यवधानेऽपि णत्वं भवति' इति; अन्यथा हि तत्र तयोः पाठो ऽनर्थकः स्यात्, प्राप्त्यभावात्। प्राप्तिपूर्वकत्वाच्च प्रतिषेधानाम्। यद्यपि वर्णात्मिकैव रेफव्यक्तिर्निर्दिश्यते, तथापि सिद्धमिति दर्शयितुमाह—अथ वेत्यादि। पूर्वसूत्रोपात्ताद् रश्रुतिसामान्यनिर्देशात् परयाऽवर्णभक्त्या व्यवहितादपि णत्वं भवतीति ज्ञापितम्। इदानीं तु सूत्रानुपात्तादृकारादव्यवहितादेवेत्येष विशेषः।

अपरे तु—सर्वाण्येतानि प्रतिविधानानि वर्णैकदेशग्रहणकपक्षमाश्रित्य विहितानी-त्याचक्षते, एतच्चासम्यक्; यं हि पक्षमाश्रित्य 'नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्' इत्युक्तं तत्रैव प्रतिविधातुं युक्तम्; अन्यथा ह्यग्रहणकपक्षमभ्युपेत्य ग्रहणकपक्षेऽपि प्रतिविधानं कुर्वता वृत्तिकारेणाकौशलमेव केवलमात्मनः प्रकटितं स्यात्।

---

1. 'रषाभ्यां नो णः' (८।४।१) सूत्रे काशिका।

# हयवरट् ॥ ५ ॥

'ह य व र' इत्येतान्वर्णानुपदिश्य पूर्वांश्चान्ते टकारमितं करोति

## पदमञ्जरी

हयवरट् ॥ 'अड्डुदात्तः' इति न प्रत्याहारः; 'प्राक् सितादड्व्यवायेऽपि' इति वचनात् । प्रत्याहारे तस्मिन् प्रत्येकमट्त्वे 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्, समुदायस्य त्वट्त्वे सर्वादेश इति कुतो व्यवायः ! ननु च 'अड्डुदात्तः' इत्यत्र यदा प्रत्याहारस्तदा 'अड्व्यवाये' इत्यत्रापि प्रत्याहार एव, णत्वविधिवत्; ततश्चाभ्यवसुनोतीत्यादौ षत्वविधानार्थमेतत्स्यात् । एवं तर्ह्यादिरन्त्येनेत्यत्राप्रत्यय इत्यनुवर्तते, स चान्वर्थः—'प्रतीयते विधीयते' इति, तेन भाव्यमानेन सर्वत्र प्रत्याहारग्रहणं न भविष्यति । न चैवम् 'इको यणचि' इत्यादौ दोषः, आदिरन्त्येनेत्येतद्धि अइउणित्यादिभिः प्रत्येकमभिसंबध्यते । तत्र क्वचिदन्वर्थग्रहणम्, क्वचिन्न । 'इड्वलादेः' इति न प्रत्याहारः; 'विभाषेटः' इति वचनात् । इड्विधौ ह्यङ्गस्येत्यनुवृत्तं पञ्चम्यन्तं चेद्विपरिणम्यते, इकारादीनां च प्रत्येकमिट्त्वम्; तत्र 'आदेः परस्य' इत्यार्धधातुकादेरिकारादिरादेशः स्याद्, अविपरिणामे तु 'अलोऽन्त्यस्य' स्यात् । समुदायस्य त्विट्त्वे सर्वादेशः । न च त्रिष्वपि पक्षेषु इणन्तादङ्गादुत्तरो य इट् तत उत्तरेषां षीध्वंलुङ्लिटां धकारस्य संभवः । 'दीधीवेवीटाम्' इति न प्रत्याहारः; इड्व्यतिरिक्तानामिटां गुणप्राप्त्यभावात्, सर्वेषामिकां गुणनिषेधे निर्विषयत्वप्रसङ्गाच्च । 'इट ईटि' इति न प्रत्याहारः; ईटा सहचर्यात् । विधौ च स्वरूपग्रहणमुक्तम्, अनुवादोऽपि तस्यैव न्याय्यः ।

## न्यासः

हयवरट् ॥ तस्य ग्रहणं भवत्येकेन 'शश्छोऽटि' इत्यकारेणेति । अत्र शश्छोऽटि' इत्येतत् प्रदेशवाक्योपलक्षणं द्रष्टव्यम् । एवंजातीयकेषु निर्देशेष्वकारेण ग्रहणं भवति, न तु वर्णान्तरेणेत्यत्रायमर्थोऽभिप्रेतः, न त्वत्रैव सूत्रे अकारेण ग्रहणं भवतीति, 'अट्कुप्वाङ्नुम्व्यवायेऽपि' इति 'दीर्घादटि' इत्यत्राप्यकारेण ग्रहणस्येष्टत्वात् । अथ 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यत्राप्यकारेण ग्रहणं कस्मान्न भवति ? 'प्राक्सितादड्व्यवायेऽपि' इति वचनात् । प्रत्याहारे ह्येतस्मिन्नकारादीनां योऽन्यतमस्तेनालोऽन्त्यपरिभाषयाङ्गान्तरस्य भवितव्यम् ; प्रत्येकमट्संज्ञकत्वात्, प्रत्येकमेवाकारादीनामादेशत्वात् । तथा चान्त्यग्रहणेन ग्रहणादड्व्यवधानं नोपपद्यते । अथ प्रत्येकमप्यसंज्ञकत्वे समस्तानामप्यादेशभावः प्रकल्प्येत, एवमनेकाल्त्वात् सर्वादेशः स्यात्, तथा च स्थान्यपि सकारो न स्यादिति कस्य केन व्यवधानान् मूर्धन्यो भवेद् अभ्युपुणोदित्यत्र ? अथ 'आर्धधातुकस्येड्वलादेः' इत्यत्रेकारेणास्य ग्रहणं कस्मान्न भवति ? 'तत्र विदित इति च' इति निर्देशात् । प्रत्याहारे ह्येतस्मिन् न 'आदेः परस्य' इति

प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन—'शश्छोऽटि' इत्यकारेण। अयं रेफो यकारात्पर उपदिश्यते। तस्य यर्ग्रहणेन यग्ग्रहणेन च ग्रहणे

पदमञ्जरी

अयं रेफो यकारात्पूर्वं उपदिश्येत–हरयवडिति, परो वा यथान्यासम्। तत्र पूर्वोपदेशे—यण्ग्रहणानि सर्वाणि रेफेण ग्राह्याणि 'इको रणचि', 'उदात्तरणो हल्पूर्वात्', 'उदात्तस्वरितयो रणः स्वरितोऽनुदात्तस्य' 'संयोगादेरातो धातो रण्वतः' इति। तत्रेको रणचीति संख्यातानुदेशादिकारस्य रेफः प्राप्नोति, तथा देवित्वा, दिदेविषति–रलो व्युपधादिति कित्त्वविकल्पः स्याद्, वकारस्य रलन्तर्भावात्। रेफस्य च वल्यनन्तर्भावात् गौधेरः, पचेरन्, 'जीवेरदानुक्' जीरदानुरिति 'लोपो व्योर्वलि' इति न स्यात्, अतः पर एवोपदेश्यः। अत्र पक्षे दोषमुद्भावयितुमाह–*अयमित्यादि*। व्यवहितेऽपि परशब्दो वर्त्तते, यथा–बाल्यात्परं वृद्धत्वमिति। यकारात्परस्य रेफस्योपदेशादयं दोषः। न तु वकारादिति वकारात्पर इति नोक्तम्। यदि पर उपदिश्यते, ततः किमित्याह—*तस्येत्यादि*। *अनुनासिकः*

न्यासः

इकारादीनामन्यतमस्तकारस्यादेशः स्यात्, तथा च विदितमिति रूपं नोपपद्यते। अथ 'दीधीवेवीटाम्' इत्यत्रापीकारेण ग्रहणं कस्मान्न भवति? 'जयति' 'सम्भवति' अवहरति' इत्येवमादिनिर्देशात्। प्रत्याहारे ह्येतस्मिन् गुणप्रतिषेधादेवमादयो निर्देशा न सम्भवेयुः।

यकारात्परस्य रेफस्योपदेशे सति यो दोषस्तमुद्भावयितुकाम आह—*अयमित्यादि*। परोपदेशस्तु वल्यन्तर्भावात् 'जीवेरदानुक्' जीरदानुः, 'गोधाया ढ्रक्' गौधेर इत्यत्र 'लोपो व्योर्वलि' इति व्योर्लोपो यथा स्यात्, रल्ग्रहणे च वकारस्य ग्रहणं मा भूदित्येवमर्थश्च। यदि हि वकारात् पूर्वो रेफ उपदिश्येत, 'रलो व्युपधाद्धलादेः संश्च' इति देवित्वा दिदेविषतीत्यत्र कित्त्वं वा स्यात्। ननु च क्रियमाणेऽपि रस्य यकारात् परोपदेशे प्राप्नोत्येव वकारस्य रल्ग्रहणेन ग्रहणम्, जश्चामपि मध्ये तस्योपदेशात्? नैतदस्ति; उभयोर्भिन्नगुणनिष्पाद्यत्वाद् भेदस्य सिद्धत्वात्। यथोक्तम्[1]—'पृथक्प्रयत्ननिर्वर्त्यं वर्णमिच्छन्ति' इति। अन्तःस्थत्वेनेषत्स्पृष्टकरणत्वादितरस्य च स्पर्शत्वेन स्पृष्टकरणत्वात्। अयञ्च दन्त्योष्ठ्यो वकारः।

यस्तु 'जबगडदश्' इष्यते, स ओष्ठ्यो वेदितव्यः। ननु च वकारेण व्यवधानान्नायं यकारात् परः, किं तर्हि? वकारात् पर इति। तत् किमुच्यते यकारात् पर इति? व्यवधानेऽपि परशब्दो वर्त्तते, यथा–बाल्यात् परं वृद्धत्वमित्यदोषः। अत्र यौवनेन व्यवहितेऽपि वृद्धभावे परशब्दस्य वृत्तिः। यदि यकारात् पर उपदिश्यते

---

१. 'ऐ औ च्' इति सूत्रव्याख्यानावसरे वृत्तिकृतेति शेषः।

सति स्वर्नयति प्रातर्नयतीत्यत्र 'यरोऽनुनासिकेऽनुनासिको वा' इति अनुनासिकः प्राप्नोति; मद्रह्लदो भद्रह्लद इत्यत्र द्विर्वचनं प्राप्नोति 'अचो रहाभ्यां द्वे' इति।

## पदमञ्जरी

*प्राप्नोतीति*। णकारस्तुल्यस्थानत्वात्। ननु चैवं सत्यन्तरतमपरिभाषा बाध्येत; न हि णकारो रेफस्यान्तरतमः, प्रयत्नभेदात्; तन्नयनमित्यादौ तु सावकाशं वचनम्? नैतदस्ति, 'व्यक्तिः पदार्थः' इत्यस्मिन्पक्षे एतच्चोद्यते। तस्मिन्पक्षे सर्वासां व्यक्तीनां तात्पर्येण निर्देशाद्यदेतद्विषयं लक्षणं तत्प्रयत्नभेदादनन्तरतममपि णकारं न प्रवर्त्तयेद्, व्यर्थमेव स्यात्। *द्विर्वचनं प्राप्नोतीति*। ततश्च द्वयो रेफयोः श्रवणं स्यात्; 'रो रि' लोपे द्विर्वचनस्यासिद्धत्वात्। 'हलो यमाम्' इत्यत्र च 'झयो-होऽन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणमनुवर्तते। अतः स्यादेव पक्षे द्वयो रेफयोः श्रवणम्।

## न्यासः

ततः किमित्याह—तस्य यग्रहणेनेत्यादि। यरित्यस्याः संज्ञाया ग्रहणेनोच्चारणेन, तथा यमित्यस्याः संज्ञाया ग्रहणेनोच्चारणेनेत्यर्थः। अथ वा—यरां संज्ञिनां ग्रहणेनोपादानेन, यमां संज्ञिनां ग्रहणेनोपादानेनेत्यर्थः। ग्रहणे सतीति। उपादाने सति। तद्ग्रहणेन तु तद्ग्रहणम्, तस्यापि तत्संज्ञकत्वात्, तदन्तर्भावात् च। स्वर्नयतीत्यत्र 'ऋटुरषा मूर्धन्याः' इति तुल्यस्थानत्वाद् रेफस्य नकारे परे परसवर्णो णकारादेशो भवति, विशेषानभिधानात्। ननु चैवं सति स्थानेऽन्तरतमपरिभाषा बाध्येत, न हि रेफस्यान्तरतमो णकारः, प्रयत्नभेदात्? नैतदस्ति; 'व्यक्तिः पदार्थः' इत्येतद्धि दर्शन-माश्रित्य चोद्यते। तेन स्थानेऽन्तरतमपरिभाषया बाधा नाशङ्कनीया। यत्र ह्यन्तर-तमोऽनन्तरतमश्च विद्यते तत्र तस्या व्यापारः। न चेहान्तरतमोऽस्ति, यस्माद् व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्त्तते। आनन्त्यात् तु सर्वाणि लक्षणानि नोच्चार्यन्ते। तत्र यदेतद्विषयं लक्षणं तत् प्रयत्नभेदादनन्तरतमेऽपि णकारे यदि न प्रवर्त्तते, तदा तस्य वैयर्थ्यमेव स्यात्। तस्माज्जातौ पदार्थे इयं परिभाषा वेदितव्या, न तु द्रव्ये। भद्रह्रदो भद्रह्रद इति। अचो हकारादुत्तरोऽयं रेफो यर् भवतीति द्विर्वचनं प्राप्नोति, 'अचो रहाभ्यां द्वे' इत्यत्र 'यरोऽनुनासिकेऽनुनासिको वा' इत्यतो यरित्यनुवर्त्तते, तत्र द्विर्वचने सति द्वयोः रेफयोः श्रवणं स्यात्। 'रो रि' इत्येकस्य लोपो भविष्यतीति चेत्? न; लोपे कर्त्तव्ये द्विर्वचनस्यासिद्धत्वात्। 'हलो यमां यमि लोपः' इत्यनेन तर्ह्येकस्य लोपो भविष्यति? सिद्धं ह्यस्मिँल्लोपे द्विर्वचनम्। एवमपि पक्षे द्वयो रेफयोः श्रवणं प्रसज्येत। तत्र हि 'झयो होऽन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणमनुवर्त्तते।

कुण्डं रथेन, वनं रथेनेत्यत्र 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णः प्राप्नोति, नैष दोषः; आकृतौ पदार्थे समुदाये

**पदमञ्जरी**

*परसवर्णः प्राप्नोतीति* । कः पुनरसौ ? ननु रेफोष्मणां सवर्णा न सन्ति, वर्णान्तरापेक्षयैतदुच्यते, रेफस्तु रेफस्य सवर्ण एव । एवं व्यक्तिपदार्थमाश्रित्य चोदिते जातिपदार्थमाश्रित्य परिहारमाह—*नैष दोष इति* । जातावेकवचनम्, नैते दोषा इति यावत् । *आकृताविति* । जातावित्यर्थः । इह केषाञ्चित् जातिः पदार्थः, गृहीततत्सम्बन्धो हि शब्दोऽर्थं बोधयति, न चक्षुरादिवत्तन्निरपेक्षम् । सम्बन्धग्रहणं च व्यक्तिषु न संभवति, तासामानन्त्यात् । केषाञ्चिद्व्यक्तिः पदार्थः, तत्रैव वाहदोहादिकार्यसम्भवात् । जातौ हि पदार्थे व्यक्तिषु क्रियमाणं वाहदोहादिकमचोदितार्थोऽनुष्ठितः स्यात्, जातेश्चोपलक्षणमात्रेणाश्रयणात् । सम्बन्धग्रहणं यथा—यत्रासौ काकोऽदो देवदत्तगृहमिति । *पाणिनेस्तूभयम्*, केवलव्यक्तिपक्षे हि सम्बन्धग्रहणासम्भवः । जातिरुपलक्षणमिति चेत्, न; तटस्थत्वाभावात् । यत्र हि सम्बन्धग्रहणोत्तरकालं शब्दार्थः प्रतीयमानः प्रातिस्विकेनाकारेण प्रतीयते न तदाकारेणैव, तत्रोपलक्षणत्वम्; यथा गृहे । न हि गृहं प्रतीयमानं काकाधारमेव प्रतीयते, किं तर्हि ? प्रातिस्विकेनाकारेण । इह तु गौरित्युक्ते गवाकारेण व्यक्तयः प्रतीयन्ते न खण्डादिरूपेणेति तटस्थत्वाभावान्नोपलक्षणत्वं जातेः । अस्तु तर्हि सेव वाच्या, न; व्यक्तेरपि प्रतीतेः । न खलु गौरित्युक्ते गोत्वमितिवन्निष्कृष्टा जातिः प्रतीयते, किन्त्वनियता व्यक्तिरपि, अन्यथासिद्धेरशब्दार्थत्वमिति चेत्, न;

**न्यासः**

अथापि तन्नानुवर्त्तेत ? एवमपि द्विर्वचनविधानसामर्थ्याल्लोपो न भविष्यति । अन्यथा हि द्विर्वचनविधानमनर्थकं स्यात् ।

**कुण्डं रथेनेति** । 'अनुस्वारस्य ययि परसवर्णः' इति तदन्यस्य परसवर्णस्यासम्भवाद् रेफस्य रेफ एव परसवर्णः स्यात् । 'रेफोष्मणां सवर्णा न सन्ति' इति रेफोऽपि रेफस्य सवर्णो न भवतीत्येतच्च नाशङ्कनीयम् ; वर्णान्तरापेक्षया तदुक्तम्, वर्णान्तराणां यथायोगमतुल्यस्थानप्रयत्नत्वात् । रेफव्यक्तीनां तु परस्परापेक्षया सावर्ण्यमस्त्येव; तुल्यस्थानप्रयत्नत्वात् ।

अन्ये तु—'ययि रेफे अनुस्वारस्य परसवर्णो णकारः स्यात्, तुल्यस्थानत्वात्' इति वर्णयन्ति, एतच्चायुक्तम्; न हि स्थानमात्रतुल्यतया सवर्णो भवति । किं तर्हि ? तुल्यस्थानतया, तुल्यप्रयत्नतया च । न च रेफस्य णकारस्तुल्यप्रयत्नः; रेफस्येषत्स्पृष्टत्वात्, णकारस्य च स्पृष्टत्वात् । एवं व्यक्तिपदार्थमाश्रित्य परेण चोदिते जातिपदार्थमाश्रित्य परिहारं वक्तुकाम आह—**नैष दोष इत्यादि** । आकृताविति जातावित्यर्थः । केषाञ्चित्—

पदमञ्जरी

तदभावात् । स्यादेतत्—सत्यम् अनियता व्यक्तिः प्रतीयते, सा त्वपर्यवसानेन न तु शब्दमहिम्ना । जातिप्रतीतिर्हि न जातिमात्रे पर्यवस्यति, किन्तु व्यक्तिमपि कवलीकरोति । यथा पञ्जरस्थं सिंहमनुभवतः सिंहप्रतीतिः पञ्जरे, तत्र ह्यन्तर्वर्त्येव सिंहः सिंहशब्दवाच्य इति जानतो बलात्पञ्जरमपि प्रतीयते, तद्वदिहापि व्यक्तिगतामेव जातिमनुभवतो जातिप्रतीतिरुत्पद्यमाना बलाद् व्यक्तिमपि गोचरयति, अतोऽन्यथासिद्धप्रतीतित्वान्न व्यक्तिः शब्दार्थ इति, तच्च नैवम्; अन्यथासिद्धेरभावात् । यदि हि जातिप्रतीतेरयं स्वभावो व्यक्तिमपि गोचरयतीति ततो गोत्वमित्यादावपि प्रसङ्गः, न हि तत्र जातिर्न प्रतीयते । स्यादेतत्—गोत्वादिशब्दैर्जातिः स्वरूपेणाभिधीयते, गवादिभिस्तु व्यक्तिपरतन्त्रा, अतः प्रतीतिवैषम्यमिति, मैवम्; व्यक्तिपरतन्त्रेत्यपि जातिरेव चेदुच्यते ततो गोत्वगोशब्दयोरविशेषापत्तिः, तत्त्वान्तरं चेज्जातिरेव वाच्येति क्षतम्; पारतन्त्र्यस्यापि वाच्यत्वात् । न चानभिधाय व्यक्तिं तत्पारतन्त्र्यमभिधातुं शक्यमिति व्यक्तेरपि वाच्यत्वप्रसङ्गः, न च वाच्यम् 'गङ्गायां घोषः, इतिवल्लक्षणया व्यक्तिः प्रतीयते' इति, शब्दान्तरसन्निधानमन्तरेणापि नियमेन प्रतीयमानत्वात्, तर्हि लाक्षणिकोऽर्थ एवं प्रतीयते । अतश्शब्दमहिम्नैव जातिर्व्यक्तिश्च प्रतीयत इत्युभयं शब्दार्थः । तत्र क्वचित्किञ्चित्तात्पर्येणोच्यते, किञ्चिन्नान्तरीयकतया । दृष्टं चैकशब्दवाच्येष्वपि कुत्रचित्तात्पर्यम्, कस्यचिन्नान्तरीयकत्वम्, यथा—ग्रहं संमार्ष्टीति—कर्मत्वं विवक्षितम्, एकत्वमविवक्षितम्; तद्वदिह 'यरोऽनुनासिकेऽनुनासिको वा' इत्यत्र लक्षणानुरोधादाकृतिः प्राधान्येनाश्रीयते, तस्या एकत्वाच्छास्त्रमपि सकृदेव प्रवर्त्तते न प्रतिव्यक्त्यावृत्त्या ।

न्यासः

जातिः पदार्थः, केषाञ्चिद् द्रव्यम्, पाणिनेस्तूभयम्; लक्ष्यानुरोधात् । तत् क्वचित् किञ्चिदाश्रीयते । तत्र जातौ पदार्थ आश्रीयमाणे जातिरेव शब्देनाभिधीयते, नान्तरीयकत्वात् तु तदाधारा व्यक्तयः प्रतीयन्ते; जातेराधारमन्तरेण प्रत्येतुमशक्यत्वात् । एतस्मिन् दर्शने तस्यास्तु जातेः स्थानित्वमादेशत्वं परत्वमव्यवहितत्वमित्यादयो धर्माः शब्दसंस्कारोपयोगिनो व्यक्तिद्वारकाः । तेन 'यरोऽनुनासिकेऽनुनासिको वा' इत्येवमादिलक्षणं प्रवर्त्तमानं जातिमतीषु व्यक्तिष्वेव प्रवर्त्तते, तत्र प्रवृत्तेर्जातौ प्रवृत्तं भवति । न च तासु व्यक्तिषु जातिं प्रति काचिदासत्तिर्विप्रकर्षो वा; यतः क्वचिदेव प्रवर्त्तेत, न सर्वत्र; सम्बन्धस्याविशिष्टत्वात् । तस्मात् तत्र प्रवर्तमानं यत्र वचनान्तरेण न्यायेन वा न बाध्येत, तत्र सर्वत्रैव प्रवर्त्तते । एवञ्च प्रवृत्तं समुदाये प्रवृत्तं भवति । सकृदिति । एकवारम्, न पुनः पुनः; सकृत्प्रवृत्त्यैव लक्षणस्य च चरितार्थत्वात् । एतस्मिन् दर्शने 'यरोऽनुनासिकेऽनुनासिको वा' इत्येतल्लक्षणं कथं प्रवर्तेत ? किमविशेषेण सर्वेष्वेव जातिमत्सु पदार्थेषु प्रवर्त्तते ? उत विशेषेण केषुचिदेव ? यद्यविशेषेण स्यात्, स दोषस्तद-

'सकृल्लक्ष्ये लक्षणं प्रवर्तते' इत्येतस्मिन् दर्शने यरोऽनुनासिकेऽनुनासिको वाऽन्तरतमो भवतीत्येवमेतत्प्रवर्त्तते। तदनेन गकारादीनां ङकारादयो ये यथास्वं स्थानतो गुणतश्चान्तरतमास्ते सर्वे विहिताः। ये तु न स्थानतः, नापि गुणतः, स्थानमात्रेण गुणमात्रेण वा अन्तरतमास्ते

पदमञ्जरी

यद्येवम्, कथं समुदाये प्रवर्तते ? उच्यते; जातेः स्थानित्वमादेशत्वं निमित्तत्वमित्येवमादयो धर्मा व्यक्तिद्वारकताः, ते न जातौ प्रवर्तमानास्तद्वतीषु व्यक्तिषु प्रवर्त्तन्ते। न च व्यक्तयस्तेन तेन प्रातिस्विकेनाकारेण प्रतीयन्ते, किन्त्वेकजातिरूषिता इति। एष समुदायार्थः समुदाये प्रवर्त्तमानं कथं प्रवर्त्तते ? किमविशेषेण ? नेत्याह। *यरोऽनुनासिक इत्यादि*। येयमस्य सकृत्प्रवृत्तिस्तत्रान्तरतमपरिभाषापि एकवाक्यतामापद्यत इत्यर्थः। ततः किमित्यत आह—*तदनेनेति*। *गकारादीनामिति*। वर्गतृतीयानाम्। *ङकारादय इति*। वर्गपञ्चमाः। *यथास्वमिति*। यो यस्य वर्ग्यः स तस्येत्यर्थः। *स्थानतो गुणतश्चेति*। तृतीयान्तात्तसिः। स्थानानि गुणाश्च 'तुल्यास्यप्रयत्नम्' इत्यत्र वक्ष्यामः। *ये तु न स्थानतो नापि गुणत इति*। अन्तरतमा इत्यपेक्ष्यते। ते सर्वे निवर्तिता इति वक्ष्यमाणेन सम्बन्धः। के पुनस्ते ? गजडानां सानुनासिका यवलाः। *स्थानमात्रेण गुणमात्रेण वेति*। अत्राप्यन्तरतमा

न्यासः

वस्थ एव। अथ विशेषेण वाच्यः, तर्हि सविशेष इत्यत आह—यरोऽनुनासिक इत्यादि। एतेन स्थानेऽन्तरतमपरिभाषाया उपस्थानात् तद्वशेनान्तरतमेष्वेव प्रवर्त्तते, नान्येष्विति दर्शयति—तदनेनेत्यादि। यत एवान्तरतमेष्वेव प्रवर्त्तते, तस्मादनेन लक्षणेन गकारादीनां येऽन्तरतमाः स्थानगुणाभ्यामुभाभ्यामपि ते ङकारादयोऽनुनासिका विहिताः। यथास्वमिति। यथात्मीयमिति। ये येषामन्तरतमास्ते तेषां विहिता इत्यर्थः। गकारादीनामिति। आदिशब्देन जकारादीनां ग्रहणम्। ङकारादय इत्यत्रापि आदिशब्देन ञकारादयोऽनुनासिका गृह्यन्ते। तत्र स्थानतो गुणतश्चान्तरतमाः। तद्यथा—गजडदबानां यथाक्रमं ङञणनमाः। तथा हि—'अकुहविसर्जनीयाः कण्ठ्याः' इति गकारङकारयोस्तुल्यं कण्ठः स्थानम्। 'इचुयशास्तालव्याः' इति जकारञकारयोस्तालु। 'ऋटुरषा मूर्धन्याः' इति डकारणकारयोर्मूर्धा। 'लृतुलसा दन्त्याः' इति दकारनकारयोर्दन्ताः। 'उपूपध्मानीया ओष्ठ्याः' इति बकारमकारयोरोष्ठः। गुणस्तु सर्वेषामेवैषां तुल्यः; 'स्पृष्टं करणं स्पर्शानाम्' इति वचनात्। कादयो मावसानाः स्पर्शाः। ये तु न स्थानतो नापि गुणत इति। अन्तरतमा इत्यपेक्षते। 'ते सर्वे निवर्त्तिताः' इत्यनेन वक्ष्यमाणेन सम्बन्धः। अविधानमेवैषां निवर्त्तनम्। स्थानमात्रेण गुणमात्रेण वेति। तत्राप्यन्तरतमा इत्यपेक्षते।

सर्वे निर्वर्तिता इति स्थानमात्रान्तरतमो रेफस्य णकारो न भवति। द्विर्वचनेऽपि रेफस्य यरन्तर्भावे सति यर्कार्यत्वं प्राप्तम्, तत्साक्षाच्-

पदमञ्जरी

इत्यपेक्ष्यते, पूर्ववच्च सम्बन्धः। तत्र स्थानमात्रेणान्तरतमा जदबानां यलवाः सानुनासिकाः, गुणमात्रेण त्वन्तरतमास्तृतीयानामन्यवर्गीयाः पञ्चमाः। इतिकरणो हेतौ। यस्मादेव स्थानगुणाभ्यामन्तरतमा एव विहिता अन्ये सर्वे निवर्तितास्तस्मात्स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति। *द्विर्वचनेऽपीति*। एवं परिहारं इति शेषः। रेफस्येत्यादिना यर्कार्यस्य द्विर्वचनस्य सहेतुकां प्राप्तिमनूद्य परिहरति—*तदित्यादि*। रेफस्य द्विर्वचनं प्रति निमित्तभावः। *साक्षाच्छिष्टः*,

न्यासः

पूर्ववच्च सम्बन्धः। तत्र नापि स्थानतो नापि गुणतोऽन्तरतमा अनुनासिकाः, ते यथा—गजडानाम् यवलाः सानुनासिकाः, निरनुनासिकाश्चापि, ते तेषां स्थानगुणाभ्यामनन्तरतमा एव। सानुनासिकग्रहणं तु 'यरोऽनुनासिके' इत्यादौ सूत्रेऽनुनासिकस्यादेशत्वेनोपादानात्। तत्र गकारयकारयोर्यथाक्रमं कण्ठतालुस्थानत्वात् स्थानत आन्तरतम्यं नास्ति; जकारलकारयोस्तालुदन्तस्थानत्वात्, डकारवकारयोर्यथाक्रमं मूर्धदन्तोष्ठस्थानत्वात्। गुणतोऽपि तेषां नास्त्यान्तरतम्यम्; गकारादीनां स्पृष्टकरणत्वात्, यकारादीनामीषत्स्पृष्टकरणत्वात्; 'ईषत्स्पृष्टं करणमन्तःस्थानाम्' इति वचनात्। अन्तस्था यरलवाः। स्थानमात्रेणान्तरतमा अनुनासिकाः। तद्यथा—जदबानां यँलँवँाः सानुनासिकाः। अत्र जकारस्य यकारस्तुल्यस्थानः; तयोस्तालुस्थानत्वात्। दकारस्य लकारः; तयोर्दन्तस्थानत्वात्। बकारस्य वकारः; उभयोरोष्ठस्थानत्वात्। यद्यप्यन्तःस्थस्य वकारस्य 'दन्ताः'—स्थानमधिकम्, तथापि यत्र तयोस्तुल्यस्थानमोष्ठः, तत्कृतमान्तरतम्यमस्त्येव, उकारौकारवत्—उकारस्य ओष्ठस्थानम्, ओकारस्य तु कण्ठोऽपि, 'ओ औ कण्ठ्योष्ठ्यौ' इति वचनात्; तथापि यत्तयोस्तुल्यं स्थानम् ओष्ठस्तत्कृतमान्तरतम्यं भवत्येव। यथा च तयोरेकस्य स्थानाधिक्येऽपि आन्तरतम्यम्, तथा बकारवकारयोरपि। गुणमात्रेणान्तरतमा यथा—जबडानां ञमणाः; सर्वेषां स्पृष्टतागुणत्वात्। स्थानतस्तेषामान्तरतम्यं नास्ति; जबडानां यथाक्रमं ताल्वोष्ठमूर्धस्थानत्वात्, ङणनानान्तु कण्ठमूर्धदन्तस्थानत्वात्। इत्येत्यादि। इतिकरणो हेतौ। यत एवं स्थानगुणाभ्यां येऽन्तरतमास्त एवानेन विहिताः, अन्ये तु सर्वे निवर्त्तिताः। तस्मात् स्थानमात्रेणान्तरतमो रेफस्य णकारो न भवति। स्थानमात्रेणान्तरतमत्वञ्चोभयोर्मूर्धस्थानत्वात्। गुणतस्त्वान्तरतम्यं नास्ति; स्पृष्टतादिगुणभेदाच्च। रेफस्य यरन्तर्भावे सतीति। यर्कार्यप्राप्तेरयं हेतुः। यर्कार्यं प्राप्तमिति। द्विर्वचनमित्यर्थः। तद्धि यरन्तर्भावाद् रेफस्य प्राप्नोति यथान्येषां यराम्। तदित्यादि। रेफस्य द्विर्वचनं प्रति निमित्तभावः साक्षा-

छिष्टेन निमित्तभावेन बाध्यत इति न द्विरुच्यते रेफः ।

'अनुस्वारस्य ययि परसवर्णः' इत्येतदप्यनुस्वारान्तरतमं सकृदेव

पदमञ्जरी

प्रत्यक्षशिष्टः । 'रहाभ्याम्' इति द्विर्वचनं तु यरन्तर्भावादनुमितम्, 'प्रत्यक्षानुमितयोश्च प्रत्यक्षं बलीयः', तद्यथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषातामिति परिवेषणसाधनत्वेन भुजिसाधनत्वं बाध्यते । यद्येवम्, 'इको यणचि' इत्यस्मिन्निर्देशेऽजिति निमित्तभावं प्रत्यनुमीयमाना इकः कार्ययोगं प्रति साक्षाच्छिष्टा इति दध्युदकादिषु बाधितव्यो निमित्तभावः, न; तत्र व्यक्तेः प्राधान्येनाश्रयणाद् । व्यक्तिप्राधान्ये हि प्रतिलक्ष्यमसकृल्लक्षणं प्रवर्तते, प्रतिलक्ष्यं वा भिन्नानि लक्षणानि, तेषां सर्वेषां तन्त्रोच्चारणम् 'इको यणचि' इति । ततश्चैकामपि निमित्तभावं प्रत्यपि तात्पर्येण निर्देशात्तत्रापि यण् भविष्यति, इतरथा तद्विषयं लक्षणं व्यर्थं स्यात् । जातिनिर्देशेषु क्वचिदपि व्यक्तौ प्रवृत्ते जातौ प्रवृत्तमेवेति विशेषः ।

*अनुस्वारस्येत्यादि* । न केवलं 'यरोऽनुनासिकेऽनुनासिको वा' इत्येतदेवान्तरतमे सकृदेव प्रवर्तमानं विदधाति, अपि तु 'अनुस्वारस्य ययि परसवर्णः'

न्यासः

च्छिष्टः = प्रत्यक्षविहितः; 'अचो रहाभ्याम्' इति साक्षाद् रेफं निमित्तत्वेनोपादाय द्विर्वचनविधानात् । यर्कार्यन्तु यरन्तर्भावादनुमितम् । 'प्रत्यक्षानुमितयोश्च प्रत्यक्षं बलीयः' इति साक्षाद्विहितेन निमित्तभावेन रेफस्य द्विर्वचनं बाध्यते; तद्यथा—ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविष्टामिति, अत्र हि साक्षाद्विहितेन परिवेषणं प्रति साधनभावेन माठरकौण्डिन्ययोर्ब्राह्मणत्वाद्योऽनुमितो भोजनं प्रति साधनभावः स बाध्यते । यद्येवम्; दध्युदकादिषु दोषः । 'इको यणचि' इत्यत्र ह्यजन्तर्भावादिको यणादेशं प्रति निमित्तभावोऽनुमीयमानः । यणादेशस्तु साक्षाच्छिष्टः; 'इकः' इति साक्षादिकं कार्यिणमुपादाय विधानात् । ततश्च साक्षाच्छिष्टेन तेन निमित्तभाव इको बाध्यते । तत्र व्यक्तेः पदार्थस्याश्रितत्वाददोषः । व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्तत इत्युक्तम् । तत्र यदि यणादेशेन निमित्तभाव इको बाध्येत, यद् दध्युदकादिविषयं लक्षणं तस्य वैयर्थ्यं स्यात् । तस्मान्मा भूदेष दोष इति लक्षणसामर्थ्यान्निमित्तभावो न बाध्यते । इह पुनर्जातिः पदार्थ आश्रितः । तत्र जातेरेकत्वाद् 'अचो रहाभ्याम्' इति लक्षणमप्येकमेव, यच्चार्कः मर्क इत्यादौ चरितार्थम् । अतो यद्यपि मद्रह्रदादौ द्विर्वचनं न विदधाति, तथापि न भवति वैयर्थ्यप्रसङ्ग इति । न द्विरुच्यते रेफ इति । इतिकरणेनानन्तरोक्तस्यार्थस्य द्विर्वचनाभावं प्रति हेतुभावो द्योत्यते ।

अनुस्वारस्येत्यादि । न केवलं 'यरोऽनुनासिकेऽनुनासिको वा' इत्येतदन्तरतमं सकृदेव प्रवर्त्तमानं विदधाति, अपि तु 'अनुस्वारस्य ययि परसवर्णः' इत्येतदपि इति

परसवर्णं विदधाति । न च रेफस्यानुस्वारान्तरतमः सवर्णोऽस्तीति न भविष्यति—कुण्डं रथेन, वनं रथेनेत्यत्र । अटां मध्ये विसर्जनीयजिह्वामूलीयोपध्मानीयानामप्युपदेशः कर्तव्यः । किं प्रयोजनम् ?

**पदमञ्जरी**

इत्येतदपीत्यपि शब्दार्थः । ततः किमित्यत आह - न चेत्यादि । रेफस्य सवर्णोऽस्तीति सम्बन्धः । किंविशिष्टो नास्तीत्याह—*अनुस्वारान्तरतम इति* । रेफस्य हि रेफ एव तुल्यस्थानप्रयत्नः, स चानुस्वारान्तरमो न भवति । यत्र वाऽनुस्वारान्तरतमाः परसवर्णास्सन्ति—अङ्कितः, कुण्डित इत्यादौ, तत्र चरितार्थं वचनम् । *अटां मध्ये इति* । नन्वनुस्वारस्याप्युपदेशः कर्त्तव्यः, प्रेङ्खणमित्यादौ णत्वं यथा स्यात् । न च परसवर्णे कृते 'कवर्गव्यवाये' इति णत्वसिद्धिः; तस्यासिद्धत्वात् । एवं तर्हि 'नुम्व्यवाये' इति णत्वं भविष्यति । यदि 'नुम्व्यवाये' इत्युच्यते; प्रेन्वनमित्यत्रापि प्राप्नोति, इह च न स्यात् प्रोम्भणमिति, अनुम्स्थानिकत्वात् ?

**न्यासः**

'अपि' शब्दस्यार्थः । स्यादेतत्—यद्यप्यन्तरतमं विदधाति, तथापि भवितव्यमेवात्र रेफेण परसवर्णेन । तस्याप्यन्तरतमत्वादित्यत आह—न चेत्यादि । न च रेफस्य सवर्णोऽस्तीति सम्बन्धः; किंविशिष्टो नास्ति ? अनुस्वारान्तरतमः । अनुस्वारस्य सदृशतम इत्यर्थः । इति हेतोर्न भवति कुण्डं रथेनेत्यत्र परसवर्णः । कथं पुनरनुस्वारान्तरतमः, सवर्णो रेफस्य नास्ति ? उच्यते—रेफस्य रेफ एव सवर्णः, नान्यो वर्णः । स चानुस्वारस्यान्तरतमो न भवति; स्थानभेदाद् गुणभेदाच्च । रेफस्य हि मूर्धा स्थानम्, अनुस्वारस्य पुनः 'अनुस्वारयमा नासिक्याः' इति वचनाद् नासिका । गुणोऽपि रेफस्येषत्स्पृष्टता, अनुस्वारस्य तु स नास्ति । अन्तःस्थानामेव ह्ययमसाधारणो गुण इष्यते, नान्येषाम् । यद्यपि वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ च यमौ च तृतीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तश्चेति बाह्यप्रयत्नाख्येन गुणेन संवृतकण्ठत्वादिना अनुस्वारान्तरतमो रेफः सवर्णः सम्भवति, तथापि न गुणमात्रेणान्तरतममेतल्लक्षणम् परसवर्णं विधातुमुत्सहते । यत्र स्थानतो गुणतश्चान्तरतमास्तत्रानुस्वारस्य परसवर्णाः सन्ति; शङ्कितः, कुण्ठित इत्यत्र चरितार्थत्वात् । अत्र स्थानतोऽप्यनुस्वारस्य नासिकास्थानस्य ङणावन्तरतमौ; तयोरपि नासिकास्थानत्वात् । 'ञमङणनाः स्वस्थाना नासिकास्थानाश्च' इति वचनात् । गुणतोऽपि; तेषाम्पूर्वोक्तैरनुस्वारगुणैरनुगतत्वात्, 'यथा तृतीयास्तथा पञ्चमाः' इति वचनात् । अनेन हि 'वर्गाणां तृतीयचतुर्थाः' इत्यादिना ग्रन्थेन येऽनुस्वारसाधारणा वर्गतृतीयानां गकारादीनां गुणा उक्तास्ते ङकारादीनां निर्दिश्यन्ते । गुणमात्रेणाप्यन्तरतमं विदध्याद् रेफम्, यद्यसकृत् प्रवर्त्तते तत् । मा भूत् पुनः पुनः प्रवृत्तिरपार्थिकेति कृत्वा न चासकृत्

उर≍केण, उरःकेण; उर≍पेण, उरःपेण—अत्र 'अड्व्यवाये' इति णत्वं यथा स्यादिति।

## ल ण् ॥ ६ ॥

'ल' इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते णकारमितं करोति प्रत्या-

### पदमञ्जरी

नैष दोषः; नुम्ग्रहणमनुस्वारोपलक्षणार्थं तत्र। यथा नक्षत्रं दृष्ट्वा वाचं विसृजेदिति कालोपलक्षणे दिवा नक्षत्रदर्शनेऽपि न भवति, रात्रावदर्शनेऽपि भवति; एवमिहापि सत्यपि नुम्यनुस्वाराभावे न भवति, असत्यपि नुम्यनुस्वारे सति भविष्यति।

इह केचिदुब्जिमुपध्मानीयोपधं पठन्ति तेषामुब्जितेत्यादौ जश्त्वं यथा स्यादिति झल्ष्वप्युपदेशः कर्तव्यः। वृत्तिकारस्तु दकारोपधं मन्यते, अभ्युद्गः समुद्ग इति यथा स्यात्। 'भुजन्युब्जौ पाण्युपतापयोः' इति च कुत्वाभावे निपात्यमाने बकारोच्चारणं लिङ्गम्—उब्जेरकुत्वविषये दकारस्य बकारविधायि वचनमस्तीति। तच्च 'स्तोः श्चुना श्चुः' इत्यस्यानन्तरं कल्प्यते 'उद्जेर्दस्य बः' इति, उद्जेर्दकारस्य श्चुना योगे बकारो भवतीत्यर्थः। 'स्तोः श्चुना' इत्युपजीवनार्थं चात्रैवास्य कल्पनं युक्तम्, अन्यथा बहुतरं कल्प्यं स्यात्। बत्वस्यासिद्धत्वादुब्जिजीषतीत्यत्र 'न न्द्राः' इति प्रतिषेधसिद्धिरिति। नन्वनुस्वारविसर्जनीययोः शर्षुपदेशः कर्तव्यः, सर्पींषि सर्पिष्षु अत्र 'शर्व्यवाये' इति षत्वं यथा स्यात्, मा भूदेवम्; 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति भविष्यति। तत्र चावश्यं नुम्ग्रहणमेव कर्तव्यं नुम्स्थानिकेनैवानुस्वारेण व्यवाये यथा स्यात्, पुंस्वित्यादौ मा भूदिति। तस्मात्सुष्ठूक्तमटां मध्य इति। *उरः केणेति*। नायमज्ञातादौ कप्रत्ययः, 'सोऽपदादौ' इति सत्वप्रसङ्गात्। किं तर्हि? उरः कायतीति 'आतोऽनुसर्गे कः'। *उरः पेणेति*। 'पा रक्षणे'। उभयत्र 'कुप्वो≍क≍पौ च' इति यथायथं विसर्जनीयजिह्वामूलीयोपध्मानीयेषु कृतेषु तद्व्यवाये णत्वं भवति।

लण् ॥ अयं णकारो द्विरनुबध्यते—पूर्वश्च, परश्च। तत्रेण्ग्रहणान्यण्ग्रहणानि

### न्यासः

प्रवर्तत इत्युक्तम्। उरः केणेत्यादि। उरः कायति, उरः पाति। 'कै शब्दे,' 'पा रक्षणे' इत्याभ्याम् 'अतोऽनुपसर्गे कः'; 'आतो लोप इटि च' इत्याकारलोपः, उपपदसमासः, सुब्लुक्, 'ससजुषो रुः'; तस्य 'खरवसानयोर्विसर्जनीयः', 'कुप्वोः≍क≍पौ च' इति यथायोगं विसर्जनीयावुपध्मानीयजिह्वामूलीयौ।

लण्। अयं णकारो द्विर्बध्यते—पूर्वतश्चैवं[1] परतश्चैवम्[1]। तत्रेणग्रहणेष्वणग्रहणेषु

---

1–1. उभयत्र 'एव' इति पाठः समुचितः।

हारार्थम्। तस्य ग्रहणं भवति त्रिभिः—'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यकारेण, 'इण्कोः' इतीकारेण, 'इको यणचि' इति यकारेण।

**पदमञ्जरी**

च प्रत्यासत्तेः पूर्वेणैव वा स्युः? भूयसामनुग्रहाय परेणैव? इति संशये निर्णयमाह—

**न्यासः**

च संदेहो भवति; किं पूर्वेण स्युः, परेण वेति? अतस्तदपनयनार्थमाह—इण्ग्रहणानी-त्यादि। तत्र यथा सर्वाणीण्ग्रहणानि परेण णकारेण गृह्यन्ते तथा 'अइउण्' इत्यत्र प्रतिपादितम्। अण्ग्रहणानि तु यानि परेणापि सम्भाव्यन्ते, तानि पूर्वेण प्रतिपाद्यानि। कानि पुनस्तानि? 'ढ्रलोपे पूर्वस्य दीर्घोऽणः', 'केऽणः', 'अणोऽप्रगृह्यस्यानुनासिकः', 'उरण् रपरः' इत्येतेषु सूत्रेषु यान्यण्ग्रहणानि। तत्र पूर्वस्मिंस्तावत् सूत्रे दृढादिषु वृढशब्दपाठो ज्ञापकः 'न परेणाण्ग्रहणम्' इति। यदि हि परेण स्याद्, 'वृढः' इति रूपं न स्यात्। ततश्च दृढादिषु 'वृढ' इति पाठो नोपपद्येत। 'वृहू उद्यमे' इत्यस्य निष्ठायां ढत्वधत्वष्टुत्वढलोपेषु कृतेषु 'वृढः' इति रूपं भवति। किञ्च दीर्घश्रुत्या तत्र 'अचश्च' इति सन्निधापिते सत्यच एव दीर्घत्वेन भवितव्यम्। तथा च यदि परेण, अन्तः-पातिनामप्यचां दीर्घत्वमभिमतं स्याद्, असन्देहार्थमज्ग्रहणमेव कुर्यात्। अथ वा—तदपि न कुर्यात्; 'अचश्च' इत्यस्मादेव सर्वाचां दीर्घत्वसिद्धेः। तस्मादण्ग्रहणसाम-र्थ्यात् पूर्वेणाण्ग्रहणं विज्ञायते। 'केऽणः' इत्यनेनापि के परतो हलामणामसम्भवादचा-मेव ह्रस्वो विधीयते। तत्र यदि सर्वेषामचां ह्रस्वत्वमभीष्टं स्याद्, असन्देहार्थमज्ग्रहण-मेव कुर्यात्। अथ वा—तदपि न कुर्यात्, ह्रस्वग्रहणेनोपस्थापिताद् 'अचश्च' इत्यस्मादेवा-भिलषितार्थसिद्धेः। तृतीयेनापि सूत्रेण पदान्तस्याणोऽनुनासिको विधीयते, न च पदान्ता हलोऽणः सन्तीत्यचामेवानुनासिको विधेयः; तत्र यदि सर्वेषामचामनुनासिको विधि-त्सितः स्याद्, असन्देहार्थमज्ग्रहणमेव कुर्यात्। अथ वा—तदपि न कुर्यात्; अच एव हि प्रगृह्यसंज्ञा भवन्ति, न हलः। तत्र नञिवयुक्तन्यायेन प्रगृह्यप्रतिषेधात् तत्-सदृशस्याच एव कार्यं विज्ञास्यते। तस्मात् तत्राप्यण्ग्रहणसामर्थ्यात् पूर्वेणैवाण्ग्रहणं प्रतीयते। 'उरण् रपरः' इत्यत्रापि 'होतृप्रशास्तॄणाम्' इति निर्देशो ज्ञापयति—'नेह परेणाण्ग्रहणम्' इति। परेणाण्ग्रहणे सति 'नामि' इति रपरो दीर्घः स्यात्। तथा च प्रशास्तॄणामिति निर्देशो न स्यात्। किञ्च—न च रेफादन्य ऋकारस्य स्थाने हलोऽणः कश्चिच्छास्त्रे विधीयन्ते। तथा हि 'इको यणचि' इति रेफः स्यात्। न च ऋकारस्य स्थाने 'कर्त्रर्थम्' इत्यादौ रेफे रेफपरे अरेफपरे वा विहिते कश्चिद्विशेषः, कृते हि रपरे तत्रैकस्य रेफस्य 'रो रि' इति लोपेन भवितव्यम्। तस्मादेतदप्यण्ग्रहणं परेण णकारेण भवदजर्थमेव स्यात्। तत्र यदि सर्वेषामचां स्थाने विधीयमानानां रपरत्व-मिष्टं स्याद्, असन्देहार्थमज्ग्रहणमेव कुर्यात्। तदेवमेतदज्ग्रहणं पूर्वेणैव णकारेण

इण्ग्रहणानि सर्वाणि परेण णकारेण । अण्ग्रहणानि तु पूर्वेण; 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्येतदेवैकम्परेण ।

पदमञ्जरी

*इण्ग्रहणानीत्यादि* । तत्र न यथा सर्वाणीण्ग्रहणानि पूर्वेण तथा पूर्वमेव प्रतिपादितम् । अण्ग्रहणानि च पञ्च–'उरण् रपरः', 'अणुदित्सवर्णस्य चाप्रत्ययः', 'ढ्रलोपे पूर्वस्य दीर्घोऽणः', 'केऽणः', 'अणोऽप्रगृह्यस्य' इति । तत्र 'उरण् रपरः' इति यदि परेण स्यात्—कृतम्, प्रकृतम्, नॄः पाहि, मातॄणामित्यादावाद्युदात्तानुदात्तस्वरितानुनासिकदीर्घा रपराः स्युः; कर्त्ता, कारक इत्यादौ च गुणवृद्ध्योः प्राप्तयोरेचोरवर्णस्य च रपरत्वादान्तर्याविशेषात्सर्व एव स्युः । 'इको यणचि'—'कर्त्रर्थम्, रपरत्वे द्वयो रेफयोः श्रवणं स्यात्, नैष दोषः; 'ॠत इद्धातोः' इति धातुग्रहणं ज्ञापकं पूर्वेणेति । तद्धि मातॄणामित्यादौ मा भूदिति परेण च ग्रहणे 'नामि' इति दीर्घे रपरे कृतेऽनृकारान्तत्वादेव न भविष्यतीति तद् व्यर्थं स्यात् । न च वाच्यं चिकीर्षतीत्यत्र 'अज्झनगमां सनि' इति दीर्घे रपरे सति 'उपधायाश्च' इतीत्वमेषितव्यं तद्वन्मातॄणामित्यादावपि स्यादित्युत्तरार्थं धातुग्रहणमिति; तथा हि सति तत्रैव कर्त्तव्यं स्यात् 'ढ्रलोपे' इत्यत्रापि हलामणामसम्भवादचां तु विशेषाभावादनर्थमेवाण्ग्रहणं स्यात् । ततश्च 'अचश्च' इत्येव सिद्धमित्यण्सामर्थ्यात् पूर्वेण । ननु 'वृहू उद्यमने' इत्यस्मात्तृच्यूदित्त्वादिडभावे गुणे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे ॠकारे ढ्रलोपस्यासिद्धत्वात् 'उपधायाश्च' इतीत्वे पूर्वेण च गुणे वेर्ढेति यथा स्यादित्येवमर्थमण्ग्रहणं स्यात् । यत्तर्हि तृतीये निर्दिशति, तज्ज्ञापयति पूर्वेणेति । अन्यथा 'हलः' इत्यत्राप्यस्यैवाण्ग्रहणस्यानुवृत्तेस्त्रेः संप्रसारणे दीर्घः स्यात् । 'केऽणः' इत्यत्र परेणाण्ग्रहणे गोका, नौका, उपानत्का, गीष्का, धूष्का, चतुष्कमिति षत्वविसर्जनीययोरसिद्धत्वाद् ह्रस्वप्रसङ्गः । एवं तर्हि ह्रस्वश्रुत्या 'अचश्च' इत्युपस्थितस्याबाधाय पूर्वेण भविष्यति । अबाधेनापि ह्युपपत्तौ सत्यां बाधो न न्याय्यः । 'अणोऽप्रगृह्यस्य' इत्यत्र परेण सति कर्तृ, अग्ने, वायो, पचे, पपौ, मालामाचक्षाणो माल्, वृक्षत्रयतेरप्रत्ययः वृक्षव्—अत्रापि प्राप्नोति ? एवं तर्हि 'अप्रगृह्यस्य' इति पर्युदासेनाच एवानुनासिको युक्तः । न चाण्ग्रहणसामर्थ्यात्त्रिवयुक्तन्यायस्य बाधः; तस्य पूर्वेणाप्युपपन्नत्वात् । अतः सुष्ठूक्तम्—*अण्ग्रहणानि सर्वाणि पूर्वेणेति* । अस्यापवादः—*'अणुदित्सवर्णस्य चाप्रत्ययः' इत्येतदेवैकम्परेणेति* । यद्यत्र पूर्वेण स्याद् 'उरण् रपरः' इत्यत्र उरित्यनेन ॠकारस्याग्रहणात् 'ॠत

न्यासः

भवतीति निश्चीयते । 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्येकमनेनेति । अत्र च 'उर्ॠत्' इति ॠकारस्य तपरकरणं लिङ्गम् । तद्धि ॠकारेण सवर्णानां ग्रहणे सति 'अचीकृतत्'

अथ किमर्थमज्ग्रहणमेवैतन्न क्रियते ? नैवं शक्यम्; अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यते—सँय्य्ँ यन्ता, सँव्व्ँ वत्सरः, यँल्लँ -

पदमञ्जरी

इद्धातोः' रपरो न स्यात् । 'ऊकालोऽच्' इत्यत्रेज्भिस्त्रिमात्राणामग्रहणात् प्लुतसंज्ञापि न स्यात्, अत एतदेकं परेण । अत्र च ज्ञापकम् 'उर्ऋत्' इति तपरकरणम् । तद्धि 'कॄत संशब्दने' इत्येतस्माच्चुरादिणिजन्ताल्लुङि चङि अचीकृतदित्यत्र ॠकारस्य स्थानिन ऋकार एव यथा स्यादित्येवमर्थम् । न च पूर्वेण ग्रहणे ॠकारस्य स्थानित्वमादेशत्वं वा प्रसक्तमित्यर्थकं तत्स्यात् । ननु परेणापि ग्रहणे 'उर्' इत्यनेन स्थानिना दीर्घस्य ग्रहणे सत्यपि ऋदित्यनेन भाव्यमानत्वादृकारस्य स्थानित्वमादेशत्वं वाऽप्रसक्तमित्यनर्थकम्, उच्यते; असति तपरकरणे भाव्यमानत्वस्यैवासिद्धिः। तथा हि-अपूर्वनिष्पत्तेः प्राप्तस्यान्येन बाधितस्य प्रतिप्रसवे च तस्य लाघवं भवतीति अचीकृतत्, अवीवृतत्, अमीमृजदित्यत्र इररार्भिर्ऋवर्णस्य विनाशे प्राप्ते स्वरूपमेवावस्थितमभ्यनुज्ञायते । संभवति च स्वरूपाभ्यनुज्ञानं सवर्णग्रहणे सतीति स्वरूपाभ्यनुज्ञानार्थमेव सवर्णग्रहणं स्यात् । सति तु तपरकरणे सवर्णग्रहणाभावात् स्वरूपाभ्यनुज्ञानासंभवादपूर्वविधिरेव संपद्यत इति भाव्यमानत्वसिद्धये कर्त्तव्यं तपरकरणमिति ज्ञापकमेव ।

*अथ किमर्थमिति* । एवं हि सन्देह एव न भवतीति भावः । *अन्तःस्थानामपि हि सवर्णानां ग्रहणमिष्यत इति* । अन्तस्था द्विप्रभेदाः—रेफवर्जिता यवलाः

न्यासः

इत्यत्र दीर्घस्य स्थानिन आन्तरतम्याद् दीर्घो मा भूदित्येवमर्थं क्रियते । यदि च 'अणुदित्' इत्यादौ पूर्वेण णकारेणाण्ग्रहणं स्यात्, तदा ऋकारोऽनण्त्वात् सवर्णानां ग्राहको न स्यात् । ततश्च दीर्घस्यापि स्थानिनो यथाश्रुतेन ह्रस्वेनैव भवितव्यमिति तपरकरणं न कुर्यात्, व्यावर्त्त्याभावात्, कृतश्च; ततो गम्यते—परेण णकारेणाण्ग्रहणमिति। ननु च सत्यपि परेण णकारेणाण्ग्रहणे 'उर्ऋत्' इत्यत्र नैव सवर्णानामृकारो ग्राहक उपपद्यते, भाव्यमानत्वात्, 'भाव्यमानेनाणा सवर्णानां ग्रहणं न' इति प्रतिषेधात्, नैतदस्ति; वक्ष्यति हि तत्र—'न चायं भाव्यमानोऽण्, किं तर्हि ? आदेशान्तरनिवृत्त्यर्थं स्वरूपमेवाभ्यनुज्ञायते' इति । अचीकृतदित्यत्र 'कॄत संशब्दने' चुरादिणिच्, लुङ्, च्लेः 'णिश्रि' इत्यादिना चङ् । 'उर्ऋत्' इति ॠकारस्य ऋकारः, णिलोपः 'चङि' इति द्विर्वचनम्, 'उरत्' इत्यत्त्वम्, हलादिः शेषः, 'सन्वल्लघुनि' इतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घत्वम् ।

अथ किमर्थमज्ग्रहणमेवैतन्न क्रियत इति ? यत्र कृते सन्देह एव न भवतीति भावः । किं कारणम् ? नैवं शक्यमित्यत आह—अन्तःस्थानामपि हीत्यादि । अन्तःस्था

लोकम्, तल्ँलँ लोकमित्यत्रानुस्वारस्यानुनासिके यथि परसवर्णे कृते तस्य यग्रहणेन ग्रहणाद् द्विर्वचनं यथा स्यादिति ।

हकारादिष्वकार उच्चारणार्थः, नानुबन्धः । लकारे त्वनुनासिकः

**पदमञ्जरी**

सानुनासिकाः, निरनुनासिकाश्च । तत्राक्षरसमाम्नाये निरनुनासिकाः पठ्यन्ते, ततश्च सय्ँय्न्तेत्यादावान्तरतम्यात्सानुनासिकेषु यकारादिषु परसवर्णेष्वनुस्वारस्य कृतेषु तेषां प्रत्याहारेऽनुपदेशाद्यत्वं नास्तीति 'अनचि च' इति द्विर्वचनं न स्यात् । अण्ग्रहणे तु सति सवर्णग्रहणेन तेषामपि यत्वात् सिद्ध्यति । अथ सानुनासिका उपदिश्येरन्, ततो निरनुनासिकेषु तेषु परसवर्ण एव न स्यात्; यणां मध्ये तेषामसंनिवेशात् ।

हकारादिष्वित्यादि । ऋकारऌकारयोः सवर्णसंज्ञाया उपसंख्यानाद् ऋकार ऌकारमपि गृह्णाति, ततश्च 'उरण् रपरः' इति ऌकारस्याप्यण् रपरः स्याद्, लपरश्चेष्यते; तस्मादनुनासिकः प्रतिज्ञायते । तेन ऋकारस्याण् रपरः, ऌकारस्य तु लपर इति तवल्कार इति सिद्धं भवतीति । किं पुनरिमे वर्णा उत्सन्ना यदनुबद्धोऽपि पुनर्णकार एवानुबध्यते, यत एवमण्ग्रहणेषु इण्ग्रहणेषु सन्देहो भवति ?

**न्यासः**

द्विप्रभेदाः—रेफवर्जिताः सानुनासिकाः, निरनुनासिकाश्चेति वचनात् । यवलाः सानुनासिकाश्चेति वचनात् । यवलाः सानुनासिकनिरनुनासिकभेदेन द्विप्रकाराः; ते प्रत्याहारेऽपि निरनुनासिका वा उपदिश्येरन्, सानुनासिका वा ? यदि निरनुनासिकाः ? सय्ँय्न्तेत्यादौ 'अनुस्वारस्य ययि परसवर्णः' इत्यान्तरतम्यात् सानुनासिकेषु यकारादिषु परसवर्णेषु कृतेषु तेषां प्रत्याहारेऽनुपदेशाद् यत्वं नास्तीति 'अनचि च' इति यरो द्विर्वचनं विधीयमानं न स्यात् । अण्ग्रहणे तु सत्यण् सवर्णान् गृह्णातीत्येतेषामपि द्विर्वचनं सिध्यति । ननु च कृतेऽपि द्विर्वचने 'हलो यमां यमि लोपः' इत्येकस्य लोपविधानात् त्रयाणां यकाराणां श्रवणं न सम्भवत्येव । तत् किं द्विर्वचनार्थेन प्रयत्नेन ? नैतदस्ति; पाक्षिको हि स लोपः, 'झयो होऽन्यतरस्याम्' इत्यन्तरस्यांग्रहणानुवृत्तेः । तत्र यस्मिन् पक्षे लोपो नास्ति, तत्र त्रयाणां श्रवणं भवत्येव । अथ सानुनासिका उपदिश्येरन् ? प्रत्याहारेऽनुस्वारस्य परसवर्णत्वं निरनुनासिके परतो न स्यात्; यणां मध्ये तेषामसन्निवेशात् ।

हकारादिष्वित्यादि । प्रतिज्ञानुनासिक्याः पाणिनीयाः । यत्रेच्छन्ति तत्रानुनासिकं प्रतिजानते, नान्यत्र । लकारे च तेरकारस्य तत् प्रतिज्ञायते, न हकारादिषु । इत्संज्ञक इति । 'उपदेशेऽजनुनासिक इत्' इतीत्संज्ञाविधानात् । तेन इत्यादिना अनुनासिकप्रतिज्ञायाः फलं दर्शयति । ऋकार-ऌकारयोः सवर्णसंज्ञोपसंख्यानादृकारो गृह्यमाणो

प्रतिज्ञायते, तेन 'उरण् रपरः' इत्यत्र प्रत्याहारग्रहणाल्लपरत्वमपि भवति ॥

## ञ म ङ ण न म् ॥ ७ ॥

'ञ म ङ ण न' इत्येतान्वर्णानुपदिश्य पूर्वांश्चान्ते मकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति त्रिभिः—'पुमः खय्यम्परे' इत्यकारेण, 'हलो यमां यमि लोपः' इति यकारेण, 'ङमो ह्रस्वादचि

### पदमञ्जरी

सत्यमेतत्; ज्ञापयत्याचार्यो भवत्येषा परिभाषा—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति ॥

*ञमङणनम्* ॥ 'सृजिदृशोर्झल्यमकिति' इति न प्रत्याहारः; 'साक्षाद्द्रष्टरि' इति निर्देशात्, भाव्यमानत्वाच्च। एवमेव 'स्वौजसमौट्', 'तस्थस्थमिपां तान्तन्तामः', 'इच एकाचोऽम्' इत्यत्रापि; 'अम्शसोः' इति शस्साहचर्याद् 'अमि पूर्वः' इति सुबधिकारात्। 'तृणह इम्' इति न प्रत्याहारः; 'ब्रुव ईट्', 'अड् गार्ग्यगालवयोः' इत्यागमसाहचर्यात्, भाव्यमानत्वाच्च। अत एव 'वच उम्' इति न प्रत्या-

### न्यासः

लृकारमपि गृह्णाति, ततः 'उरण् रपरः' इति यथा ऋकारस्याण् शिष्यमाणो रपरो भवति एवं लृकारस्यापि भवन् लपरश्चेष्यते। तस्मादनुनासिकः प्रतिज्ञायते। तेनादिरन्त्येन सहेता' इति 'उरण् रपरः' इत्यत्र 'र' इति प्रत्याहारग्रहणं भवति; रेफात्प्रभृत्या लणोऽकारात्। तस्मिंश्च सति ऋकारस्याण् रपरः भवति, लृकारस्य तु लपर इति। ततः 'तवल्कारः' इत्याद्युपपन्नं भवति।

**ञ म ङ ण न म् ॥ तस्य ग्रहणं भवति त्रिभिरिति।** अथ 'सृजिदृशोर्झल्यमकिति' इत्यत्राप्यस्याकारेण ग्रहणं कस्मान्न भवति ? 'साक्षाद्द्रष्टरि' इति निर्देशात्। प्रत्याहारे ह्येतस्मिन्नकाराद्यादेशविधानाद् द्रष्टृशब्दो न सिध्येत्। इह तर्हि 'भ्रस्जो रोपधयो रमन्यतरस्याम्' इति रेफेण कस्मान्न भवति ? अथ रमयमुपात्तः, न त्वम्—इत्येष कुतो निश्चयः ? तुल्या हि संहिता, तत्र भवितव्यं सन्देहेन—किमयं रम् ? आहोस्विदमिति ? व्याख्यानान्निश्चय इति चेत् ? यदि तर्हि व्याख्यानस्य निश्चयहेतुत्वमभ्युपेयते, तत एवात्र चान्यत्र च सर्वत्रैवंजातीयके संदेहविषये निश्चयो भविष्यतीति किमन्यैरतिविस्तरग्रन्थकारिभिर्हेतुभिरुपन्यस्तैः प्रयोजनम्! यस्तु मन्यते 'भ्रस्जो रोपधयो रम्' इत्यत्र व्यवस्थितविभाषया प्रत्याहारस्य ग्रहणं न भविष्यतीति, स इदं स्याद्वचनीयः—किमनेनान्यतरस्यां ग्रहणेन ? रम्ग्रहणं विकल्प्यते—अन्यतरस्यां रम् गृह्यत इति ? अथ विधानमन्यतरस्यां रम् विधीयत इति ? यदि रम्ग्रहणम्, ततो रेफस्यैवंदं स्वरूपेण मकारानु-

ङमुण्नित्यम्' इति ङकारेण। 'ञमन्ताड्डः' इति ञकारेणापि ग्रहण-मस्य दृश्यते।

केचित्तु सर्वाण्येतानि प्रत्याहारग्रहणानि ञकारेण भवन्त्विति मकारमनुबन्धं प्रत्याचक्षते; तथा च[1] सति 'ङमो ह्रस्वादचि ङमुण्

पदमञ्जरी

हारः, व्याख्यानाद्भाव्यमानत्वाच्च। *ञकारेणापि ग्रहणमस्य दृश्यत इति*। यद्येवम्, कथं 'त्रिभिः' इति पूर्वमुक्तम्? अष्टाध्यायीगतग्रहणाभिप्रायं तत्। अत एव 'यमि-र्ञमन्तेषु[2]' इत्यत्रापि दृश्यते।

*केचित्त्वित्यादि*। यान्येतान्यनन्तरोक्तानि प्रत्याहारग्रहणानि तानि 'पुमः खय्यम्परे', 'हलो यमां यमि लोपः', 'ङमो ह्रस्वादचि ङमुण्नित्यम्' इत्येवं ञकारेणैव भवन्त्विति निश्चित्य केचिदाचार्या मकारानुबन्धं प्रत्याचक्षते। तत्र दोषमाह—*तथा चेति*। 'पुमः खय्यम्परे' इत्यत्र तु ञकारभकारपरस्य च खयोऽसम्भवाद-

न्यासः

बन्धवतो ग्रहणम्, न प्रत्याहारस्येति लभ्यते। एतद्व्यवस्थितविभाषया रमागमस्तु विकल्पेन न स्यात्; अन्यतरस्यांग्रहणविकल्पे चरितार्थत्वात्। न हि द्वितीयमन्यतरस्यां-ग्रहणमस्ति, येन विधानं विकल्प्येत, इतरत्र तु पक्षे सिध्यति पाक्षिकं विधानम्; किं तु यत् तदभिमतं व्यवस्थितविभाषया रेफस्यैवेदं मकारानुबन्धवतः स्वरूपेण ग्रहणम्, न प्रत्याहारस्येति, तन्नोपपद्यते; एकत्वादन्यतरस्यांग्रहणस्य। तस्य विधानविकल्पेनै-वोपयुक्तत्वात्। किञ्च, कुतश्चायमध्यवसायो व्यवस्थितविभाषेयमिति? व्याख्यानादिति चेत्; किमिदानीं पारम्पर्याश्रयणेन! व्याख्यानादेव नैवं प्रत्याहारग्रहणं भविष्यतीति यत् किञ्चिदेतत्। ञकारेणापि प्रत्याहारग्रहणमस्य दृश्यत इति। यद्येवम्, किमर्थं त्रिभि-रित्युक्तम्? 'ञमन्ताड्डः' इत्यत्र प्रत्याहारस्य नावश्यं ग्रहणमिति दर्शयितुम्। अत्र हि ञकारमकारस्वरूपोपादानेऽपि विना प्रत्याहारग्रहणेनान्यतोऽपि मकाराद्यन्ताड्डप्र-त्ययः सिध्यत्येव, बहुलाधिकारविधानात्। नन्वेवमपि 'चतुर्भिः' इत्येवं वक्तव्यम्, यमिर्ञमन्तेष्वित्यत्र ञकारेणाप्यस्य ग्रहणदर्शनात्, सत्यमेतद्; यदि ग्रहणमात्रमभि-प्रेत्यैतदुच्येत, नचेदं ग्रहणमात्रमभिसन्धायोक्तम्, किं तर्हि? ग्रहणविशेषम्, सौत्रम्। न चेदं सौत्रं ग्रहणम्, किं तर्हि? आनिट्कारिकम्। केचिदित्यादि। यान्येतान्यनन्तरं प्रत्याहारग्रहणान्युक्तानि तानि 'ञमञ्' इत्यत्र यो ञकारस्तेनैव भवन्त्वित्येवं विचिन्त्य केचिदाचार्या मकारस्य प्रत्याख्यानं कुर्वन्ति। तत्र तु प्रत्याख्याने 'पुमः खय्यम्परे' इत्यादिषु सूत्रेषु मकारस्य स्थाने ञकारः कर्तव्य इति तेषामभिप्रायः। तथा च सती-त्यादिना मकारानुबन्धप्रत्याख्याने दोषं दर्शयति। 'ङमो ह्रस्वादचि ङमुण् नित्यम्'

१. 'तु' इति बालशास्त्रिसंस्करणे। २. व्याघ्रभूतिकृतेयमनिट्कारिका।

नित्यम्' इत्यत्रागमिनोर्झभोरभावादागमाभावप्रतिपत्तौ प्रतिपत्तिगौरवं भवति ॥

## झ भ ञ् ॥ ८ ॥

'झ भ' इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते ञकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन—'अतो दीर्घो यञि' इति यकारेण ॥

### पदमञ्जरी

दोषः। 'हलो यमां यमि लोपः' इत्यत्रापि झकारभकारयोः परतो हल उत्तरयोर्झकारभकारयोरसम्भवः। सम्भवेऽपि वा 'झरो झरि' इति लोपः। आगमिनोर्झभोरभावाद् इति लभेरुज्झेश्च क्विपि सम्भव इति चेत्, न; उज्झेः संयोगान्तलोपाल्लभेर्जश्त्वविधानात्। *प्रतिपत्तिगौरवमिति*। यद्यागमिनोरभावस्तर्हि त्रय आगमिनः, पञ्चागमाः, वैषम्यात्संख्यातानुदेशो न स्यात्, नैष दोषः; 'यथासंख्यम्' इत्यत्र प्रमितिदशायां निर्देशगतसंख्यासाम्यमाश्रीयते, न त्वनुष्ठानसमये प्रयोगगतमिति चोद्यपरिहारयोः क्रियमाणयोः प्रतिपत्तिगौरवं भवतीत्यर्थः।

*झ भ ञ्*॥ 'उत्सादिभ्योऽञ्', 'अत इञ्', 'गर्गादिभ्यो यञ्' इत्येवमादौ न प्रत्याहारः; भाव्यमानत्वात्, अनभिधानाच्च। 'ञि च पदे' इत्यत्र न प्रत्याहारः; पदेन विशेषणात्।

### न्यासः

इति हि पाठे झभोरपि प्रत्याहारेऽन्तर्भावाज्झभावप्यागमिनौ स्याताम्—इत्येतच्चोद्यमापतति। तयोः झभोः पदान्तयोरभावान्न भविष्यत इति परिहारो वाच्यः। तस्मिन्नुक्ते, 'ननु च लभेरुब्जेश्च क्विपि विहित आगमिनावुभौ स्त एव पदान्तौ' इति पुनश्चोद्यम्। तस्मिन् 'झलां जशोऽन्ते' इतिं बकारजकारयोः कृतयोः कुतस्ताविति पुनः परिहारः! ननु चागमिनोर्झभोरभावाद्वैषम्यं स्यात्; तथा हि—ङणनास्त्रय आगमिनः, आगमास्तु ङणनझभाः पञ्च; ततश्च संख्यावैषम्यान्नैषाम् 'यथासंख्यम्' इति संख्यातानुदेशः स्यादिति पुनश्चोद्यम्? नैष दोषः; सूत्रे यावन्त आगमाः, आगमिनोऽपि तावन्त एव पठ्यन्ते, तत्र लक्ष्यमनपेक्ष्य ङकारादीनामेव यथासंख्यमागमा भवन्तीति सूत्रार्थे विहिते उत्तरकालं यथासम्भवं कार्यप्रतिपत्तिर्भविष्यतीति। येषां तावद् आगमानामागमिनः सन्ति तेषां यथासंख्यं भविष्यति। 'झकारभकारौ तु पदान्तावागामिनौ न स्तः' इति कृत्वा आगमावपि न भविष्यत इति पुनः परिहारो वाच्यः। एवमनेकचोद्यपरिहारेणागमिनोर्झभोरभावाद्धेतोरागमाभावप्रतिपत्तौ साध्यायां महाप्रतिपत्तिगौरवं भवेत्। तस्मादयुक्तं मकारप्रत्याख्यानमिति भावः।

## घ ढ ध ष् ॥ ९ ॥

'घ ढ ध' इत्येतान्वर्णानुपदिश्य पूर्वांश्चान्ते षकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति द्वाभ्याम्—'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति झकारभकाराभ्याम् ॥

## ज ब ग ड द श् ॥ १० ॥

'ज ब ग ड द' इत्येतान्वर्णानुपदिश्य पूर्वांश्चान्ते शकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः—'भोभगोअघोअपूर्वस्य योऽशि' इत्यकारेण, 'हशि च' इति हकारेण, 'नेड्वशि कृति' इति वकारेण, 'झलां जश् झशि' इति जकार-झकाराभ्याम्, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति बकारेण ॥

## ख फ छ ठ थ च ट त व् ॥ ११ ॥

'ख फ छ ठ थ च ट त' इत्येतान्वर्णानुपदिश्यान्ते वकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवत्येकेन—'नश्छव्यप्रशान्' इति छकारेण। ख-फग्रहणमुत्तरार्थम् ॥

### पदमञ्जरी

घढधष् ॥ 'लघ्नपतपद' इति न प्रत्याहारः, अकारोच्चारणाद्धातुसाहचर्याद्वा।

जबगडदश् ॥ 'एतदोऽश्' 'इदम इश्' 'एशिरेच्' इति न प्रत्याहारः; भाव्यमानत्वाद् 'मस्जिनशोः' इति मस्जिसाहचर्यात्।

खफछठथचटतव् ॥ एचोऽयवायावः' इत्यत्राकारस्यासंनिवेशादाविति न प्रत्याहारः; तत्साहचर्यादवित्यपि। ननु छकारेणैवास्य ग्रहणम्, न च खफौ तत्रान्तर्भूतौ, तत्किमर्थं तयोर्ग्रहणमित्याह—*खफग्रहणमिति*। उत्तरैरनुबन्धैः 'अनुस्वारस्य ययि परसवर्णः' 'पुमः खय्यम्परे' इत्यादौ प्रत्याहारे तयोर्ग्रहणं यथा स्यादित्येवमर्थमित्यर्थः।

### न्यासः

झभञ् ॥ घढधष् ॥ जबगडदश् ॥ खफछठथचटतव् ॥ ननु च छकारेणैवास्य ग्रहणम्, न च खफौ तदन्तर्भूतौ, तत् किमर्थं तयोरिह ग्रहणम्? इत्याह—ख-फग्रहणमित्यादि। उत्तरेषु प्रत्याहारेष्वनयोरप्यन्तर्भावो यथा स्यादित्येवमर्थं तयोर्ग्रहणमित्यर्थः।

कपय् ॥ १२ ॥

'क प' इत्येतौ वर्णावुपदिश्य पूर्वांश्चान्ते यकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति चतुर्भिः—'अनुस्वारस्य ययि परसवर्णः' इति यकारेण; 'मय उञो वो वा' इति मकारेण, 'झयो होऽन्यतरस्याम्' इति झकारेण, 'पुमः खय्यम्परे' इति खकारेण ॥

शषसर् ॥ १३ ॥

'श ष स' इत्येतान्वर्णानुपदिश्य पूर्वांश्चान्ते रेफमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति पञ्चभिः—'यरोऽनुनासिकेऽनुनासिको वा' इति यकारेण, 'झरो झरि सवर्णे' इति झकारेण, 'खरि च' इति खकारेण, 'अभ्यासे चर्च' इति चकारेण, 'शर्पूर्वाः खयः' इति शकारेण ॥

हल् ॥ १४ ॥

'ह' इत्येकं वर्णमुपदिश्य पूर्वांश्चान्ते लकारमितं करोति प्रत्याहारार्थम्। तस्य ग्रहणं भवति षड्भिः—'अलोऽन्त्यात्पूर्व उपधा' इति अकारेण, 'हलोऽनन्तराः संयोगः' इति हकारेण, 'लोपो व्योर्वलि' इति वकारेण, 'रलो व्युपधाद्धलादेः संश्च' इति रेफेण; 'झलो झलि' इति झकारेण, 'शल इगुपधादनिटः क्सः' इति शकारेण।

अथ किमर्थमुपदिष्टोऽपि हकारः पुनरुपदिश्यते ? कित्त्वविकल्प-

पदमञ्जरी

कपय् ॥ 'एचोऽयवायावः' इत्यत्राकारस्यासन्निवेशादायिति न प्रत्याहारः। तत्साहचर्यादीयत्यपि।

शषसर् ॥ इरितां धातूनामुपदेशसामर्थ्यात् 'इरितो वा' इति न प्रत्याहारः। प्रियस्थिरादिसूत्रे वरिति न प्रत्याहारः; भाव्यमानत्वात्, प्रादिसाहचर्याद्वा।

हल् ॥ इहान्येषां वर्णानां सकृदुपदेशः, हकारस्तु द्विरुपदिश्यते, तत्र द्वितीयोपदेशस्य प्रयोजनं पृच्छति—*अथेति*। *स्निहित्वेति*—'ष्णिह प्रीतौ'। *अलित्त्वदिति*—

न्यासः

कपय् ॥ शषसर् ॥ हल् ॥ इहान्येषां वर्णानां सकृदुपदेशः, हकारस्तु द्विरुपदिश्यते, तस्य द्विरुपदेशे प्रयोजनं जिज्ञासुराह—अथ किमर्थमित्यादि। स्निहित्वेति—'ष्णिह

क्सेड्विधयो यथा स्युरिति । स्निहित्वा, स्नेहित्वेत्यत्र 'रलो व्युपधा-द्धलादेः संश्च' इति कित्त्वं वा यथा स्यात्; लिहेरलिक्षदिति 'शल इगुप-दनिटः क्सः' इति क्सो यथा स्यात; रुदिहि, स्वपिहीति वलादिलक्षण इड्यथा स्यात्। अदाग्धाम्। झल्ग्रहणेषु च हकारस्य ग्रहणं यथा स्यात्। यद्येवम्; हयवरडित्यत्र तर्हि किमर्थमुपदिश्यते ? महाँ हि सः; देवा

पदमञ्जरी

'लिह आस्वादने', लुङ्, क्सः, 'हो ढः', 'षढोः कः सि' । *रुदिहि, स्वपिहीति*—'रुदिर् अश्रुविमोचने' 'ञिष्वप् शये' अदादी, लोट्, सिप्, सेर्हिः । *अदाग्धामिति*—लुङि तसस्ताम्, 'च्लेः सिच्', 'वदव्रज' इति वृद्धिः । 'दादेर्धातोर्घः', तस्या-सिद्धत्वाद्धकाराश्रयः सिचो लोपः, 'झषस्तथोर्धोऽधः' ।

एवं परोपदेशस्य प्रयोजनानि दर्शयित्वा पूर्वोपदेशस्य प्रयोजनं दर्शयितुं पृच्छति—*हयवरडित्यत्रेति* । *महाँ हि स इति* । महान् हि स इति स्थिते 'दीर्घादटि समानपादे' इति रुः, 'आतोऽटि नित्यम्' इत्यनुनासिकः । 'भोभगोअघोअपूर्वस्य'

न्यासः

प्रीतौ', आदेः ष्णः[१] स्नः[२], 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा, इट् । अलिक्ष-दिति—'लिह आस्वादने', लुङ्, 'हो ढः', 'षढोः कः सि' इति कत्वम्, 'आदेशप्रत्य-ययोः' इति षत्वम् । रुदिहि, स्वपिहीति—रुदिस्वपिभ्यां विध्यादिलोट्, 'सेर्ह्यपिच्च', अदादित्वाच्छपो लुक्, 'रुदादिभ्यः सार्वधातुके' इतीट् । अदाग्धामिति—'दह भस्मी-करणे', लुङ्, तस्य च्लिः, 'तस्थस्थमिपाम्' इत्यादिना तसस्ताम्, च्लेः सिच्, 'वदव्रज' इति वृद्धिः, 'दादेर्धातोर्घः', 'झलो झलि' इति सिचो लोपः, 'झषस्तथो-र्धोऽधः' इति तकारस्य धत्वम्, 'झलां जश् झशि' इति घकारस्य गकारः । तत्र यदि रल्ग्रहणे शल्ग्रहणे वल्ग्रहणे च हकारस्य ग्रहणं न स्यात्, कित्त्वक्सेड्विधयो न स्युः । यदि झल्ग्रहणेन हकारस्य ग्रहणं न स्यात्, ततो घत्वस्याप्यसिद्धत्वाद् घकाराद् अझलः परः सिजिति तस्य 'झलो झलि' इति लोपो न स्यात् । तस्माच्छल्वल्झल्ग्रहणेषु चास्य ग्रहणं यथा स्यादित्युपदिष्टस्यापि पुनरुपदेशः ।

यद्येतानि प्रयोजनानि, परोपदेश एवास्तु; तेनैव ह्येतानि सिध्यन्ति, पूर्वोपदेशस्तु न कर्त्तव्य इत्यभिप्रायेणाह—हयवरडित्यत्र तर्हीत्यादि । अड्ग्रहणेष्वित्यादि । यदि पूर्वत्र नोपदिश्येत, अड्ग्रहणेन चाश्ग्रहणेन चाग्रहणात् 'महाँ हि सः' इत्यत्र रुत्वा-नुनासिकत्वयत्वयलोपा न स्युः । महच्छब्दात् सुः, 'उगिदचाम्' इति नुम्, 'सान्त-

१. अश्ग्रहणोदाहरणार्थमिदम् । २–२. षः स इत्यर्थः ।

हसन्तीत्यत्राङ्गणेषु चाशग्रहणेषु च ग्रहणं यथा स्यात्। 'हशि च' इति हकारस्य ग्रहणं यथा स्यात्। ब्राह्मणो हसति—'हशि च' इत्युत्वं यथा स्यात्।

एकस्मान् ङञणवटा; द्वाभ्यां षः; त्रिभ्य एव कणमाः स्युः।

पदमञ्जरी

इति यत्वम्, 'हलि सर्वेषाम्' इति यलोपः, अत्राशीत्यनुवर्त्तते। *ब्राह्मणो हसति*—ब्राह्मणशब्दात्सो रुः, 'हशि च' इत्युत्वम्, गुणः। उपलक्षणं चैतत् प्रयोजनानाम्; तेन 'इणः षीध्वंलुङ्लिटां धोऽङ्गात्', 'विभाषेटः' इति मूर्द्धन्यविकल्पोऽपि प्रयोजनम्—लिलिहिढ्वे, लिलिहिध्वे।

णकारादीनामनुबन्धानां यावद्भिर्ग्रहणमिष्यते, तानार्यया दर्शयति—*एकस्मादित्यादि*। परे ग्राह्या इति शेषः। *स्युरिति* वक्ष्यमाणेन सम्बन्धः। एङ्, यञ्, अण्, छव्, अडिति। एकस्मादेकारादेः परे ङकारादयो ग्राह्याः स्युः। एवमुत्तरत्राप्यर्थो वेदितव्यः। *द्वाभ्यां षः*—झष्, भष्। *त्रिभ्य एव कणमाः*—अक्, इक्, उक्;

न्यासः

महतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ। महान्+हि इति स्थिते हकारे परतस्तस्याङ्ग्रहणेन ग्रहणाद् 'दीर्घादटि समानपादे' इति रुत्वम्, आतोऽटि नित्यम्' इति पूर्वस्यानुनासिकः। अश्ग्रहणेन ग्रहणाद् 'भो भगो अघो' इत्यादिना रेफस्य यत्वम्, अशीति वर्त्तमाने 'हलि सर्वेषाम्' इति यलोपः। हशि चेत्यादि। इदमपरं पूर्वोपदेशस्य प्रयोजनम्। असति हि तस्मिन्, ब्राह्मणो हसतीत्यत्र हकारस्य हश्ग्रहणेनाग्रहणात् तस्मिंस्त्वसति परतो रोरुत्वं न स्यात्। ब्राह्मणशब्दात् सुः, तस्य 'ससजुषो रुः', 'हशि च' इत्युत्वम्, 'आद्गुणः'।

एकस्मादित्यादि। परे ग्राह्या इति शेषः। स्युरिति वक्ष्यमाणेन सम्बन्धः। एकस्मादिति दिग्योगलक्षणा पञ्चमी। एकस्माद्वर्णात् परे ङकारादयो ग्राह्या भवेयुरित्यर्थः। अथ वा—एकस्मादिति ल्यब्लोपे पञ्चमी, प्रासादात् प्रेक्षते इति यथा, तथा प्रदेशवाक्येष्वेकं वर्णमुच्चार्य्य परिगृह्य वा ङकारादयो ग्राह्या भवेयुरित्यर्थः। स पुनरेको वर्णः। 'एओङ्', 'झभञ्', 'अइउण्', 'खफछठथचटतव्', 'हयवरट्' इत्यत्र येन सह ङकारादीनां ग्रहणमुक्तं स एव वेदितव्यः। द्वाभ्यां ष इत्यत्र परे ग्राह्या इति यदध्याहृतं यच्च 'स्युः' इति क्रियापदं तदर्थादेकवचनतया विपरिणमति। द्वाभ्यां परो द्वौ वा उच्चार्य्य षकारो ग्राह्यो भवेदित्यर्थः। एवमुत्तरत्राप्यर्थो वेदितव्यः। कौ पुनर्द्वौ? 'झभञ्', 'घढधष्' इत्यत्र याभ्यां षकारस्य ग्रहणमुक्तम्, तावेव। त्रिभ्य एव कणमाः स्युरिति। ते पुनस्त्रयः—'ऋलृक्', 'लण्', ञमङणनम्' इत्यत्र यैः ककारादीनां ग्रहण-

ञेयौ चयौ चतुर्भ्यः; रः पञ्चभ्यः; शलौ षड्भ्यः ॥ इति ।

इति प्रत्याहारप्रकरणम्



पदमञ्जरी

अण्, इण्, यण्; अम्, यम्, ङम् । ञेयौ चयौ चतुर्भ्यः– अच्, इच्, एच्, ऐच्; यय्, मय्, झय्, खय् । रः पञ्चभ्यः—यर्, झर्, खर्, चर्, शर् । शलौ षड्भ्यः– अश्, हश्, वश्, झश्, जश्, बश्; अल्, हल्, वल्, रल्, झल्, शल् इति ।

इति प्रत्याहारप्रकरणम्



न्यासः

माख्यातम्, त एव । ञेयौ चयौ चतुर्भ्य इति । ते पुनश्चत्वारः—'ऐऔच्', 'कपय्' इत्यत्र चयोर्यैश्चकारयकारयोर्ग्रहणमभिमतम्, त एव । रः पञ्चभ्य इति । ते पुनः पञ्च– 'शषसर्' इत्यत्र यै रेफस्य ग्रहणं प्रतिपादितम्, त एव । शलौ षड्भ्य इति । ते पुनः षट्—'जबगडदश्', 'हल्' इत्यत्र यैः शकारलकारयोर्ग्रहणमुक्तम्, ते वेदितव्या इति ।

इति प्रत्याहारप्रकरणम्

# अथ प्रथमाध्याये प्रथमः पादः

## वृद्धिरादैच् ॥ १ ॥

### पदमञ्जरी

वृद्धिरादैच्। त्रिपदमिदं सूत्रम्--वृद्धिः, आद्, ऐज् इति। अत्र चाकारः प्रयोगस्थैराकारैरर्थवान्। जात्यभिप्रायं चैकवचनम्। ऐच्छब्दस्तु ऐकारौकाराभ्याम्। संज्ञिनोर्द्वित्वेऽपि द्विवचनं न भवति; द्वयोरप्येकशब्दरूपरूषितत्वेनैक्यमापन्नयोरिवाभिधानात्। एवं सर्वेष्वेव प्रत्याहारेष्वेकवचनं द्रष्टव्यम्। समाहारद्वन्द्वो वा--आदैजिति। 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति समासान्तस्तु न भवति; समासान्तविधेरनित्यत्वाद्। अनित्यत्वं च 'द्वित्रिभ्यां पाद्दन्मूर्द्धसु' इति मूर्द्धन्शब्दस्य निर्देशादवसीयते। अन्यथा 'द्वित्रिभ्यां ष मूर्ध्नः' इति षप्रत्ययान्तत्वान्मूर्धेष्विति निर्देश्यं स्यात्। आदैच्छब्दात्समासत्वादर्थवत्त्वाद्वा विभक्त्युत्पत्तौ 'चोः कुः' पदस्येति कुत्वं प्राप्तम्, अयस्मयादित्वेन भत्वान्न हि भविष्यति; छन्दोवत्सूत्राणि भवन्ति। वृद्धिशब्दस्य त्रयीशब्दानां प्रवृत्तिरिति पक्षे 'वृधु वृद्धौ' इत्यस्माद्भावे क्तिनि व्युत्पत्तिः, अभेदोपचाराच्च वृद्धियुक्तेष्वादैक्षु वृत्तिः। न चैवं लक्षणयैवादैक्षु वृद्धिशब्दस्य वृत्तिसिद्धेः सूत्रस्यानर्थक्यम्; नियमार्थत्वात्। अन्यथा वर्द्धनक्रियायोगिण्विकारादिषु प्लुतेषु च वर्तेत। मा तत्र वर्तिष्ट, आदैक्ष्वेव वर्ततामिति नियमः। चतुष्टयीपक्षे तु कथम्, यावतश्च संज्ञात्वेन विनियुक्ते सति 'सचि वृद्धिः' इत्यादौ प्रदेशान्तर एव वृद्धिशब्दस्यादैक्षु प्रवृत्तिर्युक्ता, न त्वत्रैव संज्ञाविनियुक्तिकाले? उच्यते; 'नित्यः शब्दार्थसम्बन्धः' इति दर्शनेन क्वचिदपि पुरुषव्यापारात्प्राग् वाचकः सन् पुरुषव्यापारेण वाचकः क्रियते। अतः सर्वे शब्दाः संज्ञारूपेण सर्वानर्थान् प्रतिपादयितुं समर्थाः। तत्रानियतार्थेन व्यवहारासिद्धेर्नियमार्थ एव पुरुषव्यापारः--मया प्रयुक्तस्य वृद्धिशब्दस्यादैजर्थं इति। एवं तावत्पदार्थो व्याख्यातः।

### न्यासः

वृद्धिरादैच् ॥ वृद्धिः, आत्, ऐच्--इति केचित् त्रिपदमिदं सूत्रं वर्णयन्ति। अन्ये तु--आच्च, ऐच्च इति आदैजिति समाहारे द्वन्द्वोऽयमिति मत्वा वृद्धिः, आदैच्--इति द्विपदम्। इतरेतरयोगे हि बहुत्वाद् द्वन्द्वे बहुवचनं स्यात्। ननु च समाहारेऽपि 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् समासान्तः स्यात्; समासान्तविधेरनित्यत्वान्न भविष्यति। अनित्यत्वं ग्रन्थे ज्ञापयिष्यते। अथ 'चोः कुः' इति कुत्वं कस्मान्न भवति? 'अयस्मयादीनि च्छन्दसि' इति भसंज्ञकत्वात्। आदिशब्दस्य प्रकारवाचि-

न्यासः

त्वादैच्छब्दोऽयमयस्मयादिषु द्रष्टव्यः । ननु तत्र च्छन्दसीत्युच्यते, नन्वेदं छन्दः, तत् कुतो भसंज्ञा ? 'छन्दोवत् सूत्राणि भवन्ति' इत्यदोषः ।

इहेदं सूत्रमनर्थकं वा स्याद् यथाकथञ्चिदुदात्तादिवचनवत् ? साध्वनुशासनार्थं वा, वृद्धिशब्दस्यादैचाख्यानेन साधुत्वमाख्यायत इति ? प्रयोगनियमार्थं वा, आदैच्-पर एव वृद्धिशब्दः प्रयोक्तव्य इति ? आदेशार्थं वा, आदैचां वृद्धिशब्द आदेशो भवति ते वा तस्येति ? आगमागमिसम्बन्धार्थं वा, आदैचां वृद्धिशब्द आगमो भवति, ते वा तस्येति ? विशेषणविशेष्यभावप्रसिद्ध्यर्थं वा, आदैचां वृद्धिशब्दो विशेषणम् , ते वा तस्येति; एकविभक्तिकत्वं ह्यत्र दृष्टम् , दृष्टश्चैकविभक्ति-कयोर्विशेषणविशेष्यभावः, तद्यथा—नीलमुत्पलमिति, संज्ञासंज्ञिसम्बन्धार्थं वा, दृश्यते हि सोऽप्येकविभक्तिकयोः, तद्यथा–अयं पनस इति ? तत्र तावदाद्यः पक्षो नोपपद्यते, समधिगतज्ञानातिशयो ह्याचार्यः परहितप्रतिपन्नः समाहितचेताः शिष्याणां कृतरक्षासंवि-धानो मङ्गलपूर्वकं महता प्रयत्नेन सूत्राणि प्रणीतवान् । तत्राशक्यमेकेन वर्णेनाप्यनर्थकेन भवितुम् , किं पुनरियता सूत्रप्रबन्धेन ! नापि शक्यं वृद्धिशब्दस्यादैचाख्या साधुत्वमनेन विधीयत इति विज्ञातुम् , लक्षणान्तरेण विहितत्वात् तेषां साधुत्वस्य । तथा हि वृद्धि-शब्दोऽयमविशेषेण चोपदिष्टः–'वृधु वृद्धौ' इति, अतः क्तिन्प्रत्ययः—'स्त्रियां क्तिन्' इति, 'झषस्तथोर्धोऽधः' इति धत्वम् , 'झलां जश् झशि' इति धकारस्य दकारः, आदैचोऽप्यक्षरसमाम्नाय उपदेशात् । ऐचोऽक्षरसमाम्नाय उपदेशः, नाकारस्येति चेत् ? अवर्णजातेरुपदेशात् सोऽपि गृह्यत इत्यदोषः । अथाप्यकारव्यक्तेरुपदेशः ? एवमप्य-दोषः; 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्यकारेण गृह्यमाणेनाकारस्यापि ग्रहणात् । प्रयोगनियमार्थमप्येतन्नार्हति भवितुम् ; प्रयोगनियमार्थे ह्येतस्मिन् 'सिचि वृद्धिः', 'मृजेर्वृद्धिः' इत्यादावनादैच्परस्य वृद्धिशब्दस्य प्रयोगो नोपपद्यते । कथं हि नाम स्वयमेव नियमं कृत्वा तमनादैच्परं प्रयुञ्जीत !

अन्यन्तु प्रयोगनियमार्थमेतन्न भवतीति प्रतिपादयितुमाह—नेह च प्रयोगनिय-मार्थमारभ्यत इति । ननु चायम्प्रयोगनियमार्थमेवारभ्यते 'ते प्राग् धातोः' इति, ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्याः ? इति परेण चोदिते परिहारमाह—'प्रत्याख्यायते स योगः । न वा; तथानिष्टादर्शनात्' इति । न हि प्रपचतीति प्रयोक्तव्ये कश्चित् 'पचति प्र' इति प्रयुङ्क्ते । अथापि न प्रत्याख्यायेत, एवमपि न दोषः; यतः संज्ञानियमोऽयं न प्रयोगनियमः–ते प्रादयो धातोः प्राक् प्रयुज्यमाना एव गत्युपसर्ग-संज्ञका भवन्तीति । अथापि प्रयोगनियमार्थं स्यात् ? एवमपि न दोषः; लौकिकानां शब्दानामर्थे प्रयुक्तानां प्रयोगनियम आरभ्यते, आदैच्छब्दश्च लौकिकः, तस्य किं प्रयोगनियमार्थेन वचनेनेति ? तत्र यदुक्तं 'प्रत्याख्यायते स योगः' इति, तदयुक्तम् ; न हि सार्थकस्य प्रत्याख्यानं युक्तम् । निरर्थकः स इति चेद् ? अत्राप्यनर्थकत्वाशङ्का-

पदमञ्जरी

वाक्यविषयाः पुनरष्टौ विकल्पाः—अनर्थकम्, साध्वनुशासनम्, प्रयोगनियमार्थम्, आदेशार्थम्, आगमार्थम्, विशेषणार्थम्, तद्गुणाध्यारोपार्थम्, संज्ञार्थमिति। तत्रानर्थकाभिधानं प्रमादाश्रयदोषादनवधानादशक्तेर्वा भवति। न चैतच्चतुष्टयं भगवतः सम्भवति; आचार्यो हि दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख आसीनो मङ्गलपूर्वकं महता प्रणिधानेन सूत्राणि प्रणीतवान्। तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण! साध्वनुशासनमपि न भवति, सिद्धत्वाद्वृद्धिशब्दस्य क्तिन्नन्तत्वात्, आदैच्छब्दस्य चार्थवत्त्वात्। ननु छन्दोवद्भावेन सूत्र एव प्रयोगः सिद्ध्यति, सूत्राद्बहिरपि कुत्वाभावार्थं निपातनमेतत् स्यात्, उच्यते; वृद्धिशब्दस्यैवमनन्वयप्रसङ्गः, संभूयकारित्वं च पदानां व्युत्पत्तिसिद्धम्, अतो नायं पक्षः। नापि प्रयोगनियमार्थम्, यत्र हि सहप्रयोगप्रसङ्गस्तत्र नियमः कर्त्तव्यः। न च वृद्ध्यादैच्छब्दयोः सहप्रयोगप्रसङ्गः, विनियोगात्प्रागसम्बन्धाद् उत्तरकालं वृद्धिशब्देनैव गतत्वात्। किं च नेह प्रयोगनियम आरभ्यते। नन्वारभ्यते, 'परश्च' इति? पदस्य नारभ्यते। पदस्याप्यारभ्यते 'उपसर्जनं पूर्वम्' इति? ययोरैकपद्यं नास्ति तयोर्नारभ्यते। तयोरप्यार-

न्यासः

प्रसङ्गः। यदि ह्यनर्थकान्यपि कानिचित् सूत्राणि प्रणीतवान् सूत्रकार इत्येषोऽध्यवसायः स्याद्, भवितव्यमत्राप्यनर्थकत्वाशङ्कया। ततश्च संज्ञासंज्ञिसम्बन्धार्थमेतन्न तु निरर्थकमित्येव नियमो न स्यात्। तस्मात् तस्य प्रामाण्यमभ्युपगच्छता सर्वं तत्प्रणीतं येन केनचित् प्रकारेण सार्थकमभ्युपेयम्। योऽपि संज्ञानियमपक्षमाश्रित्य परिहार उक्तः, सोऽपि वृत्त्या विरुध्यते। 'ते गत्युपसर्गसंज्ञका धातोः प्राक् प्रयोक्तव्याः' इत्यनेन हि वृत्तिग्रन्थेन प्रयोगनियम एवाश्रित इति स्पष्टमेवाख्यातम्। न च वृत्तिं व्याख्यातुमुद्यतस्य तद्विरुद्धं व्याख्यानं युज्यते कर्त्तुम्।

यदप्युक्तं लौकिकानां शब्दानामित्यादि, तदपि न प्रयोगनियमार्थताशङ्कापनोदायालम्। तथा हि 'विभाषा सुपो बहुच् पुरस्तात्तु' 'अव्ययसर्वनाम्नामकच् प्राक् टेः', 'कृञ्चानुप्रयुज्यते लिटि' इत्यलौकिकानामपि बहुजादीनां शास्त्रे प्रयोगनियमो दृश्यते, तत्र भवितव्यमेवाशङ्कया—किमेतत् प्रयोगनियमार्थम्, अथान्यार्थमित्यलमतिप्रसङ्गेन। तस्मात् पूर्वोक्त एव परीहारो युक्तः।

आदेशार्थमप्येतच्छक्यते न विज्ञातुम्। यदि ह्यादैचामनेन वृद्धिशब्द आदेशो विधीयेत, य एते निर्देशाः—'याति वाति द्राति प्साति' इति, यश्च 'रायो हलि' इति, यश्च 'नावो द्विगोः' इति, ते नोपपद्येरन्। अथ वृद्धिशब्दस्यादैच आदिश्येरन्, एवमपि 'इद् वृद्धौ' 'वृद्धिनिमित्तस्य च तद्धितस्य' इत्येवमादयो निर्देशा न

पदमञ्जरी

भ्यते 'ते प्राग्धातोः' 'कृञ्चानुप्रयुज्यते लिटि' इति ? नैवंविधेनोच्चारणेनारभ्यते। एवमप्यारभ्यते 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति ? नात्र केवलः प्रयोग एव नियम्यते, किन्तु आमादिकमपि विधीयते, अतः केवलस्य प्रयोगनियमस्य साक्षादुच्चारणेन कचिदप्यभावान्नायं प्रयोगनियमः। आदेशार्थमपि न भवति; स्थान्यर्थाभिधानसमर्थस्यैव ह्यादेशत्वम्। न च वृद्धिशब्द आदेचाम्, ते वा तस्यार्थमभिधातुं समर्थाः। निर्देशाच्च; यदयं 'सिचि वृद्धिः' 'यातिवातिद्राति,' 'रायः,' 'नाव;' इत्याह, ततो ज्ञायते—'न वृद्धिशब्द आदेचां ते वा तस्यादेशाः' इति। अथादैच्शब्दस्य वृद्धिशब्द आदेशः कस्मान्न भवति, न ह्यत्र किं चिल्लिङ्गमस्ति ? सत्यम्; अयं तु पक्षो न संभवत्येव, ऐच्छब्दो ह्यादिरन्त्येनेति संज्ञात्वेन विनियुक्तः कथमस्य स्वरूपस्य ग्रहणम्; अशब्दसंज्ञेति निषेधात्। एतैरेव लिङ्गैरागमार्थत्वं न भवति। षष्ठ्यभावाच्च, 'पूर्वौ तु ताभ्याम्' इति पञ्चम्याः षष्ठ्यर्थोऽवगम्यते। टित्त्वादिलिङ्गाभावाच्च, न हि तद्रहितः कश्चिदागमो दृष्टः। विशेषणत्वमपि न भवति, असंभवादप्रयोजनत्वाच्च। न ह्यस्ति

न्यासः

सम्भवेयुः। अत एवागमार्थमप्येतन्नोपपद्यते; न ह्यादैचां वृद्धिशब्द आगमे विहिते तस्य वा तेषु पूर्वोक्ता निर्देशा उपपद्यन्ते।

अन्यस्त्वाह—'आदेशविधाने स्थान्यादेशसम्बन्धे षष्ठ्या भवितव्यम्, आगमविधानेऽप्यवयवावयविसम्बन्धे; न चेह षष्ठी विद्यते, तस्मात् षष्ठ्या अभावान्नेदमादेशार्थम्, नाप्यागमार्थम्' इति, एतच्चासम्यक्; विनापि षष्ठ्या 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्', 'अनितेः' 'अन्तः' 'उभौ साभ्यासस्य' इत्यादेशविधानदर्शनात्। आगमविधानस्यापि 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इति षष्ठीमन्तरेणापि दर्शनात्। विशेषणविशेष्यभावप्रसिद्ध्यर्थमप्येतन्न सम्भाव्यते। तथा हि सम्भवव्यभिचारे च सति विशेषणविशेष्यभावो भवति, नीलोत्पलवत्। न चेहादैचां वृद्धिशब्दे तस्य वा तेषु सम्भवः। ननु च यथोत्पलशब्दः सर्वत्रोत्पलार्थे वर्त्तमानो नीलशब्देनार्थान्तराद्व्यवच्छिद्यत इति व्यवच्छिद्यमानो विशेष्यो भवति, नीलशब्दस्तु व्यवच्छिन्दन् विशेषणम्, तथानयोरपि यो व्यवच्छेद्यः स विशेष्यो भवति, यस्तु व्यवच्छेदकः स विशेषणमिति, नैतदस्ति; उभयोर्हि सार्थकत्वे सत्येतदुपपद्यते, नीलोत्पलशब्दवत्। न चादैचोऽर्थवन्तः। भवतु नामानयोर्विशेषणविशेष्यभावः, तथापि नैतत्सिद्ध्यर्थमिदं युक्तम्; निष्प्रयोजनत्वात्, तत् पुनः प्रकृतानुपयोगित्वात्। शब्दानुशासने हि शास्त्रे प्रकृते यन्नाम शब्दसंस्कारानुपयोगिवचनं तत्सर्वमप्रयोजनम्। शब्दसंस्कारानुपयोगित्वं त्वेतत्प्रतिपादितेन विशेषणविशेष्यभावेन वृद्धिशब्दस्यादैचां वा स्वरविशेषस्य वा रूपविशेषस्य वा संस्कारस्यासिद्धेः।

'वृद्धि'-शब्दः संज्ञात्वेन विधीयते प्रत्येकमादैचां वर्णानां सामान्येन

पदमञ्जरी

संभवो वृद्धिशब्दश्चासावादैच्छब्दश्चेति, नापि वर्द्धनक्रियाऽऽदैज् इति। एवं विशेषणे च प्रयोजनमपि नास्ति। एतेन तद्गुणाध्यारोपोऽपि निरस्तः। यथा हि सिंहो माणवक इति सिंहगुणा माणवके आरोप्यन्ते, नैवमत्र सम्भवः प्रयोजनं वाऽस्ति ; अतः पारिशेष्यात्संज्ञासंज्ञिसम्बन्ध एवेत्यालोच्याह—*वृद्धिशब्द इत्यादि*। विपर्ययस्तु न भवति—वृद्धिशब्दः संज्ञी, आदैचः संज्ञेति। स हि त्रिधा स्यात्—आदैजित्ययं शब्दः, आ ऐ औ इत्ययं समुदायः, ते वा प्रत्येकमिति। तत्रादैच्छब्दस्तावन्न सम्भवति; ऐजित्यस्य संज्ञाशब्दत्वात्, स्वरूपग्रहणासम्भवात्, गौरवाद्, अनावृत्तेश्च। आवर्त्तिन्यो हि संज्ञा भवन्ति, वृद्धिः शब्दश्चावर्त्तते; नादैच्छब्दः। नापि समुदायः, गौरवादनावृत्तेश्च। अस्तु तर्हि प्रत्येकम्, लाघवादावृत्तेश्च—'अष्टन आ विभक्तौ', 'पूतक्रतोरै च' 'मनोरौ वा' इति ? न; प्रयोजनमन्तरेणैकस्यानेकसंज्ञाकरणस्यायुक्तत्वात्, न ह्ययं वृद्धिशब्दः सहस्रेण नामभिः स्तोतव्यः। शब्देनार्थस्य संज्ञात्वं मा विज्ञायीति शब्दग्रहणम्, एतच्चार्थे व्यवहारासम्भवाल्लभ्यते। तदिह वृद्धिशब्दः संज्ञात्वेन विधीयत इति समुदायेनानर्थकादिपक्षनिरासः। वृद्धिशब्द इत्यनेन विपर्ययनिरासः। वृद्धिशब्दः संज्ञा, न पुनरादैच्छब्द इति वचनव्यक्त्या शब्दग्रहणेनार्थनिरासः—वृद्धिशब्दः संज्ञा न पुनरर्थं इति। यत्र समुदायस्य कार्यमिच्छति करोति तत्र प्रयत्नम्—'उभे अभ्यस्तम्' इति। तत्र ह्युभेग्रहणं समुदितप्रतिपत्त्यर्थम्। अन्वर्थां वा महतीं संज्ञां करोति—'हलोऽनन्तराः संयोगः' इति। इह तु महासंज्ञाकरणं मङ्गलार्थम्। अत एव प्रथममुच्चारणम्; अन्यथा हि सतः कार्यिणः कार्येण भवितव्यमिति 'अदेङ् गुणः' इत्यादिवन्निर्दिश्येत। अतो यत्नाभावात्प्रत्येकमेव संज्ञा। किञ्च—लौकिकप्रयोगे व्यवस्थितानामादैचां संज्ञया भवितव्यम्। न च समुदायस्य क्वचित्प्रयोगः, अतोऽसंभवादपि प्रत्येकमेव संज्ञा। लिङ्गाच्च—किं लिङ्गम् ? 'प्रस्थे वृद्ध-

न्यासः

विशेषणविशेष्यभाव एव तेषां संस्कार इति चेद्; यद्येवम्, अत्यल्पमिदमुच्यते 'वृद्धिरादैच्' इति, नीलोत्पलमित्याद्यपि हि वक्तव्यम्—नीलोत्पलादिशब्दानां विशेषणविशेष्यभावप्रसिद्धये, न चोक्तम्, अतो नैष संस्कारोऽभिमत इति नास्य तादर्थ्यं सम्भाव्यते।

ननु तुल्यविभक्तिकानां तद्गुणसमाध्यारोपोऽपि दृष्टः, तद्यथा—सिंहो माणवक इति, तस्मात् तदर्थमेतद् भविष्यतीति यत्पक्षान्तरमेके परिकल्पयाम्बभूवुः, तदर्थमप्येतन्न भवति, तद्गुणसमाध्यारोपस्य सतोऽप्यत्र प्रकृतानुपयोगित्वेनानर्थकत्वात्। तस्मात् पारिशेष्यात् संज्ञासंज्ञिसम्बन्धार्थमेवैतदित्यालोच्याह—वृद्धिशब्दः संज्ञात्वेनेत्यादि।

पदमञ्जरी

मकर्व्यादीनाम्' 'मालादीनां च' इति । इदं हि 'मालाप्रस्थः' इत्यादाववृद्धमिति पर्युदासे प्राप्ते वचनम्, अतः प्रत्येकमेव संज्ञा तदाह—*प्रत्येकमिति* ॥

तत्रापि त्रयः प्रकाराः—लुगादिसंज्ञावत्तद्भावितानामेव, टिसंज्ञावद्वाऽतद्भावितानामेव, अनुनासिकादिसंज्ञावदुभयेषां वेति । तत्र यदि तद्भावितानामेव—ये वृद्धिसंज्ञया भाव्यन्ते, तेषामेव स्यात्, शालीयो मालीय इति छो न स्यात्; आम्रमयं रैकुलमयम्—वृद्धलक्षणो मयण् न स्यात्; आम्रगुप्तायनिः—'उदीचां वृद्धात्' इति फिञ् न स्यात् । अथातद्भावितानामेव—गार्गीयः, ऐतिकायनीयः, औपगवीयः – छो न स्यात् ; अतो दोषदर्शनादगृह्यमाणविशेषत्वाच्चोभयेषां संज्ञेत्याह—*सामान्येनेति* । आकारोऽनण्त्वादेव न भिन्नकालानां ग्राहक इति न तन्निवृत्त्यर्थं तपरत्वम्, नापि गुणान्तरयुक्तानां ग्रहणार्थम् । अभेदकत्वाच्च गुणानाम्, लोके हि मुण्डेनापि चौर्ये कृते संजातकेशोऽपि प्रत्यभिज्ञाय निगृह्यते । तथा 'अड्डुदात्तः' इत्युदात्तवचनं लिङ्गम्, अन्यथा ह्युदात्त-

न्यासः

भवतु नाम पारिशेष्यात् तदर्थम् , एतत् कुतो लभ्यते—'वृद्धिशब्दः संज्ञा, आदैचः संज्ञिनः' इति ? विपर्ययः कस्मान्न भवति—'आदैचः संज्ञा, वृद्धिशब्दः संज्ञी' इति ? नार्हति विपर्ययो भवितुम् । तथा हि—लघ्वर्थत्वात् संज्ञाकरणस्य, यस्मिन्नुच्चार्यमाणे प्रदेशेषु लाघवं भवति तस्य संज्ञार्थत्वेन भाव्यम् । वृद्धिशब्दे च सविभक्तिकेऽप्युच्चार्यमाणे लाघवं भवति, नादैक्षु; यस्माद् वृद्धिशब्द उच्चार्यमाणे चतस्रो मात्रा भवन्ति, आदैक्षु तु पञ्च । न चादैचां प्रत्येकं संज्ञाभावाल्लाघवं भवतीति शक्यं परिकल्पयितुम् ; प्रयोजनविशेषमन्तरेणैकस्यानेकसंज्ञाविधानस्य निष्फलत्वात् । किञ्चावर्त्तिन्यः संज्ञा भवन्ति । वृद्धिशब्दश्चावर्त्तते, नादैच्छब्दः, तस्मान्न भवति विपर्ययः । वृद्धिशब्द इति । शब्दग्रहणमर्थव्यवच्छेदार्थम् । असति हि तस्मिञ् शब्दादर्थावगतेरर्थस्यैव संज्ञात्वं विज्ञायेत । यद्यपि प्रागेव संज्ञा विहिता, तथापि शिष्यप्रशिष्यप्रबन्धाद्युपरमाद् विधीयत इति वर्त्तमानप्रत्ययेन निर्देशः । यत्र समुदायस्य कार्यमिच्छति तत्र 'उभे' पदग्रहणं करोति, यथा—'उभे अभ्यस्तम्' इति । अन्वर्थां वा महतीं संज्ञाम्—'हलोऽनन्तराः संयोगः' इति । तत्र हि महती संज्ञैवमर्था क्रियते—समुदायस्यैषा संज्ञा यथा स्यादिति । एतच्चोत्तरत्र व्यक्तीकरिष्यामः । इह तु न किञ्चित् तथाविधं वचनमस्ति; यतः समुदायस्यैषा संज्ञा स्यात् । तस्मादेकैकस्यैषा संज्ञेति मनसि कृत्वाह—प्रत्येकमिति । ननु चेहापि लाघवार्थमेकाक्षरायां संज्ञायां कर्त्तव्यायां वृद्धिरिति महत्याः संज्ञायाः करणं समुदायस्य संज्ञा यथा स्यादित्येवमर्थम् , नैतदस्ति; मङ्गलार्थत्वादस्याः संज्ञायाः । अत एवास्याः प्रागुच्चारणम् ; अन्यथा संज्ञायाः सतः कार्यिणः कार्येण भवितव्यमिति, यथा 'अदेङ्गुणः' इत्यादौ पूर्वं संज्ञी निर्दिष्टः, तथेहापि निर्दिशेत् । आकारस्य गुणान्त-

तद्भावितानाम्, अतद्भावितानाञ्च। तपकरणमैजर्थम्—'तादपि परस्त-

**पदमञ्जरी**

गुणमेवाटमुच्चारयेत्। अतोऽनर्थकं तपरकरणमित्यत आह—*तपरकरणमिति*। तश्चासौ परश्च तपरः, तस्य करणमुच्चारणम्, आकारात्परस्य तकारस्योच्चारणमित्यर्थः। अथ वा-तः परो यस्मादिति तद्गुणसंविज्ञानो बहुव्रीहिः, तकारसहितस्याकारस्योच्चारणमित्यर्थः। *ऐजर्थमिति*। ऐचोरर्थः प्रयोजनं यस्य तत्तथोक्तम्। 'तपरस्तत्कालस्य' इत्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः। तत्कथं तपरकरणमैजर्थमित्याशङ्क्य पञ्चमीसमासोऽपि तत्राश्रित इति दर्शयति—*तादपि पर इति*। इतिकरणो हेतौ। यस्मात् तादपि परस्तस्मादैजर्थं इति।

**न्यासः**

रयुक्तयोश्चैचोः प्रत्याहारेऽसन्निवेशान्नामी वर्णा इति कस्यचिन् मन्दधियो भ्रान्तिः स्यात्, अतस्तन्निराकरणायाह—वर्णानामित्यादि। प्रत्यासत्तेस्तद्भावितानामेवैषां संज्ञा स्यादिति कस्यचिद् विपर्ययः स्यात्, अतस्तमपाकर्त्तुमाह—सामान्येनेति। व्याप्तेर्न्यायादित्यभिप्रायः। सामान्येनेत्यस्यार्थं विस्पष्टीकर्तुमाह—तद्भावितानामित्यादि। ते तद्भाविताः, ये वृद्धिशब्देनोत्पादिताः। ततोऽन्येऽतद्भाविताः। आदिति तपरकरणम्—'तपरस्तत्कालस्य' इति गुणान्तरभिन्नानामपि तुल्यकालानां ग्रहणार्थं वा स्याद्? भिन्नकालानां ग्रहणनिवृत्त्यर्थं वा? तत्र पूर्वः पक्षस्तावन्नोपपद्यते; अभेदकत्वादिहोदात्तादीनां, शास्त्रे गुणानाम्। कुत एतत्· 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्युदात्तग्रहणात्; अन्यथा ह्युदात्तगुणयुक्तमेवाटमुच्चारयेत्। द्वितीयोऽपि नोपपद्यते, यदि ह्याकारः सवर्णानां ग्राहकः स्यात्; ततस्तेन भिन्नकालस्याप्यवर्णस्य ग्रहणे सति तस्यापि संज्ञा मा भूदिति भिन्नकालानां ग्रहणनिवृत्त्यर्थं तपरकरणमुपपद्यते। न चासौ सवर्णानां ग्राहकः; अनण्त्वात्, तस्य पुनरक्षरसमाम्नायेऽसन्निवेशात्। तस्मादनर्थकं तपरकरणम्। ततो न कर्त्तव्यमेवेत्यत आह—तपरकरणमित्यादि। एचोरर्थः प्रयोजनं यस्य तत् तथोक्तम्। ननु च जातौ पदार्थे प्लुतस्यापि ग्रहणं भवति, तत्राप्यवर्णजातेः समवायात्; तत्रासति तपरकरणे तस्यापि संज्ञा स्यात्, तस्मात् तन्निवृत्तये तपरकरणं भवदाकारार्थमप्युपपद्यत एव, तत् किमुच्यत एजर्थमिति? एवं मन्यते—जातिपक्षसमाश्रयणेऽपि हि दीर्घोच्चारणसामर्थ्याद् द्विमात्रा एवावर्णव्यक्तयः समाश्रिता इति गम्यते, इतरथा हि लाघवार्थम् 'अद्' इत्येवाभिदध्यात्। न च ह्रस्वनिवृत्त्यर्थं दीर्घोच्चारणमिति शक्यते परिकल्पयितुम्; दीर्घोच्चारणेऽपि ह्रस्वग्रहणं प्राप्नोत्येव; तत्राप्यवर्णजातेः सम्भवादिति। न चासन्देहार्थम् 'आद्' इत्युक्तम्; वर्णान्तरासाधारणत्वात्। असंहितया वा सन्देहाभावादिति। ननु च 'तपरस्तत्कालस्य' इत्यत्र तः परो यस्मादिति बहुव्रीहिराश्रितः, नचात्रैच् तपरः तत् कथं तपरकरणमैजर्थं भवतीत्यत आह—तादपि

परः' इति, खट्वैडकादिषु त्रिमात्रचतुर्मात्रप्रसङ्गनिवृत्तये । आश्वलायनः । ऐतिकायनः । औपगवः । औपमन्यवः । शालीयः, मालीयः ।

**पदमञ्जरी**

ऐजर्थत्वमेव प्रकटयति—*खट्वैलकादिष्विति* । असति तपरकरणे त्रिमात्रचतुर्मात्रयोरप्यैचोः सवर्णग्रहणेन ग्रहणाद् वृद्धिसंज्ञा स्यात्, ततश्च वृक्षैलकः, वृक्षौदनः, खट्वैलका, खट्वौदन इति त्रिमात्रचतुर्मात्रस्थानिनोस्त्रिमात्रचतुर्मात्रावेवैकारौकारौ स्यातामिति तन्निवृत्त्यर्थं तपरकरणम् । *आश्वलायन* इत्यादीनि तद्भाविताना-माकारादीनां क्रमेण रूपोदाहरणानि । अश्वलेतिकशब्दौ नडादी । उपमन्युशब्दो बिदादिः । लक्षणस्य बहुविषयत्वसूचनार्थं चतुर्थस्योदाहरणस्योपन्यासः । आकारस्यातद्भावितस्य कार्योदाहरणमाह—*शालीयः, मालीय इति* । ऐकारौकारयोस्त्वतद्भावितयोरुदाहरणं रैकुलमयं नौकुलमयमिति, वृद्धलक्षणो मयड् भवति ॥

**न्यासः**

**परस्तपर इति** । न केवलं तः परो यस्मात् स तपर इति, अपि तु तादपि यः परः सोऽपि तपर इति 'अपि' शब्देन दर्शयति । एतदुक्तं भवति—न केवलं बहुव्रीहिरेव तत्राश्रीयते, किं तर्हि ? पञ्चमीतत्पुरुषोऽपि । यथा चैतदुभयमाश्रीयते तथा तत्रैवोपपादयिष्यामः । इतिकरणो हेतौ—यत एवं तादपि परस्तपरः, तेन तपरकरणमैजर्थमित्यर्थः । **खट्वैडकादिषु** इत्यादिना तदेवैजर्थत्वं तपरकरणस्य स्पष्टीकरोति । वृक्ष एलका वृक्षैलका । अक्रियमाणे ह्यत्र तपरकरणे त्रिमात्रिकस्याप्याकारैकारसमुदायस्य स्थाने 'वृद्धिरेचि' इति वृद्धिरान्तरतम्यात् त्रिमात्रिक एवैकारः स्याद्, यदि तस्यापि वृद्धिसंज्ञा स्यात् । खट्वा + ओदनं खट्वौदनम्, खट्वा + एलका खट्वैलकेत्यत्रापि पूर्वोत्तरसमुदाययोश्चतुर्मात्रयोश्चतुर्मात्रावेकारैकारौ स्याताम्, तन्मा भूदेष दोष इति त्रिमात्रचतुर्मात्राणामैचां वृद्धिसंज्ञानिवृत्तये तपरकरणं क्रियते । **आश्वलायनः, ऐतिकायन इति** । अश्वलेतिकशब्दाभ्यां 'नडादिभ्यः फक्' । 'यस्येति च' इति लोपः । 'किति च' इत्यादिवृद्धिः । **औपगव इति** । उपगुशब्दात् 'प्राग्दीव्यतोऽण्' । **औपमन्यव इति** । उपमन्युशब्दाद् 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञ् । उभयत्रापि 'ओर्गुणः', अवादेशः । 'तद्धितेष्वचामादेः' इति वृद्धिः । एतानि चत्वार्यपि तद्भावितोदाहरणानि । ननु येऽत्र त्रयः संज्ञिनस्तेषामाद्यैस्त्रिभिर्विषयो दर्शितः, किमर्थश्चतुर्थोपन्यासः ? केचिदाहुः—'वृद्धिनिमित्तभेदात् ; आद्ययोरुदाहरणयोः कित्तद्धितो वृद्धेर्निमित्तम्, तृतीयेऽपि णित्, चतुर्थेऽपि ञित्' इति, एतच्चायुक्तम् ; तथा हि 'इको गुणवृद्धी' इत्यत्र अकार्षीदित्युदाहृत्य अहार्षीदित्युदाहृतम्, न च तत्र वृद्धिनिमित्तभेदोऽस्ति । तथा 'न धातुलोप आर्धधातुके' इत्यत्र 'लोलुवः' इत्युदाहृत्य 'पोपुवः, मरीमृजः' इत्यधिकोदाहरणोपन्यासः कृतः । न च तत्र लोपनिमित्तभेदः;

वृद्धिप्रदेशाः—'सिचि वृद्धिः परस्मैपदेषु' इत्येवमादयः ॥

## अदेङ् गुणः ॥ २ ॥

'गुण' शब्दः संज्ञात्वेन विधीयते प्रत्येकमदेङां वर्णानां सामान्येन तद्भावितानाम्, अतद्भावितानां च। तपरकरणं त्विह सर्वार्थम्।

### पदमञ्जरी

*अदेङ् गुणः* ॥ पूर्वेण तुल्यमेतत्। *तपरकरणं त्विह सर्वार्थमिति*। न तु पूर्ववदन्यतरार्थमिति तुशब्दस्यार्थः। असति हि तस्मिन् दीर्घप्लुतयोरपि गुणसंज्ञा स्यात्; ततश्च तरतीति कदाचिदकारः स्यात्, कदाचिदाकारः, रपरत्वे कृत एकस्याध्यर्धमात्रत्वादपरस्यार्धतृतीयमात्रत्वात्। न चाकारस्य वृद्धिसंज्ञा बाधिका; एकसंज्ञाधिकारादन्यत्र संज्ञासमावेशात्। एङश्च त्रिमात्रचतुर्मात्रस्य गुणसंज्ञायाम्—रथेषा, खट्वेषा, अश्वोढः, वडवोढ इति त्रिमात्रचतुर्मात्रौ स्याताम्। *तरितेत्या-*

### न्यासः

प्रतिषेधनिमित्तभेदो वा अधिकोदाहरणोपन्यासस्य हेतुर्विद्यते। प्रायेणान्येष्वपि च सामान्यलक्षणेषु विनापि निमित्तभेदेनाधिकोदाहरणोपन्यास उपलभ्यते।

योऽप्याह—'औपगव इत्यनेनैव औकारस्य विषये दर्शितेऽपि स्वरभेदादौपमन्यव इत्येतदधिकमुदाहरणमुपन्यस्तम्' इति, तस्यापि तदयुक्तम्; अत एवानन्तरोक्ताद्धेतोर्वेदितव्यम्। यदि निमित्तभेदः, स्वरभेदो वा अधिकोदाहरणस्योपन्यासस्य हेतुः स्यादाकारैकारयोरधिकमुपन्यस्तं स्यात्। प्रचुरविषयसूचनार्थस्तु लक्षणस्य सर्वत्राधिकोदाहरणोपन्यासो वेदितव्यः। शालीयः, मालीय इति। अतद्भावितस्योदाहरणे। अत्र हि वृद्धिसंज्ञायां 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति वृद्धसंज्ञाफलं छप्रत्ययोपन्यासस्तस्या एव फलभूताया अभिव्यक्त्यर्थः। वृद्धसंज्ञायां हि सत्याम् 'वृद्धाच्छः' इति जातादावर्थे च्छो विधीयते। ऐकारौकारयोस्त्वतद्भावितयोरुदाहरणं नात्र दर्शितम्, एतदनुसारेणैव गम्यमानत्वात्। आकारस्यातद्भावितस्य वृद्धिसंज्ञायाः कार्ये दर्शिते, तयोरपि तदेव कार्यमिति तन्मुखेनैव गम्यत एव। के पुनस्तयोरुदाहरणे? रैमयम्, नौमयमिति। अत्रैकारौकारयोर्वृद्धिसंज्ञायां सत्यां पूर्ववद् वृद्धसंज्ञा। तस्याञ्च सत्यां रायो विकारः, नावो विकार इति 'नित्यं वृद्धशरादिभ्यः' इति मयड् भवति।

अदेङ्गुणः ॥ तपरकरणं त्विह सर्वार्थमिति। सर्वस्मिन्नर्थः प्रयोजनं यस्य तत् तथोक्तम्। 'तु' शब्दः पूर्वस्माद् विशेषं दर्शयति। तत्र ह्यैजर्थमेव, इह तु सर्वार्थम्—अकारार्थमेङर्थमपि। असति हि तपरकरणे अदेङामण्त्वात् सवर्णानां ग्रहणे सति भिन्नकालानामप्येषा संज्ञा स्यात्। ततश्च तरिता इत्यत्रान्तरतम्याद्दीर्घस्य दीर्घ एव गुणः स्यात्। ननु च वृद्धिसंज्ञा गुणसंज्ञाया बाधिका भविष्यति, तत् कुतोऽयं प्रसङ्गः? नैतदस्ति; एकसंज्ञाधिकारे हि संज्ञया संज्ञान्तरं बाध्यते, न चात्रैकसंज्ञाधिकारः।

तरिता । चेता । स्तोता । पचन्ति[१] । जयन्ति[१] । अहं पचे ।

गुणप्रदेशाः—'मिदेर्गुणः' इत्येवमादयः ॥

पदमञ्जरी

*दीनि* तद्भावितानामदेङां क्रमेण रूपोदाहरणानि । *पचन्ति जयन्तीत्यकारस्य* कार्योदाहरणे । अत्रान्त्यकारे परतः शबकारस्य 'अतो गुणे' इति पररूपं भवति । एकारस्यातद्भावितस्योदाहरणम्—*अहं पचे इति* । ओकारस्य तु न संभवति ॥

न्यासः

स्यादेतत्—असत्यप्येकसंज्ञाधिकारे यथा 'जीवति तु वंश्ये युवा' इति गोत्रसंज्ञा युवसंज्ञया बाध्यते, यथा च 'लिट् च', 'लिङाशिषि' इति चार्धधातुकसंज्ञया सार्वधातुकसंज्ञा बाध्यते; तथा गुणसंज्ञा वृद्धिसंज्ञया बाधिष्यते इति ? अयुक्तमेतत्; युवसंज्ञाविधौ तुग्रहणं नियमार्थं क्रियते। ततो युक्तं यद् युवसंज्ञया गोत्रसंज्ञा बाध्यत इति, आर्धधातुकसंज्ञयापि यत् सार्वधातुकसंज्ञा बाध्यते तदपि युक्तमेव; 'छन्दस्युभयथा' इति वचनात् । यदि सार्वधातुकार्धधातुकसंज्ञयोः समावेशः स्यात्, न बाध्यबाधकभावः, तदा 'छन्दस्युभयथा' इति वचनमपार्थकं स्यात् । इह तु न किञ्चित् तथाविधं निबन्धनमस्ति, यतो वृद्धिसंज्ञया गुणसंज्ञा बाध्यते । अथापि कथञ्चिद् बाध्येत, एवमपि त्रिमात्रिकस्यापि गुणसंज्ञा स्यादेव, न हि सा तया शक्या बाधितुम्; तस्या अतद्विषयत्वात् । त्रिमात्रस्यापि गुणसंज्ञायां सत्यां त्रिमात्रोऽपि गुणः प्रसज्येत । ऋकारस्य हि कालतो यथैकमात्रिकोऽकारोऽन्तरतमो न संभवति, तथा त्रिमात्रोऽपि, तत् कुत एतल्लभ्यते ? ह्रस्वेनैवास्य गुणेन भवितव्यम्, न हि त्रिमात्रेणाकारेणेति । किञ्च यदि भिन्नकालानामपि गुणसंज्ञा[२] स्यात्, खट्वा+इन्द्रः=खट्वेन्द्रः, खट्वा+उर्वी=खट्वोर्वीत्यत्र त्रिमात्रत्वात् पूर्वोत्तरसमुदायात्मनः स्थानिनः 'आद् गुणः' इति त्रिमात्रो गुणः स्यात् । खट्वा+ईषा=खट्वेषा, खट्वा+ऊढा=खट्वोढेत्यत्र चतुर्मात्रत्वात् चतुर्मात्रः । तस्मात् सर्वार्थं तपकरणं कर्त्तव्यम् । तरितेत्यादि । 'तॄ प्लवनतरणयोः', 'चिञ् चयने', 'ष्टुञ् स्तुतौ'—एभ्यः 'ण्वुल्तृचौ' इति तृच् । 'आर्धधातुकस्येड् वलादेः' इतीट् । 'सार्वधातुकार्धधातुकयोः' इति गुणः, सुः, 'ऋदुशनस्' इत्यादिना अनङ्, 'सर्वनामस्थाने च' इति दीर्घः । एतानि त्रीणि यथाक्रममदेङां तद्भावितानामुदाहरणानि । पठन्ति, पठन् इत्यकारस्यातद्भावितस्योदाहरणे । अत्रान्त्याकारस्य गुणसंज्ञायाम् 'अतो गुणे' पररूपत्वं भवति । पठन्निति शत्रन्तमेतत् । एकारस्यातद्भावितस्य कार्योदाहरणम्—अहं पचे इत्यादि । ओकारस्यातद्भावितस्य तत्र सम्भवतीति न प्रदर्श्यते ।

---

१-१. 'पठन्ति, पठन्' इति न्याससम्मतः पाठः । २. 'गुणत्वं संज्ञा' इति मुद्रितः पाठः ।

## इको गुणवृद्धी ॥ ३ ॥

परिभाषेयं स्थानिनियमार्था । अनियमप्रसङ्गे नियमो विधीयते ।

### पदमञ्जरी

इको गुणवृद्धी ॥ *परिभाषेयमिति* । नाधिकारः; अस्वरितत्वात्, असंयुज्यानिर्देशाच्च । अधिकारे हि 'इको गुणवृद्धी न धातुलोपः' इति संयुज्यैव निर्दिशेत् । नापि विधिः, 'इकः स्थाने गुणवृद्धी भवतः' इति लक्षणान्तरेण विधास्यमानत्वात् । ननु यदायं स्वतन्त्रो विधिस्तदा तेष्विक इत्यस्योपस्थापकाभावाद् यातेत्यादावनिकोऽपि विधिः स्यात्, इह तु सार्वधातुकाद्यभावेऽपि दधि मध्वित्यादौ विधिरस्तु ? एवं तर्हि गुणवृद्ध्यधिकारे पुनर्गुणवृद्धिग्रहणान्न विधिः । यद्यपि प्रकृतं गुणवृद्धिग्रहणं संज्ञापरम्, इह त्वनुवृत्तिसामर्थ्यात्संज्ञिपरं भविष्यति । 'अदेङ् गुणः' इत्यत्र चानुवर्त्तमानमपि वृद्धिग्रहणं न संबध्यते, अन्यवचनाच्चकाराकरणाच्च । अन्या हि तत्र गुणसंज्ञोच्यते, चकारश्च न क्रियते; अतो विधिपक्षे पुनर्गुणवृद्धिग्रहणं न कर्त्तव्यम् । अत एवाधिकारोऽपि न भवति । परिभाषायां[1] तु तस्यां विशिष्टविषयत्वसिद्धये कर्त्तव्यं तदिति वक्ष्यामः । अतः परिभाषेयम् ।

### न्यासः

इको गुणवृद्धी ॥ परिभाषेयमिति । नाधिकारः; अस्वरितत्वात् । नापि गुणवृद्ध्योर्विधायकं लक्षणम् ; लक्षणान्तरेण तयोर्विधास्यमानत्वात् । स्थानिनियमार्थेति । स्थानिनि नियमः स्थानिनियमः, स्थान्यन्तरव्यवच्छेदेनैकत्र प्रवर्त्तनम् , सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता । अनियमप्रसङ्गे नियमो विधीयत इति । यत्र साक्षात् स्थानी न निर्दिष्टः 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धिः' इत्यादौ, तत्रानियमे प्रसक्ते नियममेषां करोति—इक एव नान्यस्येति । अतः स एवास्या विषयो वेदितव्यः; न तु यत्र साक्षात् स्थानी निर्दिश्यते सोऽपि, यथा—'ओर्गुणः', 'अत उपधायाः' इत्यादिः । तत्र ह्यनियमस्य प्राप्तिरेव नास्ति । लिङ्गवती चेयं परिभाषा, लिङ्गं चास्या गुणवृद्धिग्रहणम् , तत्रोपतिष्ठते । तथा च द्वे षष्ठ्यौ प्रादुर्भवतः—'इकः' इत्येका षष्ठी, 'मिदेर्गुणः' इत्येवमादिका द्वितीया; तत्र कामचाराद् यथेष्टं सिध्यति, तयोर्विशेषणविशेष्यभावः क्रियते । 'मिदेः' इत्यत्रान्त इग् न सम्भवतीति तस्याङ्गविशेषणत्वं नोपपद्यते । तस्मादत्राङ्गेनेगेव विशिष्यते—मिदेरङ्गस्य य इगिति । तेन स्थानषष्ठ्यभावादलोऽन्त्यस्यानुपस्थाने सति यत्र तत्रस्थस्येको गुणः सिद्धो भवति । 'सार्वधातुकार्धधातुकयोः' इत्यादौ त्वङ्गस्य इगन्तत्वं सम्भवति । तेन चाङ्गे विशिष्यमाणे तदन्तविधौ सतीष्टं सिध्यति । तस्मादिकैवाङ्गं विशिष्यते—इगन्तस्याङ्गस्येति । एवञ्च सत्यस्याः स्थानषष्ठीत्वाद् 'अलोऽन्त्यस्य' इत्येतदुपतिष्ठते, तेनेगन्तस्यैवाङ्गस्य गुणवृद्धी भवतः, नेत-

1. 'परिभाषात्वे' इति पा० ।

वृद्धिगुणौ स्वसंज्ञया शिष्यमाणाविक एव स्थाने वेदितव्यौ[1] ॥ वक्ष्यति

पदमञ्जरी

योगो वायं व्यपदिश्येत, सूत्रं वा, तत्कथम् 'इयम्' इति स्त्रीलिङ्गनिर्देशः ? उच्यते—यथायं योगः, यथा वा सूत्रमिदम्, एवं परिभाषापि, तत्सामानाधिकरण्यादियमिति निर्देशः। ननु परिभाषात्वं विधित्सितम्, इदंशब्दस्तु उद्देशकः, सिद्धरूपस्य चोद्देशः, सूत्ररूपता योगरूपता वा सिद्धेति पुनरप्युद्देशकस्य स्त्रीलिङ्गानुपपत्तिः। कश्चिदत्र परिभाषेयमित्यनूद्य स्थानिनियमार्थता विधीयते—'येयं परिभाषा सा स्थानिनियमार्थेति, न तु परिभाषारूपता विधीयते' इत्याह, स वाच्यः—'असिद्धं परिभाषात्वं कथमनूद्यते' इति। अव्यापकश्चायं परिहारः 'समर्थः पदविधिः' इत्यादौ। तत्र परिभाषेयमित्येतावच्छ्रूयते, न पुनरेतदर्थेति। वयं तु ब्रूमः—[2]निर्दिश्यमानप्रतिनिर्दिश्यमानयोरैक्यमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गभाञ्जि भवन्ति। तत्र यथा 'अणौ यत्कर्म णौ चेत्स कर्त्ता' इति कर्माकारपरामर्शिनोऽपि तच्छब्दस्य विधीयमानस्य कर्त्राकारस्य लिङ्गं भवति, तद्वदिहापि सूत्रमेवोद्दिश्यत इदंशब्दस्य विधीयमानपरिभाषाकारस्य लिङ्गं भविष्यति। *स्थानिनियमार्थेति*। इगाख्ये स्थानिनि गुणवृद्ध्योर्नियमोऽर्थः=प्रयोजनं यस्याः सा तथोक्ता। 'द्वन्द्वे घि' इति वृद्धिशब्दस्य पूर्वनिपातः प्राप्तः सूत्रनिर्देशेन न नित्यं बाध्यते; 'धर्मादिषु उभयम्' इति वचनादिति सूचयन्नाह—*वृद्धिगुणावित्यादि*।

किं पुनरनेन ग्रन्थेनोच्यते ? ननु नियमरूपेणास्य सूत्रस्य प्रवृत्तिरिति; यथा 'एच इग्घ्रस्वादेशे' ह्रस्व आदिश्यमान एच इगेवेति। यद्येवम्, अनियमप्रसङ्गे नियम इति 'सार्वधातुकार्धधातुकयोः', 'सिचि वृद्धिः' इत्यत्रैव स्यात्, अत्र ह्यसत्यस्मिन्योगेऽलोऽन्त्यस्य भवन्तौ वृद्धिगुणावनन्त्यस्याविशेषितत्वादिकश्चानिकश्च प्राप्नुतः, न तु मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वपिऽअत्रालो; न्त्यस्येत्यनिक एव प्रसङ्गः। अथ सर्ववाक्यानां सावधारणत्वात् प्राप्तमेवावधारणमिक एवेत्येवशब्देनाभिधीयते, न पुनर्नियमोऽनेन प्रदर्श्यते; यथा—'तपस्तपःकर्मकस्यैव' इति। अतो विधिरूपेणैवास्य व्यापारो विवक्षितः, परिभाषात्वाच्च गुणवृद्धिविधेः संस्कारकं विध्यन्तरमिदम्, यथा 'इद्गोण्याः' इत्यादेः 'अलोऽन्त्यस्य' इत्ययमिति पक्षः। ततो नाप्राप्तायामलोऽन्त्यपरिभाषायामियमारभ्यमाणा तस्या बाधिका स्यात्। ततश्च यत्रैषा, न तत्र सा प्रवर्त्ततेति जुसि गुणो यथेह भवति—

न्यासः

रस्य। स्वसंज्ञयेति। अत्र वक्ष्यमाणोऽभिप्रायः। इक एव स्थाने इति। यदर्थेयं परिभाषा तस्य नियमस्य स्वरूपं दर्शयति—अकार्षीदिति। 'डुकृञ् करणे', लुङ्, च्लेः सिच्,

---

1. 'भवत इति वेदितव्यम्' इति पा०। २ 'उद्दिश्यमान' इति पा०।

पदमञ्जरी

अबिभयुः अबिभरुरिति, एवमनेनिजुः पर्यवेविषुरत्रापि प्राप्नोति। 'सार्वधातुकार्धधातुकयोः' यथेह भवति चेता स्तोतेति; एवमीहिता, ऊहिता, उम्भिता अत्रापि प्राप्नोति।

अथ तु सामान्यविशेषयोरसम्भवे बाध्यबाधकभावः; अस्ति चात्र सम्भवो यद् अलोऽन्त्यस्य गुणवृद्धी स्याताम् इकश्च, ततः 'जुसि च' इत्यादौ गुणवृद्धिलिङ्गादिक्परिभाषाप्युपतिष्ठेत, अङ्गस्येति स्थानषष्ठीनिर्देशात्, 'अलोऽन्त्यस्य' इत्येषापि। तत्र च न समुच्चयोऽङ्गान्त्यस्यानिकोऽपि गुणो भवति, तदवयवस्य चेकोऽनन्त्यस्यापीति। नापि विकल्पः; कदाचिदङ्गान्त्यस्यानिकोऽपि, कदाचित्तदवयवस्येकोऽनन्त्यस्यापीति, एकत्वात् षष्ठ्यर्थस्यैक एव हि सकृच्छ्रुताया अङ्गस्येति षष्ठ्या अर्थः—स्थानेयोगो वा अवयवयोगो वा, न द्वौ समुच्चितौ नापि विकल्पितौ। तत्र यद्यङ्गस्येत्येतत्पूर्वमिकः इत्यनेन वैयधिकरण्येन संबध्येत—'अङ्गस्य य इक्, तस्य गुणः' इति, ततोऽलोऽन्त्यस्येत्येतदनन्वितं स्यात्। अतः पूर्वमलोन्त्यस्येत्यनेन संबध्यते, स चान्त्येका विशेष्यते 'अङ्गान्त्यस्येको गुणः' इति। यद्वा—इकाऽङ्गं विशिष्यते, विशेषणेन च तदन्तविधिः— इगन्तस्याङ्गस्येति। एवमपि हि स्थानषष्ठीत्वानपायादलान्त्यस्येत्यव्याहतप्रसरं सर्वथाङ्गान्त्यस्येको गुण इति जुसि सार्वधातुकार्धधातुकगुणे न कश्चिद्दोषः। मिदादिषु पूर्वोक्तेन प्रकारेण द्वयोरन्वयासंभवादन्यतरद्धातव्यम्। तत्राविशेषादुभयमपि त्यज्येत, उच्येते च वृद्धिगुणौ 'मृजेर्वृद्धिः' 'मिदेर्गुणः' इति, तौ सर्वादेशौ स्याताम्। अतो विधिरूपेण नियमरूपेण वास्य सूत्रस्य व्यापारो नाभ्युपगन्तव्यः, किं तर्हि ? अनेन क्रियते पदोपस्थापनम्; यत्र ब्रूयाद् गुणो भवतीति, वृद्धिर्भवतीति; तत्रेक इत्येतत् षष्ठ्यन्तं पदमुपतिष्ठतामिति। 'अलोऽन्त्यस्य' इत्यस्य तु वाक्यभावः। एवं हि विज्ञायमाने 'सिचि वृद्धिः' इत्यादौ यत्रान्त्य इक् संभवति, तत्रेक इत्येतेनोपस्थितेनाङ्गे विशेषिते तदन्तविधौ सतीगन्ताङ्गस्य गुण इति वाक्यव्यापारे परिनिष्ठिते पश्चादलोऽन्त्यस्येत्येतदिगन्तस्य प्राप्तं गुणं ततोऽपकृष्याङ्गान्त्यस्य विधत्ते, न त्विक इत्यस्योपस्थानवेलायामुपतिष्ठते। 'मिदेर्गुणः' इत्यादौ तु यत्रान्त्य इङ् न संभवति तत्राङ्गेनेकि विशेषितेऽङ्गस्येको गुण इति वाक्यव्यापारे परिसमाप्ते स्थानषष्ठ्यभावात्स्वयं न प्रवर्तते, न त्विक इत्यनेन सहोपतिष्ठते; येनाविशेषादुभयोर्निवृत्तिः स्यादिति सिद्धमिष्टम्।

वृत्तिकारेण त्वस्य सूत्रस्य प्रयोजनं पिण्डीकृत्य प्रदर्शितम्—सर्वथान्त्यस्य वाऽनन्त्यस्य वेके एव गुणवृद्धी भवतः, न त्वक्षरव्यापारः। अत एव वेदितव्यौ इत्याह। अक्षरव्यापारप्रदर्शने तु इक एव स्थाने भवत इत्येतावद्वक्तव्यं स्यात्। स्वसंज्ञया शिष्यमाणाविति। वृद्धिर्भवति गुणो भवतीत्येवं विधीयमानावित्यर्थः।

'सार्वधातुकार्धधातुकयोः' अङ्गस्य गुण इति। स इक एव स्थाने वेदितव्यः। तरति। नयति। भवति। वृद्धिः खल्वपि—अकार्षीत्। अहार्षीत्। अचैषीत्। अनैषीत्। अलावीत्। अस्तावीत्। गुणवृद्धी[1] स्वसंज्ञया विधीयेते, तत्र 'इकः' इति एतदुपस्थितं द्रष्टव्यम्। किं कृतं भवति ? द्वितीया षष्ठी प्रादुर्भाव्यते। मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्वङ्गेनेग्विशेष्यते। जुसि सार्वधातुकादिगुणेष्विकाङ्गं विशेष्यते। मेद्यते। अबिभयुः[1]।

इक इति किम् ? आत्सन्ध्यक्षरव्यञ्जनानां मा भूत्। यानम्।

पदमञ्जरी

इक इति *किमिति*। प्रधानावयवाक्षेपेण समुदायस्यैवाक्षेपः—सूत्रं किमर्थमित्यर्थः। *आत्सन्ध्यक्षरेत्यादि*। ननु 'गापोष्टक्' इति टकः कित्करणं सामग इत्यादावाल्लोपार्थं ज्ञापकम्—'अकारस्य गुणो न भवति' इति। यदि हि स्याद्, गुणे कृतेऽल्लोपे च सिद्धं स्यात् सामग इति। तथा ग्लायतीत्यादौ सन्ध्यक्षराणामप्युपदेशसामर्थ्याद् गुणो न भविष्यति, इतरथा प्रक्रियालाघवार्थमेकारमेवोपदिशेत्। 'जनेर्डः' इति डित्करणाद्व्यञ्जनानामपि गुणो न भविष्यति। यदि हि तस्य स्याद्, अर्द्धमात्रस्य मात्रिकेऽकारे गुणे कृते सिद्धं स्यादुपसरज इति। यद्येवम्, मिदेर्गुणोऽन्त्यात्यथावर्तितः सर्वादेशः स्यात्। किं च गमेरप्ययं डो भवति, तस्य च स्थानत आन्तर्यादोकारो गुणः स्यात्; रैनौग्लौशब्देभ्यश्चाचाराक्विबन्तेभ्यस्तृजादौ गुणप्रसङ्गो यद्यभिधानमस्ति; तथा चितः, चिनुतः, भिन्नः, बेभिद्यते इत्यादौ 'क्ङिति च' इति प्रतिषेधार्थमपि गुणस्येग्लक्षणत्वमेषितव्यम्।

न्यासः

सिचि वृद्धिः, 'अस्तिसिचोऽपृक्ते' इतीट्। एवमहार्षीदिति। अत्र 'हृञ् हरणे' इत्ययं विशेषः। इक इति किमिति। एकदेशद्वारेण समुदायस्य पर्यनुयोगो वेदितव्यः। न हि 'गुणवृद्धी' इत्येतावता विनेग्ग्रहणेनार्थः कश्चित् संगृह्यते। यानमिति—यातेर्ल्युटि गुणे विधीयमान आन्तरतम्यादकारः स्यात्। ततश्च द्वयोरकारयोः 'अतो गुणे' पररूपत्वे कृते यनमित्यनिष्टं रूपं स्यात्। ग्लायतीति—'ग्लै म्लै हर्षक्षये', अत्र सन्ध्यक्षरस्य ऐकारस्य एकारो गुणः स्यात्; ततश्चायादेशे कृते ग्लयतीत्यनिष्टं रूपं स्यात्। उम्भितेति—'उभ उम्भ पूरणे', तृच्, इट्। अत्र व्यञ्जनस्य भकारस्यौष्ठ्यस्य ओकारो गुणः स्यात्; तश्चावादेशे कृते उमवितेत्यनिष्टं रूपं स्यात्।

---

[1]-[1]. अयं पाठो बहुषु पुस्तकेषु नोपलभ्यते।

पदमञ्जरी

अथ वृद्धिग्रहणं किमर्थम् ? 'मृजेर्वृद्धिः' इको यथा स्यात्, अलोऽन्त्यस्य मा भूत्। योगविभागात्सिद्धम्—'मृजेर्वृद्धिरचः', मृजेरचो वृद्धिर्भवति, अङ्गाक्षिप्तेन प्रत्ययेनाचो विशेषणात् 'न्यमार्ट्' अटो न भविष्यति, सिचि वृद्धिस्तर्ह्यकारस्य मा भूत्, अचिकीर्षीत्। अतो लोपो भविष्यति, 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धम्' इति वचनात्, यथा—चिकीर्षक इति। आकारस्य नास्ति विशेषः; सग्विधानादसंभवश्च। एजन्तमपि न संभवति; आत्वविधानात्। रैनौ-ग्लौशब्दानामाचारक्विबन्तानामविशेषः, गोशब्दस्य क्विबन्तस्य 'ऋत इद्धातोः' इत्यतः 'धातोः'इत्यनुवृत्तेः धातुरेव यो धातुरिति विज्ञानात् सिचि वृद्ध्यभावः। अभैत्सीदित्यादौ 'सिचि वृद्धिः' इत्यनेन व्यञ्जनस्य नाप्राप्तायां वृद्धौ विधीयमाना हलन्तलक्षणा वृद्धिर्बाधिका, 'नेटि' इत्ययं च निषेधो यावती हलन्तस्य वृद्धिः, सिचि वृद्धिरिति वा, हलन्तस्याच इति वा, सा सर्वा न भवतीति विज्ञायते। तेन अनर्दीदित्यादौ अन्त्यस्य वृद्धिर्न भविष्यति। तदेवम् 'इको वृद्धिर्यथा स्याद् अदेङ्व्यञ्जनानां मा भूद्' इत्येवमर्थं तावद् वृद्धिग्रहणं न कर्त्तव्यम्। एवं तर्हि मृज्यते, मृष्ट इत्यादौ 'क्ङिति च' इति प्रतिषेधार्थं मृजेर्वृद्धे-रिग्लक्षणत्वम्। इदमपि योगविभागात्सिद्धम्—मृजेर्वृद्धिरित्यस्यानन्तरमजादौ क्ङिति वेति वक्तव्यम्—परिमृजन्ति परिमार्ज्जन्ति, परिममृजतुः परिममार्जतु-रित्येवमर्थम्। तत्र योगविभागः—'अजादौ क्ङिति मृजेरचो वृद्धिर्भवति'। किमर्थ-मिदम् ? नियमार्थम्—क्ङिति यदि भवति अजादावेवेति। तेन मृज्यते मृष्ट इत्यादौ न भविष्यति, ततो वा, अजादावपि विकल्पेनेति। सिचि वृद्धेस्तर्हि प्रतिषेधार्थमिग्लक्षणत्वम्। 'णु स्तुतौ' 'धू विधूनने' कुटादी, न्यनुवीद् न्यधुवीद्। अत्राप्यन्तर्भूतसिज्मात्रापेक्षत्वादन्तरङ्ग उवङि सति हलन्तत्वात् 'नेटि' इति निषेधः। यदि सिच्यन्तरङ्गं भवति, अचैषीद् अह्रौषीद्—गुणः स्यात्। अस्तु, तस्यैव वृद्धिः करिष्यते ? अकार्षीदित्यादौ हलन्तलक्षणा वृद्धिः, अतारीदित्यादौ हलन्तलक्षणायाः 'नेटि' इति प्रतिषेधे 'अतो हलादेः' इति विकल्पं बाधित्वा 'अतो ल्रान्तस्य' इति नित्या वृद्धिः। अलावीदित्यादावुवर्णान्तेषु सेटि सिच्यन्त-रङ्गत्वाद् गुणावादेशयोः कृतयोरपि 'अतो ल्रान्तस्य' इत्यत्र वकारस्यापि लुप्त-निर्दिष्टत्वान्नित्या वृद्धिः। यद्येवम्, मा भवानवीत् अभवीदित्यत्रापि तर्हि वकार-प्रश्लेषान्नित्या वृद्धिः स्यात्। सिच्यन्तरङ्गं भवतीत्युक्ते 'ह्म्यन्तक्षण' इत्यत्र णिश्विग्रहणं न कर्त्तव्यम्; औनयीत्, अश्वयीदित्यत्रान्तरङ्गत्वाद् गुणायादेशयोः कृत-योर्यान्तानां नेत्येव सिद्धत्वात्। तत्स्थाने 'अविमवो' निवेशयिष्यामः—'अतो ल्रान्तस्य' इत्यत्र वकारप्रश्लेषेण प्राप्ता वृद्धिरविमव्योर्नेति। तदेवमनर्थकं वृद्धि-ग्रहणम् ? नानर्थकम्, सिच्यन्तरङ्गस्य प्रवृत्तिमाश्रित्य हि वृद्धिग्रहणं प्रत्याख्यायते,

ग्लायति । उम्भिता । पुनर्गुणवृद्धिग्रहणं स्वसंज्ञया विधाने नियमार्थम् ।

**पदमञ्जरी**

यदि च सिच्यन्तरङ्गं स्यात् चिनीप्रभृतिभ्यो यङ्लुगन्तेभ्यश्चिरिणोतिजिरिणोतिभ्यां च लुङि सिचि अचेचायीद्; अनेनायीद्, अचिरायीद्, अजिरायीदिति न स्याद्; गुणायादेशयोः कृतयोः 'यान्तानां नेति प्रतिषेधप्रसङ्गाद् । इग्लक्षणायां तु सिचि वृद्धौ तयैवान्तरङ्गं बाध्यते, यदि स्याद्, न क्वापि सिचीगन्तमङ्गं भवेत्, ततश्चाचिरायीदित्यादि सिद्धम् । यथा च तया गुणायादेशौ बाध्येते, एवं न्यनुवीदित्युवङपि बाध्येत । अतः प्रतिषेधार्थमपि वृद्धेरिग्लक्षणत्वमेषितव्यमिति सर्वमवदातम् । एवं बहुवक्तव्यत्वाद् *वृत्तिकारेण* वृद्धिग्रहणस्य प्रयोजनं न दर्शितम् ।

अथ कथं स्वसंज्ञया शिष्यमाणावित्येष विशेषो लभ्यते इत्याह—*गुणवृद्धिग्रहणमित्यादि* । इह पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्तते । तेनैवादेङामादेचां च ग्रहणे सिद्धे यत्पुनर्गुणवृद्धिग्रहणं तत्स्वसंज्ञया विधाननियमार्थम्; अन्यथा प्रकृतं गुणवृद्धिग्रहणं तटस्थमुपलक्षणं स्याद्—'वस्तुतो ये गुणवृद्धी तद्विधौ' इति । स तु विधिर्गुणवृद्धिशब्दाभ्यां प्रकारान्तरेण वेत्येव विशेषो नाश्रितः स्यात्, पुनर्गुणवृद्धिग्रहणसामर्थ्यात्तु शब्दव्यापारोऽप्याश्रीयते—गुणवृद्धी ये गुणवृद्धी, एवं शब्दिते ये गुणवृद्धी इत्यन्यतरस्य गुणवृद्धिग्रहणस्य स्वरूपप्रधानत्वं सम्पद्यते । तेनायं विशेषो लभ्यत इत्यर्थः । अन्यथा 'अचश्च' इत्यस्य स्वसंज्ञया विधाने नियमस्य 'दिव उत्' इत्यादिष्वगुणवृद्धिसंज्ञकेषु; तत्संज्ञेषु च यत्रेङ् न संभवति 'अष्टन आ विभक्तौ' इत्यादौ, तत्र चरितार्थत्वात् 'दिव औत्' इत्यादिषु गुणवृद्धिसंज्ञकेषु यत्रेक् संभवति तत्रायं नियमः स्यात् । *द्यौः, पन्थाः, सः, इममिति* । स इत्येतदनुदाहरणम्, न ह्यत्रेगस्ति ।

एवं प्रकटितोऽस्माभिर्भाष्ये परिचयः परः ।
तस्य निःशेषतो मन्ये प्रतिपत्तापि दुर्लभः ॥

**न्यासः**

अथ कथं स्वसंज्ञया शिष्यमाणावित्येष विशेषो लभ्यते ? न हि सूत्रे स्वसंज्ञाग्रहणमस्तीत्यत आह—पुनर्गुणवृद्धिग्रहणमित्यादि । इह पूर्वसूत्राभ्यां गुणवृद्धिग्रहणमनुवर्त्तते । तस्मिन्ननुवर्त्तमाने यत् पुनरिह गुणवृद्धिग्रहणं क्रियते तस्यैतत् प्रयोजनम्—'यत्र स्वसंज्ञया गुणवृद्धी विधीयेते तत्रायं नियमो यथा स्यात्, अन्यत्र मा भूत्' इति । पुनर्गुणवृद्धिग्रहणसामर्थ्यादन्यतरस्य गुणवृद्धिग्रहणस्य संज्ञाप्रधानत्वं सम्पाद्यते । तेन स्वसंज्ञया विधाने नियमो भवतीत्येषोऽर्थो लभ्यते । अन्यथा हि यद्येवं पूर्वो नियमो नात्राभिमतः स्यात्, ततो नियतस्य नियमस्य प्रकृतगुणवृद्धिग्रहणानुवृत्त्यैव सिद्धत्वात् पुनरिह गुण-

इह मा भूत्—द्यौः । पन्थाः । सः । इममिति ॥

## न धातुलोप आर्धधातुके ॥ ४ ॥

धात्वेकदेशो धातुः, तस्य लोपो यस्मिन्नार्द्धधातुके तदार्धधातुकं

**पदमञ्जरी**

न धातुलोप आर्धधातुके ॥ 'दुरीणो लोपश्च' दुःशब्द उपपदे इणो धातोर-प्रत्ययो भवति, धातोश्च लोपः । दुःखेन ईयते=प्राप्यते दूरमित्यत्र यद्यपि कृत्स्नस्य धातोर्लोपः संभवति, तथाप्येवंविषये गुणवृद्ध्योः प्राप्त्यभावादेकदेशे धातुशब्दो वर्त्तत इत्याह—धात्वेकदेश इति । 'धातुलोप' इति तत्पुरुषे सति आर्द्धधातुक-

**न्यासः**

वृद्धिग्रहणमनर्थकं स्यादित्येवमभिप्रायः । इह मा भूदित्यादिनास्यैवंप्रकारस्य नियमस्य व्यवच्छेद्यत्वं दर्शयति—द्यौरिति । 'दिव औत्' इत्यौकारः । स्वरूपेण विधीयमानोऽलो-ऽन्त्यस्यैव भवति, नेकः । पन्था इति । 'पथिमथ्यृभुक्षामात्' इत्याकारोऽन्त्यस्यैव भवति, नेकः । 'इतोऽत्सर्वनामस्थाने' इतीकारस्य अकारः, 'थोऽन्थः' इति थकारस्य न्थादेशः । इममिति—'त्यदादीनामः' इत्यत्वमन्तस्यैव भवति, नेकः । 'दश्च' इति दकारस्य मकारः । स इत्यत्र त्वस्याः परिभाषाया उपस्थाने सति त्यदाद्यत्वं न स्यादेव । 'तदोः सः सावनन्त्ययोः' इति सत्वम् । ननु च 'अचश्च' इत्ययमपि स्थानिनियमः स्वसंज्ञाविधान एवेष्यते, तस्यापि च नियमस्य द्यौरित्यादिकं व्यवच्छेद्यम्, तथा हि वृत्तिकारस्तत्र वक्ष्यति—'स्वसंज्ञया विधाने नियमः । अजिति वर्त्तते, इह मा भूत्—द्यौः, पन्थाः, सः, द्युभ्याम्, द्युभिः' इति, ततश्च यदनेन नियमेनैवंविधेन कर्त्तव्यं तत् तेनैव सिध्यति, नार्थ एवंविधनियमार्थेन पुनरिह गुणवृद्धिग्रहणेन ? सत्यमेतत्; किन्त्वेवमर्थप्रतिपत्तौ य एते मन्दधियः प्राथमकल्पिकाः श्रोतारः, तेषां प्रतिपत्तिगौरवं स्यात् । तस्मात्ताननुग्रहीतुं विस्पष्टार्थमिह संज्ञाविधाने नियमं प्रतिपादयितुं पुन-र्गुणवृद्धिग्रहणं कृतम् । यद्येवम्, यत् तेन विधातव्यं तदनेनैव विहितमिति तत्र संज्ञाविधाने नियमो न कर्त्तव्यः ? नैतदस्ति; यदि ह्यसावित्थम्भूतो नियमो न स्यात्; ततो द्युभ्याम्, द्युभिरित्यत्र 'दिव उत्' इत्युकारः स्वरूपेणैव विधीयमानोऽच एव स्थाने स्यात्, नालोऽन्त्यस्य । न ह्यनेन नियमेनाचः शक्यते व्यावर्त्तयितुम्; तस्य गुणवृद्धिसंज्ञकत्वात् ।

न धातुलोप आर्धधातुके ॥ उक्तपरिमाणस्य शब्दस्य धातुसंज्ञा कृता । तस्य सर्वस्य लोपे कृते यत्र गुणवृद्धी प्राप्नुतस्तदार्धधातुके न सम्भवत्येव, तत् किं प्रति-षेधेन ? तस्मात् प्रतिषेधविधानसामर्थ्याद् धात्वेकदेशे धातुशब्दो वर्त्तत इति मत्वाह—धात्वेकदेशो धातुरिति । धातुलोप इति । यद्ययं धातोर्लोपो धातुलोप इति तत्पुरुषः, तत आर्धधातुकग्रहणं गुणवृद्धिविशेषणं वा स्यात्—'धातुलोपे सत्यार्धधातुकनिमित्ते

धातुलोपं तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवतः। लोलुवः, पोपुवः,

पदमञ्जरी

ग्रहणं लोपविशेषणम्, गुणवृद्धिविशेषणम्, उभयविशेषणं वा—इति त्रयः कल्पाः। तत्र यदि लोपविशेषणम्—आर्द्धधातुकनिमित्ते धातुलोपे सति यत्किञ्चिद् निमित्ते गुणवृद्धी न भवत इत्यर्थः स्यात्। ततश्च प्रेद्धम् इत्यत्र प्रपूर्वादिन्धेः क्तप्रत्यये तन्निमित्ते नलोपे सति प्राप्नुवत आद्गुणस्यापि निषेधः स्यात्। यद्यपीक इत्यनुवर्तते, तथापि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवन्नन्यतरव्यपदेशं लभत इति स्यादेव। न चेह सूत्रे 'इक' इत्यस्य रूपपरत्वे प्रमाणमस्ति। उत्तरसूत्रे तु प्रमाणं वक्ष्यामः। ननु 'पूर्वं धातुः साधनेन युज्यते' इत्यस्मिन् दर्शने प्रथमोपनतक्त प्रत्ययापेक्षत्वादुपधालोपोऽन्तरङ्ग इति तदपेक्षः प्रतिषेधोऽप्यन्तरङ्गः, 'पूर्वं धातुरुपसर्गेण युज्यते' इति तु दर्शने प्रथमोपनतोपसर्गापेक्षत्वाद् गुणोऽन्तरङ्गः, ततश्च 'असिद्धं बहिरङ्गमन्तरङ्गे' इति प्रतिषेधो न भविष्यति? नैतदस्ति; 'नाजानन्तर्ये' इति निषेधात्। अथ गुणवृद्धिविशेषणमार्द्धधातुकग्रहणम्, ततोऽयमर्थः स्यात्—यत्किञ्चन निमित्ते धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न भवत इति; तदा प्रेद्धमित्यत्र दोषो न, गुणस्यातन्निमित्तत्वात्; किन्तु क्नोपयतीत्यत्र 'क्नूयी शब्दे' इत्यस्माण्णिचि पुकि च यलोपे पुगन्तलक्षणस्य गुणस्य निषेधः स्यात्। अत उभयविशेषणम्—आर्द्धधातुकनिमित्ते धातुलोपे सत्यार्द्धधातुकनिमित्ते गुणवृद्धी न भवत इति।

न्यासः

ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति? लोपविशेषणं वा स्यात्—'आर्धधातुकनिमित्ते धातुलोपे सति गुणवृद्धी न भवतः' इति? पूर्वस्मिन् क्नोपयतीत्यत्र प्रतिषेधः प्राप्नोति, तत्र प्रतिविधानं कर्त्तव्यम्; द्वितीये तु न भवत्येष दोषः, न हि क्नोपयतीत्यत्रार्धधातुकनिमित्तलोपः, किं तर्हि? वल्निमित्तकः। किन्तु द्वितीये पक्षे प्रेद्धमित्यत्र प्राप्नोति, अस्ति ह्यत्रार्धधातुकनिमित्तो लोपः। ननु चेग्लक्षणयोर्गुणवृद्ध्योरयं प्रतिषेधः; नचात्रेग्लक्षणो गुणः, नैतदस्ति; अत्रापीग्लक्षण एव गुणो यो ह्युभयोः स्थाने भवति, लभते सोऽन्यतरव्यपदेशम्। तथा हि—मातुः, पितुरित्यत्रोभयोः स्थाने भवन् रपरोऽण् भवति। तस्माल्लोपविशेषणपक्षेऽपि तत्पुरुषे प्रतिविधानं कर्त्तव्यमेव। बहुव्रीहौ तु न किञ्चित् प्रतिविधेयमिति मन्यमानो बहुव्रीहिरयमिति दर्शयन्नाह—तस्येत्यादि। एतेन लोपविशेषणमार्धधातुकमित्येतद् दर्शितं भवति। एवञ्चार्धधातुके सम्भवति यदि तत् तस्य निमित्तं भवति; ततश्च क्नोपयतीत्यत्रातिप्रसङ्गो नावतरति। तत्रेत्यादि। नापि गुणवृद्ध्योरार्धधातुकं निमित्तत्वेन विशेषणमित्याख्यातम्। ततश्च प्रेद्धमित्यत्राप्यतिप्रसङ्गो न भवति, न ह्याद्गुण आर्धधातुकनिमित्तः। ये ते इति। स्त्रीलिङ्गनिर्देशः

पदमञ्जरी

तत्र सकृच्छ्रुतस्योभयविशेषणत्वमेव तावद् दुर्लभम् ? अथापि स्याद्, एवमपि लोपगुणवृद्धीनामेकार्द्धधातुकनिमित्तत्वं न लभ्यते । ततश्च विभज्यान्वाख्यानपक्षे भेद्यत इत्यत्र भिदेर्ण्यन्तात्कर्मणि यकि भिद + इ + य इति स्थिते नित्यत्वात्पूर्व णिलोपे कृते यकमपेक्ष्य प्रवृत्ते प्रत्ययलक्षणेन णिचमपेक्ष्य प्राप्नुवतो गुणस्य निषेधः स्याद्, द्वयोरप्यार्द्धधातुकनिमित्तत्वादिति तत्पुरुषे सति सर्वथा दोषं दृष्ट्वाऽऽह—*तस्य लोपो यस्मिन्निति* । अस्मिन्पक्षे धातोर्लोपो यस्मिन्निति अन्यपदार्थभूतेनार्द्धधातुकेन लोपो विशेष्यते, साक्षाच्च गुणवृद्धी, धातोर्लोपो यस्मिन् तस्मिन्निति । एकार्द्धधातुकनिमित्तत्वं च लोपगुणवृद्धीनां लभ्यत इति न कश्चिद् दोषः । *ते न भवत इति* । अनेन गुणवृद्ध्योरयं निषेधः, न पूर्वसूत्रव्यापारस्येति दर्शयति । पदोपस्थापनं हि पूर्वसूत्रव्यापारः । न चैवम्भूत आर्द्धधातुके तस्य प्रसङ्गः, 'दीधीवेवीटाम्' इति चासम्बद्धं स्यादुपस्थाननिषेधे । *लोलुव इत्यादि* । लुपूर्भ्यां यङ्, द्विर्वचनम्, 'गुणो यङ्लुकोः' गुणे निषिद्धे उवङ् । *मरीमृज इति* । 'रीगृदुपधस्य च' । *लोलूयादिभ्य* इत्यादिना सूत्रार्थमुदाहरणेषु दर्शयति । ननु च यङ्कारस्यातो लोपे कृते तस्य स्थानिवत्त्वादेव गुणवृद्धी न भविष्यतः, यथा—पापचक इति 'अत उपधायाः' इति वृद्धिः, न ह्यत्रानेन निषेधः सिध्यति, किं कारणम् ? अनिग्लक्षणत्वात् । नालोपो लभ्यते, 'यङोऽचि च' इति समुदायलुका प्रतिपदविहितेन बाधितत्वात् । योगविभागात्सिद्धम्—अतो लोपो भवत्यार्द्धधातुके, ततो 'यस्य' य इत्यस्य समुदायस्य योऽकारस्तस्यापि लोपो भवति । किमर्थमिदम् ? विशेषविहितेन समुदायलुकाऽतो लोपो मा बाधीति । तेन स्थानिवत्त्वादेव गुणवृद्धी न भविष्यतः । यथैव तर्हि गुणवृद्धी न भवत एवं क्षेत्रियः, चेक्रियः, लोलुवः, तोष्टुवः, सुश्रुव इतीयङुवङावप्यच्प्रत्ययमपेक्ष्य न स्याताम् । मा भूतामचि, य एव त्वसौ स्थान्यकारस्तदाश्रयौ भविष्यतः । स हि यकारे लुप्ते प्रत्ययसंज्ञकः । ननु क्षेत्रियः तोष्टुव इत्यत्रान्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति अकृत्सार्वधातुकयोर्दीर्घात् प्रागेव यङो लुकि कृते स्थानिवद्भावे सत्यपि चेक्षि अ अ, तोष्टु अ अ इति स्थिते स्थान्यकारेण सह लघूपधमङ्गं संजा-

न्यासः

'गुणवृद्धी' इत्यनेन स्त्रीलिङ्गेन सामानाधिकरण्यात् । अस्य तु स्त्रीलिङ्गता 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्यतिदेशात् । अर्थस्य च सोऽतिदेश इति यत्तदोरपि तत्रार्थे वर्त्तमानयोः स्त्रीलिङ्गता भवति । ननु च नियमस्य प्रकृतत्वात् तस्यैवायं प्रतिषेधो युक्तः, तत् किमित्येवमाह—तत्र ये गुणवृद्धी प्राप्नुतस्ते न भवत इति । तयोः प्रधान्यात् । तत् पुनर्नियमेनोपक्रियमाणत्वात्, नियमस्य तु तादर्थ्याद्प्राधान्यम् । तस्माद् गुणवृद्धयोरेवायं प्रतिषेधो न्याय्यः ।





मरीमृजः। लोलूयादिभ्यो यङन्तेभ्यः पचाद्यचि विहिते 'यङोऽचि च' इति यङो लुकि कृते तमेवाचमाश्रित्य ये गुणवृद्धी प्राप्ते तयोः प्रतिषेधः।

धातुग्रहणं किम्? लूञ्—लविता। रेडसि। पर्णं नयेः। अनुबन्धप्रत्ययलोपे मा भूत्। रिषेर्हिंसार्थस्य विच्प्रत्ययलोप उदाहरणं रेडिति।

### पदमञ्जरी

तमिति अच्प्रत्यये गुणः स्यादेव; न अन्तरङ्गावियङुवङौ भविष्यतः, अशिश्रियद् अदुद्रुवद् इति यथा। अतः स्थानिवत्त्वादेव सिद्धम्, नार्थोऽनेन? उच्यते; सर्वत्र दीर्घान्तेषु ह्रस्वान्तेषु चेयङुवङोः कृतयोः पुनर्लघूपधलक्षणो गुणः प्राप्नोति। न च पुनरपि स्थानिवद्भावः, आदिष्टादचः पूर्वत्वात्। किञ्च यद्यतो लोपः क्रियेत, जङ्गम इत्यत्र 'गमहन' इत्युपधालोपः स्यात्। अथात्रानङीति प्रतिषेधस्तर्हि दरीदृश इत्यत्र 'ऋदृशोः' इति गुणः स्याद्; देय इत्यत्र 'दीङो युडचि' इति युट् स्यात्; सनीस्रंसः, दनीध्वंस इत्यत्र 'अनिदिताम्' इत्युपधालोपः स्यात्; यायावर इत्यादिष्वाकारलोपः स्यात्। यदा पुनर्योगविभागमकृत्वा विशेषविहितः समुदायलुक् क्रियते, तदा हलचोरादेशस्य स्थानिवत्त्वाभावादुपधालोपादयो न भवन्तीत्यवश्यं समुदायस्य लुगेषितव्यः। एवं च लोलुव इत्यादावपि गुणवृद्धी स्याताभिति सूत्रमपि कर्त्तव्यम्॥ लूञ् *लवितेति*। प्रागेव धातुसंज्ञाया भवन्ननुबन्धलोपो धातुलोपो न भवति। रेड*सीति*। 'रुष रिष हिंसायाम्'। 'अन्येभ्योऽपि दृश्यन्ते' इति विच्, वेरपृक्तस्य लोपः—न धातुलोपो भवति।

### न्यासः

**लोलुवः, पोपुव इति**। 'लूञ् छेदने' 'पूञ् पवने'—इत्येताभ्यां 'धातोरेकाचः' इत्यादिना यङ्, 'सन्यङोः' इति द्विर्वचनम्। 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः, यङन्तात् पचाद्यचि 'यङोऽचि च' इति लुकि तन्निमित्तगुणप्रतिषेधः, तस्मिन् सति 'अचि श्नुधातुभ्रुवाम्' इत्यादिनोवङ्। **मरीमृज इति**। 'मृजू शुद्धौ', पूर्ववद्यङ्, द्विर्वचनम्, उरदत्त्वम्, हलादिः शेषः, 'रीगृदुपधस्य च' इति रीगागमः। लोलूयादिभ्य इत्यादिशब्देन पोपूय, मरीमृज्येत्येतयोर्ग्रहणम्। **लूञ्—लवितेत्ति**। यावदेव धातुसंज्ञा न भवति तावदेव सर्वविधिभ्यो लोपविधिर्बलीयानिति ञकारस्य लोपो भवति, पश्चाल्लू इत्येतस्य धातुसंज्ञा, तेन ञकारलोपो धातुलोपो न भवतीति भवति प्रत्युदाहरणम्। **रेडिति**। 'रिष रुष हिंसायाम्', 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। इकारचकारौ 'वेरपृक्तस्य' इत्यत्र सामान्यग्रहणाविघातार्थौ। वकारस्य चानेनैव लोपः।

आर्धधातुक इति किम्? त्रिधा बद्धो वृषभो रोरवीति। सार्वधातुके मा भूत्। इक इत्येव—अभाजि, रागः॥

### पदमञ्जरी

नन्वसत्यपि धातुग्रहणे लुप्यतेऽस्मिन्नित्यधिकरणसाधनलोपशब्दस्याश्रयणादनैमित्तिकेऽनुबन्धप्रत्ययलोपे न भविष्यति। तत्र लोपशब्दो हि संज्ञाशब्दः, कथमस्याधिकरणसाधनता लभ्यते। *रोरवीतीति*। 'रु शब्दे' यङ्लुकि तिपि रूपम्। नन्वसत्यप्यार्धधातुकग्रहणे धातोर्लोपो यस्मिन्निति बहुव्रीहिर्विज्ञास्यते, रोरवीतीत्यत्र च यङ्लुगनैमित्तिकः। न ह्यार्द्धधातुकग्रहणं बहुव्रीहित्वे प्रमाणम्; सत्यपि तस्मिंस्तत्पुरुषसम्भवात्। इदं तर्हि प्रयोजनम्—'तुर्वी थुर्वी धुर्वी हिंसार्थाः', मुर्छा मोहसमुच्छ्राययोः', तेभ्यो यङ्लुगन्तेभ्यस्तिबादौ सार्वधातुके परतो राल्लोपे तोतोर्ति मोमोर्तीत्यादौ छ्वोर्लोपस्य गुणस्य चैकनिमित्तत्वान्निषेधः स्यादेव। *इक इत्येवेति*। इक इत्यस्यानुवृत्तिं प्रति न शङ्का कार्येत्येवशब्दस्यार्थः। अतः *अभाजि, राग* इति 'भञ्जेश्च चिणि', 'घञि च भावकरणयोः' इत्युपधालोपः॥

प्रक्रियातर्कगहनप्रविष्टो हृष्टमानसः।
हरदत्त*हरिः* स्वैरं विहरन् केन वार्यते॥

### न्यासः

'पुगन्तलघूपधस्य च' इति गुणः। 'झलां जशोऽन्ते' इति पकारस्य डकारः। ननु च द्व्यङ्गविकले द्वे अपि एते प्रत्युदाहरणे, यथैव ह्यत्र धातुलोपो न भवति, एवमार्धधातुकनिमित्तोऽपि न भवति, नैतदस्ति; सति हि धातुग्रहणे पदद्वयसान्निध्याद् बहुव्रीहिर्लभ्यते। तस्मिंश्च सत्यार्धधातुकनिमित्तत्वं लोपस्य। असति हि धातुग्रहणे 'न लोप आर्धधातुके' इत्युच्यमाने 'आर्धधातुकाश्रये ये गुणवृद्धी प्राप्नुतस्ते लोपे सति न भवतः' इत्येष वाक्यार्थः स्यात्; ततश्च लोपस्याविशेषितत्वादविशेषेण यत्र क्वापि लोपे प्रतिषेधः स्यात्। रोरवीति। 'रु शब्दे' इत्यस्माद्यङ्, बहुलं छन्दसि' इति यङो लुक्, लट्, तिप्, शप्। अदादित्वाच्छपो लुक्। 'यङो वा' इतीट्। अत्र सार्वधातुकनिमित्तो गुणो न प्रतिषिध्यते। ननु च द्व्यङ्गविकलमेवेदम्, यथैव ह्यार्धधातुकनिमित्तो गुणो न भवत्येवं लोपोऽपि, नैतदस्ति; सति ह्यार्धधातुकग्रहणेऽन्यपदार्थत्वे न तस्याश्रयणात् तन्निमित्तो लोपो लभ्यते, तस्मिंश्च सति 'न धातुलोपे' इतीयत्युच्यमाने 'ये केचन गुणवृद्धी ते च लोपे सति न भवतः' इत्येष वाक्यार्थः स्यात्। ततश्चाविशेषितत्वाल्लोपस्य लोपमात्रे प्रतिषेधो विज्ञायते। अभाञ्जीति। 'भञ्जो आमर्दने', लुङ्, च्लिः, 'चिण् भावकर्मणोः' इति चिण्, 'चिणो लुक्' इति तशब्दस्य लुक्। 'भञ्जेश्च चिणि' इत्यनुनासिकलोपः। राग इति। अत्रापि 'घञि च भावकरणयोः' इति नलोपः। 'रञ्ज रागे', भावे घञ्। यद्यप्यत्र सर्वमस्ति तथापीक

बहुव्रीहिसमाश्रयणं किम् ? क्नोपयति, प्रेद्धम् ।

## क्ङिति च ॥ ५ ॥

निमित्तसप्तम्येषा । क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः ।

**पदमञ्जरी**

*क्ङिति च* ॥ क्ङिद्ग्रहणं यदि विधीयमानस्य प्रतिषेधस्य विशेषणं स्याद्— गुणवृद्धी क्ङिति न भवत इति, ततो विधिसंस्पर्शात् 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यस्योपस्थानात् क्ङित्यनन्तर एव प्रतिषेधः स्यात् । यद्यपि प्रतिषेधस्य विधानदशायां पौर्वापर्यं न संभवति, तथा निषेध्यमानयोर्गुणवृद्ध्योरपि; तथापि स्थानिन इकोऽनन्तरे क्ङिति प्रतिषेधः स्यात् । एवं हि विधानोत्तरकालमपि तावद् गुणवृद्ध्यभावरूपस्य प्रतिषेधस्य क्ङिदनन्तरः सम्भवति, 'इको यणचि' इत्यादावप्येतावदेव पौर्वापर्यं यद्विधानदशायां तु स्थानिनः, उत्तरकालं तु विधेयस्य । यदा त्वनूद्यमानयोर्गुणवृद्ध्योर्विशेषणम्—क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति, तदाऽनुवादकत्वात्तस्मिन्नित्यादिकायाः परिभाषाया अनुपस्थानम् । न हि 'क्ङिति सति ये गुणवृद्धी' इत्युक्ते विधिव्यापारेण क्ङितः कश्चित् संस्पर्शः । विध्यङ्गभूताश्च परिभाषास्तत्रैवोपतिष्ठन्ते नानुवादे, तस्यापि परार्थत्वाद्, द्वयोश्च परार्थयोः परस्परं सबन्धाभावात्; अन्यथा 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यत्रेक्परिभाषोपस्थाने शालीय इति वृद्धसंज्ञाया अभावात्तल्लक्षणश्छो न स्यात् । तथा च 'उदीचामातः स्थाने' इति स्थानेग्रहणं कृतम् —आतः स्थाने योऽकार इत्यनुवादकत्वात् 'षष्ठी स्थानेयोगा' इति स्थानेयोगो न लभ्येतेति । अतोऽस्मिन् पक्षे क्ङितीति सति सप्तमी 'यस्य च भावेन' इति । क्ङितोर्हि सत्तालक्षणेन भावेन गुणवृद्ध्योः प्राप्तिलक्षणो भावो लक्ष्यते, निमित्तस्य च सत्तया निमित्तिनः प्राप्ति-

**न्यासः**

इत्यत्रानुवृत्तेरिह चेकोऽसम्भावाद् 'अत उपधायाः' इति वृद्धेः प्राप्तायाः प्रतिषेधो न भवति । क्नोपयतीति 'क्नूयी शब्दे' 'हेतुमति च' इति णिच् 'अर्त्तिह्री' इत्यादिना पुक् । 'लोपो व्योर्वलि' इति यलोपः । 'पुगन्त' इत्यादिना गुणः । प्रेद्धमिति । 'ञिइन्धी दीप्तौ', क्तः, 'अनिदिताम्' इत्यादिनानुनासिकलोपः, 'झषस्तथोर्धोऽधः' इति तकारस्य धत्वम् । 'झलां जश् झशि' इति धातुधकारस्य दकारः । प्रगतमिद्धमिति 'कुगतिप्रादयः' इति समासः ।

**क्ङिति च** ॥ क्ङितीति यदीयं परसप्तमी स्यादनन्तरस्यैवेकः प्रतिषेधः स्यात्, चितः चितवानित्यादौ; व्यवहितस्य भिन्नो भिन्नवानित्यादौ न स्यात्, 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वात् । निमित्तसप्तम्यां त्वस्यां सर्वत्र भवितव्यम्, व्यवहितयोरपि निमित्तनिमित्तिभावसद्भावादिति मन्यमान आह—निमित्तसप्तम्येषेति । निमित्तात् सप्तमी निमित्तसप्तमी । 'पञ्चमी भयेन' इति 'पञ्चमी' इति

पदमञ्जरी

लक्ष्यत इति 'क्ङिति सति ये गुणवृद्धी प्राप्नुतः' इत्यस्य 'क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत' इत्यर्थो भवति। भिन्नः, मृष्ट इत्यादौ चोपधाया अपि प्राप्नुवन्त्यौ गुणवृद्धी क्ङितं निमित्तमाश्रित्य प्राप्नुत इत्येतत्सर्वमालोच्याह—*निमित्तसप्तम्येति*। निमित्तात्सप्तमी निमित्तसप्तमी, पञ्चम्यर्थे शेषत्वेन विवक्षिते षष्ठीसमासः। *क्ङिन्निमित्ते इति*। एतेन गुणवृद्धिविशेषणं क्ङिद्ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैवैतद्विशेषणं युक्तम्, नैतदस्ति; यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते, यथा-पानीयमेलादिसंस्कृतं पुरुषेण। उक्तं च–

"गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्तते॥" इति।

न्यासः

योगविभागात् समासः। सा पुनः सप्तमी 'यस्य च भावेन भावलक्षणम्' इत्यनेन वेदितव्या। क्ङितो हि निमित्तभावेन गुणवृद्धयोः प्राप्तिलक्षणो भावो लक्ष्यते। अथ निमित्तसप्तम्यामप्यस्यां कस्मादेव व्यवहितस्य प्रतिषेधो लभ्यते? 'तत्र तस्मिन्' इत्यादिकायाः परिभाषाया अनुपस्थानाद्। 'क्ङिति च' इत्यत्र क्ङिद्ग्रहणं गुणवृद्धयोर्विशेषणम्, अतो नासौ परिभाषा तत्रोपतिष्ठते। विध्यङ्गशेषभूता ह्येषा परिभाषा यत्र विधीयते, किञ्चित् तत्रोपतिष्ठते, इक्परिभाषावत्। यत्र गुणवृद्धी विधीयेते तत्रैवेक्परिभाषोपतिष्ठते, न च यत्र सिद्धे गुणवृद्धी कार्यार्थमुपादीयेते, तत्रापि। अन्यथा हि 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यादावप्यस्या इक्परिभाषाया उपस्थानात् 'शालीयः, मालीयः' इत्यत्र वृद्धसंज्ञा न स्यात्। यथा चेयमिक्परिभाषा विध्यङ्गशेषभूतत्वाद् विधावेवोपतिष्ठते, तथासावप्यानन्तर्यपरिभाषा। न चेह गुणवृद्धी विधीयेते। किं तर्हि? विहिते अप्यन्यत्र क्ङितीत्यनेन विशिष्येते। तस्मान्नात्र तस्याः परिभाषाया उपस्थानमित्यनन्तरस्यापि प्रतिषेधः सिध्यति। क्ङिन्निमित्ते ये गुणवृद्धी इति। क्ङिन्निमित्तं ययोस्ते तथोक्ते। ते पुनर्ये क्ङिन्निमित्ते सती प्राप्नुतस्ते विज्ञेये। एतेन गुणवृद्धिविशेषणं क्ङिद्ग्रहणमिति दर्शयति। ननु च विधीयमानतया प्राधान्यात् प्रतिषेधस्यैवैतद् विशेषणं युक्तम्, नैतदस्ति; यत्र हि गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्र प्रधानस्यैव भूयांसमुपकारं कर्त्तुमात्मनः संस्कारमनुभूय प्रधानेन सम्बन्धमनुभवति। यथोक्तम्—

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते।
प्रधानस्योपकारे हि तथा भूयसि वर्त्तते॥ इति।

चितः, चितवान्। स्तुतः, स्तुतवान्। भिन्नः, भिन्नवान्। मृष्टः, मृष्टवान्। ङिति खल्वपि—चिनुतः, चिन्वन्ति। मृष्टः, मृजन्ति। गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते। 'ग्लाजिस्थश्च क्स्नुः'—जिष्णुः,

पदमञ्जरी

इह च गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयोर्महान् प्रधानप्रतिषेधस्योपकारो भवति; व्यवहितस्यापि तत्सिद्धेः। *भिन्न इति*—'रदाभ्याम्' इति नत्वम्। *मृष्ट इति*—व्रश्चादिना षत्वम्। *चिन्वन्तीति*—'सार्वधातुकमपित्' 'हुश्नुवोः सार्वधातुके'। यद्येषा निमित्तसप्तमी, शचङन्ते दोषः; 'धि धारणे' 'रि गतौ', तुदादी, ताभ्यां तिपि 'तुदादिभ्यः शः' 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्' धि अ ति, रि अ ति, श्रि अ त्, द्रु अ त्, इति स्थिते शचङन्तस्याङ्गस्य तिपि लघूपधलक्षणश्च गुणः प्राप्नोति, शचङोः परतः पूर्वस्य सार्वधातुकलक्षणश्च, तत्र शचङ्निमित्तस्यैव प्रतिषेधः स्याद्, न तिङ्निमित्तस्य। पक्षान्तरे तु तिङ्निमित्तस्यापि गुणस्य शचङोः परतः प्रतिषेधो लभ्यते। न वा बहिरङ्गलक्षणत्वाद्बहिर्भूततिबाश्रयो गुणो बहिरङ्गोऽन्तर्भूतशचङ्निमित्ताभ्यामियङुवङ्भ्यां बाधिष्यते। 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र वक्ष्यति—'गिच्चायं प्रत्ययो न कित्, तेन स्थ ईकारो न भवति' इति, 'क्स्नोर्गित्वान्न स्थ ईकारः' इति च। ततश्च भूष्णुरित्यत्र प्रतिषेधो न स्यादित्यत आह—*गकारोऽप्यत्रेत्यादि*। *चर्त्वं भूतः*—चर्त्वं प्राप्तः। अत एव गकारप्रश्लेषात्

न्यासः

इह तु गुणवृद्ध्योः क्ङिद्ग्रहणेन विशेषितयोर्महान् प्रधानस्य प्रतिषेधस्योपकारो भवति; व्यवहितस्यापि तत्सिद्धेः। **भिन्न इति**। 'भिदिर् विदारणे', क्तः, 'रदाभ्यां निष्ठातो नः' इति नत्वम्। **मृष्ट इति**—मृजेः 'व्रश्च' इत्यादिना जकारस्य षत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्। **चिनुत इत्यादौ** तु 'सार्वधातुकमपित्' इति क्ङित्त्वम्। **चिन्वन्तीति**। 'हुश्नुवोः सार्वधातुके' इति यणादेशः। अत्र चितः, चितवान्, स्तुतः, स्तुतवान्, चिनुतः, चिन्वन्तीत्येतेषूदाहरणेषु यथायोगं सार्वधातुकार्धधातुकलक्षणस्य गुणस्य प्रतिषेधः, भिन्नः भिन्नवानिति लघूपधलक्षणस्य, परिशिष्टेषु 'मृजेर्वृद्धिः' इति वृद्धेः। **ग्लाजिस्थश्च क्स्नुरिति**। क्स्नुप्रत्ययोऽयं यदि कित् स्यात्, स्थास्नुरित्यत्र घुमास्थादिसूत्रेण तिष्ठतेरीत्त्वं स्यात्। अतस्तत्परिहाराय क्स्नोर्गित्त्वं प्रतिज्ञायते। तथा हि तत्र वक्ष्यति—'गिच्चायं प्रत्ययो न कित्। तेन स्थ ईकारो न भवति' इति। गित्वे च सति भूष्णुः, जिष्णुरित्यत्र 'क्ङिति च' इति प्रतिषेध उच्यमानो न प्राप्नोति। अत एतद्दोषपरिहारायाह—**गकारोऽप्यत्रेत्यादि**। **चर्त्वं भूतः**—चर्त्वं प्राप्त इत्यर्थः। चर्त्वं तु 'खरि च' इति। यदि हि क्स्नोर्गित्त्वमिष्यते, भूष्णुरित्यत्र 'श्र्युकः किति' इति किति प्रतिषेध उच्यमानो न स्यात्, नैष दोषः; तत्रापि चर्त्वभूतो

भूष्णुः । इक इत्येव—कामयते, लैगवायनः ।

पदमञ्जरी

संख्यातानुदेशो न भवति; अन्यथा क्ङितौ द्वौ, गुणवृद्धी अपि द्वे इति संख्यातानुदेशः प्राप्नोति—किति गुणस्य, ङिति वृद्धेरिति । ज्ञापकाद्वा, यदयं 'मिदेर्गुणः' इति श्यनि ङिति गुणं शास्ति, तज्ज्ञापयत्याचार्यः—'नात्र संख्यातानुदेशो भवति' इति । यदि तर्हि क्स्नुप्रत्ययो गिद्, भूष्णुरितीट् प्राप्नोति, नैष दोषः; 'श्र्युकः किति' इत्यत्रापि गकारश्चर्त्वभूतो निर्दिश्यते, सौत्रत्वाच्च निर्देशस्य चर्त्वस्यासिद्धत्वात्प्राप्तमपि 'हशि च' इत्युत्वं न भवति, 'कुप्वोः' इति विसर्जनीयश्च भवति । *कामयते इति*—'कमेर्णिङ्' । *लैगवायन इति*—लिगुशब्दात् 'नडादिभ्यः फक्' इति फक् । 'ओर्गुणः' इति गुणस्य प्रतिषेधः कथं न भवति यावतोकार इगेव ? नैतदस्ति; अत्र हि चकारः क्रियते, स इत्यर्थो विज्ञायते, तेनेक इतीमं शब्दमुच्चार्य विधीयमानयोर्गुणवृद्ध्योः प्रतिषेधः, न चैवमोर्गुणः । *मृजेरि-*

न्यासः

गकारो निर्दिश्यते । तथा हि—'ग्लाजिस्थश्च क्स्नुः' इत्यत्र जयादित्यवृत्तौ ग्रन्थः—"'क्ङिति च' इत्यत्र गकारश्चर्त्वभूतो निर्दिश्यते, तेन गुणो न भवति । 'श्र्युकः किति' इत्यत्रापि गकारो निर्दिश्यते, तेन भुव इड् न भवति" इति । 'श्र्युकः किति' इत्यत्रापि जयादित्यवृत्तौ ग्रन्थः—'गकारोऽप्यत्र चर्त्वभूतो निर्दिश्यते भूष्णुरित्यत्र यथा स्यात्' इति । वामनस्य त्वेतत् सर्वमनभिमतम् । तथा हि तस्यैव सूत्रस्य तद्विरचितायां वृत्तौ ग्रन्थः—"केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति भूष्णुरित्येवं यथा स्यात् । सौत्रत्वाच्च निर्देशस्य 'श्र्युकः किति' इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति । 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र स्था आ इत्याकारप्रश्लेषेण स्थास्नोः सिद्धत्वान्न किञ्चिदेतत्" इति । स एवं मन्यते—यदि क्स्नुप्रत्ययस्य कित्त्वे सति तिष्ठतेरीत्त्वं प्राप्नुयात् तथा तत्परिहारार्थं गित्त्वं युज्यते प्रतिज्ञातुम् । गित्त्वे च सति जिष्णुः, भूष्णुरित्यत्र यथायोगमिड्गुणयोर्निरासाय 'क्ङिति च' इत्यत्र 'श्र्युकः किति' इत्यत्र च गकारश्चर्त्वभूतो निर्दिश्यमानः शोभेत, न च क्स्नुप्रत्ययो गित्, किं तर्हि ? किदेव । तत् किमिड्गुणप्रतिषेधार्थेन चर्त्वभूतगकारस्य निर्देशेन ! नच क्स्नोः कित्वे सति तिष्ठतेरात्वं प्राप्नोति । तस्माद् 'ग्लाजिस्थश्च क्स्नुः' इत्याकारप्रश्लेषः कृतः 'क्स्नुप्रत्ययान्तस्य तिष्ठतेराकार एव यथा स्याद्, यदन्यत् प्राप्नोति तन्मा भूत्' इत्येवमर्थः । ततश्च तेनैव सिद्धत्वात् स्थास्नुशब्दस्याकिञ्चित्करमिह गकारप्रश्लेषवर्णनमिति । कामयत इति । 'कमेर्णिङ्' । अत्र 'अत उपधायाः' इति वृद्धेः प्रतिषेधो न भवति । लैगवायन इति । लिगुशब्दात् 'नडादिभ्यः फक्' इति फकि कृते 'ओर्गुणः' इति गुणस्य प्रतिषेधो न भवति । ननु चोकार इगेव, तदयुक्-

*मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते*। संक्रमो नाम गुणवृद्धिप्रतिषेधविषयः । परिमृजन्ति, परिमार्ज्जन्ति; परिमृजन्तु, परिमार्ज्जन्तु ।

पदमञ्जरी

त्यादि। इह त्रिमुनि व्याकरणम्, यथोत्तरं च मुनीनां प्रामाण्यमिति दर्शनस्थितिस्तेन सूत्रकारेणानुक्तं वार्त्तिककार आह, 'तदुक्तं च दूषयति, एवं भाष्यकारो वार्तिककारेण'[1] । व्याख्यातृत्वमपि द्वयोश्चास्तीत्येतावत्, 'यस्मिन्विधिस्तदादावल्ग्रहणे' इत्यनेन तदादिविधौ सिद्धेऽप्यादिग्रहणं मुख्येऽजादौ यथा स्याद् व्यपदेशिवद्भावेनाजादौ मा भूत् । तुन्दपरिमृजः, यूयं ममृज, त्वया ममृजे । *संक्रमो नामेत्यादि* ।

न्यासः

मिदं प्रत्युदाहरणम्, नैतदस्ति; अत्र हि चकारः क्रियते 'इकः' इत्यनुकर्षणार्थः । तत्र चकारेणानुकर्षणसामर्थ्यादिक इत्येतदर्थपदार्थतामुत्सृज्य स्वरूपपदार्थतामनुभवति, अन्यथा हि यदि चकारेणाप्यनुकृष्यमाणमर्थपदार्थकमेव स्यात् तदनुकर्षणार्थं चकारकरणमनर्थकं स्यात्; अर्थपदार्थस्य स्वरितत्वादेवानुवृत्तिसिद्धेः । स्वरूपपदार्थके च तस्मिन्निह सन्निहिते सत्ययमर्थो भवति—'इक इत्येवं ये गुणवृद्धी विधीयेते=इक् इतीमं शब्दमुच्चार्य ये गुणवृद्धी विधीयेते, ते क्ङिन्निमित्ते न भवतः' इति । न च लैगवायन इत्यत्र 'इकः' इतीमं शब्दमुच्चार्य गुणो विधीयते, इक्परिभाषायास्तत्रानुपस्थानात् । अनुपस्थानं तु साक्षादुकारस्य स्थानिनो निर्देशात् । यत्र हि साक्षात् स्थानी न निर्दिश्यते तत्रासावुपतिष्ठते । ननु यदि स्वरूपपदार्थस्येक इत्यस्येह सन्निधानं स्थानी न निर्दिष्टः स्यात्, ततश्च न ज्ञायते कस्य गुणवृद्धी प्रतिषिध्येते इति । नैष दोषः; सामर्थ्यादिक एव गुणवृद्ध्योः प्रतिषेधोऽयं गम्यते । न ह्यन्यस्येक इतीमं शब्दमुच्चार्य गुणवृद्धी विधीयेते । अथ वा—यद्यपीक्परिभाषा विध्यङ्गशेषभूता, तथापीहासत्यपि गुणवृद्ध्योर्विधाने चकारेणानुकृष्य सन्निधाप्यते । एतदेव हि चकारकरणस्य प्रयोजनं यदिदमिक्परिभाषायाः सन्निधापनम् । ततश्च तस्या उपस्थाने सति यत्रासौ व्याप्रियते तत्रैवायं प्रतिषेधो विज्ञायते । क्व चासौ व्याप्रियते ? यत्र स्थानी साक्षान्न निर्दिश्यते, इह तु निर्दिश्यते स्थानी, तस्मादिक्परिभाषाया व्यापाराभावाद् भवति प्रत्युदाहरणम् । *मृजेरित्यादि* । कथं पुनरिष्यमाणापि सा लभ्यते ? यथा लभ्यते तथा श्रूयताम्—'अचो ञ्णिति' इत्यत्र 'मृजेर्वृद्धिः' इति वर्त्तते, 'जराया जरसन्यतरस्याम्' इत्यतोऽन्यतरस्यांग्रहणञ्च मण्डूकप्लुतिन्यायेनानुवर्त्तते, सा च व्यवस्थितविभाषा । 'अचः' इति योगविभागः क्रियते—मृजेरजादौ संक्रमे विभाषा वृद्धिर्भवति, अन्यत्र न भवत्येव ।

---

1. 'दुरुक्तम्' इति पा० । 2. 'उक्तम्' इति शेषः ।

लघूपधगुणस्याप्यत्र प्रतिषेधः। अचिनवम्, असुनवमित्यादौ लकारस्य सत्यपि ङित्त्वे यासुटो ङिद्वचनं ज्ञापकम्—'ङिति यत्कार्यं तल्लकारे ङिति न भवति' इति॥

## दीधीवेवीटाम्॥ ६॥

दीधीवेव्योरिटश्च ये गुणवृद्धी प्राप्नुतस्ते न भवतः। आदीध्यतम्,

पदमञ्जरी

संक्रामतोऽपक्रामतो गुणवृद्धी अस्मादिति कृत्वा। *लघूपधगुणस्याप्यत्र प्रतिषेध इति*। अत्र सूत्रे लघूपधगुणस्यापि प्रतिषेधः, न तु 'सार्वधातुकार्द्धधातुकयोः' इत्येतस्यैवेत्यर्थः। अनेन निमित्तसप्तम्याः फलं दर्शितम्। *अत्र* इत्यनेन सूत्रे निर्दिश्येते। इह अचिनोदिति ङितो लङस्तिबादेशः, स्थानिवद्भावाद् ङिदिति गुणप्रतिषेधः प्राप्नोति, इह 'अचिनवम्' इति ङितो लङो मिपि तस्यापि स्थानिवद्भावपरम्परया ङित्त्वाद् गुणप्रतिषेधः स्यादित्यत आह—*अचिनवमित्यादि*। यदि ङिति यत्कार्यं तद् ङितो लकारस्यादेशे स्थानिवद्भावात्स्यात्, यासुटो ङिद्वचनमनर्थकं स्याद्; लिङो ङित्त्वादेव तदादेशेषु ङित्कार्यस्य सिद्धत्वात्॥

*दीधीवेवीटाम्*॥ *दीधीवेव्योरिति*। 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना

न्यासः

लघूपधगुणस्याप्यत्र प्रतिषेध इति। एतेन संक्रमत्वं दर्शयति। अन्ये तु—उत्तरसूत्रे 'कणिता श्वः, रणिता श्वः' इत्यनन्तरमनेन ग्रन्थेन भवितव्यम्, इह तु दुर्विन्यस्तकाकुपदजनितभ्रान्तिभिः कुलेखकैर्लिखितमिति वर्णयन्ति। अथ वा—निमित्तसप्तम्या एवेदं फलं दर्शितमिति मन्तव्यम्। अचिनवम्, असुनवमित्यत्र लङो ङित्त्वात् तदादेशस्यापि मिपो ङित्त्वम्। स्थानिवद्भावेन मिपो ङित्त्वात् तदादेशस्याप्यमो ङित्त्वं पूर्ववत्, ततश्च तदाश्रयो विकरणस्य गुणप्रतिषेधः प्राप्नोति। कस्मान्न भवतीत्याह—अचिनवमित्यादि। आदिशब्देनाकरवमित्यादीनां परिग्रहः। लकारस्येति। लकारादेशोऽपि पारम्पर्येण लकारपूर्वकत्वादुपचारेण लकार इत्युक्तः। सत्यपीत्यभ्युपगमे 'हलः श्नः शानज्झौ' इति शानजादेशस्य शित्करणाल्लिङ्गाभावश्यमनुबन्धकार्येषु स्थानिवद्भावो भवतीत्यध्यवसितोऽयमर्थः। अतो ङित्त्वमेवात्र न भवतीति शक्यते वक्तुम्। अभ्युपगम्य तु ङित्त्वमेव परिहार उच्यत इत्येतदनेन सूचयति। यासुटो ङित्ववचनमित्यादि। यदि ङिति यत् कार्यं विधीयते तल्लकारे ङिति स्यात्, ततो लिङ एव ङित्त्वेन चिनुयादित्यादौ गुणप्रतिषेधस्य सिद्धत्वाद् 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति यत् तस्य यासुटो ङिद्वचनं तन्न कुर्यात्, कृतश्च; ततोऽवसीयते—'ङिति यत् कार्यं तल्लकारे ङिति न भवति' इति'।

दीधीवेवीटाम्॥ दीधीवेव्योरिति। 'दीधीङ् दीप्तिदेवनयोः'; 'वेवीङ् वेतिना

आदीध्यकः। आवेव्यनम्, आवेव्यकः। इटः खल्वपि—कणिता-

पदमञ्जरी

तुल्ये' इत्येतयोः। अथ 'दीङ् क्षये' 'धीङ् अनादरे' 'वेञ् तन्तुसन्ताने' वी गत्या-दिषु'–एतेषां ग्रहणं कस्मान्न भवति ? दीङस्तावन्न भवति, 'मीनातिमिनोतिदीङां ल्यपि च' इति चकारेणेज्विषय आत्वविधानात्। वेञोऽपि न भवति, गुणप्राप्त्य-भावात्, नैतदस्ति; चकारस्तावन्मीनातिमिनोत्यर्थः स्यात्, दीङोऽपि ग्रहणं ल्यबर्थं स्यात्, वेञोऽपि प्रवेयमित्यत्र 'ईद्यति' इति ईत्वे कृते गुणः प्राप्नोति। एवं तर्हि चतुर्णां ग्रहणेऽभिप्रेते, असन्देहार्थं 'वीवेधीदीटाम्' इति ब्रूयात्। किञ्च–'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी'। *इटश्चेति*। आर्धधातुकस्येडित्या-गमस्य। ननु धातुसाहचर्यात् 'इट किट गतौ' इत्यस्य धातोर्ग्रहणं युक्तम्, सत्यम्; प्रसिद्ध्यतिशयादागमस्य ग्रहणम्, आगमो हि प्रसिद्धतरः। शास्त्रेऽल्पाच्तरत्वेन पूर्वनिपाताभावाच्च धातुरिट्, दीधीवेव्योस्तु धातुत्वात्प्रकृतित्वाद् 'अभ्यर्हितं च' इति पूर्वनिपातः। अथ दीधीवेव्योः किमर्थं ग्रहणम्, यावता छान्दसावेतौ छन्दसि च दृष्टानुविधिः, दृश्यते च गुणः 'होत्राय वृतः कृपयन्नदीधेत्', 'अधीधयु-र्दाशराज्ञः' इति, अतस्तयोरनर्थकः प्रतिषेधः ? केचिदाहुः—'आदीध्यनमावेव्यनम् इत्युदाहरतो वृत्तिकारस्य नानयोश्छान्दसत्वमभिप्रेतम्, अन्यथा हि छन्दस्येव किंचिदुदाहार्यम्' इति, इदं तु वार्त्तिकविरुद्धम्; यदाह—'दीधीवेव्योश्छन्दोविषय-त्वाद् दृष्टानुविधानाच्च छन्दस्यदीधेददीधयुरिति च गुणदर्शनादप्रतिषेधः' इति। *आदीध्यनमिति*। ल्युटि 'एरनेकाचः' इति यणादेशः। *कणितेति*। 'कणिरणी शब्दार्थौ' लुटि तिपो डादेशस्तासि टिलोपः, कणित्+आ इति स्थिते तकारान्तं

न्यासः

तुल्ये'—इत्येतयोर्ग्रहणम्। ननु च 'दीङ् क्षये', 'धीङ् अनादरे', 'वेञ् तन्तुसन्ताने', 'वी गतिप्रजनकान्त्यसनखादनेषु' इत्येतेषां ग्रहणं कस्मान्न विज्ञायते ? यद्येषां ग्रहण-मभिमतं स्यादसन्देहार्थं 'वीवेधीदीटाम्' इत्येवं न्यासं कुर्यात्, अन्यथा तु कृतम्; तस्मात् पूर्वोक्तयोरेव धात्वोरिह ग्रहणम्। इटश्चेति—'आर्धधातुकस्य' इत्यादिना विहितस्य। अथ 'इट किट कटी गतौ' इत्यस्य ग्रहणं कस्मान्न भवति, युक्तञ्चैतत्, धातुसाहचर्यात् ? नैतदस्ति; इह 'अल्पाच्तरम्' इति इटः पूर्वनिपाते कर्त्तव्ये तद्वि-पर्यासं कुर्वतैतत् सूचितम्—'अन्योऽप्यत्र कश्चिद् विपर्यासो विज्ञेयः' इति। तेन धातु-साहचर्याद्धातुग्रहणे प्राप्ते तद्विपरीतस्यैवागमस्य ग्रहणं विज्ञायते। आदीध्यनमिति। ल्युट्। आदीध्यक इति। ण्वुल्। कणिता श्वः, रणिता श्व इति। 'अण रण कण' इत्यादौ शब्दार्थे धातुवर्गे कणिरणी पठ्येते, ताभ्यां लुटि 'स्यतासी लृलुटोः' इति तासिः, 'लुटः प्रथमस्य' इत्यादिना तिपो डादेशः, टिलोपः, 'आर्धधातुकस्य' इत्यादि-

श्वः, रणिता श्वः। वृद्धिरिटो न संभवतीति लघूपधगुणस्यात्र प्रतिषेधः॥

## हलोऽनन्तराः संयोगः॥ ७॥

भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता हलः संयोगसंज्ञा

### पदमञ्जरी

लघूपधमङ्गमिति प्राप्तस्य गुणस्य प्रतिषेधः। ननु च 'नेड्वशि कृति' इत्यत इडित्यनुवर्तमाने 'आर्धधातुकस्येट्' इति पुनरिड्ग्रहणम् 'इडेव यथा स्याद्, विकारो मा भूद्' इत्येवमर्थं भविष्यति। यद्येवम्; अलावीत्, पिपठिषतेः क्विपि पिपठीरित्यत्र 'अकः सवर्णे दीर्घः' 'र्वोरुपधायाः' इति च दीर्घो न स्याद्। अङ्गप्रकरणे नियमादाङ्ग एव विकारो निवर्त्यते, इह च पिपठिषतेरप्रत्यये नपुंसके 'जसः शी' अतो लोपस्य स्थानिवत्त्वान्नुम्न भवतीति 'सान्तमहतः' इति दीर्घत्वं न भवतीति पिपठिंषि ब्राह्मणकुलानीति भवति॥

*हलोऽनन्तराः संयोगः॥*

अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥

इत्यन्तरशब्दोऽनेकार्थः। इह छिद्रवाचिनो ग्रहणम्; इतरेषामसम्भवात्। न विद्यतेऽन्तरं येषां तेऽनन्तराः=निश्छिद्राः। एतमेवार्थं व्यक्तेन शब्दान्तरेण दर्शयति—*भिन्नजातीयैरज्भिरव्यवहिताः श्लिष्टोच्चारिता इति*। एवम्भूता हि हलो निश्छिद्रा भवन्ति भिन्नजातीयैरिति वचनं तत्रैव व्यवधानप्रसिद्धेः। श्लिष्टोच्चारिता इति वचनादवग्रहेऽपि संज्ञा न भवति-अप्स्वित्यप्सु, विद्यते ह्यत्रान्तरमर्द्धमात्राकालः। *संयोग इति*। यद्येकैकस्य हलः श्लिष्टोच्चारितस्यैषा संज्ञा स्याद्? इह च निर्यायादित्यत्र प्रत्येकं संज्ञित्वे सति रेफे यकारः संयोग इति

### न्यासः

नेट्। अथेटो वृद्धेरुदाहरणं कस्मान्न प्रदर्शितमित्याह—वृद्धिरिटो न सम्भवतीति। अङ्गस्य वृद्धिर्ञ्णिदादौ प्रत्यये विधीयते, इट् चायमार्धधातुकभक्तः। न चार्धधातुकस्याङ्गसंज्ञास्ति ञ्णिदादौ प्रत्यये, तस्मादिटो वृद्धिर्न भवति।

हलोऽनन्तराः संयोगः॥ अन्तरं छिद्रं विवरं वर्णशून्यः काल इत्यर्थः। न विद्यतेऽन्तरं येषां ते तथोक्ताः। भिन्नजातीयैरित्यादि। भिन्नजातीयैरिति वचनं भिन्नजातीयानामेव लोके व्यवधायकत्वदर्शनात्। तथा हि कश्चित् केनचित् किमनन्तरे परे ब्राह्मणकुले इति पृष्टः सन्नाह—नानन्तरे, वृषलकुलमनयोर्मध्ये प्रतिवसतीति। श्लिष्टोच्चारिता इत्यनन्तरस्यैव विवरणम्। निरन्तरोच्चारिता इत्यर्थः। संयोग इति। यद्ये-

भवन्ति । समुदायः संज्ञी । जातौ चेदं बहुवचनम् , तेन द्वयोर्बहूनां च

पदमञ्जरी

'वान्यस्य संयोगादेः' इत्येत्वं स्यात् । समुदायस्य संज्ञित्वे 'अचो रहाभ्याम्' इति यकारस्य सत्यपि द्विर्वचने तस्यासिद्धत्वादेत्वाभावः, इह च संस्कृषीष्ट 'ऋतश्च संयोगादेः' इतीट्, संस्क्रियत इति 'गुणोऽर्तिसंयोगाद्योः' इति गुणः, दृषत्करोतीति ककारसंनिधौ दकारस्य संयोगत्वात् संयोगान्तलोपः स्यात्, शक्ता वस्तेति झलि तकारे परतः 'स्कोः संयोगाद्योः' इति लोपः स्यात्, निर्यात इति 'संयोगादेरातः' निष्ठानत्वं स्यात्; समुदाये तु संज्ञिनि नैते दोषा इत्यालोच्याह—*समुदायः संज्ञीति* । महासंज्ञाकारणमन्वर्थसंज्ञाविज्ञानार्थम्—'संयुज्यन्तेऽस्मिन्मिथो हलः' इति । नैरन्तर्यं च श्रुतं संज्ञिरूपेऽनुप्रविशतीति युक्तम् । प्रत्येकपक्षे तु तदुपलक्षणं स्याद् । अतः समुदाय एव संज्ञी युक्त इति भावः । 'हलः' इति बहुवचननिर्देशाद् द्वयोः संज्ञा न स्यादित्याशङ्क्याह—*जातौ चेति* । च शब्दो यस्मादर्थे, यस्माज्जातौ बहुवचनम्, तेन द्वयोर्बहूनां चेति ।

अथ यत्र बहवो हलः संश्लिष्टास्तत्र किं द्वयोर्बहुनां चाविशेषेण संज्ञा ? आहोस्विद्बहूनामेव ? यदि बहूनामेव, इह 'मस्जिनशोर्झलि' इत्यन्त्यादचः परे नुमि मनुस्ज् इति स्थिते नसजानामेका संज्ञा, न तु सजयोरिति 'स्कोः संयोगाद्योः' इति सलोपो न स्यात्, नैष दोषः मस्जेरन्त्यात्

न्यासः

कैकस्यैव श्लिष्टोच्चारितस्य हलः संज्ञा स्यादिह निर्वायाद् निर्यायादिति 'वान्यस्य संयोगादेः' इत्येत्वं स्यात्, इह च संस्क्रीष्टेति 'ऋतश्च संयोगादेः' इतीट्, इह च संस्क्रियत इति 'गुणोऽर्तिसंयोगाद्योः' इति गुणः—इत्येवमादयोऽन्येऽपि बहवो दोषाः प्रत्येकं हलां संज्ञित्वे भाष्य उद्भाविताः । यद्यपि तत्रैव ते कथञ्चित् प्रयासेन परिहृताः, तथापि यस्तु तत्परिहारेण प्रतिपत्तौ साध्यायां प्रतिपत्तिगौरवदोष आपद्यते सोऽपरिहार्य एव । समुदाये तु संज्ञिनि दोषाशङ्कापि नास्ति । तस्मात् स एव संज्ञी युक्त इत्यालोच्याह—समुदायः संज्ञीति । ननु च यत्र सहभूतानां कार्यमिच्छति तत्र यत्न आरभ्यते, यथा—'उभे अभ्यस्तम्' इति उभेग्रहणं करोति, न चेह कश्चिद् यत्नः कृतः, तत् कथं समुदायस्य संज्ञा लभ्यते ? इहापि कृत एव यत्न इत्यदोषः । कः पुनरसौ ? महत्याः संज्ञायाः करणम् । 'लघ्वर्थं हि संज्ञाकरणम्' इति महत्याः संज्ञायाः करणं प्रयोजनमन्तरेण न सम्भाव्यते । तस्मान्महानत्र संज्ञीत्येतत् सूचयितुं महती संज्ञा कृतेति गम्यते । तथा चोक्तम्—'इङ्गितेनोन्मिषितेन महता वा सूत्रप्रबन्धेनाचार्याणामभिप्रायो लक्ष्यते' इति । एवञ्च महान् संज्ञी भवति । यदि समुदायः संज्ञी भवति, नैकैको हल् । तस्मादुपपन्नमेतत् समुदायः संज्ञीति । 'हलः' इति बहुवचननिर्देशाद् द्वयोः संज्ञा न सिध्यतीति यश्चोदयेत् तं प्रत्याह—जातौ चेत्यादि । च शब्दो यस्मादर्थे ।

संयोगसंज्ञा सिद्धा भवति। अग्निरिति ग-नौ। अश्व इति श-वौ। कर्णं इति र-णौ। इन्द्रश्चन्द्रो मन्द्र इति न-द-राः। उष्ट्रो राष्ट्रं भ्राष्ट्रमिति ष-ट-राः। तिलान्स्त्र्यावपतीति न-स-त-र-याः, न-त-स-त-र-या वा।

हल इति किम्? तितउच्छत्रम्। संयोगान्तस्य लोपः स्यात्।

**पदमञ्जरी**

पूर्वं नुमेषितव्यः, मग्न इत्युपधालोपो यथा स्यात्; अन्यथा द्वयोस्संज्ञाश्रयेण सत्यपि संयोगादिलोपे तस्यासिद्धत्वान्नलोपो न स्याद्। इह तर्हि निर्ग्लेयात्, संस्वरिषीष्ट, संस्वर्यते, निर्ग्लान इति एत्वेड्गुणनिष्ठानत्वानि न स्युः? अस्तु तर्ह्यविशेषेण, कुतः? निरिच्छिद्रत्वस्याविशेषात्! न च द्विर्वचनन्यायेन समुदायस्यैव स्यादिति वाच्यम्; यथा द्विर्वचनं समुदायावयवैकाचोर्युगपत् कर्त्तुमशक्यम्, नैवमत्राशक्तिः, यथा च समुदाये द्विरुक्तेऽवयवा अपि द्विरुक्ता भवन्ति—वृक्षः प्रचलन् सहावयवैः प्रचलतीति न्यायेन, न च तथेह समुदाये प्रवृत्तया संज्ञयाऽवयवानां तत्कार्यसिद्धिः। अतो नायं द्विर्वचनन्यायस्य विषयः। अतोऽविशेषेण द्वयोर्बहूनां चेति स्थितम्। यद्येवम्, इन्द्रमिच्छति इन्द्रीयति, ततः सन् इन्दिद्रीयिषतीत्यत्र द्वौ संयोगौ—नदौ, दरौ च; तत्र 'न न्द्राः' इति प्रतिषेधो नकारवद्दकारस्यापि स्यात्। न वाज्विधेः, अजादेरिति वर्त्तते, तत्र कर्मधारयात् पञ्चमी, आदेरचः परे नदरा न द्विरुच्यन्त इत्यर्थः। *अग्निरित्यादीनि* रूपोदाहरणानि। *तिलान्स्त्र्यावपतीति*। 'ह्रे मपरे वा' इति वर्त्तमाने 'ङः सि धुट्' इति च 'नश्च' इति धुट् चर्त्वम्। तत्र यदा न धुट्, तदा नसतरयाः; यदा धुट् तदा नतसतरयाः। *तितउच्छत्रमिति*। 'तनोतेर्डउः सन्वच्च' इति डउप्रत्ययः, व्यस्तोच्चारणसामर्थ्याद् गुणाभावः,

**न्यासः**

यस्माजातौ बहुवचनं तेन द्वयोर्बहूनां च संयोगसंज्ञा सिद्धा भवति। अग्निरित्यादिकं रूपोदाहरणं द्रष्टव्यम्। तिलान्स्त्र्यावपतीत्यादि—'ह्रे मपरे वा' इत्यतो वेति वर्त्तमाने, 'ङः सि धुट्' इत्यतो धुडिति च, 'नश्च' इति पक्षे धुट्, 'खरि च' इति च तकारः। तत्र यदा धुण् नास्ति तदा—नसतरया इति। यदा त्वस्ति तदा—नतसतरयाः। तितउच्छत्रमिति। 'तनोतेर्डउः सन्वच्च' इति डउप्रत्यये टिलोपे द्विर्वचने च कृते रूपम्। संयोगान्तस्य लोपः स्यादिति। यद्यत्राकारस्योकारेण संज्ञा स्यादित्यभिप्रायः। न च लोपे सत्युकारोपदेशस्य वैयर्थ्यमाशङ्कनीयम्। यत्र पदसंज्ञा नास्ति तितउनीत्यादौ, तत्र श्रूयमाणत्वात्। पचतीति रूपप्रत्युदाहरणम्, पनसमिति कार्यप्रत्युदाहरणम्। स्कोः संयोगाद्योरिति लोपः स्यादिति। यदि सकारनकारयोः सान्तरयोरपि संयोगसंज्ञा स्यादिति भावः।

अनन्तरा इति किम्? पचति। पनसम्। 'स्कोः संयोगाद्योः' इति लोपः स्यात्।

संयोगप्रदेशाः—'संयोगान्तस्य लोपः' इत्येवमादयः॥

मुखनासिकावचनोऽनुनासिकः॥ ८॥

मुखसहिता नासिका मुखनासिका, तया य उच्चार्यते वर्णः सोऽनुनासिकसंज्ञो भवति। 'आङोनुनासिकश्छन्दसि'—अभ्रआँ अपः, गभीरआँ उग्रपुत्रे। चनआँ इन्द्रः।

पदमञ्जरी

सन्वद्भावाद् द्विर्वचनमित्वं च, टिलोपः। *संयोगान्तलोपः स्यादिति*। यद्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यादिति भावः। ननु च 'छे च' इति तुकि कृते तकारः पदान्तो न संयोगः, नैतदस्ति, 'छे च' इत्ययं तुग् ह्रस्वमात्रभक्तो न तदन्तग्रहणेन गृह्यत इति पदं संयोगान्तमेव। *पचतीति* रूपप्रत्युदाहरणम्। *पनसमिति* कार्यप्रत्युदाहरणम्। *स्कोस्संयोगाद्योरिति लोपः स्यादिति*। यदि सकारककारयोः सान्तरयोरपि संयोगसंज्ञा स्यादिति भावः॥

*मुखनासिकावचनोऽनुनासिकः*॥ यद्यत्र 'मुखं च नासिका च' इति द्वन्द्वः स्याद्, 'द्वन्द्वश्च प्राणितूर्य' आदिसूत्रेणैकवद्भावः स्यात्, ततश्च 'स नपुंसकम्' इति नपुंसकत्वे, 'ह्रस्वो नपुंसके' इति ह्रस्वत्वे च 'मुखनासिकवचनः' इति प्राप्नोतीत्युत्तरपदलोपिनं तत्पुरुषं दर्शयति—*मुखसहिता नासिकेति*। *तयोच्चार्यत इति*। एतेन 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युटं दर्शयति। '*तया*' इति करणे कर्त्तरि वा तृतीया; करणस्यैव कर्तृत्वेन विवक्षणात्। सूत्रेऽपि 'मुखनासिकावचनः' इति

न्यासः

मुखनासिकावचनोऽनुनासिकः॥ मुखसहिता नासिका मुखनासिका—इत्यनेन मुखनासिकाशब्दोऽयं तत्पुरुषः, न द्वन्द्व इति दर्शयति। तत्पुरुषस्तु मयूरव्यंसकादित्वाद् वेदितव्यः। यदि च मुखञ्च नासिका चेति द्वन्द्वः स्यात्, प्राणितूर्यादिसूत्रेणैकवद्भावः स्यात्। ततश्च 'स नपुंसकम्' इति नपुंसकत्वं स्यात्। तस्मिंश्च सति 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वं प्रसज्येतेति भावः। ननु चोच्यते—अनयेति करणे ल्युटि कृते, तदन्तात् 'टिड्ढाणञ्' इत्यादिना ङीपा भवितव्यम्, ततश्च तदन्तेन बहुव्रीहौ 'मुखनासिकावचन' इति निर्देशो नोपपद्यते, नैतदस्ति; वचनशब्दोऽयं 'कृत्यल्युटो बहुलम्' इति बहुलवचनात् कर्मसाधनः—उच्यत इति वचनो वर्णे वर्त्तते, न नासिकायाम्। अत एवाह—तया य उच्चार्यत इति। 'उच्चार्यते' इति कर्मणि लकारः। एवं कृत्वा 'मुखनासिकावचन' इति षष्ठीसमासोऽयं वेदितव्यः,

मुखग्रहणं किम्? अनुस्वारस्यैव हि स्यात्। नासिकाग्रहणं किम्? कचटतपानां मा भूत्।

पदमञ्जरी

'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासः, षष्ठीसमासो वा। *अनुस्वारस्यैव हि स्यादिति*। तस्मिन्नुच्चार्यमाणे नासिकाया एव व्यापारो न मुखस्य, तेन तस्यैव स्याद्, न तु ञमङणनानाम्, नाप्यभ्र आँ अप इत्यस्य; तदुच्चारणे मुखस्यापि व्यापारादित्येवकारेण दर्शयति। ननु यथा 'प्रासादवासिन आनीयन्ताम्' इत्युक्ते ये प्रासाद एव निवसन्ति, ये च प्रासादे भूमौ च, ते द्वयेऽप्यानीयन्ते, प्रासादवासान्वय उभयेषामस्तीति, तथेहापि 'नासिकावचनः' इत्युक्ते यः केवलनासिकावचनः, यश्च मुखनासिकावचनः—उभयोरपि ग्रहणं भविष्यति; नासिकान्वयस्य विवक्षितत्वात्। तत्किमुच्यतेऽनुस्वारस्यैव हि स्यादिति, अनुस्वारस्यापि हि स्यादिति तु वक्तव्यम्? उच्यते; इह त्रीणि दर्शनानि—कृत्स्न एवानुनासिको मुखेन नासिकया चोच्चार्यते, पूर्वो भागो मुखेन परो नासिकया, विपरीतं वा। नासिक्यभागानुरागाच्चेतरोऽपि भागस्तद्वदेव भासते इति। तत्रोत्तरस्मिन्दर्शनद्वये नासिकान्वयस्य भागविषयत्वान्नासिकावचनग्रहणेनोभयवचनो न गृह्यते इति सुष्ठूक्तम्—अनुस्वारस्यैव हि स्यादिति। *कचटतपानां मा भूदिति*। ते हि मुखेनैवोच्चार्यन्ते

न्यासः

न बहुव्रीहिः। अनुस्वारस्यैवेति। अनुस्वारे ह्युच्यमाने नासिकायाश्च व्यापारो न मुखस्य; तेन तस्यैव स्यात्, न तु स्याद् ञमङणनानाम्; नापि अभ्र आँ अप इत्यत्रार्द्धचन्द्राकृतेर्वर्णस्य; तदुच्चारणे मुखस्यापि व्यापारात्। ततश्च 'यरोऽनुनासिके' इत्येतस्मिन् कार्ये कर्त्तव्येऽनुस्वारस्यैव ग्रहणं स्यात्, न तु ङकारादीनामित्यभिप्रायः। ननु च 'प्रासादवासि'न्यायेन तेषामपि भविष्यति, यथा—'प्रासादवासिन आनीयन्ताम्' इत्युक्ते ये प्रासाद एव निवसन्ति, तेषामपि ग्रहणं भवति, येऽपि प्रासादे भूमौ च उभयत्र वसन्ति तेषामपि। यथा ह्युभय आनीयन्ते, तथेहापि 'नासिकावचनः' इत्येतावत्युच्यमाने नासिकावचनस्यानुस्वारस्य मुखनासिकावचनानाञ्च ङकारादीनां ग्रहणं भविष्यति, ततश्चानुस्वारस्य हि स्यादित्ययुक्तमुक्तम्। एवन्तु वक्तव्यम्—अनुस्वारस्यापि हि स्यादिति, नैतदस्ति; इह हि त्रीणि दर्शनानि सम्भवन्ति—'समस्त एवानुनासिको वर्णो नासिकावचनो मुखवचनश्च' इत्येकं दर्शनम्; 'पूर्वभागस्त्वस्य मुखवचनः, उत्तरो नासिकावचनः' इति द्वितीयम्; 'उत्तरो भागो मुखवचनः, पूर्वो भागो नासिकावचनः' इति तृतीयम्। उभयोरप्यनन्तरयोर्दर्शनयोर्नासिकामुखवचने भागे तथानुरागं करोति यथाऽसावपि नासिकावचनभाग इव लक्ष्यते। तत्र यदेतदनन्तरदर्शनद्वयम्, तस्यान्यतरत् पाणिनेरभिमतम्। न चास्मिन् प्रासादवासिन्याय

अनुनासिकप्रदेशाः—"आङोऽनुनासिकश्छन्दसि" इत्येवमादयः।

**तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥**

'तुल्य'शब्दः सदृशपर्यायः, आस्ये भवमास्यं ताल्वादिस्थानम्,

**पदमञ्जरी**

इत्यसति नासिकाग्रहणे तेषामेव स्यात्, ततश्च तप्तुंमिति 'अनुदात्तोपदेश' इत्यनुनासिकलोपः स्यात्, 'ओदनपक्' इति 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः स्यादिति महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्—'अनु पश्चान्मुखस्य नासिका व्याप्रियते यस्मिन्', 'नासिकाया वा पश्चान्मुखं व्याप्रियते यस्मिन्' इति। तेन भागविषयो नासिकाव्यापार इति सूचनात् प्रासादवासिन्यायस्यायमविषय इत्युक्तं भवति।

*तुल्यास्यप्रयत्नं सवर्णम्* ॥ तुल्यशब्दोऽयं यद्यपि तुलया संमितं तुल्यमिति 'नौवयोधर्म' इति यतमुत्पाद्य व्युत्पाद्यते, तथापि व्युत्पत्त्यर्थमेव तुलोपादीयते, रूढशब्दस्त्वयं प्रवीणः, प्रतिलोमादिवदित्याह—*तुल्यशब्दः सदृशपर्याय* इति।

**न्यासः**

एकत्राप्यवतरति। यदि हि ङकारादयो नासिकयाऽपि साकल्येनोच्चार्येरन्, मुखेनापि; ततः प्रासादवासिन्यायेन 'नासिकावचनः' इत्येतावत्युक्ते तेषामपि ग्रहणं स्यात्। न चैवं भागस्यैव; तेषां नासिकया मुखेन चोच्चारणात्। तत्, असति मुखग्रहणे तेषां ग्रहणं न स्यात्, तदभावे च संज्ञा न स्यादिति युक्तमुक्तम्—अनुस्वारस्यैव हि स्यादिति। कचटतपानां मा भूदिति। एते हि ककारादयो मुखेनैवोच्चार्यन्ते, न नासिकया; ततश्चासति नासिकाग्रहणे तेषामेव स्यात्। एवञ्च 'शक्तः' 'सुप्तम्' इत्यत्र 'अनुदात्तोपदेशवनति' इत्यादिना लोपः प्रसज्येत। 'ओदनपक्' इत्यत्र 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घत्वम्।

अथ किमर्थं महती संज्ञा क्रियते? अनु पश्चान्नासिका व्याप्रियते यस्मिन्, अथ वा—अनु पश्चान्नासिकाया व्याप्रियते यस्मिन् असौ 'अनुनासिकः' इत्यन्वर्थसंज्ञा यथा विज्ञायेतेत्येवमर्थम्। किं पुनस्तत्, यतः पश्चान्नासिका व्याप्रियते यस्मिन्, यद्वा—नासिकायाः पश्चाद् व्याप्रियते? मुखस्य तु प्रकृतत्वात् तदेव गम्यते। तत्र ये ते द्वे दर्शने, ययोः पाणिनेरन्यतरदभीष्टम्, तयोः पूर्वस्मिन् नासिका मुखात् पश्चाद् व्याप्रियते, उत्तरत्र मुखं नासिकायाः। अन्वर्थसंज्ञाकरणं तु पूर्वोक्तयोर्दर्शनयोरन्यतराभ्युपगमसूचनार्थम्। तदभ्युपगमसूचनं तु प्रासादवासिन्यायमाश्रित्य मुखग्रहणं ये प्रत्याचक्षीरन्, तेषां निराकरणार्थम्।

**तुल्यास्यप्रयत्नं सवर्णम्** ॥ तुलया सम्मितं तुल्यमिति 'नौवयोधर्म' इत्यादिना यतमुत्पाद्य तुल्यशब्दो व्युत्पाद्यते। न च प्रयत्नस्य तुलया सम्मितत्वं सम्भवति, ततश्चा-

पदमञ्जरी

ननु 'नौवयोधर्म' इत्यत्र वक्ष्यति—'यथा तुला द्रव्यान्तरं परिच्छिनत्ति, तथा तुल्यमपि सादृश्येन परिच्छिनत्तीत्येतत्तुलया तुल्यस्य साधर्म्यम्' इति, सत्यम्; न ह्येवं लौकिकाः प्रतियन्ति। तथा हि—'तुल्य' इत्युक्ते 'सदृश' इति प्रत्ययो भवति, न तु कश्चिदवयवार्थः प्रतीयते। *आस्ये भवमास्यमिति*। लोकसिद्धं ताव-दास्यमोष्ठात्प्रभृति प्राक्काकलकाद्—अस्यन्ते क्षिप्यन्तेऽनेन वर्णा इति कृत्वा। काकलकं नाम ग्रीवाया उन्नतप्रदेशः। इह तु तस्मिन्नास्ये भवमास्यमित्यर्थः। 'दिगादिभ्यो यत्' 'शरीरावयवाच्च' इति यत्प्रत्ययः। किं पुनस्तदित्याह—*ताल्वादिस्थानमिति*। यस्मिन्वर्णा निष्पद्यन्ते तत् स्थानम्। आदिशब्देन नासिका-दीनां ग्रहणम्। नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तम्, किं तर्हि ? अन्तरास्ये चर्मविततमस्ति, पणवचर्मवत्, तत्संबद्धा रेखा नासिका, तस्यां वायुनाऽभिहतायां वर्णोत्पत्तिः। यदि पुनर्लौकिकमास्यं गृह्येत, तदा तुल्यास्यप्रयत्नमिति द्वन्द्वगर्भो बहुव्रीहिः स्यात्—आस्यं च प्रयत्नश्च आस्यप्रयत्नौ, तौ तुल्यौ यस्येति; त्रिपदो वा बहुव्रीहिः—तुल्य आस्य प्रयत्नो यस्येति। तत्र द्वन्द्वगर्भे आस्यग्रहणं व्यर्थं स्यात्, सर्वेषां हि तत्तुल्यम्। विसर्जनीयस्यैकीयमतेनोरस्यत्वात् सावर्ण्याभावेऽपि न दोषः, त्रिपदे तु बहुव्रीहावास्येन प्रयत्नस्य विशेषितत्वादास्याद्बाह्याः प्रयत्ना ह्रापिता भवन्ति, किन्तु ताल्वादिस्थानं तुल्यत्वेनाविशेषितं स्यात्। ततश्च भिन्नस्थानानामपि जबगडदानां सवर्णसंज्ञा प्राप्नोति। तत ऊर्ग्ंज इति 'झरो झरि' इति गकारस्य जकारे लोपः स्याद्। अतस्तद्धितान्तस्यैव ग्रहणम्। तत्रापि

न्यासः

सम्भवद्विशेषणमिति यश्चोदयेत्, तं प्रत्याह—तुल्यशब्द इत्यादि। एवं मन्यते—व्युत्पत्त्यर्थं तु केवलं तुलोपादीयते, न त्वत्र तुलार्थो विद्यते, न वा संमितार्थः। सदृशपर्यायो ह्ययं तुल्यशब्दः। तथा हि—'तुल्य' इत्युक्ते 'सदृश' इति पर्यायो भवति, न तु तुलया संमित इति। आस्यशब्दोऽयं ण्यदन्तोऽप्यस्ति। अस्यते क्षिप्यतेऽन्नमनेनेति 'कृत्यल्युटो बहुलम्' इति करणे ण्यत्। आस्यम् = मुखम्। तत् पुनः ओष्ठात्प्रभृति प्राक् काकलकात्। काकलकं नाम ग्रीवायामुन्नतप्रदेशः, लोके यः कण्ठमणिरित्युच्यते। तद्धितान्तोऽप्यास्यशब्दोऽस्ति—आस्ये भवमिति 'शरीरावयवाच्च' इति यति कृते, 'यस्येति च' इत्यकारलोपे 'हलो यमां यमि लोपः' इति यलोपे च कृते आस्यमिति। एतच्च मुखान्तर्वर्त्तिनां ताल्वादीनां वाचकम्। तत्र यदि पूर्वस्या-स्यशब्दस्येदं ग्रहणं स्यात्, कचटतपानामपि सवर्णसंज्ञा स्यात्, ण्यदन्तस्यास्यशब्दस्य वाच्येऽर्थे तेषां तुल्यत्वात् प्रयत्नविषयस्य। इममतद्धितान्तस्यास्यशब्दस्य ग्रहणे दोषं दृष्ट्वा तद्धितान्तस्येदं ग्रहणमिति दर्शयन्नाह—आस्ये भवमास्यमिति। किं पुनस्तदि-त्याह—ताल्वादिस्थानमिति। यस्मिन् वर्णा निष्पाद्यन्ते, तत् स्थानम्। आदिशब्देन

प्रयतनं प्रयत्नः—स्पृष्टतादिर्वर्णगुणः। तुल्य आस्ये प्रयत्नो यस्य वर्णस्य

पदमञ्जरी

यदि द्वन्द्वगर्भो बहुव्रीहिः स्यात्, स्थानेन प्रयत्नो न विशेषितः स्यात्; ततश्च ककारङकारयोर्मिथः सवर्णसंज्ञा न स्यात्; बाह्यप्रयत्नस्य भिन्नत्वात्। ततश्च शङ्कितेति 'अनुस्वारस्य ययि परसवर्णः' इति ङकारो न स्यात्। अथ सत्यपि बाह्यप्रयत्नभेदे आभ्यन्तरस्य प्रयत्नस्याभेदमाश्रित्य संज्ञा स्यात्, चकारशकारयोरपि सत्याभ्यन्तरभेदे बाह्याभेदमाश्रित्य सवर्णसंज्ञा प्राप्नोति। ततश्च अरुश्च्योततीति वक्ष्यमाणप्रत्युदाहरणं नोपपद्यते इतीमं दोषं दृष्ट्वा त्रिपदोऽयं बहुव्रीहिरिति दर्शयति—*तुल्य आस्ये प्रयत्नो यस्येति*। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेति 'अमूर्द्धमस्तकात्' इत्यलुङ्न भवति। नन्वस्मिन्नपि पक्षे भिन्नविभक्तिकत्वात् प्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं स्याद्; नैवात्रास्यं तुल्यतया विशेष्यते, भेदनिबन्धना हि तुल्यता। न च कखगघङां भिन्नं स्थानम्, एकत्वात्कण्ठस्य, किन्तु तद्धितान्तस्यास्यशब्दस्याश्रयणसामर्थ्यादास्य इत्येकत्वं विवक्षितम्। तेनैकस्मिन्नेव ताल्वादिके स्थाने यः प्रयत्नः, स तुल्यो ययोरित्याश्रयणान्न कश्चिद्दोषः। *समानजातीयं प्रतीति*। एतच्च संज्ञाविधानसामर्थ्याल्लभ्यते, अन्यथा यत्किञ्चनवर्णापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं स्यात्, सवर्णसंज्ञाविधानमनर्थकं स्यात्। न च रेफोष्मनिवृत्त्यर्थं वचनम्; रेफस्यापि रेफः सवर्ण एव, एवमूष्मस्वपि द्रष्टव्यम्। संबन्धिशब्दत्वाद्वा सम्बन्धिशब्दो हि तुल्यास्यप्रयत्नशब्दः, ततश्च यथा तुल्याय कन्या दातव्येत्युक्ते दात्रा तुल्यायेति गम्यते, तथेहापि। अथ वा, महती संज्ञा क्रियते; अन्वर्था यथा विज्ञायेत—समानोऽस्य वर्णः सवर्ण इति। यदि च समानजातीयमेव प्रति सवर्णसंज्ञा भवति, एवं समानोऽस्य वर्णो भवति।

न्यासः

नासिकादीनां ग्रहणम्। ननु च नासिका मुखाद्बहिर्वृत्तिरास्यं न भवति, नैतदस्ति; न हि मुखाद् बहिर्वर्त्तिनी नासिकेयं विवक्षिता, तस्यां वर्णानामनिष्पत्तेः। का तर्हि? अन्तरास्ये चर्म विततमस्ति पणवचर्मवत्, तत्सम्बद्धा रेखा, यस्यां वायुनाभिहन्यमानायां वर्णा निष्पद्यन्ते सेह नासिका विवक्षिता। कथं पुनर्विज्ञायते तद्धितान्तस्यास्यशब्दस्येदं ग्रहणमिति? आस्यग्रहणसामर्थ्यात्। यदि ह्यतद्धितान्तस्य ग्रहणं स्याद्, आस्यग्रहणमनर्थकं स्यात्। सर्वेषामेव हि तद्वाच्य एवार्थे प्रयत्नस्तुल्यः। नास्त्येव हि सः, यस्य व्यवच्छेदार्थमास्यग्रहणं स्यात्। ननु च विसर्जनीयस्य व्यवच्छेदनार्थमास्यग्रहणं स्यात्, तस्य हि मुखाद्बहिर्वर्त्त्युरः स्थानम्, नैतदस्ति; न हि विसर्जनीयस्य सत्यसति वा सवर्णत्वे प्रयोजनमस्ति, नापि दोषः। स्पृष्टतादिरिति। आदिशब्देन ईषत्स्पृष्टतादीनां ग्रहणम्। वर्णगुण इति। अकारादीनां वर्णानां धर्म इत्यर्थः।

**येन वर्णेन सह स समानजातीयं प्रति सवर्णसंज्ञो भवति ।**

**न्यासः**

तुल्य आस्ये प्रयत्नो यस्येति । एतेन तुल्यास्यप्रयत्नशब्दस्त्रिपदोऽयं बहुव्रीहिरिति दर्शयति । व्यधिकरणानामपि गमकत्वाद् बहुव्रीहिर्भवत्येव; यथा—कण्ठेकालः, उरसिलोमा इति । अथ द्वन्द्वगर्भबहुव्रीहिः कस्मान्नाश्रीयते—आस्यञ्च प्रयत्नश्च आस्यप्रयत्नौ, तौ तुल्यौ यस्य तत् तुल्यास्यप्रयत्नमिति ? एवं मन्यते—द्वन्द्वगर्भबहुव्रीहावाश्रीयमाणे ताल्वादिना स्थानेन प्रयत्नो न विशेषितः स्यात् । ततश्च ककारङकारयोर्मिथः सवर्णसंज्ञा न स्यात्, बाह्यस्य प्रयत्नस्य भिन्नत्वात् । ककारस्य विवृतकण्ठत्वादिर्बाह्यः प्रयत्नः । ङकारस्य संवृतकण्ठत्वादिः । असत्याञ्च सवर्णसंज्ञायां शङ्कितेत्यत्र 'अनुस्वारस्य ययि परसवर्णः' इति ङकारो न स्यात् । अथ सत्यपि बाह्यस्य प्रयत्नस्य भेद आभ्यन्तरः स्पृष्टताख्योऽनयोस्तुल्यः प्रयत्नः, तं समाश्रित्य सवर्णसंज्ञा भविष्यति ? यद्येवम्, शकारचकारयोरपि सत्यप्याभ्यन्तरयोर्विवृततास्पृष्टतयोः प्रयत्नयोर्भेदे योऽनयोर्बाह्यः प्रयत्नस्तुल्यो विवृतकण्ठत्वादिस्तदाश्रया सवर्णसंज्ञा स्यात् । ततश्च अरुश्च्योततीति वक्ष्यमाणं प्रत्युदाहरणं नोपपद्यते । त्रिपदे तु बहुव्रीहौ ताल्वादिस्थानेन प्रयत्नो विशिष्यते । तेन बाह्यं प्रयत्नमुत्सृज्याभ्यन्तर एव स्पृष्टतादिर्गृह्यते । स एव हि ताल्वादावास्ये सम्भवति, नेतरः । आभ्यन्तरस्य प्रयत्नस्य ग्रहणे सति सत्यपि बाह्यप्रयत्नभेदे भवत्येव ककारङकारयोः सवर्णसंज्ञा; आभ्यन्तरप्रयत्नस्य तुल्यत्वात्, तस्यैव चेह ग्रहणात् । न च चकारशकारयोः सत्यपि बाह्यस्य प्रयत्नस्य तुल्यत्वे सवर्णसंज्ञा प्रसजति; तस्येहाग्रहणात्, यस्य च ग्रहणं तस्य चासमानत्वात् । तस्मात् त्रिपद एव बहुव्रीहिराश्रयितुं युक्तः; न द्वन्द्वगर्भ इति । यदि तर्हि त्रिपदो बहुव्रीहिराश्रीयते, भिन्नविभक्तिकत्वादप्राधान्याच्चास्यं तुल्यत्वेनाविशेषितं भवति, ततश्च भिन्नस्थानानामपि सवर्णसंज्ञा प्राप्नोति ? नैष दोषः, यदाधेयं प्रति यदधिकरणमुपादीयते, तदाधेयतुल्यतयैव तत् तुल्यमिति विज्ञायते । तथा हि—देवदत्तयज्ञदत्तयोस्तुल्यं कांस्यपात्र्यां भोजनमित्युक्ते कांस्यपात्र्यपि तयोस्तुल्येति गम्यते । यं प्रति यस्तुल्यास्यप्रयत्नः, स तमेव प्रति सवर्णसंज्ञो भवतीत्येषोऽर्थो यतो वचनाल्लभ्यत इह तन्नास्ति । ततश्च यो यं प्रति तुल्यास्यप्रयत्नः, स ततोऽन्यमपि प्रति सवर्णसंज्ञः स्यादिति चोद्यमाशङ्क्याह—समानजातीयं प्रतीति । समानजातीयो यं प्रति यस्तुल्यास्यप्रयत्नः, तं प्रति स सवर्णसंज्ञो भवति, न ततोऽन्यम् । एतच्च तुल्यास्यप्रयत्नशब्दस्य सवर्णशब्दस्य च सम्बन्धिशब्दत्वाल्लभ्यते । सम्बन्धिशब्दो ह्यन्तरेणापि शब्दान्तरसन्निधिं नियतमेव सम्बन्धिनमुपस्थापयति, यथा—पितरि शुश्रूषितव्यमिति, नोच्यते स्वस्मिन्निति, सम्बन्धाच्चैतदवगम्यते—'यो यस्य पिता' इति, तथेहापि । यद्यपि यो यस्य तुल्यास्यप्रयत्नः, स तं प्रति सवर्णसंज्ञो भवतीति, न चोच्यते, तथापि सम्बन्धात् तुल्यास्यप्रयत्नः समानजातीयमेव प्रति सवर्णसंज्ञो भवतीति गम्यते । अथ वा

चत्वार आभ्यन्तराः प्रयत्नाः सवर्णसंज्ञायामाश्रीयन्ते—स्पृष्टता, ईषत्स्पृष्टता, संवृतता, विवृतता चेति। 'अ अ अ' इति त्रयोऽकारा

### पदमञ्जरी

चत्वार इत्यादि। द्विविधाः प्रयत्नाः—बाह्याः, आभ्यन्तराश्च। तत्राभ्यन्तराश्चत्वारो वृत्तौ दर्शिताः। आभ्यन्तरत्वं पुनरेषाम्—स्थानकरणव्यापारेण; उत्पत्तिकाल एव भावात्। स्थानं तात्वादि, करणं जिह्वाया अग्रोपाग्रमध्यमूलानि। बाह्याः पुनरेकादश—विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्चेति। बाह्यत्वं पुनरेतेषाम्—वर्णनिष्पत्तिकालादूर्ध्वं वायुवशेनोत्पत्तेः। तत्र स्पृष्टकरणाः स्पर्शाः; कादयो मावसानाः स्पर्शाः। स्पृष्टं स्पृष्टतागुणः, करणं कृतिरुच्चारणप्रकारः, स्पृष्टतानुगतं करणं येषां ते तथोक्ताः। एवमन्यत्रापि - ईषत्स्पृष्टकरणा अन्तःस्थाः; यरलवा अन्तःस्थाः। विवृतकरणा ऊष्माणः स्वराश्च; शषसहा ऊष्माणः, स्वराः सर्व एवाचः। वर्गाणां प्रथमद्वितीयाः; शषसविसर्जनीयजिह्वामूलीयोपध्मानीयाः; यमौ च प्रथमद्वितीयौ; विवृतकण्ठाः, श्वासानुप्रदानाः अघोषाः; वर्गयमानां प्रथमेऽल्पप्राणाः, इतरे महाप्राणाः। वर्गाणां तृतीयचतुर्था अन्तःस्थाः, हकारानुस्वारौ,

### न्यासः

समानो वर्णः 'सवर्णः' इत्यन्वर्थसंज्ञेयम्। तेन तुल्यजातीयमेव प्रति सवर्णसंज्ञो भवति। एवं हि समानोऽस्य वर्णो भवति, यदि तमेव प्रति सवर्णसंज्ञो भवति, न विजातीयं प्रति।

चत्वार इत्यादि। द्विविधाः प्रयत्नाः—आभ्यन्तराः, बाह्याश्च। तत्राभ्यन्तराः चत्वारो वृत्तौ दर्शिताः। बाह्यास्त्वेकादश। के पुनस्ते ? विवारः, संवारः, श्वासः, नादः, घोषः, अघोषः, अल्पप्राणः, महाप्राणः, उदात्तः, अनुदात्तः, स्वरितश्चेति। तत्र नाभिप्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्ध्वमाक्रामन्नुरःप्रभृतीनामन्यतमस्मिन् स्थाने प्रयत्नेन विधार्यते, स विधार्यमाणः स्थानमभिहन्ति, ततः स्थानाभिघाताद् ध्वनिरुत्पद्यते। आकाशे सावर्ण्यश्रुतिः सवर्णस्यात्मलाभः। तत्र वर्णध्वनावुत्पद्यमाने यदा स्थानकरणप्रयत्नाः परस्परं स्पृशन्ति, तदा सा स्पृष्टता; ईषद् यदा स्पृशन्ति, तदा सा ईषत्स्पृष्टता; सामीप्येन यदा स्पृशन्ति, सा संवृतता; दूरेण यदा स्पृशन्ति, सा विवृतता—एते चत्वार आभ्यन्तराः प्रयत्नाः। आभ्यन्तरत्वं पुनरेषां स्थानकरणप्रयत्नव्यापारेणोत्पत्तिकाल एव सम्भवात्। तत्र स्पृष्टकरणाः स्पर्शाः। कादयो मावसानाः स्पर्शाः, स्पृष्टता गुणः, करणं कृतिरुच्चारणप्रकारः, स्पृष्टतानुगतं करणं येषां ते स्पृष्टकरणाः। एवमन्यत्रापि वेदितव्यम्। ईषत्स्पृष्टकरणा अन्तःस्थाः। अन्तःस्था यरलवाः। विवृतं करणमूष्मणाम्, स्वराणाञ्च। स्वराः सर्व एवाचः। ऊष्माणः शषसहाः।

पदमञ्जरी

यमौ तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तश्च। वर्गयमानां तृतीया अन्तःस्था अल्पप्राणाः, इतरे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः। तत्र यमा नाम वर्गेष्वादितश्चतुर्णां पञ्चमेषु परतः त एव नासिक्या भवन्ति। तद्यथा—पलिक्क्नीः, चख्ख्नतुः, अग्ग्निः, जघ्घ्नतुः, अप्स्वतीमित्यादि। य एते द्विविधाः प्रयत्नाः, तेषामिह सवर्णसंज्ञायामाभ्यन्तराः स्पृष्टतादयश्चत्वार एवाश्रीयन्ते, न विवारादयो बाह्याः; आस्यग्रहणेन तेषां निवर्त्तितत्वात्। *अ अ अ इत्यादि*। अत्र सवर्णसंज्ञो भवतीति प्रकृतं

न्यासः

अथ बाह्याः प्रयत्नाः किंलक्षणाः? स एव प्राणो नाम वायुरूर्ध्वमाक्रामन् मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलबिलस्य संवृतत्वात् संवारो नाम वर्णधर्म उपजायते, विवृतत्वाद् विवारः, संवृते गलबिलेऽव्यक्तः शब्दो नादः, विवृते श्वासः, उपरिवर्त्तिनौ तौ श्वासनादावनुप्रदानमिति केचिदाचक्षते, वर्णनिष्पत्तेरनु=पश्चात् प्रदीयत इत्यनुप्रदानम्। अन्ये तु ब्रुवते 'अनुप्रदानमनुस्वानो घण्टानिर्ह्रादवत्', यथा—घण्टानिर्ह्रादोऽनुस्वानमनुभवति तथा इति। तत्र यदा स्थानाभिघातजे ध्वनौ नादोऽनुप्रदीयते, तदा नादध्वनिसङ्गाद् घोषो जायते, यदा श्वासोऽनुप्रदीयते, तदः श्वासध्वनिसङ्गादघोषः, महति वायौ महाप्राणः, अल्पवायावल्पप्राणः। यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः, कण्ठविवरस्य चाणुत्वम्, स्वरस्य च वायोस्तीव्रगतित्वाद् रौक्ष्यम् भवति, तमुदात्तमाचक्षते। यदा तु मन्दः प्रयत्नो भवति, तदा गात्रस्य स्रंसनम्, कण्ठबिलस्य महत्त्वम्, स्वरस्य वायोर्मन्दगतित्वात् स्निग्धता भवति, तमनुदात्तमाचक्षते। उदात्तानुदात्तस्वरसन्निकर्षात् स्वरित इत्येवंलक्षणा बाह्याः प्रयत्नाः। बाह्यत्वं पुनरेषां वर्णनिष्पत्तिकालादूर्ध्वम्, वायुवशेनोत्पत्तेः। तत्र वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः। वर्ग्ययमानां प्रथमेऽल्पप्राणाः। इतरे सर्वे महाप्राणाः। वर्गाणाञ्च तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च तृतीयचतुर्थौ संवृतकण्ठा नादानुप्रदाना घोषवन्तः। वर्ग्ययमानां तृतीया अन्तःस्थाश्च अल्पप्राणाः। इतरे सर्वे महाप्राणाः। यथा तृतीयास्तथा पञ्चमाः; आनुनासिक्यमेषामधिको गुणः।

य एवैते द्विप्रकाराः प्रयत्ना बाह्या आभ्यन्तराश्चाख्याताः, तेषामिह सवर्णसंज्ञायां पूर्वोक्ता आभ्यन्तराश्चत्वारः स्पृष्टतादय आश्रीयन्ते, न बाह्या विवारादयः; आस्यग्रहणेन विशेषणेन तेषां व्यावर्त्तितत्वात्। स्पृष्टतादय एव ह्यास्ये भवन्ति, न विवारादयः। यद्येवम्, किमर्थं प्रयत्नग्रहणम्, एतावदस्तु तुल्यास्यमिति, आस्यग्रहणेनैव हि स्पृष्टतादयोऽपि प्रयत्नाः सवर्णसंज्ञायां निमित्तभूतास्ताल्वादिस्थानवल्लभ्यन्त एव, तेषा-

उदात्तानुदात्तस्वरिताः, प्रत्येकं सानुनासिका निरनुनासिकाश्च ह्रस्व-दीर्घप्लुतभेदादष्टादशधा भिद्यन्ते । तथेवर्णः, तथोवर्णः, तथा ऋवर्णः । लृवर्णस्य दीर्घा न सन्ति, तं द्वादशप्रभेदमाचक्षते । सन्ध्यक्षराणां ह्रस्वा न सन्ति, तान्यपि द्वादशप्रभेदानि । अन्तःस्था द्विप्रभेदाः, रेफवर्जिता यवलाः सानुनासिका निरनुनासिकाश्च । रेफोष्मणां सवर्णा न सन्ति ।

**पदमञ्जरी**

बहुवचनान्तं विपरिणतमनुषज्यते, त्रयोऽकारा मिथः सवर्णसंज्ञा भवन्तीत्यर्थः । कथं त्रयोऽकाराः, यावता प्रत्युच्चारणं भेदेऽनन्ताः, अभेदे त्वेक एव ? तत्राह—*उदात्तेति* । अनेन प्रकारेण त्रय इत्यर्थः । एवं च 'त्रयः' इत्यस्य 'त्रिविधा' इत्यर्थो भवति । तत्राकुहविसर्जनीयाः कण्ठ्याः, इचुयशास्तालव्याः, उपूपध्मानीया ओष्ठ्याः, ऋटुरषा मूर्द्धन्याः, लृतुलसा दन्त्याः, एऐ कण्ठतालव्यौ, ओऔ कण्ठ्योष्ठ्यौ, वकारो दन्तोष्ठ्यः—इत्येवं तुल्यस्थानप्रयत्नाः सर्वेऽकारादयो मिथः सवर्णसंज्ञा भवन्तीति । *अन्तःस्था द्विप्रभेदा इति* । अत्रापि पूर्ववदनुषङ्गः, अन्तःस्था इत्युक्तेऽपि रेफनिवृत्त्यर्थं स्वरूपेण पठति । *यवला इति* । *रेफोष्मणां सवर्णा न सन्तीति* । विजातीयाभिप्रायमेतत् । सजातीयास्तु रेफोष्माणस्तुल्यस्थानप्रयत्ना-स्सवर्णा भवन्त्येव । तत्र रेफस्य तावद्यवला भिन्नस्थाना ऋटुरषा भिन्नप्रयत्ना अन्ये भिन्नस्थानप्रयत्नाः । एवमूष्मणामपि सवर्णाभावो वेदितव्यः ।

**न्यासः**

मप्यास्ये भवनात् ? सत्यमेतत्, तथापि प्रत्येकं व्यापारनिरासार्थमुभयोरुपादानम् । इतरथा हि यथैव स्थानं तुल्यं स्थानान्तरनिरपेक्षं सवर्णसंज्ञायां व्याप्रियते, एवं प्रयत्नोऽपि स्थाननिरपेक्षः, स्थानञ्च प्रयत्ननिरपेक्षम्, व्याप्रियेत; ततश्च भिन्न-प्रयत्नानामपि तुल्यस्थानानाम्, भिन्नस्थानानामपि तुल्यप्रयत्नानां सवर्णसंज्ञा स्यात् । अ अ अ इत्यादिना येषां यावताञ्च यादृशाञ्च मिथो नित्या सवर्णसंज्ञा, तान् दर्शयति । अकाराणां हि सर्वेषाम् 'अकुहविसर्जनीयाः कण्ठ्याः' इति तुल्यं कण्ठः स्थानम् । इकाराणामपि 'इचुयशास्तालव्याः' इति तालु । उकाराणामपि 'उपूप-ध्मानीया ओष्ठ्याः' इत्योष्ठः । ऋकाराणामपि 'ऋटुरषा मूर्धन्याः' इति मूर्धा । लृका-राणामपि 'लृतुलसा दन्त्याः' इति दन्तः । एकाराणामैकाराणाञ्च 'एऐ कण्ठ्यता-लव्यौ' इति कण्ठतालु । ओकाराणामौकाराणाञ्च 'ओऔ कण्ठ्यौष्ठ्यौ[1]' इति कण्ठो-ष्ठम् । प्रयत्नस्तु सर्वेषामेवैषां विवृतं करणमूष्मणां स्वराणाञ्चेति विवृतत्वम् । तस्मात् तुल्यस्थानप्रयत्नत्वात् सर्वेऽकारादयो मिथः सवर्णसंज्ञाः । एवं यावदौकारः । अन्तःस्था

१. 'कण्ठौष्ठ्यौ' इति मुद्रितः पाठोऽसाधुः, स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरी-रावयवसमुदायस्य शरीरावयवत्वाभावात् यत्वानापत्तेः ।

वर्ग्यो वर्ग्येण-सवर्णः । दण्डाग्रम् । खट्वाग्रम् ।

आस्यग्रहणं किम् ? कचटतपानां भिन्नस्थानानां तुल्यप्रयत्नानां मा भूत् । किं च स्यात् ? तर्प्ता तर्प्तुमित्यत्र "झरो झरि सवर्णे" इति पंकारस्य तकारे लोपः स्यात् ।

पदमञ्जरी

*वर्ग्य इत्यादि* । वर्गे भवो वर्ग्यः, दिगादित्वाद्यत् । *वर्ग्येण*—स्ववर्गान्तःपातिना । तद्यथा ककारः खकारेण । *तर्प्तेति* । 'तृप् प्रीणने' । *इचुयशानामिति* ।

न्यासः

द्विप्रभेदाः सानुनासिका निरनुनासिकाश्च रेफवर्जिताः । तेऽपि समानजातीयानन्तःस्थान् प्रति सवर्णसंज्ञा भवन्ति । रेफोष्मणां सवर्णा न सन्तीति । तेभ्योऽन्येऽकारादयो वर्णा विजातीया इत्येषोऽभिप्रायः । तुल्यजातीयास्तु रेफोष्माणस्तुल्यस्थानप्रयत्नाः सवर्णाः सन्त्येव । तत्र रेफस्य तावद् ॠटुरषेभ्यो यवलेभ्यश्चान्ये वर्णा भिन्नस्थानत्वाच्च भिन्नप्रयत्नत्वाच्च सवर्णा न भवन्ति । तथा हि—'अकुहविसर्जनीयाः कण्ठ्याः, इचुयशास्तालव्याः, लृतुलसा दन्त्याः, उपूपध्मानीया ओष्ठ्याः, एऐ कण्ठ्यतालव्यौ, ओ औ कण्ठ्योष्ठ्यौ'इति वचनादकारादीनां यथायोगं कण्ठादि स्थानम् । रेफस्य त्वृटुरषा मूर्धन्या इति मूर्धा । प्रयत्नोऽप्यनन्तरनिर्दिष्टेष्वकारादिषु ये स्वराः तेषां विवृतं करणमूष्मणां स्वराणाञ्चेति विवृतत्वम् । ये तु वर्गान्तःपातिनः ककारादयः, तेषां स्पृष्टकरणाः स्पर्शा इति स्पृष्टता । रेफस्येषत्स्पृष्टकरणा अन्तःस्था इतीषत्स्पृष्टता । शकारसकारावपि स्थानप्रयत्नभेदाद् रेफस्य सवर्णौ न भवतः । तौ हि यथाक्रमं तालव्यदन्त्यौ । रेफस्तु मूर्धन्यः । प्रयत्नोऽपि तयोर्विवृतत्वम् । रेफस्य तु पूर्वोक्त एव । ॠटुषाः प्रयत्नभेदाच्चैव रेफस्य सवर्णा न भवन्ति, न तु स्थानभेदेन; तेषामपि मूर्धन्यत्वात् । प्रयत्नभेदस्तु विद्यते—ॠकारषकारयोः पूर्ववद् विवृतत्वम् , रेफस्य तु स एव पूर्वोक्तः । टवर्गस्य स्पृष्टता । यवलास्तु पुनः स्थानभेदादेव सवर्णा न भवन्ति, न तु प्रयत्नभेदात्; तेषामपीषत्स्पृष्टगुणत्वात् । स्थानभेदस्तु विद्यते, यवलानां यथायोगं तालव्यदन्त्यौष्ठ्यत्वात् । एवं विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वाराः । कुँ खुँ गुँ घुँ, इत्येते च यमाश्चातुल्यस्थानप्रयत्नत्वादेव रेफस्य सवर्णा न भवन्ति । विसर्जनीयो हि कण्ठ्यः, जिह्वामूलीयो हि जिह्व्यः, उपध्मानीय ओष्ठ्यः, अनुस्वारयमा नासिक्याः, रेफस्तु मूर्धन्यः । प्रयत्नस्तु यस्तस्य पूर्वोक्तः, स विसर्जनीयादीनां नास्त्येव । तदेवं रेफस्य रेफादन्यो नास्ति कश्चित्सवर्णो वर्णः । अनया दिशोष्मणामपि शकारादीनां सावर्ण्याभावो वेदितव्यः ।

वर्ग्य इत्यादि । वर्गे भवो वर्ग्यः । दिगादित्वाद् यत् । 'यस्येति च' इत्याकारलोपः । वर्ग्यो यो वर्णः, सोऽन्येन वर्ग्येण स्ववर्गान्तःपातिना तुल्यास्यप्रयत्नेन सह सवर्णो भवति, यथा—ककारः खकारेण । एवमन्यत्रापि वेदितव्यम् । भिन्नस्थानाना-

प्रयत्नग्रहणं किम्? इचुयशानां तुल्यस्थानानां भिन्नप्रयत्नानां मा भूत्। किं च स्यात्? अरुश्च्योततीत्यत्र 'झरो झरि सवर्णे' इति शकारस्य चकारे लोपः स्यात्॥

* ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या *। होत्लृकारः। होतॄकारः। उभयोॠवर्णस्य चान्तरतमः सवर्णो दीर्घो ऽस्तीति ॠकार एव दीर्घो भवति।

सवर्णप्रदेशाः 'अकः सवर्णे दीर्घः' इत्येवमादयः॥

पदमञ्जरी

एषां मध्ये येषां प्रसङ्गः, तेषां मा भूदित्यर्थः। *अरुश् श्च्योततीति*। 'श्च्युतिर् क्षरणे'। अरुःशब्दस्य रुत्वविसर्जनीययोः 'वा शरि' इति सकारः, तस्यापि श्चुत्वे शकारः।

*ऋकारलृकारयोरिति*। स्थानभेदान्न प्राप्नोतीत्यारम्भः। श्रुतत्वाच्चानयोरेव मिथः सवर्णसंज्ञा विधीयते, न त्वेतयोरन्येन सह। *होतॄकार इति*। कथं पुनरत्र समुदायिनोऽन्तरतमो भवति न समुदायस्य, तत्रापि ॠकारस्यैव न लृकारस्येत्यत आह—*उभयोरित्यादि*। उभयोरन्तरतमो दीर्घो न सम्भवति, लृकारस्यापि दीर्घो न सम्भवतीत्यत ॠकार एव भवत्युभयोरित्यर्थः। ननु च नैतत्सवर्णसंज्ञायाः प्रयोजनम्, कथम्? 'अकः सवर्णे' इत्यत्र तु वक्ष्यति 'ऋति ऋ+वा वचनम्, लृति लृ+वा वचनम्' इति। तत्र चायमर्थः—अकां सवर्णे ऋति परतो वा ऋ+भवति; द्विमात्रोऽयम्, मध्ये द्वौ रेफौ तयोरेका मात्रा,

न्यासः

मित्यादि। एते हि ककारादयः सर्वे स्पृष्टगुणत्वात् तुल्यप्रयत्ना यथाक्रमं कण्ठतालुमूर्धदन्तोष्ठस्थानत्वाद्भिन्नस्थानाः। तर्प्ता, तर्प्तुमिति। 'तृप तृन्फ तृप्तौ' इत्यस्य तृचि तुमुनि च रूपम्। भिन्नप्रयत्नानामित्यादि। इकारादयो हि तालव्यत्वात् सर्वे तुल्यस्थाना विवृतत्वस्पृष्टत्वेषत्स्पृष्टत्वप्रयत्नात् यथायोगं भिन्नप्रयत्नाः। इकारशकारयोर्यद्यपि प्रयत्नोऽप्यभिन्नः, तथापि तयोः प्रतिषेधं वक्ष्यतीति न भवति सवर्णत्वम्। अरुश्श्च्योततीति—'श्च्युतिर् क्षरणे' इत्यस्य लटि रूपम्। तत्र परत्रावस्थितेऽरुस्-शब्दस्य सकारस्य रुत्वम्। तस्य विसर्जनीयः, तस्यापि 'वा शरि' इति सकारः, तस्यापि श्चुत्वं शकारः। होतॄकार इति। कथं पुनरत्र ॠकार आदेशो भवति, न हि ऋकारलृकारयोः समुदायस्य स्थानिनः सोऽन्तरतम इत्याह—उभयोरित्यादि। ऋकारो मूर्धन्यः, लृकारस्तु दन्त्यः। तत्र तयोर्यद्येको मूर्धन्यो

---

१. एतच्चिह्नित ईषत्स्पृष्टो बोद्धव्यः।

## नाज्झलौ ॥१०॥

अच् हल् च 'अज्झलौ । तुल्यास्यप्रयत्नावपि अज्झलौ परस्परं

पदमञ्जरी

अभितोऽज्भक्तेरपरा, ईषत्स्पृष्टश्चायम्। तत्र प्रयत्नभेदाद्दकारेणाग्रहणाद् अनण्त्वा-द्दीर्घसंज्ञाया अभावादप्राप्तोऽयं विधीयते। लृति लृ+वा वचनमित्ययमपि द्विमात्र ईषत्स्पृष्टश्च, मध्ये द्वौ लकारौ, तयोरेका मात्राऽभितोऽज्भक्तेरपरा। पूर्ववदप्राप्तो विधीयते। तत्र ऋति ऋ+वा वचनमित्यत्र वाशब्दो दीर्घस्य समुच्चयार्थः, तेनाप्राप्त एव दीर्घो भविष्यति। ननु यद्यविधायैव सवर्णसंज्ञां तदुच्यते, ततोऽक इति सम्बन्धादङ्मात्रस्य लृति तत्कार्यं स्याद् दध्य्लृकारो मध्व्लृकार इति, संज्ञाविधाने तु ऋकार ऋकारस्यैव सवर्ण इति तत्रैव व्यवस्थितं भवति। तस्माद्विधेया सवर्णसंज्ञा ? न विधेया, यदेतद् ऋतीति 'एतदृत इति वक्तव्यम्, सवर्ण इत्येव ऋकारस्य ऋकार एव सवर्णः' इति ऋत्येव भविष्यति। तत लृति, ऋत इत्येव। इदं चासवर्णार्थम्, तेन लृति रूपद्वयं सिद्धम्—होतृकारः, होत्लृकार इति। तन्न वक्तव्यं भवति। कथम् ? ऋ+वा वचनम्, लृ+वा वचनमिति ब्रुवतापि तयोरच्त्वं वक्तव्यम्; अन्यथा विधानमात्रमनयोः स्याद्, न त्वच्कार्यः प्लुतः। सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भवतीति प्लुतसिद्धिः। एवं च होतृ ऋकार इति ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ऋ+ भविष्यति, कदाचिद्विवृतः शुद्धो दीर्घः। लृकारेऽपि कदाचिदृकारान्तरतम ऋकारः, कदाचिद् लृकारान्तरतम लृ+कार इति, सत्यम्; सवर्णसंज्ञायां तन्न वक्तव्यं भवति, तद्वोच्येत, इदं वा, को न्वत्र विशेषः। इदं वाऽवश्यं वक्तव्यम्, इदमपि सिद्धं भवति 'ऋत्यकः'—खट्वलृकारः, मालृकारः। 'वा सुप्यापिशलेः'—उपलृकारीयति, उपाल्कारीयतीति। ऋदिताम्लृदितां च धातूनां पृथगुपदेशसामर्थ्यादनुबन्धकार्याणामसङ्करः॥

नाज्झलौ॥ अत्राज्झलौ न केनापि सवर्णसंज्ञौ भवत इति तावदर्थो न भवति; संज्ञाया निर्विषयत्वात्। एतावन्तो वर्णा अचश्च हलश्च। नाप्यचामज्भिर्हलां

न्यासः

दन्त्यश्च दीर्घो वर्णोऽन्तरतमः सम्भवेत्, तदा सोऽन्तरतम आदेशो भवेत्। स च न सम्भवतीत्यवयवस्य योऽन्तरतमः, तेन भाव्यम्। तत्रापि यदि लृकारो दीर्घः स्यात्, सोऽपि पर्यायेण स्यात्, स च नास्ति; तस्मात् पारिशेष्यात् समुदायस्यैकादेशस्य योऽन्तरतमः स एव ॠकारो भवति।

नाज्झलौ॥ तुल्यास्यप्रयत्नावपीति प्रसङ्गे हेतुमाह, प्रसङ्गपूर्वकत्वात् प्रतिषेधस्य। दण्डहस्त इत्यत्राकारहकारयोर्द्वयोरपि कण्ठस्थानत्वात् तुल्यस्थानत्वम्, उभयोर्विवृतकरणत्वात् तुल्यप्रयत्नत्वम्; दधि शीतमित्यत्राप्यत एव तुल्यप्रयत्नत्वम्, उभयोस्ता-

सवर्णसंज्ञौ न भवतः। अवर्णहकारौ—दण्डहस्तः। इवर्णशकारौ—दधि-शीतम्, सवर्णदीर्घत्वं न भवति। वैपाशो मत्स्यः, आनडुहं चर्मेति—'यस्येति च' इति लोपो न भवति।

### पदमञ्जरी

हल्भिः सवर्णत्वनिषेधः; अत एव निर्देशात्। अन्यथाऽकारस्याकारे दीर्घो न स्यान्नाजिति, नाप्यज्झलाविति पूर्वसवर्णः। तस्मादचां हलां च मिथः सवर्णसंज्ञा निषिध्यते। तत्र च यद्यपि 'नाज्झलौ' इति सामान्येनोक्तम्, तथाप्यकारहकार-योरिकारशकारयोश्च प्राप्तिरिति तत्रैव निषेधः। यद्येवम्, नाण्शलाविति वक्तव्यम्? न तावदेवं लाघवे विशेषः। किं च प्रागुक्तं पक्षद्वयं सम्भाव्येत। *अच हल् चेति*। अनेन नात्राज्झलोर्निर्देश इति दर्शयति। तत्रापि न दोषः कश्चित्, किन्तु पक्षान्तरसम्भावनैव। तुल्यास्यप्रयत्नाविति प्रसङ्गे हेतुमाह। *सवर्णदीर्घत्वं न भवतीति* प्रतिषेधस्य फलं दर्शयति। ननु दीर्घविधावचीत्यनुवर्तते, तच्चावश्यमनुवर्त्यम्, कुमारी शेते इत्यत्र मा भूदिति, न ह्यत्रानेन निषेधः सिद्ध्यति। किं कारणम्? वाक्यापरिसमाप्तेः। इह हि वर्णानामुपदेशः पूर्वम्, तत इत्संज्ञा, ततः 'आदिरन्त्येन सहेता' इति प्रत्याहारः, ततः 'नाज्झलौ' इत्यस्य

### न्यासः

लभ्यत्वात् तुल्यस्थानत्वम्। सवर्णदीर्घत्वं न भवतीति प्रतिषेधस्य फलं दर्शयति। ननु च अकः सवर्णे दीर्घविधौ 'अचि' इति वर्त्तते, तत्रासत्यपि प्रतिषेधे दीर्घत्वं न भविष्यति, यथा—कुमारी शेते इत्यत्र, तदयुक्तमेवोदाहरणद्वयम्। स्यादेतत्—'अणुदित् सवर्णस्य चाप्रत्ययः' इत्यकारेकाराभ्यां हकारशकारयोर्ग्रहणे तयोरप्यच्त्वमस्त्येव, ततश्चानुवर्त्त-मानेऽप्यज्ग्रहणे यद्येवं प्रतिषेधो न क्रियते तत् स्यादेव दीर्घत्वमिति, एतच्चासम्यक्; यदि ह्यत्रानुवर्त्तमानेऽप्यज्ग्रहणे दीर्घत्वं स्यात् तदनुवृत्तिरपार्थिकैव स्यात्। तस्मादज्ग्रहणा-नुवृत्तिसामर्थ्यादजेव योऽज् न कथञ्चन हल्, तत्रैव दीर्घत्वं विज्ञास्यते; न हकारशका-रयोः। तयोर्हि यद्यप्यकारेकाराभ्यां सावर्ण्येन ग्रहणादच्त्वमस्ति, तथापि हल्षूप-देशाद् हल्त्वमप्यस्तीति न तावद्धकारशकारावच्यावेव, अपि तु हलावपीति, सत्यमेतत्; अयं पुनरत्र वृत्तिकारस्याभिप्रायः—अवश्यं तावदन्यार्थं 'नाज्झलौ' इत्येतत् कर्त्तव्यम्, यस्येति लोपाभावार्थम्। तदन्यार्थं कृतमेतदर्थमपि स्यात्। एवं तर्ह्यजनुवृत्तिद्वारेण दीर्घत्वाभावप्रतिपत्तौ साध्यायां यत् प्रतिपत्तिगौरवमापद्यते, तदपास्तं भवतीति।

**वैपाश इति**। विपाशि भव इत्यण्। 'यस्येति च' इत्यत्रेवर्ण उपादीयमानः सावर्ण्येन शकारमप्युपादत्ते। एवञ्च तस्य लोपः प्रसज्येत। आनडुहमिति। अनडुहो विकार इति 'प्राणिरजतादिभ्योऽञ्', तत्र 'यस्येति च' इत्यत्राकारो गृह्यमाणो हकार-मपि गृह्णीयात्, ततश्च पूर्ववत् तस्य लोपः स्यात्।

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥११॥

ईद् ऊद् एद् इत्येवमन्तं द्विवचनं शब्दरूपं प्रगृह्यसंज्ञं भवति ।

पदमञ्जरी

निष्पत्तिः, तस्मिंश्च निष्पन्ने सत्यपवादविषयपरिहारेणेष्टविषये सवर्णसंज्ञा प्रवर्त्तते, न त्वेतत्सूत्रनिष्पत्तिसमये । ततश्च 'अणुदित्सवर्णस्य च' इत्येतत्स्वाङ्गभूतेषु उपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेषु 'अस्य च्वौ' इत्यादिषु वर्त्तते, न त्वङ्गेषूपदेशादिष्विति 'नाज्झलौ' इत्यगृहीतसवर्णानामचां ग्रहणमिति सिद्धम् । अवश्यं चागृहीतसवर्णानामेवाचां ग्रहणमेष्टव्यम्, अन्यथा ह्यजिति गृह्यमाण इकारः शकारस्य ग्राहकः स्यात् । न चास्मिन्नपि सूत्रेऽयमेव निषेधः, स्वात्मनि क्रियाविरोधात् । अतोऽज्ग्रहणेनापि शकारस्य ग्रहणम्, हल्षु चोपदेशाद्धल्ग्रहणेनापीति शकारद्वयस्य मिथः सवर्णसंज्ञा न स्यात् । ततश्च 'परःशतानि कार्याणि' इत्यत्र शतात्परराणि, शतादधिकानीति विगृह्य 'कर्तृकरणे कृता बहुलम्' इति बहुलवचनात्समासे पारस्करादित्वात्सुटि कृते 'अनचि च' इति शकारस्य द्विर्वचने परश्शतानोति स्थिते मध्यमस्य शकारस्य 'झरो झरि सवर्णे' इति लोपो न स्यादिति सर्वदा शकारत्रयश्रवणप्रसङ्गः । अतोऽगृहीतसवर्णानामचां ग्रहणादीकारशकारयोरप्रतिषिद्धं सवर्णत्वमिति 'कुमारी शेते' इत्यत्र मा भूदिति दीर्घविधौ 'अचि' इत्यनुवर्त्य तदनुवृत्तिसामर्थ्याच्चाजेव योऽज् न कथञ्चन हल्, तत्रैव दीर्घत्वविज्ञानाद्धकारशकारयोरकारेकाराभ्यां सावर्ण्येन ग्रहणादच्त्वे सत्यपि हल्त्वस्यापि भावाद्दीर्घाभावः सिद्धः, सत्यम् ; अज्ग्रहणमप्यन्यार्थमनुवर्त्यम्, इदमपि वैपाशो मत्स्यः, आनडुहं चर्म्मेत्यत्र यस्येति लोपाभावार्थं कर्तव्यं दण्डहस्तो दधिशीतमित्येतदुभयथापि सिद्ध्यतीति प्रदर्शनार्थमुदाहरणद्वयमुपन्यस्तम् । *वैपाश इति*—भवार्थेऽण् । *आनडुहमिति*—विकारे 'प्राणिरजतादिभ्योऽञ्' ॥

ईदूदेद् *द्विवचनं प्रगृह्यम्* ॥ अत्र चत्वारः पक्षाः सम्भवन्ति—ईदादि विशेष्यम्, द्विवचनं विशेषणम्, तत्र द्विवचनान्तत्वमीदादेर्न सम्भवतीति द्विवचनसंज्ञकमीदादि प्रगृह्यमिति प्रथमः पक्षः । ईदादि विशेषणम्, द्विवचनं विशेष्यम्, विशेषणेन तदन्तविधावीदाद्यन्तं द्विवचनमिति द्वितीयः पक्षः । प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति पश्चाद् द्विवचनान्तस्येदादिभिर्विशेषणादीदाद्यन्तं

न्यासः

ईदूदेद्द्विवचनं प्रगृह्यम् ॥ अत्रेदादि यद्द्विवचनम्, तत् प्रगृह्यमित्येवं वा विज्ञायते ? ईदाद्यन्तं यद् द्विवचनम्, तत् प्रगृह्यमिति वा ? तत्राद्ये पक्षे—'पचेते' इत्यादौ प्रगृह्यसंज्ञा न प्राप्नोति, न ह्येकारमात्रमत्र द्विवचनम् ; अपि तु आतेशब्द इति । इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—ईदूदेदित्येवमन्तमित्यादि । नन्वेत-

अग्नी इति । माले इति । पचेते इति । यजेते इति ।

पदमञ्जरी

द्विवचनान्तमिति तृतीयः । ईदादिविशिष्टेन द्विवचनेन तदन्तविधावीदाद्यन्तं यद् द्विवचनम्, तदन्तं प्रगृह्यमिति चतुर्थः । तत्राद्ये पक्षे—अग्नी, वायू, खट्वे इत्यादावेव स्यात्; एकादेशस्य परं प्रत्यादिवद्भावेन द्विवचनमीदादीति, पचेते पचेथे पचावहे इत्यादावेकारमात्रस्याद्विवचनत्वान्न स्यात् । तृतीये तु—कुमार्योरगारं कुमार्यगारम्, वध्वोरगारं वध्वगारम्; इत्यत्रापि स्यात्—एतद्धि प्रत्ययलक्षणेन द्विवचनान्तमीदाद्यन्तं च श्रूयते । यथा हि 'तावकीनः' इत्यादावादेशेन संख्याविशेषो व्यज्यते, तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वमभिव्यज्येतेति स्याद् द्विवचनान्तस्यापि समासः। चतुर्थे कुमार्यगारमित्यादावप्रसङ्गः; द्विवचनस्यानीदाद्यन्तत्वात्, किन्त्वशुक्ले शुक्ले समपद्येतां शुक्लयास्तां वस्त्रे—अत्रापि प्राप्नोति, कथम् ? शुक्लशब्दाद्द्व्यवृत्तेर्द्विवचनमौ, 'नपुंसकाच्च' इति शीभावः, ततश्च्विः, शीशब्दस्य 'सुपो धातु' इति लुक्, 'अस्य च्वौ' तद्धितान्तत्वात्सुः, अव्ययत्वाल्लुक्; अत्र शीशब्द ईकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति । अयं च तृतीयेऽपि पक्षे समानो दोषः । किं च—संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् तदन्तपक्षोत्थानमेव नास्ति, अतो द्वितीयं पक्षमाश्रित्याह—ईद् ऊद् एद् *इत्येवमन्तं द्विवचनमिति* । नन्वस्मिन्नपि पक्षे ईदूतोः केवलयोरेव संभव इत्यग्नी इत्यादिकं यद्यपि सिध्यति, तथाप्येकारान्तस्य तु द्विवचनस्य 'पचेते' इत्यादौ सम्भवात्तत्रैव स्यात्, न खट्वे इत्यादौ; व्यपदेशिवद्भावेनात्रापि भविष्यति । किं पुनरत्र प्रमाणमयमेव पक्ष आश्रीयत इति ? तृतीयचतुर्थयोस्तावदसम्भव एव; संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् । संज्ञायाश्च संज्ञ्यपेक्षायामनन्तरश्रुतं द्विवचनमेव संज्ञीत्युक्तमिति प्रथमस्याप्यसम्भवः । अत्र चतुर्थः पक्षोऽसम्भवादेव निरस्तः; न दोषवत्त्वात् । शुक्लयास्तां वस्त्र इत्यत्र हि 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधते' इति अन्तरङ्गमपि शीभावं बाधित्वा 'सुपो धातु' इति लुकि कृतेऽनीकारान्तं द्विवचनं भवति । अग्नी

न्यासः

स्मिन्नपि पक्षे अग्नी इत्येवमादि न सिध्यति, ईदाद्येव ह्यत्र द्विवचनं न तदन्तम् ? 'आद्यन्तवदेकस्मिन्' इत्यनेनान्तवद्भावो भवतीत्यदोषः । अग्नी इति । 'प्रथमयोः पूर्वसवर्णः' इति दीर्घत्वम् । अत्र प्रगृह्यसंज्ञायां सत्याम् 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावादिति शब्दे परतः 'अकः सवर्णे' दीर्घत्वं न भवति। वायू इत्यत्रापि 'इको यणचि' इति यणादेशः । शेषेष्वप्युदाहरणेष्वयादेशः । खट्वे इति । 'औङ आपः' इति शीभावः । 'आद्गुणः' । पचेते इति, यजेते इति । स्वरितेत्त्वादात्मनेपदम्, आताम्,

ईदूदेदिति किम् ? वृक्षावत्र । प्लक्षावत्र ।

द्विवचनमिति किम् ? कुमार्यत्र । किशोर्यत्र ।

तपरकरणमसन्देहार्थम् ।

प्रगृह्यप्रदेशाः—'प्लुतप्रगृह्या अचि' इत्येवमादयः । ईदादीनां प्रगृह्यत्वे मणीवादीनां प्रतिषेधो वक्तव्यः ।

पदमञ्जरी

इत्यादौ प्रगृह्यत्वात् 'प्लुतः प्रगृह्या अचि' इति प्रकृतिभावः । प्रत्युदाहरणेषु तदभावात् स्वरसन्धिः । तपरकरणं गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत्, न; अभेदकत्वाद् गुणानाम् । भिन्नकालानां निवृत्त्यर्थमिति चेत्, न; ईदूतोरणत्वात् । स्यादेतत्—जातिपक्षे यद्यपि दीर्घोच्चारणसामर्थ्यात् प्रयत्नाधिक्याव् अकुर्वंह्यत्रेत्यादौ ह्रस्वानां न स्यात्, प्लुतानां तु स्यादेव । एकारस्य त्वण्त्वादपि प्लुतस्य प्रसङ्गः, अतः प्लुतनिवृत्त्यर्थं तपरकरणमिति, तन्न; इष्टत्वात् ।

किमर्थं पुनः प्लुतानां प्रगृह्यसंज्ञेष्यते ? प्रगृह्याः प्रकृत्येति प्रकृतिभावो यथा स्यात् । मा भूदेवम्, प्लुतः प्रकृत्येत्येव भविष्यति । यत्र तर्हि प्लुताश्रयः प्रकृतिभावः प्रतिषिध्यते—'अप्लुतवदुपस्थिते' इति, तत्र प्रगृह्याश्रयः प्रकृतिभावो यथा स्याद्-अग्नी३ इतीति । इह च अमी३ अप्रगृह्यस्येत्यनुनासिकपर्युदासो यथा स्यात् । अतः प्लुतानामपि प्रगृह्यसंज्ञाया इष्टत्वान्न तन्निवृत्त्यर्थमपि तपरकरणमित्यत आह—*तपरकरणमसन्देहार्थमिति* । असति हि तस्मिन् समाहारद्वन्द्वे नपुंसकह्रस्वत्वे च कृते य्वीति निर्देशे सन्देहः स्यात् । इतरेतरयोगद्वन्द्वेऽपि सन्देह एव । तस्मादसन्देहार्थं तपरकरणम् । यद्यसन्देहार्थमपि तपरत्वं क्रियते, तदेव प्लुतस्येष्टां संज्ञां व्यावर्तयति,

न्यासः

टेरेत्त्वम्, 'आतो ङितः' इतीयादेशः । 'लोपो व्योर्वलि' इति यलोपः । वृक्षावत्र, प्लक्षावत्रेति । भवत्येतद् द्विवचनम्, न त्वीदूदेदन्तम् । तेन प्रकृतिभावाभावादादेशो भवत्येव । कुमार्यत्रेति । 'वयसि प्रथमे' इति ङीपि कृते कुमारीत्येतदीकारान्तम्, न तु द्विवचनान्तम् ; तेनासति प्रकृतिभावे भवत्येव यणादेशः ;

अथ तपरकरणं किमर्थम् ? प्लुतनिवृत्त्यर्थमिति चेत् ? न; इष्टत्वात् प्लुतस्य । यथा च तपरत्वे क्रियमाणेऽपि प्लुतस्य प्रगृह्यसंज्ञा सिध्यति, तथा भाष्ये 'असिद्धः प्लुतः, तस्यासिद्धत्वात् तत्काला एव' इत्यादिना प्रतिपादितम् । गुणान्तरभिन्नानां तत्कालानां ग्रहणार्थमिति चेत् , न; अभेदकत्वाच्छास्त्रे गुणानामित्यत आह—*तपरकरणमसन्देहार्थमिति* । असति तपरकरण ईकारस्योकारस्य च यणादेशः स्यात् । ततश्च सन्देह एव स्यात्—किमिदं यकारवकारयोर्ग्रहणम्, आहोस्विदिकारोकारयोरिति । वक्तव्य इति । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—वक्ष्यमाणं शाकल्यग्रहणमिहो-

मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम ।
दम्पतीव, जम्पतीव, रोदसीव ॥

पदमञ्जरी

तत् प्लुतस्य कथं संज्ञा ? मा भूत् प्लुतस्य, तस्य त्वसिद्धत्वात् स्थानिनि प्रवृत्ता संज्ञा स्वरसन्धिमनुनासिकं च प्रतिभन्त्स्यति, सिद्धः प्लुतः स्वरसन्धिषु, प्लुतः प्रकृत्येति लिङ्गात् । अन्यथा कार्यिणोऽसत्त्वात्कस्य प्रकृतिभावो विधीयेत ! यस्य च विकारप्रसङ्गः, प्लुतप्रकरणे तस्य प्रकृतिभावो विधेयः, प्लुतस्यासिद्धत्वेन तस्य विकाराप्रसङ्ग इति प्लुतस्यासतः प्रकृतिभावविधानमनुपपन्नम् । अस्तु, स्वरसन्धिप्रकरणे प्लुतः सिद्धः, संज्ञाविधावसिद्धः । संज्ञाविधौ च सिद्धः, कथम् ? कार्यकालं संज्ञापरिभाषम्, ततश्च प्रगृह्यः प्रकृत्येत्यत्रास्योपस्थानात्संज्ञापि स्वरसन्धिप्रकरणान्तर्गता । एवं तर्हि सिद्धः प्लुतः स्वरसन्धिष्विति नाश्रीयते, प्लुतभावी प्रकृत्येति स्थानिन एव प्रकृतिभावो विधास्यते ? एवमप्यनुनासिक-पर्युदासो न सिध्यति, कार्यकालपक्षे संज्ञायामपि प्लुतस्य सिद्धत्वात् । एवं तर्हि 'यथोद्देशं संज्ञापरिभाषम्' ततश्चास्मिन् प्रदेशे संज्ञायां क्रियमाणायां प्लुतस्यासिद्धत्वात् स्थानिनि प्रवृत्ता संज्ञा स्वरसन्धिमनुनासिकं च प्रति-भन्त्स्यति । ननु यद्यपि संज्ञायामसिद्धः प्लुतः, अनुनासिकपर्युदासे तु सिद्धः, ततश्च यस्यानेन संज्ञा कृता द्विमात्रस्य, न सोऽनुनासिकविधिं प्रति स्थानी, किन्तु त्रिमात्र एव । न च स्थानिवद्भावात्तस्यापि प्रगृह्यत्वम्, अल्विधित्वात् । अवश्यं च 'सिद्धः प्लुतः स्वरसन्धिषु' इत्याश्रयणीयम्, दण्ड-आ३ढकमिति प्लुतस्य सवर्णदीर्घेण निवृत्तिर्यथा स्यात् । तथा च 'अइउण्' इत्यत्र सर्वैरेव ग्रन्थकारै-रुक्तम् । तथा सुश्लोका३ इति सुश्लोकेति—अत्रापि 'अप्लुतवदुपस्थिते' इति प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे गुणो भवन् प्लुतमेव निवर्त्तयति, न तु स्थानिनम्; अन्यथा ह्यादेशरूपे प्लुतः श्रूयेत । तदिह यथोद्देशेऽपि संज्ञापरिभाषे, कथमिवेष्ट-सिद्धिः ? कथं वा ग्रन्थेषु पूर्वापरविरोधपरिहारः[1] ? इति विपश्चितः प्रष्टव्याः ।

*मणीवादीनामिति* । 'सिद्धये' इति शेषः । न पुनर्मणीवादीनामपरः प्रतिषेधो विधेयः । न चेदं वचनम्, भाष्यवार्त्तिककाराभ्यामपठितत्वात्; किन्तु मणीवादीनां निर्वाहः कर्त्तव्य इत्यर्थः । तत्र 'मणीवोष्ट्रस्य लम्बेते' इत्यत्र वाशब्दस्योपमाना-र्थस्य प्रयोगः । रोदसीवेत्यादौ छान्दसत्वादिति निर्वाहः ॥

न्यासः

पतिष्ठते सिंहावलोकितन्यायेन, सा च व्यवस्थितविभाषा; तेन मणीवादीनां प्रतिषेधो भविष्यति—मणीव, दम्पतीव, रोदसीवेति । मणीवेत्यादयः शब्दा द्विवचनान्ताः । तत्रासति प्रगृह्यत्वे 'अकः सवर्णे दीर्घः' एकादेशो भवत्येव ।

१. 'पूर्वापरविरोधः' इति पा० ।

## अदसो मात् ॥१२॥

**अदसः संबन्धी यो मकारस्तस्मात्परे ईदूदेतः[1] प्रगृह्यसंज्ञा**

**पदमञ्जरी**

*अदसो मात्* ॥ 'स्वरितेनाधिकारः' इत्यत्र द्वौ पक्षौ—अर्थाधिकारः, शब्दाधिकारश्चेति । तत्रार्थाधिकारो नाम–यस्य यस्मिन्सूत्रे स्वरितत्वं प्रतिज्ञातं तत्र तस्य योऽर्थः स उत्तरत्राधिक्रियत इति । शब्दाधिकारस्तु स एव शब्दोऽविवक्षितार्थोऽधिकृतस्तत्तत्सूत्रानुगुणमर्थं प्रतिपादयतीति । तत्रार्थाधिकारे पूर्वत्रेदादिभिस्तदन्तं प्रत्यायितम्, इहानुवृत्तम् 'मात्' इत्यनेन विशेष्येतेति 'अमुकेऽत्र' इत्यत्रापि प्रसङ्गः, शब्दाधिकारे त्विदादिमात्रस्येहानुवृत्तस्यापि विशेष्याभावादसति तदन्तविधौ 'मात्' इत्यनेन विशेषणाददोष इति तमाश्रित्याह–*तस्मात्परे ईदूदेदन्ता*, *इति* । *प्रगृह्यसंज्ञा इति* । प्रगृह्यशब्दः संज्ञा येषां ते तथोक्ताः । यद्यपि पूर्वसूत्र एव प्रगृह्यशब्दः संज्ञात्वेन विनियुक्तः, तथापीह संज्ञिनो न प्रत्याययति; स्वरूपपदार्थकस्यैव तस्येहानुवृत्तेः । किमर्थमिदमुच्यते, यावता स्त्रीनपुंसकयोर्द्विवचने मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वात् पूर्वेणैव सिद्धा संज्ञा; स्वरसन्धिप्रकरणे च मुत्वस्यासिद्धत्वादेकारस्यैव विकारप्रसङ्गे प्रकृतिभावोऽपि सिद्धः, अनुनासिकपर्युदासश्च कार्यकालपक्षे लिङ्गत्रयेऽपि द्विवचने सिद्धः ? 'अणोऽप्रगृह्यस्य' इत्यत्रोपस्थितेन पूर्वसूत्रेण संज्ञायां क्रियमाणायां मुत्वस्य सिद्धत्वात् । अतोऽनुनासिकपर्युदासेऽद्विवचनार्थोऽयमारम्भः, प्रकृतिभावे तु पुंसि द्विवचनार्थश्च । नन्वारम्भेऽप्यस्मिन्यथोद्देशपक्षे संज्ञायां कर्त्तव्यायां मुत्वमीत्वयोराश्रयात्सिद्धत्वेऽपि स्वरसन्धिप्रकरणे तयोरसिद्धत्वादयावेकादेशप्रसङ्गः, अमी आसते इत्ययादेशः, अमू आसाते इति पुंस्यावादेशः, अमी अत्र इति 'एङः पदान्तादति' इत्येकादेशः । न च संज्ञाया वैयर्थ्यम्; अनुनासिकपर्युदासेनार्थवत्त्वात् । तत्र हि कर्त्तव्ये मुत्वमीत्वयोरसिद्धत्वाभावाद्ययोरनेन संज्ञा कृता तावेव, न तं प्रति । कार्यकालपक्षे तु संज्ञायामपि कर्त्तव्यायामाश्रयात् सिद्धत्वं नाश्रयणीयम्; 'अणोऽप्रगृह्यस्य' इत्यत्रोपस्थितेऽस्मिन् कर्तव्ये मुत्वमीत्वयोः सिद्धत्वात्, तावता चास्य चरितार्थत्वात् । तदेवमुभयोरपि पक्षयोः स्वरसन्धिः स्यादेव ? उच्यते; यद्यनुनासिकपर्युदास एव प्रयोजनमभविष्यद् 'अणोऽप्रगृह्यस्यानुनासिकोऽदसो न' इत्येवावक्ष्यत् ।

**न्यासः**

अदसो मात् । अदसः सम्बन्धी यो मकार इति । अवयवावयविभावलक्षणेन सम्बन्धेन षष्ठी । अमी अत्रेति । अदस्-शब्दात् परस्य जसः शी, त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, ईकारेण सह 'आद् गुणः' 'एत ईद्बहुवचने' इतीत्त्वम्, दस्य च

1. 'इदूदेदन्ताः' इति पदमञ्जरीसम्मतः पाठः ।

भवन्ति । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते ।

एकारस्य नास्त्युदाहरणम् ।

अदस इति किम् ? शम्यत्र । दाडिम्यत्र । मादिति किम् ? अमुकेऽत्र ॥

शे ॥१३॥

'शे' इत्येतत्प्रगृह्यसंज्ञं भवति । किमिदं शे इति ? सुपामादेशश्छ-

पदमञ्जरी

अमुके, अमुयेत्यादावनण्त्वादनवसानत्वाच्चाप्रसङ्गः । अतः संज्ञारम्भसामर्थ्यात् प्रकृतिभावार्थत्वमप्यस्य विज्ञायते, तच्च स्वरसन्धिप्रकरणे मुत्वमीत्वयोः सिद्धत्वमन्तरेणानुपपन्नमित्युभयोरपि पक्षयोः सामर्थ्यादसिद्धत्वबाधः ।

*मादिति किमिति* । 'अदस' इति षष्ठी, अमी अमू इत्यत्र च मुत्वमीत्वयोः स्थानिनावेकादेशावन्तवद्भावाददस्-शब्दग्रहणेन गृह्येते इति तदादेशयोरपि तद्ग्रहणेन ग्रहणादस्ति तावदिष्टसिद्धिः। एदिति च निवर्तिष्यते, न च मात्परावीदूतौ सम्भवत इत्यतिप्रसङ्गोऽपि नास्तीति प्रश्नः । *अमुकेऽत्रेति* । एकयोगनिर्दिष्टानामेकदेशानुवृत्तिर्दुर्ज्ञानेति भावः । न च मादित्यस्मिन् सत्यपि एद्ग्रहणसामर्थ्यादत्र प्रसङ्गः; मादित्यस्य वैयर्थ्यप्रसङ्गात् । न च विकल्पः; अतुल्यबलत्वात् । तद्धि पूर्वत्र चरितार्थम्, मादिति त्वकृतार्थम् । न चानुवृत्तिसामर्थ्यम्; अन्यानुरोधेनाप्यनुवृत्तिसम्भवात् ॥

शे ॥ 'शे' इति श्रुतेरविशेषात् 'काशे', 'कुशे' इत्यत्रापि प्रसङ्ग इति मत्वा

न्यासः

मत्वम् । अयमाद्विवचनार्थ आरम्भः । अमू आसाते इति । अदसो द्विवचनमौ । त्यदाद्यत्वम्, 'वृद्धिरेचि' इति वृद्धिः, 'अदसोऽसेर्दादुदो मः' इत्यौकारस्य दीर्घस्य स्थाने तादृश एवान्तरतम्यादूकारः । अत्राप्यूकारादिकार्यमसिद्धमिति पूर्वेणाप्राप्तिः । अतः 'पूर्वत्रासिद्धम्' इत्यस्य बाधनार्थ आरम्भः। कथं पुनः 'पूर्वत्रासिद्धम्' इत्येतच्छक्यं बाधितुम्, वचनसामर्थ्यात् ? नैतदस्ति; यत् सिद्धे प्रगृह्यकार्यम् 'अणोऽप्रगृह्यस्यानुनासिकः' इति, तदर्थं वचनं स्यात्, नैतदेवम्; न ह्येकं प्रयोजनं योगारम्भं प्रयोजयति, यदि ह्येतावत् प्रयोजनं स्यात्, तत्रैवेदम् ब्रूयात्—'अणोऽप्रगृह्यस्यानुनासिकः, अदसो न' इति । शम्यत्र । दाडिम्यत्रेति । 'षिद् गौरादिभ्यश्च' इति ङीष्, 'यस्येति च' इत्यकारलोपः। भवत्ययं मकारात् परं ईकारः, न त्वदःसम्बन्धीति । अमुकेऽत्रेति । 'अव्ययसर्वनाम्नाम्' इत्यकच्, 'जसः शी', 'आद् गुणः', पूर्ववदुत्वमत्वे । अमुके इति स्थिते परत्र चात्रशब्दे 'एङः पदान्तादति' इति पूर्वरूपत्वम् ।

शे ॥ 'शे' इति । शेश्रुतेरविशिष्टत्वात् काशे कुशे इत्यत्र यः शेशब्दस्तस्यापि ग्रहणं

न्दसि । न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती । युष्मे इति । अस्मे इति । त्वे रायः । मे रायः । त्वे इति । मे इति ।

छान्दसमेतदेवैकमुदाहरणम्—अस्मे इन्द्राबृहस्पती इति; तत्र तथा पाठात् । इतरत्तु लौकिकमनुकरणम्—युष्मे इति । अस्मे इति । त्वे इति । मे इति ॥

पदमञ्जरी

पृच्छति—*किमिदमिति* । *सुपामादेश इति* । काशे इत्यत्र तु लाक्षणिकत्वादग्रहणमिति भावः । *युष्म इति* । षष्ठीबहुवचनस्य 'सुपां सुलुक्' इत्यादिना शे आदेशः, 'शेषे लोपः' । *अस्मे इति* । चतुर्थीबहुवचनस्य शे । *त्वे मे इति* । सप्तम्येकवचनस्य त्वमावेकवचने । *अस्मे इन्द्राबृहस्पती इति* । छान्दसमुदाहरणमित्युक्त्वा, इतरत्तु *लौकिकमनुकरणमित्युक्ते*न युष्मे वाजबन्धवः, त्वे रायः, मे राय इत्येषामप्यनुकरणत्वमुक्तं स्याद् । अतो यदत्रेतरदिति विवक्षितं तत्स्वरूपेण पठति । *युष्मे इतीत्यादि* । लौकिकमनुकरणमित्यनेन च सूत्रस्यावश्यारभ्यत्वं दर्शयति । 'अस्मे इन्द्राबृहस्पती' इत्यादि छान्दसत्वादपि सिद्ध्येत् । इदं तु पदकारैरिति परं प्रयुज्यमानं लौकिकम्, अतो न छान्दसत्वात्सिद्धिरिति ॥

न्यासः

प्राप्नोति, अतो विशेषो वक्तव्य इत्यभिप्रायेणाह—किमिदं शे इति । सुपामित्यादि । यस्तु काशकुशशब्दाभ्यां सप्तम्येकवचने च कृते आद् गुणे च शेशब्दः सम्पद्यते, तस्येह ग्रहणं न भवति; लाक्षणिकत्वादिति भावः । युष्मे, अस्मे इति । षष्ठीबहुवचनस्य 'सुपां सुलुक्' इत्यादिना शे-शब्दादेशः, 'शेषे लोपः' । अथ वा—प्रथमाबहुवचनस्यैव शेभावः, छान्दसत्वाद् 'यूयवयौ जसि' इत्येतन्न प्रवर्त्तते । त्वे इति, मे इति । सप्तम्येकवचनस्य पञ्चम्येकवचनस्य च शेभावः । 'त्वमावेकवचने' इति युष्मदस्मदोस्त्वमावादेशौ । इतरत् तु लौकिकमनुकरणमिति । यदा 'युष्मे इति' 'अस्मे इति' एवमादिकं तदा लौकिकमनुकरणमिति भावः । यदा 'युष्मे' 'अस्मे' इत्यादीनां वेदवाक्यस्थानामर्थाद्व्यवच्छिद्य स्वरूपेऽवस्थानार्थं पदकारैरितिकरणोऽध्याह्रियते, तदा 'युष्मे इति' 'अस्मे इति' एवमादिकमुदाहरणमिति भवति । इतरत् तु लौकिकमनुकरणमित्युक्ते 'न युष्मे वाजबन्धवः', 'त्वे रायः', 'मे रायः' इत्येतेष्वपि वेदवाक्येषु यद् 'युष्मे' इत्यादि शेशब्दान्तं शब्दरूपम्, तदपि लौकिकमनुकरणमिति कस्यचिन् मन्दधियः भ्रान्तिः स्यात्; अतस्तन्निराकर्तुमितरशब्देन यदिह विवक्षितम्, तत् स्वरूपेण दर्शयितुमाह—युष्मे इति । अस्मे इति । त्वे इति । मे इति । यद्येवं किमर्थं न 'युष्मे वाजबन्धवः' इत्यादीनामुपन्यासः ? एषु वेदवाक्येषु ये 'युष्मे' इत्यादयः शब्दाः, तेषामेतान्यनुकरणानीति प्रदर्शनार्थः; अन्यथा हि न ज्ञायते कस्यैतान्यनुकरणानीति ।

## निपात एकाजनाङ् ॥१४॥

एकश्चासावच्च एकाच्, निपातो.य एकाच् आङ्वर्जितः स प्रगृह्यसंज्ञो भवति। अ अपेहि। इ इन्द्रं पश्य। उ उत्तिष्ठ। आ एवं नु मन्यसे। आ एवं किल तत्।

निपात इति किम्? चकारात्र। जहारात्र। एकाजिति किम्?

पदमन्जरी

*निपात एकाजनाङ्* ॥ 'व्याहरति मृगः', 'व्यवहृपणोः समर्थयोः' इति निर्देशादेकाजिति कर्मधारयः, न बहुव्रीहिरित्याह—*एकश्चासाविति*। यद्येवम्, एकग्रहणमनर्थकम्, निपातोऽजित्येवास्तु, तत्र निपातेनाज् विशिष्यते। निपातसंज्ञकोऽजिति विपर्ययस्तु न भवति; 'अजन्तो निपातः' इति व्यावर्त्याभावाद् हलन्तानां सत्यसति वा प्रगृह्यत्वे विशेषाभावात्। ननु पुरोस्तीति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात्, नैतदस्ति; प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात्, सकारस्य च कार्यान्तराप्रसङ्गात्। ननु चेदमस्ति प्रयोजनमचा निपातस्य विशेषणे किम्? अजन्तस्य यथा स्याद्, अज्मात्रस्य मा भूत् इति। एवं सत्यनाङित्यनर्थकं स्यात्, अतो निपातेनाज् विशेष्यते, नार्थ एकग्रहणेन, न; अच्समुदायनिवृत्त्यर्थं तर्ह्येकग्रहणम्—अइउ अपेहीति समुदायस्यैव स्याद्, नावयवानाम्; एकाज्द्विर्वचनवदजन्तस्यैव प्रकृतिभावः स्यात्, पूर्वयोस्तु स्वरसन्धिः स्यात्। ननु च निपातोऽजिति चैकत्वस्य विवक्षितत्वात् समुदायस्य न भविष्यति, एवं तर्ह्यच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति—'वर्णनिर्देशेषु व्यक्तिसंख्या न विवक्ष्यते, जातिरेव निर्दिश्यते' इति। तेन दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धमित्युपपन्नं भवति।

*निपात इति किमिति*। निपातस्यैवैकाचोऽर्थवत्त्वसम्भव इति प्रश्नः। *चकारा-*

न्यासः

निपात एकाजनाङ् ॥ एकाजिति बहुव्रीहिर्वाऽयं स्यात्? कर्मधारयो वा? यदि बहुव्रीहिः, प्रशब्दस्यापि प्रगृह्यसंज्ञा स्यात्। ततश्च 'प्रोपाभ्याम्' इति निर्देशो नोपपद्येत, प्राग्रय इति च प्रत्युदाहरणम्। तस्मात् कर्मधारयोऽयमिति मनसि कृत्वाह—एकश्चासावच्चेत्येकाजिति। अ अपेहीत्यादीनि त्रीणि च्छान्दसान्युदाहरणानि, इतरत् तु लौकिकम्। तत्र 'आ एवं नु मन्यसे' इत्यत्राकारो वाक्यपरिपूरणार्थः। 'आ एवं किल तत्' इत्यत्र तु स्मरणार्थः। चकारात्रेति। करोतेर्लिट्। 'परस्मैपदानाम्' इत्यादिना तिपो णल्, वृद्धिः, रपरत्वम्। 'द्विर्वचनेऽचि' इति स्थानिवद्भावेन द्विर्वचनम्। उरत्त्वम्। 'कुहोश्चुः' इति चुत्वम्। भवत्ययं णलकार एकाच्, न तु निपातः।

प्राग्रय इति। प्रशब्दो भवति निपातः, न त्वेकाच्। तेन 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावो न भवति। 'अकः सवर्णे' इति दीर्घत्वं तु भवत्येव।

प्राग्नये वाचमीरय। अनाङिति किम् ? आ उदकान्तात् ओदकान्तात्।
ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

पदमञ्जरी

*रात्रेति*—कृञो लिटि तिपो णल्। अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः। आकारोऽत्र ङिद्विशिष्ट उपात्तः, प्रयोगे च न क्वचिन्न ङकारः श्रूयते। अतोऽर्थवशेन ङित्त्वाङित्त्वे व्यवस्थापयति।

*ईषदर्थ इत्यादि*। ईषदर्थे—आ + उष्णः=ओष्णः। आङीषदर्थ इति चोक्तम्। *क्रियायोगे*— आ + इतः = एतः। प्रादिषु पठितः। *मर्यादाभिविधौ चेति*। समाहारद्वन्द्व आगमस्यानित्यत्वान्नुमभावः। मर्यादासहितो वाऽभिविधिः। मर्यादायाम्—आ + उदकान्ताद् = ओदकान्तात्। अभिविधौ – आ + अहिच्छत्राद् = आहिच्छत्रात्। आह च—'विना तेन मर्यादा, सह तेन इत्यभिविधिः[1]'। 'आङ् मर्यादाभिविध्योः' इति च ङिन्निर्दिष्टः पूर्वप्रक्रान्तस्य वाक्यस्यान्यथात्वद्योतनाय आकारः प्रयुज्यते—आ एवं नु मन्यसे, नैवं पूर्वममंस्थाः, संप्रति त्वेवं मन्यसे इति। तथा स्मृतेः सूचकः आकारः प्रयुज्यते, ततः स्मृतोऽर्थो निर्दिश्यते—आ एवं किल तदिति ॥

न्यासः

आकारोऽत्र हि ङिद्विशिष्ट उपात्तः, तस्य न ज्ञायते—क्व च ङित्त्वम्, क्व च नेति। अतो ङित्त्वाङित्त्वयोर्विषयविभागप्रदर्शनार्थमाह—ईषदर्थ इत्यादि। तत्रेषदर्थे—आ + उष्णम् = ओष्णमिति। ईषदुष्णमित्यर्थः। क्रियायोगे उपसर्गसंज्ञायां ङिद्विशिष्ट एव पठ्यते।

प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोऽप्यतिसूदमयश्च।
प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र[2] ॥ इति।

आ + इहि=एहि। आ + अस्ति = आस्ति। मर्यादाभिविध्योरपि ङिद्विशिष्ट एव पठ्यते—'आङ् मर्यादाभिविध्योः' इति। मर्यादा=सीमा, अवधिः—आ + उदकान्तात्=ओदकान्तात् प्रियं प्रोथमनुव्रजेत्। अभिविधिः=अभिव्याप्तिः—आ + अहिच्छत्रात्, आहिच्छत्रं वृष्टो देवः। अहिच्छत्रं गृहीत्वा वृष्टो देव इत्यर्थः। ङिद्विशिष्टस्य 'अनाङ्' इति प्रगृह्यसंज्ञाप्रतिषेधात् स्वरसन्धिर्भवति। अथ एतमातमित्यत्रैतदः 'द्वितीयाटौस्स्वेनः' इत्येनादेशः कस्मान्न भवति ? 'अन्वादेशे' इति तत्रानुवर्त्तते, अस्ति चेहान्वादेश इत्यस्ति प्राप्तिः। यथा न भवति तथा तत्रैव प्रकरणे वृत्तिकारः स्वयमेव वक्ष्यतीति पुनरिह नोच्यते। आतमिति आकारे तकारो मुखसुखार्थः। ये तु पुनरेत-

---

१. म० भा० प्र० १।४।८८। २. श्लोकेऽस्मिन् वेगवतीनामच्छन्दः; 'सयुगात् सगुरू विषमे चेद् भाविह वेगवती युजि भाद् गौ' इति लक्षणात्।

## ओत् ॥१५॥

'निपातः' इति वर्त्तते। तस्यौकारेण तदन्तविधिः। ओदन्तो यो निपातः स प्रगृह्यसंज्ञो भवति। आहो इति। उताहो इति॥

### पदमञ्जरी

*ओत्* ॥ ननु चाहोप्रभृतयो निपातसमाहाराः, अह् + उ = अहो, उत + आहो = उताहो, अथ + उ = अथो, या + उ = यो, न + उ = नो, मा + उ = मो, च + उ = चो; यद्यप्यर्थभेदो न प्रतीयते, तथाप्यनर्थकानामपि निपातानां दर्शनात् समाहारत्वं नानुपपन्नम्, ततश्चादिवद्भावात् पूर्वेणैव सिद्धा प्रगृह्यसंज्ञा, यथा—'एषो उषा अपूर्व्या' इति। एषा + उ=एषो इत्याशङ्क्य एकनिपाता इति दर्शयति—*ओदन्तो यो निपात इति*। चादिषु तथा पाठादिति भावः। समाहारपक्षे च आहो इतीत्यादौ 'उञः' 'ऊँ' इत्ययं विधिः प्राप्नोति। अथापि समाहारः, एवमपि सूत्रं कर्त्तव्यम् 'ओ चित्सखायम्' 'ओ षुं वर्तमरुतः' इत्याद्यर्थम्। आ + उ=ओ इत्यत्रान्तवद्भावादनाङिति प्रतिषेधः प्राप्नोति, अत्रापि पर्युदासे सिद्धम्; आङनाङोरेकादेश आदिवद्भावादनाङ्ग्रहणेन गृह्यत इति। इहानदोऽदोऽभवदिति? च्व्यन्तत्वान्निपातत्वेऽपि प्रतिपदोक्तस्यौकारस्य ग्रहणान्न भवति। एवमप्यगौर्गौः समपद्यत गोभवदित्यत्र प्राप्नोति; गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययान्न भविष्यति। अत्र हि जाड्यादिधर्मेणारोपितगोत्वे वाहीके गोशब्दो वर्त्तते इति गौणार्थत्वमस्य। कथं तर्हि गौर्वाहीकस्तिष्ठति, गां वाहीकमानयेति वृद्धयाख्ये भवतः?

### न्यासः

माङमिति ङकारसहितमाकारं पठन्ति तेषां ङित्तं विद्यादिति वचनमनर्थकं स्यात्; ङकारसहितस्य पाठादेव ङित्त्वविज्ञानात्। तस्मात् तकारपर एवायमाकारः पठितव्यः। वाक्यस्मरणयोरिति। वाक्यशब्देन वाक्यार्थ उक्तः; अभिधेयेऽभिधानोपचारात्। प्रक्रान्तं हि वाक्यार्थं किञ्चिदपेक्ष्येदं प्रयुज्यते—'आ एवं नु मन्यसे' इति। एवमयं वाक्यार्थो विज्ञायत इत्यर्थः। पूर्वप्रक्रान्तवाक्यार्थप्रदर्शनपरोऽयमाकारः प्रयुक्तः; अथ वा—पूर्वप्रक्रान्तवाक्यार्थस्यान्यथाकरणमिदं प्रयुज्यते; 'आ एवं नु मन्यसे' इति, नैवं पूर्वममंस्थाः; सम्प्रति त्वेवं मन्यस इति। अथ वा—वाक्यशब्देन वाक्यमेवोच्यते, वाक्यावयवो निरर्थक एवाकारः प्रयुज्यत इति। स्मरणं स्मृतिः, तत्र य आकारो वर्त्तते स्मृतिसूचकः, स ङिन्न भवति। आ एवं किल तत्; एवमिदं विज्ञातमित्यर्थः। ज्ञातं स्मृतमेव। अथ वा—स्मर्त्तव्यार्थविषयः पूर्वमाकारः प्रयुज्यते। 'आ' इते स्मृतेरुत्तरकालमर्थं आख्यायते। 'आ' इत्येतस्यैवं किल तदिति भवत्ययमर्थ इत्यर्थः। वाक्यस्मरणयोराकारस्य प्रगृह्यसंज्ञास्त्येवेति 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावः। तेन 'वृद्धिरेचि' इति वृद्धिर्न भवति।

## संबुद्धौ शाकल्यस्येतावनार्षे ॥१६॥

'ओत्' इति वर्त्तते। संबुद्धिनिमित्तो य ओकारः स शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञो भवति, 'इति' शब्देऽनार्षे=अवैदिके परतः। वायो इति, वायविति। भानो इति, भानविति।

संबुद्धाविति किम्? गवित्ययमाह। अत्रानुकार्यानुकरणयोर्भेद-

पदमञ्जरी

उच्यते; स्वार्थे प्रवृत्तात्प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानादत्र गौणत्वं प्रतीयते। कारकाणामपि हि क्रियया सम्बन्धः, न परस्परेण; गामानय, वाहीकमानय, गौस्तिष्ठति, वाहीकस्तिष्ठतीति। पश्चात्तु वाक्योपन्यासात् सामानाधिकरण्याद्गौणार्थे प्रादुर्भावो भवति। इह तु गौणार्थप्रादुर्भावादुत्तरकालं च्व्यन्तत्वे सति प्रगृह्यसंज्ञाप्राप्तिरिति विशेषः। अतः पदकार्येष्वेवायं न्यायः, न प्रातिपदिककार्येष्विति सिद्धम्।

*संबुद्धौ शाकल्यस्येतावनार्षे* ॥ 'संबुद्धौ' इत्यनेनाऽनूद्यमान ओकारो विशेष्यते, अतः किङतीतिवन्निमित्तसप्तमीयमित्याह—*संबुद्धिनिमित्त इति*। परसप्तम्यां तु त्रपो इतीत्यादौ नपुंसके न स्यादिति भावः। *अवैदिक इति*। *अनार्ष* इत्यस्यार्थमाह, ऋषिर्वेदः तदुक्तमृषिणेत्यादौ दर्शनात्। ननु च गवित्ययमाहेत्यत्रानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्या भाव्यमित्यत आह—*अत्रेत्यादि*। अत एव हि विभक्त्यभावादपदान्तत्वाच्छाकल्यस्यापि प्रत्युदाहरणे 'लोपः शाकल्यस्य' इति लोपो न भवति।

*भेदस्याविवक्षितत्वादिति*। भेदनिबन्धनो हि प्रतिपाद्यप्रतिपादकभावः, स तस्मिन्नविवक्षिते न भवति। *असत्यर्थवत्त्व इति*। यद्यनर्थकः; कथं तर्हि प्रयुज्यते?

न्यासः

ओत् ॥ सम्बुद्धौ शाकल्यस्येतावनार्षे ॥ सम्बुद्धिनिमित्त इति। सम्बुद्धिर्निमित्तं यस्य स तथोक्तः। एतेन 'सम्बुद्धौ' इत्यस्य निमित्तसप्तमीत्वं दर्शयति। परसप्तम्यां त्वस्याम् 'हे त्रपो' इत्यत्र न स्यात्, 'स्वमोर्नपुंसकात्' इति सम्बुद्धेर्लुप्तत्वादिति भावः। 'सम्बुद्धौ च' इति वर्त्तमाने 'ह्रस्वस्य गुणः' इत्यनेन यो गुणो विधीयते, स सम्बुद्धिनिमित्तः; तस्य सम्बुद्धिनिमित्तत्वमुपादाय विहितत्वात्। गवित्ययमाहेति। केनचिद् गौरिति वक्तव्ये शक्तिवैकल्याद् 'गो' इत्युक्तम्, तमन्यो यदानुकरोति, तत्रैतत् प्रत्युदाहरणम्। ननु चानुकार्येणार्थेनार्थवत्त्वात् प्रातिपदिकत्वे सति विभक्त्यात्र भवितव्यमित्यत आह—अत्रेत्यादि। अत्रानुक्रियमाणगस्यानुकरणस्य यदि भेदो विवक्ष्यते, ततोऽर्थवत्तायां सत्यां स्याद्विभक्तिः, स तु न विवक्ष्यत इति कुतस्तस्याः प्रसङ्गः? न

स्याविवक्षितत्वात्। असत्यर्थवत्त्वे विभक्तिर्न भवति। शाकल्यग्रहणं विभाषार्थम्। इताविति किम्? वायोऽत्र। अनार्ष इति किम्? एता गम-ब्रह्मबन्धवित्यब्रवीत्। यस्त्वं कथं नेत्थ ब्रह्मबन्धविति ऐ.४।२८

उञः ॥१७॥

'शाकल्यस्येतौ' इति वर्तते। उञः प्रगृह्यसंज्ञा भवति, इतौ शाकल्यस्याचार्यस्य मतेन। शाकल्यस्येति विभाषार्थम्। उ इति, विति॥

ऊँ ॥ १८ ॥

'उञः' इति वर्त्तते। उञ इतावनार्षे ऊँ इत्ययमादेशो भवति दीर्घोऽनुनासिकः, शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्च। शाकल्यस्य ग्रहणं

पदमञ्जरी

प्रयोजनवत्त्वात्, प्रयोजनमनुकार्यप्रतीतिः। यद्यप्यभिधानव्यापारो नास्ति, तथापि तदानीमुच्चारितं रूपं सादृश्यादनुकार्यप्रतिपत्तिपरम्, भेदश्च सन्नेवं न विवक्षित इति अनुकार्यस्यापशब्दत्वेऽपि नास्यापशब्दत्वम्। *शाकल्यग्रहणं विभाषार्थमिति*। तत्र बह्वृचाः प्रगृह्यमेवाधीयते, *तैत्तिरीयास्त्वप्रगृह्यम्*।

उञः ॥ यद्ययमेको योगः स्याद् 'उञ ऊँ' इति यथापठितं सूत्रकारेण, ततः 'उञः' इत्यस्य श्रुतेनादेशेन सम्बन्धः स्याद्, न प्रगृह्यसंज्ञया; सा तु 'निपात एकाजनाङ्' इति नित्यैव स्यात्, शाकल्यश्रुत्यनुवृत्त्या चादेशे विकल्पिते रूपद्वयमेव स्याद्—उ इति, ऊँ इतीति; न तु वितीति तृतीयम्। अतो विभज्य व्याचष्टे। तत्र यद्यपि पूर्वसूत्रेषु सामानाधिकरण्येन निर्देशात्प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयः, तथापीह षष्ठीनिर्देशात्स्वरूपपदार्थकः सम्पद्यते। अत एवाह—*उञः प्रगृह्यसंज्ञा भवतीति*। प्रगृह्यमित्येषा संज्ञा भवतीत्यर्थः। पूर्वत्र तु द्विवचनं प्रगृह्यसंज्ञं भवतीत्युक्तम्, अनेन च प्रगृह्यसंज्ञाया एव विकल्पनाद्—उ इति, वितीति साधितं रूपद्वयम्॥

ऊँ ॥ *शाकल्यस्य मतेन प्रगृह्यसंज्ञकश्चेति*। अनेनास्मिन्नपि योगे द्वयमप्येतद-

न्यासः

हीह शब्दशास्त्रे वस्तुनः सत्तैव शब्दसंस्कारस्य प्रधानं कारणम्, किं तर्हि? विवक्षा च; सा चेह नास्ति। शाकल्यग्रहणं विभाषार्थमिति। एतेन पूजार्थताशङ्कां निरस्यति। यदि हि पूजार्थमेव तत् स्याद्, विकल्पो न भवेदिति भावः।

उञः ॥ ऊँ॥ तेन त्रीणि रूपाणि भवन्तीति शाकल्यग्रहणानुवृत्तेः फलं दर्शयति। यदि ह्यत्र शाकल्यग्रहणं नानुवर्त्तेत, तदा पूर्वसूत्रेण यस्मिन् पक्ष उञः प्रगृह्यसंज्ञा न विहिता तस्मिन्ननेन नित्यम् 'ऊँ' आदेशः स्यात्। तत उ इति, ऊँ इति च द्वे रूपे स्याताम्;

विभाषार्थमिहाप्यनुवर्तते, तेन त्रीणि रूपाणि भवन्ति—उ इति, विति, ऊँ इति ॥

## ईदूतौ च सप्तम्यर्थे ॥ १९ ॥

'शाकल्यस्येतावनार्षे' इति निवृत्तम्। ईदन्तमूदन्तं च शब्दरूपं सप्तम्यर्थे वर्त्तमानं प्रगृह्यसंज्ञं भवति। अध्यस्यां मामकी तनू। मामक्यां तन्वामिति प्राप्ते। मामकयाम्, मामकी इति। तन्वाम्, तनू इति। सोमो गौरी अधिश्रितः।

### पदमञ्जरी

नुवर्त्यमिति दर्शयति। यदि 'शाकल्यस्य' इति नापेक्ष्येत तदा प्रगृह्यस्योत्रा नित्यमादेशः स्यात्, अनुवृत्तस्य प्रगृह्यशब्दस्य षष्ठ्यन्ततया विपरिणामात्, ततश्च ऊँ इति, वितीति द्वे एव रूपे स्याताम्; उ इतीति न स्यात्। शाकल्यग्रहणेन तु विकल्पे सति तदपि भवति। तथा प्रगृह्यग्रहणाननुवृत्तौ प्रगृह्याप्रगृह्ययोरप्यादेशो विकल्पः स्यात्। तत्र प्रगृह्यस्यादेशोऽपि सिद्धमिष्टम्, अप्रगृह्यस्य तु यण् सानुनासिको वकारः स्यात्। अतः प्रगृह्यग्रहणमप्यनुवर्त्यम्। *त्रीणि रूपाणीति*। त्रीण्येव रूपाणि भवन्ति। त्रीणि च भवन्तीत्यर्थः। इह यदेतन्नूँ पदकारैरुच्यत इत्यनुकरणे 'यरोऽनुनासिकेऽनुनासिको वा' इत्येष विधिर्भवति।

*ईदूतौ च सप्तम्यर्थे* ॥ *शाकल्यस्येताविति निवृत्तमिति*। अस्वरितत्वात्। इह चशब्देन प्रयत्नेन प्रकृतमनुकृष्यते, तत्र संज्ञाया अननुवृत्तौ विधेयं नास्तीति सैवानुकृष्यते। *मामक्यां तन्वामिति प्राप्त इति*। सप्तम्यर्थं दर्शयति। मामकीतनूशब्दौ 'सुपां सुलुक्' इति लुप्तसप्तमीकौ। *मामकी इति, तनू इतीति*। कार्योदाहरणे। गौरी अधिश्रित इति तु संहितापाठेऽपि कार्योदाहरणमिति। स एव तत्र दर्शितः।

### न्यासः

न वितीति तृतीयम्। शाकल्यग्रहणानुवृत्तौ तु सत्यां यस्मिन् पक्षे पूर्वसूत्रेण प्रगृह्यसंज्ञा उञो न कृता, तस्मिन्ननेन ऊँ आदेशे विभाषा विहिते वितीति तृतीयं रूपं सिध्यति।

**ईदूतौ च सप्तम्यर्थे** ॥ अध्यस्यां मामकी तनू इति। एतद् वेदवाक्यं वेदितव्यम्। अत्र 'मामकी' 'तनू' इति शब्दौ 'सुपां सुलुक्' इति लुप्तसप्तमीकौ। तत्र यदा अर्थाद्व्यवच्छिद्य स्वरूपे व्यवस्थापनायेतिशब्दः प्रयुज्यते तदैते उदाहरणे—मामकी इति, तनू इति च। तथा सोमो गौरी इत्येतदपि। मामक्यामित्यादेरुपन्यासः सप्तम्यर्थप्रदर्शनार्थः।

ईदूताविति किम्? प्रियः सूर्ये प्रियो अग्ना भवाति। अग्नि-शब्दात्परस्याः सप्तम्या डादेशः।

सप्तमीग्रहणं किम्? धीती, मती, सुष्टुती। धीत्या, मत्या, सुष्टुत्या इति प्राप्ते।

अर्थग्रहणं किम्? वाप्यश्वः, नद्यातिः।

तपरकरणमसन्देहार्थम्।

**पदमञ्जरी**

*अग्ना भवातीति*। रूपप्रत्युदाहरणम्, कार्यं तु पदकाले। *धीतीत्यादि*। धीति मति-सुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्ण ईकारः, तद्दर्शयति—*धीत्या, मत्येत्यादिना*। *वाप्यश्वः, नद्यातिरिति*। 'संज्ञायाम्' इति सप्तमीसमासः। अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति, अस्ति ह्यत्रापि सप्तम्यर्थः? उच्यते; जहत्स्वार्था वृत्तिरिति पक्षे समासस्यैवार्थवत्त्वात्पूर्वोत्तरपदयोर्वर्णवदानर्थक्यमिति सप्तम्यर्थो नास्ति। अजहत्स्वार्थायामपि वृत्तावुपसर्जनपदं न स्वार्थमात्रे पर्यवस्यति; किन्तु तत्संसृष्टे प्रधानार्थे।

तत्रार्थग्रहणसामर्थ्याद्यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्टरूपस्तस्यैव ग्रहणमिति संसृष्टे न भविष्यति। तपरकरणं गुणान्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत्, न; अभेदकत्वाद् गुणानाम्। भिन्नकालानां प्लुतानां निवृत्त्यर्थमिति चेत्; न; अनण्त्वादसंभवाच्च। न हि सप्तम्यर्थवृत्ति प्लुतान्तं सम्भवतीत्यत आह—*तपरकरणमित्यादि*।

**न्यासः**

**डादेश इति**। सुपां सुलुगित्यादिना। तत्रेति शब्दे परतोऽकः सवर्णे दीर्घत्वं भवत्येव। **धीती इत्यादि**। धीतिमतिसुष्टुतिशब्देभ्यः परस्य तृतीयैकवचनस्य पूर्वसवर्णदीर्घत्वम्, लुग् वा। इतिशब्दे परतोऽकोऽत्रापि सवर्णदीर्घत्वं भवत्येव। धीत्येत्यादिना तृतीयार्थवृत्तितां दर्शयति। वाप्यामश्वः, नद्यामातिरिति 'संज्ञायाम्' इति सप्तमीसमासः। अथार्थग्रहणे क्रियमाणेऽपि कस्मादेवात्र न भवति, अस्ति ह्यत्रापि सप्तम्यर्थः? नैतदस्ति; अर्थग्रहणसामर्थ्यात्। अर्थग्रहणे सति केवलो योऽसंसृष्टः सप्तम्यर्थः स इह गृह्यते। नैवंविधे समासे सप्तम्यर्थः सम्भवति; संविभिन्नोभयरूपत्वाद् वृत्तौ वर्त्तिपदार्थानाम्। एषोऽजहत्स्वार्थायां वृत्तौ परिहार उक्तः, जहत्स्वार्थायान्तु तस्यां वाक्यावस्थायामुपसर्जनीभूतो योऽर्थः, तं शब्दो जहातीति सप्तम्यर्थो नास्त्येव। तेनार्थग्रहणे सति समासे प्रगृह्यसंज्ञा न भवति।

अथ तपरकरणं किमर्थम्? प्लुतनिवृत्त्यर्थमिति चेत्, न; असम्भवात्। न प्लुते हीकारोकारान्तं सप्तम्यर्थवृत्तिरूपं किञ्चिदस्ति, यद्व्यावृत्तये तपरकरणं क्रियते। गुणा-

ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।
पूर्वस्य चेत्सवर्णोऽसावाडाम्भावः प्रसज्यते ॥ १ ॥
वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।
ज्ञापकं स्यात्तदन्तत्वे मा वा पूर्वपदस्य भूत् ॥ २ ॥

पदमञ्जरी

*ईदूतावित्यादि* । 'ईदूतौ सप्तमी' इत्येवास्तु, नार्थोऽर्थग्रहणेन । *लुप्तेऽर्थग्रहणाद्भवेदिति* । असत्यर्थग्रहणे संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधात् सप्तम्या एव संज्ञा स्यात्, ततश्च 'सोमो गौरी अधिश्रितः' इत्यत्र न स्याल्लुप्तत्वात् । अर्थग्रहणे त्वर्थनिमित्तेयं संज्ञा, न तु प्रत्ययश्रवणनिमित्ता । अतः 'लुप्तेऽर्थग्रहणाद्भवेत्' । नात्र सप्तमी लुप्यते, पूर्वसवर्णोऽत्र भवति—सुपां सुलुगिति । ततोऽकः सवर्णे दीर्घत्वेन तस्यादिवत्त्वात् सप्तमीग्रहणेन ग्रहणाद् अस्त्येव सप्तमीति शङ्कते-*पूर्वस्य चेदिति* । दूषयति—*आडाम्भाव इति* । यदि ह्यत्र पूर्वसवर्णः स्यात्, दीर्घादेशं बाधित्वाऽऽडामौ स्याताम्, अतो लुगेव युक्तः । तस्मादर्थग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्, यस्मात्सर्वत्रैव लुका भाव्यमिति न क्वचित्सप्तम्यस्ति । उच्यते चेदम्—"तत्र वचनसामर्थ्यात्संज्ञाविधावपि तदन्तविधिर्भविष्यति ।" नेदं वचनाल्लभ्यम्,

न्यासः

न्तरभिन्नानां तुल्यकालानां ग्रहणार्थमिति चेत् ? नः अभेदकत्वाच्छास्त्रे गुणानाम् इत्यत आह—तपरकरणमित्यादि । तपरत्वे ह्यसति यणादेशः स्यात् । ततश्च किमयं दीर्घः, उत ह्रस्व इति सन्देहः स्यात् ; स मा भूदिति तपरत्वं क्रियते ।

ईदूतौ सप्तमीत्यादि । ईदूतौ सप्तमीत्येतावदेव सूत्रमस्तु, किमर्थग्रहणेन ? लुप्तेऽर्थग्रहणाद् भवेदिति । इह 'सोमो गौरी अधिश्रितः' इति लुप्तायामपि सप्तम्यां प्रगृह्यसंज्ञा यथा स्यादित्येवमर्थमर्थग्रहणम् । अत्र हि सप्तम्या अभावात् प्रगृह्यसंज्ञा न स्यात्, अर्थग्रहणात् तु भवति, सप्तम्यर्थस्य विद्यमानत्वात् । पूर्वस्य चेत्सवर्णोऽसाविति । स्यादेतत्—नैवात्र सप्तम्या लुक् क्रियते, किं तर्हि ? 'सुपां सुलुक्' इत्यादिना पूर्वसवर्ण ईकारः, तत्राकः सवर्णे दीर्घत्वे कृते तस्यान्तवद्भावे सति सप्तमीग्रहणेन ग्रहणादस्त्येव सप्तमी, ततो नार्थोऽर्थग्रहणेनेति, एतच्चायुक्तम् ; एवं हि सति आडाम्भावः प्रसज्यते । यद्यत्र पूर्वसवर्णः स्यात् , तदा परत्वादकः सवर्णदीर्घत्वं बाधित्वा 'आण् नद्याः' इत्याटो भाव आपद्यते, 'ङेराम्नद्याम्नीभ्यः' इत्यामश्च । भावः= प्रादुर्भावः, सत्ता वा । तस्मात् पूर्ववल्लुगेव कर्त्तव्यः; ततश्चासत्यां सप्तम्यां प्रगृह्यसंज्ञा न स्यात् । तस्मादर्थग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् ; यस्मात् सर्वत्रैव सप्तम्या लुका भवितव्यमिति न क्वचित् सप्तम्यस्ति । उच्यते चेदं वचनम्—'तत्र वचनसामर्थ्याल्लुप्ता-

पदमञ्जरी

यतो वचनाद्यत्र दीर्घत्वं तत्रैव स्याद्–दृतिं न शुष्कं सरसीशयानम्" इति । अत्र हि सरःशब्दात्परस्य ङिशब्दस्य 'इयाडियाजीकाराणामुपसङ्ख्यानम्' इतीकारे कृते सप्तम्येव श्रूयते इति तत्रैव स्याद्, न गौरी इत्यादौ । *तत्रापि सरसी यदि* । तत्रापि सिद्धम्, कथम् ? यदि सरसीशब्दो विद्यते । असंदिग्धे संदिग्धाभिधानमेतद्, शास्त्राणि चेत्प्रमाणं स्युरिति यथा । अस्ति च सरसीशब्दः, दक्षिणापथे महान्ति सरांसि 'सरस्यः' उच्यन्ते । ततश्च सरसीशब्दोऽपि लुप्तसप्तमीक एवेति वचनात्तदन्तविधिरित्येतदेव स्थितम् । एवं तर्हि—*ज्ञापकं स्यात्तदन्तत्वे* । 'ईदूदेद्' इत्यत्र चत्वारः पक्षा उपन्यस्ताः, तत्र तदन्तत्वे इत्यनेन तृतीयचतुर्थपक्षावुप-

न्यासः

यामपि तस्यां भविष्यति, नैतदस्ति; यतो वचनाद् यत्र दीर्घत्वम्, तत्र भविष्यति; यथा—दृतिं न शुष्कं सरसी शयानम्' इति । अत्र सरःशब्दात् परस्याः सप्तम्या इयाडियाजीकाराणामित्यस्मादुपसंख्यानाद् 'व्यत्ययो बहुलम्' इत्यतो वा दीर्घ ईकारे कृते सप्तमी श्रूयते; ततश्चात्र वचनस्य सावकाशत्वात् 'सोमो गौरी अधिश्रितः' इत्यत्र न स्यात् । तत्रापि सरसी यदीति । यदि सरसीशब्दोऽस्ति तदात्रापि नैवावकाशः । अस्ति च सरसीशब्दः । तथा हि-गौरादिषु पिप्पल्यादयश्चेति पाठात् पिप्पल्याद्यन्तःपातिनः सरःशब्दादीकारे कृते सरसीति रूपं सम्पद्यते । तथा च दक्षिणापथे महान्ति सरांसि 'सरस्यः' इत्युच्यन्ते । सरसीशब्दस्य प्रगृह्यसंज्ञायां प्रयोजनम्—तत उत्पन्नायाः सप्तम्या लुकि कृत इतिशब्दे चाध्याहृते 'सरसी' इत्यत्र स्वरसन्ध्यभावः । तदेवं सरसीशब्दो विद्यत एवेति । 'दृतिं न शुष्कं सरसी शयानम्' इत्यत्रापि सरसीशब्दो लुप्तसप्तमीक एव प्रयुक्तः । तथा च तदेवावस्थितम्—वचनाद् भविष्यतीति प्रत्याख्यातमर्थग्रहणम् । एवं तर्हि—ज्ञापकं स्यात् तदन्तत्वे । 'ईदूदेद्द्विवचनम्' इत्यत्र चत्वारः पक्षा आश्रीयन्ते । ईदादयो हि द्विवचनेन विशिष्यन्ते—ईदादि यद् द्विवचनमिति; ईदादिभिर्वा द्विवचनम् इति—ईदाद्यन्तं यद् द्विवचनमिति; द्विवचनप्रकृतिर्वोभाभ्याम्—द्विवचनान्तमीदाद्यन्तं यच् शब्दरूपमिति; इदादिभिर्वा द्विवचनं विशिष्य पश्चात् तेनेदन्तेन द्विवचनेन प्रकृतिः—ईदाद्यन्तं यद् द्विवचनं तदन्तं शब्दरूपमितीदाद्यन्तं द्विवचनान्तमित्यर्थः । तत्र तृतीये पक्षे दोष उक्तः—कुमार्योरगारं कुमार्यगारम्, वध्वोरगारं वध्वगारम्—इत्यत्र प्रगृह्यसंज्ञा प्राप्नोति; एतदीदाद्यन्तं द्विवचनान्तञ्च भवति प्रत्ययलक्षणेनेति चतुर्थे पक्षेऽपि दोष उक्तः । अशुक्ले वस्त्रे शुक्ले सम्पद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्राप्नोति । शुक्लशब्दाच् च्विप्रत्ययान्तात् 'नपुंसकाच्च' इत्यौङः शीभावे कृते 'अव्ययादाप्सुपः' इति लुक् । एतद्धीदाद्यन्तं द्विवचनान्तं भवति प्रत्ययलक्षणेनेति । तदन्तत्व इति । अनेन तृतीयचतुर्थपक्षावुपलक्षयति । तदन्तत्वे तदन्तपक्षे तृतीये चतुर्थे च ज्ञापकं भवेदेतदर्थमर्थग्रहणम् इति । इह प्रगृह्यप्रकरणे प्रत्ययलोप-

## दाधा घ्वदाप् ॥ २० ॥

पदमञ्जरी

लक्षयति । तत्र ज्ञापकं स्याद्—इह प्रगृह्यप्रकरणे प्रत्यलक्षणं न भवतीति; यदि स्यात्, पूर्वोक्तन्यायेन संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेराश्रयणात् लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन सप्तम्यन्तमिति संज्ञा भविष्यति, किमर्थग्रहणेन ? तेन तदन्तत्वे यो दोष उक्तः–प्रत्ययलक्षणेन संज्ञा प्राप्नोतीति, स न भवतीति संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावादेव तदन्तपक्षस्तत्र नैव स्थित इत्याह—*मा वेति* ॥

*दाधा घ्वदाप्* ॥ किमिदं प्रयोगस्थानामनुकरणम्—प्रयोगे ये दाधारूपाः श्रूयन्ते, ते घुसंज्ञा भवन्तीति ? आहोस्वित् उपदेशे धातुपाठेऽवस्थितानां यावतामनुकरणं दाधारूपं संभवति तेषामिति ? किं चातः ? यदि प्रयोगस्थानामनुकरणम्, शिति न प्राप्नोति, दो–प्रणिद्यति, देङ्–प्रणिदयते, दाण्–प्रणियच्छति, धेट्–प्रणिधयति; किं कारणम् ? अदाधारूपत्वात् । प्रणिदाता प्रणिधाता इत्यादावेव तु स्यात् । किमुच्यते शिति न प्राप्नोतीति, यावता दोदेङ्धेटामशित्यप्यात्वे कृतेऽपि लाक्षणिकत्वान्न प्राप्नोति ? नैष दोषः; 'गामादाग्रहणेष्वविशेषः' इति दोदेङौ तावद्गृह्येते । अस्याश्च परिभाषाया देपः पित्त्वं लिङ्गम्; अन्यथा हि लाक्षणिकत्वादेवास्य ग्रहणं न भविष्यति । 'दो दद् घोः' इत्यत्र च 'दः' इत्येतद् धेण्निवृत्त्यर्थं सत्तस्य घुसंज्ञां ज्ञापयति, दधातेस्तु 'दधातेर्हिः' इति ह्यादेशविधा-

न्यासः

लक्षणेन प्रगृह्यसंज्ञा न भवतीति । यदि हि स्यादर्थग्रहणमनर्थकं स्यात् । एतावद् वक्तव्यम्—'ईदूतौ च सप्तमी' इति । सप्तम्या लुकि कृते प्रत्ययलक्षणेन सप्तमीसहचरितौ यावीदूतौ सप्तम्यां परतो वा यावीदूतौ तयोः प्रगृह्यसंज्ञा भवत्येवेति नार्थोऽर्थग्रहणेन । अर्थग्रहणाद्विज्ञायते–'प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति' इति । तेन तदन्तपक्षद्वये यो दोष उक्तः, स न भवति । मा वा पूर्वपदस्य भूदिति । पूर्वपदग्रहणेन समास उपलक्ष्यते । यस्मात् समासे सत्येतद्भवति पूर्वपदमुत्तरपदमिति । तदेतदुक्तं भवति–वाप्यश्वो नद्यातिरित्यादौ समासे प्रगृह्यसंज्ञा मा भूदित्येवमर्थग्रहणमिति । यथा च तस्मिन् सति समासे प्रगृह्यसंज्ञा न भवति, तथा पूर्वमेव प्रतिपादितम् ।

दाधा घ्वदाप् ॥ दाधा इति । दारूपाणां चतुर्णां कृतैकशेषाणां धारूपयोर्द्वयोश्च कृतैकशेषयोर्द्वन्द्वः । ननु च 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्, न तु लाक्षणिकस्य' इत्यनया परिभाषया 'दो अवखण्डने', 'देङ् रक्षणे;' 'धेट् पाने' इत्येतेषां ग्रहणं न स्यात्, नैतदस्ति; तस्या हि परिभाषाया 'गामादाग्रहणेष्वविशेषः' इत्यपवादोऽस्ति, तेन सत्यपि लाक्षणिकत्वे दोदेङौ तावद् गृह्येते । धेटोऽपि लिङ्गाद् ग्रहणमनुमीयते । तत् पुनर्लिङ्गं देपः पकारानुबन्धः, स हि 'अदाप्' इति दाप्प्रतिषेध-

दारूपाश्चत्वारो धातवो धारूपौ च द्वौ दाब्दैपौ वर्जयित्वा घुसंज्ञका भवन्ति। डुदाञ्—प्रणिददाति। दाण् दाने—प्रणिदाता। दो—प्रणिद्यति। देङ्—प्रणिदयते। डुधाञ्—प्रणिदधाति। धेट्—प्रणिधयति वत्सो मातरम्।

अदाविति किम्? दाप लवने—दातं बर्हिः। दैप् शोधने—अवदातं मुखम्।

पदमञ्जरी

नादेव दद्भावाप्रसङ्गः। यदि 'गामादाग्रहणेष्वविशेषः' तर्हि अर्थवत्परिभाषापि निवर्तेत, तत्र को दोषः? प्रनिदारयति—अत्रापि प्राप्नोति। अस्तु, णत्वं कस्मान्न भवति? 'उपसर्गात्' इत्यनुवर्तते, सम्बन्धिशब्दश्चायमुपसर्ग इति, तस्मादेवं विज्ञास्यामः—गदादीनां य उपसर्गस्तत्रस्थान्निमित्तादुत्तरस्य तानेव गदादीन्प्रत्युपसर्गस्य नेरिति। प्रनिदारयतीत्यत्र च यं प्रत्युपसर्गो नासौ दारूपः, यश्च दारूपः न तं प्रत्युपसर्गः, तस्यानर्थकत्वाद्। अतः शित्येव दोषः। उपदेशस्थानां त्वनुकरणे दोदेङ्धेडनुकरणानामपि 'आदेच उपदेशेऽशिति' इत्यात्त्वसद्भावात्तेषां दाण्दाञ्धाञां च सर्वेषां सिद्धयति। आत्वविषयेऽप्येकदेशविकृतस्यानन्यत्वात् सिद्धम्। सर्वेषां च स्वरूपेणानुक्रियमाणत्वात् लक्षणप्रतिपदोक्तयोर्निरनुबन्धकेति च परिभाषयोरनुपस्थानम्, नापि प्रनिदारयतीत्यत्र प्रसङ्गः, न हि 'दीङ्' इत्येतदनुकरणस्यात्वमस्ति। कृतात्वमपि किञ्चिन्मात्रसाधर्म्यादनुकरणं न विरुध्यते, यथा गवित्ययमाहेति कृतावादेशमपि गोशब्दस्येति निर्दोषं द्वितीयं पक्षमाश्रित्याह—*दारूपाश्चत्वार इत्यादि*। एवं च दीङोऽनुकरणस्यात्वाभावात् क्र्यादिषु 'मीनातिमिनोतिदीङाम्' इत्यात्वे दारूपस्यापि घुसंज्ञा न भवति, प्रनिदाता—णत्वं न भवति। उपादास्तास्य स्वरः शिक्षकस्य—'स्थाघ्वोरिच्च' इतीत्वं न भवति।

केचितु संज्ञामिच्छन्ति। तेषामप्युपादास्तेत्यत्र न भवति, 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति। *'प्रणिददातीत्यादौ* नेर्गदेति णत्वम्। *प्रणिद्यतीति*—'ओतः श्यनि'।

न्यासः

सामान्यग्रहणार्थः क्रियते। यदि चास्याः परिभाषाया इह व्यापारः स्याद्, दैपः पकारानुबन्धकरणमनर्थकं स्यात्। लाक्षणिकत्वादेव ह्यस्य ग्रहणं न भविष्यतीति किं प्रतिषेधेऽस्य ग्रहणेन! ननु च लाक्षणिकमपि दारूपं धारूपं च धेटो नोपपद्यत एव, सानुबन्धकस्य ह्यनेजन्तत्वादात्त्वानुपपत्तेः, नैष दोषः; यदयम् 'उदीचां माङो व्यतीहारे' इति मेङः सानुबन्धकस्यात्त्वभूतस्य निर्देशं करोति, तज् ज्ञापयति—'नानुबन्धकृतमनेजन्तत्वम्' इति। ननु च 'माङ् माने' इत्यस्याप्यसौ निर्देशः स्यात्, तत् कथं

घुप्रदेशाः 'घुमास्थागापाजहातिसां हलि' इत्येवमादयः ॥

आद्यन्तवदेकस्मिन् ॥ २१ ॥

असहायस्य आद्यन्तोपदिष्टानि कार्याणि न सिद्धयन्तीत्ययमति-

**पदमञ्जरी**

*दातं बर्हिरति* । लूनमित्यर्थः । घुसंज्ञाया अभावाद् 'दो दद् घोः' इति न भवति । अवदातमित्यत्र च 'अच उपसर्गात्तः' इति न भवति । ननु दाब्दैपोरननुकरणादेव न भविष्यति, अस्मदायत्तं खल्वनुकरणं दाप्दैपोर्नं करिष्यामः, तन्न; असति तस्मिन्प्रतिपदोक्तमेव दाधारूपमनुकरणं गृह्येत । सति तु तस्मिन् यावतामनुकरणं दाधारूपं सम्भवति लाक्षणिकं प्रतिपदोक्तं वा, तावतां सर्वेषामनुकरणं भवति । 'उदीचां माङो व्यतीहारे' इति च मेङः कृतात्त्वस्य निर्देशो ज्ञापयति—'नानुबन्धकृतमनेजन्तत्वम्' इति । न हि 'माङ् माने' इत्यस्य व्यतीहारे वृत्तिः सम्भवति, तेन दैपः पकारे श्रूयमाण एवात्त्वं भवतीति अदाबिति प्रतिषेधो भवति । संज्ञाप्रवृत्तिसमये च यद्दाबूपम्, तस्य प्रतिषेध इति प्रणिदापयतीत्यत्र प्रागेव पुकः प्रवृत्तां घुसंज्ञामाश्रित्य णत्वं भवति । 'दाधा घ्वपित्' इति वक्तव्यम्, पित् घुसंज्ञो न भवतीति । बकारो वा द्वयोरनुबन्धः, सूत्रमपि बकारान्तमेव पठितव्यम् । भाष्यवार्त्तिकविरोधस्तु *महापदमञ्जर्यामस्माभिः* प्रपञ्चितः ॥

*आद्यन्तवदेकस्मिन्* ॥ 'द्वन्द्वे घि' इत्येतद्बाधित्वा 'अजाद्यदन्तम्' इत्यन्तशब्दस्य पूर्वनिपातः प्राप्तोऽस्मादेव निर्देशान्न भवति । न चात्यन्तबाधः, अन्तादिवच्चेति लिङ्गात् । *असहायस्येत्यादिना* सूत्रारम्भस्य प्रयोजनमाह । सति परस्मिन् यस्मात्पूर्वं नास्ति स आदिः, सति च पूर्वस्मिन्यस्मात्परं नास्ति सोऽन्तः, तदेतदुभयमसहाये न सम्भवति । तस्मादाद्यन्तयोर्यान्युपदिष्टानि उक्तानि कार्याणि

**न्यासः**

ज्ञापकम् ! नैतदस्ति; 'मेङ् प्रणिदाने' इत्ययमेव व्यतीहारे वर्त्तते, न 'माङ् माने' इति । तस्मान् मेङ एवायं कृतात्त्वस्य निर्देशो ज्ञापनार्थः । प्रणिददातीति । 'नेर्गदनदपतपदघुमास्यतिहन्ति' इत्यादिना घुसंज्ञायां सत्यामिह णत्वं भवति । प्रणिदातेति । तृजन्तम् । प्रणिद्यतीति । 'ओतः श्यनि' इत्योकारलोपः । अशिद्विषये दारूपोऽयं भवतीत्यत्र घुसंज्ञा प्रवर्त्तत एव । दातं बर्हिरिति । घुसंज्ञाया अभावाद् 'दो दद्घोः' इति ददादेशो न भवति । अवदातमिति । अत्रापि 'निष्ठा' इति क्तप्रत्ययः । अत्र 'अच उपसर्गात्तः' इति तकारादेशो न भवति ।

आद्यन्तवदेकस्मिन् ॥ असहायस्येत्यादिना सूत्रारम्भस्य फलं दर्शयति । इतिकरणो हेतौ । यस्मादादेरन्तस्य यानि कार्याण्युपदिष्टानि, तान्यविद्यमानसहायस्य न

देश आरभ्यते। सप्तम्यर्थे वतिः। आदाविव अन्त इव एकस्मिन्नपि कार्यं भवति। यथा कर्त्तव्यमित्यत्र प्रत्ययाद्युदात्तत्वं भवति, एवमौपगवमित्यत्रापि यथा स्यात्। यथा वृक्षाभ्यामित्यत्रातोऽङ्गस्य दीर्घत्वम्, एवम् 'आभ्याम्' इत्यत्रापि यथा स्यात्।

एकस्मिन्निति किम्? सभासन्नयने भवः साभासन्नयनः, आकारमाश्रित्य वृद्धसंज्ञा न भवति॥

पदमञ्जरी

तान्यसहायस्यापि यथा स्युरित्ययमारम्भः। असहायस्येत्यनेनासहायवचन एकशब्दो न संख्यावचन इति दर्शयति। बहुष्वपि व्यवस्थितस्यैकत्वसंख्यास्तीति 'एकस्मिन्' इति व्यर्थं स्यादिति भावः। 'एकस्मिन्' इत्युपमेये सप्तमीश्रवणादुपमानस्यापि सप्तमीसमर्थतेत्याह—*सप्तम्यर्थे वतिरिति*। वर्तमानादिति शेषः। 'तत्र तस्येव' इति इवार्थे वतिः। पूर्वं त्वसहायस्येति षष्ठीनिर्देशः सप्तम्यर्थस्यैव शेषरूपविवक्षया। कार्यार्थत्वात्सर्वातिदेशानां प्राधान्यात्कार्यातिदेशोऽयमित्याह—*कार्यं भवतीति*। आद्यन्तवद्व्यपदेशो निमित्तम्। 'पूर्ववत्सनः' इति तु निर्मूलम्, व्यपदेशातिदेशो हि कुरुते, कुर्वे इत्यादौ अन्तवद्व्यपदेशोऽपि अन्त्योऽजादिरस्येत्येवंरूपस्य बहुव्रीह्यर्थस्याभावाट्टिसंज्ञाया अभावे टेरेत्वं न स्यात्। कुर्वाते इत्यादौ तु दृष्टस्य टेरेत्वाख्यस्य कार्यस्यातिदेशे न दोषः। *आभ्यामिति*। अत्र द्वे अन्तत्वे उपयुज्येते—आकारान्तस्याङ्गस्यालोऽन्त्यस्य दीर्घ इति।

*सभासन्नयन इति*। असत्येकग्रहणे यत्रादिव्यपदेशो नास्ति मध्येऽसहाये च

न्यासः

सिध्यन्ति, तस्मादतिदेशोऽयमारभ्यते। द्वितीयादिकं हि सहायमपेक्ष्याद्यन्तशब्दौ प्रवर्त्तेते। तथा हि—लोकः सति हि परस्मिन् सहाये पूर्वाभावे चादिरिति व्यपदिशति, सति च पूर्वस्मिन् पराभावे चान्त इति। अतस्तदुभयमसहाये नास्तीति। तत्राद्यन्तप्रतिबद्धानि कार्याणि न स्युः, यद्ययमतिदेशो नारभ्यते। 'एकस्मिन्' इति वचनाद् 'आद्यन्तवद्' इत्यत्र सप्तमीसमर्थाद्वतिर्गम्यत इत्याह—सप्तम्यर्थे वतिरिति। आद्यन्तयोरिवाद्यन्तवत्, 'तत्र तस्येव' इति वतिः। औपगवम् इत्यत्राप्यादिव्यपदिष्टं कार्यमतिदेशस्य फलम्। प्रत्ययाद्युदात्तत्वं ह्यादेरुपदिष्टम्; 'आद्युदात्तश्च' इति वचनात्। आभ्यामिति। अत्रान्तोपदिष्टं दीर्घत्वं ह्यन्तस्योपदिष्टम्, 'अलोऽन्त्यस्य' इति वचनात्। इदमो भ्याम्, त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, 'हलि लोपः' इतीद्रूपस्य लोपः, 'सुपि च' इति दीर्घः।

सभासन्नयने भवः साभासन्नयन इति। यद्येकग्रहणं न क्रियेत, तदा यत्राद्यन्तव्य-

## तरप्तमपौ घः ॥ २२ ॥

'तरप् तमप्'—इत्येतौ प्रत्ययौ घसंज्ञौ भवतः । कुमारितरा । कुमारितमा । ब्राह्मणितरा । ब्राह्मणितमा ।

घप्रदेशाः 'घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योऽनेकाचो ह्रस्वः' इत्येवमादयः ॥

### पदमञ्जरी

सोऽतिदेशस्य विषयः । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यत्रादिग्रहणस्याप्येतदेव व्यावर्त्यमिति विकल्पः स्यात्—कदाचिद् वृद्धसंज्ञा, कदाचिन्न इति । तस्माद कारमाश्रित्य पक्षे वृद्धसंज्ञा न भवतीति ग्रन्थार्थः ॥

*तरप्तमपौ घः* ॥ तरतेः 'ऋदोरप्' इत्यपि गुणे भूतपूर्वेण पकारेण यद्यपि तरबिति रूपं भवति, तथापि तमपा साहचर्यात् प्रत्ययस्यैव ग्रहणमित्याह—*तरप्तमपौ प्रत्ययाविति* । तेन नद्यास्तरो नदीतर इति ह्रस्वो न भवति । अथ वा तरबिति रूपाश्रया संज्ञा, रूपनिर्ग्रहश्च प्रयोगे उपदेशे वा । तत्र न क्वचित्प्रयोगे तरबिति रूपमस्तीत्युपदेशगतं गृह्यते । न चात्रौपदेशिकं तरब्रूपमस्ति, सत्यामपि वा घसंज्ञायां न दोषः, ह्रस्वत्वं हि समानाधिकरणे स्त्रीलिङ्गे विधीयते । आतिशायनिकप्रकरण एव तादी घः, पितौ घ इति वा कर्त्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणमन्योऽपि तरबस्तीति सूचनार्थम्, तेन 'अल्पाच्तरम्' 'ऋग्पश्च बलवतरः' इत्यादौ स्वार्थे तरप् सिद्धो भवति ॥

### न्यासः

पदेशो नास्ति तत्रातिदेशो युक्त इत्याद्यन्तव्यपदेशरहिते मध्येऽप्यतिदेशः स्यात्; आद्यन्तवदिति वचनसामर्थ्यात् । ततश्च सभाशब्दाकारस्यादित्वे सति सभासन्नयनशब्दस्य य आकारः, वृद्धिसंज्ञकं तमाकारमाश्रित्य 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' इति वृद्धसंज्ञा स्यात् । तस्याञ्च सत्यामणं बाधित्वा 'वृद्धाच्छः' इति च्छप्रत्ययः प्रसज्येत । ननु च मध्येऽपि यद् वृद्धिसंज्ञकं तस्यापि यदि वृद्धसंज्ञा स्यादादिग्रहणं वृद्धसंज्ञासूत्रे निरर्थकं स्यात्, व्यवच्छेद्याभावात्, नैतदस्ति; आदिग्रहणसामर्थ्याद्धि यस्य तत्र विशिष्टमादित्वमनातिदेशिकम् = मुख्यम्, तत्परिग्रहणार्थं तत्रादिग्रहणं स्यात् । तस्माद् यस्य च न कदाचिदपेक्षयैवंविधमादित्वं सम्भवति, तदादिग्रहणस्य व्यवच्छेद्यं भविष्यति । यथा जानातीति ज्ञा इत्यादि । सभासन्नयने तु ये परेऽज्वर्णाः, तदपेक्षमस्ति विशिष्टमनातिदेशिकमादित्वमिति प्रवर्त्तते एव तत्र वृद्धसंज्ञा ।

तरप्तमपौ घः ॥ कुमारितरेति । 'द्विवचनविभज्योपपदे' इत्यादिना तरप् । कुमारितमेति । 'अतिशायने' इत्यादिना तमप् । तयोर्घसंज्ञायां सत्यां 'घरूपकल्प' इत्यादिना ह्रस्वत्वं भवति ।

मुख्य व्यवहार

## बहुगणवतुडति संख्या ॥ २३ ॥

'बहुगणवतुडति' इत्येते संख्यासंज्ञा भवन्ति। बहुकृत्वः। बहुधा। बहुकः। बहुशः। गणकृत्वः। गणधा। गणकः। गणशः। तावत्कृत्वः। तावद्धा। तावत्कः। तावच्छः। कतिकृत्वः। कतिधा। कतिकः। कतिशः।

बहुगणशब्दयोर्वैपुल्ये सङ्घे च वर्तमानयोरिह ग्रहणं नास्ति,

### पदमञ्जरी

*बहुगणवतुडति संख्या* ॥ यद्यपि 'वतुडती' इति संज्ञाविधौ प्रत्ययग्रहणम्, तथापि केवलयोः प्रत्यययोः संज्ञायां प्रयोजनाभावात् तदन्तयोरेव ग्रहणम्। *बहुकृत्व इत्यादि*—'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्,' 'संख्याया विधार्थे धा' 'बह्वल्पार्थात्' इति वर्त्तमाने 'संख्यैकवचनात्' इति शस्। 'संख्याया अतिशदन्तायाः कन्'। *तावत्कृत्व इति*—'यत्तदेतेभ्यः परिमाणे वतुप्', 'आ सर्वनाम्नः'। *कतिकृत्व इति*—'किमः संख्यापरिमाणे डति च'।

*बहुगणशब्दयोरित्यादि*। कथं पुनर्ग्रहणं नास्ति ? संख्येत्यन्वर्थसंज्ञेयम् संख्यायतेऽनयेति संख्येति। न च यो वैपुल्ये बहुशब्दः—बहुरोदन इति, संख्येये वा गणशब्दः—इक्षूणां गण इति, नाभ्यां संख्यायते। यदि तर्हि संख्यावाचिनोरेव ग्रहणं किमर्थं तयोरिह संज्ञा विधीयते ! यावता संख्याप्रदेशेषु लौकिक्यपि संख्या गृह्यते; अन्यथा पञ्चकः, सप्तक इत्यादौ 'संख्याया अतिशदन्तायाः' इति कन् न स्यात्, 'अतिशदन्तायाः' इति च प्रतिषेधोऽनर्थकः स्यात्, शास्त्रीयायाः संख्याया-

### न्यासः

बहुगणवतुडति संख्या ॥ अत्र बहुगणशब्दौ प्रातिपदिके, वतुडती प्रत्ययौ। बहुकृत्व इति—'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्'। बहुधेति—'संख्याया विधार्थे धा'। बहुक इति—'संख्याया अतिशदन्तायाः कन्'। तावत्कृत्व इत्यादि—तच्छब्दाद् 'यत्तदेतेभ्यः परिमाणे वतुप्' इति वतुपि कृते 'आ सर्वनाम्नः' इत्यात्त्वे कृते 'तावत्' इति भवति, किंशब्दात् किमः संख्यापरिमाणे डतौ कृते टिलोपे च 'कति' इति भवति; ताभ्यां पूर्ववदेव कृत्वसुजादयः।

बहुगणशब्दयोरित्यादि। बहुशब्दोऽयं संख्यावचनोऽप्यस्ति, वैपुल्यवचनोऽपि; गणशब्दः संख्यावचनोऽप्यस्ति, सङ्घवचनोऽपि; तत्र यौ वैपुल्यसङ्घवचनौ, तयोरिह ग्रहणं नास्ति, संख्यावाचिनोरेव तयोस्त्वेषा संख्यासंज्ञा विधीयते, तत् कथं संख्येत्यन्वर्थसंज्ञेयम्—संख्यायतेऽनया संख्या ! न च यो वैपुल्ये बहुशब्दो वर्त्तते, यश्च संघे गणशब्दः, ताभ्यां संख्यायते। तथा हि—'बहुरोदनः' इत्युक्ते वैपुल्यं गम्यते; तथा 'महान् भिक्षूणां गणः' इत्युक्ते सङ्घः; न तु संख्यानम्। तस्मादन्वर्थसंज्ञाकरणाद् यावेकद्विसंख्याव्यवच्छेदेन

संख्यावाचिनोरेव । भूर्यादीनां निवृत्त्यर्थं संख्या-संज्ञा विधीयते ॥

*अर्धपूर्वपदश्च पूरणप्रत्ययान्तः संख्यासंज्ञो भवतीति वक्तव्यं समासकन्विध्यर्थम् * ॥ अर्धपञ्चमशूर्पः । अर्धं पञ्चमं येषामिति बहुव्रीहौ कृतेऽर्धपञ्चमैः शूर्पैः क्रीतः । तद्धितार्थेति समासः । तत्र 'दिक्संख्ये संज्ञायाम्' इत्यनुवृत्तेस्ततः संख्यापूर्वस्य द्विगुसंज्ञायां 'शूर्पादञन्यतरस्याम्' इत्यञ्, ठञ्च । 'अध्यर्धपूर्वद्विगोः' इति लुक् । अर्धपञ्चमकः ।

संख्याप्रदेशाः—'संख्या वंश्येन' इत्येवमादयः ॥

पदमञ्जरी

स्तिशदन्ताया अभावादित्यत आह—*भूर्यादीनामित्यादि* । एतेन नियमार्थमेतयो-ग्रहणमिति दर्शयति । तुल्यजातीयापेक्षत्वाच्च नियमस्य; भूर्यादीनामेवानियतबहु-त्वाचिनां निवृत्तिः, नाबहुत्वविषययोर्द्व्येकशब्दयोः, नापि नियतबहुत्ववाचिनां त्र्यादीनाम्, तदाह—*भूर्यादीनामिति* ।

*अर्धपूर्वपदश्चेति* । अर्धशब्दः पूर्वपदं यस्य, स च पूरणप्रत्यान्तः; पूरणप्रत्य-यान्तस्यार्धशब्दः पूर्वपदं सम्भवति, समास एव हि पूर्वपदं सम्भवति । *अर्ध-पञ्चमशूर्प इति* । अर्धं पञ्चमं येषामिति बहुव्रीहिः । अर्धपञ्चमैरर्धाधिकैश्चतुर्भिः शूर्पैः क्रीत इति 'तद्धितार्थं' इति समासः । 'शूर्पादञन्यतरस्याम्' इति विहित-

न्यासः

संख्याविशेषमाहतुः, तयोरेव ग्रहणम् । यद्येवम्, किमथ तयोरियं संज्ञा विधीयते, यावता संख्यावाचिनौ तौ लौकिकसंख्यायामन्तर्भूतौ ? लौकिकी च संख्या शास्त्रे गृह्यत एव; अन्यथा 'संख्याया अतिशदन्तायाः कन्' इत्यत्र 'अतिशदन्तायाः' इति प्रतिषेधोऽनर्थकः स्यात्, शास्त्रीयायाः संख्याया अतिशदन्ताया अभावादित्यत आह—भूर्यादीनां निवृत्त्यर्थमिति । भूरि-प्रभूतमित्येवमादयस्तज्जातीयाः प्रचुरविशेषवाचिनः सन्ति, तेषां मा भूदित्येवमर्थं बहुगणशब्दयोः संख्यासंज्ञा विधीयते । तदेतेन नियमार्थमेतयोः संज्ञा-विधानमेतदिति दर्शयति । तुल्यजातीयापेक्षया हि नियमः । अतस्तुल्यजातीयानां भूर्यादीनामेव नियमेन व्यावृत्तिः क्रियते, नान्येषाम् ।

अर्धपूर्वपदश्चेति । अर्धशब्दः पूर्वपदं यस्य पूरणप्रत्ययान्तस्य सोऽर्धपूर्वपदः, स च संख्यासंज्ञो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थमित्याह—समासकन्विध्यर्थ-मिति । तत्रेदं व्याख्यानम्—'इति च' इत्यत्र यश्चकारः, स इह स्वरितत्वमासज्य सिंहावलोकितन्यायेनोपस्थाप्यते । स चानुक्तसमुच्चयार्थः । तेनार्धपूर्वपदश्च पूरण-प्रत्ययान्तः संख्यासंज्ञो भवतीति । अर्धपञ्चमशूर्प इति । अर्धं पञ्चमं येषामिति बहु-

## ष्णान्ता षट् ॥ २४ ॥

स्त्रीलिङ्गनिर्देशात् 'संख्या' इति सम्बध्यते। षकारान्ता नकारान्ता च या संख्या सा षट्संज्ञा भवति। षकारान्तास्तावत्—षट् तिष्ठन्ति, षट् पश्य। नकारान्ताः—पञ्च, सप्त, नव, दश।

अन्तग्रहणमौपदेशिकार्थम्, तेनेह न भवति—शतानि, सहस्राणि। अष्टानामित्यत्र नुड् भवति।

षट्प्रदेशाः—'षड्भ्यो लुक्' इत्येवमादयः॥

**पदमञ्जरी**

स्यात्रष्ठञो वा 'अध्यर्धपूर्वद्विगोः' इति लुक्। कथं पुनर्लुक्, यावता नायं समासः नापि कन्? समासकन्विध्यर्थमिति सम्बन्धसामान्ये षष्ठी, तेन समासे विधीयमाने समासनिमित्ते वान्यस्मिन्विधीयमान इत्यर्थः।

ष्णान्ता षट्॥ इह कस्मान्न भवति—विप्रुषः, पामान इति? सङ्ख्येति वर्तते। ननु च तत्सङ्ख्याग्रहणं संज्ञाप्रधानम्, इहानुवृत्तमपि ष्णान्तानां संज्ञामेव विदध्याद्, न तु ष्णान्तेत्यस्य विशेष्यं समर्पयेद्; अत आह—*स्त्रीलिङ्गनिर्देशादिति*। 'ष्णान्ता' इत्यत्र स्त्रीलिङ्गस्य विशेष्यापेक्षायां सम्बध्यमानं प्रदेशेष्विव संज्ञिप्रधाने भविष्यतीत्यर्थः। अत एवात्रान्तग्रहणम्। इतरथा वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धम्।

इह कस्मान्न भवति—शतानि, सहस्राणि? नुमि कृते तस्य पूर्वभक्तत्वान्नान्ता सङ्ख्या भवति। अस्तु, लुक्कस्मान्न भवति? सर्वनामस्थानसन्निपातकृतो नुम् न तद् विहन्ति। अथेह कथं संज्ञा—अष्टानामिति? कथं च न स्यात्? अष्टन् + आम् इति स्थिते परत्वान्नित्यत्वाच्च 'अष्टन आ विभक्तौ' इत्यात्वे कृतेऽनान्तत्वादसत्यां संज्ञायां नुड् न स्यात्, अष्टनो दीर्घग्रहणं ज्ञापकम्—कृतात्वस्याप्यष्टनः संज्ञा

**न्यासः**

व्रीहिः। अर्धपञ्चमैः शूर्पैः क्रीतमिति 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः। 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा। 'शूर्पादञन्यतरस्याम्' इति विहितस्याञष्ठञो वा 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति लुक्। अर्धपञ्चमक इति। 'संख्याया अतिशदन्तायाः कन्'।

ष्णान्ता षट्॥ स्त्रीलिङ्गनिर्देशादित्यादि। ष्णान्तेति स्त्रीलिङ्गनिर्देशः क्रियते, न चेह किञ्चित् स्त्रीलिङ्गं श्रूयते, नापि प्रकृतमन्यत् संख्यायाः। तस्मात् स्त्रीलिङ्गनिर्देशात् संख्यैव 'ष्णान्ता' इत्यनेन विशेषणेन विशिष्यते। 'षट्' इति चानया संज्ञया सम्बध्यते। यदि ष्णान्तेत्यत्र स्त्रीलिङ्गनिर्देशो न क्रियेत, सर्वं ष्णान्तं शब्दरूपं षट्संज्ञं स्यात्। ततः

## डति च ॥ २५ ॥

डत्यन्ता च या संख्या सा षट्संज्ञा भवति । कति तिष्ठन्ति । कति पश्य ॥

## क्तक्तवतू निष्ठा ॥ २६ ॥

क्तश्च क्तवतुश्च = क्तक्तवतू प्रत्ययौ निष्ठासंज्ञौ भवतः । कृतः ।

पदमञ्जरी

भवतीति । एतच्च तत्रैवोपपादयिष्यामः । यद्वा, प्रागेव विभक्त्युत्पत्तेरनुद्दिश्य प्रयोजनविशेषं षट्संज्ञा भविष्यति । सा च कृतेऽप्यात्वे न निवर्त्तते ॥

*डति च ॥ डत्यन्ता च या संख्येति* । अनेन संख्याग्रहणानुवृत्तिं दर्शयति । असत्यां ह्यनुवृत्तौ पातेर्डतिः पतयः—अत्रापि स्यात् । अथेह संख्याग्रहणानुवृत्तावपि कस्मादेवात्र न भवति, सामान्येन हि डतेः संख्यासंज्ञा विहिता ? उच्यते; संख्यासंज्ञायां हि वतुना साहचर्यात्तद्धितस्य डतेर्ग्रहणम्, न त्वौणादिकस्य ॥

*क्तक्तवतू निष्ठा* ॥ इह क्तक्तवतुरूपाश्रयेयं संज्ञा, रूपनिर्ग्रहश्च प्रयोगे उपदेशे वा भवति । न च प्रयोगे सानुबन्धकं रूपमस्तीत्युपदेशगतं ग्राह्यम् । तत्र 'नपुंसके भावे क्तः' 'शीतः' इति क्तस्य क्वचिदुपदेशोऽस्ति । यदि तस्यैव स्याद्, लिङ्गान्तरे,

न्यासः

पामानः, विप्रुषः इत्यादावपि 'षड्भ्यो लुक्' इति लुक् प्रसज्येत । ननु च संख्येत्यनुवर्त्तिष्यते, तत् कुतोऽतिप्रसङ्गः ? सत्यमेतत्; सैवानुवृत्तिः स्त्रीलिङ्गनिर्देशेन स्पष्टीक्रियते । यदि संख्येत्यनुवर्त्तते, सामर्थ्यादेव तदन्ता विज्ञास्यते, न हि षकारमात्रं वा नकारमात्रं वा संख्यास्ति, तदपार्थकमन्तग्रहणम्, नैतदस्ति; उपदेशावस्थायां या ष्णान्ता सा षट्संज्ञा यथा स्यादित्येवमर्थत्वादन्तग्रहणस्य । असति तस्मिन् शतानि सहस्राणीति नुमि कृते षट्संज्ञा स्यात् । इह च अष्टानाम् इत्यष्टन आत्वे कृते षट्संज्ञा न स्यात् । ततश्च 'षट्चतुर्भ्यश्च' इति नुण् न भवति ।

डति च ॥ डत्यन्ता या संख्या सा षट्संज्ञा भवतीति । संख्याग्रहणेनेहापि संख्यानुवर्त्तत इति दर्शयति । किमर्थं पुनः सेहानुवर्त्तते ? पातेर्डतिः पतय इत्यत्र मा भूत् । अथ संख्यानुवृत्तावपि कस्मादेवात्र न भवति, यावतायमपि संख्यासंज्ञ एव, सामान्येन हि पूर्वं डतेः संख्यासंज्ञा विहिता ? नैतदस्ति; वतुना साहचर्यात् तद्धितस्यैव डतेस्तत्र ग्रहणम्, न कृतः; कृच्चायम् ।

क्तक्तवतू निष्ठा ॥ भुक्तवानिति । 'चोः कुः' इति कुत्वम् । 'अत्वसन्तस्य चाधातोः' इति दीर्घः । अथ केन विहितयोः क्तक्तवत्वोरेषा संज्ञा विधीयते ? अनयैव संज्ञया । वक्ष्यति तृतीये 'निष्ठा' इति । यद्येवम्, निष्ठासंज्ञया क्तक्तवतू भाव्येते, तावेवाश्रित्य

कृतवान् । भुक्तः । भुक्तवान् । ककारः कित्कार्यार्थः । उकार उगित्कार्यार्थः ।

निष्ठाप्रदेशाः—'श्वीदितो निष्ठायाम्' इत्येवमादयः ।

**सर्वादीनि सर्वनामानि ॥ २७ ॥**

सर्वशब्द आदिर्येषां तानीमानि सर्वादीनि सर्वनामसंज्ञानि

**पदमञ्जरी**

कालान्तरे, धात्वन्तरे च न स्यात् । क्तवतोस्तु न क्वचिदुपदेशः, तत्केन विहितयोः क्तक्तवत्वोरेषा संज्ञा विधीयते ? अनयैव संज्ञया । वक्ष्यति—निष्ठेति । यद्येवम्, इतरेतराश्रयः प्राप्नोति—विहितयोः संज्ञा, संज्ञया च विधानमिति, नैष दोषः: भाविनी संज्ञा विज्ञायते सूत्रशाटकवत् । तद्यथा—कश्चित्कञ्चित् तन्तुवायमाह—अस्य सूत्रस्य शाटकं वयेति । स पश्यति—यदि शाटको न वातव्यः; अथ वातव्यो न शाटकः; शाटको वातव्यश्चेति विप्रतिषिद्धम्; स मन्ये वातव्यो यस्मिन्नुते शाटक इत्येतद्भवतीति । तद्वदिहापि तौ भूते काले भवतः, ययोर्विहितयोर्निष्ठेत्येषा संज्ञा भविष्यतीति ॥

*सर्वादीनि सर्वनामानि* ॥ द्वन्द्वतत्पुरुषयोरुत्तरपदलिङ्गत्वेन नपुंसकत्वायोगाद् बहुवचनासंभवाच्च सर्वादीनीति बहुव्रीहिरित्याह—*सर्वशब्द इत्यादि* । *आदिर्येषामिति* । यद्येवं बहुव्रीहेरन्यपदार्थप्रधानत्वात्सर्वशब्दोपलक्षितानां विश्वादीनामेव संज्ञा स्याद्, नोपलक्षणस्य सर्वशब्दस्य । यथा चित्रगुरानीयतामित्युक्ते यस्य ता गावः स एवानीयते, न चित्रा गाव इत्याशङ्क्याह—*तानीमानीति* । अत्र 'तानि' इत्येव सिद्धे इमानीति प्रत्यक्षविषयेणेदंशब्देन गणपठितेषु सर्वशब्दस्यान्तर्भावं सूचयन् तद्गुणसंविज्ञानं बहुव्रीहिं दर्शयति । तस्य = अन्यपदार्थस्य, गुणः=वर्तिपदार्थः, सोऽपि कार्यी संविज्ञायते यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानः । मत्वर्थे हि बहुव्रीहिः । भूमादिषु च मतुब् विधीयते । तद्यत्र स्वस्वामिभावादिसम्बन्धः प्रवृत्तिनिमित्तम्, न तत्रोपसर्जनस्य कार्ययोगः । यथा—गोमन्तमानयेति, संभवति

**न्यासः**

निष्ठासंज्ञेति; इतरेतराश्रयो दोषो भवति, इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्प्यन्ते, नैष दोषः; भाविनी हि संज्ञा विज्ञास्यते, यथा—'अस्य सूत्रस्य शाटकं वय' इति । तौ भूते काले भवतः, ययोर्विहितयोर्निष्ठेत्येषा संज्ञा भवतीति ।

**सर्वादीनि सर्वनामानि** ॥ **सर्वशब्द आदिर्येषां तानीमानि सर्वादीनीति** । एष तद्गुणसंविज्ञानो बहुव्रीहिः, इतरथा ह्युपलक्षणार्थत्वात् सर्वशब्दस्य संज्ञा न स्यात् । न ह्युपलक्षणस्योपसर्जनीभूतस्य कार्येण सम्बन्धो भवति । तथा हि—'चित्रगुरानीयताम्'

भवन्ति। सर्वः, सर्वौ, सर्वे। सर्वस्मै। सर्वस्मात्। सर्वेषाम्। सर्वस्मिन्। सर्वकः। विश्वः, विश्वौ, विश्वे। विश्वस्मै। विश्वस्मात्। विश्वेषाम्। विश्वस्मिन्। विश्वकः।

उभ। उभय। उभशब्दस्य सर्वनामत्वे प्रयोजनम्—'सर्वनाम्नस्तृतीया च' इति। उभये। उभयस्मै। उभयस्मात्। उभयेषाम्। उभयस्मिन्।

पदमञ्जरी

ह्यरण्यावस्थिताभिरपि गोभिः स्वस्वामिभावः। यत्र तु संयोगसमवाययोरन्यतरत् प्रवृत्तिनिमित्तम्, तत्र स्वभावादेवोपसर्जनस्यापि कार्ययोगः, यथा—दण्डिनमानय, विषाणिनमानयेति, नो खलु गृहावस्थितेन दण्डेन दण्डसंयुक्तः पुरुषो भवति। एवं बहुव्रीहावपि—चित्रगुः, शुक्लवासा इति। इहाप्यादिशब्दोऽवयववचन उद्भूतावयवभेदः समुदायः समासार्थः, तत्र समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानां संज्ञा भवन्ती विश्वादीनामिव सर्वशब्दस्यापि भविष्यति। अत्र च लिङ्गम्—'अदः सर्वेषाम्' इति निर्देशः, 'आमि सर्वनाम्नः सुट्'। *सर्वे इति*—'जसः शी'। पूर्वयोस्तूपन्यासो जसन्ततामस्य दर्शयितुम्। *सर्वस्मै इत्यादि*—'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ'।

उभशब्दो द्विवचनविषये एव प्रयुज्यते, असति द्विवचने नैव प्रयुज्यते, न हि भवति उभौ पुत्रावस्य उभपुत्र इति, उभयशब्दोऽत्र तत्स्थाने भवति उभयपुत्र इत्यादि। न च द्विवचने किञ्चित्सर्वनामकार्यमस्ति; स्मैप्रभृतीनामेकवचनबहुवचनविषयत्वात्, काकचोश्च नास्ति विशेष इति तस्येह पाठे प्रयोजनमाह—*उभशब्दस्येत्यादि*। उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ भवतः।

न्यासः

इत्युक्ते न गवामप्यानयनं भवति। तद्गुणसंविज्ञानस्य बहुव्रीहेर्लिङ्गम्—'अदः सर्वेषाम्' इति निर्देशः। सर्वशब्दस्य सुट् सर्वनाम्नः कार्यम्; अन्यथा हि तन्नोपपद्यते। सर्वः, सर्वौ, सर्वे इति। इदमत्रोदाहरणं सर्वे इति। अत्र हि सर्वनामसंज्ञायाम् 'जसः शी' इति शीभावः कार्यः। पूर्वयोस्तु तत्साहचर्येण 'सर्वे' इत्येतस्य पुंल्लिङ्गतां श्रूयमाणविभक्तिताञ्च दर्शयितुमुपन्यासः; अन्यथा 'सर्वे' इत्येतावत्युच्यमाने स्त्रीलिङ्गस्य लुप्तसम्बुद्धेरयं प्रयोग इति कस्यचिद् भ्रान्तिः स्यात्। **सर्वस्मै इति**। 'सर्वनाम्नः स्मै'। सर्वस्मात्, सर्वस्मिन् इति। 'ङसिङ्योः स्मात्स्मिनौ' इति। **सर्वक इति**—'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति।

उभशब्दोऽयं द्विवचनटाब्विषय एव प्रयुज्यते—उभौ, उभे इति। न च तत्र किञ्चित् सर्वनामकार्यं सम्भवति; स्मैप्रभृतीनां यथायोगमेकवचनबहुवचनविषयत्वात्।

डतर। डतम। कतर। कतम। कतरस्मै, कतमस्मै। इतर। अन्य। अन्यतर। इतरस्मै। अन्यस्मै। अन्यतरस्मै।

त्वशब्दोऽन्यवाची, स्वरभेदाद् द्विःपठितः। एक उदात्तः, द्वितीयोऽनुदात्तः। केचित्तकारान्तमेकं पठन्ति। त्व-त्वदिति द्वावपि चानुदात्ताविति स्मरन्ति।

नेम। नेमस्मै। वक्ष्यमाणेन जसि विभाषा भवति। नेमे, नेमा इति।

सम। समस्मै। कथं 'यथासंख्यमनुदेशः समानाम्', समे देशे यजेतेति? समस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञेष्यते, न सर्वत्र। सिम। सिमस्मै।

पदमञ्जरी

*उभयेषाम्, उभयस्मिन्निति*। उभाववयवावस्येति व्युत्पाद्यमान उभयशब्दो यदा तिरोहितावयवभेदं समुदायमाचष्टे तदैकवचनं भवति—उभयो मणिरिति। यदा तु वर्गद्वयारब्धे समुदायिनि वर्त्तमानो वर्ग्यभेदानुगतं समुदायमाचष्टे तदा बहुवचनम्—उभये देवमनुष्या इति।

*डतर-डतमेति*। संज्ञाविधौ प्रत्ययग्रहणेऽपि तदन्तयोर्ग्रहणम्; केवलयोः प्रयोजनाभावात्।

*वक्ष्यमाणेनेति*। 'प्रथमचरम' इत्यादिना। *सर्वशब्दपर्यायस्येति*। अस्ति च सर्वशब्दपर्यायः समशब्दः 'नभन्तामन्यके समे', 'मा नो वृकाय वृक्ये समस्मै', 'उरुष्याणोऽघायतः समस्मात्', 'डतो समस्मिन्नाशिशी हि नो वसो,' 'मा नः

न्यासः

अकजपि नैवं सर्वनामसंज्ञां प्रयोजयति; विशेषाभावात्। न हि तस्मादकचि, कप्रत्यये वा विहिते रूपभेदः स्वरभेदो वा भवति। तत् किमर्थस्तस्येह पाठः? इत्याह—उभशब्दस्येत्यादि। 'सर्वनाम्नस्तृतीया च' इत्यनेन उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरिति तृतीयाषष्ठ्यौ यथा स्यातामित्येवमर्थस्तस्येह पाठ इति दर्शयति।

**डतरडतम इति**। 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्', 'वा बहूनां जातिपरिप्रश्ने डतमच्' इत्येतयोः प्रत्यययोर्ग्रहणम्।

**वक्ष्यमाणेनेति**। 'प्रथमचरम' इत्यादिना।

**कथमित्यादि**। समशब्दस्य सर्वनामसंज्ञायां सत्याम् 'आमि सर्वनाम्नः सुट्' इति सुटि 'समेषाम्' इति भवितव्यम्, तत् कथं समानामिति भवति? ततश्च सप्तम्येकवचनस्य स्मिन्भावे कृते समस्मिन्निति भवितव्यम्, तत् कथम् 'समे देशे यजेत' इति प्रयोग उपपद्यते! इत्यभिप्रायः। **न सर्वत्रेति**। न सर्वत्रार्थे वर्त्तमानस्ये-

पदमञ्जरी

समस्य दूव्यः' इति यथा। एतच्च 'सर्वेषां नामानि'इत्यन्वर्थसंज्ञाकरणाल्लभ्यते। स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः। यद्यन्वर्थसंज्ञा, 'पूर्वपदात् संज्ञायाम्'इति णत्वं कस्मान्न भवति ? अस्मादेव निपातनात्। यदि 'सर्वादीनि सर्वनामानि', तर्हीहापि प्राप्नोति—सर्वो नाम कश्चित् तस्मै सर्वाय देहीति, इह चातिक्रान्तः सर्वस्मै अतिसर्वाय देहीति; तस्मात्संज्ञानामुपसर्जनानां च सर्वादीनां संज्ञाप्रतिषेधो वक्तव्यः। न केवलं संज्ञायाः, पाठोऽपि तेषां गणे नास्तीति वक्तव्यम्; संज्ञामात्रप्रतिषेधे हि सर्वनामप्रयुक्तमेव कार्यं तेषां न स्यात्। पाठाश्रयं तु स्यादेव—'त्यदादीनामः' तन्नामकः कश्चित्, तत्, तदौ, तदः; अतिक्रान्तस्तमतितत्' अतितदौ, अतितदः; 'अदड्डतरादिभ्यः पञ्चभ्यः', कतरमतिक्रान्तं ब्राह्मणकुलमतिकतरमिति। संज्ञाप्रतिषेधस्तावन्न वक्तव्यः।

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

तत्र यथा बाहुर्नाम कश्चित्तस्यापत्यं बाहवः; 'बाह्वादिभ्यश्च' इतीञ् न भवति संज्ञा, श्वशुरस्यापत्यम् 'राजश्वशुराद्यत्' न भवति, धान्यमातुः स्वसा, 'मातृपितृभ्यां स्वसा' इति षत्वं न भवति; एवमिहापि संज्ञाभूतानां सर्वादीनां संज्ञा, तन्निबन्धनं च कार्यम्, अन्तर्गणकार्यं च न भविष्यति।

यद्वा—'व्यवस्थायाम्' इत्यत्र 'असंज्ञायाम्' इति विभज्यते, तेन च गणपाठो विशेष्यते—यान्येतान्यनुक्रान्तानि सर्वादीनि तान्यसंज्ञायां द्रष्टव्यानीति। उपसर्जनप्रतिषेधोऽपि न कर्त्तव्यः, सर्वादीनां संज्ञा विधीयते, तत्र कः प्रसङ्गो यत् सर्वाद्यन्तस्य स्यात्? सर्वशब्दस्य तु सत्यामपि संज्ञायामङ्गस्यासर्वनामत्वात् स्मायाद्यप्रसङ्गः। यद्येवम्, परमसर्वस्मै इत्यादावपि न स्याद्; यतो यदङ्गं न तत्सर्वनाम, यच्च सर्वनाम न तदङ्गमिति। मा भूदङ्गं सर्वनाम, अवयवस्यैव तु सर्वनामत्वे 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति समुदायस्य च कार्यं भविष्यति; यथा—अस्थ्यादीनामनङ् परमास्थ्नेति। न चैवमत्यस्थ्नेत्यादिवदतिसर्वायेत्यादावुपसर्जनेऽपि प्रसङ्गोऽर्थद्वारकस्य सम्बन्धस्याश्रयणात्सर्वनामार्थगतमेकत्वादिकं या विभक्तिराहेति; यथा—'अष्टाभ्य औश्,' 'षड्भ्यो लुक्' इति परमाष्टौ परमपञ्चेत्यादौ भवति, प्रियाष्टानः प्रियपञ्चान इत्यादौ न भवति; तद्वदत्रापि। 'त्यदादीनामः' इत्याद्यन्तर्गणकार्यमप्येवमेव द्रष्टव्यम्। यत्तु रूपाश्रयं कार्यम् 'युष्मदस्मदोरनादेशे' इति, न पाठाश्रयम्, नापि संज्ञाश्रयं तदस्थ्याद्यनङ्वदुपसर्जनेऽपि भवति। यत्तूपसर्जनदशायाः प्रागेव प्राप्तं तदपि भवति अतिक्रान्तो भवकन्तमतिभवकानिति, तस्मान्नार्थस्तदन्तस्य संज्ञया, उच्यते; अव्ययसर्वनाम्नामित्यकच् परमभवकानिति तदन्तान्न स्यात्।

पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्। स्वम-ज्ञातिधनाख्यायाम्। अन्तरं बहिर्योगोपसंव्यानयोः। त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद्, भवतु, किम्। सर्वादिः॥

सर्वनामप्रदेशाः—'सर्वनाम्नः स्मै' इत्येवमादयः॥

विभाषा दिक्समासे बहुव्रीहौ॥ २८॥

पदमञ्जरी

'पञ्चम्यास्तसिल्' परमसर्वतः, 'सप्तम्यास्त्रल्' परमसर्वत्र, 'आ सर्वनाम्नः' 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ वप्रत्यये' परमतद्र्यङ् परमयद्र्यङित्यादौ न स्यादिति तदन्तस्य संज्ञेषितव्या। कथं पुनरिष्यमणापि लभ्यते? ज्ञापकादिति वक्ष्यामः। तत्तदन्तस्य च भवन्ती परमसर्वादिवद् अतिसर्वादेरपि स्यादिति उप-सर्जनप्रतिषेधोऽपि वक्तव्यः? न वक्तव्यः, अन्वर्थसंज्ञाविज्ञानादेव सिद्धम्। वृत्तौ हि प्रधानार्थसंसर्गादुपसर्जनानि न सर्वार्थानि, यथासम्भवं च सार्वार्थ्यमिति प्रत्य-क्षपरोक्षतादिविशेषवाचित्वेऽपि तदिदमादीनां भवत्येव। अन्वर्थत्वादेव च संज्ञा-भूतानामपि संज्ञाभावः। एवं तावत्संज्ञानिबन्धनं स्मायाद्युपसर्जनानां निवारितम्। त्यदाद्यन्तर्गणकार्यं तु स्यादेव; पाठस्य स्थितत्वात्। एवं तर्हि तन्त्रावृत्त्येकशेषाणा-मन्यतमाश्रयणाद् द्वितीयोऽपि सर्वनामशब्द उपात्तः, तेन पाठो विशेष्यते—यानि सर्वेषां नामानि तानि सर्वादीनीति, तेन सर्वादिपाठोपजीवनेन प्रवर्तमानमन्तर्गण-कार्यमपि व्यवस्थास्यते। यद्वा—संज्ञाया अन्वर्थत्वात्तत्तत्संबन्धयोग्यानां सर्वार्थानां तावत्पाठोऽवश्याभ्युपगन्तव्यः। ततश्च प्रकारान्तरजुषां पाठे प्रमाणाभावादेव सिद्धः पाठात्पर्युदासः॥

*विभाषा दिक्समासे बहुव्रीहौ*॥ अत्र समासावयवानां सर्वादीनां संज्ञा

न्यासः

त्यर्थः। एतच्च 'सर्वेषां नामानि सर्वनामानि' इत्यन्वर्थसंज्ञाकरणाल्लभ्यते। स एव हि समशब्दः सर्वेषां नाम भवति यः सर्वशब्दपर्यायः, न चानयोः प्रयोगयोः समशब्दः सर्वपर्यायः। तथा हि 'समानाम्' इत्यत्र समशब्दस्तुल्यार्थे वर्त्तते। 'समे देशे' इत्यत्रा-प्यविषमे=निम्नोन्नतादिरहिते। अत एव चान्वर्थसंज्ञाकरणात् संज्ञोपसर्जनीभूतानां संज्ञा न भवति। यथा—सर्वो नाम कश्चित्, तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वः, तस्मा अतिसर्वाय देहीति। न ह्येवंप्रकाराणि सर्वेषां नामानि; विशिष्ट-वस्तुविषयत्वात्। 'सर्वनामानि' इत्यत्र 'पूर्वपदात् संज्ञायाम्' इति णत्वं तु न भवति, अत एव निपातनात्।

विभाषा दिक्समासे बहुव्रीहौ। दिगुपदिष्टे इति। दिशामुपदिष्ट उक्तो दिगुपदिष्टः।

'न बहुव्रीहौ' इति प्रतिषेधं वक्ष्यति। तस्मिन्नित्ये प्रतिषेधे प्राप्ते विभाषेयमारभ्यते। दिशां समासो दिक्समासः, दिगुपदिष्टे समासे बहुव्रीहौ विभाषा सर्वादीनि सर्वनामसंज्ञानि भवन्ति। उत्तरपूर्वस्यै, उत्तरपूर्वायै। दक्षिणपूर्वस्यै, दक्षिणपूर्वायै।

दिग्ग्रहणं किम्? 'न बहुव्रीहौ' इति प्रतिषेधं वक्ष्यति, तत्र न ज्ञायते—क्व विभाषा, क्व प्रतिषेध इति। दिग्ग्रहणे पुनः क्रियमाणे ज्ञायते—दिगुपदिष्टसमासे विभाषा, अन्यत्र प्रतिषेध इति।

### पदमञ्जरी

विकल्प्यत इति वृत्तौ लक्ष्यते, यथाह - *दिगुपदिष्ट इत्यादि*। दिशामुपदिष्ट उक्ते 'दिङ्नामान्यन्तराले' इत्यस्मिन्समासेऽवयवत्वेन वर्तमानानीत्यर्थः। न चावयवानां संज्ञाविकल्पे किञ्चित्प्रयोजनमस्ति, स्मायादिकं तावदङ्गाश्रयम्, काकचोश्च नास्ति विशेषः, दिग्वाचिनामकारान्तत्वात्। 'सर्वनाम्नो वृत्तिमात्रे' इति पूर्वपदस्य पुंवद्भावोऽपि न प्रयोजनम्, तत्र हि मात्रग्रहणं क्वचित्सर्वनामत्वेन दृष्टानां संप्रत्यसर्वनामत्वेऽपि यथा स्यात्, तथा च दक्षिणपूर्वाया इति संज्ञाभावपक्षेऽपि भवति। स्यादेतत्—अवयवानामेव संज्ञा, कार्यं तु 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति। एवमपि दक्षिणपूर्वतः, दक्षिणपूर्वत्रेत्यत्र तसिलादयो न स्युः; तस्मात्सर्वाद्यन्ते बहुव्रीहौ संज्ञा विकल्प्यते। 'सर्वादीनि' इत्ययं तु वृत्तिग्रन्थः 'सर्वाद्यन्ते प्रवर्तमाना संज्ञा सर्वादीन्यपि गोचरयति' इत्येवंपरो व्याख्येयः। यद्वा—अवयवानां संज्ञाविधानेन तदन्तस्यापि सिद्ध्यति, तदन्तविधेरभ्युपगमादिति।

### न्यासः

स पुनः 'दिङ् नामान्यन्तराले' इति यः समासस्तस्यात्र ग्रहणम्। स पुनर्लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। प्रतिपदोक्तसमासाश्रयणं तु या पूर्वा दिक् सोत्तराऽस्योन्मुग्धस्य, अस्मै पूर्वोत्तराय देहीत्यत्र मा भूत्। उत्तरपूर्वस्यै इति। उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालमिति पूर्वोक्तेन सूत्रेण बहुव्रीहिः, 'सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः' इति पूर्वपदस्य पुंवद्भावः, चतुर्थ्येकवचनम्, 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति स्याट्, ह्रस्वत्वञ्च। उत्तरपूर्वायै इति। यदा सर्वनामसंज्ञा नास्ति तदा 'याडापः' इति याट्, 'आटश्च' इति वृद्धिः।

समासग्रहणं किमिति। यावता न बहुव्रीहिः समासत्वं व्यभिचरत्येव, ततोऽपार्थकं विशेषणमित्यभिप्रायः। समास एव यो बहुव्रीहिरिति। यस्यातिदेशेन बहुव्रीहिवद्भावो न विधीयते स वेदितव्यः समास एव बहुव्रीहिरिति। स पुनर्यः समासाधिकारे विहितः।

समासग्रहणं किम् ? समास एव यो बहुव्रीहिस्तत्र विभाषा यथा स्यात् ; बहुव्रीहिवद्भावेन यो बहुव्रीहिः, तत्र मा भूत् । दक्षिणदक्षिणस्यै देहि ।

बहुव्रीहाविति किम् ? द्वन्द्वे विभाषा मा भूत् । दक्षिणोत्तरपूर्वाणामिति । 'द्वन्द्वे च' इति नित्यं प्रतिषेधो भवति ॥

पदमञ्जरी

*समासग्रहणं किमिति* । न बहुव्रीहिः समासत्वं व्यभिचरतीति प्रश्नः । *दक्षिणदक्षिणस्यै इति* । 'एकं बहुव्रीहिवत्' इत्यनुवृत्तौ 'आबाधे च' इति दक्षिणशब्दस्य द्विर्वचनम् 'न बहुव्रीहौ' इत्ययमपि निषेधो न भवति, तत्रापि समासाधिकारात् । *दक्षिणोत्तरपूर्वाणामिति* । असति बहुव्रीहिग्रहणे यथा 'न बहुव्रीहौ' इति प्रतिषेधं बाधते, एवं 'द्वन्द्वे च' इत्येतमपि बाधेत । अथ क्रियमाणेऽपि बहुव्रीहिग्रहणे या पूर्वा सोत्तरा यस्योन्मुखस्य तस्मै पूर्वोत्तराय देहीत्यत्र कस्मान्न भवति ? प्रतिपदोक्तो यो दिक्समासः—'दिङ्नामान्यन्तराले' इति, तस्य ग्रहणम् । यद्येवम्, तत एव हेतोर्द्वन्द्वे न भविष्यति ? सत्यम्; उत्तरार्थमवश्यं कर्त्तव्यं बहुव्रीहिग्रहणमिहापि विस्पष्टार्थं भविष्यतीति मन्यते ॥

न्यासः

**बहुव्रीहिवद्भावेनेति** । यस्यातिदेशिकं बहुव्रीहित्वं स बहुव्रीहिवद्भावेन बहुव्रीहिः । **दक्षिणदक्षिणस्यै इति** । 'एकं बहुव्रीहिवत्' इत्यतो बहुव्रीहिवदिति वर्त्तमाने 'आबाधे च' इति दक्षिणशब्दस्य द्विर्वचनम् । बहुव्रीहिवद्भावाच्च सुब्लुक् । अयं बहुव्रीहिवद्भावेन बहुव्रीहिरिति विभाषा न प्रवर्त्तते । योऽपि 'न बहुव्रीहौ' इति वक्ष्यमाणः प्रतिषेधः, सोऽपीह न भवति; तत्रापि समासाधिकारात् । **दक्षिणोत्तरपूर्वाणामिति** । अत्र 'द्वन्द्वे च' इति नित्य एव प्रतिषेधो भवति, तेन पक्षे सुण् न भवति । यद्येवम्, 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवद्भावोऽत्र न स्यात् , नैतदस्ति; अवयवस्याद्वन्द्वत्वात् । ननु विनापि बहुव्रीहिग्रहणेनात्र 'द्वन्द्वे च' इति प्रतिषेधेन भाव्यमेव, तदपार्थकं बहुव्रीहिग्रहणम्, नैतदस्ति; यो हि दिग्द्वन्द्वो न भवति स तस्य विषयः स्यात् । दिग्द्वन्द्वे त्वसति बहुव्रीहिग्रहण एवैव विभाषा स्यात् । तस्माद्बहुव्रीहिग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम् । कस्मान्न भवति ? दक्षिणोत्तरपूर्वाणामित्यत्र प्रतिपदोक्तसमासस्येह ग्रहणात् । एवं तर्ह्युत्तरार्थं बहुव्रीहिग्रहणम् । 'न बहुव्रीहौ' इत्यत्रास्य प्रयोजनं वक्ष्यति । **वृत्तिकारस्य** त्वेषोऽभिप्रायः—'उत्तरार्थमवश्यकर्त्तव्यम् , तदुत्तरार्थं कृतमिहापि स्पष्टार्थं भविष्यति' इति ।

## न बहुव्रीहौ ॥ २९ ॥

सर्वनामसंज्ञायां तदन्तविधेरभ्युपगमाद्बहुव्रीहेरपि सर्वाद्यन्तस्य संज्ञा स्यादिति प्रतिषेध आरभ्यते। बहुव्रीहौ समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति—प्रियविश्वाय, प्रियोभयाय, द्व्यन्याय, त्र्यन्याय। इह च त्वत्कपितृकः, मत्कपितृक इत्यकज्न भवति।

पदमञ्जरी

न बहुव्रीहौ ॥ अत्र वृत्तौ द्विधा सूत्रार्थो लक्ष्यते—बहुव्रीहाविति निषेधाधिकरणम्—बहुव्रीहौ संज्ञा न भवति, बहुव्रीह्याधारा संज्ञा न भवतीति; बहुव्रीहेः संज्ञा न भवतीति। सर्वाद्यधिकरणं वा—बहुव्रीहौ यानि सर्वादीनि तानि सर्वनामसंज्ञानि न भवन्तीति। तत्र *सर्वनामसंज्ञायाम्* इत्यादिनाऽऽद्यं पक्षं दर्शयति। कथं पुनर्ज्ञायतेऽभ्युपगतस्तदन्तविधिरिति? अत एव निषेधात्। द्वितीयं सूत्रार्थं दर्शयति—*बहुव्रीहावित्यादि*। प्रथमस्योदाहरणमाह—*प्रियविश्वायेति*। 'सर्वनामसंख्ययोरुपसंख्यानम्' इति सर्वनाम्नः पूर्वनिपाते प्राप्ते 'वा प्रियस्य' इति प्रियशब्दस्य पूर्वनिपातः। *द्व्यन्यायेति*। 'सर्वनामसंख्ययोः' इति द्व्यन्ययोः पूर्वनिपाते प्राप्ते परत्वात् सङ्ख्यायाः पूर्वनिपातः। द्वितीयस्योदाहरणमाह—*इह चेति*। अत्र च प्रतिषेधोऽयमारभ्यत इत्यनुषङ्गः; अत्रासति निषेधेऽकचि सति त्वकत्पितृको मकत्पितृक इति प्राप्नोति, सति तु 'प्रागिवात्कः' इति के

न्यासः

न बहुव्रीहौ। सर्वनामसंज्ञायामित्यादि। कथं पुनरेतदवगतम्—अभ्युपगतस्तदन्तविधिरिति? अत एव प्रतिषेधात्, अन्यथा हि निष्फलः प्रतिषेधः स्यात्। तदन्तविध्यभ्युपगमे हि परमसर्वस्मै, उत्तमसर्वस्मै इत्यत्रापि संज्ञा यथा स्यात्। इह चेत्यादि। अस्य 'प्रतिषेध आरभ्यते' इत्यनेन सम्बन्धः। त्वं पिताऽस्य, अहं पिताऽस्येति विगृह्य बहुव्रीहौ कृतेऽज्ञाताद्यर्थविवक्षायाम् असति प्रतिषेधे 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इत्यत्राकच् प्रसज्येत। ततश्च त्वकत्पितृकः, मकत्पितृक इत्यनिष्टं रूपं स्यात्। तस्मादकज् मा भूदिति प्रतिषेध आरभ्यते। तेन 'प्रागिवात् कः' इति क एव भवति। तत्र परतः 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तयोर्युष्मदस्मदोस्त्वमयोः कृतयोः 'नद्यृतश्च' इति समासान्ते कपि च त्वत्कपितृकः, मत्कपितृक इति सिध्यति। ननु चान्वर्थसंज्ञाकरणादेव संज्ञानिरासे कृतेऽकज् न भविष्यति—न ह्यत्र सर्वार्थता सम्भवति, विशेषविषयत्वात्, नैतदस्ति; समुदायो हि विशेषे वर्त्तते, पूर्वपदं तु सर्वार्थताया अनपेतमेव। भवत्वनयोरनन्तरयोरुदाहरणयोरेतत्सूत्रविषयता, प्रियविश्वायेत्यादिस्तु नोपपद्यते; न हि प्रियविश्वादयः शब्दाः सर्वेषां नामानि, नापि तदवयवभूतानां विश्वादिशब्दानां किञ्चित् सर्वनामकार्यमुपपद्यते; स्मैप्रभृतीनामङ्गकार्यत्वात्, विश्वादिशब्दानाञ्चा-

बहुव्रीहाविति वर्त्तमाने पुनर्बहुव्रीहिग्रहणं भूतपूर्वमात्रेऽपि प्रतिषेधो यथा स्यात्। वस्त्रान्तरवसनान्तरा इति ॥

तृतीयासमासे ॥ ३० ॥

तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मास-

पदमञ्जरी

सति 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशयोस्त्वत्कपितृको मत्कपितृक इति सिद्ध्यति 'नद्यृतश्च' इति समासान्ते कपि। ननु च बहुव्रीहावयं निषेधः, इह च प्रागेव; ततस्त्वकं पिताऽस्य अहकं पिताऽस्येति वाक्यावस्थायामेवाकच् प्राप्नोति? एवं तर्हि प्रतिषेधसामर्थ्यात् यद्वाक्योपमर्देन बहुव्रीहिर्भवति तस्यामेवावस्थायां निषेधो भविष्यति। अत्र च प्रथमः सूत्रार्थस्तदन्तविधिज्ञापनायैवोपन्यस्तः, न तु प्रियविश्वायेत्यादौ समुदायस्य संज्ञाप्रसङ्गः; असर्वार्थत्वात्, यथा अतिसर्वायेत्यादौ।

बहुव्रीहाविति वर्तमाने पुनर्बहुव्रीहिग्रहणं किमर्थमित्याह—*बहुव्रीहावित्यादि*। *वस्त्रान्तरवसनान्तरा इति*। वसनमन्तरं येषामिति बहुव्रीहौ द्वन्द्वः। अत्रासति बहुव्रीहिग्रहणे वर्तमानद्वन्द्वाश्रयो निषेधः स्यात्, ततश्च जसि विभाषा स्यात्। पुनर्बहुव्रीहिग्रहणात्तु यदन्तो द्वन्द्वः, सोऽन्तरशब्दो बहुव्रीहेः पूर्वमत्रासीद् इति बहुव्रीह्याश्रयो नित्य एव निषेधो भवति। इदं तु 'तदन्तस्य संज्ञानिषेधः' इति प्रथमपक्षानुरोधेन प्रत्युदाहरणम्। न त्वत्र प्रसङ्गः; असर्वार्थत्वात्। वसन्त्यस्मिन्निति वसनं गृहम्, तेन 'विरूपाणामपि समानार्थानाम्' इत्येकशेषाभावः ॥

*तृतीयासमासे ॥ समासे इति, वर्त्तमाने इत्यादि*। मुख्यस्यैव ग्रहणे प्राप्ते गौण-

न्यासः

नङ्गत्वात्! एव मन्यते—त्वत्कपितृक मत्कपितृक इत्यत्राकज् मा भूदिति, एतदर्थं तावदेतदारब्धव्यम्, प्रियविश्वायेत्येवमादावपि विस्पष्टार्थं भविष्यतीति।

अथ 'बहुव्रीहौ' इति वर्त्तमाने किमर्थं पुनर्बहुव्रीहिग्रहणमित्याह—बहुव्रीहावित्यादि। वस्त्रान्तरवसनान्तरा इति। वस्त्रमन्तरं येषाम्, वसनमन्तरं येषामिति बहुव्रीहिं कृत्वा वस्त्रान्तराश्च वसनान्तराश्चेति द्वन्द्वः कृतः। अत्र वर्त्तमानत्वाद् द्वन्द्वस्य 'द्वन्द्वे च', 'विभाषा जसि' इति द्वन्द्वाश्रितो विभाषाप्रतिषेधः स्यात्, न नित्यो बहुव्रीह्याश्रितः। पुनर्बहुव्रीहिग्रहणात्तु भूतपूर्वस्यापि बहुव्रीहेराश्रयणात् तदाश्रयो नित्यः प्रतिषेधो भवति। वसनशब्दश्चात्र वसत्यस्मिन्नित्यधिकरणसाधनो गृहे वर्त्तते, न वस्त्रे; अन्यथा वस्त्रान्तरवसनान्तरशब्दयोः पर्यायत्वाद् द्वन्द्वो न स्यात्, 'तुल्यार्थानाञ्च विरूपाणामेकशेषः' इत्येकशेषविधानात्।

तृतीयासमासे। ननु च 'विभाषा दिक्समासे' इत्यतः समासग्रहणमनुवर्त्तत एव,

पूर्वाय, संवत्सरपूर्वाय, द्व्यहपूर्वाय, त्र्यहपूर्वाय । 'समासे' इति वर्त्तमाने पुनः समासग्रहणं तृतीयासमासार्थवाक्येऽपि प्रतिषेधो यथा स्यात्—मासेन पूर्वाय । 'पूर्वसदृशसमोनार्थ' इति तृतीयासमासं प्रतिपदं वक्ष्यति, तस्येदं ग्रहणम्; न यस्य कस्यचित्तृतीयासमासस्य—'कर्तृकरणे कृता बहुलम्' इति । त्वयका कृतम्, मयका कृतम् ॥

## द्वन्द्वे च ॥ ३१ ॥

### पदमञ्जरी

स्यापि ग्रहणार्थं पुनः समासग्रहणमित्यर्थः । न च तृतीयासमासमात्रार्थे वाक्ये प्रसङ्ग इत्याह—*पूर्वसदृशेत्यादि* । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते । *त्वयका, मयकेति* । 'युष्मदस्मदोस्तृतीयैकवचने', 'त्वमावेकवचने', 'योऽचि' सुबन्तयोः प्राक् टेरकच् ॥

द्वन्द्वे च ॥ अयं समुदायस्यैव निषेधो नावयवानाम्, कुतः? त्यदादीनां तावत् 'त्यदादीनि सर्वैर्नित्यम्' इति एकशेषेण भाव्यम्, प्राक् च त्यदादिभ्योऽकारान्ताः,

### न्यासः

तत् किमर्थं पुनः समासग्रहणमित्यत आह—समास इत्यनुवर्त्तमाने इत्यादि । अस्त्येव तृतीयासमासो मुख्यः, यस्मिन् सत्यैकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च भवति । अस्ति च गौणः, यस्मिंस्तादर्थ्यादतस्मिन्नपि ताच्छब्द्यं भवति । स पुनस्तृतीयासमासार्थं वाक्यम् । तत्रासति पुनः समासग्रहणे 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति मुख्य एव प्रतिषेधः स्यात्, नेतरत्र । तस्मात् तत्रापि प्रतिषेधो यथा स्यादित्येवमर्थं पुनः समासग्रहणम् । यदि तर्हि तृतीयासमासार्थेऽपि वाक्ये प्रतिषेधो भवति, यावान् कश्चित् तृतीयासमासः, तदर्थे वाक्ये सर्वत्र प्रतिषेधः स्यात्; ततश्च त्वयका कृतम्, मयका कृतमित्यत्राकज् न स्यात् । भवति ह्येतत् 'कर्तृकरणे कृता बहुलम्' इत्यनेन यः समासस्तदर्थं वाक्यम्; तत्र कप्रत्यये कृते त्वत्केन कृतम्, मत्केन कृतमिति रूपं स्यादित्यत आह—पूर्वसदृशेत्यादि । एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते ।

त्वयका, मयका इति । पूर्ववत् त्वमावादेशौ, सुबन्तादकच् । क्वचित् त्वकया, मकया इति पाठः, स त्वयुक्तः । प्रातिपदिकात् त्वकजुत्पत्तौ त्वकया मकयेति भवति, न चात्र प्रातिपदिकादकजुत्पत्तिरिष्यते; अपि तु सुबन्तात् । तथा ह्यकज्विधौ वक्ष्यति—"'प्रातिपदिकात्' 'सुपः' इति च द्वयमपीहानुवर्तते । तत्राभिधानतो व्यवस्था—क्वचित् प्रातिपदिकस्य प्राक् टेः प्रत्ययो भवति, क्वचित् सुबन्तस्य । युष्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवयकयोरित्यत्र प्रातिपदिकस्य । त्वयका, मयका, त्वयकि, मयकि इत्यत्र सुबन्तस्य" इति ।

द्वन्द्वे च समासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । पूर्वापराणाम् । कतरकतमानाम् ।

विभाषा जसि ॥ ३२ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते जसि विभाषाऽऽरभ्यते । द्वन्द्वे समासे जसि विभाषा सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । कतरकतमे, कतरकतमाः । जसः कार्यं प्रति विभाषाऽकज् हि न भवति—कतरकतमकाः ॥

प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ ३३ ॥

'विभाषा जसि' इति वर्त्तते । 'द्वन्द्वे' इति निवृत्तम् । प्रथम,

पदमञ्जरी

तत्र न काकचोर्विशेषः; 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' त्विष्यत एव – दक्षिणोत्तरपूर्वाणामिति, सोऽयं प्रतिषेधो ज्ञापयति—'अस्ति सर्वनामसंज्ञायां तदन्तविधिः' इति ॥

*विभाषा जसि* ॥ *जसः कार्यं प्रति विभाषेति* । तत् कथम् ? व्यवस्थितविभाषेयम् । यद्वा, जसीति कार्यापेक्षयाधिकरणसप्तमी—जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्य इति । अन्ये त्वाहुः – जस ई जसी शब्दरूपापेक्षया नपुंसकह्रस्वत्वे सप्तम्या लुका निर्देशः—जस ईकारे कर्तव्य इति । किं पुनः कारणमेवं व्याख्यायते ? तत्राह—*अकज्हीति* । हि शब्दो यस्मादर्थे । यद्यविशेषेण विकल्पः स्यात्, कतर कतम अस् इति स्थिते कुत्साद्यर्थविवक्षायां यस्यामवस्थायामकज्विधिं प्रति संज्ञा स्यात्, ततश्च तन्मध्यपतितत्वात्तद्ग्रहणे शीभावः स्यात्; के तु सति न भवति ॥

न्यासः

द्वन्द्वे च ॥ विभाषा जसि ॥ जसः कार्यं प्रतीत्यादि । एतच्च व्यवस्थितविभाषात्वादस्या विभाषाया लभ्यते । अथ वा जसीति कार्यापेक्षया आधारसप्तमीयम्, न तु सर्वाद्यपेक्षया परसप्तमी; तेन जसि यत् कार्यम् = जसाधारं यत् कार्यं जसः शीभावः तत्र विभाषा भवति, नान्यत्र । किं कारणमेवं व्याख्यायत इत्यत आह—अकज् हि न भवतीति । हिशब्दो हेतौ । एवं व्याख्यायमाने सति 'कतरकतमकाः' इत्यत्राकज् न भवति; पूर्वसूत्रेण संज्ञाप्रतिषेधात् । अन्यथा हि यदि जसि परतः संज्ञा विकल्प्यते, तदा पक्षेऽकज् भवेदेव । तथा च तस्य तन्मध्यपतित्वात् तद्ग्रहणेन ग्रहणात् पाक्षिकः शीभावः प्रसज्येत । कप्रत्यये तु सति तेन व्यवधानादेवैष दोषो न भवति ।

चरम, तय, अल्प, अर्ध, कतिपय, नेम — इत्येते जसि विभाषा सर्वनामसंज्ञा भवन्ति । प्रथमे, प्रथमाः । चरमे, चरमाः । द्वितये, द्वितयाः । अल्पे, अल्पाः । अर्धे, अर्धाः । कतिपये, कतिपयाः । नेमे, नेमाः ।

'तय' इति तयप्प्रत्ययः, शिष्टानि प्रातिपदिकानि ।

तत्र 'नेम' इति सर्वादिषु पठ्यते; तस्य प्राप्ते विभाषा, अन्येषामप्राप्ते । उभयशब्दस्य तयप्प्रत्ययान्तस्य गणे पाठान्नित्या सर्वनामसंज्ञा इहापि जस्कार्यं प्रति विभाषा । काकचोर्यथायोगं वृत्तिः ॥

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ ३४ ॥**

पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर—इत्येतेषां गणे पाठात्पूर्वेण नित्यायां प्राप्तायां जसि विभाषाऽऽरभ्यते । पूर्वादीनि

### पदमञ्जरी

*प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ उभयशब्दस्येत्यादि ।* उभाववयवावस्य 'उभादुदात्तो नित्यम्' इति तयपोऽयजादेशः । स्थानिवद्भावाद्भवत्ययं तयबन्तः, तथापि गणे पाठाद् नित्यैव संज्ञा भवति । ननु गणे पाठस्योभयस्मिन्नुभयेषामित्यादिरवकाशः, इह तयब्ग्रहणस्य द्वितये द्वितया इति, उभयशब्दाज्जस्युभयप्रसङ्गे परत्वादियमेव विभाषा प्राप्नोति, नैष दोषः; अन्तरङ्गा नित्या संज्ञा विभक्त्यनपेक्षत्वादिति सैव प्रवर्तते ।

*काकचोर्यथायोगं वृत्तिरिति ।* नेमशब्देऽकचो वृत्तिः, अन्येषु कस्येत्येष यथायोगार्थः । कः पुनर्दोषो नेमशब्दे, यदि जसः कार्यं प्रति न स्यात्, पक्षे कोऽपि स्यात् ? अस्तु; नेमके, नेमकाः—नित्येऽप्यकचि तस्य तद्ग्रहणेन ग्रहणादस्मिन् विकल्पे सति एतद्रूपद्वयं भवत्येव, सत्यम्; प्रथमादिषु पक्षेऽकज्न भवतीत्येवम्परो ग्रन्थः ॥

### न्यासः

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च ॥ उभयशब्दस्य तयप्प्रत्ययान्तस्येति ।** संख्याया अवयवे तयप्' इत्युभशब्दाद्विहितस्य तयपो यद्यपि 'उभादुदात्तो नित्यम्' इत्ययजादेशो विधीयते, तथापि स्थानिवद्भावात् तद्ग्रहणेन गृह्यत इत्युभयशब्दस्तयप्प्रत्ययान्तो भवति ।

**तस्य गणे पाठान्नित्या सर्वनामसंज्ञेति ।** न त्वनेन योगेन परेणापि पाक्षिकी । एतच्च व्यवस्थितविभाषात्वाल्लभ्यते । **काकचोर्यथायोगं वृत्तिरिति ।** तेनोभय-नेमशब्दयोः सर्वादित्वान्नित्यमकचो वृत्तिः, प्रथमादिभ्यस्तु कप्रत्ययस्य—इत्येष यथायोगार्थः ।

विभाषा जसि सर्वनामसंज्ञानि भवन्ति व्यवस्थायामसंज्ञायाम् । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । पूर्वे, पूर्वाः । परे, पराः । अवरे, अवराः । दक्षिणे, दक्षिणाः । उत्तरे, उत्तराः । अपरे, अपराः । अधरे, अधराः ।

व्यवस्थायामिति किम्? दक्षिणा इमे गाथकाः । प्रवीणा

पदमञ्जरी

*पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्* ॥ *असंज्ञायामिति* । संज्ञायामसत्याम्, पूर्वादयश्चेत्संज्ञारूपा न भवन्तीत्यर्थः । व्यवस्था = नियमः, स चात्रार्थादवध्यपेक्ष इत्याह—*स्वाभिधेयापेक्ष इत्यादि* । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थस्तमपेक्षते, तेन वापेक्ष्यते यः स स्वाभिधेयापेक्षः । अवधिः = मर्यादा; पूर्वदेशस्य यत्पूर्वत्वं तत्परदेशमपेक्ष्य भवति, परस्यापि यत्परत्वं तत्पूर्वदेशम् । एवं दिक्कालयोरपि द्रष्टव्यम् । तस्मात्पूर्वादिशब्दवाच्योऽर्थोऽवश्यमवधिं कञ्चिदपेक्ष्य भवति । तत्र योऽयमपेक्षाया नियमः सा व्यवस्थेति तावद्विवक्षितम् । तस्यां गम्यमानायां पूर्वादिशब्दानां स्वाभिधेय एव वर्त्तमानानामियं संज्ञा भवति, न तु वाच्यायाम् ।

*प्रवीणा इत्यर्थ इति* । अनेन व्यवस्थाभावमाह । न हि प्रवीणशब्दः सापे-

न्यासः

**पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्** ॥ **असंज्ञायामिति** । संज्ञायामसत्याम् पूर्वादयश्चेत् संज्ञारूपा न भवन्तीत्यर्थः । **स्वाभिधेयापेक्ष इत्यादि** । अवधिर्मर्यादा, तस्य नियमोऽवश्यम्भावः, अवधिभावादभ्रंशः । किंविशिष्टोऽवधिनियमः ? स्वाभिधेयापेक्षः । पूर्वादीनां शब्दानां स्वाभिधेयो दिग्देशकालस्वभावोऽर्थः, तमपेक्षते यः सः स्वाभिधेयापेक्षः । दिगादीनां ह्यर्थानाम्—पूर्वादिशब्दाभिधेयानां यत् पूर्वादित्वम्, तन्नियोगतः कञ्चनावधिमपेक्ष्य सम्पद्यते, न त्ववधिनिरपेक्षम्; यथा—पूर्वदेशस्य यत् पूर्वत्वम्, तत्परं देशमपेक्ष्य भवति; परस्यापि यत् परत्वम्, तत् पूर्वदेशम्; तस्मात् पूर्वादिशब्दवाच्यापेक्षेणावश्यं केनचिदवधिना भाव्यम् । तत्र तस्यैवावधेः यः पूर्वादिशब्दार्थापेक्षोऽवधिभाव ऐकान्तिकः, स नियमो व्यवस्था, तस्यां गम्यमानायां पूर्वादीनां शब्दानां स्वाभिधेय एव वर्त्तमानानामियं संज्ञा भवति; न तु वाच्यायाम् । यो हि पूर्वादिशब्दाभिधेयादन्यस्यार्थस्यावधिभूतस्य नियमः, स कथं पूर्वादिशब्दवाच्यो भविष्यति !

**पूर्वे, पूर्वा इति** । अत्र परस्मादेवावधेरिति गम्यते । **परे, परा इति** । पूर्वस्मादेवावधेरिति गम्यते । **प्रवीणा इति** । कुशला इत्यर्थः । अत्र प्रावीण्यमात्रेण निमित्तेनाव-

इत्यर्थः । असंज्ञायामिति किम् ? उत्तराः कुरवः । सत्यामेव व्यवस्थायामियं तेषां संज्ञा ।

## स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

अत्रापि नित्या सर्वनामसंज्ञा प्राप्ता जसि विभाष्यते। स्वमित्येतच्छब्दरूपं जसि विभाषा सर्वनामसंज्ञं भवति, न चेज्ज्ञातिधनयोस्संज्ञारूपेण वर्तते। स्वे पुत्राः, स्वाः पुत्राः । स्वे गावः, स्वा गावः। आत्मीया इत्यर्थः। ज्ञातिप्रतिषेधः किम् ?

धूमायन्त इवाश्लिष्टाः प्रज्वलन्तीव संहताः ।
उल्मुकानीव मेऽमी स्वा ज्ञातयो भरतर्षभ ॥

### पदमञ्जरी

क्षमर्थमाचष्टे । *सत्यामेव व्यवस्थाया*मित्यनेनान्वर्थतां दर्शयति । सुमेरुमवधिमपेक्ष्य कुरुष्वुत्तरशब्दो वर्तते, अत्र जसः कार्यं प्रतीति नोक्तम्; विशेषाभावात् ॥

*स्वमज्ञातिधनाख्यायाम्* ॥ अज्ञातिधनाख्यायामित्यस्यार्थमाह—*न चेदित्यादि* । यत्र शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे तत्रासौ संज्ञारूपेण प्रवर्तते । *आत्मीया इत्यर्थ इति* । पुत्राणां गवां सत्यपि ज्ञातिधनत्वे न तेनाकारेण तत्र वर्तते, किन्त्वात्मीयाकारेणेत्यर्थः । आख्याग्रहणे त्वसति ज्ञातिधनयोः पर्यवसानादत्रापि प्राप्नोति ।

*धूमायन्त इत्यादि* । यथोल्मुकान्यश्लिष्टानि असंहतानि धूमायन्ते, संहतानि प्रज्वलन्ति; तद्वत् ज्ञातयोऽपीत्यर्थः । *स्वा ज्ञातय इति* । स्वशब्दस्यानेकार्थस्य व्यक्तीकरणाय पर्यायस्यापि ज्ञातिशब्दस्य प्रयोगः, स एव तु न प्रयुक्तः; निरङ्कुशाः कविवाच इति ॥

### न्यासः

धिनिरपेक्ष एव दक्षिणशब्दो वर्त्तत इति व्यवस्था न गम्यते । सत्यामेवेत्यादि । जम्बूद्वीपं सुमेरुं वावधिमपेक्ष्य तत्रोत्तरशब्दो वर्त्तत इति विद्यत एव व्यवस्था ।

स्वमज्ञातिधनाख्यायाम् ॥ अत्रापि नित्या सर्वनामसंज्ञा प्राप्तेति । गणपाठात् । एवमुत्तरत्रापि वेदितव्यम् । न चेदित्यादिना ज्ञातिधनाख्याशब्दस्यार्थमाचष्टे । यत्र च शब्दान्तरनिरपेक्षः स्वशब्दो ज्ञातिधने स्वरूपेणाचष्टे, तत्रासौ संज्ञारूपेण तयोर्वर्त्तते । आत्मीया इत्यर्थ इति । कथं पुनरयमर्थः, यावता स्वे पुत्रा इति ज्ञात्यर्थो गम्यते, स्वे गाव इति धनार्थः ? नैतदस्ति; पुत्रगोशब्दसान्निध्यादतदुभयं गम्यते । स्वशब्देनात्मीयत्वमात्रं गम्यते—स्वा ज्ञातय इति । प्रभूता स्वा इति चोभयत्र शब्दान्तरमनपेक्ष्य

अधनाख्यायामिति किम् ? प्रभूताः स्वा न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते । प्रभूतानि धनानीत्यर्थः ॥

**अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥**

अत्रापि पूर्वेण नित्या सर्वनामसंज्ञा प्राप्ता सा जसि विभाष्यते । अन्तरमित्येतच्छब्दरूपं विभाषा जसि सर्वनामसंज्ञं भवति बहिर्योगे उपसंव्याने च गम्यमाने । अन्तरे गृहाः, अन्तरा गृहाः । नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते । अन्तरे शाटकाः, अन्तराः शाटकाः । उपसंव्यानं परिधानीयमुच्यते, न प्रावरणीयम् ।

**पदमञ्जरी**

*अन्तरं बहिर्योगोपसंव्यानयोः* ॥ बहिरित्यनावृतो देश उच्यते । बहिरित्यनेन योगो बहिर्योग इतीतिशब्दाध्याहारेण विगृह्य समासः । स चानावृतस्य बाह्यस्य वस्तुनो भवति । उपसंवीयते विधीयते वासोऽन्तरेणेत्युपसंव्यानम्, कर्मणि ल्युट् । *नगरबाह्या इति* । बहिर्योगं दर्शयति । परिधानीयमन्तर्वासः, प्रावरणीयं

**न्यासः**

ज्ञातिधने स्वरूपेणैव स्वशब्देनाभिधीयेते । यद्येवम् , ज्ञातय इत्यनुप्रयोगो नोपपद्यते; पर्यायत्वात् , यथा—वृक्षशब्दप्रयोगे सति तरुशब्दस्यानुप्रयोगो विरुध्यते, नैष दोषः; पर्यायशब्दस्य हि यत्रानेकार्थो भवति संदिग्धार्थो वा, तत्र तदर्थस्यैव व्यक्तीकरणार्थः पर्यायान्तरस्यानुप्रयोगो न विरुध्यते; यथा—मेघाद्यनेकार्थवृत्तेर्वराहकशब्दस्य प्रयोगे शूकरशब्दस्य प्रयोगः । तथा सन्दिग्धार्थस्य पिकशब्दस्य प्रयोगे कोकिलशब्दस्य ! स्वशब्दश्चायमनेकार्थः, तत्रासत्यनुप्रयोगे किंविषयोऽयं प्रयुक्तः—इति सन्देहः स्यात् । अतस्तन्निरासार्थमुपपद्यते ज्ञातिशब्दस्यानुप्रयोगः ।

**अन्तरं बहिर्योगोपसंव्यानयोः** ॥ बहिर्योग इति । बहिरित्यनेनानावृतदेश उच्यते । तेन योगो बहिर्योगः । स चानावृतस्य बाह्यस्य वस्तुनो भवति । उपसंव्याने चेति । उपसंवीयते परिधीयते यत् तदुपसंव्यानम्—'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । अथ वा, संवीयते पिधीयतेऽनेनेति संव्यानम्—'करणाधिकरणयोश्च' इति ल्युट् , संव्यानस्य समीपमुपसंव्यानम् । अबहिर्योगे सामर्थ्यात् तदेव वेदितव्यम् । नगरबाह्या इति । अनेन बहिर्योगं दर्शयति । परिधानीयमुच्यत इति । उपसंव्यानस्येदमुदाहरणमुपन्यस्तम् । वस्त्रान्तरावृतवस्तु वस्त्वन्तरेणापिहितमुच्यते । अविशेषाभिधानेऽपि यद् वस्त्रान्तरेणावृतम् , सामर्थ्यात् तदेवोपसंव्यानमुच्यते, नेतरत् । न प्रावरणीयमिति । प्राव्रियतेऽपिधीयतेऽनेनेति प्रावरणीयम् , तन्नाभिधीयते । तदभिधाने तस्य बहिर्योगत्वात् बहिर्योग एवेदमुदाहरणं स्यादित्यभिप्रायः ।

बहिर्योगोपसंव्यानयोरिति किम्? अनयोर्ग्रामयोरन्तरे तापसः प्रतिवसति। तस्मिन्नन्तरे शीतान्युदकानि। मध्यप्रदेशवचनोऽन्तरशब्दः। गणसूत्रस्य चेदं प्रत्युदाहरणम्॥

*अपुरीति च वक्तव्यम्*॥ अन्तरायां पुरि वसति।

*विभाषाप्रकरणे तीयस्य वा ङित्सु सर्वनामसंज्ञेत्युपसंख्यानम्* द्वितीयाय, द्वितीयस्मै। तृतीयाय, तृतीयस्मै॥

**पदमञ्जरी**

बहिर्वासः। *अन्तरे तापस इति*। अत्र संज्ञाभावाद् ङेः स्मिन्न भवति। 'जसि' इति वर्तमाने कथं सप्तम्यन्तं प्रत्युदाहरणे दीयत इत्यत आह—*गणसूत्रस्य चेत्यादि*। गणसूत्रमप्येवमेव पठ्यते। कस्मात्पुनरप्रस्तुतस्य गणसूत्रस्य प्रत्युदाहरणं दीयते, न सूत्रस्य? 'अपुरीति वक्तव्यम्' इति वक्ष्यति, तद् गणसूत्रविषयं यथा स्यादिति: तस्यायं प्रस्तावः। सूत्रस्याप्यनया दिशा प्रत्युदाहरणं गम्यत इति न पृथग्दर्शितम्। *अन्तरायामिति*। प्राकाराद्बहिर्वर्तिन्यामित्यर्थः। यद्यपि गणसूत्रेऽन्तरशब्दः पठ्यते, तथापि तस्यैव सर्वनामत्वात् टापा सहैकादेशोऽपि तद्ग्रहणेन गृह्यत इति स्यात् प्रसङ्गः। लिङ्गविशिष्टपरिभाषया वा टाबन्तस्यैव संज्ञाप्रसङ्गे वचनम्। *विभाषाप्रकरण इत्यादि*। यथायमर्थः सिद्ध्यति, तथा 'विभाषा द्वितीयातृतीयाभ्याम्' इत्यत्र वक्ष्यामः॥

**न्यासः**

**अन्तरे तापसः प्रतिवसतीति**। अत्र संज्ञाया अभावात् सप्तम्याः स्मिन्नादेशो न भवति। ननु च जसीत्यनुवर्त्तते, तत् कस्मात् सप्तम्यन्तं प्रत्युदाहृतमित्यत आह—**गणसूत्रस्य चेत्यादि**। **अपुरीति वक्तव्यमिति**। अनन्तरं 'गणसूत्रस्य च' इत्यभिधानाद् गणसूत्रमेवैतद् वक्तव्यमिति गम्यते। यद्यपि गणसूत्रेऽन्तरशब्दः पठ्यते, तथापि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति प्राकाराद्बहिर्वर्त्तिनो या पूस्तस्या अपि बहिर्योगोऽस्तीति तत्र वर्त्तमानस्य टाबन्तस्याप्यन्तराशब्दस्य सर्वनामसंज्ञा प्राप्नोति, तेनापुरीति वक्तव्यम्। तेनान्तरायामित्यत्र स्याण् न भवति। **विभाषाप्रकरणे इत्यादि**। उपसंख्यानशब्दस्येह प्रतिपादनमर्थः। अस्मिन् विभाषाप्रकरणे तीयप्रत्ययान्तस्य सर्वनामसंज्ञायाः प्रतिपादनं कर्त्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'विभाषा जसि' इत्यत्र 'विभाषा' इति योगविभागः क्रियते, तत्र च 'सर्वादीनि' 'द्वन्द्वे' इति च निवृत्तम्, तेन तीयस्य विभाषा सर्वनामसंज्ञा भविष्यतीति। न चैवं सत्यतिप्रसङ्गः; योगविभागादिष्टसिद्धेः। नापि 'विभाषा द्वितीयातृतीयाभ्याम्' इत्यस्य वैयर्थ्यापत्तिः;

**स्वरादिनिपातमव्ययम् ॥ ३७ ॥**

स्वरादीनि शब्दरूपाणि निपाताश्चाव्ययसंज्ञानि भवन्ति । स्वर्, अन्तर्, प्रातर्—एते अन्तोदात्ताः पठ्यन्ते । पुनर् आद्युदात्तः । सनुतर्, उच्चैस्, नीचैस्, शनैस्, ऋधक्, आरात्, ऋते, युगपत्, पृथक्—एतेऽपि सनुतर्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । ह्यस्, श्वस्, दिवा, रात्रौ, सायम्, चिरम्, मनाक्, ईषत्, जोषम्, तूष्णीम्, बहिस्, आविस्, अवस्, अधस्, समया, निकषा, स्वयम्, मृषा, नक्तम्, नञ्, हेतौ, अद्धा, इद्धा, सामि—एतेऽपि ह्यस्प्रभृतयोऽन्तोदात्ताः पठ्यन्ते । वत्, वदन्तमव्ययसंज्ञम् भवति—ब्राह्मणवत्, क्षत्रियवत् । सन्, सनात्, सनत्, तिरस्—एते आद्युदात्ताः पठ्यन्ते । अन्तरा—अयमन्तोदात्तः । अन्तरेण, ज्योक्, कम्, शम्, सना, सहसा, विना, नाना, स्वस्ति, स्वधा, अलम्, वषट्, अन्यत्, अस्ति, उपांशु, क्षमा, विहायसा, दोषा, मुधा, मिथ्या । क्त्वातोसुन्कसुनः—कृन्मकारान्तः, सन्ध्यक्षरान्तोऽव्ययीभावश्च । पुरा, मिथो, मिथस्, प्रवाहुकम्, आर्यहलम्, अभीक्ष्णम्, साकम्, सार्द्धम्, समम्, नमस्, हिरुक् । तसिलादिस्तद्धित

**पदमञ्जरी**

*स्वरादिनिपातमव्ययम्* ॥ *तसिलादिरिति* । 'पञ्चम्यास्तसिल्' इत्यारभ्य 'एधाच्च' इत्येतदन्तः । *शस्तसी*—'बह्वल्पार्थाच्छस्', प्रतियोगे 'पञ्चम्यास्तसिः' । 'संख्यायाः

**न्यासः**

प्रपञ्चार्थत्वात् । ततः 'जसि' इति द्वितीयो योगः । अत्र विभाषाग्रहणम्, सर्वादिग्रहणम्, द्वन्द्वग्रहणञ्चानुवर्त्तते ॥

**स्वरादिनिपातमव्ययम्** । स्वरादिषु स्वस्तिशब्दोऽस्तिशब्दश्च पठ्यते । तत्र स्वस्तिशब्दस्य किमर्थः पाठः ? यावतास्तिशब्दपाठादेव तदन्तविधिना स्वस्तिशब्दस्यापि भविष्यति । 'ग्रहणवता प्रातिपदिकेन' इति तदन्तविप्रतिषेधान्न सिध्यतीत्येतत् तु नाशङ्कनीयम्, 'अव्ययम्' इति महती संज्ञा क्रियते, अन्वर्थसंज्ञा यथा विज्ञायेत । लिङ्ग-कारकसंख्याविशेषानुपादान्न व्येति = विविधत्वं न गच्छतीत्यव्ययम् । तस्याश्चोपसर्जनप्रतिषेधः, तदन्तविधिश्च प्रयोजनम् । तस्मादन्वर्थसंज्ञाकरणादेव तदन्तस्यापि भविष्यति, स्वस्तिशब्दोऽपि न व्येत्येव, सत्यमेतत्; एवं त्वन्वर्थसंज्ञाकरणाज्ञ्ञ-

एधाच्पर्यन्तः, शस्तसी, कृत्वसुच्, सुच्, आस्थालौ, च्व्यर्थाश्च, अम्, आम्, प्रतान्, प्रशान्। स्वरादिः।

निपाता वक्ष्यन्ते—'प्राग्रीश्वरान्निपाताः' इति। च, वा, ह, अह, एव, एवमित्यादयः।

पदमञ्जरी

'क्रियाभ्यावृत्तिगणने कृत्वसुच्', 'द्वित्रिचतुर्भ्यः सुच्'। *आस्थालाविति*। 'इण आसिः' अयाः, 'प्रत्नपूर्व'-त्वं प्रत्नथाः। *च्व्यर्थाः*—'संपद्यकर्तरि च्विः' 'विभाषा साति कार्त्स्न्ये', 'देये त्रा च', अमु चच्छन्दसि', 'किमेत्तिङव्ययघादामु'। *निपाता वक्ष्यन्त इति*। अथ किमर्थं स्वरादीनां पृथग्ग्रहणं क्रियते, ते चादिष्वेव पठ्येरन्? न; चादीनामसत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां चाव्ययसंज्ञा-स्वस्ति वाचयति, स्वः पश्येति। क्रियासम्बन्धेऽनेकशक्तिदर्शनात् सत्त्ववाचित्वम्। अथ 'प्राग्रीश्वरान्निपाताः स्वरादीनि चादयोऽसत्त्वे' इत्येवं सूत्रन्यासः क्रियेत, कः पुनरत्र विशेषस्तत्र वा स्वरादिग्रहणं क्रियेत? अत्र वा? किं च 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत-'किमोऽत्', 'दक्षिणादाच्', 'एकाच्च तद्धितः'; केन्प्रभृतयस्तु कृत एकाचस्सन्ति। अथ 'चादिरेकाजनाङ्' इति क्रियते तदा चादीनामसत्त्ववचनत्वं विशेषणं न लभ्यते? नैष दोषः; 'चादयोऽसत्त्वे' इत्यत्रासत्त्वग्रहणं चादीनां पाठविशेषणम्, यथा-'तिङो गोत्रादीनि' इत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादीनाम्, तेन यत्र यत्र चादिग्रहणं तत्र सर्वत्र विशिष्टानामेव ग्रहणम्, तत्रायमप्यर्थः— 'उभे संज्ञे न कर्त्तव्ये भवतः-अव्ययम्, निपातः' इति। कथम्? 'प्राग्रीश्वरान्निपाताः' इति वा 'अव्ययानि' इति वा सूत्रं कर्त्तव्यम्, ततः स्वरादीनि 'तद्धितश्चासर्वविभक्तिः' यावद् 'अव्ययीभावश्च' इति, ततः 'चादयोऽसत्त्वे' इत्यारभ्य यावद् 'अधिरीश्वरे', विभाषा कृञि' इति; तत्र यस्मिन् प्रदेशे निपातग्रहणं

न्यासः

स्तदन्तविधिरनेनोपदर्शितः। विस्पष्टार्थमुदाहरणमेतत्। तसिलादिस्तद्धित एधाच्पर्यन्त इति। 'पञ्चम्यास्तसिल्' इत्यतः प्रभृति 'एधाच्' इत्येतत्पर्यन्तः। शस्तसी इति। 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' 'प्रतियोगे पञ्चम्यास्तसिः'। कृत्वसुजिति। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति। 'द्वित्रिचतुर्भ्यः सुच्'। आस्थालाविति। 'इण आसिः' इत्युणादिसूत्रेण इणो धातोरासिप्रत्ययः। अया इत्युदाहरणम्। प्रत्नपूर्वविश्वेमात्थाल् छन्दसि' इति। च्व्यर्थाश्चेति। अभूततद्भावे 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः' 'विभाषा साति कार्त्स्न्ये'। 'देये त्रा च'। अमिति। 'अमु च च्छन्दसि'। आमिति। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'। निपाता वक्ष्यन्त इति। अथ कस्मात्

अव्ययप्रदेशाः 'अव्ययादाप्सुपः' इत्येवमादयः । 'अव्ययम्' इत्यन्वर्थसंज्ञा' ।

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

पदमञ्जरी

तत्र चादिग्रहणमस्तु, अव्ययप्रदेशेष्वव्ययग्रहणं निपातग्रहणं चेति, तत्तु तथा न कृतमित्येव ।

*अव्ययमित्यन्वर्थसंज्ञ त* । *सदृशम् इत्यादि* । श्रुतिश्चेयमाथर्वणी प्रणवविद्यायां त्रिषु लिङ्गेषु स्त्रीपुन्नपुंसकेषु सदृशम्, लिङ्गविशेषप्रतिपादनेऽसामर्थ्यात् । *विभक्तिष्विति* । कारकेषु *वचनेष्विति* । एकत्वादिसंख्यासु, अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् 'यस्मान्न व्येति नाना न गच्छति सत्त्वधर्मान्न गृह्णातीत्यर्थस्तत्तस्मादव्ययम्' इति । यच्छब्दरूपं न व्येति तदव्ययमिति वा । किं पुनः प्रयोजनमन्वर्थसंज्ञाकरणे ? उपसर्ज्जनप्रतिषेधाः—अत्युच्चैसौ, अत्युच्चैस इति । अतिक्रान्तप्रधानस्यात्र सत्त्वधर्मपरिग्रहात् उच्चैःशब्दः पठ्यते, कः प्रसङ्गस्तदन्तस्य ? एतज् ज्ञापयत्याचार्यः—'अस्त्यव्ययसंज्ञायां तदन्तविधिः' इति । तेन परमस्वः, परमोच्चैरिति स्वरादिप्राधान्ये तदन्तस्यापि भवति । कुशब्दः स्वरादिषु पठितव्योऽव्ययसंज्ञार्थः ॥

न्यासः

ते स्वरादिषु न पठ्यन्ते ? कः पुनरेवं गुणो भवति ? अव्ययसंज्ञायां निपातग्रहणं न कर्त्तव्यमिति, नैतदस्ति; चादीनामसत्त्ववचनानामेवाव्ययसंज्ञेष्यते, स्वरादीनान्तु सत्त्ववचनानामसत्त्ववचनानां च । तथा हि क्रियायोगो दृश्यते—स्वः पश्यन्ति, स्वरारोहन्तीति । तत्र यदि चादयो निपाताः पठ्येरन्, तेषां सत्त्वेऽपि वर्त्तमानानामव्ययसंज्ञा प्रसज्येत ।

'अव्ययम्' इत्यन्वर्थसंज्ञेयमिति दर्शयितुमाह—सदृशमिति । त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं तुल्यम्, लिङ्गविशेषापरिग्रहाल्लिङ्गसामान्योपादानाच्च । सर्वासु च विभक्तिष्विति । विभक्तिनिमित्तत्वाद् विभक्तिः । विभज्यते वा प्रातिपदिकार्थ आभिरिति कर्मादीनि कारकाणि शक्तिरूपाणि विभक्तिशब्देनोच्यन्ते । वचनेषु चेति । वचनान्येकवचनद्विवचनबहुवचनानि । इहाभिधेयेऽभिधानोपचाराद् एकादिका संख्या गृह्यते । तदेवं लिङ्गकारकसंख्याविशेषपरस्यानुपादानात् सामान्यरूपोपादानाच्च विभक्तिषु वचनेषु च सदृशं भवति । एवं 'यस्मान्न व्येति लिङ्गादिसंख्याविशेषा-

१—१. पाठोऽयं पदमञ्जरीसम्मतोऽपि मुद्रितसंस्करणेषु न दृश्यते ।

## तद्धितश्चासर्वविभक्तिः ॥ ३८ ॥

तद्धितान्तः शब्दोऽसर्वविभक्तिरव्ययसंज्ञो भवति । यस्मान्न सर्व-विभक्तेरुत्पत्तिः, सोऽसर्वविभक्तिः । ततः, यतः; तत्र, यत्र; तदा, यदा; सर्वदा, सदा ।

### पदमञ्जरी

*तद्धितश्चासर्वविभक्तिः* ॥ इह यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधि-प्रतिषेधस्तथापि केवलस्य तद्धितस्य संज्ञायाः प्रयोजनाभावात् तदन्तविधिर्वि-ज्ञायत इत्याह—*तद्धितान्तः शब्द इति* । अकच् तावत्प्रातिपदिकस्य सुबन्तस्य वा विधीयते । 'अव्ययादाप्सुपः' इत्यत्राप्यव्ययाद्विहितस्य सुपो लुक्, न तु परस्य; अत्युच्चैसावित्यादावपि प्रसङ्गात् । 'तत्पुरुषे तुल्यार्थ', 'नाव्ययदिक्छब्द', 'खित्यनव्ययस्य' इत्यत्रापि पूर्वपदस्याव्ययस्य ग्रहणम् । सर्वा विभक्तिर्यस्य सम्ब न्धिनी न भवति सोऽसर्वविभक्तिः ।

### न्यासः

नुपादानाद् विविधं नानात्वं न गच्छति तस्माद् अव्ययम्' इत्यन्वर्थता प्रतिपादिता भवति । प्रयोजनं पुनरुपसर्जनप्रतिषेधः, तदन्तविधिश्चेत्युक्तम् । तत्रोपसर्जनप्रति-षेधः—अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः । न ह्यत्र यथोपदर्शितार्थानुगमः सम्भवति । यत्र तु सम्भवति, तत्र तदन्तस्याव्ययसंज्ञा भवत्येव; यथा—परमस्वः, उत्तमस्वरिति । अत्र हि स्वर्शब्दस्य प्राधान्याल्लिङ्गादिविशेषस्यासम्भवः । पूर्वत्र उच्चैःशब्दस्य विपर्य-याद् विपर्ययः ।

**तद्धितश्चासर्वविभक्तिः** ॥ प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति तद्धितान्तस्य संज्ञा विज्ञायत इत्याह—तद्धितान्तः शब्द इति । यस्मान्न सर्व-त्यादि । अत्रावयवकार्त्स्न्यवृत्तिः सर्वशब्दः । सर्वा निरवशेषा येषां त्रयाणां वचनानां विभक्तिरिति संज्ञा कृता । तानि सर्वाणि यतो नोत्पद्यन्त इत्यर्थः । ततः, यत इति । तद्-यच्छब्दात् पञ्चमीसमर्थात् 'पञ्चम्यास्तसिल्' इति तसिल्, 'सुपो धातुप्रातिपदि-कयोः' इति सुब्लुक्, 'प्राग्दिशो विभक्तिः' इति 'विभक्तित्वात् त्यदाद्यत्वम्, 'अतो गुणे', पररूपत्वम् । तत्र यत्रेति । 'सप्तम्यास्त्रल्' इति त्रल् । तदा, यदा, सर्वदेति । 'सर्वैकान्यकिंयत्तदः काले दा' । सर्वे एते—ततःप्रभृतयः विभक्त्यर्थप्रधानाः । स च विभक्त्यर्थः प्रातिपदिकार्थः सम्पन्न इति प्रातिपदिकार्थे प्रथमैव भवति । सापि संख्याविशेषाभावान्न सर्वा । किं तर्हि ? एकवचनमेव; तस्योत्सर्गत्वात् । तथा चोक्तम्—'एकवचनमुत्सर्गतः करिष्यते' इति । तस्य 'अव्ययादाप्सुपः' लुक् । एक इति । अत्रासर्वविभक्तिकत्वमस्ति; एकत्वे द्वित्वायोगात् । अतद्धितत्वान्न भवति ।

पदमञ्जरी

किं पुनरिदं तद्धितस्य विशेषणम् ? आहोस्वित्तदन्तस्य ? कथञ्चेदं तद्धितस्य विशेषणम्, कथं वा तदन्तस्य ? यदि सर्वा विभक्तिर्यस्य सम्बन्धिनी न भवति—कारणत्वेन यस्योत्पत्तौ सर्वा विभक्तिः कारणं न भवति, यथा 'पञ्चम्यास्तसिल्' इत्यादाविति कार्यमन्यपदार्थः, तदा तद्धितस्य विशेषणं भवति—तद्धितस्यैव ह्युत्पत्तिर्न तदन्तस्य। एवंविशिष्टेन तद्धितेन तदन्तविधौ—तादृशतद्धितान्तोऽव्ययमित्यर्थो भवति। अथ तु सर्वा विभक्तिर्यस्य कार्यत्वेन सम्बन्धिनी न भवति-यस्मात्सर्वा विभक्तिर्नोत्पद्यत इति कारणमन्यपदार्थः, तदा तदन्तस्य विशेषणं भवति। न हि तद्धितमात्राद्विभक्त्युत्पत्तिप्रसङ्गः। तत्र पूर्वस्मिन् पक्षे विना, नानेत्यत्र न स्याद्; न हि विनञ्भ्यामित्यत्र प्रतिनियता काचिद्विभक्तिराश्रीयत इति सर्वविभक्त्यन्ताभ्यां विनञ्भ्यां नानाञौ भवतः। अव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति पक्षे येऽपि भवदादिप्रयोगे तसिलादयो विधीयन्ते—'इतराभ्योऽपि दृश्यन्ते' इति, तेऽपि स भवाँस्ततो भवांस्तं भवन्तं ततो भवन्तमित्यादिसर्वविभक्त्यन्तेभ्य उत्पद्यन्त इति तत्रापि न स्यात्। 'तस्यापत्यम्' 'तत्र भवः' इत्यादौ च षष्ठ्यादिकैकैव विभक्तिर्निमित्तम्, न तु सर्वेत्योपगवादावतिप्रसङ्गश्चेति द्वितीयं पक्षमाश्रित्याह—*यस्मादित्यादि*। तत इत्यादौ 'प्राग्दिशो विभक्तिः' इति तसिलादीनां विभक्तित्वात्त्यदाद्यत्वम्।

कथं पुनरेतेऽसर्वविभक्तयः; यावता यत्र च सङ्ख्या सम्भवति तत्रायमुपदेशः, अव्ययेभ्यस्तु निःसङ्ख्येभ्य इत्यस्मिन्पक्षे 'अव्ययादाप्सुपः' इति ज्ञापकाश्रयणे च सर्वविभक्तयः; अथ सङ्ख्याकर्मादयश्च स्वादीनामर्थास्तेन सहास्यैकवाक्यतेति पक्षः, ततोऽविभक्तित्वमेवासत्त्वभूतार्थानामापद्येत ? उच्यते; 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्रैकस्मिन्नित्यपनीय 'एकवचनम्' इति पृथक् सूत्रं कर्त्तव्यम्, ततः 'द्विबह्वोर्द्विवचनबहुवचने' इति, ततश्चैकवचनमेकस्मिन्नपि भविष्यति, सङ्ख्याकर्माद्यभावे चाप्राप्तप्रापणार्थत्वादेकवचनमित्यस्य सूत्रस्य, द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते, ततश्चासत्त्ववचनेभ्योऽपि सप्तानां विभक्तीनां सप्ताप्येकवचनानि भवन्ति। अव्ययीभावादप्येवमेव, तावतापि नाव्ययीभावात् 'तृतीयासप्तम्योः' इत्यस्योपपत्तेः, तदिदमुच्यते—'एकवचनमुत्सर्गतः करिष्यते' इति। एवं स्थिते यस्मात्सर्वा विभक्तिर्नोत्पद्यत इत्येकवचनेन विग्रहो—ऽवयवकार्त्स्न्यवृत्तिः सर्वशब्दो यस्य त्रिकस्य विभक्तिसंज्ञा विहिता तन्निरवशेषं यस्मान्नोत्पद्यते, किन्तु तदेकदेश एवेत्यर्थस्तदाह—*यस्मात् सर्वा विभक्तिरिति*। यदि तु सर्वा विभक्तय इति बहुवचनेन विगृह्येत ततः सर्वान्नीन इतिवत् प्रकारकार्त्स्न्येऽपि सर्वशब्दस्य संभवाद् एकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः, सप्ताप्येकवचनान्यसत्त्ववचनेभ्य उत्पद्यन्त इति न स्यादसर्वविभक्तित्वमिति भावः। इह

तद्धित इति किम्? एकः, द्वौ, बहवः । असर्वविभक्तिरिति किम्? औपगवः, औपगवौ, औपगवाः ॥

कृन्मेजन्तः ॥ ३९ ॥

कृद्यो मकारान्त एजन्तश्च तदन्तं शब्दरूपमव्ययसंज्ञं भवति । स्वादुङ्कारं भुङ्क्ते, सम्पन्नङ्कारं भुङ्क्ते, लवणङ्कारं भुङ्क्ते । एजन्तः—वक्षे

पदमञ्जरी

'तेनैक दिक्' 'तसिश्च' इत्येकस्मिन्नर्थे विधीयमानयोरप्यण्तसोरण् द्रव्यप्रधानः, तसिस्तु द्रव्योपसर्जनतृतीयार्थप्रधान इति तस्यासत्त्ववचनता ।

*तद्धित इति किमिति* । असर्वविभक्तिरव्ययमित्येवास्तु, मा भूत्सर्वमेव प्रकरणं ये हि स्वरादयः, ये च निपाताः, ये च कृन्मेजन्ताः, ये च क्त्वादयः, यश्चाव्ययीभावः, सर्वे तेऽसर्वविभक्त्य इति प्रश्नः । *एकः, द्वौ, बहव इति* । एतेभ्योऽपि सप्तस्वपि विभक्तिष्वेकैकमेव वचनमुत्पद्यत इति स्यादतिप्रसङ्ग इति कर्त्तव्यं तद्धितग्रहणम् । तस्मिंश्च कृते प्रकरणमपि कर्त्तव्यमिति भावः । विंशत्यादयस्तु कृतैकशेषा द्विवचनबहुवचनान्ता अपि भवन्तीति नासर्वविभक्तयः । एवं द्वयत्रयोभयशब्दा अयजन्ताः । एवमपि गोदयोरदूरभवो ग्रामः 'अदूरभवश्च' इत्यणः 'वरणादिभ्यश्च' इति लुपि युक्तवद्भावात् सर्वासु विभक्तिषु द्विवचनस्योत्पत्तेरस्त्यतिप्रसङ्गः । स्यादयं पर्यनुयोगः—यदि तद्धितान्तो गोदशब्दः, वयं तु 'लुब्योगाप्रख्यानाद्' 'योगप्रमाणे च तदभावे दर्शनं स्याद्' इत्यधीयाना नैवं पर्यनुयोज्याः; एवमपि 'सङ्ख्यायास्संज्ञासङ्घसूत्राध्ययनेषु' संज्ञायां स्वार्थे उत्पाद्यः, पञ्चैव पञ्चकाः शकुनयः—अत्र प्राप्नोति, पचतिरूपं पचतिकल्पमित्यादौ च एकवचनमेवोत्पद्यत इति स्यादेवातिप्रसङ्गः । तस्मात्तद्धितानां पाठ एवाश्रयणीयः, तदाह—'सिद्धं तु पाठात्तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, मान्तः कृत्वोर्थाः, तसिवती नानाञाविति' ॥

*कृन्मेजन्तः* ॥ अत्रापि पूर्ववत्तदन्तस्य संज्ञेति स्थिते मेजन्तग्रहणं कृदन्तस्य विशेषणम्—'कृदन्तम्मेजन्तमव्ययम्' इति । कृत एव वा—कृद्यो मेजन्तस्तदन्तमव्ययमिति । तत्राद्ये पक्षे प्रतामौ प्रतामः, लवमाचष्टे इति णिचि क्विपि णिलोपे ऊठि 'एत्येधत्यूठ्सु' इति वृद्धौ लौरत्रापि प्राप्नोति, भवति ह्येतत् प्रत्ययलक्षणेन कृदन्तम्, मेजन्तं च श्रूयत इतीमं दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—*कृद्य इति* ।

न्यासः

औपगव इति । अत्र तद्धितान्तत्वमस्ति । तद्धितान्तस्य सर्वविभक्तियोगान्न भवति ।

कृन्मेजन्तः ॥ स्वादुङ्कारं भुङ्क्ते इति । 'स्वादुमि णमुल्' । 'स्वादुमि' इत्यत

रायः। ता वामेषे रथानाम्। क्रत्वे दक्षाय जीवसे। ज्योक्च सूर्यं दृशे। 'वक्षे' इति वचेः, 'तुमर्थे सेसेन्' इति सेप्रत्यये कुत्वे षत्वे च कृते रूपम्। 'एषे' इति इणः सेप्रत्यये गुणे षत्वे च कृते रूपम्। 'जीवसे' इति जीवेरसे प्रत्यये रूपम्। 'दृशे' इति दृशेः केन्प्रत्ययो निपात्यते—'दृशे विख्ये च' इति।

अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्। इह मा भूत्—आधये, चिकीर्षवे, कुम्भकारेभ्य इति॥

पदमञ्जरी

नन्वत्रापि कारयाञ्चकार—आमन्तस्य न प्राप्नोति, पूर्वत्र तु लिटः कृत्त्वात्सिद्धम्, अत्रापि स्वरादिष्वामिति पाठात् सिद्धम्। अथापि तत्र तद्धितस्य पाठः; एवमपि कृदन्तत्वादुत्पन्नानां सुपाम् 'आमः' इति लुग्भविष्यति, 'लेः' इति हि तत्र नानुवर्त्तते।

*स्वादुङ्कारमिति*। 'स्वादुमि णमुल्' स्वादुमित्यर्थग्रहणात्सम्पन्नङ्कारमित्यपि भवति, स्वादुमीति निपातनात्पूर्वपदस्य मान्तत्वम्। 'येन विधिस्तदन्तस्य' इत्येव सिद्धेरपार्थकमन्तग्रहणं तत्राह—*अन्तग्रहणमित्यादि*। नित्ययोगे बहुव्रीहिर्विज्ञानादौपदेशिकप्रतिपत्तिः। *आधय इति*। आङ्पूर्वाद्धात्रः 'उपसर्गे घोः किः,' चतुर्थ्येक-

न्यासः

एव निर्देशादुपपदस्य मकारान्तत्वं निपात्यते। स्वादुमिति चार्थग्रहणम्। तेन सम्पन्नङ्कारमित्यादौ सम्पन्नादावप्युपपदे णमुल् भवति। वक्षे इति। 'वच परिभाषणे', 'ब्रुवो वचिः' इति ब्रूआदेशो वा। 'चोः कुः' इति कुत्वम्।

**अन्तग्रहणमित्यादि**। **औपदेशिकप्रतिपत्त्यर्थमिति**। नित्ययोगे बहुव्रीहिर्विज्ञानादौपदेशिकप्रतिपत्तिः। उपदेशे भवमौपदेशिकम्। तस्य प्रतिपत्तिर्ज्ञानम् प्रयोजनं यस्य तत् तथा। एवं मन्यते—विनाप्यन्तग्रहणेन 'येन विधिस्तदन्तस्य' इति सामर्थ्याद्वा कृतस्तदन्तविधौ सिद्धे यदन्तग्रहणं क्रियते तस्यैतत् प्रयोजनम्—नियोगतो यस्यैजन्तत्वमुपदेशावस्थायामेव भवति तस्यैव प्रतीतिर्यथा स्यादिति। आधय इति। दधातेराङ्पूर्वाद् 'उपसर्गे घोः किः' इति किः, 'आतो लोप इटि च' इत्याकारलोपः, चतुर्थ्येकवचने 'घेर्ङिति' इति गुणः। चिकीर्षव इति। करोतेः सन्, 'अज्झनगमां सनि' इति दीर्घः, 'ऋत इद्धातोः' इतीत्त्वम्, रपरत्वम्, द्विर्वचनमभ्यासकार्यम्, 'हलि च' इति दीर्घः, 'सनाशंसभिक्ष उः' इत्युप्रत्ययः, अतो लोपः, शेषं पूर्ववत्। कुम्भकारेभ्य इति। 'कर्मण्यण्' 'उपपदमतिङ्' इति समासः, 'बहुवचने झल्येत्' इत्येत्त्वम्। ननु च लक्षणप्रतिपदोक्तपरिभाषयैव वा 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येव वात्र संज्ञा न

## क्त्वातोसुन्कसुनः ॥ ४० ॥

क्त्वा-तोसुन्-कसुन्-इत्येवमन्तं शब्दरूपमव्ययसंज्ञं भवति। कृत्वा, हृत्वा। तोसुन्-पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्त्तोः। 'भावलक्षणे स्थेण्कृञ्वदि' इति इणः, कृञश्च तोसुन्प्रत्ययः। कसुन्- 'सृपितृदोः कसुन्'। पुरा क्रूरस्य विसृपो विरप्शिन्, पुरा जतृभ्य आतृदः ॥

## अव्ययीभावश्च ॥ ४१ ॥

अव्ययीभावसमासोऽव्ययसंज्ञो भवति। किं प्रयोजनम्? लुङ्मुख-स्वरोपचाराः। लुक्—उपाग्नि, प्रत्यग्नि शलभाः पतन्ति। मुख-स्वरः—उपाग्निमुखः, प्रत्यग्निमुखः। 'मुखं स्वाङ्गम्' इत्युत्तरपदान्तो-दात्तत्वं प्राप्तम् 'नाव्ययदिक्छब्द' इति प्रतिषिध्यते। तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर एव भवति। उपचारः—उपपयःकारः, उपपयः-

### पदमञ्जरी

वचने 'घेर्ङिति' आधये, भवत्ययं संप्रत्येजन्तः, नोपदेशे। एवं चिकीर्षवे—करोतेः सन्नन्तात् 'सनाशंसभिक्ष उः,' कुम्भकारशब्दः कर्मण्यणन्तः 'बहुवचने झल्येत्,' अत्राव्ययसंज्ञायाम् 'अव्ययात्' इति लुक् स्यात्, सन्निपातपरिभाषयाऽप्येतत्सिद्धम्, तथा लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। अन्तग्रहणं तु यत्नान्तरं द्रष्टव्यम् ॥

*अव्ययीभावश्च* ॥ *लुङ्मुखस्वरोपचारा इति*। अत्र मुखस्वरोपचारौ निवर्त्य-मानतया प्रयोजनम्, मशकार्थो धूम इतिवत्। लुक् प्रवर्त्यमानतया। *उपाग्नीति*। अव्ययादिति लुक्। *पूर्वपदप्रकृतिस्वर एवेति*। समासस्वरेणान्तोदात्तत्वम्।

### न्यासः

भविष्यति—विभक्तिप्रत्ययं ह्याश्रित्य विधीयमानत्वाद् गुणादिकार्यं बहिरङ्गम्, अव्यय-संज्ञा त्वन्तरङ्गम्, बाह्यस्य निमित्तस्यानाश्रयणात्, सत्यमेतत्; एवं त्वर्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्। अतस्तत्परिहारार्थमन्तग्रहणं कृतम्।

**क्त्वातोसुन्कसुनः** ॥ कृत्वा, हृत्वेति। 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा। उदेतोरिति। 'इण् गतौ', 'सार्वधातुक' इति गुणः। अपाकर्त्तोरिति। कृञः। विसृप इति। 'गम्लृ सृप्लृ गतौ'। आतृद इति। 'तृदिर् हिंसानादरयोः'।

**अव्ययीभावश्च** ॥ उपाग्नीति। अव्ययं विभक्ति' इत्यादिना सामीप्येऽव्ययीभावः। 'अव्ययात्' इति लुक्। अग्नेः समीपे उपाग्नीति। उपाग्नि मुखं यस्येत्यव्ययीभाव-

कामः । विसर्जनीयस्थानिकस्य सकारस्य 'उपचार' इति संज्ञा, तत्राव्ययीभावस्याव्ययत्वे 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति पर्युदासः सिद्धो भवति । सर्वमिदं काण्डं स्वरादावपि पठ्यते ।

पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेनायं कार्यनियमः सिद्धो भवति । इह च—पुरा सूर्यस्योदेतोराधेयः, पुरा क्रूरस्य विसृप इति 'न लोकाव्ययनिष्ठा' इति षष्ठीप्रतिषेधो न भवति ॥

पदमञ्जरी

*उपपयःकाम इति* । 'शीलिकामिभिक्षाचरिभ्यो णः' कर्मणि घञन्तेन वा बहुव्रीहिः, अत्र मुखस्वरनिवृत्तिरेव साक्षात्प्रयोजनम्, लुक् तु 'नाव्ययीभावादतोऽम्' इति विशेषप्रतिषेधात् सिद्धः, 'अतः कृकमिकंस' इत्यत्र च 'अनुत्तरपदस्थस्य' इति वर्तते । नन्वन्यदप्यव्ययकार्यं सम्भवति—उपाग्निकमित्यकच्, उपकुम्भमन्य इति मुम्प्रतिषेधः, उपकुम्भीभूत इति 'अस्य च्वौ' इतीत्वस्योपसङ्ख्यानिकः प्रतिषेधः, उपाग्न्यधीयानेति 'सुबामन्त्रिते' इत्यस्योपसंख्यानिकः प्रतिषेधः, तत्कुतोऽयं कार्यनियम इत्यत आह—*सर्वमिदमित्यादि* । *इह चेत्यादिना* 'न लोकाव्यय' इत्यत्र यद्वक्ष्यति—'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति, तस्यावक्तव्यतां दर्शयति ॥

न्यासः

गर्भो बहुव्रीहिः । तत्र 'मुखं स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्यय' इति प्रतिषिद्धम् । तस्मिन् प्रतिषिद्धे पूर्वपदप्रकृतिस्वर इति । 'बहुव्रीहौ प्रकृत्या' इत्यादिना तत् पुनरन्तोदात्तत्वम्, उपाग्निशब्दस्य समासस्वरेणान्तोदात्तत्वात् । उपपयःकार इति 'कर्मण्यण्' । एवम्, उपपयःकाम इत्यत्रापि । उपपयः कामो यस्येति बहुव्रीहिर्वाक्यम् । काम्यत इति कामः, 'अकर्त्तरि च कारके संज्ञायाम्' इति कर्मण्यपि घञ् । 'अनव्ययस्य' इति सत्वे प्रतिषिद्धे 'कुप्वोᳲकᳲपौ च' इति जिह्वामूलीयो भवति, विसर्जनीयो वा । अत्र मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम्, न तु विधीयमानौ; लुक् पुनर्विधीयमानः । ननु चाव्ययनिबन्धनमकजादिकार्यमस्त्येव, तत् कुतोऽयं कार्यनियमो लभ्यत इत्याह—सर्वमित्यादि । इदमिति 'तद्धितश्चासर्वविभक्तिः' इत्यादिकम् । किञ्चित् स्वरूपेणैव पठ्यते, कस्यचित् पर्यायान्तरेणार्थः । स त्वभिधेयधर्मेणोपचारादित्युच्यते । तत्र 'कृन्मकारसन्ध्यक्षरान्तः' इति 'कृन्मेजन्तः' इत्यस्यार्थः पठ्यते । क्त्वातोसुन्कसुनोऽव्ययीभावश्चेति स्वरूपेणैव । तसिलादिस्तद्धित एधाच्पर्यन्त इति यावत् । च्व्यर्थाश्चेति । असिमौणादिकं वर्जयित्वा । तद्धितश्चासर्वविभक्तिरित्यस्यार्थः । अनित्यत्वज्ञापनार्थमिति । प्रकृतत्वात् 'संज्ञायाः' इति लभ्यते । तेनाकजादौ कर्त्तव्ये

## शि सर्वनामस्थानम् ॥ ४२ ॥

'शि' इत्येतत्सर्वनामस्थानसंज्ञं भवति। किमिदं शि इति? जश्शसोः शिरादेशः। कुण्डानि तिष्ठन्ति, कुण्डानि पश्य। दधीनि, मधूनि। त्रपूणि, जतूनि।

सर्वनामस्थानप्रदेशाः—'सर्वनामस्थाने चासंबुद्धौ' इत्येवमादयः॥

### पदमञ्जरी

*शि सर्वनामस्थानम्* ॥ *कुण्डानीति*। 'जश्शसोः शिः' 'सर्वनामस्थाने' इति वर्तमाने 'नपुंसकस्य झलचः' इति नुम्। 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घो यद्यपि 'जसः शी' 'नपुंसकाच्च' इति विहितस्य शीशब्दस्य शब्दरूपापेक्षया नपुंसकह्रस्वत्वे 'शि' इति रूपं सम्भवति, तथापि लाक्षणिकत्वान्न तस्य ग्रहणम्, सर्वनामस्थानप्रदेशेषु शिग्रहणे सुटो ग्रहणं न स्यात्। शिसुटोरिति वचने नपुंसकसुटोऽपि ग्रहणं प्राप्नोति, अतः संज्ञा तावत्कर्त्तव्या। किमर्थं तु महती क्रियते? केचिदाहुः—सर्वनाम तिष्ठत्यस्मिन्निति सर्वनामस्थानम्, नाम प्रातिपदिकम्, सर्वशब्दोऽवयवकार्त्स्न्यवचनः सर्वावयवयुक्तं यत्र नाम तिष्ठतीत्यर्थः, तेनान्यत्र न्यूनं नाम तिष्ठतीत्यर्थो गम्यते, किं सिद्धं भवति? 'उपेयुषः' इत्यादौ सम्प्रसारणे कृते पूर्वकृतस्येटो निवृत्तिः सिद्धा भवति; अन्यथा निवृत्तिकारणाभावात् अवतिष्ठेतेति। एवं तु कस्मिन् प्रातिपदिके किं न्यूनमिति न ज्ञायेत! तस्मात्पूर्वाचार्यानुपालम्भुमेषा महती संज्ञा प्रणीता॥

### न्यासः

संज्ञा न भवतीति। अज्ञाताद्यर्थविवक्षायामुपाग्निकमित्यत्राकज् न भवति, क एव तु भवति। इह च उपकुम्भमात्मानं मन्यत उपकुम्भम्मन्यः, 'आत्ममाने खश्च' इति खशि कृते 'खित्यनव्ययस्य' इत्यनुवर्त्तमाने 'अरुर्द्विषदजन्तस्य मुम्' इति मुमः प्रतिषेधो न भवति। इह चेत्यादिना 'अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः' इति यद्वक्ष्यति तस्यात्रावक्तव्यतां दर्शयति। सूर्यस्येत्यत्र 'कर्तृकर्मणोः कृति' इति षष्ठी।

शि सर्वनामस्थानम् ॥ कुण्डानीत्यादि। जश्शसोः शिः' इति शिः, तस्य सर्वनामस्थानत्वे सति 'नपुंसकस्य झलचः' इति नुम् भवति, 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घत्वञ्च। सर्वनामस्थानमिति। पूर्वाचार्यैरेवेयं प्रयोजनमन्तरेणापि महती संज्ञा प्रणीता। तस्या इह यत् समाश्रयणम् तत् तत्कृतस्य शब्दानुशासनस्य दोषवत्त्वसूचनार्थम्। तत् पुनः स्वशास्त्रस्य पुनरुक्ततादोषपरिहारार्थम्। यदि हि तद्दोषवद्भवत्येवमस्य प्रणयनं युज्यते, नान्यथा।

## सुडनपुंसकस्य ॥ ४३ ॥

'सुट्' इति पञ्च वचनानि सर्वनामस्थानसंज्ञानि भवन्ति नपुंसका-दन्यत्र । नपुंसके न विधिर्न प्रतिषेधः, तेन जसंशे सर्वनामस्थानसंज्ञा पूर्वेण भवत्येव । राजा, राजानौ, राजानः; राजानम्, राजानौ ।

### पदमञ्जरी

*सुडनपुंसकस्य* ॥ *सुडिति पञ्च वचनानीति* । अनेनौटष्टकारेण प्रत्याहारः, न टाशब्दस्येति दर्शयति । आदिरन्त्येनेत्यत्रान्त्यत्वप्रयुक्ता यस्येत्संज्ञा तेन प्रत्याहारः । लकारे त्वकारस्येत्संज्ञाविधानसामर्थ्यात् प्रत्याहार इति भावः । *नपुंसका-दन्यत्रेति* । अनेन पर्युदासतां दर्शयति । प्रसज्यप्रतिषेधे हि कुण्डानि तिष्ठन्तीति जसः शौ, पूर्वेण या प्राप्तिस्तस्या अपि प्रतिषेधशङ्कायाम् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति परिहर्त्तव्यं स्याद्, असमर्थसमासश्चाश्रयणीयः स्यात् । *नपुंसके न विधिरिति* । स्त्रीपुंससम्बन्धिनः सुट उपादानाद् । *न प्रतिषेध इति* । विधिप्रधानत्वात् पर्युदासस्य । *तेनेत्यादि* । यत एवं नपुंसकेनास्य व्यापारः, तेन

### न्यासः

सुडनपुंसकस्य ॥ सुडिति प्रत्याहारग्रहणम्—सुशब्दादारभ्य आ औटष्टकाराद् । तत्र पञ्चैव वचनान्यन्तर्भवन्तीत्याह—सुडिति पञ्च वचनानीत्यादि । नपुंसकादन्य-त्रेत्यादि । अनेनानपुंसकशब्दस्य पर्युदासतां दर्शयति । प्रसज्यप्रतिषेधे हि प्रतिषेध-प्रधानमिदं वाक्यं स्यात्—नपुंसकस्य न भवतीति । ततश्च यावती काचित् सुटः सर्व-नामस्थानसंज्ञाप्राप्तिः, तस्याः सर्वस्याः प्रतिषेधः स्यात् । एवं हि कुण्डानि तिष्ठन्तीत्यत्र पूर्वेणापि संज्ञा न स्यात् । तस्यास्तु शसः शिरादेशोऽवकाशः । यद्यपि 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्येतत्समाश्रयेण प्रसज्यप्रतिषेधेऽप्येष दोषः शक्यते परिहर्तुम्, तथापि प्रतिपत्तिगौरवदोषः स्यात् । तथा हि—विधिप्रतिषेधयोर्विरोधा-देकेन वाक्येन तावच्छक्यो न विधातुमिति वाक्यभेदः कर्त्तव्यः—'सुट् सर्वनाम-स्थानसंज्ञो भवति । नपुंसकस्य च न भवति' इति । ततश्चासम्बद्धं प्रतिषेधवचनमिति पूर्वस्या अपि प्राप्तेरयं प्रतिषेधः सम्भाव्येत । ततस्तत्परिहारेणाभीष्टार्थप्रतिपत्तौ साध्यायां नियतभावी गौरवदोषः प्रसज्येत । तस्मात् सुखावबोधार्थं पर्युदास एवा-श्रितः । नपुंसके न विधिरिति । स्त्रीपुंससम्बन्धिनः सुट उपादानात् । न प्रतिषेध इति । विधिप्रधानत्वात् पर्युदासस्य । एतेन नपुंसकेऽस्य योगस्याव्यापारं दर्शयति । तेनेत्यादि । यत एवं नपुंसके नास्य विधौ प्रतिषेधे वा व्यापारः, तेन जसो यः शिरादेशस्तस्य तेन पूर्वयोगेन संज्ञा भवत्येव; अप्रतिषिद्धत्वात् । राजेति । पूर्व-

सुडिति किम् ? राज्ञः पश्य । अनपुंसकस्येति किम् ? सामनी, वेमनी ॥

## न-वेति विभाषा ॥ ४४ ॥

नेति प्रतिषेधः, वेति विकल्पः, तयोः प्रतिषेधविकल्पयोर्विभाषेति संज्ञा भवति । इतिकरणोऽर्थनिर्देशार्थः । विभाषाप्रदेशेषु प्रतिषेध-

पदमञ्जरी

जसो यः शिस्तस्य पूर्वेण संज्ञा भवतीति । *सामनी इति* । नपुंसकाच्चेति शीभावः । 'विभाषा ङिश्योः' इत्यल्लोपाभावे दीर्घो न भवति ॥

*न-वेति विभाषा* ॥ नवाशब्दोऽयमेकनिपातोऽप्यस्ति प्रतिषेधवाची, नवोक्तार्थत्वादिति यथा, तस्य ग्रहणे 'विभाषादिक्समासे' इति प्रकृते 'न बहुव्रीहौ' इति प्रतिषेधोऽनर्थकः स्याद् । विभाषाप्रदेशेषु च नशब्द एवोपादेयः स्याद् । अत एव संख्यावाचिनो नकारान्तस्याप्यग्रहणम् । प्रत्यग्रस्त्रीलिङ्गवचनोऽपि न गृह्यते; प्रदेशेष्वसम्भवात् । न हि 'विभाषा श्वेः' इत्यादौ विधेयस्य नवपुराणत्वं स्त्रीलिङ्गता वा सम्भवति । तस्मान्निपातसमुदायोऽयमित्याह—*नेति* । *प्रतिषेध इत्यादि* । तयोः प्रतिषेधविकल्पयोरित्यनेनार्थयोरेषा संज्ञेति दर्शितम् । ननु च 'स्वं रूपं शब्दस्य' इति वचनान्नवाशब्दयोरेव ग्रहणं युक्तम्, तत्राह—*इतिकरण इत्यादि* । कर्मणि

न्यासः

वद्दीर्घः । हल्ङ्यादिलोपः । सामनी, वेमनी इति । 'नपुंसकाच्च' इति औङः शीभावः । तत्र संज्ञाया अभावाद्दीर्घत्वं न भवति ।

न-वेति विभाषा ॥ नवेति शब्दोऽयमेको निपातोऽप्यस्ति प्रतिषेधवाची, यथा— 'नवा वक्तव्यं भुक्तार्थत्वात्' इत्यादौ भाष्यवाक्ये । तस्येह यदि ग्रहणं स्याद् 'विभाषा दिक्समासे बहुव्रीहौ' इत्युक्त्वा 'न बहुव्रीहौ' इत्यत्र तु पुनः प्रतिषेधोपादानमनर्थकं स्यात् । तस्मान्न निपातसमुदायोऽयमिति दर्शयन्नाह—नेति प्रतिषेध इत्यादि । ननु चान्यत्र संज्ञासंज्ञिसम्बन्धप्रक्रियाया हि शास्त्रे शब्दस्यैव ग्रहणं प्रसिद्धम्, यथा— 'तरप्तमपौ घः' 'दाधा घ्वदाप्' इति, तथेहापि नवाशब्दयोरेव ग्रहणं युक्तम् । तत् कथं तदर्थयोः संज्ञा लभ्यत इत्याह—इतिकरण इत्यादि । क्रियत इति करणः, इतिश्चासौ करणश्चेतीतिकरणः, सोऽर्थस्य संज्ञिनो निर्देशो यथा स्यादित्येवमर्थः । इतिशब्दो हि विपर्यासकृत् । यथा गवित्यर्थमाहेति गोशब्दात् परतः प्रयुज्यमान इतिशब्दस्तमर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति, तथा 'नवा' शब्दाभ्यां परः इतिशब्दः प्रयुज्यमानः, तौ स्वरूपपदार्थकत्वात् प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति । तस्मादर्थनिर्देशार्थ एवेतिशब्दः कृत इति नवेति यावर्थौ प्रतीयेते प्रति-

विकल्पावुपतिष्ठेते । तत्र प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तते । उभयत्रविभाषाः प्रयोजयन्ति । विभाषा श्वेः—शुशाव, शिश्वाय; शुशुवतुः, शिश्वियतुः ।

## पदमञ्जरी

ल्युट्, इतिश्चासौ करणश्च सोऽर्थस्य संज्ञिनो निर्देशो यथा स्यादित्येवमर्थः । इतिशब्दो हि पदार्थविपर्यासकृत् । तत्र लोके बाह्यार्थप्रधानेषु शब्देष्वितिशब्दः प्रयुक्तः, अर्थपदार्थकत्वात् प्रच्याव्य शब्दपदार्थकत्वे व्यवस्थापयति गौरित्ययमाहेति । इह तु व्याकरणे 'स्वं रूपम्' इति वचनात् स्वरूपपदार्थः । ततश्च नवाशब्दाभ्यां परत्र प्रयुक्त इतिशब्दस्तौ स्वरूपपदार्थकत्वात्प्रच्याव्यार्थपदार्थकत्वे व्यवस्थापयति । तस्मादर्थयोरेव संज्ञा ।

*विभाषाप्रदेशेषु* इत्यादिना प्रतिषेधविकल्पयोरेकस्मिन्नेव योगे सहोपस्थापनं विषयभेदेनेति तं दर्शयति । तथा सति विषयभेदो दुर्ज्ञानः स्यादिति भावः । तत्रेत्यादिना पूर्वं प्रतिषेधः प्रवर्तते, पश्चाद्विकल्प इति दर्शयति । यदि तु पूर्वं विकल्पः प्रवर्तेत पश्चात्प्रतिषेधः, ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च संज्ञाविधिवाक्ये श्रुतैव प्रदेशवाक्येष्वप्याश्रयितुं युक्ता । *उभयत्रविभाषाः प्रयोजयन्तीति* । प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात् । तथा हि—प्राप्तविभाषायां तावद् 'विभाषोपपदेन प्रतीयमाने' इति 'स्वरितञितः' इत्यादिना नित्यमात्मनेपदे प्राप्ते विभाषा विधीयते । विभाषाशब्दश्चायं 'वा' 'अन्यतरस्याम्' इत्यादिवद्विकल्पवाचित्वेन प्रसिद्धः । तेन भावाभावयोः प्रतिपादितयोर्भावांशस्य प्राप्तत्वादभावांशपरता विज्ञायते, भावांशः स्थित एव । अप्राप्तविभाषायामपि 'विभाषोर्णोः' इत्यभावांशस्य प्राप्तत्वाद् भावांशपरता विज्ञायते । 'विभाषा श्वेः' इत्यत्र तु यदि विधिमुखेन विभाषा श्रुतिः प्रवर्तते, कित्स्वेव

## न्यासः

षेधविकल्पौ, तयोरेवेयं संज्ञा भवति; न नवाशब्दयोः । तत्र प्रतिषेधेनेत्यादिना प्रतिषेधविकल्पयोः प्रवृत्तिक्रमं व्यापारभेदञ्च दर्शयति । समीकृत इति । तुल्यतामापादिते । विकल्पः प्रवर्त्तत इति । पक्षे कार्यसम्पादनाय । ननु च वाशब्द एव विकल्पार्थत्वेन लोके प्रसिद्धः, प्रदेशेष्वयमुपादीयमानो विकल्पेन कार्यं सम्पादयिष्यति । तथा हि प्राप्ते वा कार्ये विकल्पः क्रियताम् ? अप्राप्ते वा ?, यदि प्राप्ते ? तत्र प्राप्तिरस्त्येवेति प्रतिषेध एव पक्षे कर्त्तव्यः । अथाप्राप्ते ? तत्र प्राप्तिपूर्वकत्वात् प्रतिषेधस्य तामन्तरेण स न प्रयुज्यत इति विधिरेव पक्षे कर्त्तव्यः, न प्रतिषेधः । एतच्चोभयं वाशब्द एव शक्तः प्रयुज्यमानः संपादयितुम् । तत् किमर्थमियं संज्ञा क्रियत इत्याह—उभयत्रविभाषा प्रयोजयन्तीति । प्रकृतत्वात् संज्ञामिति गम्यते । 'विभाषा श्वेः' इत्यत्र प्रतिषेधमुखेन

विभाषाप्रदेशाः—'विभाषा श्वेः' इत्येवमादयः ॥

## इग्यणः सम्प्रसारणम् ॥ ४५ ॥

पदमञ्जरी

संप्रसारणं विभाषा स्यात्, कित्सु तु यजादित्वान्नित्यमेव स्यात्। अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्पः स्यान्न पित्सु। न च शक्यं वक्तुम्—पित्सु विधिमुखेन प्रवर्त्तते, कित्सु प्रतिषेधमुखेनेति; एकत्वाद्वाक्यस्य तस्य चान्यतरविकल्प एवोपक्षीणत्वात्। संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते किदकिदाख्यो लिट् सर्व एव समीकृतो भवति; सर्वस्यासम्प्रसारणनिमित्तत्वात्। ततो विकल्पः सर्वत्र विधिमुखेन पक्षे सम्प्रसारणं सम्पादयति। एतच्च—'आकृतौ पदार्थे समुदाये सकृल्लक्षणं प्रवर्तते' इति दर्शने प्रयोजनम्। यदा तु प्रतिलक्ष्यं 'विभाषा श्वेः' इत्यस्य व्यापारः, तदा क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन प्रवर्तत इति संज्ञाकरणमन्तरेणापीष्टं सिद्ध्यति। तथा च 'हृक्रोरन्यतरस्याम्' इत्यादावन्यतरस्यांग्रहणे वा ग्रहणे चोभयत्रविभाषास्विष्टसिद्धिः। सूत्रारम्भे तु संज्ञाप्यर्थः, विभाषेत्यर्थः। संज्ञा नवार्थयोरिति व्याख्येयम्। *शुशावेति*। श्वयतेर्लिटि तिपो णलि सम्प्रसारणे वृद्ध्यावादेशौ ॥

*इग्यणः सम्प्रसारणम्* ॥ *यणः स्थान इति*। कथं पुनरनुवादे स्थानसम्बन्धो

न्यासः

वाशब्दस्य प्रवृत्तिः स्यात्? विधिमुखेन वा? तत्र यदि प्रतिषेधमुखेन वा न भवतीत्येवं प्रवृत्तिः? प्राप्तिपूर्वकत्वात् प्रतिषेधस्य यत्र प्राप्तिः स एव तस्य विषय इति कित्स्वेव विकल्पेन प्रतिषेधायेदं प्रवर्तते। तत्र 'वचिस्वपि' इत्यादिना श्वयतेः संप्रसारणस्य विहितत्वात्, न पित्सु; तत्र तस्य न केनचिद्विहितत्वात्। एकत्वाच्चास्य वाक्यस्य कित्सु च प्रतिषेधसंपादन एव चरितार्थत्वात् नोपपद्यते पुनर्विधिमुखेन प्रवृत्तिः। अथ विधिमुखेन वा भवतीत्येवं प्रवृत्तिः स्यात्? यत्र प्राप्तिर्नास्ति स एव विधिविषय इति पित्स्वेव विकल्पेन विध्यर्थः प्रवर्त्तते; तत्र चरितार्थत्वात्, न कित्सु। संज्ञाविधाने तु न दोषः, तस्यां हि सत्यां प्रतिषेधः प्रवर्त्तमानो योऽसौ संप्रसारणनिमित्तानिमित्तभेदाद्द्विषय आसीत् तं समीकरोति। सर्वस्याः संप्रसारणनिमित्ततया तुल्यतामापादयति। तस्मिन् समीकृते किति च पिति च विकल्पः प्रवर्त्तमानो विधिमुखेन सर्वत्र पाक्षिकं कार्यं सम्पादयति, संप्रसारणं पक्षे भवतीति। अप्राप्तिस्तु पक्षे स्थितैवेति सर्वमिष्टं सिध्यति। तस्मादुभयत्र प्राप्तावप्राप्तौ विभाषार्थमियं संज्ञा विधीयते। शुशावेति। 'टुओश्वि गतिवृद्ध्योः', लिट्, णल्, संप्रसारणे कृते वृद्ध्यावादेशौ। शुशुवतुः, शिश्वियतुरिति। 'अचि श्नुधातु' इत्यादिना इयङुवङौ।

इग्यो यणः स्थाने भूतो भावी वा तस्य 'संप्रसारणम्' इत्येषा संज्ञा भवति। यज्—इष्टम्। वप्—उप्तम्। ग्रह—गृहीतम्।

केचिदुभयथा सूत्रमिदं व्याचक्षते—वाक्यार्थः सञ्ज्ञी, वर्णश्चेति। इग्यण इति यो वाक्यार्थः स्थान्यादेशसंबन्धलक्षणः स संप्रसारणसंज्ञो

पदमञ्जरी

लभ्यते ? 'षष्ठी स्थानेयोगा' इत्यत्राधिकारात्। *भूत इति*। कार्यान्तरार्थमनूद्यमानो भूतः, विधेयस्तु भावी, तत्र च संज्ञिनो भावित्वात् संज्ञापि भाविन्येव। यथा—अस्य सूत्रस्य शाटकं वयेति। 'वचिस्वपियजादीनां किति' तद्भवति यस्य भूतस्य सम्प्रसारणसंज्ञा भवतीति। *इष्टम्, उप्तमिति*। 'वचिस्वपि' इत्यादिना सम्प्रसारणम्। *गृहीतमिति*। 'ग्रहिज्या' इत्यादिना। 'ग्रहोऽलिटि दीर्घः'।

*केचिदित्यादि*। एवंवदतां भाविनी संज्ञा नाश्रयणीया, स्थानेयोगश्च लभ्यते। 'इग्यणः' इत्यत्र भवतीत्यध्याहारात्पूर्वसूत्राच्चेतिकरणानुवृत्तेर्यणः स्थाने इग्भवतीति योऽयं वाक्यार्थ इत्यर्थो लभ्यते। कथं पुनरर्थद्वयमेकस्य सूत्रस्य भवति ? तन्त्रेण,

न्यासः

इग् यणः संप्रसारणम्॥ भूत इति। यत्र शास्त्रान्तरेण विहितो भूतविभक्त्या कार्यान्तरार्थमनूद्यते, यथा—'संप्रसारणस्य' 'संप्रसारणाच्च' इति, तत्र भूतः। भावी वेति। यत्र भाव्यमानविभक्त्या विधानार्थं निर्दिश्यते, यथा—'ष्यङः संप्रसारणम्' 'वसोः संप्रसारणम्' इति, तत्र भावी। अत्र हि ष्यङ्स्थानिको वसुस्थानिकश्चेङ् नास्ति यस्य संज्ञा विधेया, तस्माद् भाविनः संज्ञित्वं विज्ञायते। संज्ञिनो भावित्वात् संज्ञापि भाविन्येव, यथा—अस्य सूत्रस्य शाटकं वयेति। स इग् यणः स्थाने भवति, यस्य भूतस्य संप्रसारणमित्येषा संज्ञा भवतीति। इष्टम्। उप्तमिति। 'वचिस्वपियजादीनां किति' इति संप्रसारणम्। गृहीतम् इत्यत्रापि 'ग्रहिज्यावयि' इत्यादिना संप्रसारणम्। 'ग्रहोऽलिटि दीर्घः'। केचिदित्यादिना ये भाविनीं संज्ञां नाश्रयन्ति तन्मतं दर्शयति। कथं पुनरेकस्य सूत्रस्यैतदर्थद्वयमेकेन वाक्येन लभ्यते ? तन्त्रेण, आवृत्त्या वा। ननु च संज्ञाविधौ शब्दस्यैव ग्रहणं प्रसिद्धमित्युक्तम्, ततो युक्तं वर्णस्यैव संज्ञित्वम्, अर्थस्य तु कथम् ? यथा 'नवेति विभाषा' इति सूत्र इति चेत् ? न युक्तम्; तत्रेतिकरणस्यार्थनिर्देशार्थस्य प्रयोगात्, इह तु स नास्तीत्ययुक्तम्। इहापि तन्त्रस्यावृत्तेर्वा न्यायस्याश्रितत्वाद् युक्तमेव। अस्य च सूत्रार्थद्वयस्य विभक्तिविशेषनिर्देशो लिङ्गम्। यदयं 'ष्यङः संप्रसारणम्' इत्यादौ विधिवाक्ये भाव्यमानविभक्त्या निर्देशं करोति ततो ज्ञायते—वाक्यार्थः संज्ञीति। यतश्च 'संप्रसारणस्य' इत्यादौ भूतविभक्त्या निर्देशं करोति ततोऽवसीयते—वर्ण इति। तस्माद् युक्तं वाक्यार्थस्यापि संज्ञित्वम्। किंरूपोऽसौ वाक्यार्थः ? इत्याह—स्थान्यादेश इत्यादि। तत्रेत्यादिना अनन्तरयोः सूत्रार्थयोर्विषय-

भवति; यण्स्थानिक इग्वर्णः स संप्रसारणसंज्ञो भवतीति । तत्र विधौ वाक्यार्थं उपतिष्ठते—'ष्यङः संप्रसारणम्', 'वसोः संप्रसारणम्' इति । अनुवादे वर्णः—'संप्रसारणाच्च' इति । संख्यातानुदेशादिह न भवति—अदुहितरामिति ।

संप्रसारणप्रदेशाः—'वसोः संप्रसारणम्' इत्येवमादयः ॥

**पदमञ्जरी**

आवृत्त्या वा । अस्य च लिङ्गं विभक्तिविशेषनिर्देशः । यदयं 'ष्यङः सम्प्रसारणम्' इत्यादौ भाव्यमानविभक्त्या निर्देशं करोति, ततो ज्ञापयति—वाक्यार्थः संज्ञेति । न हि तत्र वर्णस्य सम्भवः । 'सम्प्रसारणस्य' इत्यादौ तु भूतविभक्त्या निर्देशात् ज्ञायते—वर्णः संज्ञीति ! न हि तत्र वाक्यार्थः सम्भवति । *तत्रे*त्यादिना द्वयोरर्थयोर्विषयविभागेनोपस्थानं दर्शयति । *अदुहितरामिति* । दुहेर्लङि कर्मकर्त्तरि उत्तमैकवचने इटि 'न दुहस्नुनमाम्' इति यकि प्रतिषिद्धे शब्लुकि अदुहि इति स्थिते 'तिङश्च' इति तरपि 'किमेत्तिङव्ययघाद्' इत्याम् । तत्र लकारस्य यणः स्थाने इड्विहित इति संप्रसारणसंज्ञायाम् 'हलः' इति दीर्घत्वं प्राप्नोतीति चोद्यमपाकरोति । *सङ्ख्यातानुदेशादिति* । तरप उपन्यासोऽङ्गसंज्ञार्थः । सङ्ख्यासाम्यात् संख्यातानुदेशे सति यकारस्थानिकस्येकारस्य संज्ञया भाव्यम्, अयं तु लकारस्थानिकः । द्युभ्यामित्यत्र 'दिव उत्' इत्युत्वे यणादेशे 'हलः' इति दीर्घत्वं प्राप्तं तपरकरणान्न भवति । अक्षद्यूः, अक्षद्युवौ, अक्षद्युव इत्यादावूठः संप्रसारणसंज्ञायाम् 'संप्रसारणाच्च' इति पूर्वरूपत्वं प्राप्तम् 'वार्णादाङ्गं बलीयः' इति उवङा बाध्यते ॥

**न्यासः**

विभागं दर्शयति—विधौ वर्णो न सम्भवतीति । 'ष्यङः संप्रसारणम्' इत्यादौ विधिवाक्ये प्रथमः सूत्रार्थ उपतिष्ठते । अनुवादे तु 'संप्रसारणस्य' इत्यादौ विहितत्वाद्विधेयस्य प्रथमोऽकिञ्चित्कर इति द्वितीयः । अदुहितरामिति । अत्र यणः स्थानिकत्वादिकः संप्रसारणसंज्ञया भाव्यम् । तस्याञ्च सत्याम् 'हलः' इति दीर्घत्वं प्रसज्येतेति चोद्यमपाकर्तुमाह—संख्यातानुदेशादित्यादि । इह स्थानिनो यणश्चत्वारः, इकोऽप्यादेशाश्चत्वार एव, तेन संख्यातानुदेशेन भवितव्यम् 'यथासंख्यमनुदेशः' इत्यादिना । ततश्च यकारस्य स्थाने य इवर्णस्तस्यैव संप्रसारणसंज्ञा भवति । न चेह यकारस्य स्थान इवर्णः । किं तर्हि ? लकारस्य । तद् कुतस्तस्याः प्रसङ्गः ? 'दुह प्रपूरणे', लङ्, 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशो कर्मकर्तर्यात्मनेपदम्, इट् । 'न दुहस्नुनमां यक्चिणौ' इति यकि प्रतिषिद्धे शप् । तस्यादादित्वाल्लुक् । अदुहि इति स्थिते 'तिङश्च' इति तरप् । 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् । तरप इहोपन्यासोऽङ्गसंज्ञार्थः ।

## आद्यन्तौ टकितौ ॥ ४६ ॥

आदिष्टिद्भवति, अन्तः किद्भवति षष्ठीनिर्दिष्टस्य । लविता, मुण्डो भीषयते ।

### पदमञ्जरी

*आद्यन्तौ टकितौ* ॥ अत्र द्वौ पक्षौ सम्भवतः–संज्ञा स्यात्, परिभाषा वेति । तत्र संज्ञापक्षेऽयमर्थः–टकिताविति कर्मधारयः, इत्संज्ञकौ टकारककारौ आद्यन्तयोः संज्ञेति । तत्रेडित्यत्राद्यर्थेन टकारेण बहुव्रीहौ इकारादिः शब्दो गृहीत आदेशो विधीयमानस्तव्यस्य स्थानेऽन्तरतम इतव्यो भवतीति सिद्धमिष्टम् । एवं षुक्यन्तवचनेन ककारेण बहुव्रीहौ षकारान्तो गृहीत आदेशो भियो भीष् भवतीति सिद्धम् ।

नन्वस्मिन्पक्षे संज्ञा संज्ञिप्रत्यायनार्था, संज्ञिनं प्रत्याय्य स्वयमेव निवर्तिष्यत इति किमिद्ग्रहणेन, टकावित्येवास्तु ? उच्यते; इत्संज्ञकत्वेन देशविशेषो लक्ष्यते, तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति आलजाटचौ 'ठस्येकः' इत्यादौ टकौ संज्ञे न भवतः । अस्मिन्पक्षे दोषः, 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडित्यकारादेरादेशस्य विधानात्तस्यैवोदात्तत्वमलोऽन्त्यस्य स्याद्, नाकारस्य ? नैष दोषः; 'अडुदात्तः' इति त्रिपदो बहुव्रीहिः–उदात्तोऽकार आदिरस्येति । विशेषणस्याप्युदात्तस्य सौत्रः परनिपातः । एवमपि—'आडजादीनाम्' इत्यत्रोदात्तग्रहणमेवानुवर्त्तत इति बहुव्रीहेरसम्भवाद्दोषः, तस्मात्परिभाषापक्षमाश्रित्याह–*आदिष्टिद्भवतीति* । परेण परिभाषाप्रकरणेन साहचर्यादिति भावः । यद्वा—'षष्ठी स्थानेयोगा' इत्यत्रेदमनुवर्त्यम्, अत एवाह–*षष्ठीनिर्दिष्टस्येति* । तेन 'चरेष्टः', 'आतोऽनुपसर्गे कः' इत्यादयः प्रत्यया आद्यन्तभूता न भवन्ति । एवमपि 'गापोष्टक्',

### न्यासः

आद्यन्तौ टकितौ ॥ 'षष्ठी स्थानेयोगा' इत्यस्याः परिभाषाया अयमपवादः । तेन तत्सम्बन्धादस्यापि परिभाषात्वं विज्ञायते । यदि तर्ह्यादिष्टिद् भवत्यन्तः किद्भवति, तदा 'चरेष्टः' 'आतोऽनुपसर्गे कः' इत्यादयोऽपि प्रत्यया आद्यन्तभूताः स्युः । न च टितः प्रत्ययस्यादित्वं 'टिड्ढाणञ्' इति टितो विधीयमानो ङीप् निरवकाश इत्याशङ्कनीयम् । यत्र हि प्रकृतेरेव सिद्धं टित्त्वं न प्रत्ययस्य, तदङ् भवडित्येवमादौ, स तस्यावकाशो भविष्यतीति । टितश्च प्रत्ययस्यादित्वे सति कुरुचर इत्येवमादिरूपमेव न सिध्येत । कितस्त्वन्तत्वे आभ्योः, विध्योरित्यत्र 'उपसर्गे घोः किः' इति किप्रत्ययस्य प्रकृत्यन्तःपातित्वाद्धातुग्रहणेन ग्रहणे सति 'उदात्तयणो हल्पूर्वात्' इत्येष स्वरो न स्यात् । 'नोङ्धात्वोः' इति प्रतिषेधादित्यत आह—षष्ठीनिर्दिष्टस्येति । ननु च नेह षष्ठी श्रूयते, नापि प्रकृता, तत् कथमेतन्निर्दिष्टं लभ्यते ? वक्ष्यमाणस्य षष्ठीग्रहणस्य सिंहाव-

टित्प्रदेशाः—'आर्धधातुकस्येड्वलादेः' इत्येवमादयः ।
कित्प्रदेशाः—'भियो हेतुभये षुक्' इत्येवमादयः ॥

## मिदचोऽन्त्यात्परः ॥ ४७ ॥

'अचः' इति निर्धारणे षष्ठी । जातौ चेदमेकवचनम् । अचां

### पदमञ्जरी

'व्रीहिशाल्योर्ढक्' इत्यत्र प्रसङ्गः, तत्र टकष्टित्त्वकित्त्वयोगे परत्वादन्त्यः स्यात्, नैष दोषः; 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते न परान्' इति । एवमयं स्थानेयोगं बाधते, न प्रत्ययपरत्वम् । *भीषयत इति* । 'ञिभी भये' णिच् । 'भियो हेतुभये षुक्' 'भीस्म्योर्हेतुभये' ॥

*मिदचोऽन्त्यात् परः* ॥ 'अचः' इति निर्धारणे षष्ठी, जातावेकवचनमित्याह—*अचामित्यादि* । अत्रापि जातौ बहुवचनम् । यदि पुनरन्त्यादित्यनया समानाधिकरणा पञ्चमी स्यात्, ततो हलन्तेष्वस्याः प्रवृत्तिर्न स्यात् । ततश्च 'नपुंसकस्य झलचः' इति नुमिहैवान्त्यात्परः स्यात् कुण्डानीति, यशांसीत्यत्र त्वलोऽन्त्यस्य स्यात्; एवं 'शे मुचादीनाम्' इत्यादौ । ततश्च तेषु मित्त्वमनर्थकं स्यादिति भावः ।

### न्यासः

लौकिकन्यायेनोपस्थानात् । नन्वेवमपि 'गापोष्टक्' 'व्रीहिशाल्योर्ढक्' इत्येतावाद्यन्तौ प्राप्नुतः, नैष दोषः, 'पुरस्तादपवादा अनन्तरान् विधीन बाधन्ते नोत्तरान्' इति स्थानेयोगत्वस्यैवायमपवादो भविष्यति, न प्रत्ययपरत्वस्य । अपर आह—आद्यन्तावयवौ, अवयवश्चावयविनमन्तरेण न सम्भवतीत्यवयविनमाक्षिप्य तौ वर्तेते । ततश्चावयवावयविसम्बन्धे यस्यादिरन्तो वावयवो विधीयते, सोऽवयवी षष्ठ्या निर्देष्टव्य इति सामर्थ्यादवयवषष्ठ्या निर्दिष्टस्येति विज्ञायते । न चैवम् । 'गापोष्टक्' 'व्रीहिशाल्योर्ढक्' इत्येतौ प्रत्ययावाद्यन्तौ प्राप्नुतः, यस्मादिह सामर्थ्यादवयवसम्बन्धे या षष्ठी तया निर्दिष्टस्येत्येषोऽर्थ उपजातः । न च 'गापोष्टक्' इत्यादौ प्रकृतयोऽवयवषष्ठ्या निर्दिष्टाः, किं तर्हि ? सुपां सुपो भवन्तीति पञ्चम्यर्थे या षष्ठी तयेति । भीषयत इति । 'ञिभी भये', हेतुमण्णिच्, 'भियो हेतुभये षुक्' 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् ।

मिदचोऽन्त्यात् परः ॥ अत्र यदि 'अचः' इत्येषा पञ्चमी स्यात्, अन्त्यादित्यनया पञ्चम्या समानाधिकरणत्वं स्यात् । ततः 'नपुंसकस्य झलचः' इति नुमिहैवान्त्यादचः परः स्यात्—कुण्डानीति, अस्ति ह्यत्र नपुंसकस्यान्त्योऽच्; पयांसीत्यत्र तु न स्यात्, 'अलोऽन्त्यस्य' इति सकारस्यैव तु स्थाने स्यात् । न ह्यत्राजन्त्यः, किं तर्हि ? सकारः । तस्मान्निर्धारणे षष्ठीयमिति दर्शयन्नाह—अचामित्यादि । जातौ बहुवचनम् । सूत्रेऽप्यच इत्येकवचनं जातावेव । यदि तर्हि निर्धारणषष्ठीयम्, अन्त्यस्याविशेषितत्वादविशेषेण

संनिविष्टानामन्त्यादचः परो मिद्भवति । स्थानेयोगप्रत्ययपरत्वस्यायमपवादः । विरुणद्धि, मुञ्चति, पयांसि ।

मित्प्रदेशाः—'रुधादिभ्यः श्नम्' इत्येवमादयः ।

### पदमञ्जरी

समानजातीयस्यैव निर्द्धारणं भवतीत्यन्त्योऽप्यजेव विज्ञायत इत्याह—*अन्त्यादचः पर इति*। पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यैवायमपवादो युक्त इत्याशङ्कयाह—*स्थानेयोगप्रत्ययपरत्वस्यापवाद इति*। स्थानेयोगश्च प्रत्ययपरत्वं चेति समाहारे द्वन्द्वः। 'तृणहः' इति निर्देशात् श्नमो मकारो न श्रवणार्थः, अतो मित्करणसामर्थ्यात् प्रत्ययपरत्वस्याप्ययमपवादो युक्त इति भावः । *मस्जेरित्यादि*। 'मस्जिनशोर्झलि' इति नुम् यद्यन्त्यादचः परः स्यात् ततो निष्ठायां मन्स्ज इति स्थिते 'स्कोस्संयोगाद्योरन्ते च' इति सलोपो न स्यात्। बहूनां समुदाये समुदायस्यैका संयोगसंज्ञा न द्वयोर्द्वयोरित्यस्मिन् पक्षे सत्यपि वा सलोपे तस्यासिद्धत्वादनुपधानकार इति 'श्नान्नलोपः' इत्यनुषङ्गलोपो न स्यात्। नकारस्योपधायाः 'अनुषङ्गः' इति *पूर्वाचार्याणां* संज्ञा। तस्माज्जकारात्पूर्वो नुम् कर्त्तव्य इत्यर्थः।

### न्यासः

यतः कुतश्चिदन्त्यात् परो मित् स्यात् ; न हि द्वितीयमजग्रहणमस्ति, येनान्त्यो विशेष्यते, नैष दोषः; समानजातीयस्यैव हि लोके निर्धारणप्रतीतिर्भवति। तथा हि कृष्णा गवां सम्पन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते; नाजा, नाप्यश्वा। तस्मादिहाप्यचां मध्येऽन्त्यादचोऽवधेरित्यन्त्यत्वेन निर्धार्यमाणः समानजातीयोऽजेव प्रतीयते। तेनाच एवान्त्यात् परो भविष्यति। स्थानेयोगित्वप्रत्ययपरत्वापवादार्थश्चेदमारब्धम्। तत्र स्थानेयोगित्वापवादार्थम्—'शे मुचादीनाम्' नुम् भवति, मुञ्चति। 'नपुंसकस्य झलचः', पयांसि। प्रत्ययपरत्वापवादार्थम्—'रुधादिभ्यः श्नम्', रुणद्धि। ननु च 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति स्थानेयोगित्वस्यैवापवादो युज्यते, न तु प्रत्ययपरत्वस्य, नैतदस्ति; एवं हि श्नमो मित्करणमनवकाशत्वादनर्थकं स्यात्। श्रवणार्थत्वान्नानर्थकमिति चेत् ? न; 'तृणह इम्' इति निर्देशात्। श्रवणार्थे ह्येतस्मिन् 'तृणम् ह इम्' इति निर्देशः स्यात्। तस्मात् प्रत्ययपरत्वस्यापवादो युक्तः। यद्येवं 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति प्रकृत्यन्तःपातिनस्तद्ग्रहणेन ग्रहणादपरत्वाच्च श्नमः प्रत्ययसंज्ञा न स्यात्, तथा च 'लशक्वतद्धिते' इति प्रत्ययादेः शकारस्य विधीयमानेत्संज्ञा न स्यात्, नैष दोषः; प्रत्ययाधिकारे विधीयमानत्वात् प्रत्ययसंज्ञा भविष्यति—सत्यप्यपरत्वे, सत्यपि प्रकृत्यन्तःपातित्वे; यथा—बह्वजकच्चोरन्तोदात्तत्वम्। बहुपटवः, उच्चकैरित्यनयोरसति परत्वे सत्यां प्रत्ययसंज्ञायां 'चितः' इत्यन्तोदात्तत्वं भवत्येव।

*मस्जेरन्त्यात्पूर्वं नुममिच्छन्त्यनुषङ्गसंयोगादिलोपार्थम्* ॥
मग्नः, मग्नवान् । मङ्क्ता, मङ्क्तुम् ॥

## एच इग्घ्रस्वादेशे ॥ ४८ ॥

पदमञ्जरी

*मग्न इति* । 'ओदितश्च' इति निष्ठानत्वम्, तस्यासिद्धत्वात्कुत्वम् । अत्र 'आद्यन्तौ टकितौ' इत्यतः 'अन्त' इत्यनुवृत्तौ पूर्वस्य सङ्घातस्य मिदन्तावयवो भवति । 'आदि' इत्यनुवृत्तौ तत्र सन्निहितस्य परस्यादिर्भवति । अथोभयं निवृत्तं ततोऽभक्त इति त्रयः पक्षाः । तत्राभक्ते—ताता पिण्डानामिति नलोपो न स्यात् । तच्छन्दात् 'जश्शसोः शिः' तानि 'शेश्छन्दसि बहुलम्' इति शेर्लुक् । वहंलिहः, अभ्रंलिहः–'वहाभ्रे लिहः' इति खशि 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । अस्यापदान्तत्वादनुस्वारो न स्यात् । त्रपुणी इत्यत्र परत्वान्नित्यत्वाच्च नुमि कृते तेन व्यवधानादौङः शीभावो न स्यात् । अथ परादिः–त्रपुणे, 'घेर्ङिति' इति गुणः प्राप्नोति, अतिसखीनि–'सख्युरसम्बुद्धौ' इति णिद्वद्भावे 'अचो ञ्णिति' इति वृद्धिः प्राप्नोति । त्रपुणि, 'अच्च घेः', शुचीनि, 'नोपधायाः' इति दीर्घत्वं न प्राप्नोति । ताता पिण्डानामिति नलोपः, वहंलिह इत्यनुस्वारः । तस्मात्पूर्वान्त एवायं मिदेषितव्यः ॥

*एच इग्घ्रस्वादेशे* ॥ परिभाषेयं स्थानिनियमार्था । 'ह्रस्वो नपुंसके' इत्यादावुपतिष्ठते । इहैचां पूर्वो भागो मात्रात्मकः कण्ठ्योऽकारसदृशः । एदैतोरुत्तरस्ता-

न्यासः

**मस्जेरित्यादि** । नकारस्योपधाया 'अनुषङ्गः' इति पूर्वाचार्यैः संज्ञा कृता । 'टुमस्जो शुद्धौ' इत्यस्य 'मस्जिनशोर्झलि' इति नुमं वक्ष्यति । स च यद्यचोऽन्त्यात् परः स्यात् 'स्कोः संयोगाद्योः' इति सकारस्य 'अनिदिताम्' इति नकारस्य च लोपो न स्यात्, यथाक्रममनादित्वादनुपधत्वाच्च । तस्मादन्त्याज्जकारात् पूर्वो जकारसकारयोर्मध्ये नुम् कर्त्तव्यः । यथा चान्त्यात् पूर्वो लभ्यते, तथा सप्तमे वक्ष्यते । **मग्न इति** । 'ओदितश्च' इति निष्ठानत्वम्, तस्यासिद्धत्वात् 'चोः कुः' इति कुत्वं जकारस्य गकारः । **मङ्क्तेति** । अत्र पूर्ववद् गकारे कृते तस्य 'खरि च' इति चर्त्वं ककारः । 'नश्चापदान्तस्य झलि' इत्यनुस्वारः । 'अनुस्वारस्य ययि परसवर्णः' ङकारः । पूर्वभक्तश्चायं मिद् वेदितव्यः; अन्यथा 'वहाभ्रे लिहः' इति लिहः खशि कृते 'अरुर्द्विषदजन्तस्य' इति मुमि कृते वहंलिह इत्यत्र 'मोऽनुस्वारः' इति पदान्तस्य विधीयमानोऽनुस्वारो न स्यात्; अपदान्तत्वात् ।

**एच इग्घ्रस्वादेशे** ॥ परिभाषेयमादेशनियमार्था 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यादावुपतिष्ठते । इहेम एचोऽवयवसमाहारवर्णाः । तत्र 'ए, ऐ' इत्येतयोः पूर्वो भागो

एचो ह्रस्वादेशे कर्त्तव्य इगेव ह्रस्वो भवति, नान्यः। रै—अतिरि।

पदमञ्जरी

लव्य इकारसदृशः। ओदौतोरोष्ठ्य उकारसदृशः। एवमवयवसमाहारात्मनामेचां ह्रस्वशासनेषु समुदायान्तरतमस्याभावाद् अवयवान्तरतमो ह्रस्वो भवन् कदाचिदकारः स्यात्, कदाचिदिकारोकारौ; मा कदाचिदकारो भूदित्येवमर्थमिदमारभ्यते, तदाह—*इगेव ह्रस्वो भवतीति*। यदि त्वयं विधिः स्यात्, तदा ह्रस्वादेश इति विषयोपलक्षणमेतत्स्याद् —यस्मिन्विषय एचो ह्रस्वादेशप्रसङ्गस्तत्रेग्भवतीति। ततश्च दीर्घाणां स्थाने दीर्घा एवेकः स्युः, सवर्णग्रहणात्, नैष दोषः; 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' 'दिव उत्' इति तपरकरणाद् अमूभ्यामितिवत्; तथेचामिकां च साम्यात् संख्यातानुदेशोऽपि स्याद्, आदेशग्रहणं चानर्थकं स्यात्। तत आदेशग्रहणसामर्थ्याद् ह्रस्वादेशे ह्रस्वादेशनकाल इक्कर्त्तव्यः, ह्रस्वादेशं कुर्वन्निकं कुर्यादित्यर्थः। यद्वा—आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः। निर्द्धारणे सप्तमी, जातावेकवचनम्। आदिश्यमानेषु ह्रस्वेषु मध्ये इगेव ह्रस्वो भवतीति सर्वथा नियमरूपेणास्य प्रवृत्तिः। प्राप्तिपूर्वकश्च नियम इति ये प्राप्ता अन्तरतमास्तेष्वेव नियमः। न च ऋकारलृकारौ प्राप्ताविति कुतो यथासङ्ख्यम्? कुतो दीर्घप्रसङ्गः? एवं चेणित्येव सिद्धे इग्ग्रहणं परेण मा भूदिति। *अतिरि*।

न्यासः

वर्णसमानाकृतिः कण्ठ्यां मात्रात्मा, उत्तरस्त्विवर्णसमानाकृतिर्मात्रात्मैव तालव्यः। अत एव 'ए ऐ कण्ठ्यतालव्यौ' इति शिक्षाकाराः पठन्ति; तदवयवयोः कण्ठ्यतालव्यत्वात्। 'ओ औ' इत्येतयोः पूर्वो भागस्तादृश एव, यादृश एकारैकारयोः। उत्तरस्तूवर्णसमानाकृतिर्मात्रिक ओष्ठ्यः। अत एव 'ओ औ कण्ठ्योष्ठ्यौ' इति शिक्षाकाराः पठन्ति; तदवयवयोः कण्ठ्योष्ठ्यत्वात्। तत्र समुदायात्मनामेचां समुदायान्तरतमो ह्रस्वो न.स्तीति तदवयवस्य योऽन्तरतमः, तेनैव युक्तं भवितुम्। स पुनरकार इकार उकारो वा। तत्र एकारैकारयोर्ह्रस्वो विधीयमानः कदाचिदकारः स्यात्, कदाचिदिकारः। ओकारौकारयोरपि कदाचिदकारः स्यात्, कदाचिदुकारः। इकारोकारावेव यथायोगं यथा स्याताम्, कदाचिदप्यकारो मा भूदित्येवमर्थमिदमारभ्यते। अत्र यद्यप्येचामिकां साम्यम्, तथापि संख्यातानुदेशो न भवति; यस्मान्नेदं विधायकम्, किं तर्हि? नियामकम्। प्राप्तिपूर्वकश्च नियम इति ये प्राप्ता अन्तरतमा इक एचो ह्रस्वास्तेषामनेन नियमः क्रियते। न च प्राप्तावृकारलृकाराविति कुतो यथासंख्यत्वम्? यद्येवम्, इगिणत्येव वक्तव्यम्, न त्विगिति, सत्यमेतत्; किन्त्वेवमुच्यमाने संदेहः स्यात्—किं पूर्वेण णकारेण प्रत्याहारः? उत परेण? इति; तस्मादसन्देहार्थमिगित्युक्तम्। अतिरि।

नौ--अतिनु । गो--उपगु ।

एच इति किम्? अतिखट्वः, अतिमालः। ह्रस्वादेश इति किम् ? दे३वदत्त । देवद३त्त ॥

## षष्ठी स्थानेयोगा ॥ ४९ ॥

**पदमञ्जरी**

*अतिनु* । रायमतिक्रान्तं नावमतिक्रान्तं ब्राह्मणकुलमिति प्रादिसमासे नपुंसकह्रस्वत्वम् । *उपग्विति* । अव्ययीभावः । रैशब्दश्छन्दस्येवेति भाष्यम् । एकारस्याप्रसिद्धत्वादुदाहरणं न प्रदर्शितम् । हेशब्दमतिक्रान्तं ब्राह्मणकुलमतिहि । *अति खट्व इति* । उपसर्जनह्रस्वः । *दे३वदत्तेति* । आमन्त्रिताद्युदात्तत्वम् । देवद३त्त । 'गुरोरनृत' इत्यादिना प्लुतः ॥

*षष्ठी स्थानेयोगा* । *योगनियमार्थेति* । यद्यपि षष्ठी स्थानेयोगैवेत्यस्यां वचनव्यक्तौ यत एवकारस्ततोऽन्यत्रावधारणमिति षष्ठीनियमः श्रुत्या प्रतीयते तथापि स्थाननिमित्तक एव सम्बन्धः षष्ठ्या वाच्य इत्यर्थात्सम्बन्धनियमोऽपि भवतीति भावः । योगे वा नियमो योगनियमः । यदि योगनियमः क्रियते लोकेऽपि नियमः प्राप्नोति, अवयवषष्ठ्यादयश्च न सिद्ध्यन्ति; ततश्च

**न्यासः**

अतिन्विति । रायमतिक्रान्तं नावमतिक्रान्तं ब्राह्मणकुलम् 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति 'कुगति' इत्यादिना समासः, 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति पुंल्लिङ्गे स्त्रीलिङ्गे च प्राप्ते 'द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः' इति प्रतिषेधे नपुंसकस्य ब्राह्मणकुलस्याभिधेयत्वादभिधेयवल्लिङ्गवचनानि भवन्तीति तल्लिङ्गमेव भवति । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः । इक् कण्ठ्यतालव्यस्यैकारस्य तालव्य इकारो भवति । कण्ठ्योष्ठ्यस्यौकारस्यौष्ठ्य उकारः । उपग्विति । गोः समीपमिति । 'अव्ययं विभक्ति' इत्यादिना सामीप्येऽव्ययीभावः । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । कण्ठ्योष्ठ्यौकारस्यौष्ठ्य उकारः । एकारस्य तूदाहरणम्—हे इतीमं शब्दमतिक्रान्तं ब्राह्मणकुलमतिहि । अतिखट्व इति । पूर्ववत् प्रादिसमासे कृते 'गोस्त्रियोरुपसर्जनस्य' इत्येवमादिना ह्रस्वोऽकार एव भवत्यन्तरतमः । दे३वदत्तेति । अत्रामन्त्रितस्यादेरुदात्तादेशो कर्त्तव्ये देवद३त्त इत्यत्र च 'गुरोरनृतोऽनन्त्यस्य' इत्यादिना प्लुतादेशे कर्त्तव्य इङ् न भवति ।

**षष्ठी स्थानेयोगा ॥ योगनियमार्थेति** । योगनियमः सम्बन्धनियमः, सोऽर्थः प्रयोजनं यस्याः सा तथोक्ता । यदि योगनियमार्थेयम्—शास्त्रे या षष्ठी, सा स्थानेयोगैव भवति, नान्ययोगेति । एवं सति 'ऊदुपधाया गोहः' इत्येषापि षष्ठी स्थानेयोगैव स्यात्,

परिभाषेयं योगनियमार्था। इह शास्त्रे या षष्ठी अनियतयोगा श्रूयते सा स्थानेयोगैव भवति, नान्ययोगा। स्थानेयोगस्य निमित्तभूते

पदमञ्जरी

'शास इदङ्हलोः' शासेश्चान्त्यस्य स्यादुपधामात्रस्य च, 'ऊदुपधाया गोहः' गोहेश्चान्त्यस्य स्याद् उपधामात्रस्य च, तत्राह—इह शास्त्रे या षष्ठ्यनियतयोगेति। एतेन शास्त्रेऽयं नियमः, शास्त्राङ्गत्वात्परिभाषाणाम्; तत्राप्यनियमप्रसङ्ग इति दर्शयति। अनियमप्रसङ्गे नियमः कर्त्तव्यो लोकवत्, तद्यथा—लोके ग्रामान्तरं जिगमिषुः कश्चित्कञ्चिदाह—'पन्थानं मे भवानुपदिशतु' इति, स यत्र संदेहः, पथि द्वैविध्यात्, तत्रैवोपदिशति—'अमुष्मिन्नवकाशेऽनेन पथा गच्छ' इति; एवमिहापि 'अस्तेर्भूः' अस्तेः स्थानेऽनन्तरो वेति संदेहे नियमः क्रियते- स्थानेयोगेवेति। एतदेव स्पष्टयति—*स्थानेयोगस्य निमित्तभूत इति*। निमित्तभूते, निमित्तत्वं प्राप्ते। निमित्तग्रहणं कुर्वन् 'स्थाने' इति निमित्तसप्तमीति दर्शयति। स्थानशब्दोऽयमस्त्यपकर्षवचनः—गोस्थानेऽश्वो बध्यतामिति, अस्ति च निवृत्तिवचनः—श्लेष्मणः स्थाने कटुकमौषधमिति, अस्ति च प्रसङ्गवचनः—दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति, तदिह चरमस्य ग्रहणमित्याह—

न्यासः

नावयवावयविसम्बन्धयोगा। ततश्च 'अलोऽन्त्यस्य' इति स्थानषष्ठ्या अन्त्येऽप्युपसंहाराद् गोहश्चान्तस्य हकारस्य ऊकारः स्यात्। 'उपधायाश्च' इति वचनादुपधामात्रस्य चेत्यत आह—इह शास्त्रे या षष्ठ्यनियतयोगेत्यादि। अनियमप्रसङ्गे नियमोऽनया क्रियते। क्व चानियमप्रसङ्गः? यत्र सन्देहः; यथा—'अस्तेर्भूः' इति। अत्र हि किमस्तेः स्थाने? आहोस्विदमन्तरे? इति सन्देहः, पूर्वत्र तूपधाया अवयवलक्षणस्य स्थानिनो विशिष्टावयविनो व्यवच्छिन्नत्वादवयवयपेक्ष्येयमिति निश्चितम्; ततो नात्रास्या व्यापारः। **स्थानेयोगेवेति**। स्थान इति निमित्तसप्तमी, योगः सम्बन्धः। तेनेदमुक्तं भवति—स्थाननिमित्तकसम्बन्धैवेति। एतदेव विस्पष्टीकुर्वन्नाह—**स्थानेयोगस्य निमित्त** इत्यादि। स्थानेयोगस्य निमित्तभूते=निमित्तत्वं प्राप्ते सति सा वेदितव्या। भूतशब्दो ह्यत्र प्राप्तशब्दे वर्त्तते, यथा—देवभूत इत्यत्र देवत्वं प्राप्त इत्यर्थः। निमित्तग्रहणं कुर्वन् सूत्रे स्थानेयोगेति निमित्तसप्तमीयमिति दर्शयति। योगः पुनरिह स्थान्यादेशभावलक्षणः। कुत एतत्? तस्यैव स्थानिहेतुत्वात्। स्थानशब्दो भावसाधनः—स्थितिः स्थानम्। तत् पुनस्त्रिधा—अपकर्षः, निवृत्तिः, प्रसङ्गश्चेति। गोस्थानेऽश्वो बध्यतामित्यपकर्षः स्थानशब्दस्यास्येयः। श्लेष्मणः स्थाने कटुकमौषधमित्यत्र निवृत्तिः। दर्भाणां स्थाने शरैरास्तरितव्यमिति प्रसङ्गः। तत्राद्यावर्थाविह न सम्भवतः; नित्यत्वाच्छब्दार्थसम्बन्धस्य प्रथमो न संभवति,- सामान्येनास्तेरुपदेशान्न द्वितीयः। तस्मात्

सति सा प्रतिपत्तव्या। स्थानशब्दश्च प्रसङ्गवाची, यथा—दर्भाणां स्थाने शरैः प्रस्तरितव्यमिति दर्भाणां प्रसङ्ग इति गम्यते; एवमिहापि अस्तेः स्थाने = प्रसङ्गे भूर्भवति—भविता, भवितुम्, भवितव्यम्। ब्रुवः प्रसङ्गे वचिर्भवति—वक्ता, वक्तुम्, वक्तव्यम्। प्रसङ्गे = संबन्धस्य निमित्तभूते 'ब्रुवः' इति षष्ठी।

बहवो हि षष्ठ्यर्थाः स्वस्वाम्यनन्तरसमीपसमूहविकारावयवाद्याः,

पदमञ्जरी

*स्थानशब्दश्चेति*। चशब्दोऽवधारणे भिन्नक्रमश्च वाचीत्यस्यानन्तरं द्रष्टव्यः। प्रसङ्गवाच्येवेति कथमित्याह—*यथेति*। निवृत्तिवाची न गृह्यते, अस्तेरुपदेशसामर्थ्यात्। न ह्यार्धधातुके निवर्त्तितस्य सार्वधातुके श्रवणमुपपद्यते, न हि मथुरायां व्यापादितः स्रुघ्ने जीवति। नाप्यपकर्षवचनः, न ह्यर्थेन नित्यसम्बद्धस्य ततोऽपकर्षः सम्भवति। नाप्यार्द्धधातुकादपकर्षः, न हि नित्ये प्रकृतिप्रत्ययसमुदाये प्रकृतेरपकर्षः सम्भवति। स्वाभाविक एव ह्यस्तेरप्रयोग आर्द्धधातुके भूशब्द स्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते, अतः प्रसङ्गः एव स्थानम्। प्रसङ्गः प्राप्तिः, अस्तेः प्राप्तौ भूः प्रयोक्तव्य इत्यर्थः। अस्तिनार्थं प्रतिपादयितुमुद्युक्त आर्द्धधातुके विषये भवतिना प्रतिपादयेदिति यावत्। *प्रसङ्गसम्बन्धस्येत्यादिना* सूत्रार्थमुदाहरणे दर्शयति। ब्रुव इत्युपलक्षणम्।

किं पुनर्बहवः षष्ठ्यर्था यत इदमुच्यत इत्यत आह—*बहवो हीति*। एकशतं षष्ठ्यर्थाः तत्र स्वस्वामिभावादयः शब्दे न संभवन्ति, समीपादय एव तु सम्भवन्तीत्यतो यावन्तः शब्दे सम्भवन्तीत्युक्तम्। व्यवहितमपि समीपं भवतीत्यनन्तराद्भेदेनोपादानम्। स्थानेयोगेत्यसमासश्चेद् योगेति स्त्रीलिंगं षष्ठीशब्देन

न्यासः

तृतीय एवार्थ इति मत्वाह—स्थानशब्दश्चेत्यादि। चशब्दोऽवधारणे भिन्नक्रमः प्रसङ्गवाचीत्यस्यानन्तरं द्रष्टव्यः। तदेतदुक्तं भवति—स्थानशब्दः प्रसङ्गवाच्येवेति। प्रसङ्गस्वर्थक्रियानिमित्तभूतस्य कालस्यावसरः। अस्तेः स्थाने प्रसङ्ग इति। अस्तेर्या क्रिया स्वार्थप्रतिपादनलक्षणा, तस्या निमित्तभूतस्य कालस्यावसरः प्राप्त इत्यर्थः। प्रसङ्गे सम्बन्धस्य निमित्तभूत इत्यादिना सूत्रार्थस्योदाहरणे सम्भवं दर्शयति। 'ब्रुवः' इति चोपलक्षणमात्रम्। अस्तेरित्यादेरपि हि षष्ठी प्रसङ्ग एव सम्बन्धस्य निमित्तभाव उत्पन्ना।

के पुनर्बहवः षष्ठ्यर्थाः; यतः सम्बन्धान्तरविषयव्यवच्छेदनार्थं षष्ठ्या इदमुच्यते? इत्याह—बहवो हीत्यादि। शब्दे हि समीपानन्तरविकारावयवादिनिमित्ताः सम्बन्धाः

तत्र यावन्तः शब्दे संभवन्ति तेषु सर्वेषु प्राप्तेषु नियमः क्रियते । षष्ठी स्थानेयोगेति—स्थाने योगोऽस्या इति व्यधिकरणो बहुव्रीहिः । अत एव निपातनाच्च सप्तम्या अलुक् ॥

## स्थानेऽन्तरतमः ॥ ५० ॥

### पदमञ्जरी

च सामानाधिकरण्यमनुपपन्नम् । समासेऽपि तत्पुरुषश्चेत् तौ च पूर्वोक्तदोषौ, सप्तम्या लुक्प्रसङ्गश्च, बहुव्रीहावपि लुक्प्रसङ्गोऽनिवार्य एवेत्यत आह—*षष्ठी स्थानेयोगेत्यादि* ।

यद्वा—अयोगेति पदच्छेदः । न विद्यते योगो यस्याः साऽयोगा । तत्र योगमन्तरेण षष्ठ्या एवाभावाद् विशिष्टो योगो यस्या नास्तीत्यर्थः । एवं च कृत्वा संदेह एवोपस्थानमित्येवं सर्वत्र सिद्धं भवति । अथ वा—योगवती योगा, षष्ठ्याश्चावश्यम्भावी योग इति सामर्थ्याद् भूम्नि मत्वर्थीयोऽकारः, बहवो योगा यस्याः सन्तीति । अस्मिन्नपि पक्षे सन्देहविषय उपस्थानमिति सिद्धम् ।

भाष्ये सूत्रं प्रत्याख्यातम् , कथम् ? 'अस्तेर्भूः' इत्यत्र सन्देहः—स्थानेऽनन्तरः, समीप इति ? लक्ष्यानुरोधात् स्थान इति व्याख्यास्यामः । इदं तु षष्ठ्यन्तं यथा स्थानेन युज्येत; अतः षष्ठ्युच्चारिता । तेन 'निर्दिश्यमानस्यादेशा भवन्ति' इति सिद्धं भवतीति । तत्र सूत्रे षष्ठ्यन्तं गृह्यते—षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न तु प्रतीयमानमिति । तेन 'पादः पत्' इत्यस्यायमर्थः—पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टः, तस्य पच्छब्द आदेशः, न तु प्रतीयमानस्य तदन्तस्येति ॥

*स्थानेऽन्तरतमः* ॥ यद्ययं स्वतन्त्रो विधिः स्याद्, अत्रापि प्राप्नोति—दधि, मधु । अस्तु; न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते, तत्रान्तर्यतः स एव तस्य

### न्यासः

सन्ति । न त्वपत्यापत्यवत्प्रभृतय इत्यतो यावन्तः शब्दे सम्भवन्तीत्याह । अथ स्थानेयोग इति किमसमासः ? अथ समासः ?, यद्यसमासः ? तदा योगशब्दस्य पुंल्लिङ्गत्वात् स्त्रीलिङ्गेन निर्देशः, षष्ठीशब्देन च सामानाधिकरण्यं न प्राप्नोति; योगस्याषष्ठीत्वात् । अतः समासः किं तत्पुरुषः ? आहोस्विद् बहुव्रीहिः ?, यदि तत्पुरुषः ? तौ च पूर्वोक्तौ दोषौ स्याताम्, सप्तम्या लुक्प्रसङ्गश्च । अथ बहुव्रीहिः ? एवमपि लुक्प्रसङ्गोऽत्रानिवार्य एवेत्यत आह—**षष्ठी स्थानेयोगेत्यादि** । गतार्थम् ।

**स्थानेऽन्तरतमः** ॥ परिभाषेयमादेशनियमार्था । **स्थाने** प्राप्यमाणानामिति । एतेन नेदं विधायकं वाक्यम्, किं तर्हि ? लक्षणान्तरेण प्राप्तानामनन्तरमानाम्नितरेषाञ्च योऽन्त-

स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति सदृशतमः। कुतश्च शब्दस्यान्तर्यम् ? स्थानार्थगुणप्रमाणतः ।

स्थानतः—'अकः सवर्णे दीर्घः' । दण्डाग्रम्, यूपाग्रम्। द्वयोरकारयोः कण्ठ्य एव दीर्घ आकारो भवति ।

अर्थतः—वतण्डी चासौ युवतिश्च वातण्ड्ययुवतिः । पुंवद्भावेनान्तरतमः पुंशब्दोऽतिदिश्यते ।

पदमञ्जरी

भविष्यति, न; तस्याप्यन्य इत्यनवस्थाप्रसङ्गात् । प्रयोजनमन्तरेण हि प्रवर्त्तमानमसकृदपि प्रवर्त्तते। ततश्च सर्वस्य निवृत्त्युन्मुखत्वादर्थप्रत्यायनाय प्रयोगो न स्यात् । अपि च बिसं मुसलमित्यादौ यदा समुदायस्य समुदायस्तदा सकारमात्रस्थानादेशत्वात् षत्वाप्रसङ्गेऽपि सकारमात्रस्य सकार इति षत्वं प्राप्नोति। अतः परिभाषाप्रकरणात् परिभाषेयं यत्र स्थानषष्ठी तत्रोपतिष्ठते । तेन विधिवाक्यानामनेन सूत्रेणैकवाक्यत्वाद् विधानकाल एवान्तरतम आदेशो विधीयत इत्याह—*स्थाने प्राप्यमाणानामिति* । अत्रैवशब्दाप्रयोगात् प्राप्यमाणानामिति वचनाच्च विशिष्टविधिरेवायम्, न नियमः। अर्थात्त्वनन्तरतमव्युदास इति दर्शितं भवति । अन्तरतम इत्यस्यार्थमाह—*सदृशतम इति* । *कुतश्चेति* । शब्द-

न्यासः

रतमः, स एव भवतीति नियमार्थमिति दर्शयति। विधायकत्वे हि दधि, मध्वित्यादावपि प्रसज्यते । किं पुनरत्रानिष्टम् ? यावतान्तरतम्याद् दधिमधुशब्दयोस्तावेवादेशौ भविष्यतः, तयोरप्यादेशयोरन्यौ दधिमधुशब्दौ यावादेशौ स्याताम्, तयोरप्यन्याविप्येवमपरिसमाप्तादेशपरम्पराविधानादनवस्था स्यात् । ततश्चार्थप्रत्यायनं प्रति शब्दानां विनियोगो न स्यात्, अन्वाख्यायकस्य शास्त्रस्य प्रवृत्त्यनुपरमात् । शास्त्रोपरतौ ह्यन्वाख्यातास्ते प्रयुज्यन्ते, नान्यथेत्यनिष्टम् । ननु च सकृत्प्रवृत्तौ लक्षणस्य चरितार्थत्वात् पुनः प्रवृत्तिर्न भविष्यति, नैतदस्ति; यत्र हि प्रयोजनार्था प्रवृत्तिस्तत्रैतदुक्तम्, इह पुनरकस्मादन्तरतमो विधीयत इत्यनुपरतैवास्य प्रवृत्तिः। नियामकत्वेऽप्यस्य यदीदं विहितानां नियमं कुर्यात् ! अनर्थकमेव वचनं स्यात् । यो हि भुक्तवन्तं ब्रूयात्—'मा भुङ्क्ष्व' इति, किं तस्य तेन कृतं स्यात् ! तस्मात् प्राप्यमाणावस्थायामेव वाक्यान्तरैः सह संहत्यानेन कार्यं निर्वर्त्यते; तदेकदेशभूतत्वादस्य । **सदृशतम इति** । अन्तरतमशब्दस्यार्थं कथयति ।

**अर्थत** इत्यादि । वतण्डशब्दात् स्त्रियामपत्यार्थे 'वतण्डाच्च' इति यञ्, तस्य 'लुक् स्त्रियाम्' इति लुक्, शार्ङ्गरवाद्यञो ङीन्, 'यस्येति च' इत्यकारलोपः, वतण्डी

गुणतः—पाकः, त्याग, रागः। 'चजोः कुघिण्ण्यतोः' इति चकारस्याल्पप्राणस्याघोषस्य तादृश एव ककारो भवति। जकारस्य घोषवतोऽल्पप्राणस्य तादृश एव गकारः।

प्रमाणतः—अमुष्मै, अमूभ्याम्। 'अदसोसेर्दादु दो मः' इति ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः।

'स्थाने' इति वर्त्तमाने पुनः स्थानेग्रहणं किम्? यत्रानेकमान्तर्यं

पदमञ्जरी

त्वस्य साधारणत्वात् प्रातिस्विकविशेषस्य चासाधारणत्वात् प्रश्नः। *वतण्डी चासौ युवतिरिति*। विग्रहवाक्यम्, इतरदुदाहरणम्। अत्र वतण्डस्यापत्यं स्त्री 'वतण्डाच्च' 'लुक् स्त्रियाम्' इति यञो लुक्, शार्ङ्गरवादिपाठान्ङीन्। 'पोटायुवति' इति समासे सति पुंवत्कर्मधारयेति पुंशब्दो निर्दिश्यमानो वतण्डापत्यवाचिनो वतण्डशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति। *चकारस्येत्यादि*। अल्पप्राणत्वादिकं सवर्णसंज्ञायामुक्तम्। *अमुष्मै, अमूभ्यामिति*। अदसश्चतुर्थ्येकवचने त्यदाद्यत्वम्, 'सर्वनाम्नः स्मै', भ्यामि 'सुपि च' इति दीर्घत्वम्।

*स्थान इति वर्तमान इति*। पूर्वसूत्राद्। यद्यपि तत्र समस्तम्, तथापि स्वरितत्वानुषङ्गादनुवृत्तिरविरुद्धा। *पुनः स्थानेग्रहणमिति*। प्रकृतेन हि स्थानशब्देन

न्यासः

चासौ युवतिश्चेति 'पोटायुवति' इत्यादिना समासः। तत्रानेन 'पुंवत् कर्मधारय' इत्यादिना पुंवद्भावे कर्त्तव्ये सर्वः पुंशब्दः प्रसक्तः। तत्रानेन वतण्डापत्यार्थस्य वतण्डीशब्दस्यार्थतोऽन्तरतमो वतण्डापत्यार्थ एव वातण्ड्यशब्दो भवति।

**पाक इत्यादौ** भावे घञ्। **चकारस्येत्यादि**। 'वर्गाणां प्रथमा अल्पप्राणाः' इति चकारककारावल्पप्राणौ। वर्गाणां प्रथमद्वितीयाः शषसविसर्जनीयजिह्वामूलीयोपध्मानीया यमौ च प्रथमद्वितीयौ विवृतकण्ठाः श्वासानुप्रदाना अघोषाः' इत्यघोषौ। **जकारस्येत्यादि**। 'वर्गाणां तृतीयचतुर्था अन्तःस्था हकारानुस्वारौ यमौ च द्वितीयचतुर्थौ नासिक्याश्च संवृतकण्ठा नादानुप्रदाना घोषवन्तः' इति जकारगकारौ घोषवन्तौ। 'वर्गाणां तृतीया अन्तस्थाश्चाल्पप्राणाः, इतरे सर्वे महाप्राणाः' इत्यल्पप्राणौ। **अमुष्मै, अमूभ्यामिति**। अदसश्चतुर्थ्येकवचने भ्यामि च परतस्त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, 'सर्वनाम्नः स्मै' इति स्मैभावः। भ्यामि 'सुपि च' इति दीर्घः. ततो ह्रस्वस्य ह्रस्व उकारो भवति, दीर्घस्य दीर्घः।

**स्थाने इति वर्त्तमान इति**। प्रकृतो हि स्थानशब्द प्रसङ्गवाची। तदनुवृत्तौ 'स्थाने प्राप्यमाणानामन्तरतमो भवति' इत्येषोऽर्थो लभ्यते। ननु च यत्रानेकमान्तर्यं तत्र ताल्वादिस्थानत एवान्तर्यस्य बलीयस्त्वम्, तस्मात् तद् यथा स्यादिति पुनस्ता-

संभवति तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात्। चेता, स्तोता। प्रमाणतोऽकारो गुणः प्राप्तस्तत्र स्थानत आन्तर्यादेकारौकारौ भवतः।

तमब्ग्रहणं किम्? वाग्घसति, त्रिष्टुब्भसति। 'झयो होऽन्यतरस्याम्' इति हकारस्य पूर्वसवर्णे क्रियमाणे 'सोष्मणः सोष्माणः' इति

पदमञ्जरी

स्थाने प्राप्यमाणानामित्ययमर्थो लभ्यते, अयं तु ताल्वादिस्थानवचनो वाक्यभेदेन सम्बध्यते, स्थानेऽन्तरतमो भवति। यत्रानेकमान्तर्यं तत्र स्थानकृतान्तर्यमाश्रीयत इति वाक्यभेदस्य च तमब्ग्रहणं लिङ्गम्। स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात् तमब्ग्रहणं व्यर्थमेव स्यात्। *तमब्ग्रहणं किमिति*। सुसदृशसम्भवे तदेव ग्रहीष्यत इति प्रश्नः। *वाग् घसतीत्यादि*। ईषत्सदृशेऽपि लोके सादृश्यव्यवहारदर्शनात् तमब्ग्रहणमिति भावः। *सोष्मणः, सोष्माण इत्यादि*। ऊष्मशब्दोऽत्र गुणमात्रवचनः। इतिकरणो हेतौ। यस्मादूष्मगुणयुक्ताः, तस्मादूष्म-

न्यासः

ल्वादिस्थानवाचिनः स्थानशब्दस्योपादानं क्रियते। अथेयम्, स्थानकृतमेवेहान्तर्यं विशिष्टमुपात्तमिति प्रमाणादिकृतं परित्यक्तं स्यात्? नैष दोषः, वाक्यभेदं हि कृत्वा तत्र सम्बन्धः क्रियते, स्थाने प्राप्यमाणानामन्तरतम आदेशो भवति। 'स्थाने च भवति' इति पूर्वत्र वाक्ये प्रसङ्गवाची स्थानशब्दः, उत्तरत्र तु ताल्वादिस्थानवाची। एवं वाक्यभेदेन सम्बन्धे सति, पूर्वस्मिन् वाक्ये स्थानादिकृतानामान्तर्याणां परिग्रहः प्रतीयते। द्वितीये तु तेषामेव बलाबलत्वम्। 'स्थाने' इति च निमित्तसप्तमी। तेनेदमुक्तं भवति—यत्रानेकमान्तर्यं तत्र स्थानेन निमित्तेन योऽन्तरतमः, स एव भवति। वाक्यभेदस्य च तमब्ग्रहणं लिङ्गम्। सादृश्ये प्रकर्षो हि तेन प्रतिपादयितुमिष्टः। स चानेकस्मिन् सादृश्ये सति सादृश्यान्तरापेक्षया भवति। एकवाक्यतायाञ्च स्थानग्रहणेन सादृश्यान्तरे निरस्ते किमपेक्षया सादृश्यप्रकर्षः स्यात्! तस्मात् तमब्ग्रहणाद् वाक्यभेदोऽनुमीयते, अन्यथा हि तस्य वैयर्थ्यं स्यात्।

चेतेति। अत्रेकारस्य तालव्यत्वादेकारस्य कण्ठ्यतालव्यत्वात् स्थानत आन्तर्यम्, इकाराकारयोस्तु प्रमाणतः, द्वयोरपि मात्रिकत्वात्। स्तोतेति। अत्राप्युकारस्यौष्ठ्यत्वादोकारस्य कण्ठ्यौष्ठ्यत्वात् स्थानत आन्तर्यम्। उकाराकारयोस्तु प्रमाणतः पूर्ववत्। तत्रासति पुनः स्थानग्रहणे, प्रमाणत आन्तर्यात् कदाचिदकारो गुणः स्यात्, स्थानत आन्तर्यात् कदाचिदेकारौकारौ। पुनः स्थानग्रहणात् तु स्थानकृतस्यान्तर्यस्य बलीयस्त्वादेकारौकारौ एव भवतः, न कदाचिदकारः। सोष्मणः, सोष्माण इतीत्यादि। इतिकरणो हेतौ; यस्मात् सोष्माणो द्वितीयास्तस्मात् सोष्मणो हकारस्य द्वितीयाः

द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्त' इति तृतीयाः, तमब्ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः ॥

पदमञ्जरी

गुणयुक्तस्य हकारस्य द्वितीयाः प्रसक्ता इत्यर्थः। 'शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्थाः' इति *शिक्षा*। अत्रोष्मशब्दो गुणवचनः, सस्थानेनेति इत्थंभूतलक्षणे तृतीया। हशषसाः खच्छादीनां द्वितीयानां सस्थाना यथा ते ऊष्माण एवं द्वितीया अपीत्यर्थः। फकारस्य सस्थान ऊष्मा नास्ति, तस्मात्तस्य विशेषत ऊष्मत्वं वक्तव्यम्। हकारेण चतुर्था इति, यथा हकार ऊष्मा एवं तेऽपीत्यर्थः। एवं *नादवतो नादवन्त* इतीत्यत्रापि हेत्वर्थो योज्यः। इह इष्टम्, उप्तम्—आन्तर्यतोऽर्द्धमात्रस्य व्यञ्जनस्यार्द्धमात्रेक् संप्रसारणं प्राप्नोति; इह च दध्यत्र, कुमार्यत्र, ब्रह्मबन्ध्वर्थम्—मात्रिकद्विमात्रिकत्रिमात्रिकाणामिकां मात्रिक-द्विमात्रिकत्रिमात्रिका यणः प्राप्नुवन्त्यान्तर्यतः। नैव लोके न वेदेऽर्द्धमात्र इगस्ति, नापि मात्रिको द्विमात्रिको वा यण्, योऽस्ति स भविष्यति। इहान्तरतमशब्दः सप्तम्यन्तोऽपि पठितो भाष्ये। 'स्थानेऽन्तरतम उरण् रपरः' इति संहितापाठोऽनित्यः' तत्र पदच्छेदे सप्तम्यन्तमपि सम्भवति। तत्र चायमर्थः-षष्ठीति वर्तते,

न्यासः

प्रसक्ता इत्यर्थः। एवं नादवतो नादवन्त, इत्यादौ वाक्ये हेत्वर्थो योज्यः। 'शादय ऊष्माणः सस्थानेन द्वितीया हकारेण चतुर्थाः' इति शिक्षा। अत्र 'शादय ऊष्माणः' वचनेन हकारस्य सोष्मत्वं प्रतिपादितम्। 'सस्थानेन द्वितीयाः' इत्यनेन तु वर्गद्वितीयानां खकारादीनाम्। 'हकारेण चतुर्थाः' इत्यनेनापि वर्गचतुर्थानां घकारादीनाम्। समानं स्थानं यस्य स सस्थानः। सस्थानेनेति। इत्थम्भूतलक्षणे तृतीया। सस्थानेन द्वितीया ऊष्मतया लक्ष्यन्ते। एतदुक्तं भवति—'यथा सस्थान एषामूष्मा, एवमेतेऽपि वर्गाणां द्वितीया ऊष्माणः' इति। अथ वा—तुल्यार्थयोग एषा तृतीया, तुल्यशब्दस्त्वध्याहार्यः, तुल्यत्वमूष्मतया वेदितव्यम्। तत्र खकारस्य सस्थानो हकारः, छकारस्य शकारः, ठकारस्य षकारः, थकारस्य सकारः। फकारस्य सस्थान ऊष्मा नास्ति। तस्मात् तस्यापि विशेषेणोष्मत्वं वेदितव्यम्। हकारेण चतुर्था इति। इहापि तृतीयेत्थम्भूतलक्षणे, तुल्यार्थयोगे वा। हकारेण चतुर्था ऊष्मतया लक्ष्यन्ते, तत्सदृशत्वात्। तेन यथा हकार ऊष्मा एवं तेऽपीत्यर्थः। नादवत इत्यादि। 'वर्गाणां तृतीयचतुर्थाः' इत्यादिना पूर्वोक्तेन ग्रन्थेन तृतीयानां हकारस्य नादवत्त्वमुक्तम्। ये सोष्माणो नादवन्तश्चेति। सोष्मत्वं हकारस्य 'शादय ऊष्माणः' इत्यनेनाख्यातम्, चतुर्थानां तु हकारेण चतुर्था इत्यनेन नादवत्त्वम्, उभयेषां वर्गाणां तृतीयचतु।। इत्यादिनैव

## उरण् रपरः ॥ ५१ ॥

### पदमञ्जरी

अन्तरतमो य आदेशस्य स्थानी, तत्र षष्ठी, तस्यादेश इति 'अकः सवर्णे दीर्घः' इत्यादौ विधीयमानस्य दीर्घस्यान्तरतमे स्थानिन्यक इति षष्ठ्योपसंहारात् सिद्धमिष्टम्। तथा 'वान्तो यि प्रत्यये' इत्यत्रैच इत्यनुवृत्तायाः षष्ठ्या वान्तादेशस्यान्तरतमयोरोदौतोरुपसंहारात् सिद्धम्, इतरथैज्मात्रस्य वान्तादेशः स्यात्। अत्र पक्षे दोषः—'इको यणचि' इति यणो येऽन्तरमा इकस्तत्र षष्ठीति दध्यत्रेत्यादावेव स्यात्, कुमार्यत्रेत्यादौ न स्यात्। तथा 'इको गुणवृद्धी' गुणवृद्ध्योर्येऽन्तरतमा इकस्तत्र षष्ठीति इहैव स्याद्—नेता, लविता, नायकः, लावकः; चेता, स्तोता, चायकः, तावक इत्यत्र न स्यात्। एवं दोषवत्त्वादस्य पक्षस्य यथाव्याख्यातमेव साधीयः। 'वान्तो यि प्रत्यये' इत्यत्र परिहारं वक्ष्यति ॥

उरण् रपरः ॥ अत्र चत्वारः पक्षाः सम्भवन्ति—'उः स्थाने रपरोऽण् भवतीत्यनेन रपरत्वविशिष्टोऽण् भाव्यते' इति प्रथमः पक्षः। 'उः स्थानेऽणेव भवति, स च रपर इति अणनण्प्रसङ्गेऽण् नियम्यते, तस्य च रपत्वं विधीयते' इति द्वितीयः पक्षः। 'उः स्थाने विहितोऽणित्यनूद्य तस्य विधानोत्तरकाले रपरत्वमात्रं विधीयते' इति तृतीयः पक्षः। 'य उः स्थानेऽण्विधीयते इत्यनूद्य तस्य प्रसङ्गावस्थायामेव रपत्वमात्रं विधीयते' इति चतुर्थः पक्षः। तत्र प्रथमपक्षे—नाप्राप्तेषूदात्तादिषु विधीयमानोऽण् तेषां बाधकः स्यात्, तैरनवरुद्धस्य विषयस्याभावात्। एवं हि तदा वचनव्यक्तिः, षष्ठीनिर्दिष्टमात्रस्याभावान्नादेशोऽन्तरतमो भवति, ऋवर्णस्य

### न्यासः

उरण् रपरः ॥ अत्र त्रयः पक्षाः सम्भवन्ति—'उः स्थानेऽण् रपरत्वज्ञानेनोभयं विधीयते' इत्येकः पक्षः। 'लक्षणान्तरेण विहितस्याण उः स्थाने पश्चादनेन रपरत्वमात्रं क्रियते' इति द्वितीय पक्षः। 'उः स्थाने लक्षणान्तरेण विधीयमानोऽण् विधानकाल एव तेन लक्षणान्तरेण सह संहत्य रपरत्वविशिष्टोऽनेन भाव्यते' इति तृतीयः। तत्र प्रथमः पक्ष आश्रीयते, ऋकारस्य स्थान उदात्तादयो न स्युः, अनेन बाधितत्वात्। 'कृति' इत्यत्र 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तो न स्यात्, 'प्रकृतम्' इत्यत्र पूर्वपदस्याद्युदात्तस्य 'गतिरनन्तरः' इति प्रकृतिस्वरे कृते 'अनुदात्तं पदमेकवर्जम्' इत्यनुदात्तो न स्यात्, 'उदात्तानुदात्तस्य स्वरितः' इति स्वरितश्च[1]। यद्यचः स्थाने उदात्तादयो विधीयन्ते, तथापि तेषामन्योऽजवकाश इति ऋवर्णस्थाने प्रतिपदोक्तोऽणेव रपरः स्यात्। ये चाप्यन्य ऋवर्णस्थाने प्रतिपदमादेशा उच्यन्ते, 'ऋत इद्धातोः' इत्येवमादिभिर्लक्षणान्तरैस्तेषु रपरत्वं न स्यात्; ततश्च किरतीत्यादि न सिध्येत्।

१. न स्यादिति शेषः।

पदमञ्जरी

त्वण् रपर इति, ततश्च कृतिरित्यत्र 'ञ्नित्यादिर्नित्यम्' इति प्राप्तमृकारं बाधित्वाण् रपरः स्यात्; प्रकृतमिति शेषनिघातः स्वरितश्च, नॄः पाहीति पूर्वसवर्णदीर्घत्वमनुनासिकं च बाधित्वाण् रपरः स्यात्, कर्त्ता, कारक इति च गुणवृद्धी बाधित्वाऽण् भवन्नकार एवेति नियमाभावादिकारोकारावपि रपरौ स्याताम्; ये चामी प्रतिपदमुः स्थान आदेशाः 'ॠत इद्धातोः' इत्यादयः—तेषु रपरत्वं न स्यात्।

द्वितीये तु कामं गुणवृद्ध्योर्दोषो न स्यात्। तथा हि—'सर्वेषु गुणवृद्धिसंज्ञकेषु प्राप्तेषु अणेव भवति' इति नियमादकाराकारावेव गुणवृद्धी रपरे भवत इति सिद्धं कर्त्तेत्यादि, शास्त्रान्तरेण योऽण् प्रसक्तः स एव नियमादपि भवतीतीकारोकारावपि न प्राप्नुतः। ननु 'अनियमप्रसङ्गे नियमः' इति वृद्धावेव स्याद्, अस्ति तत्रानियमप्रसङ्ग इति कृत्वा; गुणस्तु कर्त्तेत्यादौ मात्रिकस्य मात्रिकोऽकार एव प्राप्नोति; तरितेत्यादौ द्विमात्रस्य द्विमात्र एव भवेद्, अणेवेति तत्र नियमाभावात् तरितेत्यादावेङेव गुणः स्यात्; कर्त्तेत्यादौ तु यद्यप्यकार एव गुणो लभ्यते, तस्य रपत्वं तु न लभ्यते, यो ह्यणनण्प्रसङ्गेऽणेवेति भवतीति नियमतो योऽण् तस्यैव रपरत्वं विहितम्; अतो नियमपक्षेऽपि गुणविषये दोषस्तदवस्थ एव? उच्यते, द्वे एते परिभाषे आदेशनियमार्थे—'स्थानेऽन्तरमः' इति च 'उरण् रपरः' इति च। तत्र पूर्वस्या अवकाशः 'चजोः कुघिण्ण्यतोः' इत्यादि, अस्या अवकाशो यत्रान्तरतम्ये विशेषो नास्ति, यथा तारक इत्यादौ, वृद्धीनां कर्त्ता तारितेत्यादौ। गुणो भवतीत्युक्ते सर्वेषु गुणेषु प्राप्तेषु 'स्थानेऽन्तरतमः' इति नियमोऽस्तु, 'उरण् रपरः' इति वा, परत्वात् 'उरण्रपरः' इत्ययमेव भविष्यति। अतः सुष्ठूक्तम्—'नियमपक्षे गुणविषये न कश्चिद्दोषः' इति। किन्तूदात्तादिषु दोषस्तदवस्थ एव स्यात्, तथा हि—कृतिरित्यादावुदात्तो भवतीत्युक्ते सर्वेषूदात्तसंज्ञकेषु प्राप्तेषु परत्वादनेनाण एवोदात्ताः स्युः, ते च रपराः। एवमनुदात्तादिष्वपि द्रष्टव्यम्। ये च प्रतिपदमादेशाः 'ॠत इद्धातोः' इत्येवमादयः, तेष्वनियमप्रसङ्गाभावादसति नियमे रपत्वं न स्यात्, तदाह—'उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः' इति।

तृतीये पक्षे उदात्तादिषु न दोषः; ञ्नित्यादिभिरन्तरतमस्यैव विधानात्। किरतीत्यादौ च न दोषः। गुणवृद्ध्योरुक्तदोषः स्यादेव, तथा हि—विहितस्य पश्चादनेन रपरत्वं विधीयते, विधानकाले त्वान्तर्यतो मात्रिकस्य; मात्रिके गुणे रपरे कर्त्तेत्यादि यद्यपि सिध्यति, तरितेत्यादौ त्वेङेव गुणः स्याद्; वृद्धिषु च विधानसमये कस्याश्चिदान्तर्याभावात् तिसृषु प्रवृत्तास्वाकारस्याण्त्वात् रपरत्वे कारकस्तारक इति यद्यपि सिद्धति, वायकस्तावक इत्याद्यनिष्टमनुसज्यत एव। अत एवमेतेषु पक्षेषु दोषसद्भावाच्चतुर्थं पक्षमाश्रित्याह—

उः स्थानेऽण् प्रसज्यमान एव रपरो वेदितव्यः। कर्त्ता, हर्त्ता।

**पदमञ्जरी**

*उः स्थानेऽण् प्रसज्यमान एवेत्यादि।* एतच्च स्थानद्वयग्रहणानुवृत्तेर्लभ्यते। तत्रैकमुः स्थाने योऽण् विधीयत इत्यनुवादेऽपि स्थानसम्बन्धलाभाय। द्वितीयं तु सोऽण् प्रसङ्ग एव प्रसज्यमानावस्थायामेव रपरो भवतीति रपरत्वस्य कालविधानार्थम्। 'स्थानेऽन्तरतमः' इत्यत्र हि यद्यपि ताल्वादिवचनः स्थानशब्दः, तथापि न तेनात्र कश्चिदर्थोऽस्तीति प्रसङ्गवचन एवेह सम्पद्यते। एवं च गुणवृद्ध्योः प्राप्त्यवस्थायामेवाणो रपराः सम्पन्ना इति प्रमाणतोऽन्तरतमावेङैचौ बाधित्वा स्थानतोऽन्तरतम एव भविष्यतीति न कश्चिद्दोषः। न चानेकाल्त्वात्सर्वादेशप्रसङ्गः; आनुपूर्व्या सिद्धेः। यदाङ्गस्येति षष्ठी अन्त्येऽल्यनुसंहृता तदायमुः स्थाने, यदायमुः स्थाने तदा रपरः, यदा रपरस्तदानेकालिति न पुनः परावृत्य सर्वादेशो युज्यते।

**न्यासः**

अथ द्वितीय पक्ष आश्रीयते, तरतेस्तृजादौ गुणो विधीयमानः प्रमाणत आन्तरतम्याद् दीर्घस्य दीर्घ एव स्यात्, तथा च तरितेत्यादि न सिध्येत्। किञ्च—ण्वुलादौ वृद्धौ विधीयमानायामृकारस्य केनचिद् वृद्धिसंज्ञकेनान्तरतम्यविशेषो नास्तीति सर्वे वृद्धिसंज्ञकाः पर्यायेण प्रसज्येरन्। तथा च पक्षे नायकः, स्तावक इत्याद्यप्यनिष्टं रूपं स्यात्। इत्येवमाद्ययोः पक्षयोर्दोषवत्तां दृष्ट्वा, तृतीयं पक्षमाश्रित्याह—उः स्थानेऽण् प्रसज्यमान एवेत्यादि। एतेन लक्षणान्तरेण विधीयमानस्याणो विधानकाल एव तेन सह संहत्य रपरत्वविशिष्टस्य विधावियं परिभाषा व्याप्रियत इति दर्शयति। एतच्च स्थानद्वयग्रहणस्यात्रानुवृत्तेर्लभ्यते। पूर्वकेण हि स्थानग्रहणेनेहानुवृत्तौ 'उः स्थाने' इत्येततदर्थरूपं लभ्यते। द्वितीयेन तु प्रसज्यमान इत्येतत्। तथा हि—स्थानग्रहणं सप्तम्यन्तं प्रकृतमनुवर्त्तमानं तत्सामर्थ्यात् प्रथमान्तं सम्पद्यते, स्थानशब्दश्चायं प्रसङ्गवाची। ततश्च यदा स्थानेनाण् विशिष्यते—'अण् स्थानम्' इति, तदा 'अण् प्रसज्यमान एव' इत्येषोऽर्थो जायते।

प्रसज्यमान इति। प्रसङ्गेनाभिसम्बध्यमान इति यावत्। एवेति। अवधारणं पुनरत्र व्यवच्छेदफलत्वेन सर्ववाक्यानां सावधारणत्वाल्लभ्यते। कथं पुनरण् स्थानं भवति? नैव हि स स्थानं भवति, तद्योगात्तु तत्र स्थानव्यपदेशो भवति, यथा—यष्टीः प्रवेशयेति यष्टियोगात् पुरुषाणां व्यपदेशः। ननु च 'स्थानेऽन्तरतमः' इत्यत्र ताल्वादिस्थानवचनः स्थानशब्द उपात्तः, तत् कथं तदनुवृत्तावपि प्रसज्यमान इत्येषोऽर्थो लभ्यते? नैष दोषः, स्वरितत्वचिह्नाद्धि यो यत्रोपतिष्ठते, स तत्र सामर्थ्यात् तत्कार्ययोग्यस्यैवार्थस्याभिधाता सन्नुपतिष्ठते। तेन यद्यपि पूर्वसूत्रे स्थानशब्दस्ताल्वादिस्थानवचनः, तथापीहोपतिष्ठमानः प्रसङ्गवचन एवोपतिष्ठते। तदेवं यस्मान्नेदं

किरति, गिरति । द्वैमातुरः, त्रैमातुरः ।

उरिति किम् ? खेयम्, गेयम् ।

अण्ग्रहणं किम् ? 'सुधातुरकङ् च'—सौधातकिः ॥

**पदमञ्जरी**

*द्वैमातुर इति* । 'मातुरुत्सङ्ख्यासम्भद्रपूर्वायाः' । *खेयमिति* । 'ई च खनः' । *सौधातकिरिति* । 'सुधातुरकङ् च' । अत्रायमकङादेशोऽनण्त्वाद्रपरो न भवति । अथ योऽत्राण् स परः कस्मान्न भवति ? अनादेशत्वात्, समुदायो ह्यत्रादेशः । यद्येवम्, खट्वश्यं इत्यादावपि रपरत्वं न स्यात्, पूर्वपरयोर्हि समुदायोऽत्र स्थानी नावयव ऋकारः, उच्यते; पूर्वपरयोरिति द्विवचननिर्देशात्तयोरेव स्थानित्वं न समुदायस्य, अनिर्देशात् । अत एव द्वयोः स्थानिनोर्भिन्नादिषु नत्ववत् द्वावादेशौ स्याताम् इति तत्रैकग्रहणं क्रियते । तत ऋकारस्यापि स्थानित्वमस्त्येव । तदिद-मुच्यते-'यो ह्युभयोः स्थाने भवति लभते सोऽन्यतरव्यपदेशम्' इति । अतस्तत्रापि रपरत्वं भविष्यति ॥

**न्यासः**

स्वतन्त्रमणा रपरत्वविशिष्टस्य च विधायकम् । तस्मादाद्ये पक्षे यो दोषः स इह न भवति । ततश्च लक्षणान्तरेण विहितस्याणः पश्चादनेन रपरत्वं न विधीयते, किं तर्हि ? प्रसज्यमान एवाण् लक्षणान्तरेण तत्सहायं प्रतिपद्य रपरो भाव्यते । तेन द्वितीये पक्षे यो दोषः, सोऽप्यस्मिन्न भवत्येव । प्रसज्यमानस्यैव हि रपरत्वविधौ यथा ऋवर्णो रश्रुतिमान्, एवमादेशोऽपि रश्रुतिमानेव भवति । ततश्चान्तरतम्यादकारस्य रश्रुतिमत-स्तादृश एव रश्रुतिमानादेशो भवति । अन्ये गुणवृद्धिसंज्ञका व्यावर्त्तिता भवन्ति । यदि तर्हि प्रसज्यमान एव रपरो भवति, अनेकाल्त्वात् सर्वादेशः प्रसज्येत, नैष दोषः; यदयं 'तरति' इति[1] निर्देशं करोति; ततो ज्ञायते —सर्वादेशो न भवतीति ।

कर्ता, हर्तेति । 'डुकृञ् करणे', हृञ् हरणे—आभ्यां 'ण्वुल्तृचौ' इति तृच्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'अचो रहाभ्याम्' इति द्वित्वम् । किरति, गिर-तीति । 'कॄ विक्षेपे' 'गॄ निगरणे'—आभ्यां लट्, 'शेषात् कर्तरि परस्मैपदम्' इति तिप्, तुदादित्वाच्छः, 'ॠत इद् धातोः' इतीत्त्वम् । द्वैमातुरः, त्रैमातुर इति । द्वयोर्मात्रोरपत्यम्, तिसृणां मातृणामपत्यमिति 'मातुरुत् संख्यासंभद्रपूर्वायाः' इत्यण्, उकारश्चान्तादेशः । 'तद्धितेष्वचामादेः' इति वृद्धिः । खेयमिति । 'ई च खनः' इति क्यप्, इकारश्चान्तादेशः, 'आद् गुणः' । सौधातकिरिति । सुधातुरकङ् च' इतीञ् । तत्संयोगेनाकङादेशः क्रियमाणो रपरो न भवति, अनण्त्वात् । अथ योऽत्राण्, स

1. पा० सू० ४।४।५

## अलोऽन्त्यस्य ॥ ५२ ॥

षष्ठीनिर्दिष्टस्य य उच्यते आदेशः सोऽन्त्यस्यालः स्थाने वेदितव्यः । 'इद् गोण्याः'—पञ्चगोणिः, दशगोणिः ॥

### पदमञ्जरी

*अलोऽन्त्यस्य* ॥ 'अलः' इति जसन्तं चेदयमर्थः स्यात्—अलात्मका आदेशा अन्त्यस्येति । तत्र रहोरजसां लोपः सर्वादेशः स्याद्—नीरजीकरोतीति । अन्त्यस्य चाविशेषितत्वात् 'वसुस्रंसुध्वंस्वनडुहां दः' इति दत्वं पदस्याप्यन्त्यस्य स्यात्—परमानडुद्भ्यामिति । असन्देहार्थं चालोऽन्त्यस्येति वाच्यं स्याद् । अनोऽलोन्त्यस्येत्यनेन सामानाधिकरण्यात् षष्ठ्यन्तमिति स्थितम् । यदि 'षष्ठी स्थानेयोगा' इत्यनेनैकवाक्यताऽस्य स्यात्, ततोऽयमर्थः स्यात्—'इह शास्त्रे या काचन षष्ठी सान्त्यस्यालो भवति सा स्थानेयोगा इति । ततश्च 'आर्द्धधातुकस्येड्वलादेः' इत्यस्याप्यन्त्येऽल्यनुसंहारादार्द्धधातुकान्त्यस्यैवेट् स्यात्, स च भवन् 'आद्यन्तौ टकितौ' इत्यन्त्यात्प्राक् स्यात् । 'आद्यन्तौ टकितौ' इत्यनेन हि स्थानेयोगत्वमेव षष्ठ्या बाध्यते, न पुनरन्त्येऽल्यनुसंहारोऽपि । अतो भिन्नं वाक्यम्, तदाह—*षष्ठीनिर्दिष्टस्येत्यादि* । सामान्यवचनेऽपि 'षष्ठी स्थानेयोगा' इत्यधिकारात् स्थानषष्ठीनिर्दिष्टस्येति वेदितव्यम्; अन्यथा षष्ठीमात्रस्याधिकारे यस्य षष्ठीनिर्दिष्टस्य

### न्यासः

रपरः कस्मान्न भवति ? अनादेशत्वात् । समुदायो ह्यत्रादेशो न तदवयवः । अथेह कथं रपरत्वम्—खट्वा + ऋश्यः = खट्वर्श्य इति; यावता नायमृकारस्य स्थानेऽण्, किन्तु तस्यान्यस्य च ? नैष दोषः; यो हि द्वयोः षष्ठीनिर्दिष्टयोः स्थाने भवति, लभते सोऽन्यतरव्यपदेशम्, यथा—देवदत्तस्य पुत्रो देवदत्तायाः पुत्र इति ॥

**अलोऽन्त्यस्य** ॥ अल्ग्रहणमन्त्यस्य विशेषणम्, नादेशस्य; अन्यथा ह्यलन्त्यस्येत्येवं ब्रूयात् । आदेशः पुनरत्रैकाल्लभ्यते । अन्यस्य 'अनेकाल्शित् सर्वस्य' इति सर्वादेशतां वक्ष्यति । षष्ठीनिर्दिष्टस्येति । सामान्यवचनेऽपि 'षष्ठी स्थानेयोगा' इत्यधिकारात् स्थानषष्ठ्या निर्दिष्टस्येति वेदितव्यम्; अन्यथा टित्किन्मितोऽप्यवयवसम्बन्धषष्ठीनिर्दिष्टा विधीयमाना अन्त्यस्य स्युः । 'इद् गोण्याः' इति । येयं षष्ठी सान्त्यमलं नीयते—अन्त्यस्याल इत्त्वमिति । पञ्चगोणिरिति । पञ्चभिर्गोणीभिः क्रीत इति 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'तेन क्रीतम्' इति 'प्राग् वहतेष्ठक्' 'अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्' इति तस्य लुक् । यद्यलोऽन्त्यस्य षष्ठीनिर्दिष्टस्यादेशो भवति, 'इदोऽय् पुंसि' इत्यतः 'इदः' इत्यनुवृत्तेः 'हलि लोपः' विधीयमान इद्रूपस्य योऽन्त्यस्तस्य स्यात् । तथा च—आभ्यामिति न सिध्येत्, नैष दोषः; 'नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारेषु' इति परिभाषया न भविष्यति ।

## ङिच्च ॥ ५३ ॥

ङिच्च य आदेशः सोऽनेकालपि अलोऽन्त्यस्य भवति । 'आनङृतो द्वन्द्वे'—होतापोतारौ, मातापितरौ ।

### पदमञ्जरी

यत्कार्यं यथाभूतमुच्यते—आदेशरूपम्, आगमरूपं वा, तत्तथाभूतमेव तदन्तस्य भवतीत्यर्थः स्यात् । ततश्च स एव दोषो य एकवाक्यतायाम् । अतः 'षष्ठी स्थानेयोगा' इति सर्वमनुवर्त्यम् । अयञ्चार्थो भवति—'स्थानषष्ठीनिर्दिष्टस्य यदुच्यते तत्तदन्त्यस्यालो भवति, न तस्य कृत्स्नस्य' इति । सोऽयं कार्यस्यान्त्येऽल्यनुसंहारो वृत्तिकारेण दर्शितः ।

यद्वा—'या स्थानेयोगा षष्ठी साऽन्त्यस्यालः' इति षष्ठ्या एवानुसंहारो वेदितव्यः । अत्र पक्षे 'ङिच्च' इत्यस्यायमर्थः—'यत्र ङिदादेशो विधीयते तत्र या षष्ठी सान्त्यस्यालः' इति । एवं सर्वत्र । कार्यानुसंहारे तु यथाश्रुतमेव षष्ठ्याः स्याद्, अनुसंहारे 'ङिच्च' इत्यादावसङ्गतिः । अतः कार्यानुसंहारो वृत्तिकारेण दर्शितः ॥

*ङिच्च* ॥ *होतापोतारावित्ति* । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः । 'अप्तृन्' इत्यादिना दीर्घः । *मातापितरावित्ति* । 'पितामात्रा' इत्येकशेषाभावपक्षेऽभ्यर्हितत्वान्मातुः पूर्वनिपातः; 'पितुर्दशगुणं माता गौरवेणातिरिच्यते' । अथ तातङन्त्यस्य कस्मान्न भवति ? तत्राह—*तातङीत्यादि* । अनन्यार्थङित्त्वेष्वनङादिषु चरितार्थमेतद् गुणवृद्धिप्रतिषेधार्थतया चरितार्थङित्त्वे तातङि परेण 'अनेकाल्शित्सर्वस्य' इत्यनेन बाध्यत इत्यर्थः । ननूत्सर्गापवादयोरयुक्तो विप्रतिषेधः, अतुल्यकक्षत्वात्, न चान्तरेण सर्वादेशतां गुणवृद्धिप्रतिषेधार्थत्वस्योन्मेष इति चरितार्थत्वमपि ङित्वस्य चिन्त्यम् ? न ब्रूमो गुणवृद्धिप्रतिषेधार्थस्य निश्चितत्वाद्

### न्यासः

**ङिच्च** ॥ **होतापोतारावित्ति** । होतृपोतृशब्दयोर्द्वन्द्वः, आनङ्, औप्रत्यये परतः 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः, रपरत्वञ्च । 'अप्तृन्तृच्' इत्यादिना दीर्घः । **मातापितरावित्ति** । 'पिता मात्रा' इति यस्मिन् पक्ष एकशेषो नास्ति, तत्रेदमुदाहरणम् । यदि ङिदादेशोऽनेकालप्यन्त्यस्य भवति, एवं सति तातङप्यन्त्यस्य भवतीत्यत आह—**तातङीत्यादि** । तत्र गुणप्रतिषेधार्थम्—चिनुतादित्यादौ । अत्र हि सार्वधातुकलक्षणस्य गुणस्य प्राप्तिः । वृद्धिप्रतिषेधार्थम्—मृष्टादिति । अत्र हि 'मृजेर्वृद्धिः' इति वृद्धिप्राप्तिः । तदेवं गुणवृद्धिप्रतिषेधे चरितार्थत्वात् तातङो ङित्करणस्य सावकाशत्वे सति तस्मिन् परत्वाद् 'अनेकाल्शित्सर्वस्य' इत्यनेन तातङ् सर्वादेशो भवति । ङिच्चेत्यस्यावकाशः—होतापोतारावित्यादि । अनेकालित्यादेरवकाशो यो न ङित्—'अस्तेर्भूः', भवितेत्यादि ।

तातङि ङित्करणस्य सावकाशत्वाद् गुणवृद्धिप्रतिषेधार्थत्वात् सर्वादेशस्तातङ् भवति—जीवताद्भवान्। जीवतात्त्वम्॥

## आदेः परस्य ॥ ५४ ॥

परस्य कार्यं शिष्यमाणमादेरलः प्रत्येतव्यम्। क्व च परस्य कार्यं शिष्यते ? यत्र पञ्चमीनिर्देशः। तद्यथा—'ईदासः'; आसीनो यजते। 'द्व्यन्तरुपसर्गेभ्योऽप ईत्', द्वीपम्, अन्तरीपम्, समीपम्॥

### पदमञ्जरी

दुर्बलं ङित्त्वमिति; किं तु सर्वादेशेऽपि तातङि गुणवृद्धिप्रतिषेधः प्रयोजनं सम्भाव्यते। तावता च कियानपि विलम्बो भवति। अनङादिषु सर्वादेशत्वे न किञ्चिन् ङित्त्वस्य प्रयोजनमिति सर्वादेशार्थतासम्भावनापि नास्तीति। तेष्वेव सहसा प्रवर्त्तते। ततश्च विप्रतिषेधोपपत्तिः।

अथ वा—'एरुः' इत्यस्यानन्तरम् 'तुह्योस्तातङाशिषि' इति वक्तव्यम्, एरुस्मिन्नेव। एवं वक्तव्ये ङित्करणं गुणवृद्धिप्रतिषेधार्थमेवेति निश्चितमिति विप्रतिषेधोपपत्तिस्तदाह—*तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेश इति*।

अथ वा—यथोपदर्शितं गुणवृद्धिप्रतिषेधार्थत्वं सर्वादेशतामन्तरेण नोपपद्यत इति अन्तरेणैव विप्रतिषेधं सर्वादेशस्तातङ् भवति॥

*आदेः परस्य*॥ शास्त्रे न क्वचित्परस्येत्युच्चार्य्य कार्यं विधीयत इति निर्विषयमेतदित्यभिप्रायेणाह—*क्व चेति*। *यत्रेत्यादि*। पञ्चमीनिर्देशेषु 'तस्मादित्युत्तरस्य' इति परस्य कार्यं विधीयत इत्यर्थः। *आसीन इति*। 'आस उपवेशने' अनुदात्तेत्। *द्वीपमिति*। द्विधागता आपोऽस्मिन्निति 'ऋक्पूरब्धूःपथामानक्षे' इति अकारः समासान्तः॥

### न्यासः

जीवतादित्यादावुभयप्राप्तौ परत्वादनेकाल्त्वात् तातङ् सर्वादेशो भवति। जीवताद् भवान्, जीवतात् त्वमिति। जीवतादिति 'आशिषि लिङ्लोटौ' इति लोट्, तिप्, 'एरुः'। 'तुह्योस्तातङ्' इत्यादिना तातङ्॥

आदेः परस्य॥ अलोऽन्त्यस्यापवादोऽयम्। शास्त्रे न क्वचित् परस्येत्युच्चार्य कार्यं विधीयते। ततश्च निर्विषयमेतदित्यभिप्रायेणाह—क्व चेत्यादि। यत्र पञ्चमीनिर्देश इति। 'तस्मादित्युत्तरस्य' इति वचनाद् यत्र पञ्चमीनिर्देशस्तत्र परस्य कार्यं शिष्यते। आसीन इति। 'आस उपवेशने', लट्, अनुदात्तेत्त्वादात्मनेपदम्; शानच्, अदादित्वाच्छपो लुक्। द्वीपम्, अन्तरीपम्, समीपमिति। द्विर्गता अन्तर्गताः सङ्गता आपोऽस्मिन्निति विगृह्य बहुव्रीहिः। 'ऋक्पूः' इत्यादिना अकारप्रत्ययः समासान्तः॥

## अनेकाल्शित्सर्वस्य ॥ ५५ ॥

अनेकाल् य आदेशः शिच्च स सर्वस्य षष्ठीनिर्दिष्टस्य स्थाने भवति । 'अस्तेर्भूः'—भविता, भवितुम्, भवितव्यम् ।

शित्खल्वपि—'जश्शसोः शिः'। कुण्डानि तिष्ठन्ति, कुण्डानि पश्य ॥

## स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

### पदमञ्जरी

*अनेकाल्शित्सर्वस्य* ॥ अनेकाल्ग्रहणं किमर्थम् ? 'अस्तेर्भूः' सर्वस्य यथा स्यात्, अलोऽन्त्यस्य मा भूत्; नैतदस्ति प्रयोजनम्; 'ङिच्च' इत्येतन्नियमार्थं भविष्यति—'यद्यनेकालन्त्यस्य भवति, ङिदेव' इति । एवमप्यसत्यनेकाल्ग्रहणे 'अतो भिस ऐस्' इत्यादिषु पञ्चमीनिर्देशेष्वनेकालप्यादेश आदेः परस्य स्यात्, सति तु तस्मिन् द्वावेतौ 'अलोऽन्त्यस्य' इत्यस्यापवादौ—'आदेःपरस्य', 'अनेकाल्शित्सर्वस्य' इति; तत्र 'आदेः परस्य' इत्यस्यायमवकाशो य एकालादेशो लोपो वा—'ई दासः' 'बहोर्लोपो भू च बहोः' आसीनः, भूयात् ; 'अनेकाल्शित्सर्वस्य' इत्यस्यावकाशो यत्र पञ्चमीनिर्देशो नास्ति—'अस्तेर्भूः' । इहोभयं प्राप्नोति—'अतो भिस ऐस्', अपवादविप्रतिषेधादनेकाल्शित्सर्वस्येत्ययमेव भवतीति सिद्धमिष्टम् ।

शिद्ग्रहणं किमर्थम् ? 'जसः शी' सर्वस्य यथा स्यात्, अनेकालित्येव भविष्यति, शकारे लुप्ते नानेकाल्, आनुपूर्व्यात्सिद्धम् । यदायं सर्वादेशस्तदा प्रत्ययः, यदा प्रत्ययस्तदेत्संज्ञा, यदेत्संज्ञा तदा लोपः, यदा लोपस्तदेकाल् तदिह सर्वादेशत्वमन्तरेण नेकाल्त्वमुपपद्यते । इह तर्हि 'इदम इश्' 'इदं किमोरीश्की:' ? अत्र ह्यन्तरेणापि सर्वादेशतां प्रागेवेत्संज्ञा भवति । नन्वत्रापि शकारः प्रयोजनान्तराभावाद् अनेकाल्त्वमादेशस्य संपाद्य निवर्त्तिष्यते । इह तर्हि 'घ्वसोरेद्धावभ्यासलोपश्च' इति ? लोपः शित्सर्वस्य यथा स्यात् । 'इदम् इश्' इत्यादावपि प्रयोजनाभावादित्संज्ञैव शकारस्य न स्यादिति श्रवणप्रसङ्गः ॥

*स्थानिवदादेशोऽनल्विधौ* ॥ ननु तत्स्थानापन्नस्य तद्धर्मलाभो लोकवेदयोः

### न्यासः

**अनेकाल्शित् सर्वस्य ॥** शितः शकारानुबन्धेनानेकाल्त्वेऽपि शिदिति पृथक्करणं 'नानुबन्धकृतमनेकाल्त्वम्' इति ज्ञापनार्थम् । तस्य तु प्रयोजनम्—'दिव उत्' इत्यादिषु सर्वादेशाभावः ॥

**स्थानिवदादेशोऽनल्विधौ ॥** स्थानं प्रसङ्गः, स च पूर्वमुक्तस्वरूपः । अतिदेशोऽ-

स्थान्यादेशयोः पृथक्त्वात् स्थान्याश्रयं कार्यमादेशे न प्राप्नोतीत्ययमतिदेश आरभ्यते। स्थानिना तुल्यं वर्त्तत इति स्थानि-

**पदमञ्जरी**

सिद्ध एव। लोके तावदेकस्मिन्नुपाध्याये मृते तत्स्थाननिविष्टस्याप्यभिवादनाद्युपाध्यायधर्मलाभो भवति, एकस्मिंश्च राजनि प्रोषिते तत्स्थानेऽभिषिक्तस्य तत्पुत्रादेरपि तद्धर्मलाभो भवति। वेदेऽपि व्रीहिस्थानपतिता नीवारादयोऽवघातादीन् व्रीहिधर्मान् लभन्ते। तद्वदत्राप्यस्तिस्थानापन्नो भूरस्तिधर्मान् धातुत्वादीन् लप्स्यते, नार्थोऽनेनेत्याशङ्क्याह—*स्थान्यादेशयोरित्यादि*।

अयमभिप्रायः—उपाध्यायत्वप्रयुक्ता उपाध्यायधर्मा राजधर्माश्चाभिषिक्तत्वप्रयुक्ता व्रीहिधर्माश्चापूर्वसाधनत्वनिबन्धनाः, न तत्तत्स्वरूपनिबन्धना इति युक्तं तत्प्रकारजुषो भवन्तीति। इह तु स्वं रूपमितिवचनादस्त्यादिस्वरूपनिबन्धना धातुत्वादयो धर्मा न भवनाद्यर्थाभिधानलक्षणकार्यप्रयुक्ताः, तच्च स्वरूपमादेशानां नास्तीति तत्स्थानापन्नानामपि न स्युरिति तदाह—*पृथक्त्वादिति*। रूपभेदादित्यर्थः।

नन्वेतत्प्रकारजुषोऽपि तत्स्थानापन्नस्य तद्धर्मलाभो दृष्यते, यदा ह्युपाध्यायः शिष्येण यज्ञार्थमुपनिमन्त्रितः कार्यव्यासङ्गात् स्वशिष्यमन्यं प्रेरयति तदा स तत्र गत्वाऽग्रासनादीनुपाध्यायधर्मान् लभते, अत्राप्युपाध्यायप्रतिनिधित्वात् तद्बुद्ध्यैव तद्धर्मा अनुष्ठीयन्ते; एवं कृते तु सत्युपाध्याय इति न तत्स्थानापन्नतया, न चैवमत्र संभवतीत्यारब्धव्यमेव सूत्रम्। युष्मदस्मदोरादेशनिषेधात्सिद्धम्। यदयं 'युष्मदस्मदोरनादेशे' इत्याह, तज् ज्ञापयति—'भवति स्थानिकृतमादेशः' इति; अलाश्रये चाप्रसङ्गः, 'अदो जग्धिः' ल्यब्ग्रहणात्। यदि हि

**न्यासः**

नेकप्रकारः—निमित्तातिदेशः, व्यपदेशातिदेशः, शास्त्रातिदेशः, रूपातिदेशः, कार्यातिदेशश्चेति। तत्र तावन्निमित्तमशक्यमतिदेष्टुम्, न हि धात्वादिधर्माः शब्दप्रवृत्तिनिमित्तभूता धात्वादिव्यक्त्याश्रिता वस्त्वन्तरमादेशं प्रापयितुं पार्यन्ते; यथा—ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति ब्राह्मणशब्दप्रवृत्तिनिमित्तं न शक्यं क्षत्रिये प्रापयितुम्, तद्वत् तस्मादशक्यत्वात् नेह निमित्तातिदेश आश्रीयते। नापि व्यपदेशातिदेशः; संज्ञासंज्ञिसम्बन्धादभिन्नत्वात्। संज्ञासंज्ञिसम्बन्धे हि वत्करणस्यानर्थक्यं स्यात्, विनापि तेन तत्सिद्धेः। अप्रधानत्वाच्च नात्र व्यपदेशातिदेशो युक्त आश्रयितुम्। अत एव शास्त्रातिदेशोऽपि। अप्रधानत्वं तु तयोरपि कार्यम्; प्रत्यङ्गभूतत्वात्। रूपातिदेशस्याप्याश्रयणमयुक्तम्; निष्फलत्वात्। यदि ह्यादेशस्य स्थानिनो रूपमतिदिश्येत; आदेशस्य वैयर्थ्यं स्यात्। 'द्विर्वचनेऽचि' इत्यत्र रूपातिदेशोऽपि न भवत्यादेशवैयर्थ्यम्, द्विर्वच-

पदमञ्जरी

स्थान्यलाश्रयमप्यादेशे स्यात् कितीत्येव सिद्धे ल्यब्ग्रहणमनर्थकं स्यात्, सत्यम्; 'उत्तरार्थं तावत् स्थानिवदादेश इति वक्तव्यम्। अजादेशस्य विषयविशेषे स्थानिवत्त्वं वक्ष्यामि, पदान्तादिविधिषु प्रतिषेधं वक्ष्यामि' इति। सोऽन्यार्थः सन्निहैव क्रियते लिङ्गानाश्रयणाय।

षोढातिदेशः—निमित्तातिदेशः, व्यपदेशातिदेशः, शास्त्रातिदेशः, रूपातिदेशः, तादात्म्यातिदेशः, कार्यातिदेश इति। तत्र निमित्तमशक्यमतिदेष्टुं ब्राह्मण्यवत्, न हि ब्राह्मणस्याग्रभोजनादिनिमित्तं ब्राह्मण्यं वचनशतेनापि क्षत्रियेऽतिदेष्टुं शक्यते। 'पूर्ववत्सनः' इत्यत्रापि न प्रकृतिगतं निमित्तं ङित्त्वादि सनन्तेऽतिदिश्यते, किन्तु प्रकृतिगतमेव तत् सना व्यवधानेऽप्यात्मनेपदनिमित्तमिति। एतावता निमित्तातिदेशवाचोऽयुक्तिः।

व्यपदेशातिदेशः संज्ञापक्षान्न भिद्यते, तत्र च वतेरानर्थक्यं वक्ष्यते, कः पुनरायुष्मतो व्यपदेशोऽभिप्रेतः? किं स्थानीति व्यपदेशः, यथा 'आद्यन्तवदेकस्मिन्' इत्यत्र व्यपदेशातिदेशपक्षः? उत स्थानिनो ये व्यपदेशा धातुरङ्गमित्यादयः, त आदेशस्य भवन्ति? इति। पूर्वः पक्षो भवतोऽप्यनभिप्रेतः, द्वितीयस्य तु संज्ञापक्षान्महान् भेदः। तथा हि—संज्ञापक्षे यत्र स्थानिरूपमुच्चार्य्यते 'आङो यमहनः' इत्यादौ, तत्रैव कार्यं स्याद्, न धातोस्तव्यादयोऽङ्गस्येनादय इत्यादौ; न ह्यत्र संज्ञात्वेन विनियुक्तमस्त्यादि स्थानिरूपमुच्चारितम्; यच्चोच्चारितं न सा संज्ञा, आदेशस्यैव कार्यं स्याद् न स्थानिनः, न हि संज्ञोच्चारिता स्वयं कार्येण युज्यते, स्थानिनस्तु व्यपदेश आदेशस्यातिदिश्यमाने धातोस्तव्यादयोऽङ्गस्येनादय इत्यादौ स्थान्यादेशयोरुभयोरपि कार्यं सिद्ध्यति; उभयोरपि व्यपदेशसद्भावात्। 'आङो यमहनः' इत्यादिकं तु स्थानिस्वरूपनिबन्धनं कार्यमादेशस्य न स्यात्, न ह्यत्र कश्चिद्व्यपदेशो य आदेशस्यातिदिश्येत। अथापि 'स्वं रूपम्' इति वचनाद्धन्नित्यपि हन्तेर्व्यपदेश इति तस्मिन्नतिदिष्टे कार्यं सिध्यतीत्युच्यते: एवमपि पूर्वोक्तस्तावद्विशेषो विद्यत इत्यास्तामेतत्।

अप्रधानत्वात्तु व्यपदेशो न भवति। अत एव शास्त्रातिदेशोऽपि न भवति। स्थानिरूपे चाऽतिदिश्यमान आदेशविधानं व्यर्थं स्यात्। न च वचनद्वयप्रामाण्याद्विकल्पः, 'वा लिटि' इति विकल्पारंभात्। तादात्म्यातिदेशोऽसंभवान्न भवति,

न्यासः

नावुत्तरकालं श्रवणार्थत्वात्। तस्मादतिदेशान्तराश्रयणस्यायुक्तत्वात् कार्यातिदेश आश्रीयते। स्थानिना तुल्यं वर्तत इति। तत्तुल्यकार्यत्वात्, 'तेन तुल्यम्'। स्थान्याश्रयेष्विति। स्थानी आश्रय एषामिति बहुव्रीहिः। अनलाश्रयेष्विति। अल आश्रय एषामिति बहुव्रीहिं कृत्वा न अलाश्रयाणि अनलाश्रयाणीति नञ्समासः। अनन्तरोक्त-

वत्। स्थानिवदादेशो भवति, स्थान्याश्रयेषु कार्येष्वनलाश्रयेषु, स्थान्यलाश्रयाणि कार्याणि वर्जयित्वा । न अल्विधिरनल्विधिरि-

पदमञ्जरी

द्वयोर्हि सहावस्थितयोरन्योऽन्यतादात्म्यमतिदिश्यते, सुबामन्त्रितयोरिव, इह त्वादेशेन स्थानी निवर्त्तित इत्यसंभवः। अतः पारिशेष्यात्प्राधान्याच्च कार्यातिदेशोऽयम्, तदाह—*स्थान्याश्रयकार्यमिति, स्थान्याश्रयेषु कार्येष्विति* च। तात्पर्यतश्चायं कार्यातिदेशो वर्ण्यते। अक्षराणि त्वादेशः स्थानिना तुल्यं वर्त्तत इत्येतावत्येव पर्यवसितानि। केन तु प्रकारेण तुल्यत्वमित्यपेक्षायां तत्कार्यापत्त्येति तदाह—*स्थानिना तुल्य वर्तत इति*। *स्थानिवदिति*। *स्थान्याश्रयेष्विति*। बहुव्रीहिः।

अनल्विधावित्यस्यार्थमाह—*अनलाश्रयेष्विति*। एतेन विधीयते इति विधिः= कार्यम्, अलाश्रयो विधिरल्विधिरित्युत्तरपदलोपी समास इति दर्शयति। किमर्थं पुनरुत्तरपदलोपाश्रयणम्? स्यादेतत्—सति तस्मिन्, यश्चालि विधिः, यश्चालो विधिः, यश्चालः परस्य विधिः, यश्चाला विधिः, सर्वश्चासावलाश्रय इति सर्वत्र प्रतिषेधः सिध्यति। तत्रालि विधिः—यजेः क्तः, इष्टः, क इष्ट इत्यत्र संप्रसारणस्य स्थानिवत्त्वात् को यष्टेत्यादिवत् 'हशि च' इत्युत्वं प्राप्तं न भवति, स इष्ट इत्यत्र 'एतत्तदोः' सुलोपो न भवति। अलो विधिः—द्युकामः, उकारस्य 'लोपो व्योर्वलि' इति न भवति। उत्त्वं तु 'अर्हविमलद्यु' इत्यत्र चरितार्थम्। अलः परस्य विधिः—द्यौः, पन्थाः, सः—हल्ङ्याब्भ्य इति लोपो न भवति। अला विधिः—व्यूढोरस्केन। अत्र 'सोऽपदादौ' इति विसर्जनीयस्य स्थाने विहितस्य स्थानिवत्त्वात् विसर्जनीयस्याट्सूपदेशाद् 'अड्व्यवाये' इति णत्वं प्राप्तं न भवति। अतः सर्वविभक्त्यर्थसंग्रहार्थमुत्तरपदलोपाश्रयणम्। अन्यथा हि षष्ठीसमास एवाश्रीयतेऽल्स्थानिक एव विधिराश्रितः स्यादिति, तन्न; सम्बन्धसामान्ये षष्ठीविज्ञानादपि सर्वविभक्त्यर्थसंग्रहस्य सिद्धत्वात्। अनुवादे हि स्थानेयोगाभावात् सर्वोऽल्सम्बन्धी विधिः प्रतिपत्स्यते। एवं तर्हि यत्र गुणभावेनाप्यलाश्रीयते, तत्रापि निषेधो यथा स्यात्—प्रपठ्येति, अत्र हि वलादेरिति प्रत्ययः प्राधान्येनाश्रितः, वल् तु गुणभावेनेति अप्राधान्यान्न स्यात्। उत्तरपदलोपे तु भवति; अलाश्रयत्वादिड्विधेः। यद्यलाश्रयेषु स्थानिवत्त्वं न भवति, वृक्षाय—'सुपि च' इति दीर्घो न स्यात्; यञादौ सुपीत्यलाश्रयत्वात्। अरुदितामित्यत्र सार्वधातुकस्य तसस्तामादेशो 'रुदादिभ्यः सार्वधातुके' इति वलाश्रय इण् न स्यात्, अत आह—*स्थान्यलाश्रयाणीति*। स्थानिनोऽल् स्थान्यल्, स आश्रयो येषां तानि तथोक्तानि।

न्यासः

मेवार्थं विस्पष्टीकर्तुमाह—स्थान्यलाश्रयाणीत्यादि। स्थानी अल् आश्रयो येषां तानि तथोक्तानि। आश्रयग्रहणेन सूत्रे योऽल्विधिशब्दः, सोऽलाश्रयो विधिरल्विधिरित्युत्तर-

त्यर्थः' । किमुदाहरणम् ? धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः ।

पदमञ्जरी

अयमभिप्रायः—यथा गुरुवद्गुरुपुत्रे वर्त्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसंग्रहणाच्चेति अतिदेशे प्रवृत्ते, यदा गुरुपुत्रः स्वयं गुरुर्भवति तदोच्छिष्टं भुज्यते पादौ चोपसंगृह्येते, तत्कस्य हेतोः ? अतिदेशेनैकवाक्यतामापन्नः प्रतिषेध आतिदेशिकीमेव प्राप्तिं प्रतिषेधतीति, तथेहाप्यातिदेशिक एवाल्विधिः प्रतिषिध्यते । न च वृक्षाय, अरुदितामित्यत्रातिदेशापेक्षा; स्वयमेव यञादित्वाद्वलादित्वाच्च । ततश्च यत्र स्थानिन एवालाश्रीयते स एव निषिध्यते, यथा—प्रपठ्येत्यत्र । न ह्यत्र ल्यप् स्वयं वलादिरिति । ननु च गुरुपुत्रस्य स्वयं गुरुत्व उच्छिष्टभोजनादौ न मात्रयाप्यतिदेशापेक्षा, इह तु सत्यपि स्यमेव यञादित्वे नान्तरेणातिदेशं दीर्घः सिद्ध्यति; असुप्त्वात् । अरुदितामित्यत्रापि सत्यपि स्वयं वलादित्वेऽसार्वधातुकत्वादतिदेशेनैव वेट् प्रार्थनीयः, सत्यम्; द्वे कार्ये—सुप्संज्ञा च, दीर्घत्वं च । न हि 'प्रयोगसमवाय्येव कार्यमतिदेश्यम्' इति नियमोऽस्ति, यत्तु शास्त्रीयं तदेवातिदिश्यते । न च सुप्संज्ञाऽलाश्रयेति; तस्यामतिदिष्टायां स्वाश्रयं यञादित्वमाश्रित्य दीर्घत्वं भविष्यति । अरुदितामित्यत्राप्यातिदेशिकं सार्वधातुकत्वं स्वाश्रयं च वलादित्वमाश्रित्येड् भविष्यति ।

ननु च वृक्षायेत्यत्र स्थानिन एकारस्याल्त्वात्तदाश्रयं सुप्त्वमलाश्रयमेव, उच्यते; 'कार्यपेक्षमल्विधित्वं नोदाहरणापेक्षम् । एतदुक्तं भवति—यस्मिन् कार्ये विधीयमानेऽल एवासाधारणं किञ्चिद्रूपं निमित्तादिरूपेणाश्रीयते—'हृषि' 'हृलि' 'व्योर्वलि' 'हल्ङ्याब्भ्यः' 'अड्व्यवाये' इति—स एवाल्विधिः; 'सुपि च' इत्यत्र तु नैवंविधं किञ्चिदस्ति, केवलं वृक्षायेत्यत्रोदाहरणेऽलात्मकः स्थानी-

न्यासः

पदलोपी समास इति दर्शयति । स पुनः समासो मयूरव्यंसकादित्वाद् वेदितव्यः । समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इत्यनेनेत्यपरे, एतच्चायुक्तम् ; सूत्रप्रणयनकालादर्वाक्कालभावित्वादस्य वाक्यस्य । तस्मान् मयूरव्यंसकादित्वात् समासं कृत्वा नञ्समासः कृतः । न अल्विधिरनल्विधिरिति । कः पुनरलाश्रयो विधिः ? यो वर्णमात्राश्रितः । यस्तु समुदायाश्रितः सोऽनलाश्रयः । कार्यशब्देन कर्मसाधनेन विधिशब्दस्यार्थमाचक्षाणः 'विधीयते' इति विधिरिति तस्य कर्मसाधनत्वं दर्शयति ।

किमुदाहरणमिति प्रश्नः । धात्वाद्यादेशाः प्रयोजनमित्युत्तरम् । प्रयुज्यतेऽनेनेति प्रयोजनम् , उदाहरणेन च प्रयुज्यत इति । अर्थात् प्रश्नानुरूपं प्रतिवचनम् ।

---

१. 'अनल्विधिरनेकाल्विधिः' इति मुद्रितः पाठोऽसाधुः ।

धात्वादेशो धातुवद्भवति—अस्तेर्भूः, ब्रुवो वचिः; आर्धधातुके विषये प्रागेवादेशेषु कृतेषु धातोरिति तव्यादयो भवन्ति—भविता, भवितुम्, भवितव्यम्; वक्ता, वक्तुम्, वक्तव्यम्।

अङ्गादेशोऽङ्गवद्भवति—केन, काभ्याम्, कैः। किमः कादेशे कृतेऽङ्गाश्रया इनदीर्घत्वैस्भावा भवन्ति।

कृदादेशः कृद्वद्भवति—प्रकृत्य, प्रहृत्य। ल्यवादेशे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुग्भवति।

तद्धितादेशस्तद्धितवद्भवति—दाधिकम्, अद्यतनम्। 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञा भवति।

अव्ययादेशोऽव्ययवद्भवति—प्रस्तुत्य, प्रहृत्य, उपस्तुत्य। 'अव्ययात्' इति सुब्लुग भवति।

सुबादेशः सुब्वद्भवति—वृक्षाय, प्लक्षाय। 'सुपि च' इति दीर्घत्वं भवति।

पदमञ्जरी

त्येतावत् किमुदाहरणमिति प्रश्नः। धात्वाद्यादेशाः प्रयोजनमित्युत्तरम्। तत्र 'प्रयुज्यतेऽनेनेति प्रयोजनम्' उदाहरणं न प्रयुज्यत इत्यर्थात्प्रश्नानुरूपं प्रतिवचनम्।

ननु चास्तिब्रुवोरार्द्धधातुके परत आदेशाभ्यां भाव्यम्, तत् किमतिदेशेनेत्यत आह—*आर्द्धधातुके विषय इत्यादि*।

दाधिकम्। दध्नि संस्कृतम् 'दध्नष्ठक्'। *अव्ययादेश इति*। क्त्वामात्रस्य ल्यबादेशः, क्त्वान्तस्याव्ययसंज्ञा, स कथमव्ययादेशः, तस्मात् क्त्वाग्रहणेन ल्यपो ग्रहणात्तदन्तस्यापि संज्ञा भवतीत्येवम्परमेतत्। तत्रापि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति प्रस्तुत्येति संघातस्य भवति।

न्यासः

ननु चार्धधातुके परतो भाव्यमादेशाभ्याम्, तत्र किमत्रादेशेनेत्यत आह—**आर्धधातुके विषय इति**।

**प्रकृत्येत्यादि**। 'कुगति' इत्यादिना समासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'।

**दाधिकमिति**। दध्ना संस्कृतमिति 'दध्नष्ठक्'। **अद्यतनमिति**। 'सायंचिरम्' इत्यादिना ट्युप्रत्ययः, तुडागमश्च, योरनादेशः।

तिङादेशस्तिङ्वद्भवति—अकुरुताम्, अकुरुतम्। 'सुप्तिङन्तं पदम्' इति पदसंज्ञा भवति।

पदादेशः पदवद्भवति—ग्रामो वः स्वम्, जनपदो नः स्वम्। 'पदस्य' इति रुत्वं भवति।

वत्करणं किम्? स्थानी आदेशस्य संज्ञा मा विज्ञायीति। स्वाश्रयमपि यथा स्यात्। 'आङो यमहनः'—आहत, आवधिष्टेति। आत्मनेपदमुभयत्रापि भवति।

पदमञ्जरी

*वत्करणं किमिति*। विनापि तेन तदर्थो गम्यते, यथा क्ङितिकिदित्यादाविति प्रश्नः।

*स्थानीत्यादि*। असति वत्करणे संज्ञाप्रकरणत्वात् स्थान्यादेशस्य संज्ञा विज्ञायेत, मैवं विज्ञायीति वत्करणमित्यर्थः। किमर्थं पुनः स्थान्यादेशस्य संज्ञा नेष्यत इत्याह—*स्वाश्रयमपीति*। संज्ञायां हि स्थानिस्वरूपनिबन्धनम् 'आङो यमहनः' इत्यादि कार्यमादेश एव स्याद्, न स्थानिनि; न हि संज्ञोच्चारिता स्वयं कार्येण युज्यते। 'आत्मनेपदेष्वन्यतरस्याम्' इति च विषयसप्तमी विज्ञायते। *स्वाश्रयमपीति*। कोऽर्थः? स्थानिन्यपीत्यर्थः। तथा चोत्तरग्रन्थे 'उभयत्र' इति सप्तमीनिर्देशः।

न्यासः

**अकुरुताम्, अकुरुतमिति**। कृञो लङ्, 'तस्थस्थमिपाम्' इत्यादिना तसस्ताम्, थसस्तम्, तनादित्वात् 'तनादिकृञ्भ्य उः', धातोर्गुणः। 'अत उत् सार्वधातुके'।

**ग्रामो वः स्वम्, जनपदो नः स्वमिति**। युष्मदस्मदोः षष्ठी, 'बहुवचनस्य वस्नसौ' इति वस्नसादेशौ।

**वत्करणं किमिति?** विनापि तेन तदर्थो गम्यते, यथा—'असंयोगाल्लिट् कित्' इत्यादावित्यभिप्रायः। स्थानीत्यादि। प्रायेण ह्यस्मिन् पादे 'वृद्धिरादैच्' इत्यादीनि सूत्राणि संज्ञासंज्ञिसम्बन्धार्थान्येव दृष्टानि। अतोऽसति वत्करणे स्थान्यादेशस्य संज्ञा विधीयत इति विज्ञायते। तदेवं मा विज्ञायीत्येवमर्थं वत्करणम्। किमर्थं पुनः स्थान्यादेशस्य संज्ञा नेष्यत इत्याह—स्वाश्रयमपीत्यादि। संज्ञा हि संज्ञिप्रत्यायनार्था न स्वतः कार्यं प्रतिपद्यते, अपि तु तत्प्रत्यायितः संज्ञीति। अत्र यदि स्थान्यादेशस्य संज्ञा स्यात्, आदेशस्यैव हि संज्ञिनः कार्यं स्यात्, न संज्ञाभूतस्य स्थानिनः। ततश्च 'आङो यमहनः' इति वधेरात्मनेपदं स्यात्, न हन्तेः। वत्करणे तु सत्यतिदेशोऽयं भवति, अतिदेशेन चान्यसम्बन्धिकार्यमन्यत्र सम्पाद्यते; न तु तत्र स्वाश्रयं निवर्त्यते। तथा

**आदेशग्रहणं किम्? आनुमानिकस्याप्यादेशस्य स्थानिवद्भावो यथा स्यात्—पचतु। 'एरुः'।**

### पदमञ्जरी

*आदेशग्रहणं किमिति*। यथा 'पितृवत्स्थूल' इत्युक्ते सम्बन्धिशब्दात्पुत्र इति मन्यते, तथेहापि स्थानिवदित्युक्ते क इत्यपेक्षायाम् 'यदपेक्षं स्थानित्वं स एवादेशः' इति गम्यत इति प्रश्नः। *आनुमानिकस्येत्यादि*। द्विविधो हि आदेशः—प्रत्यक्षश्च 'अस्तेर्भूः' इत्यादिः, आनुमानिकश्च 'एरुः' इत्यादिः। अत्रेकारेणेकारान्तः स्थान्यनुमीयते, विषाणेनेव गौः। उकारेण चोकारान्त आदेशः, ततस्तेस्तुरिति सम्पद्यते। तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्नानुमानिकस्य, पुनःश्रुतेस्तु व्याप्त्यर्थत्वात् आदेशमात्रं स्थानिवद्भवति। तेन पचत्वित्यत्र 'तिङन्तं पदम्' इति पदसंज्ञा सिद्धा भवति। ननु चेकारमात्रस्योकारमात्रमादेशोऽस्तु, किं तदन्तानुमानेन? एवं हि 'एरुः' इत्येतच्च यथाश्रुतमेव व्याख्यातं भवति; आदेशग्रहणं च न कर्त्तव्यं भवति, 'एकदेशविकृतस्यानन्यत्वात् पदसंज्ञा

### न्यासः

हि ब्राह्मणवदस्मिन् क्षत्रिये वर्त्तितव्यमित्यतिदेशे तद् ब्राह्मणसम्बन्धि कार्यं क्षत्रिये भाव्यते। न तु ब्राह्मणस्य यत् स्वाश्रयमग्रभोजनादि तद् व्यावर्त्यते। स्वाश्रयमपीत्यपिशब्दादतिदेशप्रापितमादेशे पराश्रितमपि। आहतेति। हन्तेर्लुङ्, 'हनः सिच्' इति कित्त्वम्। 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपः। 'ह्रस्वादङ्गात्' इति सिचो लुक्। आवधिष्टेति। 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशः, इट्, 'अतो लोपः' षत्वष्टुत्वे।

आदेशग्रहणं किमिति। स्थानीति सम्बन्धिशब्दोऽयम्। तत्र यथा 'पितृवत् स्थूलः' इत्युक्तेऽन्तरेणाप्यत्र पुत्रग्रहणं सम्बन्धिशब्दत्वात् पुत्र इति गम्यते, तथा स्थानिवदित्युक्ते विनाप्यादेशग्रहणेन सम्बन्धिशब्दत्वादादेश एव स्थानिवद् भवतीति विज्ञायत इत्यभिप्रायः। आनुमानिकस्येत्यादि। 'अस्तेर्भूः' इत्यादौ स्थान्यपि शब्देन साक्षात् प्रत्याय्यते, आदेशोऽपि। पचत्वित्यत्र स्थान्यपि, आनुमानिक आदेशोऽपि। तथा हि—'एरुः' इत्यत्र न वस्तुत इकार एव स्थानी, अपि तु ति-शब्दः। नाप्युकारमात्र आदेशः, किं तर्हि? तु-शब्दः। लाघवार्थं तु तदेकदेशयोरिकारोकारयोरुच्चारणम्। तेनैकदेशद्वारेण समुदायस्य समुदाय एवादेशो विधीयते। तत्र यथा विषाणैकदेशेनोपलब्धेन विषाणी समुदायोऽनुमीयते, तथैकदेशेनेकारेणोकारेण च तिशब्दस्तुशब्दश्च। अत्र च शास्त्रे यस्य च क्रियाभिसम्बन्धः साक्षाच्छब्दादेव प्रतीयते, यस्य च कुतश्चिदर्थप्रकरणादेरनुमीयते, तयोः पूर्वस्य प्राधान्यमितरस्य विपर्यय इष्यते। तथा हि—'सहयुक्तेऽप्रधाने' इत्यत्र वृत्तिकारः 'पुत्रेण सहागतः' इत्याद्युदाहृत्य वक्ष्यति—

अनल्विधाविति किम् ? द्युपथित्यदादेशा न स्थानिवद्भवन्ति— द्यौः, पन्थाः, स इति । 'हल्ङ्याब्' इति सुलोपो न भवति ।

पदमञ्जरी

भविष्यति । एवं तर्हि पुनःश्रुतिरेव लिङ्गम्, एकदेशविकारः शास्त्रे नाश्रीयत इति, तेन—

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

इति सिद्धं भवति ।

*द्यु पथित्यदादेशा इति* । 'दिव औत्', 'पथिमथ्यृभुक्षामात्', 'त्यदादीनामः'— इत्येते । ननु सामान्यातिदेशे विशेषानतिदेशः, ततश्च यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमिति ब्राह्मणमात्रकार्यमेव भवति, न माठरादिविशेषकार्यम्; तथा 'स्थानिवदादेशः' इत्युक्ते यः स्थानी यदाकारविशिष्टः सूत्रे श्रुतस्तदादेशस्य तदाकारप्रयुक्तेनैव कार्येण भवितव्यम् । 'क्त्वो ल्यप्' इत्यत्र च वस्तुस्थित्या सन्निहितमपि वलादित्वं स्थानिरूपेण नाश्रितम् । तथा हि—इडादिरपि क्त्वा भवत्येव,

न्यासः

'पितुरत्र क्रियादिसम्बन्धः शब्देनोच्यते, पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्' इति । प्रधानेतरयोश्च सन्निधाने प्रधानस्यैव कार्येण संप्रत्ययो युक्तः । तथा चाह— 'प्रधाने कार्यसम्प्रत्ययात् सिद्धम्' इति । अत्र हि यद्यादेश इति नोच्येत, ततो य आदेशशब्देनोपादाय विधीयमानत्वात् प्राधान्यमनुभवति तस्यैव स्थानिवद्भावः स्यात्, नाप्रधानस्यानुमानिकस्य । तस्मात् तस्यापि स्थानिवद्भावो यथा स्यादित्येवमर्थमादेशग्रहणम् । तेन पचत्वित्यादावपि 'सुप्तिङन्तं पदम्' इति पदसंज्ञा सिद्धा भवति । कुतः पुनरेतदवसीयते ? 'एरुः' इत्यनेनैकदेशद्वारेण तु-शब्दः समुदायो विधीयते, न पुनर्यथाश्रुतमिकारमात्रस्योकारमात्रमेवेति; पचत्वित्यत्र पदसंज्ञाकार्योपलब्धेः, तद्धि न विना पदसंज्ञया, सापि न विना तिङ्वद्भावेन, सोऽपि न विना समुदायादेशेनेति । तस्मिन् हि सति स्थानिवद्भावेन यत्नप्रतिपादितेन तिङ्भावो लभ्यते; नान्यथेति गतमेतत्। अथानुमानिके गृहीते कथमितरस्य ग्रहणं लभ्यते ? एवं मन्यते—स्थानिवदित्येतावानेको योगः कर्त्तव्यः, एतेन योगेनादेशः प्रधानभूतः सम्बन्धिशब्दत्वाल्लभ्यते । तत आदेश इति द्वितीयो योगः, आनुमानिकस्य स्थानिवद्भावाय । अत्र च स्थानिवदिति वर्त्तते । एवमुभयोः प्रत्यक्षानुमानशिष्टयोर्ग्रहणमुपपद्यते ।

**अनल्विधाविति** । द्वयोरपि योगयोः शेषभूतः । **द्युपथित्यदादेशा इत्यादि** । 'दिव औत्', 'पथिमथ्यृभुक्षामात्', 'त्यदादीनामः'—इत्येते 'हल्ङ्याब्भ्यः' इति सुलोपे कर्त्तव्ये न स्थानिवद्भवन्ति; तस्य हल्मात्रमाश्रित्य प्रवृत्तेरलाश्रयत्वात् ॥

## अचः परस्मिन्पूर्वविधौ ॥ ५७ ॥

पूर्वेणानल्विधौ स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदमारभ्यते। आदेशः स्थानिवदिति वर्तते। अच इति स्थानिनिर्देशः। परस्मिन्निति निमित्तसप्तमी। पूर्वविधाविति विषयसप्तमी। अजादेशः परनिमित्तकः

पदमञ्जरी

क्त्वा केवलोऽपि, दत्वायेति यगन्तोऽपि, इष्ट्वीनमिति मान्तोऽपि; तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्ययत्वादि, तदादेशोऽतिदिश्यताम्, वलादित्वस्य तु कुतोऽतिदेशः? एवं क इष्ट इत्यादावपि च यण इक् भवति, दिवोऽलोऽन्त्यस्यो-स्वौत्वे भवतः, पथ्यादीनामन्त्यस्याद्भवति, त्यदादीनामन्त्यस्याकारः, विसर्जनीयस्य सत्वमित्येवं यणादिरूपेण स्थानिन आश्रयणम्। ततश्च तत्तदाकारप्रयुक्तस्यैव कार्यस्यापि अतिदेशः, न हल्त्वादिविशेषनिबन्धनस्येति नार्थोऽनल्विधावित्यनेन। यत्र तर्हि विशेषरूपमेव स्थानित्वेनाश्रीयते, यथा—'च्छ्वोः शूठ्' इति वकारः, तत्र तत्कार्यमादेशस्य मा भूद्—अक्षद्यूभ्याम्। वलि लोपो न भवति।

अथात्रापि वकारान्तस्याङ्गस्यालोऽन्त्यस्योडिति रूपेण स्थानिन आश्रयणम्, एवमपि विशेषातिदेशज्ञापनार्थमिदमुच्यते; अन्यथा ल्यपो वलादित्ववत् कित्त्वस्याप्यतिदेशो न स्यात्, देवित्वेत्यादावकितोऽपि क्त्वः सम्भवात्। अनुबन्धाश्च स्थानिन्यसन्त एव कार्येषु युज्यन्त इति तत्कार्येष्वनल्विधाविति निषेधो न भवति। लिङ्गाच्च। यदयं 'सेर्ह्यपिच्च' इत्याह, तज्ज्ञापयति—भवत्यनुबन्धकार्याणामतिदेश इति॥

*अचः परस्मिन् पूर्वविधौ। अच इति स्थानिनिर्देश इति।* यद्यप्यनूद्यमानादेशविशेषणत्वात् स्थानषष्ठी न लभ्यते, तथाप्यचो य आदेश इत्युक्ते तत्स्थानिक एव प्रतीयत इति। परस्मिन्निति निमित्तभावे सप्तमी, न परसप्तमी; परशब्देनैव परत्वस्योक्तत्वात्, परस्मिन्य आदेश इति अनुवादत्वाच्च, क्ङिति च गुणवृद्धी इतिवत्; पूर्वविधाविति विषय इति प्रकृतत्वात् स्थानिवत्त्वस्य।

न्यासः

**अचः परस्मिन् पूर्वविधौ॥** किमर्थमिदमुच्यते? अनल्विधौ स्थानिवद्भाव उक्तः, अल्विध्यर्थमिदम्। पटयतीत्यादौ हि 'अत उपधायाः इति वृद्धिरलाश्रया; अकारस्योपधाया अल्त्वात्। तस्मात् पूर्वेण न प्राप्नोतीत्येके। अजादेश एव परनिमित्तक एव पूर्वविधावेव कर्त्तव्ये स्थानिवद् भवतीति नियमार्थमित्यन्ये।

**अच इति स्थानिनिर्देश इति।** 'अचः' इत्यनेन स्थानषष्ठ्यन्ततां दर्शयति। **परस्मिन्निति निमित्तसप्तमीति।** न परसप्तमी, परशब्देनैव परस्योक्तत्वादित्यभिप्रायः। **पूर्वविधाविति, विषय इति।** प्रकृतत्वात् स्थानिवद्भावस्येति गम्यते, पूर्वविधौ

पूर्वविधौ कर्तव्ये स्थानिवद्भवति। पटयति। अवधीत्। बहुखट्वकः।

पदमञ्जरी

*पूर्वविधौ कर्तव्ये स्थानिवदिति*। एवं पदतात्पर्यं दर्शयित्वा वाक्यार्थमाह—*अजादेश इत्यादि*। किमर्थमिदमुच्यते, पूर्वत्र स्थानिकार्यमादेशेऽतिदिष्टम्, इह तु स्थानिनि सति पूर्वस्य यत्कार्यं तदादेशेऽपि सति पूर्वस्य भवतीत्यतिदिश्यते। ननु तत्रापि स्थानिनिमित्तमन्यस्य तदप्यतिदिश्यते, यथा वृक्षायेति 'सुपि च' इति दीर्घत्वम्? एवं तर्ह्यल्विध्यर्थमिदम्। तथा हि—वव्रश्चेत्युरदत्वे 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणप्रतिषेधः स्थान्यलाश्रयोऽस्माद्वचनाद्भवति। इदं च 'संप्रसारणे परतः प्रतिषेधः' इति पक्षे प्रयोजनम्, 'संप्रसारणभाविनि यण्येव प्रतिषेधः' इति तु पक्षे न प्रयोजनम्। इहाचितीकः, बहुचितीक इति चितेः कपि दीर्घत्वे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति स्थान्यलाश्रयः स्वरो भवति। एवं यातेर्यङन्तात् क्विपि अतो लोपे यलोपविधिं प्रति स्थानिवत्त्वनिषेधाद् यलोपे च या या ति इति स्थिते यङकारलोपस्य स्थानिवत्त्वात् 'आतो लोप इटि च' इत्याकारलोपे पुनर्यलोपे यातिरिति भवति। न च पुनराकारलोपः, पुनश्च यलोप इति प्रत्ययमात्रस्य श्रवणप्रसङ्गः, आल्लोपस्य स्थानिवत्त्वाच्चिणोलुङ्न्यायेनासिद्धत्वाद्वा। तथा च वरेविधौ स्थानिवत्त्वं निषिध्यते—यायावर इति। स्थानिवद्भावादातो लोपो मा भूदिति। तथा तिष्टतेर्यङन्तात् क्विप्, अल्लोपयलोपयोस्तेष्टीति स्थिते अल्लोपस्य स्थानिवत्त्वादियङ् भवति, तथा चोत्तरसूत्रे

न्यासः

विषये स्थानिवद्भवति, नान्यस्मिन्नित्यर्थः। पूर्वस्य विधिः पूर्वविधिः। विधिशब्दश्चायं कर्मसाधनः—विधीयत इति विधिः। भावसाधनो वा—विधानं विधिरिति। कर्मसाधने ह्येतस्मिन् पूर्वस्येति शेषलक्षणा षष्ठी। पूर्वस्य व्यवस्थितस्य लब्धसत्ताकस्य सम्बन्धिनि कार्ये कर्तव्य इत्यर्थः। भावसाधने तु 'पूर्वस्य' इति कृद्योगलक्षणा कर्मणि षष्ठी। पूर्वस्यापरिनिष्पन्नस्य विधाने कर्तव्य इत्यर्थः। पूर्वस्मिन् विधातव्य इति यावत्।

पूर्वत्वं पुनरिहादेशापेक्षम्, अजपेक्षम्, निमित्तापेक्षं वा; एषामेवादेशादीनामिह सन्निधानात्। तत्रादेशः स्वरितत्वात् सन्निहितः; इतरयोस्त्वत्रैव सूत्र उपादानात्। ननु च त्रिष्वप्येषु दोषः, तत् कथमादेशाद्यपेक्षया पूर्वत्वं शक्यमाश्रयितुम्, आदेशापेक्षे हि पूर्वत्व आश्रीयमाणे पटयतीत्यादौ स्थानिवद्भावो न सिध्यति; लोपो हि तत्रादेशः, न च तेन पूर्वपरता सम्भवति; तस्याभावरूपत्वात्।

स्यादेतत्—लोपस्य यः स्थानी तदपेक्षया पौर्वापर्यमस्तीति तद्द्वारेणादेशापेक्षयाप्यौपचारिकं तद् भविष्यतीति वार्तमेतत्; बहुखट्वकादिषु मुख्यं पौर्वापर्ये सत्यौपचारिककल्पनाया अयुक्तत्वात्। 'व्यक्तिः पदार्थः' इत्यस्य दर्शनस्याश्रयणाददोषः।

पदमञ्जरी

कण्डूतिरित्यत्र उवङ्प्रसङ्गं चोदयित्वा 'अस्तु तस्यैव च्छ्वोः शूडित्यूठ् करिष्यते' इत्युक्तम्, इयङि च कृते यलोपे च तेष्टितिरिति भवति। न च पुनरियङ्, आदिष्टादचः पूर्वत्वात्। तथा पेपीयतेः क्विचि अल्लोपयलोपयोः 'एरनेकाचः' इति यणि यलोपे पेप्तिरिति भवति। 'शो तनूकरणे' यङन्तात् क्विचि अल्लोपयलोपाल्लोपेषु पूर्वत्रासिद्धीये न स्थानिवदिति स्थानिवत्त्वनिषेधाच्छ्शां ष इति षत्वे शाष्टिरिति भवति। एवं चिचीयतेश्चेक्तिरित्येषा दिक्।

तथा तितउमाचष्ट इति णिचि टिलोपस्य स्थानिवत्त्वादचो ञ्णितीत्यस्याभावे 'अत उपधायाः' इति स्थान्यलाश्रया वृद्धिर्भवति। न चात्र किलुगुपधात्वेत्युपधाविधिं प्रति स्थानिवत्त्वनिषेधः, तस्य प्रत्ययविधिविषयत्वात्, सत्यां च वृद्धौ पुकि सति तितापयतीति भवति। न च पुक्यपि स्थानिवत्त्वम्; आदिष्टादचः पूर्वत्वात्। ननु पूर्वस्य कार्ये कर्त्तव्ये सति स्थानिवत्त्वेन भवितव्यम्, अत्र च सर्वत्र स्थानिवत्त्वे सति पूर्वस्य कार्यप्राप्तिरिति इतरेतराश्रयम्। नात्र स्थानिवत्त्वात् प्रागेव पूर्वस्य कार्ये प्राप्ते स्थानिवत्त्वम्, किं तर्हि? प्राग्वा पश्चाद्वा पूर्वस्य कार्ये चिकीर्षिते। अत एव वरेविधौ स्थानिवत्त्वनिषेधः। तदेवमल्विध्यर्थमिदम्।

किञ्च—ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यमित्यत्र ब्राह्मणाश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं युद्धादिकं व्यावर्त्यते। पूर्वसूत्रेऽपि स्थान्याश्रयं प्राप्यते, न स्वाश्रयं व्यावर्त्यते, यथा—वृक्षायेति दीर्घत्वमादेशाश्रयं भवति; भविता, भवितुम्, भवितव्यमिति गुणः। इह तु स्थान्यलाश्रयमेवेष्यते, स्वाश्रयं नेष्यते। तथा च पटयतीति टिलोपे कृते प्राप्ता उपधावृद्धिर्न भवति, अवधीदिति हलन्तलक्षणा, बहुखट्वक इति 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति स्वरो न भवति, वाय्वोर्यलोपो न भवति, तन्वन्तीतीण् न भवति। एवं बहूनि स्वाश्रयनिवृत्तेरुदाहरणानि। अत एव द्विर्वचनादावधौ स्थानिवत्त्वनिषेधः। अतोऽजादेशः परनिमित्तकः पूर्वस्य विधौ स्थानिवदेव यथा स्यात्, मा भूत्स्वयं निमित्तमिति नियमार्थमपीदमारब्धव्यम्।

कथं पुनरेकेन यत्नेनोभयं लभ्यम्, विधिश्च, नियमश्च? विधिग्रहणसामर्थ्यादिति तन्निरूपणे वक्ष्यामः। अथ वा—विधिग्रहणं विधिमात्रे स्थानिवद्भावो यथा स्यादशास्त्रीये च विपरीते च। तेन पटयतीत्यादौ स्थानिनि दृष्टो वृद्ध्यभावादिरशास्त्रीयोऽप्यतिदिश्यते। तत्र *वृत्तिकारेण* यत्नसाध्यत्वादशास्त्रीयोदाहरणानि दर्शितानि। विधिशब्दः कर्मसाधनः, पूर्वस्येति शेषलक्षणषष्ठी; पूर्वस्य व्यवस्थितस्य सतः सम्बन्धिनि कार्ये कर्त्तव्ये इति। पूर्वत्वं त्वत्राजपेक्षमाश्रीयते; नादेशापेक्षम्, निमित्तापेक्षं वा। न चाजपेक्षे पूर्वत्वे विधिशब्दो भावसाधनः सम्भवति। भावसाधने हि तस्मिन्, पूर्वस्येति कर्मणि षष्ठीविज्ञानात् पूर्वस्मिन्विधातव्ये स्थानिवदित्यर्थः स्याद्। अवस्थिते चाचि ततः पूर्वं किञ्चि-

पदमञ्जरी

द्विधेयं भवति, इह चादेशः स्थानिवदिति वचनात् आदेशेन स्थानी निर्वर्तित इति नायमर्थः सम्भवति। अत्रादेशः परनिमित्तकः, तस्यैवादेशस्य स्थानिभूतो योऽच्, ततः पूर्वस्मिन् विधातव्य इति। तथा हि–'अचो य आदेशः' इत्यादेशात्प्रागवस्थानूद्यते, ततश्च संनिधानात् प्रतीयमानमवधित्वमपि तदवस्थस्यैवाचो युक्तम्। अत एवोच्यते–'योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः' इति। आदेशनमादिष्टं तदकृतं यस्य सोऽनादिष्टः, अकृतादेशादचः पूर्वस्येत्यर्थः। आदेशात्प्रागवस्थायामिति यावत्। न चास्या अवस्थायाः पूर्वस्मिन् विधातव्ये तदादेशः स्थानिवदिति सम्भवति। ननु कर्मसाधनेऽप्यजादेशः स्थानिवद्भवति–अकृतादेशाचः पूर्वस्य विधाविति नायमर्थः सम्भवति, स्थानि-

न्यासः

व्यक्तौ हि पदार्थे प्रतिलक्ष्यं लक्षणं प्रवर्तते। तत्र यदि पटयतीत्यादिष्वौपचारिकत्वात् पौर्वापर्यस्य स्थानिवद्भावो न स्याद्, यदेतद्विषयं लक्षणं तस्यानवकाशत्वाद् वैयर्थ्यं स्यात्। अयं तर्हि दोषः—व्याकरणमधीते वैयाकरणः, स्वश्वस्येदं सौवश्वमित्यत्र य्वोः स्थानिवद्भावादैचोरायावौ प्राप्नुतः। तस्मात् प्रथमस्तावत् पक्षोऽयुक्तः। द्वितीये तु काममेष दोषो न भवति। तथा हि—तत्र योऽचः पूर्वस्तस्य विधौ कर्तव्ये स्थानिवद्भवतीत्येषः सूत्रार्थः, इह च 'न य्वाभ्यां पदान्ताभ्याम्' इति वचनात् प्रागेवैजागमाद् यणादेशेन भवितव्यम्। तेन नास्त्यैचोरजपेक्षं पूर्वत्वमिति न भवति स्थानिवद्भावः, तदभावादैचोरायावावपि न प्राप्नुतः; किन्त्वत्र 'अचः' इत्येतदादेशविशेषणार्थं षष्ठ्यन्तं प्रतिज्ञातम्, न तु पञ्चम्यन्तम्। तदा चाचः पूर्वस्येत्येष एवार्थो न लभ्यते, नैव दोषः; यद्यपि हि 'अचः' इति षष्ठ्यन्तं तथापि यदा दिग्योगो विवक्ष्यते तदा पञ्चम्यन्तं सम्पद्यते। अयं तर्हि दोषः—इह तन्वन्तीत्युप्रत्ययस्य यणादेशे कृत इट् प्राप्नोति, न ह्यत्राचः पूर्वस्य व्यवस्थितस्य किञ्चित् कार्यं विधीयते; यतो यणादेशस्य स्थानिवद्भावादिडागमो न स्यात्। तृतीये तु पक्षे यणादेश एव निमित्तात् पूर्वः। तस्य व्यवस्थितस्येटि विधातव्ये स्थानिवद्भावो लभ्यत इति न भवति तन्वन्तीत्यत्रेट्प्रसङ्गः; किन्त्वाद्ये पक्षे यो दोषः, स इहापि प्रसज्येत। वैयाकरणः, सौवश्वमित्यत्रापि य्वौ निमित्तात् पूर्वौ भवत इति। ननु च निमित्तात् पूर्वस्य कार्ये विधातव्ये स्थानिवद्भाव उच्यते, न चेह निमित्तात् पूर्वयोर्य्वोः किञ्चित् कार्यं विधीयते। न ह्यायावादेशौ य्वोः कार्यम्, किं तर्हि ? ऐचः, नैतदस्ति; ऐचो हि यत् कार्यं तद् य्वोरपि सम्बन्धि भवत्येव, तयोस्तद्भक्तयोस्तदवयवभूतत्वात्।

अत्रोच्यते—आद्यन्तयोः पक्षयोर्यो दोष उक्तः, स तावन्न भवति; यस्माद् बहिरङ्गावैचौ, तद्धिताश्रयत्वादङ्गाश्रयत्वाच्च; अन्तरङ्गावायावौ, तद्धितनिरपेक्षत्वाद् वर्णाश्रयत्वाच्च। 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वादैचोरायावौ न भविष्यतः। इत-

पदमञ्जरी

वद्भावदशायामच आदेशेन निर्वर्त्तितत्वात् । नात्र सम्प्रत्यचः पूर्वस्येत्ययमर्थः, किं तर्हि ? अचोऽवस्थानदशायां पूर्वत्वेन दृष्टस्याजवस्थाप्रभृतिपूर्वस्येत्यर्थः । तदेवमजपेक्षस्य पूर्वत्वस्याश्रयणात् कर्मसाधन एव विधिशब्दः । किं पुनः कारणमजपेक्षमेव पूर्वत्वमाश्रीयते, न पुनरादेशापेक्षं निमित्तापेक्षं वा ? उच्यते; तदपेक्षे पूर्वत्वे वैयाकरणः, सौवश्व इत्यत्र स्थानिवद्भावादैचोरायावौ प्राप्नुतः, तावपि हि यणादेशात्तन्निमित्ताच्च परस्मादचः पूर्वस्य कार्यम् । न च वाच्यम्—'सत्यपि स्थानिवत्त्वेऽन्तर्भूताज्निमित्ततयाऽन्तरङ्गयोरायावोः कर्त्तव्ययोर्बहिर्भूततद्धितापेक्षतया बहिरङ्गावैचावसिद्धावित्यायावौ न भविष्यतः' इति; 'नाजानन्तर्ये बहिरङ्गप्रक्लृप्तिः' इतिवचनात् । यथा—अक्षद्यूरिति बहिर्भूतक्विपपेक्षोऽप्यूडन्तर्भूताजपेक्षे यणि नासिद्धो भवति । अजपेक्षे तु पूर्वत्वे वि + आकरणः, सु + अश्व इत्यजवस्थायां य्वोरभावेनैचोरदर्शनादप्रसङ्गस्तदाह—'अचः पूर्वत्वविज्ञानादैचोः सिद्धम्' इति । किं च—निमित्तापेक्षे पूर्वत्वे द्वाभ्याम्, देयम्, लवनमित्यत्रात्वेत्वगुणाः स्वनिमित्तात्पूर्वेषां स्वेषामेव कार्येषु दीर्घगुणावादेशेषु स्थानिवत्स्युः । तथोभयोरपि पक्षयोरपीपचदित्यादौ 'सन्वल्लघुनि' इति सन्वद्भावो न स्यात्; उपधाह्रस्वस्य स्थानिवत्त्वादलघूपधत्वात् । अजपेक्षे तु पूर्वत्वे पाचि + अत् इति स्थिते द्विर्वचनमुपधाह्रस्वत्वं णिलोपः—इत्येतेषु प्राप्तेषु परत्वादन्तरङ्गत्वाच्च णिलोपे कृते परत्वान्नित्यत्वाच्च ह्रस्वत्वे च पश्चाद् द्विर्वचनेऽभ्यासस्य स्थानिनोऽचः पूर्वत्वेनादृष्टत्वान्नास्ति स्थानिवद्भावः । तथा च तत्र तत्रोच्यते—'योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भाव आदिष्टाच्चैषोऽचः पूर्वः' इति । तस्मादजपेक्षमेव पूर्वत्वम् । यद्येवम्, तन्वन्तीत्यत्रेटि कर्त्तव्ये यणः स्थानिवत्त्वं न स्यात्, तन् उ अन्तीत्यजवस्थायां यत्पूर्वमङ्गं न तस्येट्, किं तर्हि ? ततः परस्यादेशस्यैव । निमित्तापेक्षे तु यणो निमित्तादन्त्यकारात्पूर्वस्य तस्यैव यण इड् विधेय इति कर्मसाधने भावसाधने च विधिशब्दे स्थानिवत्त्वं लभ्यते । आदेशापेक्षेऽपि भावसाधने यणः पूर्वत्वेनेटो विधेयत्वात्सिध्यति, नैष दोषः; 'आर्धधातुकस्येड्' इत्यत्र 'एकाच उपदेशे' इत्यतः 'उपदेशे' इत्यनुवृत्तेरुपदेशे वलादेरिड् भविष्यति, नन्दक इत्यत्रापि तर्हि प्राप्नोति ? 'नेड्वशि कृति' इति निषेधो भविष्यति; तत्राप्युपदेश इत्यनुवृत्तेः । एवमपि चोरिष्यत इत्यादौ वलादिलक्षणे चिण्वदिटि च प्राप्ते नित्यत्वाच्चिण्वदिडिति । वक्ष्यति—'नित्यश्चायं वलिनिमित्तो विघाती' इति, तन्नोपपद्यते; उक्तेन प्रकारेण वलादिलक्षणस्यापीटो नित्यत्वात् । एवं तर्हि बहिरङ्गस्य यणोऽसिद्धत्वादिडभावः ।

यद्वा—पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासोऽप्याश्रीयते, तेन पूर्वस्मा-दर्शादिटो निमित्तत्वेनाश्रितात्परस्य यण इति कर्तव्ये स्थानिवद्भावो भविष्यति ॥

पटुमाचष्ट इति णिचि टिलोपे कृते तस्य स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति। अवधीत्—अतो लोपस्य स्थानिवद्भावाद् 'अतो हलादेर्लघोः' इति हलन्तलक्षणा वृद्धिर्न भवति। बहुखट्वक इति—'आपोऽन्यतरस्याम्' इति ह्रस्वस्य स्थानिवद्भावाद् 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति स्वरो न भवति।

## न्यासः

रस्मिन्नपि पक्षे यो दोष उक्तः, सोऽपि न भवत्येव; तत्र भावसाधनस्य विधिशब्दस्याश्रयणात्। द्विविधो हि विधिशब्दः प्राग् दर्शितः—कर्मसाधनः, भावसाधनश्च। तत्र कर्मसाधने सर्वमिष्टं न सिध्यतीति भावसाधनोऽप्याश्रीयते। तेन तन्वन्तीत्यत्रेट एवापरिनिष्पन्नस्याचः पूर्वस्य विधाने कर्तव्ये स्थानिवद्भावः सिद्धो भवति। कर्मसाधनेऽप्यदोषः; यणादेश एवात्राचः पूर्वः, तस्य विधाने कर्तव्ये स्थानिवद्भावो भविष्यति। आदेशापेक्षया हि पूर्वत्वे विधिशब्दे च कर्मसाधने तन्वन्तीत्यत्रेडागमप्रसङ्गो न निवार्य एव। न हि यणादेशात् पूर्वस्य व्यवस्थितस्य कस्यचिदिड् विधीयते, किं तर्हि? यणादेशस्यैव। भावसाधने तु तस्मिन्न दोषः; यणादेशात् पूर्वस्यापरिनिष्पन्नस्येट एव विधानात्। तस्मात् तत्रापि पक्षे भावसाधन एव विधिशब्दोऽङ्गीकर्तव्यः।

पटयतीति। 'तत्करोति तदाचष्टे' इति णिच्, 'णाविष्ठवत् प्रातिपदिकस्य' इति टिलोपः। ननु चात्र व्यवधानात् पूर्वत्वं न सम्भवति; नैष दोषः; व्यवहितेऽपि हि पूर्वशब्दो वर्तते, यथा—मथुरायाः पूर्वं पाटलिपुत्रमिति। ननु च द्वितीया समर्थाण्णिजुत्पत्तौ, तत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां सत्यां जश्त्वे सति पडयतीति भवितव्यम्। टिलोपस्य स्थानिवद्भावाज् जश्त्वं न भवतीति चेत्, न; जश्त्वविधौ स्थानिवद्भावप्रतिषेधात्, नैष दोषः; 'तदाचष्टे' इत्यत्र हि तदिति न द्वितीयासमर्थादिति, कुतस्तर्हि? कर्मण इति। कुत एतत्? अर्थनिर्देशपरत्वात्। एतदुक्तं भवति—कर्मसंज्ञकात् तदाचष्ट इत्यस्मिन्नर्थे णिज् भवतीति। तस्मादसुबन्ताण्णिजुत्पत्तेः पदसंज्ञाया अभावाज् जश्त्वं न प्रवर्त्तते। अवधीदिति। हन्तेर्लुङ्, 'हनो वध लुङि' इति वधशब्दोऽदन्त आदेशः, 'अतो लोपः', 'आर्धधातुकस्येट्', 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः। हलन्तलक्षणेति। 'वदव्रज' इत्यादेः सूत्राद्धल्ग्रहणानुवृत्तेः 'अतो हलादेर्लघोः' इति वृद्धिर्हलन्तलक्षणा। बहुखट्वक इति। ननु च 'स्वरविधिं प्रति न स्थानिवद् भवति' इति प्रतिषेधं वक्ष्यति, अतः स्थानिवद्भावस्य प्राप्तिरेव नास्तीत्ययुक्तमेतदुदाहरणम्, नैतत्; विशेषे हि स प्रतिषेधः—स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद् भवतीति। न चायं लोपाजादेशः स्वरो

अच इति किम् ? प्रश्नः । आक्राष्टाम् । आगत्य । प्रश्न इति—

पदमञ्जरी

कानि पुनः पञ्चमीसमासप्रयोजनानि ? इदं तावत्प्रयोजनम्—तन्वन्तीति । किञ्च बेभिदिता, माथितिकः, अपीपचन् । बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोः कृतयोः 'एकाच उपदेशेऽनुदात्ताद्' इति इट्प्रतिषेधः स्याद्, अल्लोपस्य स्थानिवत्त्वान्न भवति, नैतदस्ति; बेभिद्य तृ इति स्थितेऽल्लोपश्च प्राप्नोति इट् च; परत्वादिट् । नित्योऽल्लोपः-कृतेऽपीटि प्राप्नोति; इट् पुनरनित्यः, न हि कृतेऽल्लोपे प्राप्नोति, नित्येनाल्लोपेन बाध्यते । यस्य च निमित्तं लक्षणान्तरेण न विहन्यते तद् नित्यम्, अत उभयोर्नित्ययोः परत्वादिडेव भविष्यति । इदं तर्हि मथितं पण्यमस्य माथितिक इति ठस्येकादेशे कृते, यस्येति लोपे चेकस्य स्थानिवद्भावेन ठग्रहणेन ग्रहणात् 'इसुसुक्तान्तात्कः' इति कादेशः प्राप्नोति, यस्येति लोपस्य स्थानिवद्भावान्न भवति । एतदपि सन्निपातपरिभाषया ठस्येति वर्णग्रहणेनाल्विधित्वेन स्थानिवद्भावाभावाद्वा सिद्धम् । इदं तर्हि अपीपचन्, अपीपच + अन् इति स्थितेऽन्त्याकारस्य चङकारस्य च 'अतो गुणे' इति पररूपत्वे तस्य परं प्रत्यादिवद्भावाज् झिग्रहणेन ग्रहणे सति 'सिजभ्यस्तविदिभ्यश्च' ।इति जुस् प्राप्नोति, णिलोपस्यैकादेशस्य वा स्थानिवद्भावान्न भवति । तदेवमजपेक्षमेव पूर्वत्वमाश्रीयते; विधिशब्दश्च कर्मसाधनः, शेषषष्ठ्या च समास इति न कश्चिद् दोष इति स्थितम् ।

*पटयतीति* । णाविष्ठवदिति टिलोपः । *अवधीदिति* । 'हना वध लिङि' 'लुङि च' इति वधादेशः । *हलन्तलक्षणेति* । 'वदव्रज'इत्यत्र हलन्तस्येत्यनुवृत्तेर्हलन्तलक्षणा । *बहुखट्वक* इत्यत्र 'स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्' इति वचनात् स्वरविधावप्यत्र स्थानिवत्त्वं भवत्येव ।

*प्रश्न इति* । 'यजयाचयत' इत्यादिना नङ्, 'च्छ्वोः शूठ्' इति छस्य शः ।

न्यासः

न भवतीति खकाराकारस्योदात्तत्वं न भवति । 'कपि पूर्वम्' इत्युत्तरपदान्तोदात्तत्वमेव भवति ।

प्रश्न इति । 'यजयाचयतविच्छप्रच्छ' इत्यादिना नङ् । तुकि न स्थानिवद्भवतीति । तुकि कर्त्तव्ये न स्थानिवद्भवतीत्यर्थः । यदि हि स्याच् छकारमात्रस्य शादेशे कृते स्थानिवद्भावाद्विहितस्य तुकः श्रवणं स्यादित्येके, एतच्चायुक्तम् ; अत्र ह्यन्तरङ्गत्वात् 'छे च' इति तुकैव प्राग् भवितव्यम् । न चात्रेदमस्ति 'वार्णादाङ्गं बलीयः' इति, नानाश्रयत्वात् । यत्र ह्येकं निमित्तमाश्रित्य युगपद् वार्णमाङ्गञ्च प्राप्नोति, तत्रेदमुपतिष्ठते, यथा—इयायेति । अत्राकारमाश्रित्याभ्यासेकारस्य 'इको यणचि' इति यण् प्राप्नोति, 'अभ्यासस्यासवर्णे' इतीयङ् च । तत्र 'वार्णादाङ्गं बलीयः' इत्यस्यो-

प्रच्छेर्नङ्प्रत्यये 'च्छ्वोः शूडनुनासिके च' इति छकारस्य शकारः पर-

पदमञ्जरी

*तुकि न स्थानिवद्भवतीति* । तुकि कर्त्तव्ये न स्थानिवद्भवतीत्यर्थः । नन्वन्तरङ्गत्वात् पूर्वं तुका भाव्यम्, यत्र चैकं निमित्तीकृत्य युगपदाङ्गवार्णयोः प्रसङ्गः, तत्र वार्णादाङ्गं बलीयः, यथा—करोतेर्लिटि णलि कृ अ इति स्थिते, गौरित्यत्र सावकाशाम् 'अचो ञ्णिति' इति वृद्धिं बाधित्वाऽन्तरङ्गत्वात्प्राप्तं यणं वृद्धिरेव बाधते, प्रश्न इत्यत्र तु शस्य नङ् निमित्तं तुकस्तु छः, भिन्नकाला चानयोः प्राप्तिरिति नायमस्या विषय इति तुकि सति 'च्छ्वोः शूठ्' इत्यत्र सतुक्कच्छकारनिर्देशेन तस्यैवादेशः । एवं च सत्यपि स्थानिवत्त्वे सतुक्कच्छग्रहणेन शो गृह्यते, न केवलं छग्रहणेनेति कुतस्तुकः प्रसङ्गः ! अत एव नङो ङित्वमपि विश्न इति गुणो मा भूदिति, तस्मादप्रत्युदाहरणमेतदिति प्रत्युदाहरणान्तरमाह—*आक्राष्टामिति* । 'स्पृशमृशकृषतृपदृषां सिज् वा वक्तव्यः' इति क्सापवादः पक्षे

न्यासः

परस्थानादियङेव भवति । प्रश्न इत्यत्र तु शादेशमनुनासिकमाश्रयति, तुक् पुनश्छकारम् ; अतो नानाश्रयत्वान्नोपतिष्ठते । तस्मात् तुकात्र भवितव्यमेव । अवश्यञ्चैतदेवं विज्ञेयम् ; अन्यथा 'च्छ्वोः शूडनुनासिके च' इत्यत्र यद्वक्ष्यति वृत्तिकारः—"अन्तरङ्गत्वात् 'छे च' इति तुकि कृते सतुकस्यायमादेशः" इति, तद्विरुध्यते ।

अन्ये तु व्याचक्षते—'च्छ्वोः शूनुनासिके' इति सूत्रे 'सतुकस्य च्छकारस्य निर्देशः' इत्येव केनचिदाचार्येण शिष्याः प्रतिपादिताः, केनचित्तु 'तुग्विरहितस्य शुद्धस्य' इत्येवम्, उभयञ्चैतत् प्रमाणम् । द्वैतत्वे तत्राङ्गेन वा च्छ्वौ विशेष्येते, छकारवकाराभ्यां वाङ्गमिति । तत्राद्ये पक्षेऽङ्गस्य यश्छस्तस्य शादेश इति वाक्यार्थः; सतुकस्य च स्थानित्वेनोपादानात् । अन्तरङ्गे तुकि कृते 'नानर्थकेऽलोऽन्त्यविधिः' इति तदन्तविध्यभावात् समुदायस्यैवादेशो भवति । यदा शकारविधौ सतुकस्य च्छकारस्य निर्देशः, प्रश्न इत्येतन् तदानीमङ्ग्रहणस्याप्रत्युदाहरणमेव; तुकः पुनः प्रसङ्गाभावात् । यदा तु च्छकारवकाराभ्यामङ्गं विशेष्यते, तदा छकारान्तस्याङ्गस्य स्थानित्वम् । अस्मिन् पक्षे शविधौ शुद्ध एव छकार उपात्तो वेदितव्यः । अन्तरङ्गत्वात् तु पूर्वं तुकि कृते पश्चादलोऽन्त्य परिभाषया उपस्थानात् छकारमात्रस्य शकारः । तस्मिन् कृते निमित्ताभावात् तुको निवृत्तिः; यथा—स्थातेत्यत्र पत्वनिवृत्तौ ष्टुत्वस्य । अत्र पक्षे प्रश्न इत्येतत् प्रत्युदाहरणमङ्ग्रहणस्य । यद्यत्र स्थानिवद्भावः स्यात्, तुकः प्रत्यावृत्तिर्भवेत्; निमित्तसद्भावात्, यथा—प्रत्यष्ठादित्यत्र ष्टुत्वस्य । 'तुकि न स्थानिवद्भवति' इत्यस्यायमर्थः—योऽसौ निमित्ताभावान्निवृत्तस्तुगासीत्, तमेव पश्चात् प्रत्यावर्तमानं प्रति न स्थानिवद् भवतीति पुनः प्रत्यावृत्तिरेव ।

निमित्तकस्तुकि कर्तव्ये[1] न स्थानिवद्भवति । आक्राष्टामिति—'झलो झलि' इति सिचो लोपः परनिमित्तकः कृषेः षकारस्य 'षढोः कः सि' इति ककारे कर्तव्ये न स्थानिवद्भवति । आगत्येति—'वा ल्यपि' इति अनुनासिकलोपः परनिमित्तकस्तुकि कर्तव्ये न स्थानिवद्भवति ।

परस्मिन्निति किम् ? युवजानिः । वधूटीजानिः । वैयाघ्रपद्यः ।

**पदमञ्जरी**

सिच् । अनुदात्तस्येत्यम्, यणि 'वदव्रज' इति वृद्धिः । 'पूर्वत्रासिद्धे न स्थानिवद्' इति वचनादत्राप्यतृप्यन्नाह—*आगत्येति* । 'वा ल्यपि' ।

*युवजानिरिति* । बहुव्रीहौ पुंवद्भावः, युवतिशब्दस्य वयोवचनत्वेनाजातिवाचित्वात् 'जातेश्च' इति प्रतिषेधो न भवति । *यलोपे न स्थानिवदिति* । ननु योऽत्रादेशो नासौ लोपस्य निमित्तम्, तस्य वल्मात्रनिमित्तत्वात्; यश्च निमित्तं नकारः नासावादेश इति स्थानिवत्त्वं न भविष्यति । न च जायाशब्दस्य जनेरौणादिके यङ्प्रत्यये 'ये विभाषा' इत्यात्वे च व्युत्पादितत्वाद् निङः स्थानिवत्त्वे सत्यातो लोपप्रसङ्गः, न ह्युणादिषु व्युत्पत्तिकार्यमवश्यं भवति, अत उदाहरणा-

**न्यासः**

पूर्वविधिरिति । ननु च यद्यत्र तुकः प्रत्यावृत्तिः स्यान् नङो ङित्करणमनर्थकं स्यात् । तद्धि प्रच्छेः संप्रसारणार्थं वा विच्छेर्गुणप्रतिषेधार्थं वा क्रियते । तत्र प्रच्छेर्नङि संप्रसारणेन न भवितव्यम्; 'प्रश्ने चासन्नकाले' इति निपातनात् । यदि च स्थानिवद्भावे सति तुकः प्रत्यावृत्तिः स्यात् ततो गुणप्रतिषेधार्थमपि न स्यात्, अलघूपधत्वादेव गुणो न भविष्यति, ततश्चानर्थकमेवैतत् स्यात् ? नानर्थकम्; अनित्यमागमशास्त्रमिति ज्ञापनार्थत्वात् । अनित्यत्वज्ञापने त्वागमशासनस्य 'स्नुक्रमोरनात्मनेपदनिमित्ते' इत्यत्र यद्वक्ष्यति—'क्रमेस्तु कर्तर्यात्मनेपदविषयादसत्यात्मनेपदे कृति प्रतिषेधो वक्तव्यः' इति, तन्न वक्तव्यं भवति । 'उछि उञ्छे', ''विछ गतौ', 'सनाद्यन्ता धातवः' इत्येवमादयो निर्देशाश्चोपपन्ना भवन्ति ।

आक्राष्टामिति । 'कृप विलेखने', आङ्पूर्वाल्लुङ्; च्लिः, 'स्पृशमृशकृषतृपदृपां च्लेः सिज् वा' इत्युपसंख्यानात् क्सस्यापवादः पक्षे सिच्, तसस्ताम्, 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यमागमः, यणादेशः, 'वदव्रज' इत्यादिना वृद्धिः ।

वैयाघ्रपद्य इति । व्याघ्रस्येव पादावस्येति बहुव्रीहिः । 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यन्तलोपः । व्याघ्रपादिति स्थिते गर्गादित्वाद् यञ्, 'पादः पत्' इति पद्भावः ।

१. न्यासपदमञ्जरीभ्यामसम्मतोऽयं पाठः । एवमुपरिष्टादपि ।

आदीध्ये। युवजानिरिति—'जायाया निङ्' न परनिमित्तकः, तेन यलोपे न स्थानिवद्भवति। वैयाघ्रपद्य इति—न परनिमित्तकः पादस्यान्तलोपः पद्भावं न प्रतिबध्नाति। आदीध्ये इति—दीधीङ उत्तमपुरुषैकवचने टेरेत्वस्यापरनिमित्तकत्वाद् 'यीवर्णयोर्दीधीवेव्योः' इति लोपो न भवति।

पूर्वविधाविति किम्? हे गौः। बाभ्रवीयाः। नैधेयः। हे

पदमञ्जरी

न्तरोपन्यासः—*वैयाघ्रपद्य इति*। व्याघ्रस्येव पादावस्येति 'पादस्य लोपोऽहस्त्यादिभ्यः' इत्यपरनिमित्तः 'गर्गादिभ्यो यञ्'। ननु सत्यपि स्थानिवत्त्वे वचनात् पद्भावो भविष्यति; यद्येवम्, पादे इत्यत्रापि प्राप्नोति; सति तु परस्मिन्नित्यस्मिन्वैयाघ्रपद्य इत्यत्र पद्भावस्य चरितार्थत्वाद् पादे इत्येकादेशस्य स्थानिवत्त्वात् पद्भावाभावः। कथं पुनरेकादेशस्य स्थानिवत्त्वम्, न ह्ययमच आदेशः, किं तर्हि? अचोः, उच्यते; वर्णनिर्देशेषु जातिग्रहणाद्, 'अच' इत्येकत्वस्याविवक्षितत्वाद् अचोरप्यादेशः स्थानिवत्। द्वयोरपि वा स्थानित्वे यदेकस्य स्थानित्वं तदाश्रयं तस्य स्थानिवत्त्वं भविष्यति। अत एव श्रायसौ, गौमतौ, चातुरौ, आनडुहाविति श्रायसादिभ्योऽणन्तेभ्य औप्रत्यय एकादेशस्यादिवत्त्वात् प्राप्तौ नुमामौ न भवतः; उदकं वहति, 'कर्मण्यण्' संज्ञायामुदभावः, सप्तम्येकवचन एकादेशस्यादिवत्त्वाद्भत्वे सति प्राप्तः 'वाह ऊठ्' न भवति उदवाहे इति। *आदीध्य इति*। अदादित्वाच्छपो लुक्। परस्मिन्नित्युच्यमाने स्थानिवद्भावाभावात् कृते टेरेत्वे लोपो न प्राप्नोति। टेरेत्वं तु कृताकृतप्रसङ्गित्वान्नित्यमिति तदेव भवति। ननु च परस्मिन्नित्यसति शब्लुकोऽपि स्थानिवत्त्वात् तद्व्यवधानादेव लोपो न भविष्यति, न; 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषु' इति लुका लुप्तस्य स्थानिवत्त्वप्रतिषेधात्।

हे *गौरिति*। 'गोतो णित्'। *बाभ्रवीया इति*। बभ्रोरपत्यमिति 'मधुबभ्रो-

न्यासः

आदीध्ये इति। अदादित्वाच्छपो लुक्। अथात्र टेरेत्वात् प्रागेव कस्माल्लोपो न भवति? स्याद्, यदि 'परस्मिन्' इति वचनं न स्यात्। तस्मिन् ह्यसत्युभयोर्नित्यत्वात् परत्वाच्च लोपेनैव युक्तं भवितुम्। 'परस्मिन्' इत्युच्यमाने तु स्थानिवद्भावाभावात् कृते टेरेत्वे न प्राप्नोतीत्यनित्यो लोपः। टेरेत्वं तु कृताकृतप्रसङ्गित्वान्नित्यम्। तस्मात् तदेव पूर्वं भवति।

हे गौरिति। 'गोतो णित्' इति णित्त्वात् सर्वनामस्थानस्य 'अचो ञ्णिति' इति

गौरिति—वृद्धिरजादेशः संबुद्धिलोपे कर्त्तव्ये न स्थानिवद्भवति । बाभ्रवीया इति—बाभ्रव्यस्यामी च्छात्रा इति 'वृद्धाच्छः' इति छः, 'हलस्तद्धितस्य' इति यकारलोपे कर्त्तव्येऽवादेशो न स्थानिवद्भवति । नैधेयः—'आतो लोप इटि च' इत्याकारलोपः, 'इतश्चानिञः' इति द्व्यज्लक्षणे प्रत्ययविधौ न स्थानिवद्भवति ॥

पदमञ्जरी

ब्राह्मणकौशिकयोः' इति यञ्, 'ओर्गुणः,' 'वान्तो यि प्रत्यये' इत्यवादेशः । *अवादेशो न स्थानिवद्भवतीति* । ननु चासत्यपि स्थानिवद्भावे संनिपातपरिभाषया न भवितव्यमेवात्र यलोपेन, नैतदस्ति; 'अचः' इत्ययं संघातो यादिसन्निपातकृतः; न च स लोपस्य निमित्तम्, किं तर्हि ? वकारमात्रम् । यद्येवम्, स्थानिवद्भावस्याप्यप्रसङ्गः, योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः । *नैधेय इति* । निपूर्वाद्धाञः 'उपसर्गे घोः किः', 'आतो लोपः', 'द्व्यचः' 'इतश्चानिञः' इति ढक् । ननु च पूर्वस्मादपि विधौ स्थानिवत्त्वमुक्तम्, तत् कथमेतानि प्रत्युदाहरणानि ? नैष दोषः; अत्राप्यजपेक्षस्य पूर्वस्याश्रयणाद् योऽनादिष्टादचः पूर्वस्ततः परस्येति । एवमपि हे गौरित्यत्र प्राप्नोति व्यवहितेऽपि परशब्दवृत्तेर्गकारात्परस्य सोर्लोपः, एवमितरयोरपि, नैतदेवम्; पूर्वस्य विधिरिति षष्ठीसमास एवायम्, तत्रानुवादत्वात् स्थानषष्ठ्यभावात् सम्बन्धसामान्ये षष्ठी—पूर्वसम्बन्धिनि विधाविति । सम्बन्धश्च द्विविधः—कार्यित्वेन, निमित्तत्वेन वा । यत्र कार्यित्वेन स पूर्वस्य विधिः, यत्र निमित्तत्वेन स पूर्वस्मात्; ततश्च योऽनादिष्टादच पूर्वस्तन्निमित्तत्वेनाश्रित्य यत्कार्यं प्राप्तं स एव पूर्वस्माद्विधिः, यथा—अपीपचन्निति । अत्र हि योऽनादिष्टो णिच् चङ् वा, ततः पूर्वमपीपच् इत्येवाभ्यस्तं

न्यासः

वृद्धिः । सम्बुद्धिलोपे कर्त्तव्य इति । 'एङ्ह्रस्वात् सम्बुद्धेः' इत्यनेन । बाभ्रव्यस्येति । बभ्रोरपत्यमिति 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ्, 'ओर्गुणः' 'वान्तो यि प्रत्यये' इति वान्तादेशः, आदिवृद्धिः, बाभ्रव्य इति स्थिते 'वृद्धाच्छः' 'यस्येति च' इत्यकारलोपः । अवादेशो न स्थानिवद्भवतीति । ननु चासत्यपि स्थानिवद्भावे 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न भवितव्यमेवात्र यलोपेन, तथा हि—यकारादाववादेशेनात्मलाभः प्रतिलब्ध इति नोत्सहते स तं बाधितुम्; नैतदस्ति; सङ्घातो ह्यत्र सन्निपातलक्षणः, नावयवो हल्; सत्यपि वा तस्य सन्निपातलक्षणत्वे न भवत्येष दोषः; अनित्यत्वात् सन्निपातलक्षणपरिभाषायाः । अनित्यत्वं तु 'नलोपः सुप्स्वर' इत्यादौ सूत्रे ज्ञापयिष्यते । नैधेय इति । निपूर्वो डुधाञ्, 'उपसर्गे घोः किः', आतो

पदमञ्जरी

परस्य झेर्जुसो निमित्तम् । तन्वन्तीत्यत्र योऽनादिष्टोऽच् उप्रत्ययस्ततः पूर्वं यत् तन्निमित्तत्वेनाश्रीयते तद्विघातवङ्गस्येत्यनुवृत्तेः । एतदेव तत्राङ्गाधिकारस्य प्रयोजनम् । हे गौरित्यादौ तु योऽनादिष्टादचः पूर्वो गकारादिर्न तत्सम्बुद्धिलोपादेर्निमित्तम्, यच्च निमित्तमोकारादिर्नासावनादिष्टादचः पूर्वं इति न दोषः । इह तर्हि वेतस्वानिति, टिलोपस्य पूर्वविधौ स्थानिवत्वात् सकारात्पूर्वस्यानुपधात्वाद् 'मादुपधायाः' इति वत्वं न स्यात् । न च स्थानिवद्भावेन सन्निहितमकारमपेक्ष्याकारान्तादिति लभ्यते, तस्यानादिष्टादचः पूर्वत्वाभावात् तदपेक्षत्वे स्थानिवद्भावात्, नैष दोषः; 'पूर्वत्रासिद्धे न स्थानिवत्' ।

विधिग्रहणं किम्, ननु पूर्वसूत्रादेवानुवर्त्तते ? समासद्वयपरिग्रहार्थम् । असति हि तस्मिन् पूर्वस्येत्युक्ते पूर्वस्माद्विधौ न स्यात्, पूर्वस्मादित्युक्ते पूर्वस्य विधौ न स्यात्, नैतदस्ति; पूर्वस्येत्युक्तेऽपि अनुवादत्वात् स्थानषष्ठ्यभावात् सर्वः पूर्वसम्बन्धी विधिः प्रतिपत्स्यते । एवं तर्हि विधिमात्रे स्थानिवद्यथा स्यात् शास्त्रीये विपरीते च । यद्वा—विधिग्रहणं द्वितीयो यत्नः, तत्राचः परस्मिन्पूर्वस्येत्येको योगः, विधावित्येव । तेन वव्रश्चेत्यादौ स्थान्यलाश्रयमतिदिश्यते । ततो विधौ, अचः परस्मिन्पूर्वस्येत्येव, नियमार्थमेतत्—अजादेशः परनिमित्तकः पूर्वविधौ स्थानिवदेव, न तु स्वयं निमित्तमिति । तेन पटयतीत्यादि सिद्धं भवतीति । नन्वसत्यपि द्वितीययत्ने यथा चोलवत् काश्मीरेषु व्रीहयः, मरुभूमिवदस्मिन्प्रदेशे

न्यासः

लोपः, निधि इति स्थिते द्व्यचः 'इतश्चानिञः' इति ढक् । ननु पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासस्याप्यभीष्टत्वात् पूर्वस्मादपि विधौ कर्तव्ये स्थानिवद्भावेन भाव्यम्, तथा हि 'ठस्येकः' इत्यत्र वक्ष्यति—"मथितं पण्यमस्य माथितिक इत्यत्र यस्येति लोपे कृते 'इसुसुक्तान्तात्कः' इति स्थानिवद्भावादिकस्य कादेशः प्राप्तः; सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न भवति, अकारलोपस्य स्थानिवद्भावात्; पूर्वस्मादपि विधौ स्थानिवद्भवति" इति । तदेवं यस्मात् पूर्वस्मादपि विधौ स्थानिवद्भावोऽनेन भवति, तस्माद् हे गौरित्यादिष्वपि स्थानिवद्भावेन भवितव्यमेवेत्ययुक्तान्येतानि प्रत्युदाहरणानि, नैष दोषः; पूर्वस्माद् विधौ कर्तव्ये यः स्थानिवद्भावः, तस्यानित्यत्वात् । अत एव चानित्यत्वादप्रधानभूतोऽसाविति वृत्तावस्य सूत्रस्य पूर्वस्मादिति न प्रतिपादितस्तदेवाप्राधान्यमस्य दर्शयितुम् । कुतः पुनस्तस्यानित्यत्वमवसितम् ? 'निष्ठायां सेटि' इत्यत्र सेड्ग्रहणात् । तदेवमर्थं क्रियते—इटि कृते णिलोपो यथा स्यादिति । यदि ह्यकृत एव तस्मिन् णिलोपः स्यात्, कारितमित्यत्रेडागमो न स्यात्; 'एकाच' इति प्रतिषेधात् । तथा च तत्र वक्ष्यति—"सेडिति किम् ? संज्ञपितः पशुः, 'सनीवन्तर्ध' इति ज्ञपेरिड् विकल्प्यते । 'यस्य विभाषा' इति निष्ठायामिट्प्रति-

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिषु ॥ ५८ ॥

पूर्वेणातिप्रसक्तः स्थानिवद्भाव एतेषु विधिषु प्रतिषिध्यते ।

पदमञ्जरी

जलमित्यादौ दृष्टान्ते प्रसिद्धस्य भावस्याभावस्य वा यथादर्शनमतिदेशः, एवमत्रापि भविष्यति ? विषम उपन्यासः; युक्तं तत्र भावस्यैवाभावस्यैव च प्रसिद्धत्वाद्, इह तूदाहरणभेदेन भावाभावयोः प्रसिद्धावपि 'स्थानिवदादेशः' इत्युक्तेऽश्रुतक्रियापदेषु वाक्येषु भवतीत्येवाध्याहारस्य प्रसिद्धत्वाद् भावातिदेशः स्याद् इत्यलमतिप्रबन्धेन ॥

न *पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु* ॥ द्विर्वचने यलोपादौ च तावत् तदेव विधेयम्, न तु तस्य व्यवस्थितस्य किञ्चित् । कौ स्त इत्यादौ तु पदान्तस्य सतः कार्यमावादि पदान्तस्य वाऽऽवादेर्विधानमित्युभयथा सम्भवः । एवं वरेविधावपि । तथापि सर्वग्रहाय भावसाधन एव विधिशब्दः । *एतेष्विति* । पदान्तादिविधेयभेदेन भिन्नानि यानि विधानानि एतेष्वित्यर्थः ।

न्यासः

षेधः । अथ पुनरेकाच इति तत्रानुवर्तते, तत्र निष्ठायाम् 'अत्र भवितव्यमिडागमेन' इति सेड्ग्रहणमनर्थकं स्यात्, तत् क्रियते कालावधारणार्थम्, इडागमे कृते णिलोपो यथा स्यात्" इति । अकृते तस्मिण्लोपे सति कारितमित्यत्र 'एकाच उपदेशेऽनुदात्तात्' इति प्रतिषेध इटः प्रसज्येत । यदि च पूर्वस्माद् विधौ कर्तव्ये नित्यं स्थानिवद्भावः स्यात्, णिलोपस्य स्थानिवद्भावे सत्यनेकाच्त्वादिट्प्रतिषेधस्य प्रसङ्ग एव नास्तीति सेड्ग्रहणं न कुर्यात्, कृतञ्च; ततोऽवसीयते—'पूर्वस्माद् विधावनित्यः स्थानिवद्भावः' इति । तेन गौरित्यादिषु पूर्वस्माद् विधौ कर्तव्ये स्थानिवद्भावो न भवति ।

अथ विधिग्रहणं किमर्थम्, यावता पूर्वस्येत्येवं सिद्धम् ? तथा हि, कार्यापेक्षया षष्ठी भविष्यति—पूर्वस्य विधौ कर्तव्य इति, नैतदस्ति; असति हि विधिग्रहणे यदि पूर्वस्येत्युच्येत, पूर्वस्माद् विधौ स्थानिवद्भावो न स्यात् । अथ पूर्वस्मादित्युच्येत, पूर्वस्य विधौ न स्यात् । विधिग्रहणे सति षष्ठीसमासः पञ्चमीसमासश्च लभ्यत इति सर्वत्र सिध्यति । तस्मात् समासद्वयार्थं विधिग्रहणं कर्तव्यम् ।

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु । अत्रापि विधिशब्दो भावसाधनः कर्मसाधनश्च । स च प्रत्येकमभिसम्बध्यते । तत्र यथायोगं क्वचिद् भावसाधन आश्रीयते, क्वचित् कर्मसाधनः । तत्र द्विर्वचनविधौ भावसाधनः, तत्र हि तदेव विधातव्यम्, न हि तस्यावस्थितस्य किञ्चित् कार्यम् । अन्यत्र तु कर्मसाधनः । तत्र हि व्यवस्थितस्य पदान्तादेः कार्यान्तरविधानात् ।

पदान्तविधिं प्रत्यजादेशो न स्थानिवद्भवति—कौ स्तः, यौ स्तः। तानि सन्ति, यानि सन्ति। 'श्नसोरल्लोपः' 'क्ङिति सार्वधातुके' इति परनिमित्तकः, स पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत् स्यात्, अस्माद्वचनान्न भवति।

द्विर्वचनविधिं प्रति न स्थानिवद्भवति—दद्ध्यत्र। मद्ध्वत्र। यणादेशः परनिमित्तकस्तस्य स्थानिवद्भावाद् 'अनचि च' इति धकारस्य

पदमञ्जरी

पूर्वविधावित्यादि। यद्यपि व्याकरणे न पदानि संस्क्रियन्ते, न वाक्यम्, तथापि वाक्यगते स्त इत्यादिके पदे व्युत्पाद्यमाने कावित्यादेः पदस्यासत्यपि निमित्तत्वे सन्निधानमविरुद्धम्। ततश्चानादिष्टादचः पूर्वत्वसम्भवादस्ति स्थानिवत्त्वप्रसङ्ग इति भावः।

दध्यत्रेति। स्थानिवद्भावप्रतिषेधसामर्थ्याद् 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येतदपि न प्रवर्तते। शच्यावित्यादावपि बहिर्भूताजपेक्षत्वाद्यण् बहिरङ्ग एव 'वर'

न्यासः

कौ स्तः, यौ स्त इति। अस्तेर्लट्, तस्, अदादित्वाच्छपो लुक्, पूर्वविधावावादेशे यणादेशे च कर्त्तव्ये स्थानिवत् स्यादिति। कथं पुनः स्थानिवत् स्यात्, यावता पदसंस्कारायैव प्रयुक्तत्वाद् व्याकरणस्य? 'स्तः' इत्यादिकं पदं पदान्तरनिरपेक्षमेव संस्क्रियते, अनादिष्टादचो यः पूर्वः, तस्य विधिं प्रति स्थानिवद्भावेन भवितव्यम्। न चायं प्रकारः पदान्तरनिरपेक्षे पदसंस्कारे सम्भवति; 'स्तः' इत्यादिके पदे संस्क्रियमाणे कावित्यादेः पदान्तरस्यासन्निधानात्। किं पुनरिदं राजशासनम्—पदसंस्कारायैव शब्दानुशासनं कर्त्तव्यमिति? अथ शास्त्रकारस्यैवायमभिप्रायः? इति चेत्, न; शास्त्रकारेण हि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' इति युष्मदाद्युपपदे मध्यमादिपुरुषविधानाद् वाक्यसंस्कारप्रयुक्तमपि शास्त्रमेतदिति सूचितम्। अत्र 'कौ' इत्यादिकं पदं प्रागेव व्यवस्थाप्य 'स्तः' इत्यादेः पदस्य संस्कारे क्रियमाणेऽनादिष्टादचः पूर्वं औकारादिर्भवतीति स्थानिवद्भावः स्यात्। अतः प्रतिषेध उच्यते।

ननु च दध्यत्रेत्येवमादौ प्रतिषिद्धेऽपि स्थानिवद्भावे बहिरङ्गस्य यणादेशस्यासिद्धत्वादन्तरङ्गं द्विर्वचनं न प्राप्नोति। तत् किमित्येवमाह—अस्माद्वचनाद् भवतीति। न च शक्यं वक्तुम्—"स्थानिवद्भावप्रतिषेधाद् 'असिद्धं बहिरङ्गम्' इत्येषा न प्रवर्त्तते" इति। यत्रोभयमेकपदाश्रयम्—पट्व्यौ पट्व्यः, शुच्यौ शुच्य इत्येवमादौ, तत्र स्थानिवद्भावप्रतिषेधस्यार्थवत्त्वान् नैष दोषः। द्विर्वचनमेव बहिरङ्गम्; बह्वपेक्षत्वात्। तथा ह्यच उत्तरस्य यरोऽनचीति च त्रितयं तदपेक्षते। यणादेशस्त्विकोऽचीति द्वयमेव।

द्विर्वचनं न स्यादस्माद्वचनाद्भवति ।

वरे योऽजादेशः स पूर्वविधिं प्रति न स्थानिवद्भवति—अप्सु यायावरः प्रवपेत पिण्डान्। यातेर्यङन्ताद् 'यश्च यङः' इति वरचि कृते 'अतो लोपः' परनिमित्तकः, तस्य स्थानिवत्त्वाद् 'आतो लोप इटि च' इत्याकारलोपः स्यादस्माद्वचनान्न भवति ।

पदमञ्जरी

इति निपातनादलुक्। *यायावर इति*। 'नित्यं कौटिल्ये गतौ' इति यङ्। *अतो लोपःपरनिमित्तक इति*। 'आर्द्धधातुके' इति परसप्तमीपक्ष इति भावः। तथा च 'अनुदात्तेतश्च हलादेः' इत्यत्रादिग्रहणम्। असति हि तस्मिन् हलन्तादिति विज्ञायेत, ततश्च जुगुप्सनो मीमांसन इत्यत्र युज्न स्यादिति। यदि च सा विषयसप्तमी स्यात्, प्रागेव प्रत्ययोत्पत्तेरतो लोपे सति हलन्तत्वादत्रापि युच् सिद्धः स्यात्। यत्तु 'अचो यत्' इत्यत्र वक्ष्यति—'अज्ग्रहणं किम्, यावता हलन्ता-ण्ण्यतं वक्ष्यति ? अजन्तभूतपूर्वादपि यथा स्याद्—दित्स्यम्, धित्स्यमिति। तद्वि-षयसप्समीपक्ष इति वेदितव्यम्। परसप्तमीपक्षे हि प्राक्प्रत्ययोत्पत्तेरतो लोपा-भावादनुपपन्नं तत्स्यात्।

न्यासः

वरे इति। ननु चात्र समासे सति सप्तम्या लुका भवितव्यम्। तत् कथं वरे इति निर्देशः ? अत एव निपातनादलुगित्यदोषः। अन्ये त्वीकारप्रश्लेषोऽत्रेति वर्णयन्ति। एवञ्च सम्बन्धं कुर्वन्ति—'वरे योऽजादेशस्तस्य विधिं प्रति न स्थानिवत्, ईविधिं च प्रति न स्थानिवत्' इति। तेनामलक्याः फलं विकार इति 'नित्यं वृद्धशरादिभ्यः' इति मयट्, तस्य 'फले लुक्' इति लुक्, अतः 'लुक् तद्धितलुकि' इति गौरादिलक्षणस्य ङीपो लुकि कृते तस्य स्थानिवद्भावाद् 'यस्येति च' इति लोपः प्राप्नोति। ईकारे परतो यो विधिस्तं प्रति स्थानिवद्भावप्रतिषेधान्न भवति। ननु चाजादेशः परनिमित्तकः पूर्वविधौ स्थानिवद्भवतीत्युच्यते, न च लुका पौर्वापर्यमस्तीत्यत एव स्थानिवद्भावो न भविष्यति ? तदप्रयोजनमीकारप्रश्लेषस्य। लोपेनापि तर्हि पौर्वापर्यं नास्तीति पट्यतीत्यादावपि स्थानिवद्भावो न स्यात्। अथ तत्र स्थानिद्वारकं पौर्वापर्यं सम्भवति, इहापि तथा स्यात्। ये त्वीकारप्रश्लेषं नेच्छन्ति, त आमलक्याः फलं विकार आमलकमित्येतदर्थं नेति योगविभागं कुर्वन्ति :

यायावर इति। अत्यर्थं यातीति 'धातोरेकाचः' इत्यादिना यङ्, द्विर्वचनम्, अभ्यासस्य ह्रस्वः, 'दीर्घोऽकितः' इति दीर्घः, ततो वरच्, अतो लोपे कृते 'लोपो व्योर्वलि' इति यकारलोपः। अतो लोपः परनिमित्तक इति। आर्धधातुके परतो

यलोप । यलोपविधिं प्रत्यजादेशो न स्थानिवद्भवति—कण्डूतिः । कण्डूयतेः क्तिनि कृते, अतो लोपः परनिमित्तकः, 'लोपो व्योर्वलि' इति यलोपे स्थानिवत् स्यादस्माद्वचनान्न भवति ।

स्वर । स्वरविधिं प्रति अजादेशो न स्थानिवद्भवति—चिकी-

पदमञ्जरी

*कण्डूयतेः क्तिनि कृत इति* । 'क्तिन्नावादिभ्यो वक्तव्यः' इत्यनेनेति भावः । 'क्तिचि' इति तु युक्तः पाठः । कण्डूतिरित्यत्राल्लोपस्य स्थानिवत्त्वादुवङ् प्राप्नोति, अस्तु; च्छ्वोः शूठ्' इत्यूठ् भविष्यति । न चोठ्यपि स्थानिवत्त्वम्, आदिष्टादचः पूर्वत्वात् । अत एवोठः पुनरुवङ् न भवति ।

न्यासः

विधानात् । यद्यतो लोपः परनिमित्तकः, ततः 'अचो यत्' इत्यत्र 'अज्ग्रहणं किम्, यावता हलन्ताण्ण्यतं वक्ष्यति' इति चोद्यं समुत्थाप्य 'अजन्तभूतपूर्वादपि यथा स्याद्—दित्स्यं धित्स्यम्' इति यद् वक्ष्यति तद् विरुध्यते; न हि परनिमित्तकेऽतो लोपेऽजन्तभूतपूर्वाद् यतो विधिः सम्भवति, प्राग् कृदुत्पत्तेरतो लोपस्याभावात्, अभावस्तु परस्य निमित्तस्याभावात् ? पक्षभेदादविरोधः । तत्र ह्यार्धधातुक इति वर्त्तते । 'आर्धधातुके' इति विषयसप्तमी चैषा, परसप्तमी चेति पक्षद्वयम्; आर्धधातुकसामान्यविवक्षायां सामान्येन पौर्वापर्यं न सम्भवतीति विषयसप्तमी भवति, आर्धधातुकव्यक्तिविवक्षायां तु व्यक्तेः पौर्वापर्यं सम्भवतीति परसप्तमी । यदा तु व्यक्तिद्वारकं सामान्यस्य पौर्वापर्यं विवक्ष्यते; तदापि परसप्तम्येव । तत्राद्ये पक्ष आर्धधातुके विषयभूते प्रागेव यदुत्पत्तेरतो लोपो भवति, इतरत्र तु तस्मिन्नुत्पन्ने । तत्र 'अचो यत्' इत्यत्र यदज्ग्रहणस्य प्रयोजनं वक्ष्यति, तत् पूर्वं पक्षमाश्रित्य । यत् पुनरिहातो लोपः परनिमित्तक इत्युक्तम्, तदितरं पक्षम् । तस्माद् विषयभेदादविरोधः । परसप्तमीपक्षे तु तत्राज्ग्रहणं विस्पष्टार्थमेव वेदितव्यम् ।

कथं पुनर्ज्ञायते परसप्तमीपक्षोऽपि तत्राभिमत इति ? 'अनुदात्तेतश्च हलादेः' इत्यादिग्रहणात् । तद्ध्येवमर्थं क्रियते—हलन्तादित्येवं मा विज्ञायीति । एवं हि विज्ञायमाने जुगुप्सनः, मीमांसनः—इत्यत्र युज् न स्यात्; अजन्तत्वात् । यदि च 'आर्धधातुके' इति विषयसप्तम्येवैषाभिमता स्यात्, न परसप्तम्यपि, तदाऽऽदिग्रहणमनर्थकं स्यात्; आर्धधातुके विषयेऽकारलोपे कृते जुगुप्सतिमीमांसत्योरपि हलन्तत्वात् । तस्मादादिग्रहणाद् विज्ञायते—परसप्तमीपक्षोऽपि तत्राभीष्ट इति । विषयसप्तमीपक्षे तु तत्रादिग्रहणं विस्पष्टार्थमेव द्रष्टव्यम् ।

कण्डूतिरिति । 'कण्ड्वादिभ्यो यक्', तदन्तात् 'स्त्रियां क्तिन्' । चिकीर्षकः,

षंकः, जिहीर्षकः। ण्वुलि कृते 'अतो लोपः' परनिमित्तको लिति प्रत्ययात्पूर्वमुदात्तमिति स्वरे कर्त्तव्ये न स्थानिवद् भवतीति ।

सवर्ण। सवर्णविधिं प्रति अजादेशो न स्थानिवद् भवति—शिण्ढि, पिण्ढि। शिषेः पिषेश्च लोण्मध्यमपुरुषैकवचने, 'रुधादिभ्यः श्नम्' हित्वधित्वष्टुत्वजश्त्वेषु कृतेषु, 'श्नसोरल्लोपः' क्ङिति सार्वधातुके परनिमित्तकोऽनुस्वारस्य ययि परसवर्णे कर्त्तव्ये न स्थानिवद् भवति ।

अनुस्वार। अनुस्वारविधिं प्रत्यजादेशो न स्थानिवद् भवति—शिंषन्ति, पिंषन्ति। 'नश्चापदान्तस्य झलि' इति अनुस्वारे कर्त्तव्ये

पदमञ्जरी

*परसवर्णे न स्थानिवद्भवतीति*। ननु श्नसोरल्लोपे कृते पश्चादनुस्वारो भव न्नादिष्टादचः पूर्व इति कथमस्य परसवर्णे कर्त्तव्ये स्थानिवत्त्वप्रसङ्गः ? स्यादेतत्-स्थानिनो नकारस्यानादिष्टादचः पूर्वत्वादादेशोऽनुस्वारोऽपि स्थानिवद्भावादनादि ष्टादचः पूर्व इति, तन्न; न ह्यनादिष्टादचः पूर्वत्वं नाम शास्त्रीयं यदतिदिश्येत; एवं तर्ह्यनादिष्टादचः पूर्वत्वापेक्षेऽचः परस्मिन्नित्यतिदेशे कर्त्तव्ये स्थानिवदादेश इत्येतत् प्रवर्त्तते, अतः सवर्णग्रहणं कृतम् ।

*शिंषन्तीति*। यद्यपि शिण्ढीत्येवानुस्वारविधेरप्युदाहरणम्, तथापि तस्मिन्नेवोदाहृते परसवर्णविधौ स्थानिवत्त्वनिषेधः, तस्य स्थानिनोऽनुस्वारस्यापि विधौ

न्यासः

जिहीर्षक इति। चिकीर्षजिहीर्षशब्दाभ्यां ण्वुल्। शिषेः, पिषेश्चेति। शिष्लृ विशेषणे' पिष्लृ सञ्चूर्णने'। हित्वधित्वष्टुत्वजश्त्वेष्विति। 'सेर्ह्यपिच्च' इति हेरादेशे कृते 'हु झल्भ्यो हेर्धिः' इति धिरादेशः। 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'झलां जश् झशि' इति जश्त्वम्। ननु चात्र स्थानिवद्भावस्य प्राप्तिरेव नास्ति; यो ह्यनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवद्भवतीत्युच्यते, न चायमनादिष्टादचः पूर्वः, तत् किं प्रतिषेधेन ? नैष दोषः; स्थानिनो नकारस्याऽनादिष्टाजपेक्षं पूर्वत्वमस्तीति तदादेशोऽप्यनुस्वारः स्थानिवद्भावादनादिष्टादचः पूर्व इति लभ्यते ।

शिंषन्तीत्यादि। किमर्थं पुनरुदाहरणान्तरोपन्यासः, यावता शिण्ढीत्याद्यनन्तरोक्तमेवेदं युक्तमुदाहरणम् ? एवं मन्यते—यदि तदेवोदाह्रियते तदा यत्र परसवर्णस्तत्रानुस्वारेण भवितव्यम्, तत्रैव हि स विधीयते; ततश्च नान्तरीयकत्वात् परसवर्णविधौ स्थानिवद्भावप्रतिषेधेऽनुस्वारविधावपि स्थानिवद्भावप्रतिषेधः कृत एव, ततोऽनुस्वारग्रहणं पृथङ् न कर्त्तव्यमिति कस्यचिद् भ्रान्तिः स्यात्। तस्माद् यत्र परसवर्णो न सम्भवति, तदेवोदाहरणं युक्तमिति ।

श्वसोरल्लोपो न स्थानिवद् भवति।

दीर्घं। दीर्घविधिं प्रति अजादेशो न स्थानिवद् भवति—प्रतिदीव्ना, प्रतिदीव्ने। प्रतिदिवन्नित्येतस्य भस्येत्यधिकृत्य तृतीयैकवचने चतुर्थ्येकवचने च 'अल्लोपोऽनः' इति अकारलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद् 'हलि च' इति दीर्घत्वं न स्यात्, न ह्ययं वकारो हल्पर इति, अस्माद्वचनाद् भवति।

जश्। जश्विधिं प्रत्यजादेशो न स्थानिवद् भवति—सग्धिश्च मे,

पदमञ्जरी

स्थानिवत्त्वप्रतिषेधमन्तरेणानुपपन्न इति पृथगनुस्वारग्रहणं न कर्त्तव्यमित्याशङ्कानिराकरणाय केवलानुस्वारोदाहरणं दर्शितम्।

*प्रतिदीव्नेत*। प्रतिपूर्वाद्दिवेः 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन्प्रत्ययः। *भस्येत्यधिकृत्येति*। परनिमित्तकत्वोपपादनार्थः। किमिदमुक्तम्—हलि चोपधायां चेति दीर्घत्वं न स्यादिति, उपधायाञ्चेत्येतल्लेखकैः प्रमादाल्लिखितम्, तथा चोपधायाञ्चेत्यत्र वक्ष्यति—प्रतिदीव्नेत्यत्र 'हलि च' इति दीर्घत्वमिति। *अस्माद्वचनाद्भवतीति*। 'न भकुर्छुराम्' इति तु प्रतिषेधो रेफवकारान्तस्य भस्येत्यत्र न प्रवर्त्तते।

न्यासः

प्रतिदीव्नेति। दिवेः 'कनिन्युवृषि' इत्यादिना कनिन् प्रत्यये रूपम्। हलि चेति। 'उपधायाञ्च' इति दीर्घत्वन्न स्यादिति। 'हलि च' इत्यनेनैवात्र दीर्घत्वम्। 'उपधायाञ्च' इत्येतदिदानीन्तनकुलेखकैः प्रमादाल्लिखितम्। तथा हि 'उपाधायाञ्च' इत्यत्र वक्ष्यति "प्रतिदीव्न इत्यत्र तु 'हलि च' इति दीर्घत्वम्" इति। ननु च स्थानिवद्भावे प्रतिषिद्धेऽपि 'न भकुर्छुराम्' इति दीर्घत्वप्रतिषेधेनात्र भवितव्यम्, तत् किमित्येवमाह—अस्माद् वचनाद् भवतीति। न च स्थानिवद्भावप्रतिषेधसामर्थ्यादत्र प्रतिषेधो न भवतीति शक्यं परिकल्पयितुम्; स्थानिवद्भावप्रतिषेधस्य पिपठीरित्यत्रार्थवत्त्वात्। अत्र हि पिपठिषतेः क्विपि कृतेऽतो लोपे रुत्वे च, रुत्वं पुनरस्य पूर्वत्रासिद्धमिति षत्वस्यासिद्धत्वाद्, यदि स्थानिवद्भावो न प्रतिषिध्येत, ततोऽकारलोपस्य स्थानिवद्भावाद् 'र्वोरुपधाया दीर्घ इकः' इति रेफवकारान्तस्य धातोरुच्यमानं दीर्घत्वं न स्यात्। एवं मन्यते—'र्वोरुपधायाः' इत्यधिकाराद् रेफवकारान्तस्य भस्य दीर्घत्वं प्रतिषिध्यते। न चैतद् रेफवकारान्तं भसंज्ञकम्, अपि तु नकारान्तमिति।

सग्धिरिति। समानाग्धिरिति विशेषणसमासः, 'समानस्य च्छन्दस्यमूर्ध' इति सभावः। बब्धामिति। 'भस भर्त्सनदीप्त्योः', 'अभ्यासे चर्च' इत्यभ्यासकारस्य जश्त्वं बकारः।

सपीतिश्च मे । बब्धान्ते हरी धानाः। अदेः क्तिनि 'बहुलं छन्दसि' इति घस्लादेशः, 'घसिभसोर्हलि च' इति उपधालोपः, 'झलो झलि' इति सलोपः, 'झषस्तथोर्धोऽधः' इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात 'झलां जश् झशि' इति घकारस्य जश्त्वं न स्यादस्माद्वचनाद् भवति । समाना ग्धिः, समानस्य सभावः—सग्धिः । बब्धामिति–भसेर्लोड्-द्विवचने शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'घसिभसोर्हलि च' इति उपधालोपः, 'झलो झलि' इति सलोपः, 'झषस्तथोर्धोऽध' इति धत्वम्, उपधालोपस्य स्थानिवत्त्वात् 'झलां जश् झशि' इति जश्त्वं न स्याद-स्माद्वचनाद् भवति ।

चर्। चर्विधि प्रत्यजादेशो न स्थानिवद् भवति—जक्षतुः, जक्षुः । अक्षन्नमीमदन्त पितरः । लिड्द्विवचनबहुवचनयोरदेर्घस्ला-देशः, 'गमहनजनखनघसाम्' इत्युपधालोपः, द्विर्वचनम्, अभ्यासकार्यम् । तत्रोपधालोपस्य स्थानिवत्त्वात् 'खरि च' इति घकारस्य चर्त्वं न स्यादस्माद्वचनाद् भवति । 'शासिवसिघसीनां च' इति षत्वम् । अक्ष-न्नित्यदेर्लुङ्बहुवचने घस्लादेशश्च्लेरागतस्य 'मन्त्रे घसह्वर' इति लुक्, 'गमहनजनखनघसाम्' इत्युपधालोपः, तस्य स्थानिवत्त्वात् 'खरि च' इति चर्त्वं न स्यादस्माद्वचनाद् भवति ।

स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवद्भवति, अन्यत्र तु स्थानिवदेव । तेन बहुखट्वकः, किर्योः, गिर्योः, वाय्वोरिति स्थानि-वत्त्वात् स्वर-दीर्घ-यलोपा न भवन्ति ॥

**पदमञ्जरी**

*झलो झलीति सलोप इति* । सकारे सिचो लोप इत्येतत्तु नाश्रीयते, तस्मि-न्स्त्वाश्रिते छान्दसत्वाद्वर्णलोपः ।

*बहुखट्वक इति* । अत्र स्थानिवद्भावाद 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इति खकारा-

**न्यासः**

जक्षतुः, जक्षुरिति । 'लिट्यन्यतरस्याम्' इति घस्लादेशः, 'कुहोश्चुः' इत्यभ्यास-घकारस्य चुत्वं झकारः; तस्य पूर्ववज्जश्त्वं जकारः । बहुवचने घस्लादेश इति । 'लुङ्-

पदमञ्जरी

कारस्योदात्तत्वं न भवति, 'कपि पूर्वम्' इत्येतदेव तु भवति। *किर्योः; गिर्योरिति।* 'कॄग्रोरिच्च' इति व्युत्पत्तिपक्ष एतदुदाहृतम्। 'उपधायाश्च' (८।२।७८) इत्यत्र त्वव्युत्पत्तिपक्षमाश्रित्य वक्ष्यति—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि, इति किर्योगिर्योरित्यादिषु दीर्घो न भवति' इति।

'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्वजादेशो न स्थानिवद्भवति' इति वक्तव्यम्। क्वि—क्वौ यद्विधीयते तत्र कर्त्तव्ये यत्र कुत्रचित् कृतोऽजादेशो न स्थानिवद्भवतीति; लवमाचक्षाणो लौः, अत्र णिचि यष्टिलोपः, यश्च क्वौ णिलोपस्तदुभयमपि 'च्छ्वोः शूठ्' इति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवद्भवतीति 'एत्येधत्यूठ्सु' इति वृद्धिः। ये तु 'क्वौ लुप्तं न स्थानिवत्' इति पठन्ति तेषामेतन्न स्यात्। तथा पिपठिषतेः क्वौ, अतो लोपे नपुंसके बहुवचने जसि झलक्षणे नुमि जस्निमित्तेऽपि कर्त्तव्येऽतो लोपस्य स्थानिवत्त्वनिषेधः स्यात्; क्वौ कृतत्वात्। क्वौ विधिं प्रतीत्यत्र तु पक्षे प्रतिषेधो न भवति, पिपठीषि ब्राह्मणकुलानि, नुम्यसति 'सान्तमहतः' इति दीर्घत्वं न भवति। देवयतेर्द्यूरित्यत्रोभयथापि सिध्यति। लुक्—लुका लुप्ते न स्थानिवत्, आमलक्या विकारः फलम् 'नित्यं वृद्धशरादिभ्यः' इति मयटः 'फले लुक्' 'लुक्तद्धितलुकि' इति ङीपो लुक् परिनिमित्तकः यस्येति लोपे न स्थानिवद् भवति। केचित्त्वेतदर्थं सूत्रे वर + ई = वरे इति ईकारप्रश्लेषं वर्णयन्ति, ईविधिं प्रति न स्थानिवदिति। उपधात्वे—उपधात्वे कर्तव्ये न स्थानिवत्। परिखाशब्दाच्चातुरर्थिके णिकृते पारिखे भवः पारिखीय इति 'वृद्धादकेकान्तखोपधात्' इति छो न स्यात्, आकारलोपस्य स्थानिवत्त्वादनुपधाखकार इति। प्रत्ययविधिविषयं चैतत्, यत्रोपधासंज्ञानिबन्धनः प्रत्ययो विधातुमिष्यते तत्रैवेत्यर्थः, घटयतीत्यादौ तु तन्न भवति। चङ्परो यो निर्ह्रासो ह्रस्वस्तत्र न स्थानिवद्भवति—वादितवन्तं प्रयोजितवान् अवीवदद् वीणां परिवादकेन, योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् णौ चङ्यु-

न्यासः

सनोर्घस्लृ' इत्यनेन। बहुखट्वक इति। अत्र स्थानिवद्भावाद् 'ह्रस्वान्तेऽन्त्यात् पूर्वम्' इति खकारस्योदात्तत्वं न भवति। 'कपि पूर्वम्' इति ट्वशब्दस्याकारस्यैव भवति।

**किर्योः, गिर्योरिति।** 'र्वोरुपधाया दीर्घ इकः' 'हलि च' इति दीर्घत्वं न भवति। एतच्च व्युत्पत्तिपक्षमाश्रित्योक्तम्, यदा 'कॄग्रोरिच्च' इति किरिगिरिशब्दौ व्युत्पाद्येते। अव्युत्पत्तिपक्षे त्वसत्यपि स्थानिवद्भावे धातुत्वाभावान्न भवत्येव दीर्घत्वम्। तथा ह्यव्युत्पत्तिपक्षमाश्रित्य 'उपधायाश्च' इत्यत्र वक्ष्यति—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवति' इति। वाय्वोरिति। 'लोपो व्योर्वलि' इति यल्लोपो न भवति।

## द्विर्वचनेऽचि ॥ ५९ ॥

### पदमञ्जरी

पधाया ह्रस्वो न स्यात्, यश्चङ्परो णिर्न तस्मिन्नङ्गस्योपधा, यस्मिंश्चाङ्गस्योपधा न चङ्पर इति। कुत्वम्—पाचयतेः क्तिचि पाक्तिः। कुत्वमुपलक्षणम्। लेहयतेर्लेढिः, दोहयतेर्दोग्धिः, याचयतेर्याक्तिः, वेशयतेर्वेष्टिरित्यादि॥

*द्विर्वचनेऽचि* ॥ 'अचः परस्मिन्' इत्यत्र 'योऽनादिष्टादचः पूर्वः' इति स्थितम्। साच्कस्य द्विर्वचनं न त्वचः पूर्वस्येत्यप्राप्तं स्थानिवत्त्वं विधीयते, रूपातिदेशार्थं च।

अत्र षट् पक्षाः सम्भवन्ति। अचीत्यादेशोपलक्षणम्, द्विर्वचन इति विषयनिर्देशः, अचि योऽजादेशः स द्विर्वचने स्थानिवद्भवतीति *प्रथमः पक्षः*। अचीत्येतदपि स्थानिवद्भावेनैव सम्बध्यते, द्विर्वचन इति विषयनिर्देशाद्, द्विर्वचने कर्तव्येऽजादेशः स्थानिवद्भवत्यचि पर इति *द्वितीयः*। द्विर्वचननिमित्तत्वादजेव द्विर्वचनग्रहणेन विशेष्यते, द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच्प्रत्ययान्तेन वा, अधिकरणसाधनेन वा, आदेशोपलक्षणम्, द्विर्वचननिमित्तेऽचि योऽजादेशः स स्थानिवदिति *तृतीयः*। एवं विशेषितं वाज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, अजादेशः स्थानिवद्भवति द्विर्वचननिमित्तेऽचि परत इति *चतुर्थः*। द्विर्वचनग्रहणमावर्तते, तत्रैकेनाज्विशेष्यते, परेण विषयी निर्दिश्यत इति स्थिते तद्विशेषितमज्ग्रहणं स्थानिवद्भावस्य विशेषणम्, द्विर्वचने कर्तव्येऽजादेशः स्थानिवद्भवति द्विर्वचननिमित्तेऽचि परत इति *पञ्चमः*। एवमेव स्थितेऽज्ग्रहणमादेशोपलक्षणम्, द्विर्वचननिमित्तेऽचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवद्भवतीति *षष्ठः*।

अत्राद्ये पक्षेऽचो द्विर्वचनेनाविशेषितत्वाद् द्विर्वचननिमित्तेऽप्यचि आदेशः स्थानिवत्स्यात्, ततश्चाचिकीर्तद् इत्यत्र णिचि 'उपधायाश्च' इतीत्वस्य 'चङि' इति द्विर्वचने स्थानिवद्भावादचकीर्त्तदिति स्यात्। दुद्यूषति—ऊठि यणादेशः स्थानिवत्स्यात्। भवनमिच्छति, भवनीयतेः सन्, बिभवनीयिषति—ल्युटि कृतयोर्गुणावादेशयोः स्थानिवत्त्वे बुभवनीयिषतीत्यनिष्टं रूपं प्राप्नोति। द्वितीये तु अचिकीर्तदित्यत्र न दोषः, इत्वस्य तकारेण व्यवहितत्वात् स्थानिवद्भावभाजो ह्यादेशस्य स्थानिवत्त्वविधानवेलायामच्यनन्तरे स्थानिवत्त्वेन भवितव्यम्। एवं

### न्यासः

द्विर्वचनेऽचि ॥ पूर्वं कार्यातिदेशः कृतः, इदानीं तु रूपातिदेशार्थमिदमारभ्यते। अथ वा निमित्तात् पूर्वमित्येतस्मिन् पक्षेऽनन्तरसूत्रेण द्विर्वचनविधिं प्रति प्रतिषेधः प्राप्त इत्यस्यारम्भो वेदितव्यः। 'द्विर्वचनेऽचि' इति समानाधिकरणे सप्तम्यौ। तत्राज् विशेष्यः, द्विर्वचनं विशेषणम्। विशेषणविशेष्यभावस्य च प्रयोजनं दुद्यूषतीति प्रत्युदाहरणे दर्शयिष्यते। कथं पुनरज् द्विर्वचनशब्देनोच्यते? द्विर्वचननिमित्तत्वात्।

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिवद्भवति द्विर्वचन एव

पदमञ्जरी

ह्यचि परतः स्थानिवद्भावः कृतो भवति। दुद्यूषतीत्यादौ तु स्यादेव। ययावित्यत्र 'आत औ णलः' इत्यौकारेण वृद्धौ कृतायां गंप्रत्यादेशात्परोऽज्नास्तीति स्थानिवत्त्वं न स्यात्। जग्मतुरित्यादौ च 'गमहन' इत्युपधालोपस्य व्यवहितत्वान्न स्यात्। तृतीये तु कालावधारणं कर्तव्यम्, अन्यथा द्विर्वचनादुत्तरकालमपि स्थानिरूपमेवावतिष्ठेत। चतुर्थे तु ययौ, जग्मतुरित्यादौ पूर्वोक्तन्यायेन स्थानिवद्भावो न प्राप्नोति, कालावधारणं च कर्तव्यम्। पञ्चमेऽपि ययौ, जग्मतुरित्यादौ न स्यात्, अत एतेषु पक्षेष्वेवं दोषसम्भवात् षष्ठं पक्षमाश्रित्याह—*द्विर्वचननिमित्तेऽचीत्यादि*। अत्र हि पक्षे द्विर्वचनेनाचो विशेषणादचिकीर्तत्, दुद्यूषति, विभवनीयिषतीत्यादौ न दोषः। आदेशोपलक्षणत्वाच्च ययावित्यादावपि न दोषः। पुनश्च द्विर्वचनग्रहणात् कालावधारणमपि लभ्यते। ननु 'द्विर्वचननिमित्तेऽचि योऽजादेशः' इत्युच्यमाने नुनावयिषति, चुक्षावयिषति, पुस्फारयिषतीत्यादौ णेरद्विर्वचननिमित्तत्वात्तन्निमित्तावादेशः, आकारश्च न स्थानिवत्स्यात्; ततश्चाभ्यास उकारो न श्रूयेत, नैष दोषः; 'पुयण्जि' इति ज्ञापकाद् द्वित्वनिमित्तेऽपि णौ स्थानिवत्त्वापायात्। तथा हि—न हि णौ कृतस्य स्थानिवद्भावमन्तरेण ओः पराः पुयण्ज्योऽवर्णपराः सम्भवन्ति; पिपविषति, यियविषति—इत्यत्र सम्भव इति चेत्, किमेतावता पुग्रहणं प्रत्याहारग्रहणं जग्रहणं चार्थवद्भवतीति ? ज्ञापकमुक्तार्थस्य। यद्येवम्; अचिकीर्तदित्यत्रेत्वस्य स्थानिवत्त्वादचकीर्तदिति स्यात्, नैष दोषः; ज्ञापकस्य तुल्यजातीयापेक्षत्वात् यत्रोत्तरभागस्याद्योऽवर्णपरो भावस्तत्रैव स्थानिवत्त्वज्ञापनात्। नन्वेवमपि 'ओः पुयण्' इत्यत्र णेरित्यश्रवणात्सामान्येन द्वित्वनिमित्तं स्थानित्वं विज्ञायेत, ततश्च विभवनीयिषतीत्यत्रापि स्यात्।

न्यासः

अत एव वृत्तावाह—'द्विर्वचननिमित्तेऽची'ति। भवति हि तन्निमित्तत्वात् ताच्छब्द्यम्, यथा—आयुर्घृतमिति। परसप्तमी चेयमपीति 'यस्मिन् विधिस्तदादावल्ग्रहणम्' इति अजादाविति द्रष्टव्यम्। परस्मिन्निति च प्रकृतत्वात् परस्मिन्नजादाविति गम्यते।

अथ वा—द्विर्वचनस्य प्रत्ययविशेषनिमित्तत्वाद् द्विर्वचनग्रहणेन प्रत्ययः सन्निधापितः, तेनाजादौ प्रत्यय इति प्रतीयते। यदि तर्ह्यजादावजादेशः स्थानिवद्भवति, पपाविति न सिध्यति, न ह्यजादावादेशः, किं तर्हि ? अच्येव; इहापि व्यपदेशिवद्भावेनाजादित्वमस्तीत्यदोषः। इह तर्हि न सिध्यति—चक्रतुरिति, अच्येव तु यणादेशो विधीयते, न त्वजादौ ? नैष दोषः; यो ह्यत्राचि यणादेशो विधीयते सोऽजादावपि भवत्येव। यदि द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवद्भवति सर्वस्यामवस्थायां द्विर्वचनादुत्तरकालमपि स्यादित्यत आह—*द्विर्वचन एव कर्तव्य इति*। एवकारेण

कर्त्तव्ये। रूपातिदेशश्चायं नियतकालः, तेन कृते द्विर्वचने पुनरादेश-रूपमेवावतिष्ठते।

पदमञ्जरी

नैतदस्ति; येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणात् णेरेव केवलस्य व्यवधायकस्य सम्भवात्। नन्वचीत्युच्यमाने चक्रतुरित्यादौ न स्यात्, न ह्यत्राज्मात्रं द्विर्वचननिमित्तम्, क तर्हि स्यात्? चकार, चक्रे इत्यादौ ह्यज्मात्रं प्रत्ययः। स्यादेतत्—परस्मिन्नित्यनुवृत्तमचीत्यनेन विशेष्यते, तत्र यस्मिन्विधिस्त-दादावल्ग्रहणमिति तदादिविधिर्भवति। अजादौ परस्मिन्निति द्विर्वचननिमित्तत्वे-नापि अजाद्येव विशेष्यत इति। एवमपि चक्रतुरित्यत्र स्यात्, यद् द्विर्वचन-निमित्तमजादि न तदादेशस्य निमित्तम्; अच्येव यणो विधानात्। यच्चादेशस्य निमित्तं न तद् द्विर्वचनस्य निमित्तम्; पपतुः चखनतुरित्यादावेव तु स्यात्। किञ्च 'यस्मिन्विधिः' इति वचनाद्यत्र किञ्चिद्विधीयते तत्रैव तदादिविधिः, इह तु अचि योऽजादेश इत्यनुवादत्वात्तदादिविधेरेवासम्भवस्तस्मादजेव गृह्यते, न तदादिः, उच्यते; चक्रतुरित्यादावतुसो द्विर्वचनं प्रति निमित्तत्वेनाश्रयणेऽप्यचि परत्रावस्थिते द्विर्वचनं दृष्टमित्येतावताजेव द्विर्वचननिमित्तमित्युच्यते। समुदायेऽप्ययं द्विर्वचन-शब्द उपचारेण प्रवर्त्तते। एवमपि पपतुरित्यत्र न स्यात्, आल्लोपस्याजादि-निमित्तं नाज्मात्रम्, नैष दोषः; 'अचि योऽजादेशः' इति कोऽर्थः? अचि यो दृष्ट इत्यर्थः। यश्चाचि विधीयते, यश्चाजादौ—द्वावपि अचि दृष्टावेवेति सर्वत्र सिध्यति। अथ वा—अजादावाल्लोपो न हलादौ, तत्र प्राप्ताप्राप्तविवेकेनाच एव निमित्तत्वम्। द्विर्वचन एव कर्त्तव्य इति एवकारेणैतद्दर्शयति—द्विर्वचनग्रहणमचं विशिनष्टि, कालं चावधारयतीति। एकस्योभयसम्बन्धे हि भवति एवकारः—देवदत्तो ग्रामं गच्छतु स एव गामानयत्विति। यद्यत्रापि पूर्ववत्कार्यातिदेशः स्यात्; चक्रतुरित्या-दावनच्कत्वादप्राप्तं द्विर्वचनं स्थानिवद्भावाद् भवदपि यणाद्यादेशयुक्तस्यैव स्यादित्यभ्यासे स्थानिरूपं न श्रूयेत, तदर्थमाह—*रूपातिदेशश्चायमिति*। 'च'

न्यासः

द्विर्वचनक्रियाकालात् कालान्तरे स्थानिवद्भावस्याभावं दर्शयति। कथं पुनरेतल्-लभ्यते, यावतैकं द्विर्वचनग्रहणम्, तेन चाज् विशेषितः? एवं मन्यते—द्वितीयमपि द्विर्वचनग्रहणमनन्तरसूत्रादिहानुवर्त्तते।

अथ वा—द्विर्वचनञ्च द्विर्वचनश्चेत्येकशेषं कृत्वा 'द्विर्वचने' इति निर्देशः कृतः। तत्रैकेन द्विर्वचनग्रहणेन 'द्विर्वचननिमित्तेऽचि' इत्येषोऽर्थो लभ्यते। द्वितीयेन तु 'द्विर्वचन एव कर्त्तव्ये' इति। इह द्विर्वचने कर्त्तव्ये स्थानिवद्भावो विधीयते इति द्विर्वचनकार्यार्थ एवैष प्रतीयते। साच्कस्य द्विर्वचनं विधीयमानमनच्कस्य न प्राप्नोतीति युज्यते द्विर्वचनकार्यार्थत्वमस्य। 'द्विर्वचनकार्यार्थे त्वस्मिन्—चक्रतुः,

पदमञ्जरी

शब्दोऽवधारणे। कथं पुनरवगम्यते रूपातिदेशोऽयमिति ? अज्ग्रहणात्। तद्धि जेघ्रीयत इत्यत्र 'ई घ्राध्मोः' इति हलादौ विहितस्येत्वस्य स्थानिवत्त्वं मा भूदित्येवमर्थं क्रियते। यदि च रूपं स्थानिवत्, ततोऽसत्यज्ग्रहणे घ्राय्घ्रीय्ध्माय्ध्मीय् इति द्विर्वचनं स्यादिति तन्निवृत्तयेऽज्ग्रहणमर्थवद् भवति। अथ हि—कार्यं स्थानिवद् भवति, तस्य सत्यपि स्थानिवत्त्वे ईकारयुक्तस्यैव द्विर्वचनमिति नार्थोऽज्ग्रहणेन। भसेस्तु क्वसौ 'घसिभसोर्हलि' इत्युपधालोपे कृते सत्यसति वा द्विर्वचने भ्स्वानिति श्रुतौ विशेषाभावः। छान्दसश्च क्वसुः, छन्दसि दृष्टानुविधानमतो ज्ञापकमेवाज्ग्रहणम्। तत्र यद्यपि स्थान्येव स्वरूपमापद्यते, तथाप्यातिदेशिकानातिदेशिकरूपभेदाश्रयस्तु वर्तिर्द्विर्वचन एव कर्त्तव्य इत्येतदेव स्पष्टयति। *नियतकाल इति*। *कृते द्विर्वचने* इत्यादिना नियतकालत्वमेव दर्शयति। यदि कृते द्विर्वचने पुनरादेशरूपमेवावतिष्ठते, यथा—चक्रतुरित्यादौ द्विर्वचनादूर्ध्वं पूर्वं कृतो यणादेश एव श्रूयते तथा निन्यतुरित्यादावपि द्विर्वचनात्पूर्वमेकाच्त्वादि, यङादेशे कृते स्थानिवद्भावाद् द्विर्वचनेऽपि पूर्वप्रवृत्त इयङेव स्यात्। अस्तु, तस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वाद् 'एरनेकाचः' इति यणि सति श्रवणं न भविष्यति। यद्वा—पूर्वप्रवृत्तोऽपीयङ् द्विर्वचनकालेऽपहृत इति पुनः प्रवर्तयितव्यः, तस्यां च दशायामनेकाच्त्वाद्यणा बाध्यते। यद्येवम्, इयेष उवोषेति इषेरुपेश्च लिटि तिपि णलि प्रवृत्तस्यापि गुणस्य द्विर्वचनकालेऽपहृतत्वात्कृते द्विर्वचने पुनः प्रवृत्तिः, ततश्चानादिष्टादचः

न्यासः

चक्रुरित्यत्रास्यानच्कस्य द्विर्वचने कृते सतीष्टमभ्यासरूपं न सिध्यति' इति व्यामोहाद् यो मन्यते, तं प्रत्याह—रूपातिदेशश्चायमिति। 'च' शब्दोऽवधारणे, रूपातिदेश एव, न कार्यातिदेश इत्यर्थः। कुतः पुनरेष निश्चयः—रूपातिदेशश्चायमिति ? अज्ग्रहणात्। तस्य ह्येतत् प्रयोजनम्,—जेघ्रीयते देध्मीयत इत्यत्र मा भूदिति। यदि चायं द्विर्वचनकार्यातिदेशः स्यान्न रूपातिदेशः; अज्ग्रहणमनर्थकं स्याद्। भवत्वत्र स्थानिवद्भावः, तथापि न कश्चिद्विशेषः। तथा हि—यद्यप्यत्र स्थानिवद्भावः, एवमपि द्विर्वचनकार्येण भवितव्यम्; अथापि न स्थानिवद्भावः, एवमपि भवितव्यम्—उभयत्रापि साच्कत्वात्, ततश्च कथमेतत् प्रत्युदाहरणम् ? तदेतदज्ग्रहणं कथमर्थवद् भवति ? यद्येष रूपातिदेशः, रूपेऽस्यातिदिश्यमाने यद्यज्ग्रहणं न क्रियते तदिहापि रूपातिदेशे सति घ्रा इति, ध्मा इति च द्विर्वचनं स्यात्, तथाऽनिष्टमभ्यासरूपं प्रसज्येत। तस्मादज्ग्रहणाद् रूपातिदेशोऽयमिति निश्चीयते। यद्येवम्, भेदनिबन्धनो वर्तिर्न प्राप्नोति; स्थान्येव हि पुनरात्मीयं रूपं प्रापित इति कुतो भेदः ? आतिदेशिकानातिदेशिकत्वेन रूपभेदस्य विवक्षितत्वाददोषः।

'द्विर्वचन एव कर्त्तव्ये' इति यदुक्तं तस्यार्थं विस्पष्टीकर्तुमाह—नियतकाल इति। कृते द्विर्वचने इत्यादिना तदेव नियतकालत्वं दर्शयति।

आल्लोपोपधालोपणिलोपयण्वायावादेशाः प्रयोजनम् ।

आल्लोपः—पपतुः, पपुः । 'आतो लोप इटि च' इत्याकारलोपे कृते तस्य स्थानिवद्भावाद् 'एकाचः' इति द्विर्वचनं भवति ।

उपधालोपः—जघ्नतुः, जघ्नुः । 'गमहनजनखनघसाम्' इत्युपधालोपे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, अस्माद्वचनाद्भवति ।

णिलोपः—आटिटत् । अटतेर्णिचि लुङि चङि णिलोपे कृते तस्य स्थानिवत्त्वाद् 'अजादेर्द्वितीयस्य' इति टिशब्दस्य द्विर्वचनं भवति ।

यण्—चक्रतुः, चक्रुः । करोतेरतुसि उसि च यणादेशे कृतेऽनच्कत्वाद् द्विर्वचनं न स्यात्, स्थानिवत्त्वाद्भवति ।

अयवायावादेशाः—निनय, निनाय । लुलव, लुलाव । नयतेर्लुना-

पदमञ्जरी

पूर्वत्वेनाभ्यासो दृष्ट इति तस्याभ्यासस्य उवङि कर्त्तव्ये गुणस्य स्थानिवद्भावादसवर्ण इति प्रतिषेधः स्यात् । असवर्णग्रहणसामर्थ्यात्स्थानिवत्त्वं न भविष्यति । अस्ति वचनस्यावकाशः—इयर्त्ति, इयृतः । न ह्येकमुदाहरणमसवर्णग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्, अर्त्तावित्येव ब्रूयात् । किं तर्ह्युच्यते—द्विर्वचने पुनरादेशरूपमेवावतिष्ठत इति, अत्र हि 'पुनः' शब्दाद्, 'अवतिष्ठते' इति वचनाच्च पूर्वं कृतस्यैवादेशस्योन्मज्जनमेवोक्तं प्रतीयत इति ? नायमर्थः; अपि तु कृते द्विर्वचने स्थानिरूपं नावतिष्ठते यत्प्राप्तं तद्भवतीत्येवंपरमेतत् ।

*आल्लोपेत्यादि* । उपलक्षणमेतत् । ततुरिः, पपुरिरित्यादौ 'ऋत इद्धातोः' 'उदोष्ठ्यपूर्वस्य' 'बहुलं छन्दसि' इति इत्वोत्वयोरपि स्थानिवत्त्वं भवति ।

*आटिटदिति* । अटतेर्ण्यन्ताल्लुङि चङि 'अजादेर्द्वितीयस्य' इति टिशब्दस्य द्विर्वचनम्, 'आडजादीनाम्' । *निनायेत्यादि* । 'णलुत्तमो वा' इति यदा णित्त्वं नास्ति तदा गुणः, णित्त्वपक्षे वृद्धिः ।

*नेनैलोलाइति द्विर्वचनमिति* । गुणवृद्ध्योस्तु स्थानिवद्भावे विशेषाभावान्नोक्तः ।

न्यासः

जघ्नतुरिति । 'अभ्यासाच्च' इति हकारस्य कुत्वम् ।

आटिटदिति । अटतेर्हेतुमति णिच्; लुङ्, चङ्, 'चङि' इति 'अजादेर्द्वितीयस्य' इति द्विर्वचनम् । 'आडजादीनाम्' इत्याड् भवति ।

निनयेत्यादि । 'णलुत्तमो वा' इति यदा णित्त्वं नास्ति तदा गुणः, यदा णित्त्वं तदा वृद्धिः ।

तेश्चोत्तमे णलि गुणे कृते वृद्धौ चायवायावादेशास्तेषां स्थानिवत्त्वान् नेनैलोलाविति द्विर्वचनं भवति ।

द्विर्वचन इति किम्? जग्ले । मम्ले । श्रवणमाकारस्य न भवति ।

द्विर्वचननिमित्त इति किम्? दुद्यूषति । ऊठि यणादेशो न स्थानिवद्भवभति ।

अचीति किम्? जेघ्रीयते, देध्मीयते । 'ई घ्राध्मोः' 'यङि च' इति ईकारादेशस्तस्य स्थानिवद्भावादाकारस्य द्विर्वचनं स्यात् । अज्ग्रहणान्न भवति ॥

## अदर्शनं लोपः ॥ ६० ॥

### पदमञ्जरी

*जग्ले, मम्ल इति* । भावे लिट्, अनैमित्तिकमात्वम्, शिति तु प्रतिषेध इत्यात्वस्य स्थानिवत्त्वं न भवति । *श्रवणमित्यादि* । यदि कालो नावधार्येत, तदोत्तरकालमपि स्थानिरूपं प्रसज्येत, ततश्चाकारस्य श्रवणे सति परेण सह 'वृद्धिरेचि' इति वृद्धिः स्यात् । इहाधिजगे इति 'गाङ्लिटि' इति द्विलकारनिर्देशेन लकारादौ लिटि गाङादेशविधानादज्निमित्तत्वाभावात् स्थानिवत्त्वाभावः ॥

*अदर्शनं लोपः* ॥ इह दर्शनं ज्ञानमुपलब्धिः । तच्च शब्दानुशासनप्रस्तावा-

### न्यासः

जग्ले, मम्ले इति । 'ग्लै हर्षक्षये', 'म्लै गात्रविनामे' । 'आदेच उपदेशेऽशिति' इत्यात्त्वम् । भाव आत्मनेपदम्, 'लिटस्तझयोरेशिरेच्' इत्येश् । श्रवणमाकारस्य न भवतीति । यदा, कालावधिपरिग्रहार्थं द्विर्वचनग्रहणं न क्रियते, तदोत्तरकालमपि स्थानिरूपं प्रसज्येत, ततश्चाकारस्य श्रवणमेव स्यात् । आतो लोपस्य तु गोद इत्येवमाद्यवकाशः । श्रूयमाणे चाकारे परेण सह वृद्धिः स्यात् । दुद्यूषतीति । दिवेः 'सनीवन्तर्ध' इत्यादिना यदा पक्ष इडागमो न क्रियते तदा 'इको झल्' 'हलन्ताच्च' इति कित्त्वम्, ततः 'च्छ्वोः शूडनुनासिके च' इत्यूठ् । स च द्विर्वचननिमित्तं न भवति । तत्र यदि द्विर्वचननिमित्तत्वेन नाज् विशेष्यते, ऊठि परतो यो यणादेशस्तस्यापि स्थानिवद्भावः स्यान् । एवञ्चाभ्यासरूपमिवर्णान्तं श्रूयेत । द्विर्वचननिमित्ताच्परिग्रहे तु 'द्यू' इत्यस्य द्विर्वचनं भवति । तत्र हलादिशेषह्रस्वत्वयोर्दुद्यूषतीत्यभ्यासरूपमुकारान्तं सिध्यति ॥

**अदर्शनं लोपः** ॥ अदर्शनमित्यादि । ननु चादर्शनानुपलब्धिशब्दावनुपलब्धिसामान्यवचनौ । अश्रवणानुच्चारणशब्दौ त्वनुपलब्धिविशेषणवचनौ । तथा ह्यश्रवणादि-

अदर्शनमश्रवणमनुच्चारणमनुपलब्धिरभावो वर्णविनाशः—इत्यनर्थान्तरम्। एतैः शब्दैर्योऽर्थोऽभिधीयते तस्य 'लोप' इतीयं संज्ञा भवति।

पदमञ्जरी

च्छब्दविषयं सच्छ्रवणं भवतीत्याह—*अश्रवणमिति*। श्रवणं च श्रोतृव्यापारः, तन्निषेधे 'लोपो व्योर्वलि' इत्यस्य वकारयकारौ वल्परौ न श्रोतव्यावित्यर्थः स्यात्। ततश्च प्रयोक्तृव्यापार उच्चारणमनिषिद्धं स्यात्। असति श्रवणे उच्चारणमनर्थकमेव स्यादिति श्रवणनिषेधेन तद्धेतुभूतमुच्चारणमेव निषिद्धं भवतीत्याह—*अनुच्चारणमिति*। 'लोपो व्योर्वलि' इत्यस्य कोऽर्थः? वकारयकारौ वल्परौ नोच्चारयितव्याविति। अनेनापि प्रकारेणास्मिन्विषये तयोरभाव एव व्याख्यापितो भवति, न हि विद्यमानयोरनुच्चारणमुपपद्यत इत्याह—*अभाव इति*। स्वाभाविक एवाभाव इत्यर्थः। *विनाश इति*। कार्यशब्ददर्शन एतत्। *अनर्थान्तरमिति*। शब्दविषयाणामेषामर्थो न भिद्यत इत्यर्थः। 'स्वं रूपम्' इति वचनाद् अदर्शनशब्दस्यैव संज्ञायां लोपप्रदेशेषु अदर्शनशब्द एवादेशः स्यादित्यत आह—*एतैः शब्दैरिति*। एतच्च 'नवेति विभाषा' इत्यत इतिकरणानुवृत्तेर्लभ्यते।

न्यासः

शब्दोच्चारणे शब्दस्यैवानुपलब्धिः प्रतीयते, नानुपलब्धिमात्रम्, न च सामान्यविशेषशब्दानामेकार्थता, तत् किमित्येवमाह—अनर्थान्तरमिति। एवं मन्यते—सामान्यशब्दा अपि प्रकरणवशाद् विशेषे वर्त्तन्ते। इह च शब्दा व्युत्पाद्यत्वेन प्रकृताः, तस्माद् यद्यप्यदर्शनानुपलब्धिशब्दौ सामान्यवचनौ, तथापीह प्रकरणसामर्थ्याद् विशेषे शब्दानुपलब्धावेव वर्त्तेते।

इह वृद्धिरित्यादिकाः संज्ञा शब्दानां विहिताः। तद्वदिहाप्यदर्शनमित्यस्यैव शब्दस्य 'लोपः' इत्येषा संज्ञा स्यात्। ततश्च लोपप्रदेशेष्वदर्शनशब्दस्योपस्थानात् स एवादेशः स्यादित्यत आह—एतैः शब्दैरित्यादि। कथं पुनरेतल्लभ्यते? एवं मन्यते—'नवेति विभाषा' इत्यत इतिकरणोऽर्थनिर्देशार्थोऽनुवर्त्तते। तेन यथा तत्रार्थस्य संज्ञा भवति, तथेहापीति। अर्थस्येयं संज्ञेत्यवधारणम्। अर्थस्यैव न शब्दस्येत्यर्थः। पुनःश्रुतौ ह्यवधारणं गम्यते, यथा—क्रिया हि द्रव्यं विनयति नाद्रव्यमिति। विनापीतिकरणेन शब्दस्वरूपस्य संज्ञा सिध्यत्येव, यथा—'तरप्तमपौ घः' इत्यत्र। तस्मादितिकरणानुवृत्तिसामर्थ्याददर्शनमिति योऽर्थः प्रतीयते, तस्यैवैषा संज्ञा, न शब्दस्य।

किञ्च 'लोपः' इति महती संज्ञा क्रियते यथान्वर्थसंज्ञा विज्ञायेत। लोपनं लोपः= अनुपलब्धिरनुच्चारणमित्यर्थः। न चादर्शनमित्येतच्छब्दरूपमेवाभावात्मकम्, किं तर्हि? तदर्थः। तस्मादन्वर्थसंज्ञाविज्ञानादर्थस्यैवैषा संज्ञा। यदि तर्ह्यर्थस्यैवैषा संज्ञा, ततोऽ-

अर्थस्येयं संज्ञा; न शब्दस्य। प्रसक्तस्यादर्शनं लोपसंज्ञं भवति।

'गोधाया ढ्रक्'—गौधेरः। पचेरन्। जीवेरदानुक्—जीरदानुः। स्रिवेर्मनिन्—आस्रेमाणम्। यकारवकारयोरदर्शनमिहोदाहरणम्। अपरस्यानुबन्धादेः प्रसक्तस्य।

पदमञ्जरी

अथ वा—महती संज्ञा क्रियते, अन्वर्था यथा विज्ञायेत—लोपनं लोप इति। न चादर्शनशब्दो लोपनक्रिया भवति। यद्येवम्, प्रदेशेष्वेवार्थग्रहणमस्तु, किं संज्ञया? तन्न; असति संज्ञाकरणे 'स्वं रूपम्' इति वचनात् प्रदेशेषु लोपशब्द एवादेशः स्यात्। सति त्वशब्दसंज्ञेति निषेधान्न स्वरूपग्रहणं भवति। न *शब्दस्येति*। अर्थसिद्धमप्येतद्विस्पष्टार्थं पुनरुक्तम्। ननु विधिप्रदेशेष्वितरेतराश्रयः प्राप्नोति—सतोऽदर्शनस्य संज्ञा, संज्ञया चादर्शनं भाव्यत इति, तन्न; न हि लोपविधानात्प्रागसदेवादर्शनं वचनेन भाव्यते, अनित्यत्वप्रसङ्गात्, किं तर्हि? सदेवादर्शनं साधुत्वेनान्वाख्यायते। यद्येवम्, सर्वस्य स्वविषयादन्यत्र स्वभावतोऽदर्शनमस्तीति लोपसंज्ञा स्यात्। ततश्च दधि, मध्विति णिचोऽदर्शनस्य लोपसंज्ञायां प्रत्ययलक्षणेन वृद्धिः स्यात्। अङ्गस्य वृद्धिः, अङ्गसंज्ञा च विधानप्रतिबद्धा। क्विपस्तर्ह्यदर्शनस्य लोपसंज्ञायां तुक् प्राप्नोति, तत्राह—*प्रसक्तस्येति*। एवं मन्यते—'स्थाने' इति वर्तते;

न्यासः

तिप्रसङ्गः। सर्वो हि शब्दः स्वविषयादन्यत्र न दृश्यते। ततश्च त्रपु, जत्वित्यत्र क्विपोऽदर्शनस्य लोपसंज्ञा स्यात्। एवञ्च सति 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्रसज्यत इत्यत आह—प्रसक्तस्येत्यादि। तर्ह्यदर्शनमात्रस्यैषा संज्ञा? न, किं तर्हि? शास्त्रादर्थाद्वा कुतश्चित् प्रसक्तस्य यददर्शनं तस्यैव। तदिह न केनचित् प्रकारेण क्विप्प्रसङ्गोऽस्ति, तत्कुतोऽतिप्रसङ्गः? कथं पुनरेष विशेषो लभ्यते, यावता नेह प्रसक्तग्रहणमस्ति, नापि तत् प्रकृतम्? एवं मन्यते—'स्थानिवत्' इत्यतः स्थानिग्रहणमिहाप्यनुवर्त्तते, स्थानी, प्रसङ्गवान्, प्रसक्तः—इति पर्याया ह्येते। तेनायमर्थो लभ्यते—प्रसक्तस्य यददर्शनं तस्येयं संज्ञेति।

गौधेर इति। 'गोधाया ढ्रक्', एयादेशः, 'लोपो व्योर्वलि' इति यकारस्य शास्त्रेण प्रसक्तस्य लोपः। पचेरन्नित्यत्रापि सीयुटः शास्त्रेण। एवमन्यत्रापि यथायोगं प्रसक्तता वेदितव्या। जीरदानुः, आस्रेमाणमिति। पूर्ववद् वकारस्य लोपः। 'स्रिवु गतिशोषणयोः' इत्यस्य 'सर्वधातुभ्यो मनिन्' इति मनिन्प्रत्ययान्तस्य द्वितीयैकवचन उपधादीर्घेणैत्वे च कृते आस्रेमाणमिति। अपरस्यानुबन्धादेरिति। ककारादेरनुबन्धस्य। आदिशब्देन सीयुट्सकारस्य।

लोपप्रदेशाः—'लोपो व्योर्वलि' इत्येवमादयः ॥

## प्रत्ययस्य लुक्श्लुलुपः ॥ ६१ ॥

'अदर्शनम्' इति वर्त्तते । प्रत्ययादर्शनस्य लुक्-श्लु-लुप्-इत्येताः संज्ञा भवन्ति । अनेकसंज्ञाविधानाच्च तद्भावितग्रहणमिह विज्ञायते ।

### पदमञ्जरी

स्थानं च प्रसङ्गः, तेन प्रसङ्गे यददर्शनं तस्य लोपसंज्ञा, न च दवीत्यत्र क्विपः केनचित्प्रसङ्गोऽस्ति । एवमपि ग्रामणीरित्यत्र कर्मधातुकर्मसन्निधानादस्ति अणः प्रसङ्ग इति तददर्शनस्य संज्ञायां वृद्धिः स्यात् । योऽणाणः प्रसङ्गः, क्विपा सोऽपह्नियते । सामान्यशास्त्रं हि विशेषसन्निधौ तद्व्यतिरिक्त एव विषये प्रतीतिं जनयति । तेन 'सत्सूद्विष' इत्यस्य सन्निधौ 'कर्मण्यण्' इत्यनेन नयतेरण् भवतीति बुद्धिरेव न जन्यते ॥

*प्रत्ययस्य लुक्श्लुलुपः* ॥ 'अदर्शनम्' इति सम्बन्धात् 'प्रत्ययस्य' इति कर्मणि षष्ठी । यदि प्रत्ययादर्शनस्य लुगादिसंज्ञासङ्करः प्राप्नोति, विधानदशायां यया कयाचन संज्ञया भावितस्य प्रत्ययादर्शनस्यानुवादप्रदेशेषु यत्किञ्चनसंज्ञोच्चारणेऽपि ग्रहणप्रसङ्गः, ततश्च—अत्तीति लुक्संज्ञाया भावितस्यापि शपोऽदर्शनस्य 'श्लौ' इत्यत्र ग्रहणाद् द्विर्वचनं स्यात्; जुहोतीति—'उतो वृद्धिर्लुकि हलि' इति वृद्धिः स्यात्; हरीतक्या फलानि—'लुक्तद्धितलुकि 'इति ङीषो लुक् स्यात्; 'लवणाल् लुक्' लवणस्सूपः, युक्तवद्भावः स्यात्; तथा लोपसंज्ञया भावितस्यापि लुक्संज्ञाया अगोमती गोमती सम्पन्ना गोमतीभूता ब्राह्मणीति च्वेर्लोपे 'लुक् तद्धितलुकि' इति लुक् स्यादित्यत आह—*अनेकसंज्ञाविधानाच्चेत्यादि* । यद्यतद्भावितस्याप्येताः संज्ञाः स्युः, नेकसंज्ञाकरणमनर्थकं स्यात् । एकामेव संज्ञां कृत्वा तयैव सर्वाणि कार्याणि विधीयेरन् ! तस्मादनेकसंज्ञाविधानाद्यया संज्ञया यददर्शनं भावितं तस्यैव सा संज्ञेति संज्ञानां सङ्करो न भवति । यद्येवम्, विधिप्रदेशे-

### न्यासः

प्रत्ययस्य लुक्श्लुलुपः ॥ यथा वृद्धिशब्दस्तद्भावितानामतद्भावितानामपि संज्ञा, तथा लुगित्यादिका अप्यतद्भावितस्यापि संज्ञाः प्राप्नुवन्ति, ततश्च संज्ञासंकरः स्यात् । संज्ञासंकरे हि सति तत्कार्याण्यपि संकीर्येरन्नित्यत आह—अनेकसंज्ञाविधानाच्चेत्यादि । यद्यतद्भावितस्याप्येताः संज्ञाः स्युः, अनेकसंज्ञाकरणमनर्थकं स्यात्; एकयैव सर्वकार्यसिद्धेः । तस्मादनेकसंज्ञाविधानाद् यददर्शनं यया संज्ञयोच्चारितया भावितम् = निष्पादितं तस्यैव प्रत्ययादर्शनस्य सा संज्ञा, नान्यस्येति न भवति संकरः । एवं तर्हीतरेतराश्रयदोषः प्राप्नोति, तथा हि—संज्ञया विशिष्टमदर्शनं भाव्यम् , सति च तस्मिन्

लुक्संज्ञाभावितं प्रत्ययादर्शनं लुक्संज्ञं भवति, श्लुसंज्ञाभावितं श्लुसंज्ञं भवति, लुप्संज्ञाभावितं लुप्संज्ञं भवति। तेन संज्ञानां सङ्करो न भवति। विधिप्रदेशेषु च भाविनी संज्ञा विज्ञायते। अत्ति। जुहोति। वरणाः।

प्रत्ययग्रहणं किम्? अगस्तयः। कुण्डिनाः।

पदमञ्जरी

ष्वितरेतराश्रयः प्राप्नोति। न चात्र नित्यतया परिहारः सम्भवति; अदर्शनमेव हि नित्यम्; न पुनर्लुगादिसंज्ञया भावितम्। तत्र यदि तया संज्ञया भावितस्यादर्शनस्य सा संज्ञेति, व्यक्तमितरेतराश्रयो भवति, तत्राह—*विधिप्रदेशेषु चेति*। अदिप्रभृतिभ्यः परस्य शपस्तद्भवति, यस्य भूतस्य लुक्संज्ञा भविष्यतीत्येवं भाविन्याः संज्ञाया विज्ञानान्न भवतीतरेतराश्रयत्वदोषः। लोपसंज्ञात्वदर्शनमात्रस्य विधीयत इति लुगादिसंज्ञाविषयेऽपि भवत्येव। न च लुगादिसंज्ञाभिर्बाधः; एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशात्। अत एव 'न लुमताङ्गस्य' इति निषेधः। *वरणा इति*। 'अदूरभवश्च' इत्यणः 'वरणादिभ्यश्च' इति लुप्।

*प्रत्ययग्रहणं किमिति*। न तावदप्रत्ययनिवृत्त्यर्थम्; लुग्, अणिञोः, तद्राजस्य यञञोश्च, शपः, यङः, सिचः, लेः, सुपः इति सर्वत्र प्रत्ययस्यैव निर्देशाद्, अनुवादेषु

न्यासः

प्रत्ययादर्शने संज्ञया भाव्यमित्यत आह—विधिप्रदेशेषु चेत्यादि। तददर्शनं विधीयते यस्य विहितस्य लुगित्येवमादिकाः संज्ञा भवन्तीति भाविन्याः संज्ञाया विज्ञानान्न भवतीतरेतराश्रयदोषः।

**अत्तीति**। 'अदिप्रभृतिभ्यः शपः' इति शपो लुक्। **जुहोतीति**। 'जुहोत्यादिभ्यः श्लुः'। **वरणा इति**। वरणानां वृक्षाणामदूरभवो ग्राम इति। 'प्राग्दीव्यतोऽण्' तस्य 'वरणादिभ्यश्च' इति लुप्।

**अगस्तयः, कुण्डिना इति**। यदि प्रत्ययग्रहणं न क्रियेत, अगस्त्यस्यापत्यानि बहूनि 'ऋष्यन्धकवृष्णिकुरुभ्यः' इति ऋष्यण्, कुण्डिन्या अपत्यानि बहूनि गर्गादित्वाद् यञ्, तयोरागस्त्यकौण्डिन्यशब्दयोर्जसि परतो यदा 'आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्' इति लुक् क्रियते, अगस्तिकुण्डिनचौ चादेशौ; तदा वैषम्यादेकैकस्य षष्ठीनिर्दिष्टस्य स्थानिनस्त्रय आदेशाः पर्यायेण स्युः। तत्र यदा लुक् क्रियते तदा विभक्तिमात्रस्य श्रवणं प्राप्नोति। अथाप्यलोऽन्त्यस्य स्यात्? एवमप्यागस्त्यः, कौण्डिन्यः इति स्यात्; अगस्तयः, कुण्डिना इति चेष्यते। यदाप्यागस्त्यशब्दस्य कुण्डिनजादेशः, कौण्डिन्यशब्दस्य चागस्त्यादेशः, तथाप्यनिष्टमेव प्राप्नोति। आगस्त्यशब्दस्य हि जसन्तस्य

लुवश्लुलुप्प्रदेशाः—'लुक्तद्धितलुकि', 'जुहोत्यादिभ्यः श्लुः', 'जनपदे लुप्' इत्येवमादयः ॥

पदमञ्जरी

च तद्भावितस्यैव तस्य संप्रत्ययात् । 'गोस्त्रियोरुपसर्जनस्य' इत्यत्र योगो विभज्यते—'गोरुपसर्जनस्य स्त्रियाः' इति, 'लुक् तद्धितलुकि' इति स्त्रिया इत्येव; गोरिति निवृत्तम्; इतरथा कृतेऽपि प्रत्ययग्रहणे गमेर्डो लुक् स्यात्, 'कंसीयपरशव्ययोर्यञञौ लुक् च' इत्यत्र ङ्याप्प्रातिपदिकाधिकारात् कंसीयपरशव्ययोः प्रातिपदिकात्परस्य भागस्य लुग्विज्ञास्यते, न प्रकृतिभागस्य; अन्यथा कृतेऽपि प्रत्ययग्रहणे कमेः सः कंसः, परान् शृणाति परशुरिति उकारसकारयोर्लुक् स्यात्, अतोऽप्रत्ययनिवृत्त्यर्थं तावत्प्रत्ययग्रहणं न कर्त्तव्यम् । यत्र तर्हि न कश्चिन्निर्दिश्यते—'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' इति, अत्र प्रत्ययप्रतिपत्त्यर्थं प्रत्ययग्रहणं भविष्यति ? नैवम्; तत्रापि 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्रग्रहणानुवृत्तेरत्र्यादिभ्यो गोत्रे यो विहितस्तस्य लुक्, तथा 'जनपदे लुप्' इत्यत्र 'ङ्याप्प्रातिपदिकात्प्रत्ययः' इत्यनुवृत्तेः जनपदे विहितस्य चातुरर्थिकप्रत्ययस्यैव लुप् । 'लवणाल्लुक्' इत्यादिष्वपि प्रकृतस्य, अतः प्रत्ययस्य प्रतिपत्त्यर्थमपि न कर्त्तव्यं भवति । सर्वत्र चात्र्यादिभ्यः प्रातिपदिकाल्लवणादिति पञ्चम्यधिकारेण सन्निहितस्य षष्ठीं प्रकल्पयिष्यति, सा चानियतयोगत्वात् स्थानषष्ठी भविष्यतीति स्थानषष्ठीप्रतिपत्त्यर्थमपि प्रत्ययग्रहणं न कर्त्तव्यं भवति । ।

एवं तर्हि सर्वादेशार्थं प्रत्ययग्रहणम्; असति तस्मिन् 'यञञोश्च', 'सुपो धातु-

न्यासः

अगस्तय इति रूपमिष्यते, कौण्डिन्यशब्दस्य तु कुण्डिना इति । अत एवागस्तयः कुण्डिना इत्यनयानुपूर्व्या तयोरुपन्यासः ।

अथाप्यान्तरतम्यादागस्त्यशब्दस्यागस्तिशब्द एवादेशो भवति, न कुण्डिनजिति ? कौण्डिन्यशब्दस्यापि कुण्डिनजादेशो भवति, नागस्तिशब्द इति ? एवमपि नैवानिष्टापत्तेर्मुक्तिः । तथा हि—एवं ह्यगस्तयः, कुण्डिना इति च सिध्यति, तथापि प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षिते सति 'वृद्धाच्छः' इति च्छो न स्यात् , अवृद्धत्वात् प्रकृतेः । प्रत्ययग्रहणे तु सति तददर्शनस्यैवेयं संज्ञा विहितेति तस्यैव लुग् भवति । परिशिष्टस्य च प्रकृतिद्वयस्य यथासंख्यमादेशद्वयम् । तेनागस्तयः कुण्डिना इत्येतच्च रूपद्वयं सिध्यति । प्राग्दीव्यतीयाजादिप्रत्ययविवक्षायामपि 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे वृद्धाच्छप्रत्ययश्च । अगस्तीनां छात्रा आगस्तीया इति कौण्डिन्यशब्दात् तु सत्यपि लुकि 'कण्वादिभ्यो गोत्रे' इत्यणेव भवति—कौण्डिन्याश्छात्रा इति । तेन तत्र छप्रत्ययाभावदोषो न प्रसञ्जनीयः ।

## प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥

पदमञ्जरी

प्रातिपदिकयोः' इत्यादिषु यत्रानेकाल् प्रत्ययः, तत्रालोऽन्त्यस्य स्यात्, 'लवणाल्लुक्' इत्यादौ तु आदेः स्यात्; सति तु प्रत्ययग्रहणे तत्सामर्थ्यात् सर्वादेशो लुगादिर्भवति ? ज्ञापकात्सिद्धम्, यदयम् 'घोर्लोपो लेटि वा' इति लोपे प्रकृते 'लुग्वा दुहदिह' इति लुकं शास्ति, तज्ज्ञापयति—'लुगादयः सर्वादेशाः' इति । 'अलोऽन्त्यस्य' ह्यदर्शनं प्रकृतेन लोपेनापि सिद्धम् । विपर्ययस्तु न भवति, 'घोर्लोपः' इत्यत्र तावदसंजातविरोधित्वाद् 'अलोऽन्त्यस्य' इति प्रवर्तते, पश्चाल्लुग्ग्रहणं तस्यैव सर्वादेशतां गमयति । सामान्येन च ज्ञापकं समर्थयिष्यते—'लोपव्यतिरिक्तपदर्शनं सर्वादेशः' इति । अतः सर्वादेशार्थमपि प्रत्ययग्रहणं न कर्त्तव्यमिति प्रश्नः।

इतरोऽपि विदिताभिप्रायः परिहरति । *अगस्तयः कुण्डिना इति* । असति प्रत्ययग्रहणे आगस्त्यकौण्डिन्ययोरित्यत्र 'लुगणिञोः' इत्यतो लुग्ग्रहणमनुवर्त्तते वा ? न वा ?

अनुवृत्तौ—स्थानिनौ द्वौ, लुका सह त्रय आदेशा इति वैषम्यादसति यथासङ्ख्ये एकैकस्य त्रय आदेशाः पर्यायेण स्युः । ततश्चागस्तयोऽपि कुण्डिनाः स्युः, कुण्डिनाश्चागस्तयः स्युः । लुक् च क्रियमाणो यदि ज्ञापकात्सर्वादेशः, तत उभयत्रापि विभक्तिमात्रश्रवणप्रसङ्गः ।

अथ निवृत्तम्—ततोऽगस्तयः, कुण्डिना इत्यत्र न कश्चिद्दोषः । अगस्तीनां छात्रा आगस्तीया इत्यत्र तु प्राग्दीव्यतीयेऽजादौ प्रत्यये विवक्षितेऽप्यगस्त्यादेशस्य निषेधाभावात् प्रवृत्ताववृद्धत्वाच्छो न स्यात्; प्रत्ययग्रहणे तु सति लुग्ग्रहणानुवृत्त्याऽऽगस्त्यकौण्डिन्ययोः प्रत्ययांशस्य लुग्न भवति । परिशिष्टयोर्भागयोर्यथासंख्यमगस्तिकुण्डिनचावित्यर्थः सम्पद्यते; तेनागस्तयः, कुण्डिना इति च सिद्ध्यति । प्राग्दीव्यतीये च विवक्षिते 'गोत्रे लुगचि' इति लुकि प्रतिषिद्धे तत्सन्नियोगशिष्टत्वादगस्त्यादेशेऽपि निवृत्ते आगस्त्यशब्दस्य वृद्धत्वाच्छे कृते 'सूर्यतिष्यागस्त्य' इति यलोपे चागस्तीया इति सिद्ध्यति । कौण्डिन्ये च नास्ति विशेषः, निवृत्तेऽपि कुण्डिनजादेशे कौण्डिन्यशब्दादपि 'कण्वादिभ्यो गोत्रे' इति अणि कृते 'आपत्यस्य' इति यलोपे कौण्डिना इत्येव भवितव्यम् । अत आगस्त्यकौण्डिन्ययोरित्यत्रावश्यमनुवर्त्यं लुग्ग्रहणम् । ततश्च पूर्वोक्तदोषपरिहाराय प्रत्ययग्रहणमपि कर्तव्यम् ।

वयन्तु ब्रूमः—'सर्वादेशार्थमपि प्रत्ययग्रहणं सामान्येन ज्ञापकमगतिकगति' इति॥

*प्रत्ययलोपे प्रत्ययलक्षणमिति* ॥ सूत्रारम्भस्य प्रयोजनमाह—*प्रत्ययनिमित्तमित्यादि* । लक्षणशब्दोऽयमस्ति भावसाधनः प्रादुर्भाववचनः, अस्ति च करण-

प्रत्ययनिमित्तं कार्यमसत्यपि प्रत्यये कथं तु नाम स्यादिति सूत्रमिदमारभ्यते । प्रत्ययलोपे कृते प्रत्ययलक्षणं प्रत्ययहेतुकं कार्यं भवति । अग्निचित्, सोमसुत्, अधोगित्यत्र सुप्तिङोर्लुप्तयोः 'सुप्तिङन्तं पदम्' इति पदसंज्ञा भवति। अधोगिति दुहेर्लङि तिपि शब्लुकि तिलोपे घत्वभष्भावजश्त्वचर्त्वेषु कृतेषु रूपम् ।

पदमञ्जरी

साधनो निमित्तवचनः । तत्राद्यस्य ग्रहणे प्रत्ययलोपे सति प्रत्ययस्य प्रादुर्भावो भवतीत्यर्थः स्यात् । तत्र लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भावविधौ लोपविधिर्व्यर्थः स्यात् । ननु च यः प्रत्यस्यैव लोपः 'णेरनिटि' इत्यादि, तस्य वैयर्थ्यं नामास्तु; यस्तु 'टेः' इत्यादिना सामान्येन विहितः, स यदा प्रत्ययस्य भवति—भिक्षुमाचष्टे भिक्षयतीति, तदा तस्य पुनः प्रादुर्भावेऽपि न तस्य वैयर्थ्यम्; उप्रत्यये चरितार्थत्वात् । एवं तर्हि लुप्तस्यैव प्रत्ययस्य पुनः प्रादुर्भाव इष्टे, न प्रत्ययस्य लोप इति वक्तव्यम्—सामान्यविहितो लोपः प्रत्ययस्य न भवतीति ।

अथ प्रत्ययान्तरस्य लुप्तप्रत्ययनिमित्तकस्य प्रादुर्भावो विधीयते, यथा—ग्रामणीरिति क्विपो लोपे तन्निमित्तस्य सोर्विधिः। एवमपि 'प्रत्ययलोपे प्रत्यय' इत्येव वक्तव्यम्—प्रत्ययस्य लोपे न तन्निमित्तकः प्रत्ययो भवतीति । अतो निमित्तपर्यायेण लक्षणशब्देन बहुव्रीहिः, कार्यं चान्यपदार्थं इत्याह—*प्रत्ययहेतुकं कार्यमिति* । प्रत्यासत्तेश्च यः प्रत्ययो यस्य कार्यस्य निमित्तं तस्य लोपेऽपि तद्भवतीत्यर्थः ।

*पदसंज्ञा भवतीति* । ननु च स्थानिवद्भावेनापि सिद्धा पदसंज्ञा, इह तर्हि ता ता पिण्डानामिति—तच्छब्दात्परस्य जसः शिः, 'शेश्छन्दसि बहुलम्' इति लोपे 'नपुंसकस्य झलचः' इति नुम्, 'सर्वनामस्थाने' इति दीर्घश्च भवति; अनड्वान्—सोर्लोपे नुम्भवति; अधोक्—अड्गुणौ भवतः; न्यमार्ट्—मृजेर्वृद्धिः; उन्देर्लङि

न्यासः

प्रत्ययलोपे प्रत्ययलक्षणम् ॥ प्रत्ययलक्षणमिति । प्रत्ययो लक्षणं यस्येति कार्येऽन्यपदार्थे बहुव्रीहिः । प्रत्ययनिमित्तमित्यादिना सूत्रारम्भस्य प्रयोजनमाह ।

ननु च स्थानिवद्भावेनाप्येतत् सिध्यति, नैतदस्ति; अलाश्रयमपि हि प्रत्ययलोपे प्रत्ययलक्षणं कार्यमिष्यते । तथा ह्यग्निचिदित्यत्र 'ह्रस्वस्य पिति कृति तुक्' इत्यलाश्रयेऽपि तुग् भवत्येव । अग्निचिदिति । 'अग्नौ चेः' इति क्विप् । अधोगिति हल्ङ्यादिसूत्रेण तिलोपः; अदादित्वाच्छपो लुक्, 'दादेर्धातोर्घः' इति घत्वम्, 'एकाचो बशो भष्' इत्यादिना भष् धकारः, 'झलाञ्जशोऽन्ते' इति जश्त्वम्, घकारस्य गकारः, तस्य 'वावसाने' इति चर्त्वं ककारः ।

पदमञ्जरी

तिलोपे श्नमाटौ भवतः; 'श्नान्नलोपः'—औनत्; अग्निचित्—क्विपो लोपे तुग्भवति ? एतान्यपि स्थानिवद्भावेनैव सिद्ध्यन्ति; अल्विधित्वात् । सर्वत्रैवाल्मात्रप्रत्ययः, तदाश्रयो विधिरल्विधिरिति । नैतत्सुष्ठूच्यते, उक्तं हि कार्यपेक्षमल्विधित्वं नोदाहरणापेक्षमिति । नुमादिविधौ च सर्वत्र शास्त्रे यद्रूपमाश्रीयते—सर्वनामस्थाने सार्वधातुके पिति कृति सुप्तिङन्तमिति, साधारणं तदलश्चानलश्च । केवलं ताता पिण्डानामित्याद्युदाहरणेऽर्थादलात्मकं तदित्येतावत् ।

इह तर्हि अतृणेट्–'तृहि हिंसायाम्', लङ्, तिप्, श्नम्, 'इतश्च' इतीकारलोपः, उकारस्य हल्ङ्यादिलोपे हलादौ पिति सार्वधातुके विधीयमानोऽल्विधिः 'तृणह इम्' अस्माद्भवति; तथा आशीरित्यत्र 'शास ईदङ्हलोः' इतीत्वं लुप्तेऽपि क्विपि भवति । ननु च 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्'; नैवंविधं वचनमस्ति । द्वितीयस्य प्रत्ययग्रहणस्य प्रयोजनमिदं पठ्यते—अत्र हि 'प्रत्ययलोपे तल्लक्षणम्' इत्येव सिद्धे पुनः प्रत्ययग्रहणाद्यत्र प्रत्ययस्यैवासाधारणं रूपं निमित्तत्वेनाश्रीयते सुपि सार्वधातुके कृति सुप्तिङन्तमिति तदेव यथा स्यात् । तेन गोहितमित्यवादेशो न भवति । न हि 'एचोऽयवायावः' इत्यत्र प्रत्ययस्यासाधारणं किञ्चिद्रूपमुपात्तम्, किन्त्वचीति यदुपात्तं तद्भवे हितगित्यस्मिन्नुदाहरणे अर्थात्प्रत्ययात्मकमित्येतावत् । इत्वेमागमयोस्तु हलादौ क्ङिति हलादौ पिति सार्वधातुक इति प्रत्यय एव प्राधान्येन निमित्तम्, हल् तु तद्विशेषणमिति नेमौ वर्णाश्रयौ । तस्मादल्विध्यर्थमिदमारब्धव्यम् ।

यद्येवम्, भसंज्ञाङीप्ष्फेषु दोषः । भसंज्ञायां तावद्–राज्ञः पुरुषो राजपुरुष इति श्रूयमाणे प्रत्यये यथा संज्ञा भवति, एवं लुप्तेऽपि स्यात् । ततश्च तया पदसंज्ञाया बाधितत्वाद् नलोपो न स्यात् । ननु च द्वे अत्र पदसंज्ञे—स्वादाविति च, सुप्तिङन्तमिति च । तत्र या स्वादौ पदमिति पदसंज्ञा, साऽपवादभूतया बाध्यते; या तु 'सुप्तिङन्तम्' इति पदसंज्ञा, सा न बाधनीया, यथा—श्रूयमाणे प्रत्यये 'राज्ञः' इति समुदायस्य ? नैतदेवम्; श्रूयमाणे प्रत्यये ततः पूर्वस्य भागस्य भसंज्ञा, समुदायस्य तु विसर्जनीयान्तस्य पदसंज्ञेति युक्तम्—विभिन्नावधिकया भसंज्ञया पदसंज्ञा न बाध्यत इति । लुप्ते तु प्रत्यये यस्यैवावधेः स्वादौ पदमिति पदसंज्ञा, सुबन्तं पदमित्यपि तस्यैवावधेः पदसंज्ञा । तत्रैवावधौ भसंज्ञा भवन्ती यथाऽपवदत्वात् स्वादिलक्षणां पदसंज्ञां बाधते, तथा सुबन्तलक्षणामपि परत्वाद्बाधते ।

एवं तर्हि 'न लुमताङ्गस्य' इति प्रतिषेधाद् भसंज्ञा न भविष्यति, यचीति सप्तमीनिर्देशात् । ततः पूर्वस्य भागस्य वस्तुतोऽस्य प्रवर्तमाना भसंज्ञाप्यङ्गकार्यमेव । एवं च बुध्वा 'न ङिसंबुद्ध्योः' इत्यत्र ङौ नलोपः प्रतिषिध्यते, यदि

पदमञ्जरी

प्रत्ययलक्षणेन भसंज्ञा स्याद्, अपवादत्वादेवार्द्रे चर्मन्निति नलोपो न भविष्यतीति किं तेन प्रतिषेधेन ? इह तर्हि चित्रायां जाता 'चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम्' इत्यणो लुकि 'लुक्तद्धितलुकि' इति टापि लुप्ते, चित्र इति स्थिते प्रत्ययलक्षणेनाणन्तत्वात् ङीप् प्राप्नोति, नैष दोषः; 'टिड्ढाणञ्' इत्यत्र 'अतः' इत्यनुवर्तते, तत्र चाणाकारो विशेष्यते—अणोऽकार इति, ततश्चाकार एव ङीपो निमित्तम्; अण् तु तद्विशेषणमिति प्रत्ययलक्षणत्वाभावाद् ङीबभावः।

इह तर्हि वतण्डस्यात्यं स्त्री 'वतण्डाच्च' इत्यञः 'लुक् स्त्रियाम्' इति लुकि वतण्डी-शार्ङ्गरवादिलक्षणं ङीनं बाधित्वा 'प्राचां ष्फस्तद्धितः सर्वत्र' इति सर्वत्रग्रहणस्य पूर्वत्रापकर्षात्प्राचां मतेन यञन्तलक्षणः ष्फः प्राप्नोति, यथा आवट्याच्चापं वा बाधित्वा ष्फ एव भवतीति ? नैष दोषः; अत्रापि यञाकारो विशेष्यते—यञोऽकार इति, यञवयवो योऽकारस्तदन्तादिति। तेनात्राप्यकार एव निमित्तम्, तद्विशेषणन्तु यञिति ष्फो न भवति। अयं तर्हि दोषः—परिवीरिति, परिपूर्वाद्व्येञः क्विपो लोपे यजादित्वात् संप्रसारणे पूर्वत्वे च तुक् प्राप्नोति, 'हलः' इति दीर्घश्च; तत्र विप्रतिषेधेन दीर्घ इष्यते, स विप्रतिषेधो न सिद्ध्यति। किङ्कारणम् ? इह प्रत्ययलोपे सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवसन्नानि, तान्यनेन प्रत्युत्थाप्यन्ते, अनेनैव तुक्, अनेनैव दीर्घः—तदेकयोगलक्षणयोरयुक्तो विप्रतिषेधः ? नैष दोषः; अवस्थिते प्रत्यये, तन्निबन्धनं यत्कार्यं भवत्येव तदेवानेन लुप्ते तस्मिन् प्रत्युत्थाप्यते, न तु यस्य प्राप्तिमात्रं तदपि। परिवीयेत्यादौ श्रूयमाणे प्रत्यये दीर्घ एव परत्वाद् भवति, न तुक्; ततश्चात्रापि यदि क्विबेवास्थास्यद्, दीर्घ एवाभविष्यदिति स एवानेन प्रत्युत्थाप्यते। तदेवमारब्धव्यं सूत्रं न कश्चिद्दोष इति स्थितम्।

अत्रोच्यते – यदुक्तं 'तृणह इम्' हलाश्रय इति; नायं हलाश्रयः, हलीति तत्र निवर्तिष्यते। यदि निवर्तते, तृणहानि—अत्रापि प्राप्नोति ? नाभ्यस्तस्याचीत्यतो नाचीत्यनुवर्त्तते, ततश्चानल्विधित्वात् स्थानिवद्भावेनैव सिद्ध इमागमः। आशीरित्यत्रापि 'आशासः क्वावुपसंख्यानम्' इत्यस्माद् वचनात्सिद्धमित्वम्। आरब्धेऽपि खल्वस्मिंस्तदवश्यं वक्तव्यम्। यदि तावत् 'शास इदङ्हलोः' इत्यत्र शासिमात्रस्य ग्रहणम्, ततो नियमार्थम् 'आशासः क्वावेव यथा स्याद्, आशास्त इत्यादौ मा भूत्' इति। अथ यस्माच्छासेरङ् विहितस्तस्य ग्रहणम्, ततो यथाऽऽशास्त इत्यादौ न भवति तथा क्विप्यपि न स्यादिति विध्यर्थमिदम्। इह तर्हि बिदस्यापत्यानि बहूनि 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' बिदाः, बिदानामपत्यं युवा, 'अत इञ्', तस्य 'ण्यक्षत्रियार्षञितः' इति लुकि कृते, अञो गोत्रबहुत्व उत्पन्नस्य लुकि प्राप्ते 'गोत्रेऽलुगचि' इति प्रतिषेध इष्यते, सोऽजादाविति लुप्तेऽप्यस्माद्वचनाद्भवति ? एतदपि नास्ति प्रयोजनम्; अचीति विषयसप्तमी, तेन गोत्र इति विवक्षिते-

'प्रत्यय' इति वर्त्तमाने पुनः प्रत्ययग्रहणं किम् ? कृत्स्नप्रत्ययलोपे यथा स्यात्। इह मा भूत्—आघ्नीय, सङ्ग्मीय। हनिगम्योर्लिङात्मनेपदे 'लिङः सलोपोऽनन्त्यस्य' इति सीयुट्सकारलोपः प्रत्ययैकदेशलोपस्तत्र प्रत्ययलक्षणेन झलीत्यनुनासिकलोपो न भवति।

प्रत्ययलक्षणमिति किम्? रायः कुलं रैकुलम्, गवे हितं गोहितम्—आयवादेशौ न भवतः, वर्णाश्रयत्वात्।

**पदमञ्जरी**

ऽनुत्पन्न एव लुकि प्रतिषिद्धे पश्चादिञो लुगिति सिद्धमिष्टम्। तदेवमल्विधेः कस्यचिद् दर्शनात् स्थानिवद्भावेनैव सिद्धमिति नार्थोऽनेन।

एवं तर्हि नियमार्थमिदम् 'प्रत्ययलोपे प्रत्ययलक्षणमेव यथा स्यात् प्रत्ययाप्रत्यलक्षणं मा भूत्' इति। एतदुक्तं भवति—यस्मिन्कार्ये विधीयमाने प्रत्ययस्यैवासाधारणं किञ्चिद्रूपं निमित्तत्वेनाश्रीयते, तदेव प्रत्ययलोपेऽपि भवति, न पुनः प्रत्ययाप्रत्यसाधारणं रूपमाश्रित्य यद्विधीयते तदिति। तेन शोभना दृषदो यस्य सुदृषदिति 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वं न भवति। अन्यथा लुप्तेऽपि जसि स्थानिवद्भावेनासन्तमुत्तरपदमिति स्यात्प्रसङ्गः। प्रत्ययलक्षणं तु न भवति, 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन तदन्तविधिं प्रयोजयन्ति' इत्यस्मात्तस्य ग्रहणात्।

वृत्तिकारेण तु 'नियमार्थमप्येतत् प्रत्ययलोपे सर्वत्र प्रवर्तते' इति मत्वोक्तं पदसंज्ञा भवतीति। *आघ्नीयेति*। 'आङो यमहनः'। *संग्मीयेति*। 'समो गम्यृच्छि'

**न्यासः**

प्रत्यय इति। 'वर्तमाने' इति पूर्वसूत्रात्। आघ्नीयेति। 'आङो यमहनः' इत्यात्मनेपदम्। 'गमहन' इत्यादिनोपधालोपः। 'हो हन्तेः' इति घः। संग्मीयेति। संपूर्वाद् गमः 'समो गमि' इत्यादिनात्मनेपदम्। 'इटोऽत्' इत्यद् भावः। 'बहुलं छन्दसि' इति शपो लुक्। पूर्ववदुपधालोपः। अनुनासिकलोपो न भवतीति। 'अनुदात्तोपदेश' इत्यादिना।

रैकुलमिति। षष्ठीसमासः। गोहितमिति। 'चतुर्थी' इत्यादिना। अस्त्यत्र षष्ठीचतुर्थ्येकवचनयोः प्रत्यययोर्लोपः; किं त्वयावादेशयोरचि विधानात् तद्विधौ वर्ण आश्रीयते, न तु प्रत्ययः। तेन वर्णनिमित्तकौ तौ न प्रत्ययनिमित्तकाविति न भवतः। ननु च नात्र प्रत्ययस्य लोपः क्रियते, किं तर्हि? लुक्, नैतदस्ति; लोपशब्दोऽपि सामान्येन तद्भावितस्यातद्भावितस्य चाऽदर्शनस्य संज्ञा। तस्माल्लुगपि लोपो भवत्येव॥

## न लुमताङ्गस्य ॥ ६३ ॥

पूर्वेणातिप्रसक्तं प्रत्ययलक्षणमिति विशेषे प्रतिषेध उच्यते । लुमता शब्देन लुप्ते प्रत्यये यदङ्गं तस्य प्रत्ययलक्षणं कार्यं न

पदमञ्जरी

इत्यात्मनेपदम्, 'इटोऽत्', बहुलं छन्दसि' इति शपो लुक्, उभयत्र 'गमहन' इत्युपधालोपः ॥

न लुमताङ्गस्य ॥ 'लुमता' इति लुशब्दो यस्मिन्नस्ति स लुमान्–लुगादिः संज्ञाशब्दः । करणे च तृतीया, लोपे च करणत्वम् । 'प्रत्ययलोपे' इत्यनुवृत्तेः लुमता शब्देन प्रत्ययलोपे सति अङ्गस्य प्रत्ययलक्षणं कार्यं न भवति । तत्र च प्रत्यासत्तेर्लुप्तप्रत्ययापेक्षया येनाङ्गसंज्ञा प्रतिलब्धा तस्य तन्निमित्तं कार्यं न भवतीत्यर्थः । एतदेव वस्तुतो दर्शयति—*लुमता लुप्ते प्रत्यये यदङ्गमिति* । तेनोत्क्रामेत्यत्र 'अतो हेः' इति लुकि कृते परस्मैपदापेक्षया यदङ्गं शबन्तं न तस्य दीर्घत्वम्, यस्य च दीर्घत्वं न तत्परस्मैपदापेक्षयाङ्गम् । किं तर्हि ? शबपेक्षयेति निषेधाभावात् प्रत्ययलक्षणेन 'क्रमः परस्मैपदेषु' इति दीर्घो भवति, तथा 'गमेरिट् परस्मैपदेषु' 'न वृद्भ्यश्चतुर्भ्यः' इटो विधिप्रतिषेधौ जिगमिष विवृत्सेति परस्मैपदलुक्यपि भवतः । लुमता लुप्ते परस्मैपदे यदङ्गं सनन्तं न तस्येटो विधिनिषेधौ, किं तर्हि ? सकारादेः प्रत्ययस्येति । इदं चान्यदस्मिन् ग्रन्थे दर्शितम्—नाङ्गस्येत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यते 'न लुमता लुप्ते प्रत्यये आङ्गं भवति' इति, किं तर्हि ? लुमता लुप्ते प्रत्यये यदङ्गं तस्याङ्गमनाङ्गं च सर्वं प्रतिषिध्यते इति । तेन गर्गाः, बिदाः—यञञोर्लुक्, उष्ट्रग्रीवः—'इवे प्रतिकृतौ' इति कनः 'देवपथादिभ्यश्च' इति लुप्, पन्थाः प्रियोऽस्य पथिप्रियः—'सुपो धातु' इति सर्वनामस्थानस्य लुक् । अत्र 'ञ्नित्यादिर्नित्यम्', 'पथिमथोः सर्वनामस्थाने' इति चाद्युदात्तस्यानाङ्गस्यापि निषेधो भवति । सप्तमीनिर्देशाद्ध्येतद्वस्तुतोऽङ्गस्य कार्यम् । तथाऽहर्ददाति –'रोः सुपि' इति रत्वप्रतिषेधो न भवति । यद्यनाङ्गमपि प्रतिषिध्यते, अवधि भवता दस्युः, अगायि भवता ग्रामः, अध्यगायि

न्यासः

न लुमताङ्गस्य ॥ लुमतेति । लुशब्दो यस्मिन्नस्ति स लुमान् । कः पुनरसौ ? लुगित्यादिसंज्ञाशब्दः । करणे चेयं तृतीया, हेतौ वा, इत्थम्भूतलक्षणे लुवा । मता करणेन लुप्ते प्रत्यये, तेन हेतुना वा, तदुपलक्षितेन वेत्यर्थः । अथ प्रत्यय इत्येतत् कुतो लभ्यते ? प्रत्ययादर्शनस्यैव लुगादिसंज्ञाविधानात् ।

लुमताशब्देन लुप्ते प्रत्यये यदङ्गमिति । तत् पुनस्तमेव प्रत्ययं निमित्तमाश्रित्य येनाङ्गसंज्ञा प्रतिलब्धा तद् वेदितव्यम् । तस्य प्रत्ययलक्षणं कार्यं न भवतीत्यविशेषाभि-

पदमञ्जरी

भवताऽनुवाकः; लुङि परतोऽङ्गस्य विधीयमाना हनिणिङादेशाः 'चिणो लुक्' इति लुङो लुकि न स्युः। न लुङि हनिणिङादेशा विधीयन्ते, किं तर्हि ? लुङि यदार्धधातुकं तत्र। ततश्च लुङि यदङ्गं चिणन्तं न तस्य हनिणिङादेशाः, यस्य च ते न तल्लुक्यङ्गमिति निषेधाभावः।

इह तर्हि 'मा हि दातां सर्पिरागच्छेत्' इति सिजामन्त्रितयोर्लुकि सति 'आदिः सिचोऽन्यतरस्याम्' 'आमन्त्रितस्य च' इति आद्युदात्तत्वं न स्यात् ? नैतदङ्गस्य चिणन्तं कार्यम्, किं तर्हि ? तदन्तस्य; षष्ठीनिर्देशात्। तेन पयः सामेत्यादौ पदसंज्ञा च भविष्यति। ननु यद्यपि तदन्तस्याद्युदात्तत्वम्, पदसंज्ञाऽपि, तथा लुप्ते इदानीं प्रत्यये वस्तुतोऽङ्गस्य प्राप्नुत इति भवितव्यं निषेधेन ? नात्र लुप्ते प्रत्यये यदङ्गस्य प्राप्तं तन्निषिध्यते, किं तर्हि ? अवस्थितेऽपि प्रत्यये यत्ततः पूर्वस्याङ्गस्य कार्यं तन्निषिध्यते। वृक्षा मा हि लाविष्टामित्यादौ च श्रूयमाणे प्रत्यये तदन्तस्यैव पदसंज्ञा स्वरश्चेति लुप्तेऽपि भविष्यतः। एवं च राज्ञः पुरुष इति श्रूयमाणे ङसि, ततः पूर्वस्य भसंज्ञा न तदन्तस्येति अङ्गकार्यत्वात् लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेन प्राप्ताऽनेन निषिध्यते॥

इह तर्हि अत्रेरपत्यानि 'इतश्चानिञः' इति ढकः 'अत्रिभृगु' इति लुकि कृते अत्रय इति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वं स्यात्, तदन्तकार्यत्वात्, नैष दोषः; तद्धितस्यैवान्तोदात्तत्वम्, न तदन्तस्य।

इह तर्हि सर्वः स्तोमो यस्य सर्वस्तोमः—'सर्वस्य सुपि' इत्याद्युदात्तत्वं न स्यात्, सुपीति सप्तमीनिर्देशात् ? कर्तव्योऽत्र यत्नः। यत्नश्च—सर्वस्य सुप इति षष्ठीनिर्देशः षष्ठीनिर्देशे तु तदन्तकार्यत्वात् सिच्स्वरवत् सिध्यति। ननु द्वयोरपि पक्षयोः—अभूवन्, प्रत्ययलक्षणेन जुस्प्राप्नोति, 'आतः' इति नियमान्न भविष्यति।

इह तर्हि देवदत्तं याजयाञ्चकार—'आमः' इति लुकं बाधित्वा परत्वात्तिबादिषु कृतेषु तेषां च लुकि प्रत्ययलक्षणेन तिङन्तत्वादामन्तस्य च निघातः, ततः परस्यानिघातश्च प्राप्नोति, लेरित्यनुवृत्तेर्लावस्थायामेव लुग्भविष्यति। इह च देवदत्तो युष्मत्पुत्र इति षष्ठ्यन्तस्य विधीयमानौ वांनावौ 'द्वितीयास्थयोः' इति स्थग्रहणान्न भवतः। षष्ठीचतुर्थीद्वितीयास्ववस्थानं श्रूयमाणस्यैव सम्भवति।

इह तर्हि परमवाचा, परमगोदुहा, परमलिहा, परमदण्डिना, परमदिवा, परमकुमार्येति समासार्था या विभक्तिः, तामाश्रित्योत्तरपदस्य पदसंज्ञायां प्राप्तायाम्, 'चोः कुः', 'दादेर्धातोर्घः', 'हो ढः', 'नलोपः प्रातिपदिकान्तस्य', 'दिव उत्', 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति—एते विधयः प्राप्नुवन्ति, नैष दोषः; भसंज्ञाविषये तावत्सैव पदसंज्ञां बाधिष्यते। ननु च समुदायस्य या

भवति । गर्गाः । मृष्टः । जुहुतः । यञ्शपोर्लुमता लुप्तयोरङ्गस्य गुणवृद्धी न भवतः ।

पदमञ्जरी

पदसंज्ञा स्वादिष्विति प्राप्ता सा तुल्यावधिकया भसंज्ञया बाध्यताम्, या तूत्तरपदस्य सुबन्तमिति प्राप्ता सा कथं बाध्यते, भिन्नावधित्वात् ? एवं तर्हि 'सुप्तिङन्तम्' इत्यतः सुबन्तमित्यनुवर्त्तनीयम्, ततश्चायमर्थो भवति – 'यजादावसर्वनामस्थाने परतः पूर्वस्समुदायो भसंज्ञो भवति । तत्र च समुदाये यत्सुबन्तं वर्तते तदपि भसंज्ञं भवति यजादावनन्तरे' इति । तत्र च समुदायस्य भसंज्ञा प्रधानशिष्टा, अवयवस्य त्वन्वाचयशिष्टा । यत्र च सुबन्तं पश्यति तत्र तस्यापीति, तेन राज्ञ इत्यादौ सुबन्ताभावेऽपि भवति । सुबन्तसद्भावे तु तस्य समुदायस्य चेति विवेक्तव्यम् । सर्वनामस्थानेऽपि 'असर्वनामस्थाने' इति प्रतिषेधात् पदसंज्ञा न भविष्यति । ननु 'स्वादिषु' इति या प्राप्तिः समुदायस्य, तस्या एव स प्रतिषेधः, नेत्याह; तत्रापि सुबन्तमित्यनुवर्तते, प्रसज्यप्रतिषेधश्चाश्रीयते, तत्सामर्थ्यात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति नाश्रीयते; ततश्चायमर्थो भवति—'सर्वनामस्थाने परतः पूर्वस्य समुदायस्य स्वादिष्विति प्राप्ता पदसंज्ञा न भवति । तत्र च यत्सुबन्तमवयवत्वेन वर्त्तते, तस्य सुबन्तस्य पदसंज्ञा न भवति' इति । यद्येवम्; सुवाक्, सुराजेति सावपि समुदायस्यावयवस्य च स्वादिष्विति वा सुबन्तमिति वा पदसंज्ञाया अभावात् कुत्वादि न स्यात् । एवं तर्हि 'असर्वनामस्थाने' इत्यत्र उत्तरसूत्राद्यचीत्यपकृष्यते, ततो यजादौ सर्वनाम-

न्यासः

धानेऽपि प्रत्यासत्तेर्य एवासौ लुमता लुप्तः प्रत्ययोऽङ्गसंज्ञाया निमित्तं तल्लक्षणमिति गम्यते । गर्गा इति । 'गर्गादिभ्यो यञ्' 'यञञोश्च' इति बहुषु लुक् । अत्र 'तद्धितेष्वचामादेः' इति वृद्धिर्न भवति । मृष्ट इति । मृजेस्तस्, अदादित्वाच्छपो लुक्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्, 'मृजेर्वृद्धिः' इति वृद्धिर्न भवति । जुहुत इति । तसि परतो जुहोत्यादिभ्यः श्लौ कृते सार्वधातुकलक्षणो गुणो न भवति । सर्वत्र यमेव प्रत्ययमाश्रित्याङ्गसंज्ञा जाता स एव वृद्धादेः कार्यस्य निमित्तम् । इह च विशेषस्यानाश्रयणान् न केवलमङ्गाधिकारविहितं कार्यं प्रतिषिध्यते, अपि त्वनङ्गाधिकारविहितमपि । तेन गर्गाः, बिदाः, उष्ट्रग्रीवा इत्यत्र 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तत्वमनङ्गाधिकारविहितमपि न भवति । इह च–अत्रय इति तद्धितस्य 'कितः' इत्यन्तोदात्तत्वम् । गर्गाः, बिदा इति यथाक्रमं गर्गादियञ् । 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' इत्यञ् । 'यञञोश्च' इति लुक् । उष्ट्रग्रीवा इति । 'इवे प्रतिकृतौ' इति विहितस्य कनो 'देवपथादिभ्यश्च' इति लुप् । अत्रय इति अत्रेरपत्यार्थे 'इतश्चानिञः' इति विहितस्य ढकः 'अत्रिभृगुकुत्सवसिष्ठ'

लुमतेति किम् ? कार्यते । हार्यते । अङ्गस्येति किम् ? पञ्च । सप्त । पयः । साम ॥

पदमञ्जरी

स्थाने या च यावती च पदसंज्ञा, सा सर्वा प्रतिषिध्यते; सौ तु स्वादिष्विति च सुबन्तमिति च भवत्येव । यद्येवम्, श्रूयमाणेऽपि सौ पूर्वस्य पदसंज्ञा प्राप्नोति, तत्र को दोषः ? 'एचोऽप्रगृह्यस्य' इत्यत्र पदान्तग्रहणं चोदयिष्यति–भद्रं करोषि गौरित्यत्र मा भूदिति । तत्र क्रियमाणेऽपि पदान्तग्रहणे प्लुतविकारः प्राप्नोति, नैष दोषः; वाक्यपदयोरन्त्यस्येत्येवमेतद्विज्ञायते, तदेवं समासेषूत्तरपदस्य पदत्वं नास्तीति स्थितम् । यद्येवम्, दधिसेचौ, दधिसेचः 'सात्पदाद्योः' इति षत्वनिषेधो न प्राप्नोति, नैवं विज्ञायते–पदस्यादिः पदादिः, पदादेर्नेति, कथं तर्हि ? पदादादिः पदादिः, पदादेर्नेति । कथमग्निषु, वाक्षु, त्वक्षु ? सात्प्रतिषेधो ज्ञापयति–स्वादौ यत्पदं ततः परस्य नेति । अवश्यं च पदादादिरित्येवं विज्ञेयम्, अन्यथा 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति यत्र सुबन्तमुत्तरपदं तत्र प्रतिषेधो न स्यात् ।

इह तर्हि बहुसेचौ, बहुसेचम्, बहुचोऽपदत्वात् प्रतिषेधो न प्राप्नोति, वक्तव्यमेवैतत् 'बहुच्पूर्वस्य न' इति, तत्रायं सूत्रन्यासः—साते सः षत्वं न भवति, ततो 'बहुचः', बहुचः परस्य षत्वं न भवति; आदिग्रहणं न कर्तव्यम्, 'आदेः परस्य' इत्येव सिद्धम् । तदिदं बहुज्ग्रहणेन निमातव्यम् ।

*कार्यते, हार्यते इति* । ण्यन्तात्कर्मणि लकारः, यक्, णिलोपः । ननु चात्रान्तरङ्गा वृद्धिरुत्पन्नमात्र एव णौ भवति, लोपस्तु यकि भवन् बहिरङ्गः । एवं तर्हि विभज्यान्वाख्यानपक्षे एतत्प्रत्युदाहृतम् ॥

न्यासः

इत्यादिना बहुषु लुक् । पञ्च, सप्तेति । 'षड्भ्यो लुक्' इति जश्शसोर्लुक् । पयः सामेति । अत्रापि 'स्वमोर्नपुंसकात्' इति । अत्र यद्यपि लुमता लुप्तः प्रत्ययः, तन्निमित्ता चाङ्गसंज्ञा, तथापि प्रत्ययलक्षणेन 'सुप्तिङन्तं पदम्' इति पदसंज्ञा भवत्येव; यस्मान्नासावङ्गस्य कार्यम्, अपि तु सविभक्तिकस्य समुदायस्य प्रत्ययस्य हि पूर्वभागोऽङ्गम् । न चेह तस्य लुमता यो लुप्तः प्रत्ययस्तन्निमित्ता पदसंज्ञा प्राप्नोति; 'स्वादिष्वसर्वनामस्थाने' इति वचनात् । तेन नात्र यमेव प्रत्ययमाश्रित्याङ्गसंज्ञा भवति तमेवाश्रित्य पदसंज्ञा प्राप्नोति । पदसंज्ञायाञ्चेह सत्यां पय इत्यत्र 'ससजुषो रुः' इति रुत्वम् । खरवसानयोर्विसर्जनीयश्च पदकार्यं भवति । पञ्च, सप्त, सामेति । अत्रापि 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः पदसंज्ञाकार्यम् । कार्यते इति । ण्यन्तात् कर्मणि लकारः, 'सार्वधातुके

## अचोऽन्त्यादि टि ॥ ६४ ॥

'अचः' इति निर्धारणे षष्ठी । जातावेकवचनम् । अचां संनिविष्टानां योऽन्त्योऽच् तदादि शब्दरूपं टिसंज्ञं भवति । अग्निचित्—इच्छब्दः । सोमसुत्—उच्छब्दः । आताम्, आथाम्—आम्शब्दः । पचेते, पचेथे ।

### पदमञ्जरी

*अचोऽन्त्यादि टि* ॥ अन्ते भवोऽन्त्यः दिगादित्वाद्यत्, अन्त्यादिति बहुव्रीहिः । यद्यप्यचामित्येतदपेक्षोऽन्त्यशब्दस्तथापि सम्बन्धिशब्दन्वेन नित्यसापेक्षत्वादविरुद्धः समासः । *निर्धारणे षष्ठीति !* यद्येवं निर्द्धारणस्यानेकाश्रयत्वाद् अच इत्येकवचनमनुपपन्नम्, तत्राह -- *जातावििति* । *योऽन्त्योऽजिति* । निर्द्धारणस्य सजातीयविषयत्वादजिति लभ्यम् । इच्छब्द इत्यादि रूपोदाहरणम् । कार्यं त्वग्निचितमाचष्टे णिचि 'णाविष्ठवत्' इति टिलोपः । पचेते इत्यादि कार्योदाहरणम् ॥

### न्यासः

यक्' अत्र न लुमता प्रत्ययो लुप्तः, किं तर्हि ? 'णेरनिटि' इति; अत्र 'आतो लोपः' इत्यस्माल्लोपग्रहणानुवृत्तेः । तेन प्रत्ययलक्षणा वृद्धिर्भवत्येव ।

**अचोऽन्त्यादि टि** ॥ अन्त्यादीति बहुव्रीहिः । अचां मध्ये योऽन्त्योऽच्, स आदिर्यस्य शब्दरूपस्य तत् तथोक्तम् । ननु चान्त्यशब्दोऽत्राचामित्येतदपेक्षत इत्यसामर्थ्यादादिशब्देन सह समासो न प्राप्नोति, नैष दोषः; अन्त्यशब्दो हि सम्बन्धिशब्दः, सम्बन्धिशब्दानां नित्यसापेक्षत्वेन गमकत्वात् सापेक्षत्वेऽपि समासो भवति, यथा—देवदत्तस्य गुरुकुलमिति ।

**निर्धारणे षष्ठीति** । 'यतश्च निर्धारणम्' इत्यनेन यदि निर्धारणे षष्ठीयम्, एवं हि सति निर्धारणमनेकसन्निपाते भवतीत्यच इत्येकवचनं न स्यात् । बहुत्वाद्बहुवचनेन भवितव्यमित्यत आह—जातावेकवचनमिति । जातेरेकत्वादिति भावः । **अचां सन्निविष्टानां योऽन्त्योऽजिति** । कथं पुनरजित्येष विशेषो लभ्यते, यावता नेह द्वितीयमज्ग्रहणम्, नापि प्रकृतम् ? एवं मन्यते—समानजातीयस्यैव लोके निर्धारणं प्रसिद्धम् । तथा हि, कृष्णा गवां सम्पन्नक्षीरतमेति द्वितीयं गोशब्दमन्तरेणापि गौरेव प्रतीयते । तस्मादिहापि यद्यपि द्वितीयमज्ग्रहणं नास्ति, तथापि समानजातीयोऽजेव निर्धार्यमाणोऽवसीयत इति । अन्ते भवोऽन्त्यः, दिगादित्वाद् यत् । **तदादीति** । स आदिर्यस्येति विग्रहः । इच्छब्द इत्यादीनि रूपोदाहरणानि । कार्यं पुनरिच्छब्दस्य टिसंज्ञायामग्निचितमाचष्ट इति णिचि कृते णाविष्ठवत् प्रातिपदिकस्येति टिलोपः । अग्निं चयतीति ।

**आताम्, आथामिति** । अनयोस्तु टिसंज्ञाकार्यम्—'टित आत्मनेपदानां टेरे' इति

टिप्रदेशाः—'टित आत्मनेपदानां टेरे' इत्येवमादयः ।

**अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥**

धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्वो यो वर्णः सोऽलेवोपधासंज्ञो

**पदमञ्जरी**

*अलोऽन्त्यात्पूर्व उपधा* ॥ समुदाय एवान्त्यो भवतीत्याह—*धात्वादाविति* । 'अलः' इति जसन्तं चेद् अन्त्यस्याविशेषितत्वात् समुदायादपि पूर्वस्य संज्ञायां शिष्ट इति शकारस्येत्वं स्याद्, असन्देहार्थमलित्येव च ब्रूयाद्; अतोऽन्त्यादित्यनया समानाधिकरणा पञ्चमीत्याह—*अन्त्यादल इति* । यद्येवम् , पूर्वस्याविशेषितत्वात् समुदायस्यापि संज्ञायां शिष्ट इति 'शा' इति समुदायस्येत्वं प्राप्नोति, 'अलोऽन्त्यस्य' इत्यन्त्यस्य भविष्यति । 'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारेषु', तत्र यथा—आभ्यामित्यत्र 'हलि लोपः' इद्रूपस्य विधीयमानो लोपोऽन्त्यस्य न भवति, तथात्रापि न स्याद्; अतोऽलोऽन्त्यात्पूर्वोऽलिति वक्तव्यमित्यत आह —*अलेवेति* ।

**न्यासः**

टेरेत्वम् । पचेते, पचेथे इति कार्योदाहरणे । अथ वहिमहिङोरिकारस्य कथं टिसंज्ञा, यावता न सोऽस्ति यस्य सोऽन्त्यः, अजादिरिति व्यपदिश्यते ? नैष दोषः; 'आद्यन्तवदेकस्मिन्' इति व्यपदेशिवद्भावेनादिः, अन्त्य इति व्यपदेशो भविष्यति ।

अलोऽन्त्यात्पूर्व उपधा ॥ अलोऽन्त्यादिति समानाधिकरणे पञ्चम्यौ । धात्वादौ वर्णसमुदाय इति । ननु च नेह वर्णसमुदायग्रहणमस्ति, नापि तत् प्रकृतम् । तत् कथमेषोऽर्थो लभ्यते ? अन्त्यग्रहणात् , समुदायस्यैवान्त्योऽल् भवति, न केवलः । तस्मादन्त्यग्रहणादेषोऽर्थो लभ्यते ।

अलेवेति । एवकारकरणादेवाल्समुदायो व्यवच्छिद्यते । ननु च नेह द्वितीयमल्ग्रहणमस्ति, तदल्समुदायस्याप्येषा संज्ञा कस्मान्न भवति ? लोकतश्च । लोके ह्यमीषां ब्राह्मणानामन्त्यात् पूर्व आनीयतामित्युक्त एक एवान्त्यात् पूर्व आनीयते, न समुदायः। एवमप्यल एव व्यवहितस्य कस्मादेषा संज्ञा न भवति ? व्यवहितेऽपि पूर्वशब्दो वर्त्तत एव । अत एव लौकिकाद् दृष्टान्तात्—लोके ह्यन्त्यात् पूर्वमानयेत्युक्ते न कश्चिद् व्यवहितमानयति, अपि त्वनन्तरमेव । यदि ह्यल एवैषा संज्ञा, नाल्समुदायस्य, 'ऋतश्च संयोगादेर्गुणः' इत्यत्र यद् वक्ष्यति—'संयोगादिगुणविधाने संयोगोपधग्रहणं कर्त्तव्यम्' इति, तद्व्याहन्यते; न ह्यल एवोपधासंज्ञायामनेकानन्तरहल्समुदायात्मनः संयोगस्योपधात्वमुपपद्यते । संयोगावयवस्योपधात्वादवयवधर्मेण समुदायस्य तथा व्यपदेश इत्यविरोधः । भवति ह्यवयवधर्मेण समुदायस्य तथा व्यपदेशः, यथा—आढ्यमिदं नगरमिति ।

अथ वा—संयोगस्याल्पूर्वत्वोपलक्षणार्थं तत्रोपधाग्रहणं द्रष्टव्यम् । अकार इत्यादीनि

भवति। पच् पठ्—अकारः। भिद्, छिद्—इकारः। बुध्, युध्—उकारः। वृत्, वृध्—ऋकारः।

अल इति किम्? शिष्टः, शिष्टवान्। समुदायात्पूर्वस्य मा भूत्। उपधाप्रदेशाः—'अत उपधायाः' इत्येवमादयः॥

## तस्मिन्निति निर्दिष्टे पूर्वस्य॥ ६६॥

पदमञ्जरी

एवकारः पौनर्वचनिकः, यथान्त्योऽल्, एवं पूर्वोऽप्यलेवेति। कथं पुनर्द्वितीयमल्ग्रहणमन्तरेणायमर्थो लभ्यते? लोकतः। लोके ह्यमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते एक एवान्त्यात्पूर्वोऽनन्तर आनीयते, न समुदायः। संयोगोपधग्रहणं कृञर्थमित्यत्रावयवधर्मेण समुदायस्य संयोगस्योपधाव्यपदेशः। अकार इत्यादीनि रूपोदाहरणानि। कार्यं तु पाचक इत्यादौ 'अत उपधायाः' इति वृद्धिः। भेदक इत्यादौ 'पुगन्तलघूपधस्य च' इति गुणः। *शिष्ट इति*। शासेर्निष्ठा, 'शास इदङ्हलोः' इतीत्वम्, 'शासिवसिघसीनां च' इति षत्वम्॥

*तस्मिन्निति निर्दिष्टे पूर्वस्य*॥ इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात् 'तस्मिन्नणि च' इत्यत्रोपात्तस्येदमनुकरणम्, ततश्च तत्रैवास्य प्रवृत्तिः स्याद्। अस्ति च तत्र व्यवच्छेद्यं हे यौष्माकीणमस्मभ्यं देहि, आस्माकीनं युष्मभ्यं ददामीति परनिवृत्तिः, तामिमां भ्रान्तिमपाकरोति—

न्यासः

रूपोदाहरणानि। कार्यं त्वकारस्योपधासंज्ञायां पाचकः, पाठक इत्यत्र 'अत उपधायाः' इति वृद्धिः। इकारलृकारयोस्तु भेदकः, छेदक; वर्त्तकः, वर्द्धक इति। अत्र 'पुगन्तलघूपधस्य' इति गुणः।

शिष्ट इति। 'शासु अनुशिष्टौ', निष्ठा, 'शास इदङ् हलोः' इति उपधाया इत्त्वम्। तत्र हि 'अनिदिताम्' इत्यादेः सूत्रादुपधाग्रहणमनुवर्त्तते। 'शासिवसि' इत्यादिना षत्वम्। समुदायादित्यादि। अकारसकारसमुदायात्। पूर्वस्य शकारस्योपधासंज्ञा मा भूदित्यर्थः। यदि हि स्यात्, तस्यैवेत्त्वं स्यात्।

तस्मिन्निति निर्दिष्टे पूर्वस्य॥ किमर्थमिदम्? 'इको यणचि' इत्येवमादावचीत्येवमादेराधाराधेयभावः प्रत्यासत्तिनिबन्धनः, यथा—गङ्गायां घोषः प्रतिवसतीति। अत्र गङ्गायाः सा च प्रत्यासत्तिर्यथा पूर्वमपेक्ष्य भवति, तथा परमपि। ततश्च दध्युदकादिषु न ज्ञायते—किं पूर्वस्येकः प्रत्यासत्तिभाजो यणादेशः, उत परस्येति। तत्र संदेहे सति नियमार्थेयं परिभाषाऽऽरभ्यते। यद्येवं सन्देहविषय इयमारभ्यत इति यत्र संदेहस्तत्रोपतिष्ठते, ततश्च दध्युदकमिति सिद्धं स्यात्; इदन्तु न सिध्यति—दध्यत्रेति।

'तस्मिन्' इति सप्तम्यर्थनिर्देशे पूर्वस्यैव कार्यं भवति, नोत्तरस्य।

पदमञ्जरी

*तस्मिन्निति सप्तम्यर्थनिर्देश इति*। एतेन 'तस्यापत्यम्' 'तत्र भवः' इत्यादिवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशः, तद्वदेव तस्मिन्निति सामान्यविशेषणमचि, हली-त्यादीनामुपलक्षणम्; न त्वनुकरणमिति दर्शयति। एतच्चेतिकरणाल्लभ्यते। स

न्यासः

ननु च विनैव परिभाषयैतत् सिद्धम्, न ह्यत्र सन्देहोऽस्ति। इदं तर्हि न सिध्यति—समिदत्रेति, अग्निचिदत्रेति। यदि हि यत्र सन्देहो नास्ति, तत्रैषा परिभाषा न स्यादिहानुपस्थानाद्, व्यवधानेऽपि यणादेशः स्यादेव। तस्मादसन्देहविषयेऽप्येषा परिभाषा यथा भवति स यत्नः कर्त्तव्यः। एष क्रियते—इह 'सप्तमीनिर्दिष्टे पूर्वस्य' तावत् सूत्रं कर्त्तव्यम्; इयतैवाभिलषितार्थसिद्धेः। तत्राप्ययमर्थः—स्वरूपग्रहणशङ्कां निराकर्तुमितिकरणो न कर्त्तव्यो भवति। न हि क्वचिच्छास्त्रे सप्तमीनिर्दिष्टः शब्दः श्रूयते, येन स्वरूपग्रहणमाशङ्क्येत। सोऽयमल्पेन सूत्रेण सिद्धे यन्महत् सूत्रं करोति तन्महाविषयेयं परिभाषेति सूचनार्थम्। एवञ्च महाविषयेयं भवति यदि सर्वत्र—सन्देहविषये, अन्यत्र च प्रवर्त्तते।

स्यादेतत्—'सप्तमीनिर्दिष्ट' इत्युच्यमाने सप्तम्या यद्यप्यधिकरणं निर्दिश्यते, तथापि तस्याधेयप्रधानत्वाद् 'इको यणचि' इत्यत्राचि योऽल्व्यवस्थितस्तस्मिन् यणादेशो विज्ञायते, ततश्चेहैव स्याद्—दधि भुङ्क्त इति, इह तु न स्याद्—दध्यत्रेति; यथान्यासे त्वेव दोषो नास्ति, तस्मात् महत् सूत्रं प्रणीतम्' इति, नैतदस्ति; यदयं 'दाधा घ्वदाप्' इति निर्देशं करोति, तज्ज्ञापयति—अधिकरण एव यणादेशादिकार्यं भवति, न त्वाधेय इति। अपि च—यथान्यासेऽप्यधिकरणस्याधेयप्रधानत्वादाधेय एव यणादेशादि कार्यं स्यात्। तस्मात् तत्रापि तदेव ज्ञापकं शरणमाश्रयणीयम्। तदेवं महतः सूत्रस्य प्रणयनं परिभाषाया महाविषयत्वसूचनार्थम्। तेन सर्वत्रैषा परिभाषोपतिष्ठत इति सर्वमिष्टं सिद्धं भवति।

इह 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति स्वरूपस्यैव ग्रहणेन भवितव्यम्। ततश्च यत्रैव तस्मिन्नित्येतत् पदमुच्चार्यते तत्रैवेयं परिभाषा स्यात् 'तस्मिन्नणि च युष्माकास्माकौ' इति। अस्ति ह्यत्र तस्याः परिभाषायाः परनिवृत्तिः प्रयोजनम्—यौष्माकीणं युष्मभ्यं देहि, आस्माकीनमस्मभ्यं देहीति। युष्मभ्यं देहि यौष्माकीणम्, अस्मभ्यं देह्यास्माकीनमिति। 'इको यणचि' इत्येवमादौ त्वेषा नोपतिष्ठते, इत्यत आह—तस्मिन्निति।

**सप्तम्यर्थनिर्देश इति**। एवं मन्यते—इतिकरणो ह्यत्र कृतः, स च स्वरूपपदार्थकत्वं निरस्यार्थपदार्थकत्वं तस्मिन्नित्यस्य संपादयति, तेनार्थस्यैव ग्रहणं भवति। स

'इको यणचि'—दध्युदकम्, मध्विदम्, पचत्योदनम्। निर्दिष्टग्रहण-मानन्तर्यार्थम्। अग्निचिदत्रेति व्यवहितस्य मा भूत्॥

**पदमञ्जरी**

हि पदार्थविपर्यासकृत्। शास्त्रे च स्वरूपपदार्थः, तस्य विपर्यासोऽर्थपदार्थकता। यदि च 'तस्मिन्नणि च' इत्यत्रैवैतदुपास्थास्यत तत्रैव पूर्वग्रहणमकरिष्यतेति भावः। किमर्थं पुनरिदमारभ्यते? 'इको यणचि' इत्यादौ सन्देहः—किं सत्सप्तमी? किं वा गङ्गायां घोष इतिवदौपश्लेषिकाधिकरणे सप्तमी? इति। तत्र सत्त्वं परस्य च पूर्वस्य च सम्भवति, एवमुपश्लेषोऽपि। तत्र पूर्वस्य परस्य च व्यवहितानन्तरस्य यण् प्राप्तः, दध्युदकादिषु तु युगपदेकस्य कार्यित्वनिमित्तत्वायोगात्पर्यायेण यण् प्राप्तः; इष्यते च पूर्वस्यैव स्यादनन्तरस्यैवेति, तत्र नियमार्थमिदम्—सप्तमीनिर्देशे पूर्वस्य भवति अनन्तरस्यैवेति। 'इको यणचि' इत्यादेश्च सकृत्प्रवृत्तिः, सा चैवं विशेषितेति न क्वाप्यनिष्टशङ्का। तत्राद्यं नियमं दर्शयति—*पूर्वस्यैवेति*। व्यावर्त्यं दर्शयति—*नोत्तरस्येति*।

*पचत्योदनमिति*। यद्यप्यत्रानियमप्रसङ्गो नास्ति, तथापि 'इको यणचि' इत्यस्मिन्सूत्रेऽनियमप्रसङ्गे नियमः क्रियत इत्येतदपि भवत्येवोदाहरणम्। द्वितीयं नियमं दर्शयति—*निर्दिष्टग्रहणमिति*। दिशिरुच्चारणक्रियः, निःशब्दो नैरन्तर्ये,

**न्यासः**

त्वर्थोऽवश्यं येन केनचिच्छब्देन निर्देष्टव्य इति नानार्थकत्वात् सामान्यवाचिना तस्मिन्नित्यनेन पदेन निर्दिष्ट इति।

ननु च शब्दस्यार्थेन पौर्वापर्यं न सम्भवतीत्यर्थेनासंभवात् तद्वाचिना सम्भवात् तद्वाचिना शब्देन विज्ञास्यत इत्यदोषः। अत्रेदं चोद्यते—अर्थस्य ग्रहणं यथा स्यात् स्वरूपस्य च ग्रहणं मा भूदित्येवमर्थमितिकरणः क्रियते, तच्च स्वरूपग्रहणम् 'तस्मिन्नणि च युष्माकास्माकौ' इति सूत्रेण सम्भाव्यते; यदि च स्वरूपग्रहणं स्यात्, तत्रैव पूर्वग्रहणं कुर्यात्, न च कृतम्; तस्मादवगम्यते—अन्तरेणापीतिकरणमर्थस्यैव ग्रहणं भविष्यति, न स्वरूपस्येति नार्थस्तेन? सत्यमेतत्; ये तु मन्दबुद्धय एवं प्रतिपत्तुमसमर्थास्तान् प्रति सुखावबोधनार्थमितिकरणः कृतः। निर्दिष्टग्रहणमिदमर्थस्य विशेषणम्। इह च शास्त्रे 'इको यणचि' इत्यादिषु वाक्येषु यत्र सप्तम्यर्थोऽस्ति तत्रासौ निर्दिष्ट एव सर्वत्र। तदपार्थकं निर्दिष्टग्रहणविशेषणं व्यभिचाराभावादित्यत आह—निर्दिष्टग्रहणमित्यादि। आनन्तर्यमव्यवधानमर्थो यस्य तत् तथोक्तम्। कथं पुनस्तदानन्तर्यार्थं भवति? ततस्तत्प्रतीतेः। तथा हि दिशिरयमुच्चारणक्रियः, निःशब्दोऽप्ययमिह नैरन्तर्यं द्योतयति। तत्र निरन्तरं दिष्टः=निर्दिष्ट इति प्रादिसमासे कृते स्फुटमेवानन्तरमुच्चारितमिति प्रतीयते।

## तस्मादित्युत्तरस्य ॥ ६७ ॥

निर्दिष्टग्रहणमनुवर्त्तते। 'तस्माद्' इति पञ्चम्यर्थनिर्देशः। उत्तरस्यैव

**पदमञ्जरी**

निरन्तरं दिष्टो निर्दिष्ट इत्येवमानन्तर्यमर्थो भवति, तत्रैवं वचनव्यक्तिः—अचि हलीत्यादौ पूर्वस्यैव कार्यं भवति, तत्र निर्दिष्टे = निरन्तर एवोच्चारित इति तत्रार्थात्पूर्वस्यानन्तरस्येत्यर्थो भवति। तदाह—*व्यवहितस्य मा भूदिति*। अन्यथा व्यवहिते मा भूदिति वक्तव्यम्; पूर्वपदस्य व्यवहितेऽपि वृत्तेस्तस्य प्रसङ्गात् ॥

*तस्मादित्युत्तरस्य* ॥ *निर्दिष्टग्रहणमनुवर्त्तत इति*। तेनात्रापि व्यवहिते कार्यं न भवतीति भावः। अत्रापि इतिपरत्वादनुकरणमिति कस्यचिद् भ्रान्ति स्यात्; 'तस्मान्नुड् द्विहलः' इत्यत्र 'अत आदेः' इति दीर्घात्पूर्वस्याङ्गस्यासम्भवात् प्रयोजनाभावात् यद्यपि तस्यानुकरणं न भवति; 'तस्माच्छसो नः पुंसि' 'तस्मान्नुडचि' इत्यत्र तु व्यवच्छेद्यमस्ति, उच्चारितोऽनुपलभ्यते, गौरनश्व इति पूर्वस्य मा भूदिति, अतस्तयोरेवेदमनुकरणमिति तामिमां भ्रान्तिपाकरोति—*तस्मादिति पञ्चम्यर्थनिर्देश इति*। एतेन पूर्वसूत्रवत् स्वतन्त्रस्य सर्वनाम्नोऽयं निर्देशः। तद्वदेव च तस्मादिति सामान्यमतिङ इत्यादीनां विशेषाणामुपलक्षणम्, न त्वनुकरणमिति दर्शयति। एतच्चेतिकरणाल्लभ्यत इत्युक्तम्। किमर्थं पुनरिदमारभ्यते? 'तिङ्ङतिङः' इत्यादौ कारकविभक्तेरसम्भवाद्दिग्योगलक्षणा पञ्चमीति, दिक्छब्दस्त्वध्याहार्यः; तत्र पूर्वोत्तरशब्दयोरध्याहारः सम्भवतीति नियमार्था परिभाषेयम्। तदाह—*उत्तरस्यैव कार्यमिति*। तदेवं पूर्वस्य चास्य च *वृत्तिकारेण* नियमार्थत्वं दर्शितम्।

**न्यासः**

किमर्थं पुनरानन्तर्यमाश्रितमित्यत आह—अग्निचिदत्रेत्यादि। पूर्वशब्दोऽयं व्यवहितेऽपि वर्त्तते। तत्र यद्यानन्तर्यं नाश्रीयते ततो व्यवहितेऽपि स्यादित्यभिप्रायः। ननु च 'अचि' इत्यौपश्लेषिकमधिकरणं विज्ञायते, न च व्यवहितमुपश्लिष्टम् भवति, तत् किमानन्तर्यार्थेन निर्दिष्टग्रहणेन? असदेतत्; असति हि निर्दिष्टग्रहण औपश्लेषिकमधिकरणमेव न शक्यं विज्ञातुम्। यस्मात् पूर्वशब्दो व्यवहितेऽपि वर्त्तमानः परस्यैव निवृत्तिं करोति, न व्यवहितपूर्वस्यापि। निर्दिष्टग्रहणे तु सति, सप्तम्या औपश्लेषिकाधिकरणाभिधायिन्याः प्रत्यासत्तिरुपादीयते। सा च पूर्वग्रहणेन न निवर्त्त्यते, परनिवृत्तिरेव क्रियत इत्येषोऽर्थो लभ्यते। तेन व्यवहितस्य कार्यं न भवति। उत्तरार्थञ्च निर्दिष्टग्रहणं कर्त्तव्यमेव।

**तस्मादित्युत्तरस्य** ॥ किमर्थमिदम्? 'तिङ्ङतिङः' इति यात्र पञ्चमी सा तु न कारकविभक्तिः, किं तर्हि? 'दिक्शब्दादञ्चूत्तरपद' इति दिग्योगलक्षणा। दिक्शब्द-

कार्यं भवति, न पूर्वस्य। 'तिङ्ङतिङः'—ओदनं पचति। इह न भवति—पचत्योदनमिति।

पदमञ्जरी

षष्ठीप्रक्लृप्तिपक्षोऽपि भाष्ये प्रदर्शितः। कथम्? 'षष्ठी' इति वर्तते, सप्तम्यर्थनिर्देशे पूर्वस्यानन्तरस्य षष्ठी। पञ्चम्यर्थनिर्देशे, उत्तरस्यानन्तरस्य षष्ठीति; तत्र 'इको यणचि' इत्यादौ यत्र पूर्वमेव षष्ठी विद्यते तत्र पूर्वस्यानन्तरस्य, नोत्तरस्यानन्तरस्य सा षष्ठीत्युच्यते। 'आने मुक्' 'ईदासः' इत्यादौ तु यत्र षष्ठी नास्ति, तत्र षठ्यपि प्रकल्प्यते सा चानियतयोगत्वात् स्थानषष्ठी भवति। यस्य च स्थानषष्ठी तस्यैव कार्यमिति सर्वत्र कार्यनियमोऽपि सिध्यति। यत्र तूभयनिर्देशस्तत्र याऽनवकाशा सा इतरस्याः षष्ठीं प्रकल्पयति, यथा—'आने मुक्' इति सप्तमी निरवकाशा 'अतो येयः' इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः। एवम् 'ई दासः' इति पञ्चमी 'आने मुक्' इति सप्तम्याः, उभयोस्त्वनवकाशयोः परत्वात्पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयति, यथा—'आमि सर्वनाम्नः सुट्' इति सर्वनाम्न इति पञ्चम्यनवकाशामीति सप्तम्या अनवकाशायाः। अथ सप्तम्युत्तरार्था तथाप्यादित्यनुवृत्तया पञ्चम्या समानाधिकरणा 'सर्वनाम्नः' इति पञ्चम्यपि सावकाशा षष्ठीं प्रकल्पयति। एवं नियमपक्षेऽपि परत्वानवकाशत्वाभ्यां व्यवस्था द्रष्टव्या। 'दीर्घाच्छे तुग्भवति' इत्यत्र षष्ठ्याः स्थाने पञ्चमीव्याख्यानाद् दीर्घस्यैव तुक् भवति, न तु ह्रस्य; तथा च 'सुराच्छाया' इति निर्देश उपपद्यते॥

न्यासः

स्त्वध्याहार्यः, तत्र किं पूर्वशब्दमध्याहृत्यातिङः पूर्वस्य निघातः क्रियते? उत्त परशब्दमध्याहृत्य परस्य? इति सन्देहे सति परिभाषेयं नियमार्थाऽऽरभ्यते।

निर्दिष्टग्रहणमनुवर्त्तत इति। तेन तस्यानन्तर्यार्थत्वाद्व्यवहितस्य कार्यं न भवतीति भावः। इहार्पातिकरणोऽर्थनिर्देशार्थः क्रियते। तेन पञ्चम्यर्थग्रहणं भवति, न तु शब्दस्वरूपस्येत्यभिप्रायेणाह—तस्मादिति। पञ्चम्यर्थनिर्देश इति। ननु च पूर्वसूत्रादेवेतिकरणोऽनुवर्त्तिष्यते, तत् किमर्थः पुनरिहेतिकरणः? अनेन प्रकारेण पूर्वसूत्रादेकदेशोऽनुवर्त्तत इति ज्ञापनार्थः। तेनेतिशब्दवन्निर्दिष्टग्रहणमनुवर्त्ततेत्येतदाख्यातं भवति।

अन्यस्त्वाह—"इतिकरणं त्विहावधेरवधिमत्तन्त्रतां निवर्त्तयति। तेनावधेरेवोत्तरस्य विज्ञायते, नावधिमतः। स्वरूपग्रहणनिरासार्थस्त्वितिकरणो न भवति; स्वरूपाभावात्। यदपि 'तस्माच्छसो नः पुंसि' इति, तत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न सम्भवतीति न भवति सन्देहः। तस्मादवधेरवधिमत्तन्त्रतानिरासार्थ एवेतिशब्दः" इति, अत्रोच्यते; यद्यवधेरेवोत्तरस्य कार्यं यथा स्यादवधिमतो मा भूदित्येवमर्थ इति-

## स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

### पदमञ्जरी

*स्वं रूपं शब्दस्याशब्दसंज्ञा* ॥ स्वरूपस्य पर्यायाणां च ग्रहणे प्राप्ते नियमार्था परिभाषेयम् । शास्त्राङ्गत्वाच्च परिभाषाणां शास्त्र एव नियमः, न लोक इत्याह—*शास्त्रे स्वमेवेत्यादि, ग्राह्यमिति* । 'ग्राह्यम्' इति णिजन्ताद् यत्, एतच्चाध्याहारेण लब्धम् । *शब्दस्येति* 'कृत्यानां कर्त्तरि वा' इति षष्ठी, शब्दः स्वमेव रूपं ग्राहयति बोधयतीत्यर्थः । संज्ञापक्षे तु वृत्तावेव शब्दः संज्ञानुच्चारणं च

### न्यासः

करणोऽवधेरवधिमत्तन्त्रतामपाकर्तुं क्रियते, नार्थस्तेन; लोकत एव तत्सिद्धेः ; लोके हि तस्माच्छात्रादुत्तरो भोज्यतामित्युक्तेरवधेरेवोत्तरो भोज्यते, नावधिमतः । तदिहापि विनापीतिकरणेनावधेरेवोत्तरस्य कार्यं भविष्यति; नावधिमतः । यदप्युक्तम्—""तस्माच्छसो नः पुंसि' इत्यत्रापि पूर्वसवर्णदीर्घात् पूर्वः शस् न संभवति" इति, तदप्ययुक्तम् ; तथा ह्यशब्दादिशब्दाच्च शसि परतः पूर्णसवर्णदीर्घत्वे पूर्वत्र च वृक्षादिशब्दे शसन्ते व्यवस्थापिते गच्छत आन् वृक्षानुपलभते गच्छतो वृक्षानानुपलभत इत्यत्र पूर्वसवर्णदीर्घात् पूर्वं शस् सम्भवत्येव ।

अथ यत्रोभयनिर्देशस्तत्र कस्य कार्येण भवितव्यम् ? तत्र यानवकाशा सेतरस्याः षष्ठीं प्रकल्पयिष्यति, अतः षष्ठीनिर्दिष्टस्य कार्यं भविष्यति । यथा 'आने मुक्' इत्यत्र सप्तमी निरवकाशा 'अतो येयः' इत्यत इति पञ्चम्याः पूर्वसूत्रे सावकाशायाः षष्ठीत्वं प्रकल्पयिष्यति । तथा 'ई दासः' इति पञ्चम्याऽऽन इति पूर्वसूत्रे सावकाशायाः सप्तम्याः । यत्रोभे सावकाशे तत्र परत्वात् पञ्चमी सप्तम्याः षष्ठीं प्रकल्पयिष्यति । यथा—'आमि सर्वनाम्नः सुट्' इति 'आज्जसेरसुक्' इत्यत्र पञ्चमी सावकाशा । 'आमि' इति सप्तम्युत्तरार्था । तत्रादिति पञ्चमी आमीति सप्तम्याः षष्ठीत्वं प्रकल्पयति, तेन सर्वनाम्न उत्तरस्यामः सुड् भवति । इह तु 'दीर्घात्' 'पदान्ताद्वा' इति यद्यपि 'च्छे च' इति सप्तमी पूर्वसूत्रे सावकाशा, तथापि तस्याः स्वरितत्वात् पूर्वयोगादनुवृत्ताया निरवकाशत्वम् । अतः सा च सप्तमी पञ्चम्याः षष्ठीत्वं प्रकल्पयिष्यति । पञ्चमी तु पौर्वापर्यं प्रकल्प्य सावकाशा निवर्त्तते । तेनायं सूत्रार्थो भवति—दीर्घादुत्तरो यश्छः, तस्मिन् परतः पूर्वस्य दीर्घस्यैव तुग् भवतीति । 'सार्वधातुके यक्' इत्यत्र निरवकाशापि सप्तमी धातोरिति पञ्चम्याः सावकाशाया अपि षष्ठीत्वं न प्रकल्पयति; अन्यथा हि धातोरेवादेशा यगादयः स्युः । ततश्च 'परश्च' इत्यस्यानुवृत्तस्य बाधाद् यगादीनां चानुबन्धकरणस्य वैयर्थ्यं प्रसज्येत । न हि धात्वादेशत्वे सति तेषां परत्वमुपपद्यते, नाप्यनुबन्धानामर्थवत्त्वम् ; तस्मात् 'सार्वधातुके' इति सप्तमी यगादीनां प्रत्यासत्तिं गमयति । पराधिकारात् तु ते धातोः परे भवन्ति ।

शास्त्रे स्वमेव रूपं शब्दस्य ग्राह्यं बोध्यं प्रत्याय्यं भवति, न बाह्योऽर्थः, शब्दसंज्ञां वर्जयित्वा । शब्देनार्थावगतेरर्थे कार्यस्यासम्भ-

पदमञ्जरी

नोपपद्येत । सूत्रे षष्ठीनिर्देशोऽपि नातीव युक्तः स्यात्; संज्ञासंज्ञिसम्बन्धे प्रायेण सामानाधिकरण्यदर्शनात् । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकापुरुषादिभिरुदीरिता सुभिन्नासु शब्दव्यक्तिषु समवेतं सामान्यमभिधीयते । 'अग्नेर्ढक्' इति सूत्रकारेण या व्यक्तिरुच्चारिता, तस्याः सर्वोच्चारणेष्वनुगतं सामान्यं वाच्यमित्यर्थः । सामान्यस्य कार्ययोगो व्यक्तिद्वारक इति तेन तेनोच्चारितायास्तस्यास्तस्या व्यक्तेर्ढग् भवतीत्यर्थः सम्पद्यते ।

एवकारस्य व्यच्छेद्यं दर्शयति—*न बाह्योऽर्थ इति* । *शब्दसंज्ञां वर्जयित्वेति* । शब्दसंज्ञासु स्वरूपं ग्राह्यं न भवतीत्यर्थः । अनियमप्रसङ्गे नियमः कर्तव्यस्तं दर्शयति—*शब्देनेत्यादि* । लोके गौरुपलभ्यतामित्युक्तेऽर्थ एव कार्ययोगो गम्यते,

न्यासः

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ शास्त्रे स्वमेवेत्यादि । शास्त्रग्रहणं लोकेऽर्थस्यैव ग्राह्यत्वात् । शब्दस्येति 'कृत्यानां कर्त्तरि वा' इति कर्त्तरि षष्ठी, शब्दः स्वमेव रूपं ग्राहयति बोधयति, प्रत्याययतीत्यर्थः । कः पुनः शब्दस्य स्वरूपस्य च भेदः ? येन शब्दस्येति व्यतिरेकनिबन्धना षष्ठी भवति । परमार्थतो वस्तुगतो नास्त्येव भेदः । तथा हि—स्वं रूपं शब्दस्य स्वभावः । तच्चेत् ततोऽर्थान्तरं स्याच्छब्दस्य वैस्वभाव्यमेव स्यात् । असत्यपि तु वास्तवे भेदे बुद्धिविरचितं भेदमाश्रित्य षष्ठी भवति । बुद्धिर्हि स्वबीजपरिपाकवशादाकारविशेषपरिग्रहवत्युपजायमाना वस्तुनोऽसत्यपि भेदे भेदमापादयति, यथा—राहोः शिरः, स्वस्य स्वभाव इति । न बाह्योऽर्थ इति । एवकारेण यद्व्यवच्छिन्नं तद्दर्शयति ।

अतिप्रसक्तस्यापवादमाह—अशब्दसंज्ञेत्यादि । किमर्थं पुनरिदमारभ्यत इत्याह—शब्देनेत्यादि । शब्देनोच्चारितेनार्थः कार्योपयोगितया गम्यते, न शब्दस्वरूपम् । तथा हि—गौरुपलभ्यतामित्युक्तेऽर्थमेवोपलब्धुमाद्रियते न शब्दस्वरूपम् , व्याकरणे तु प्रत्ययविधानादिकार्यमर्थस्य न सम्भवति; तेन सह शब्दस्य पौर्वापर्याभावात् । न चार्थाद् विहितेन प्रत्ययेन कश्चित् प्रकृतोपयोगः । तेन 'अग्नेर्ढक्' इत्युक्ते नायं संप्रत्ययो भवति । अग्निशब्दस्य योऽर्थः, स इह कार्यी, तस्येदं कार्यं विधीयत इति । ततश्च तस्यार्थस्य ये वाचकाः शब्दास्तेषु तत्कार्यसम्भवात् तत्साहचर्याच्च तेषामेव संप्रत्ययः स्यात्—एतेऽत्र कार्यिणः, एतेषामिदं कार्यं विधेयमिति । यथा—आकृतिवादिनां गौर्दुह्यतामिति शब्देन जातौ चोदितायां तत्र तत्कार्यासम्भवात् तदाधारायां व्यक्तौ संभवात् तत्साहचर्याच्च तस्यामेव व्यक्तौ संप्रत्ययो भवति, न जातौ; तथेहापि तन्मा

वात् तद्वाचिनां शब्दानां संप्रत्ययो मा भूदिति सूत्रमिदमारभ्यते। 'अग्नेर्ढक्'—आग्नेयमष्टाकपालं निर्वपेत्। अग्निशब्दोऽग्निशब्दस्यैव ग्राहको भवति, न ज्वलनः पावको धूमकेतुरिति; नातः प्रत्ययो भवति।

पदमञ्जरी

न हि शब्दरूपमुपलभ्य कृती भवति; व्याकरणे तु प्रत्ययविधानादिकार्यमर्थे न सम्भवति, तेन सह पौर्वापर्यायोगात्। तेन 'अग्नेर्ढक्' इत्युक्ते लोकवदर्थ एव तावत्प्रतीयते, तत्र सम्भवो नास्ति; अतस्तद्वाचिनां सर्वेषां सम्प्रत्ययः स्याद्, यथा—आकृतिचोदनायां व्यक्तीनाम्, मा भूदेष दोषः; उपात्तादेव यथा स्यादिति नियमार्थमिदमारभ्यत इत्यर्थः।

न्यासः

भूत् तद्वाचिनां संप्रत्यय इत्येवमर्थमिदमारभ्यते। तद्वाचिनामिति कर्मणि षष्ठी। तद्वाचिनो मा विज्ञायीत्येवमर्थमिदमारभ्यत इत्यर्थः।

तत्र केचिदाहुः—स्वरूपस्य पर्यायाणाञ्च कार्ये प्रसक्ते श्रूयमाणस्यैव तद् यथा स्यात्, पर्यायाणां मा भूदिति नियमार्था परिभाषेयमिति।

अन्ये तु—"लिङ्गवती परिभाषा भवति, यथा, 'इको गुणवृद्धी' इति गुणवृद्धी लिङ्गम्। विध्यन्तरशेषभूता वा, यथा—'विप्रतिषेधे परं कार्यम्' इति परस्य विध्यन्तरस्य शेषभावमापद्यते। न चास्या लिङ्गं विध्यन्तरशेषभावो वा विद्यत इति संज्ञासूत्रमिदम्" इति प्रतिपन्नाः। यद्यपि वृत्तौ संज्ञाशब्दो नोच्चारितः, तथापि 'स्वमेव रूपं शब्दस्य ग्राह्यम्' इत्येवं ब्रुवता वृत्तिकारेण संज्ञैवेत्याख्यातं भवति। अग्निशब्दादौ शब्दान्तरैः साधारणमपि रूपमस्ति शब्दत्वादि, असाधारणमपि अग्निशब्दत्वादि, तत्र साधारणरूपव्युदासेनासाधारणस्याग्निशब्दत्वादिरूपस्य परिग्रहार्थम् 'स्वम्' ग्रहणम्। तद्धि स्वमेव तस्य रूपम्, इतरत् पुनः परस्यापि। प्रतीतिं प्रत्यनुपदेशाच्च शब्दस्य स्वरूपमेवासन्नम्, नार्थः; विपर्ययात्, अहेयत्वाच्च, तन्नित्यसम्बन्धित्वाच्च। तथा ह्यनुकरणशब्दा ह्यर्थं जहति, न तु स्वरूपम्। असाधारणञ्च रूपम्, अर्थस्तु साधारणः; शब्दान्तरैरपि प्रत्यायमानत्वात्।

तदेवमासन्नत्वान्नित्यसम्बन्धित्वादसाधारणत्वाच्च रूपमेव शब्दस्य स्वम्, नार्थः। ततश्च स्वग्रहणादेव रूपपरिग्रहे सिद्धे व्याकरणे रूपवदर्थोऽप्यङ्गीक्रियत इति ज्ञापनार्थं रूपग्रहणम्। तेन—'अर्थवद्ग्रहणे नानर्थकस्य' इत्येतदुपपन्नं भवति। शब्दानुशासनप्रस्तावादेव च शब्दस्येति सिद्धे शब्दग्रहणम्—यत्र शब्दपरो निर्देशस्तत्र स्वरूपं गृह्यते, नार्थपरो निर्देश इति ज्ञापनार्थम्। तेन 'स्वे पुषः' इत्यत्र स्वरूपस्य ग्रहणं न भवति। अर्थपरत्वन्तु निर्देशस्याविच्छिन्नपारम्पर्यादाचार्योपदेशाद् विज्ञायते।

'उदश्वितोऽन्यतरस्याम्'—औदश्वित्कम्। औदश्वितम्। तक्रम्= अरिष्टं कालशेयं दण्डाहतं मथितमिति, नातः प्रत्ययो भवति।

अशब्दसंज्ञेति किम्? 'दाधा घ्वदाप्', 'तरप्तमपौ घः'— घुग्रहणेषु घग्रहणेषु च संज्ञिनां ग्रहणम्, न संज्ञायाः॥

### पदमञ्जरी

*औदश्वित्कमिति*। उदश्विति संस्कृतमिति सप्तमीसमर्थाट्ठक्, 'इसुसुक्तान्तात्कः'।

*घुग्रहणेष्वित्यादि*। अन्यथा 'उपसर्गे घोः किः' इति किप्रत्ययो धातोरेव घोः शब्दार्थात्स्यात्,न तु दाधाभ्यः। 'ई हल्यघोः' इत्यत्र तु घुशब्दस्यानाकारान्तत्वाद्दाधानामेव ग्रहणं सिध्यति। कुमारीघ इत्यत्र 'घरूप' इति ह्रस्वप्रसङ्गः।

ननु च प्रदेशेषु संज्ञिसम्प्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति, नैतदस्ति; उभयगतिरिह शास्त्रे सम्भवतीति सङ्ख्याकर्मकरणादिष्विव स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात्। ज्ञापकात्सिद्धम्; यदयं 'ष्णान्ता षट्' इति षकारान्तायाः सङ्ख्यायाः षट्संज्ञां विदधाति, तज्ज्ञापयति— संज्ञाशब्दो न स्वरूपग्राहक इति। अन्यथा 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इत्यादौ स्वरूपस्यापि षडित्यस्य ग्रहणात् षकारान्तायाः सङ्ख्यायाः षट्संज्ञां न विदध्यात्।

ननु च षकारान्ता संज्ञा षकारान्तस्य कार्यमिष्यते, संज्ञापि षकारान्तैव; अतो नार्थोऽशब्दसंज्ञेत्यनेन? सत्यम्; प्रतिपत्तिगौरवपरिहारार्थः प्रतिषेधः। शब्दशब्देन चाभेदोपचारात् व्याकरणमुच्यते, शब्दे संज्ञा शब्दसंज्ञा; एवं च कर्मकरणमित्यादिष्वर्थसंज्ञास्वपि शास्त्रीयासु स्वरूपग्रहणं न भवति।

### न्यासः

आग्नेयमिति। अग्निर्देवताऽस्येत्यत्रार्थे ढक्।

औदश्वित्कमिति। अत्राप्युदश्विता संस्कृतमित्यत्रार्थे ठक्। 'उदश्वितोऽन्यतरस्याम्' इत्यत्र 'दध्नष्ठक्' इत्यस्यानुवृत्तेः, 'इसुसुक्तान्तात्कः' इति ठकः कादेशः।

घुग्रहणेष्वित्यादि। यदि घुप्रभृतिरपि संज्ञाशब्दः स्वरूपस्य ग्राहकः स्याद् 'उपसर्गे घोः किः' इत्यत्र यद्यपि धात्वधिकारस्तथापि घुग्रहणाद् घुशब्दात् किप्रत्ययः स्यात्। नूपसर्गग्रहणं तु प्राद्युपलक्षणार्थं स्यात्। यथा—'अञ् नासिकायाः संज्ञायां नसञ्चास्थूलात्' 'उपसर्गाच्च' इत्यत्र। कुमारीघ इत्यत्र च घ इति संज्ञाशब्देन स्वरूपप्रत्यायने सति 'घरूपकल्प' इत्यादिना घशब्दे परतो ह्रस्वत्वं प्रसज्येत।

ननु च संज्ञाविधानसामर्थ्यात् संज्ञायाः स्वरूपग्रहणं न भवति, संज्ञा हि संज्ञिनः प्रत्यायनार्था क्रियते; यदि संज्ञाशब्दोऽपि स्वरूपं प्रत्याययेत् संज्ञाविधानमनर्थकं स्यात्,

* सित्तद्विशेषाणां वृक्षाद्यर्थम् * ॥ सिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—तद्विशेषाणां ग्रहणं भवतीति । किं प्रयोजनम् ? वृक्षाद्यर्थम् । 'विभाषा वृक्षमृगतृण' इति—प्लक्षन्यग्रोधम् , प्लक्षन्यग्रोधाः ।

* पित्पर्यायवचनस्य च स्वाद्यर्थम् * ॥ पिन्निर्देशः कर्त्तव्यः ।

पदमञ्जरी

अथ रूपग्रहणं किमर्थम्, इह यावता प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वान्नित्यसम्बन्धित्वाच्च तदेव शब्दस्य स्वार्थो हि स्वप्रतीतौ सम्बन्धग्रहणमपेक्षते, पर्यायैरपि प्रत्यायनात्साधारणश्चानित्यसंबन्धश्चानुकरणदशायामभावात्, न चार्थो ग्राहकः शक्यते कर्तुम्, ग्राह्यत्वे च सूत्रमनर्थकं स्यादिति नार्थो रूपग्रहणेन ? एवं तर्ह्येतज् ज्ञापयति—शास्त्रे स्वरूपेण समानकक्ष्योऽर्थः' इति । तेनार्थवद्ग्रहणेनानर्थकस्येत्युपपन्नं भवति । तत्र ज्ञापकादर्थोऽपि ग्राह्यः; स्वं रूपमिति वचनाद् । रूपं चेति सामर्थ्यादर्थवतो रूपस्य ग्रहणम् । तेन काशे कुशे इत्यत्र 'शे' प्रगृह्यसंज्ञाभावः सिद्धः ।

सित्तद्विशेषाणामिति वार्त्तिकं व्याचष्टे—*सिन्निर्देशः कर्त्तव्य इति* । वृक्षस् इत्येवम् । *ततो वक्तव्यमिति* । स्वं रूपमित्यस्यानन्तरम् । ननु किं प्रयोजनमित्युक्ते वृक्षादीतिवक्तव्यम्, किमुच्यते—वृक्षाद्यर्थमिति ? वृक्षादिषु प्रयोजनमस्येत्युक्ते वृक्षाद्यस्य प्रयोजनमित्यर्थादुक्तं भवतीत्यदोषः । अस्यार्थस्य न्यायतः सिद्धिं विभाषेत्यत्र वक्ष्यामः ।

*पित्पर्यायवचनस्य चेति* । चकारात्स्वरूपस्य विशेषाणां च । इदं वाचनिकमेव ।

न्यासः

नैतदस्ति: संज्ञाविधानसामर्थ्याद्धि संज्ञिनं प्रत्याययेत् , परिभाषाविधानसामर्थ्याच्च स्वरूपम् । तस्मात् प्रतिषेधः कर्त्तव्यः ? न कर्त्तव्यः, ज्ञापकात् संज्ञाशब्दो रूपस्य ग्राहको न भविष्यति । यदयं 'ष्णान्ता षट्' इति षकारान्तायाः संख्यायाः षट्संज्ञां विदधाति, तज्ज्ञापयति—संज्ञाशब्दः स्वरूपस्य ग्राहको न भवतीति; अन्यथा हि 'षड्भ्यो लुक्' इत्यत्र षट्शब्देन स्वरूपस्य प्रत्यायितत्वात् ततोऽपि लुग् भवतीति षकारान्तायाः संख्यायाः षडिति संज्ञां न कुर्यात् । षट्शब्दो हि षकारान्ता संख्या, नान्या, सत्यमेतत्; तथापि येषां ज्ञापकद्वारेणार्थप्रतिपत्तौ प्रतिपत्तिगौरवं स्यात्, तान् प्रति तत्परिहारायाशब्दसंज्ञेति प्रतिषेधः कृतः । शब्दग्रहणम्—व्याकरणे या संज्ञा तस्या एव प्रतिषेधो न लौकिक्या इति प्रदर्शनार्थम् ।

सित्तद्विशेषाणामित्यादि । यत्र विशेषाणां ग्रहणमिष्यते तत्र सकार इत्संज्ञकः कर्तव्यः—वृक्षस् , मृगस् इति । ततो वक्तव्य इत्यादि । सिन्निर्देशं कृत्वा ततः

ततो वक्तव्यम्—पर्यायवचनस्य ग्रहणं भवति, चकारात् स्वस्य रूपस्य तद्विशेषाणां चेति। किं प्रयोजनम्? स्वाद्यर्थम्। 'स्वे पुषः'—स्वपोषं पुष्टः। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम्।

* जित्पर्यायवचनस्यैव राजाद्यर्थम् *॥ जिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यम्—पर्यायवचनस्यैव ग्रहणं भवतीति, न स्वरूपस्य, नापि तद्विशेषाणाम्। किं प्रयोजनम्? राजाद्यर्थम्। 'सभाराजाऽमनुष्यपूर्वा'—इनसभम्; ईश्वरसभम्। तस्यैव न भवति—राजसभा। तद्विशेषाणां च न भवति—पुष्यमित्रसभा, चन्द्रगुप्तसभा।

* झित्तद्विशेषाणां च मत्स्याद्यर्थम् *॥ झिन्निर्देशः कर्त्तव्यः। ततो वक्तव्यम्—तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्? मत्स्याद्यर्थम्। 'पक्षिमत्स्यमृगान् हन्ति' इति ठक्। पाक्षिकः, मात्स्यिकः। तद्विशेषाणाम्—शाकुनिकः। पर्यायाणां न भवति—अजिह्मान् हन्ति, अनिमिषान् हन्तीति। * अथैकस्येष्यते—मीनान् हन्तीति मैनिकः।

## अणुदित्सवर्णस्य चाप्रत्ययः॥ ६९॥

### पदमञ्जरी

*जित्पर्यायस्येत्यस्यापि* न्यायतः सिद्धिं वक्ष्यामः।

*झित्तस्य चेति*। इदं वाचनिकमेव। मृगपक्षिणस्तु पिन्निर्देशः कर्त्तव्य इत्याहुः। *अथैकस्येति*। इयमिष्टिरेव॥

*अणुदित्सवर्णस्य चाप्रत्ययः*॥ संज्ञासूत्रमेतत् न परिभाषा; प्रसिद्धार्थविनि-

### न्यासः

प्रथमेऽध्यायेऽन्यत्र वा परिभाषेयं कर्तव्या—सित्तद्विशेषाणामित्यात्यादि। यस्य सकार इत्संज्ञकः, स तद्विशेषाणां वृक्षादिविशेषाणां खदिरादीनां प्रतिपादक इति वक्तव्यम्। एवं पित्पर्यायवचनस्य च स्वाद्यर्थमित्यादावपि वेदितव्यम्। न्यायादपि चैतत् प्रतिपाद्योऽर्थः सिध्यति। यथा सिध्यति तथा यथावसरं पुरस्तात् प्रतिपादयिष्यामः। सुखावबोधनार्थं तु सित्तद्विशेषाणामित्यादिग्रन्थोपन्यासः॥

अणुदित् सवर्णस्य चाप्रत्ययः॥ संज्ञासूत्रमिदम्, न परिभाषा। सा हि नियमार्था भवति। न चाणुदितां सवर्णानामन्येषाञ्च ग्रहणं प्राप्तम्, येन सवर्णानामेव ग्रहणं

परेण णकारेण प्रत्याहारग्रहणम्। अण् गृह्यमाण उदिच्च सवर्णानां ग्राहको भवति, स्वस्य च रूपस्य; प्रत्ययं वर्जयित्वा। 'आद् गुणः', 'अस्य च्वौ', 'यस्येति च'। स्वरानुनासिक्यकालभिन्नस्य ग्रहणं भवति। उदित्खल्वपि—'चुटू', 'लशक्वतद्धिते'। चवर्गटवर्गयोः कवर्गस्य च ग्रहणं भवति।

पदमञ्जरी

योगात्। *परेण णकारेणात* । एतच्च 'लण्' इत्यत्र प्रतिपादितम्। *स्वस्य च रूपस्येति* यद्यपि प्रथमान्तं प्रकृतम्, तथापि सवर्णस्य चेति षष्ठ्यन्तस्यानन्तरं श्रूयमाणश्चशब्दोऽन्यस्य षष्ठ्यन्तस्याभावात् तस्यैव षष्ठ्यन्ततां प्रकल्पयतीति भावः। *प्रत्ययं वर्जयित्वेति*। तेन तत्रोच्चारितमेव रूपं गृह्यते। *'आद् गुणः' इत्यादि*। यथेह भवति देवेन्द्र इति, एवं खट्वेन्द्र इत्यादावपि भवति। *अस्य च्वा*। यथेह भवति शुक्लीभवतीति, एवं मालीभवतीत्यादावपि भवति। *यस्येति च*। यथेह भवति दाक्षिः प्लाक्षिरिति, एवं चौडिर्बालाकिरित्यादावपि भवति। चूडावलाकाशब्दौ बाह्वादी।

ननु च 'अकः' 'अचि' इत्यादौ प्रत्याहारग्रहणे कथं मध्यवर्त्तिरिकारादिभिस्सवर्णग्रहणम्, उच्चारितो हि संज्ञाशब्दः संज्ञिनं प्रत्याययति, न च मध्यवर्त्तिनामुच्चारणमस्ति। ते ह्यगादिसंज्ञाभिः संज्ञित्वेन प्रत्याय्यन्ते, क्व तर्हि स्यात्? 'अस्य च्वौ' 'यस्येति' यत्र संज्ञाया उच्चारणमस्ति। प्रत्याहारे चाद्यो वर्ण उच्चारितत्वात्सवर्णग्राहकः। स्यादेतत्—अक्षरसमाम्नाय उच्चारिता इकारादयः सवर्णानां ग्राहका इति। अगादिचोदनासु ईकारादयोऽपि ह्रस्ववत्संज्ञित्वेनैव प्रतीयन्ते,

न्यासः

भवतीति नियमः क्रियते—परेण णकारेण प्रत्याहारग्रहणमिति। तेन ऋकारादयोऽपि सवर्णानां ग्राहकाः सिध्यन्तीत्यभिप्रायः। परेण च णकारेण प्रत्याहारग्रहणम् 'अ इ उ ण्' इत्यत्र प्रतिपादितम्। पूर्वसूत्रात् 'स्वं रूपम्' इत्येतदिहानुवर्त्तते। तच्चार्थाद् विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं सम्पद्यते। तेन स्वस्यापि रूपस्याण् गृह्यमाण उदिच्च ग्राहको भवतीति दर्शयन्नाह—स्वस्य च रूपस्येति। 'आद् गुणः' इत्यादि। यथेह भवति देवेन्द्र इति, तथा खट्वेन्द्र इत्यत्राप्याद्गुणो भवति। अस्य च्वौ। यथा पटीभवतीत्यत्रेत्वं भवति तथा मालीभवतीत्यत्रापि। यस्येति च। यथा दाक्षिरित्यत्र लोपो भवति, तथा चौडिरित्यत्रापि। बाह्वादित्वाच्चूडाशब्दादिञ्। स्वरानुनासिक्येत्यादि। उदात्तः सूत्रे गृह्यमाणः स्वरान्तरभिन्नस्यापि ग्राहको भवति। एवमनुदात्तः, स्वरितश्च। तथा सानुनासिको निरनुनासिकस्य, सोऽपि तस्य।

अप्रत्यय इति किम्? 'सनाशंसभिक्ष उः', 'अ सांप्रतिके'— दीर्घो न भवति ॥

पदमञ्जरी

त्विकारादिभिः प्रतीतैः प्रत्याय्यन्त इति, न; अपरकालत्वात्। इह वर्णानामुपदेशस्तावद्, उपदेशोत्तरकाला इत्संज्ञा, इत्संज्ञोत्तरकालमादिरन्त्येनेतत्प्रवर्त्तते, ततोऽण् सवर्णस्येति। तदनेनोपदेशादिष्वङ्गेषु निष्पन्नेषु अन्यत्र 'अस्य च्वौ' इत्यादौ सवर्णानां ग्रहणं भवति, नाङ्गेषु, नापि स्वात्मनि; अनिष्पन्नत्वात्। यदि त्वस्मिन्नपि सूत्रे सवर्णग्रहणं स्यात्, 'आद्गमहनः', 'ऋदोरप्' इत्यादौ अकारादयोऽपि सवर्णान् गृह्णीयुः। अतोऽस्मिन् सूत्रेऽक्षरसमाम्नाये चागृहीतसवर्णानां ग्रहणम्। ततश्च तदेव स्थितम् प्रत्याहारेषु मध्यवर्त्तिभिः सवर्णग्रहणं न स्यादिति, नैष दोषः; उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति नियमः, बुद्ध्युपारूढास्तु प्रत्यायकाः। अस्ति च मध्यवर्तिनां बुद्ध्युपारोहः, ततश्च संज्ञित्वेन प्रत्याय्यमानस्यापि प्रत्यायकत्वं भविष्यति। अत्र ज्ञापकम्—'दीर्घाज्जसि च' इति प्रतिषेधः। स हि कुमार्यावित्यादौ 'प्रथमयोः पूर्वसवर्णः' इति दीर्घो मा भूदिति। तत्र चाक इति वर्त्तते। खट्वे इत्यादौ तु 'नादिचि' इत्येव सिद्धः प्रतिषेधः। 'दीधीवेवीटाम्' 'ल्वादिभ्यः' इत्यादयश्च निर्देशा एवमेवोपपद्यन्ते, यदि मध्यवर्तिभिरपि सवर्णग्रहणं भवति। स्वरानुनासिकेत्यादिरुदात्तः सूत्रे गृहीतः स्वरान्तरभिन्नमपि गृह्णाति, एवमनुदात्तस्वरितौ च। तथा सानुनासिको निरनुनासिकम्, सोऽपि तम्।

*दीर्घो न भवतीति*। असति त्वप्रत्यय इत्यस्मिन् प्रत्ययेनापि सवर्णग्रहणात् दीर्घोऽपि स्यात्। अत्यल्पमिदमुच्यते—'अप्रत्ययः' इति, 'अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्'। प्रत्यये प्रत्युदाहृतं तत्र। आदेशे—'इदम इश्,' इतः; इह विशेष-

न्यासः

दीर्घो न भवतीति। यदि 'अप्रत्ययः' इति प्रतिषेधो न स्यात् प्रत्ययोऽपि सवर्णानां ग्राहकः स्यात्, ततश्च दीर्घोऽपि स्यात्। ननु चात्यल्पमिदमुच्यते—'अप्रत्ययः' इति, अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्। प्रत्यये प्रत्युदाहृतम्। आदेशे—'इदम इश्', अस्मात्=इतः, 'पञ्चम्यास्तसिल्' इति तसिल्, अस्मिन्=इह, 'इदमो हः'। अत्र हि सवर्णग्रहणे सति यद्यकृते त्यदाद्यत्व इश्भावस्तदान्तरतम्यात् त्रिमात्र इकारः प्राप्नोति, अथ कृतेऽर्द्धचतुर्थमात्रः। यदि 'अतो गुणे' पररूपत्वेऽकृते तदापि; अथ कृते ततोऽर्द्धतृतीयमात्रः। अथ वा—अर्द्धचतुर्थमात्रोऽर्द्धतृतीयमात्रश्च नास्ति ततो द्विमात्रस्त्रिमात्रश्च स्यात्। टित्—'आर्धधातुकस्येड्वलादेः', लविता, सवर्णग्रहणे सति दीर्घोऽपि स्यात्। कित्—'भुवो वुग् लुङ्लिटोः', बभूव, अत्र सानुनासिकोऽपि स्यात्। सन्ति हि यणः

## तपरस्तत्कालस्य ॥ ७० ॥

तः परो यस्मात्सोऽयं तपरः, तादपि परस्तपरः; तपरो

### पदमञ्जरी

विहितत्वात्त्यदाद्यत्वं बाधित्वा त्रिमात्रिक आदेशः प्राप्नोति । टिति—'आर्द्धधातुकस्येड् वलादेः', पठितेति दीर्घोऽपि स्यात् । 'ग्रहोऽलिटि दीर्घः' इत्येतत्तु ग्रहेर्दीर्घ एव, न ह्रस्व इति नियमार्थं स्यात् । 'वृतो वा' इत्येतदपि ववरिथेति लिटि दीर्घो मा भूदित्येवमर्थं स्यात् । किति—'भुवो वुग्लुङ्लिटोः' बभूव, अनुनासिकोऽपि स्यात् । मिति—'अम् सम्बुद्धौ' हे अनड्वन्, आमपि स्यात् । एवं तर्ह्यप्रत्यय इति नेह संज्ञाग्रहणम्, किं तर्हि ? अन्वर्थग्रहणम्—प्रतीयते विधीयत इति प्रत्ययः, भाव्यमानः सवर्णान्न गृह्णातीत्यर्थः । इशादयोपि भाव्यन्ते । संज्ञाप्रत्ययस्य तु नावश्यकः प्रतिषेधः । येनार्थम्प्रतियन्ति स प्रत्ययः, न हि दीर्घप्लुतयोरर्थस्याभिधानमस्ति । 'कुहोः श्चुः' इत्यादौ भाव्यमानस्याप्युदित्त्वसामर्थ्यादप्रत्यय इति निषेधाभावः । तथा च पठ्यते—'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति ॥

*तपरस्तत्कालस्य ॥ तः परो यस्मादिति* बहुव्रीहिं दर्शयति । *तादपि* परस्तपर इति पञ्चमीतत्पुरुषम् ॥ स पुनरस्मादेव निपातनाद्वेदितव्यः । एकस्यापि तपरशब्दस्य तन्त्रावृत्त्योरन्यतराश्रयणादर्थभेदो न विरुद्धः । तत्र बहुव्रीहेर्लिङ्गम्—

### न्यासः

सानुनासिका निरनुनासिकाश्च । मित्—'चतुरनडुहोरामुदात्तः', 'अम् सम्बुद्धौ', अनड्वन्—अत्र . दीर्घोऽपि स्यात् । तत् तर्ह्येवं वक्तव्यम् ? न वक्तव्यम्; चकारोऽत्र क्रियते, सोऽनुक्तप्रतिषेधसमुच्चयार्थो भविष्यति । तेन येषामादेशादीनां ग्राहकत्वं नेष्यते ते सवर्णानां ग्राहका न भविष्यन्ति ।

अन्ये त्वाहुः—"'अप्रत्यय' इति नेह संज्ञाग्रहणम्, किं तर्हि ? अन्वर्थग्रहणम् । प्रतीयते विधीयते=उत्पाद्यत इति प्रत्ययः । तेनाप्रत्यय इत्यस्यायमर्थो भवति—भाव्यमानोऽण् सवर्णान् न गृह्णातीति । इशादयोऽपि भाव्यन्ते = उत्पाद्यन्त इति तेऽपि प्रत्ययाः, तेन ते सवर्णानां ग्राहका न भवन्ति" इति । तैश्चकारस्य प्रयोजनं वक्तव्यम् । 'स्वं रूपम्' इत्यस्यानुकर्षणं तस्य प्रयोजनमिति चेत्, न; चानुकृष्टत्वादुत्तरत्र तदनुवृत्तिर्न स्यात् । न चैतत्प्रयोजनमुपपद्यते; स्वरितत्वादेवानुवृत्तिसिद्धेः ।

अथ मतम्—'प्रथमान्तं स्वमित्येतत्प्रकृतं षष्ठीनिर्दिष्टेन चेहार्थः, तस्माच्चकारे कृते यत्नात् षष्ठ्यन्तता तस्य यथा स्यादित्येवमर्थश्चकारः' इति, एतदपि नास्ति; 'अर्थादेव हि विभक्तिविपरिणामस्सिद्धेः ॥

**तपरस्तत्कालस्य ॥ तः परो यस्मात् सोऽयं तपर इति बहुव्रीहिं दर्शयति, तादपि परस्तपर इति पञ्चमीतत्पुरुषं च । स पुनः पञ्चमीति योगविभागात् समास इति वेदि-**

वर्णस्तत्कालस्यात्मना तुल्यकालस्य गुणान्तरयुक्तस्य सवर्णस्य

**पदमञ्जरी**

'अतो भिस ऐस्' इति तपरकरणम्। तत्पुरुषस्य लिङ्गम्–वृद्धिरादैच्' इत्यैजर्थं हि तदित्युक्तम्।

*तपरो वर्ण इति*। वर्णस्यैव स्वर्णसम्भवाद्वर्णं इत्युक्तम्। *तत्कालस्येति* बहुव्रीहिः—स कालोऽस्येति। अयुक्तोऽयं निर्देशः। तदित्यनेन तपरो वर्णः परामृश्यते, प्रसिद्धपरिमाणा च क्रिया प्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका। कालो यथा—दिवसमधीत इति, दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते। स चाध्ययनस्य परिच्छेदकत्वात् कालः; वर्णस्तु क्रियात्मको न भवतीत्ययुक्तं वर्णवाचिनस्तच्छब्दस्य कालशब्देन सामानाधिकरण्यम्? एवं तर्ह्युत्तरपदलोपी समासो द्रष्टव्यः, उष्ट्रमुखवत्। गम्यमानार्थत्वाच्च प्रयोग एव लोपः, यथा–उष्ट्रो मुखमस्येत्येव विग्रहः। न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात् सादृश्यप्रतीतिः। उष्ट्र इव मुखमस्येति मुखेनैव मुखस्य सादृश्यं प्रसिद्धम्, न कृत्स्नेनोष्ट्रेणेति सामर्थ्यादयमर्थो भवति–उष्ट्रमुखमिव मुखमस्येति। एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रियान्तरेण निमेषादिना परिच्छिन्ना सती वर्णान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक इत्युच्यते। स कालोऽस्येत्यस्य कोऽर्थः? तत्कालसंबन्धिनी क्रिया परिच्छेदिका अस्येत्यर्थः। एतदेव दर्शयति—*आत्मनेत्यादिना*॥ तपरवर्णसन्निधावुच्चारितोऽप्ययमात्मशब्दस्तत्सहचरितायामुच्चारणक्रियायां वर्तते, वर्णेन क्रियायास्तुल्यत्वानुपपत्तेः। यादृशी तपरस्य वर्णस्योच्चारणक्रिया निमेषादिपरिच्छिन्ना, तादृश्युच्चारणक्रियाऽस्येत्यर्थः।

*गुणान्तरयुक्तस्येति*। यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्येत्यर्थः। किं

**न्यासः**

तव्यः। कथं पुनरेतत् समासद्वयं लभ्यते, यावतैकस्तपरशब्दः? एकस्याप्यावृत्त्या द्विधा भेदो भविष्यतीत्यदोषः। अत्र हि बहुव्रीहेर्लिङ्गम्—'अतो भिस ऐस्' इति तपरकरणम्। न ह्यत्र पञ्चमीतत्पुरुष उपपद्यते। अवर्णो ह्यत्र तपरोऽभिमतः, न भिस्। यदि चेह पञ्चमीतत्पुरुषः स्यात्, तर्हि भिस् तपरः स्यात्; यतस्तपरो वर्ण इहोच्यते, न चासौ वर्णः, किं तर्हि? तत्समुदायः। पञ्चमीतत्पुरुषे तु लिङ्गम्—'वृद्धिरादैच्' इति तपरकरणम्। न ह्यत्र बहुव्रीहिर्युज्यते। यदि बहुव्रीहिः स्यात् तदाऽऽकारस्य तपरत्वं स्यात्, न चाऽऽकारार्थं तपरकरणम्, अपि त्वैजर्थम्। एतच्च तत्रैव प्रतिपादितम्।

सवर्णस्येति वर्तते, वर्णस्य च सवर्णो न भवति, ननु वर्णसमुदायस्य; तस्मादविशेषाभिधानेऽपि वर्ण एव तपरो विज्ञायत इत्याह—तपरो वर्ण इति। तत्कालस्येति

ग्राहको भवति, स्वस्य च रूपस्य। विध्यर्थमिदम्। 'अण्' इति नानुवर्तते। अणामन्येषां च तपराणाम् इदमेव ग्रहणकशास्त्रम्।

पदमञ्जरी

पुनरिदं नियमार्थम् ? अहोस्विद्विध्यर्थम् ? तत्राणित्यनुवृत्तौ नियमार्थम्—तपरो वर्णस्तत्कालस्यैवेति। निवृत्तौ विध्यर्थम्। तत्राद्ये पक्षे 'आतो धातोः' 'आतां पुङ् णौ' 'यस्येति च' 'विड्वनोरनुनासिकस्यात्' इत्यादौ 'भेदका गुणाः' 'इत्यस्मिन् दर्शने यद्गुणक उपात्तस्ततो गुणान्तरयुक्तस्य ग्रहणं न स्यादिति द्वितीयं पक्षमाश्रित्याह—*विध्यर्थमिति*। अत्र हेतुमाह—*अणिति नानुवर्त्तत इति*। यदि विध्यर्थमिदम्, ततोऽस्यानण्सु चरितार्थत्वादण्सु पूर्वमेव प्रवर्त्तेत, तत्राह—*अणामन्येषां*

न्यासः

बहुव्रीहिः—स कालोऽस्येति। अयुक्तोऽयं निर्देशः। तथा हि—तच्छब्देन तपरः परामृश्यते, तपरश्च वर्णः। कालस्तु क्रियाविशेष इष्यते। तथा ह्युक्तम्—

आदित्यग्रहतारादिपरिस्पन्दमथापरे ।
भिन्नमावृत्तिभेदेन कालं कालविदो विदुः॥ इति।

तत् कुतो वर्णक्रियाविशेषाभिधायिनोस्तपरकालशब्दयोः सामानाधिकरण्यम् ? एवं तर्हि उत्तरपदलोपी समासोऽयं द्रष्टव्यः, यथा—उष्ट्रस्य मुखमिव मुखमस्योष्ट्रमुख इति, एवं तत्काल इव कालो यस्य स तत्काल इति। अस्यार्थं दर्शयितुमाह—आत्मनेत्यादि। यद्यपि तपरकरणसन्निधानादिहात्मशब्दस्य तत्र वृत्तिर्युक्ता, तथापीह साहचर्यात् तत्सहचरितायामुच्चारणक्रियायां कालाख्यायां स वर्तते। कुत एतत् ? तपरेण वर्णेन क्रियायास्तुल्यत्वानुपपत्तेः। सम्भवति साहचर्यात् ताच्छब्द्यम्। तदेतदुक्तं भवति—तपरवर्णसहचरितया क्रियया तुल्यकालस्येति यादृशी तपरवर्णस्योच्चारणक्रिया तादृगुच्चारणक्रिया यस्येति यावत्। गुणान्तरयुक्तस्येति। येन गुणेन धर्माख्येनोदात्तादिना विशिष्ट उच्चारितस्ततोऽन्यैरुदात्तादिभिर्गुणैः सम्बद्धस्येत्यर्थः।

स्वस्य च रूपस्येति। इहापि तदनुवृत्तेः। इहेदं सूत्रं नियमार्थं वा स्याद् ? विध्यर्थं वा ? यद्यणित्यनुवर्त्तते, ततः पूर्वेणैव सिद्धे सत्यारम्भो नियमार्थो भवति—तपरोऽणतत्कालस्यैव ग्राहको भवति, नान्यस्येति। अथाणिति निवृत्तम्, ततो विध्यर्थम्।

तत्राद्ये पक्षे 'विड्वनोरनुनासिकस्यात्' इत्याकारो दीर्घस्तपरो निरनुनासिकः सूत्र उपात्तः 'भेदका गुणाः' इत्यस्मिन् दर्शने सानुनासिकस्य ग्राहको न स्यात्; अनण्त्वात्। ततश्च निरनुनासिक एवादेशः स्यात्। इतरत्र तु पक्षे सत्यपि भेदकत्वे गुणानामेष दोषो न भवतीति मन्यमानो द्वितीयं पक्षमाश्रित्याह—विध्यर्थमिदमिति। कथं विध्यर्थमित्याह—अणिति नानुवर्त्तत इति। अणामन्येषाञ्चेत्यादि। युक्तं यद-

'अतो भिस ऐस्' इत्येवमादिषु पूर्वग्रहणकशास्त्रं न प्रवर्त्तत एव। अतपरा अणस्तस्यावकाशः।

किमुदाहरणम्? 'अतो भिस ऐस्'—वृक्षैः, प्लक्षैः। 'विड्वनोरनुनासिकस्यात्'—अब्जाः, गोजाः।

तत्कालस्येति किम्? खट्वाभिः, मालाभिः॥

पदमञ्जरी

चेति। एतदेव विशदयति—*अतो भिस ऐसित्येवमादिष्विति*। *न प्रवर्त्तत एवेति*। परेणानेन बाधितत्वादिति भावः। विरोधो ह्यत्र वर्तते—पूर्वसूत्रेण ह्यष्टादशानां ग्रहणम्, अनेन तु षण्णामिति।

*किमुदाहरणमिति*। अभेदकत्वात् गुणानामनण्सु सिद्धमिति प्रश्नः, अण्सु भिन्नकालनिवृत्त्यर्थं तावदारब्धव्यं सूत्रम्। तदेवानण्स्वपि विधिमुखेन प्रवर्तमानमिष्टं साधयतीत्युत्तरम्। *विड्वनोरनुनासिकस्यादिति*। कस्य पुनरत्र सवर्णस्य ग्रहणमिष्यत इति चिन्त्यम्। तस्मादुपलक्षणमेतत्। 'आतो धातोः' 'यस्येति च' इत्यादावेव प्रयोजनम्।

*तत्कालस्येति किमिति*। प्रधानावयवद्वारेण सूत्रमेवाक्षिप्यते। *खट्वाभिरिति*। वर्णाश्रयत्वाद्विधावन्तादिवद्भावो न भवति॥

न्यासः

न्तेषामेव तपराणां ग्रहणकशास्त्रमिति तेषां पूर्वेण ग्रहणस्यासिद्धत्वात्। अणां तु पूर्वेणैव सिद्धे ग्राहकत्वे कथमित्यत आह—अतो भिस ऐसित्यादि।

स्यादेतत्, इहापि तत् प्रवृत्तमेवानवकाशत्वादित्यत आह—अतपरा इत्यादि। 'आद् गुणः' इत्यादावतपरा अणोऽवकाशः। अस्य त्वनणस्तपरा दीर्घाः। यथा 'विड्वनोरनुनासिकस्यात्' इति। ये त्वणस्तपराः, तेषूभयप्राप्तौ परत्वादिदमेव ग्रहणकशास्त्रं प्रवर्त्तत इत्यभिप्रायः।

वृक्षैः प्लक्षैरिति। तृतीयाबहुवचनं भिस्। 'अतो भिस ऐस्' इत्यैसादेशः, 'वृद्धिरेचि' इति वृद्धिः। अब्जाः, गोजा इति। 'जनी प्रादुर्भावे' अप्सु जायते, गोषु जायत इति—'जनसनखनक्रमगमो विट्'।

खट्वाभिरिति। कथं पुनरेतत् प्रत्युदाहरणम्, यावता 'अन्तादिवच्च' इत्यन्तादिवद्भावे भवितव्यमेवात्रैस्भावेन, तपरकरणस्य तु यत्रैकादेशो नास्ति तद् व्यवच्छेद्यं भविष्यति—कीलालपाभिः, सोमपाभिरित्यादि? नैष दोषः; 'अन्तादिवच्च' इत्यत्र वक्ष्यति—'वर्णाश्रयविधावन्तादिवद्भावो नेष्यते' इति, तथा हि—खट्वाभिरित्यत्रान्तवद्भावाभावाद् 'अतो भिस ऐस्' न भवतीति। अथ वा—'अतः' इत्यत्राकारद्वयप्रश्लेषः कृतः, श्रूयमाणादतो यथा स्यात्॥

## आदिरन्त्येन सहेता ॥ ७१ ॥

आदिरन्त्यनेत्संज्ञकेन सह गृह्यमाणस्तन्मध्यपतितानां वर्णानां ग्राहको भवति, स्वस्य च रूपस्य । अण् । अक् । अच् । हल् । सुप् । तिङ् ।

अन्त्येनेति किम् ? सुडिति तृतीयैकवचनेन 'टा' इत्यनेन ग्रहणं मा भूत् ॥

### पदमञ्जरी

*आदिरन्त्येन सहेता* ॥ इदमपि संज्ञासूत्रम्, आद्यन्तयोर्मध्यापेक्षत्वान्मध्यवर्तिनां संज्ञित्वं विज्ञायते, 'स्वं रूपम्' इत्यनुवृत्तेः स्वरूपस्य चेत्याह—*मध्यवर्त्तिनामिति* । यद्यप्याद्यन्ताववयवा अवयविनः समुदायरूपस्य सम्बन्धिनो तथापि तस्य युगपल्लक्ष्ये प्रयोगाभावात्समुदायिनां संज्ञेति दर्शयति—*वर्णानामिति* । *स्वस्य च रूपस्येति* । स्वरूपमादेरेव गृह्यन्ते, नान्त्यस्य; अप्राधान्यादिति दध्यत्रेति केवल एव यकारः प्रवर्त्तते, न णकारेण सहितः । सहग्रहणादाद्यन्तौ समुदितौ संज्ञेति समुदायादेव विभक्तिर्भवति 'इको यण्' इति, नादिमात्रात् । *टा इत्यनेन ग्रहणं मा भूदिति* । तावतोऽवधेरविवक्षितत्वान्नायमन्त्यः 'टाङसिङसामिनात्स्याः' 'द्वितीयाटौस्वेनः' इति तृतीयैकवचनस्यासौ विशेषणार्थः ॥

### न्यासः

आदिरन्त्येन सहेता ॥ स्वरूपविधिपरिहारायारम्भः । इदमपि संज्ञासूत्रम् , अनादिभूतं वस्त्वपेक्ष्य तत्पूर्ववस्तुन आदित्वं न भवति, अन्त्यभूतं वस्त्वपेक्ष्य ततः परस्यान्त्यत्वम् । न चेहाद्यन्तयोः परस्परापेक्षे आद्यन्तत्वे युज्येते । एवं हि सति वस्त्वन्तरस्य संज्ञिनो भावादादिरन्त्येन सहितः स्वस्यैव संज्ञा स्यात् । ततश्च 'स्वं रूपम्' इत्येतस्येहानुवृत्तये स्वरितत्वासङ्गो वृथा स्यात् । तस्मादाद्यन्तशब्दाभ्यां सामर्थ्यादाद्यन्तव्यतिरेकेण तन्मध्यपाति वस्तु संज्ञित्वेनाक्षिप्तमिति मत्वाह—तन्मध्यपतितानामिति । जाताविदं बहुवचनम् ; अन्यथा ह्येङ्शब्द ओकारस्य संज्ञा न स्यात् ।

ननु चाद्यन्तशब्दाभ्यां नियतदेशावयवावभिधीयेते, अवयवाश्चावयविनः समुदायरूपस्य सम्बन्धिन इति सम्बन्धिशब्दत्वादाद्यन्तशब्दाभ्यां तस्यैव संज्ञित्वेनाक्षेपो युक्तः । अत एवं वक्तव्यम्—तन्मध्यपतितानां समुदायस्येति । एवं मन्यते—यदयम् 'तस्मादित्युत्तरस्य' इत्यादौ वर्णानां समुदाये परतो यकारं यणादेशं कृत्वा निर्देशं करोति, ततो गम्यते—न वर्णसमुदायः संज्ञीति, किं तर्हि ? प्रत्येकं वर्णा एवेति; अन्यथा वर्णसमुदाये संज्ञिनि परतो वर्णमालां यणादेशं कृत्वा निर्देशं कुर्यादिति । असम्भवात् स न कृत इति चेत् , न; वर्णमालात्मन आदेशस्य सम्भवात् । तर्हि समुदाये संज्ञिनि कार्यमेव न सम्भवतीति चेद् , यदि च समुदाये परतः कार्यं न सम्भवति वर्णा

## येन विधिस्तदन्तस्य ॥ ७२ ॥

येन विशेषणेन विधिर्विधीयते स तदन्तस्यात्मान्तस्य समुदायस्य ग्राहको भवति, स्वस्य च रूपस्य । 'एरच्'—इवर्णा-

पदमञ्जरी

येन *विधिस्तदन्तस्य* ॥ स्वरूपविधिपरिहारायायमारम्भः । इदमपि संज्ञासूत्रम् । येनेति करणे तृतीया । विधीयत इति विधिः, कर्मसाधनः किप्रत्ययः । *विधिर्विधीयत इति* । विधिशब्देन विधानयोग्यं वस्त्वभिधीयते, तस्य सांप्रतिकक्रियाविशेषद्योतनायाख्यातप्रयोगः । आसने आस्ते, करणेन करोतीतिवत् । तदन्तस्येति बहुव्रीहिः । तदित्यनेन येनेति निर्दिष्टः करणभूतः शब्दो निर्दिश्यते, तदाह—*आत्मान्तस्येति* । अन्तशब्दस्यावयववाचित्वात्तदाक्षिप्तस्य समुदायस्येयं

न्यासः

एव प्रत्येकं सन्तु संज्ञिनः; तत्र कार्यं सम्भवति, किं समुदायेन ? 'टा' इत्यनेन ग्रहणं मा भूदिति । ननु च सोऽपि तावतोऽवधेरन्त एव, न; तावतोऽवधेरविवक्षितत्वात् । टकारो ह्ययम् 'टाङसिङसामिनात्स्याः' 'द्वितीयाटौस्स्वेनः' इत्यत्र तृतीयैकवचनस्य विशेषणार्थः, न तु प्रत्याहारार्थः ।

अथादिग्रहणं किमर्थम् ? अन्त्येन सह समुदाय एव संज्ञा मा भूदिति, नैतदस्ति; आवृत्तिधर्माणो हि संज्ञाशब्दा भवन्ति । आदिरेव प्रदेशवाक्येष्वावर्तते, न समुदायः; तस्मादन्तरेणाप्यादिग्रहणं सामर्थ्यादादेरेवान्त्यसहितस्य संज्ञात्वं विज्ञायते, न समुदायस्य । एवं तर्हि सामर्थ्यलब्धस्यैवार्थस्य विस्पष्टीकरणार्थमादिग्रहणम् ।

अथ सहग्रहणं किमर्थम्, यावता तृतीययैव सहार्थो गम्यते, यथा—'वृद्धो यूना' इत्यत्र ? नैतदेवम्; इत्थम्भूतलक्षणेऽपि तृतीयाऽस्ति । तस्याञ्च सत्यामादिरेवान्त्येनेत्संज्ञकेनोपलक्षितः संज्ञा स्यात् । ततश्च प्रदेशेष्वक इति, इक इति, अचि इति च समुदायाद् विभक्तिर्न स्यात्, निरर्थकत्वेनाप्रातिपदिकत्वात् । 'सह' ग्रहणात् तु सहभूता संज्ञेति समुदायस्य संज्ञात्वेनार्थवत्त्वात् प्रातिपदिकत्वे सति विभक्तिर्लभ्यते ।

इद्ग्रहणं तु 'अचि' इत्यत्रानित्संज्ञकेन 'चटतव' इत्यनेन चकारेण संज्ञा मा भूदित्येवमर्थम् । अन्त्यत्वं तस्य पूर्ववत्, न समुदायापेक्षया । एवं तर्हि 'हलन्त्यम्' इतीत्संज्ञा प्राप्नोति, तदर्थं 'न विभक्तौ तुस्माः' इत्यत्र नेति योगविभागः कर्तव्यः ॥

येन विधिस्तदन्तस्य ॥ स्वं रूपं शब्दस्येत्यस्यायमपवादः । इदमपि संज्ञासूत्रम्; न तु परिभाषा । न ह्यत्र नियमरूपता परिभाषाधर्मो विद्यते । 'येन' इति करणे तृतीया । विधीयते = अपूर्व एव क्रियते इति विधिः, कर्मसाधनः; 'उपसर्गे घोः किः' इति किप्रत्ययान्तः ।

न्तादच्प्रत्ययो भवति—चयः, जयः, अयः। 'ओरावश्यके' उवर्णान्ताद् ण्यद्भवति—अवश्यलाव्यम्, अवश्यपाव्यम् ॥

पदमञ्जरी

संज्ञेत्याह—*समुदायस्य संज्ञा भवतीति*। *अवश्यलाव्यमिति*। मयूरव्यंसकादित्वात्समासः, 'लुम्पेदवश्यमः कृत्ये' इति मलोपः।

अथेह कस्मादेजन्तस्य संज्ञा न भवति 'एचोऽयवायावः' इति, किं स्यात्? अनेकाल्त्वादयादयः सर्वादेशाः स्युः; ततश्च चयनलवनादिष्वयनमिति प्राप्नोति, प्रकरणादिवशाच्चाक्षादिवदर्थविशेषावगतिः स्यात्, नैष दोषः; 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं भविष्यन्ति। अथ वा—यथा एचा तदन्तविधिः, एवमयादिभिरपि भविष्यति। एवमपि 'आद् गुणः' इत्यत्र आदित्यवर्णान्तो गृह्यते, अचीति चाजादेरिति खट्वेन्द्र इत्यादाववर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गः। षष्ठ्यनिर्देशान्निर्दिश्यमानस्येत्यपि नास्ति। एवं तर्हि नैवंविधोऽस्य विषयः। येनेति करणे तृतीयेत्युक्तम्, करणं च परतन्त्रम्; कर्त्रधिष्ठितस्यैव करणत्वात्। न च 'एरच्' इत्यादाविकारादीनां पारतन्त्र्यम्, धात्वादीनां च स्वातन्त्र्यं स्वरूपतोऽवभासते।

न्यासः

तदन्तस्येति। सोऽन्तोऽस्येति बहुव्रीहिः। तदित्यनेन स एव करणभूतः शब्दः प्रत्यवमृश्यते। अन्तशब्दोऽयमवयववाची, अवयवश्च समुदायस्य भवति। अतश्च तस्यैवेयं संज्ञा विज्ञायत इत्याह—समुदायस्य संज्ञा भवतीति।

अवश्यलाव्यमिति। अवश्यपाव्यमिति। 'लूञ् छेदने', 'पूञ् पवने', वृद्धौ कृतायाम् 'वान्तो यि प्रत्यये' इत्यावादेशः, मयूरव्यंसकादित्वात् समासः, 'लुम्पेदवश्यमः कृत्ये' इति मकारलोपः।

अथेह कस्मादेजन्तस्य संज्ञा न सम्भवति, 'एचोऽयवायावः' इति ?, किञ्च स्यात् ? चयनं चायको लवनं लावक इत्यत्रानेकाल्त्वादयादयः सर्वादेशाः स्युः, नैष दोषः; निर्दिश्यमानस्यादेशा भवन्तीत्येच एव भविष्यन्ति, न सर्वस्य तदन्तस्य। अथ वा—अस्य योगस्यैवंविधो विषय एव न भवति, ततो नायमिह प्रवर्तते। तथा हि येनेति करणे तृतीयेत्युक्तम्, न चाकर्तृकं करणमस्तीति कर्त्ताप्याश्रितः। स पुनरिह सम्बन्धिशब्दत्वादन्तशब्देनावयववाचिना सन्निधापितः समुदायो विज्ञायते। प्रकृतत्वात् स्वरूपञ्च कर्त्ता च त्रिभिः प्रकारैः सन्निहितो भवति। क्वचिन्निर्देशात्—'ईदूदेद्द्विवचनम्' इति, अत्र द्विवचनं कर्तृभूतं निर्दिष्टम्। तथा हीदादिभिः करणैः प्रगृह्यसंज्ञां विदधाति। क्वचित् प्रकरणाद्—यथा 'एरच्' इति, अत्र 'धातोः' इत्यधिकाराद् धातुः प्रकरणात् कर्त्ता सन्निहितः, स इकारेण करणेनाचं विदधाति। क्वचित्

*समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः* ॥ द्वितीयान्तं श्रितादिभिः सह समस्यते---कष्टश्रितः । इह मा भूत्—कष्टं परमश्रित इति । प्रत्ययविधौ–'नडादिभ्यः फक्', नडस्यापत्यं नाडायनः । इह मा भूत्—सूत्रनडस्यापत्यं सौत्रनाडिः ।

किमविशेषेण ? नेत्याह ॥

पदमञ्जरी

*वा स्यादिति* । वृक्षादीनामतो विवक्षानिबन्धनं तदुभयमिति । विशेषणत्वेन विवक्षितं परतन्त्रमप्रधानम्, विशेष्यत्वेन विवक्षितं स्वतन्त्रं प्रधानम् । तेन विशेषणं विशेष्यस्य तदन्तस्य संज्ञेत्युक्तं सम्भवति । विशेष्यसन्निधौ च विशेषणं भवति, सन्निधिश्च कुत्रचित्साक्षान्निर्देशेन, यथा–'ईदूदेद्द्विवचनम्' इति द्विवचनस्य । क्वचिदधिकाराद्यथा–'एरच्' इति धातोः । क्वचिदाक्षेपाद्, यथा–'इको झल्' इति सना धातोः । 'एचोऽयवायावः' इत्यादौ न कथंचिद्विशेष्यसंनिधिरिति नेतत्प्रवर्त्तते । यदि विशेषणं तदन्तस्य संज्ञा, ततः 'उदोष्ठ्यपूर्वस्य' इत्यत्र ऋकारस्तदन्तस्य धातोः संज्ञेति ओष्ठ्यपूर्वग्रहणं धातोरेव विशेषणं स्याद्, न ऋकारस्य; संज्ञायाः संज्ञिप्रत्ययनार्थत्वात् । ततश्चेह स्यात्–सङ्कीर्णमिति; पूर्तमित्यादौ च न स्यात् । एवम् 'उतश्च प्रत्ययादसंयोगपूर्वाद्' इत्यत्रासंयोगपूर्वग्रहणमङ्गस्य विशेषणं स्यात्, नोतः, नैष दोषः; इयं हि संज्ञा गुणप्रधानभावापेक्षा, ततश्च 'उतश्च प्रत्ययाद्' इत्यादौ विशेषणसम्बन्धवेलायां गुणभावास्फुरणात्तमनुभूय पश्चात् विशेष्येण सम्बन्धे संज्ञा भवति ।

*समासेति* । अनेनैतदाह–श्रितादयो पश्चात् विशेष्यास्तद्विशेषणं च सुप् । एवं 'नडादिभ्यः फक्' इत्यादौ नडादिविशेष्यं प्रातिपदिकं विशेषणमिति । *कष्टं परमश्रित इति* । श्रितान्तमेतत्सुबन्तं न भवतीति सम्बुद्ध्यन्तं पठितव्यम्. तद्धि प्रत्ययलक्षणेन सुबन्तं भवति श्रितान्तं च श्रूयते ।

*नेत्याहेति* । कः पुनराह ? उत्तरवादी, आचार्यो वा ।

न्यासः

सामर्थ्याद्—यथा 'इको झल्' इति, अत्र धातोरेव सन् विधीयते, नान्यस्मादिति सामर्थ्याद्धातुः कर्त्ता सन्निहितः, स इका करणेन सनः कित्त्वं विदधाति । तदेवम्, 'ईदूदेद्द्विवचनम्' इत्यादौ कर्तृकरणयोरुभयोरपि विद्यमानत्वात् सोऽस्य सूत्रस्य विषय इति तत्र तदन्तविधिर्भवति । 'एचोऽयवायावः' इत्यत्र तु न केनचित् कर्त्ता सन्निहितः प्रकारेण, न चाकर्तृकं करणं सम्भवति; तस्मात् कर्तृकरणयोरुभयोरप्यसन्निहितत्वान् नायमस्य सूत्रस्य विषय इति न सम्भवति तदन्तविधिः ।

*उगिद्वर्णग्रहणवर्जमिति वाच्यम्* ॥ 'उगितश्च' इति ङीप्प्रत्यय-स्तदन्तादपि भवति । भवती, अतिभवती । वर्णग्रहणम्—'अत इञ्' । दाक्षिः, प्लाक्षिः ॥

*यस्मिन्विधिस्तदादावल्ग्रहणे* ॥ अल्ग्रहणेषु यस्मिन्विधिस्तदादाविति वक्तव्यम् । 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति—श्रियः, भ्रुव. ॥

**वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ ७३ ॥**

यस्येति समुदाय उच्यते । अचां मध्ये यस्य वृद्धिसंज्ञक आदि-

**पदमञ्जरी**

*उगिद्वर्णेति* । उगिता वर्णेन च प्रातिपदिकं विशेष्यमित्यर्थः । यस्मिन्विधि-रिति तदन्तविध्यपवादस्तदादिविधिः, अतो विशेषणेनैव भवति ॥

*वृद्धिर्यस्याचामादिस्तद् वृद्धम्* ॥ समुदायस्यैवाचामादिः सम्भवतीति स एव यस्येत्यनेनोच्यत इत्याह—*यस्येति समुदाय उच्यत इति* । संज्ञिनिर्देशार्थं चेदम्;

**न्यासः**

**वक्तव्य इति** । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'द्वितीया श्रित' इत्यादौ सुपा श्रितादयो विशिष्यन्ते, न श्रितादिभिः सुप् । विशेषणेन च तदन्तविधिः, न विशेष्येण । यस्माद् येनेति करणे तृतीया, करणञ्च परतन्त्रं परार्थं भवति, न विशेष्यम्; तस्माद् विशिष्टैः श्रितादिभिस्तदन्तविधिर्न भवति । नडादिभ्यः फगिति । अत्रापि प्रकृतेन प्रातिपदिकेन नडादयो विशिष्यन्ते, न नडादिभिः प्रातिपदिकम् । अतोऽत्रापि नास्ति तदन्तविधिरिति ।

**उगिद्वर्णग्रहणवर्जमिति** । उगिता वर्णेन च प्रातिपदिकं विशिष्यते । विशेषणेन च तदन्तविधिर्भवत्येव ।

**यस्मिन् विधिरित्यादि** । तदन्तविधौ प्राप्ते तदादिविधिरुच्यते । यस्मिन्निति सप्तमीनिर्दिष्टे तदादिविधिं दर्शयति । यत्राल्ग्रहणे सप्तमीनिर्दिष्टे पूर्वस्य विधिस्तत्र तदादौ वेदितव्यः । अलादावित्यर्थः । यदि तर्हि तत्रापि तदन्तविधिः स्यात्, इहैव स्यात्—श्रियाविति, इह तु न स्यात्—श्रिय इति ? तदादिविधौ तु सतीहापि भवति, स्वस्य च रूपस्येति श्रियावित्यत्रापि भवत्येव ॥

**वृद्धिर्यस्याचामादिस्तद् वृद्धम्** ॥ यस्येति समुदाय उच्यत इति । अचां मध्ये यस्यादिर्वृद्धिसंज्ञकस्तस्यैव शब्दरूपस्य संज्ञा विधीयते । तच्च नियोगतः समुदायात्मक-मेवेति सामर्थ्याद् यस्येति सामान्यपदेनापि समुदाय एवाभिधीयते । संज्ञिनिर्देशार्थं

भूतस्तच्छब्दरूपं वृद्धसंज्ञं भवति। 'अचाम्' इति जातौ बहुवचनम्। शालीयः, मालीयः, औपगवीयः, कापटवीयः।

आदिरिति किम्? सभासन्नयने भवः साभासन्नयनः।

### पदमञ्जरी

अन्यथा तच्छब्देन किं परामृश्येत, तदित्यस्यानुपादाने वृद्धेरेव सा वृद्धसंज्ञा स्यात्। *अचां मध्य इत्यादि*। अत्र यस्येत्यस्याचामित्यनेन सम्बन्धः, आदिश्च निर्धार्यते, वृद्धिर्विधेयो धर्मः। आदिशब्दश्चोपक्रमवचनः—उपक्रम्यत इत्युपक्रमः, प्रथम उच्चार्यत इत्यर्थः। यस्य समुदायस्य सम्बन्धिनामचां मध्ये प्रथमत उच्चार्यमाणो वृद्धिसंज्ञक इत्यर्थः। *अचामिति जातौ बहुवचनमिति*। तेन द्वयोरपि भवतीति भावः। एकस्यापि व्यपदेशिवद्भावाद् भवति। *शालीय इति*। अत्र

### न्यासः

यस्येति वचनम्। अचां मध्य इत्यादिना वृद्धिसंज्ञिनः समुदायादेकदेशस्य निर्धारणं दर्शयन्नचामित्यस्य निर्धारणषष्ठीत्वं दर्शयति। आदिशब्दस्त्विहोपक्रमे वर्त्तते, उपक्रम्यते इत्युपक्रमः प्रथमत उच्चारित इत्यर्थः। अचामिति बहुवचननिर्देशाद् यस्य बहूनामचां मध्ये वृद्धिसंज्ञक आदिभूतः, तस्यैव वृद्धसंज्ञया भवितव्यम्; न तु यस्य द्वयोर्मध्य इति चोद्यमपाकर्तुमाह—अचामित्यादि।

यदि तर्ह्यचामिति निर्धारणषष्ठीयम्, एवं सति समानजातीयस्यैव निर्धारणं भवतीत्यचां मध्ये वृद्धिसंज्ञकोऽजेव यथा स्यादित्येषोऽर्थः स्यात्। तथा च सत्याकारो यस्यादिस्तस्य संज्ञा न स्यादाश्वलायन इत्यादेः, न ह्याकारस्य मुख्यमच्त्वमस्ति; अक्ष्वसन्निवेशात्। उपचरितं तु स्यात्; 'अणुदित्सवर्णस्य चाप्रत्ययः' इत्येनानचोऽपि सतोऽच्कार्यकरणात्। न च मुख्ये सति गौणस्याश्रयणं युक्तम्, गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययात्, नैष दोषः; व्यासेन्र्यायादाकारस्यापि गौणमच्त्वमाश्रित्य भविष्यति, अन्यथा ह्यैज्ग्रहणमेव कुर्यात्, न वृद्धिग्रहणम्। शालीयः, मालीय इत्यादि। अत्र वृद्धसंज्ञायां सत्याम् 'वृद्धाच्छः' इति च्छो भवति।

ननु च शालामालाशब्दयोः कापटुशब्दस्य च संज्ञया न भवितव्यम्, न ह्येषां वृद्धिसंज्ञक आदिः, किं तर्हि? हल्, नैतदेवम्; विद्यमानोऽपि ह्यत्र हल् नापेक्ष्यते, अजपेक्षस्यादित्वस्याश्रयणात्। एतदेव ह्यज्ग्रहणस्य प्रयोजनम्। कथं नाम तदपेक्षयादित्वं विज्ञायेतेति? अन्यथा तत्र कर्त्तव्यमेव स्यात्। अज्ग्रहणे क्रियमाणे सत्ययमर्थो भवति। अचां मध्ये यस्य यो वृद्धिसंज्ञकोऽजेवादिभूत इति। अन्येभ्योऽज्भ्यो यस्य वृद्धिसंज्ञकः प्रागुच्चार्यत इति यावत्। तेन शालाशब्दादेरपि संज्ञा सिध्यति।

साभासन्नयन इति। अत्र वृद्धिसंज्ञाभावादणेव भवति, न तु च्छः। यदि पुनरा-

*वा नामधेयस्य वृद्धसंज्ञा वक्तव्या* । देवदत्तीयाः, दैवदत्ताः ।

* गोत्रान्तादसमस्तवत् प्रत्ययो भवतीति वक्तव्यम्* । घृत-

पदमञ्जरी

समुदायस्य हलादित्वेऽप्यजपेक्षया प्रथमोऽच् वृद्धिरिति संज्ञा भवति । ननु च निर्द्धारणस्य तुल्यजातीयविषयत्वान्निर्द्धार्यमाण आदिरप्यजेव प्रतीयते, न वा आकारोऽच्; अक्षरसमाम्नायेऽनुपदेशात् । कथं तर्हि सोमपं ब्राह्मणकुलमिति अच्कार्यं ह्रस्वत्वं भवति; सवर्णग्रहणात्, न त्वच्त्वात् । इहापि तर्हि सवर्णग्रहणाद्भविष्यति ? स्यादेवम्, यदि ह्यज्ग्रहणमुच्चारितं स्याद्; इह तु निर्धारणस्वभावात्प्रतीयते । अस्तु, तथाप्रतीयमान एव सवर्णं ग्रहीष्यति यथाज्ग्रहणे मध्यवर्तीकारादिः । किञ्च—अचामिति निर्द्धारणाश्रये तावदकारस्योच्चारितत्वाद् आकारोऽपि प्रतीयते । तेन निर्द्धार्यमाणस्याप्याकारादेस्तथाभूतमेवाच्त्वं प्रतीयत इति यत्किञ्चिदेतच्चोद्यम् ।

*वा नामधेयस्येति* । नामधेयशब्दः साङ्केतिकेषु रूढः । देव*दत्तीया इति* । काश्यादिषु देशवाची देवदत्तशब्दः पठ्यते । 'एङ् प्राचां देशे' इति वृद्धसंज्ञकः काश्यादिभिः साहचर्यादित्यदेशवाचिनश्छ एव भवति । वाहीकग्रामवाचिनोऽपि देवदत्तशब्दस्यानादित्वेनासाङ्केतिकत्वाद् अप्राचां देशवाचित्वाच्च वृद्धसंज्ञाया अभावात् काश्यादिलक्षणौ ठञ्ञिठौ न भवतः ।

*गोत्रान्तादित्यादि* । गोत्रशब्देन गोत्रप्रत्ययान्तं गृह्यते, तदन्तादसमस्तवत् केवलात् गोत्रान्ताद्यः प्रत्ययो भवति स एव तदन्तादपि भवतीत्यर्थः ।

न्यासः

दिग्रहणं न क्रियेत ततो यस्याप्यचां मध्ये वृद्धिसंज्ञकः कश्चित् सभासन्नयनादेस्तस्याप्येषा संज्ञा स्यात् । अत्र यद्यपि वृद्धिशब्दः श्रूयते, तथापि तल्लिङ्गकपरिभाषा नोपतिष्ठते । यस्माद् यत्र नियतस्थानिके गुणवृद्धी विधीयेते तत्र स्थानिनियमार्था सा व्याप्रियते । एतच्च गागेवोक्तम् । न चेह गुणवृद्ध्योर्विधानम्, अतो नात्र व्यापारस्तस्याः । तेन यस्याप्यनियतस्थानिको वृद्धिसंज्ञक आदिभूतः, तस्यापि संज्ञा सिद्धा भवति । वा नामधेयस्येत्यादि । ये पुरुषैर्व्यवहाराय संकीर्त्यमानाः शब्दा देवदत्त इत्येवमादयः, तेषामेषा संज्ञा वेदितव्या । तेष्वेव नामधेयशब्दो रूढः, न तु ये जात्यादिनिमित्तका गवादिशब्दा अनादिव्यहारान्तःपातिनस्तेषु । ननु च काश्यादिपाठात् 'काश्यादिभ्यः' ठञ्ञिठाभ्यां भवितव्यम्, तदयुक्तं देवदत्तीय इति च्छप्रत्यान्तस्योदाहरणम्, नैष दोषः; यो हि देवैर्दत्तो देवदत्त इति क्रियानिमित्तको देवदत्तशब्दः, तस्यैव तत्र पाठः, न संज्ञाशब्दस्य । तेन संज्ञाभूताद्देवदत्तशब्दाद् यदा वृद्धसंज्ञा तदा छो भवति, अन्यदा त्वण् । गोत्रान्तादित्यादि । तथाऽसमस्तात् केवलाद् गोत्रप्रत्ययान्ताद्

प्रधानो रौढिः = घृतरौढिः, तस्य छात्रा घृतरौढीयाः । ओदनप्रधानः पाणिनिः = ओदनपाणिनिः, तस्य छात्रा ओदनपाणिनीयाः, वृद्धाम्भीयाः, वृद्धकाश्यपीयाः ।

* जिह्वाकात्यहरितकात्यवर्जम् * । जैह्वाकाताः, हारितकाताः ॥

## त्यदादीनि च ॥ ७४ ॥

यस्याचामादिग्रहणमुत्तरार्थमनुवर्तते । इह तु न सम्बध्यते । त्यदादीनि शब्दरूपाणि वृद्धसंज्ञानि भवन्ति । त्यदीयम्, तदीयम्, एत-

पदमञ्जरी

*घृतरौढीया इति* । रूढस्यापत्यम् 'अत इञ्' शैषिकेष्वर्थेष्विञश्चेत्यणः 'न द्व्यचः प्राच्यभरतेषु' इति निषेधाद् 'वृद्धाच्छः' । एवं *वृद्धाम्भीयाः*—अम्भसोऽपत्यम् 'सम्भूयोऽम्भसोः सलोपश्च' इति बाह्वादिषु पाठादिञ्, सलोपश्च । *ओदनपाणिनीया इति* । पणिनोऽपत्यमित्यण् 'गाथिविदथि' इति प्रकृतिभावात् 'टेः' इति टिलोपाभावः, पाणिनस्यापत्यं पणिनो युवेति इञ्, तस्य छात्रा इति विवक्षिते 'यूनि लुग्' इति इञो लुकि कृतेऽपि प्रत्ययलक्षणेन 'इञश्च' इत्यण् प्राप्तो गोत्राधिकारान्न भवति । 'कण्वादिभ्यो गोत्रे' इत्यत्र तावत् पारिभाषिकं गोत्रं गृह्यते तदेव 'इतश्च' इत्यत्राप्यनुवर्त्तते, तेन यूनीञ् न भवति । कश्यपशब्दो बिदादिः, कतशब्दो गर्गादिः, जिह्वाचपलो हरितभक्षश्च कात्यस्ततोऽणेव भवति । कः पुनरत्र प्रत्ययातिदेशप्रस्तावः, यावता शेषाधिकारे प्राग्दीव्यतोऽणित्यत्र नैतद्वक्तव्यम् ? सत्यम्; केश्चित्तु गोत्रान्तस्य वृद्धसंज्ञा विहिता, एवमपि वृद्धाम्भीया इति सिद्धेः । *वार्त्तिककारस्तु*—"वृद्धसंज्ञायां सत्यां पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वा इति 'वृद्धाच्छः' स्यात् । प्रत्ययातिदेशे तु 'कण्वादिभ्यो गोत्रे' इत्यण् लभ्यते" इति मन्यमानः पूर्ववाक्येन परमतमुपन्यस्यानेन वाक्येन निरस्यति स्म; तदेव पठितं *वृत्तिकारेण* ॥

*त्यदादीनि च* ॥ *उत्तरार्थमिति* । तत्र प्रयोजनवत्त्वात् यस्याचामादिरेङिति

न्यासः

वृद्धाच्छप्रत्ययो भवति तथा समस्तादवृद्धादपि । घृतरौढिरिति । समानाधिकरणाधिकारे 'शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च' इति समासः । एवमुत्तरत्रापि । रूढस्यापत्यम्, पाणिनस्यापत्यम्—'अत इञ्' । वृद्धाम्भीया इति । अत्राप्यम्भःशब्दाद् 'बाह्वादिभ्यश्च' इतीञ । बाह्वादिषु 'सम्भूयोऽम्भसः सलोपश्च' इति पठ्यते । काश्यपशब्दो बिदादित्वादञन्तः । जैह्वाकाता हारितकाता इति । कात्यशब्दो गर्गादियञन्तः । जिह्वाचपलः कात्यः, जिह्वाकात्यः । हरितभक्षः कात्यः हरितकात्यः, ताभ्यामौत्सर्गिक एवाण्, 'यस्येति च' इत्यकारस्य लोपः, 'आपत्यस्य च तद्धितेऽनाति' इति यकारस्य ।

त्यदादीनि च ॥ उत्तरार्थमिति । उत्तरसूत्रेऽस्य प्रयोजनवत्त्वाद् यद्यनुवर्त्तते,

दीयम्, इदमीयम्, अदसीयम्; त्वदीयम्, त्वादायनिः; मदीयम्; मादायनिः; भवदीयम्, किमीयम् ॥

## एङ् प्राचां देशे ॥ ७५ ॥

यस्याचामादिग्रहणमनुवर्त्तते । एङ् यस्याचामादिस्तत्प्राचां देशाभिधाने वृद्धसंज्ञं भवति । एणीपचनीयः, भोजकटीयः, गोनर्दीयः ।

एङिति किम् ? आहिच्छत्रः, कान्यकुब्जः । प्राचामिति किम् ? देवदत्तो नाम वाहीकेषु ग्रामः, तत्र भवो दैवदत्तः ।

### पदमञ्जरी

सम्बन्धसम्भवाच्च । *इह तु न सम्बध्यत इति* । अयोग्यत्वाद् निर्द्धारणस्य सजातीय वषयत्वात् त्यदादीनां चाजात्मकत्वाभावाद् न ह्यस्ति सम्भवः । *यस्याचामादयस्त्यदादय इति* । न च त्यदादिस्थेऽचि त्यदादिशब्दो वर्तत इति क्लिष्टकल्पना युक्ता; उत्तरार्थमप्यनुवृत्तिसम्भवात् । तदुक्तम्—*उत्तरार्थमनुवर्तत इति* । *त्यादायनिरति* । 'उदीचां वृद्धादगोत्राद्' इति फिञ्, 'प्रत्ययोत्तरपदयोश्च' ॥

*एङ् प्राचां देशे* ॥ *प्राचां देशाभिधान इति* । प्राचि देशे ये वसन्ति ते प्राचः पुरुषास्तेषां सम्बन्धी यो देशस्तदभिधान इत्यर्थः । एतेन श्रुतस्य विशेषणं प्राचां ग्रहणं नाचार्याणामिति दर्शयति । तथा हि सति मतेनेत्यध्याहार्यं स्यादिति भावः । *एणीपचनीय इत्यादि* । एणीपचनादिभ्यश्छः । *दैवदत्ता इति* । 'वाहीकग्रामे-

### न्यासः

एतदर्थमपि कस्मान्न भवतीत्याह—**इह न सम्बध्यत इति** । यदीहापि सम्बध्येत तदायमर्थः स्यात्—त्यदादीनि यस्याचामादिभूतानि तद्वृद्धमिति । ततश्च त्वत्पुत्र इत्यादावेव स्यात्, केवलानाञ्च त्यदानीनां न स्यादित्यभिप्रायः । ननु च त्वत्पुत्रो मत्पुत्र इत्यादावुपसर्जनानि त्यदादीनि, उपसर्जनानाञ्च तेषां त्यदादित्वं निवर्तितम्, तत् कुतोऽयं प्रसङ्गः ?, यदि यस्याचामादेरित्येतदिह सम्बध्यते तदा सत्युपसर्जनत्वे वचनात् त्यदादावेव संज्ञा स्याद्, न केवलानामिति मन्यते; कथं पुनरिहानुवर्तमानं शक्यमसम्बन्धुम् ? स्वसम्बन्धानुवृत्तेः । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति त्यदादीनि च वृद्धिसंज्ञकानि भवन्ति । 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति तद्वृद्धम्, 'एङ् प्राचां देशे' यस्याचामादिग्रहणमनुवर्त्तते, वृद्धिग्रहणं निवृत्तम् । एवं वृद्धिशब्देन सम्बन्धमनुवर्त्तमानं न शक्यते त्यदादिभिः सम्बन्धुम् । त्वादायनिः, मादायनिरिति । 'उदीचां वृद्धादगोत्रात्' इति फिञ्, 'प्रत्ययोत्तरपदयोश्च' इति युष्मदस्मदोस्त्वमादेशौ । चकारोऽनुक्तसमुच्चयार्थः । तेन 'वा नामधेयस्य' इत्यादि वक्तव्यं न भवति ।

**एङ् प्राचां देशे । प्राचां देशाभिधान इति । प्राचां सम्बन्धी यो देशस्तदभिधान**

देश इति किम्? गोमत्यां भवा मत्स्या गौमताः।

पदमञ्जरी

भ्यश्च' इति वृद्धादिति विहितौ ठञ्ञिठौ न भवतः। काश्यादिपाठादपि न भवतः; तत्रापि वृद्धाधिकारात्। एवं क्रोडो नाम ग्रामस्तत्र भवः क्रौड इत्यणेव भवति। *कुणिना* तु प्राचांग्रहणमाचार्यनिर्देशार्थं व्याख्यातम्, *भाष्यकारोऽपि* तथैवाशिश्रियत्। तेन सेपुरं स्कोनगरं च वाहीकग्रामौ, तत्र 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ भवतः—सैपुरिकी, सैपुरिका; स्कौनागरिकी, स्कौनगरिका। अस्य व्यवस्थितविभाषाविज्ञानाच्च क्रोडदेवदत्तशब्दयोरप्राग्देशवाचिनोष्ठञ्ञिठौ न भवतः। शैषिकेष्वेवार्थेष्वियं वृद्धसंज्ञेष्यते। तेनापत्यविकारयोः 'उदीचां वृद्धादगोत्रात्' 'नित्यं वृद्धशरादिभ्यः' इति वृद्धलक्षणप्रत्ययाभावः। एतदपि व्यवस्थितविभाषयैव सिद्धम्। *वृत्तिकारपक्षे* त्वेतत्सर्वं वचनात्साध्यम्। *गौमता इति*।

गोमती प्राग्देशे नदी देशग्रहणेन न गृह्यते, 'नदीदेशोऽग्रामाः' इति नद्याः पृथग्ग्रहणात् 'एङ् प्राचां देशे' 'उदीचां वृद्धादगोत्राद्' इत्यादिषु प्रागुदञ्चौ श्रुतौ, तयोर्विभागज्ञानार्थमाह-*प्रागुदञ्चा*'*विति*। शरावती नाम नदी उत्तरपूर्वाभिमुखी, तस्या दक्षिणपूर्वस्यां दिशि व्यवस्थितो देशः प्राग्देश; उत्तरपरस्यामुदग्देशः, तौ शरावती विभजते; तया मर्यादया तयो र्विभागो ज्ञायते। *क्षीरोदकमिति*। 'जातिरप्राणिनाम्' इत्येकवद्भावः। क्वचित् 'क्षीरोदके' इति पाठात्तत्र नियतव्यक्तिविवक्षया जातिपरत्वाभावाद् द्विवचनम्। किमर्थं विभजते ? विदुषां शब्दसिद्ध्यर्थम्। यद्यपि नद्या एवमुद्देशो न भवति— विदुषां शब्दा व्यवस्थिताः सिद्ध्यन्ति; तथापि तया हेतुभूतया व्यवस्थितं शब्दसाधु-

न्यासः

इत्यर्थः। एतेन प्राचामिति देशविशेषणं न विकल्पार्थमिति दर्शयति। प्राचां मतेनेत्यस्याविवक्षितत्वादित्याख्यातं भवति।

एणीपचनीय इत्यादि। एणीपचन इत्यादिभ्यश्छः। अहिच्छत्र इति, कान्यकुब्ज इति। अहिच्छत्रकान्यकुब्जशब्दाभ्यामणेव भवति। दैवदत्त इति। वृद्धाधिकारे विहितौ 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ न भवतः, काश्यादिपाठादपि तौ न भवतः; क्रियानिमित्तको हि देवदत्तशब्दस्तत्र पठ्यते, संज्ञाशब्दस्य चेदं प्रत्युदाहरणम्। एतच्च यदा 'वा नामधेयस्य' इति वृद्धसंज्ञा नास्ति; तदा वेदितव्यम्। गौमता इति। अत्र सर्वमस्ति न तु देशाभिधानम्। तथा हि गोमती नदी प्राग्देशे, न देशः। न हि नदी देशग्रहणेन गृह्यते; 'नदीदेशोऽग्रामाः' इत्यत्र नद्याः पृथग्ग्रहणात्।

एङ् प्राचां देश इति। 'उदीचां वृद्धादगोत्रात्' इत्येवमादिषु प्रागुदञ्चौ श्रूयेते,

प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा ।
विंदुषां शब्दसिद्ध्यर्थं सा नः पातु शरावती ॥

❀ इति श्रीजयादित्यविरचितायां काशिकावृत्तौ प्रथमाध्यायस्य प्रथमः पादः ❀

पदमञ्जरी

त्वमिति उद्देशोऽध्यारोप्यते। सैवंभूता सा नोऽस्मान् पातु। कचित् *प्रागुदीचाविति* पाठा, तत्र 'अच्प्रत्यन्ववपूर्वात्' इत्यत्राजितियोगविभागादच्प्रत्ययः। 'उद ईत्' इतीत्त्वम्। *प्रागुदीचमिति* पाठे समाहारद्वन्द्वः। 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति टच्। क्वचित् *प्रागुदीच* इति पाठः, तत्रावयवबहुत्वस्य समुदाय आरोपः, प्राग्देशान्नुदग्देशांश्चेत्यर्थः ॥

*इति हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमध्यायस्य प्रथमः पादः समाप्तः*

न्यासः

तयोश्च विभागो न विज्ञायते। अतस्तत्परिज्ञानायाह—प्रागुदञ्चावित्यादि। शरावती नाम नदी, तस्याः पूर्वेण व्यवस्थितो देशः प्राग्देशः, उत्तरेण व्यवस्थित उदग्देशः। तौ शरावती विभजते=विभागेन व्यवस्थापयति। तस्यां हि मर्यादायां सत्यां तयोर्विभागः परिज्ञायते। किमर्थं विभजते? विदुषां शब्दसिद्ध्यर्थमिति। पण्डितानां वैयाकरणानां शब्दव्युत्पत्त्यर्थम्। कथं विभजते? हंसः क्षीरोदकं यथा। क्षीरोदकमिति 'जातिरप्राणिनाम्' इत्येकवद्भावः। क्वचित् क्षीरोदके इति पाठः। स सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वेदितव्यः। यथा हंसः क्षीरमुदकञ्च मिश्रीभावमुपगतं पृथगसङ्करेण व्यवस्थापयति, तथा शरावती प्रागुदञ्चौ। यत्-तदोर्नित्याभिसम्बन्धात् सेति वचनादनुक्तमपि येत्येतल्लभ्यते। या विभजते सा नोऽस्मान् पातु रक्षतु। प्रसिद्धस्तु पाठो यत्र श्लोके प्रागुदीचाविति, तत्राऽचः 'उद ईत्' इति भसंज्ञकस्योच्यमानः कथमीकारः? कथञ्च 'उगिदचां सर्वनामस्थानेऽधातोः' इति नुम् न भवतीति चिन्त्यम्। अत्र वर्णयन्ति—'अच्प्रत्यन्ववपूर्वात् सामलोम्नः' इत्यत्राजिति योगविभागेनाच्प्रत्ययः कृतः, तेनात्राचि परतो भसंज्ञायां सत्यामीत्त्वं भवति। नुम् न भवति; अचा सर्वनामस्थानस्य व्यवहितत्वादिति।

अन्ये तु प्रागुदीचमिति समाहारं कुर्वन्ति। तेषां 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टचि समासान्ते कृते पूर्ववदीकारो नुमभावश्च भवति। क्वचित्तु प्रागुदीच इति पाठः। तत्रावयवदेशापेक्षया बहुत्वविवक्षायां बहुवचनम्। प्राग्देशानुदग्देशांश्च विभजत इत्यर्थः।

इति श्रीबोधिसत्त्वदेशीयाचार्यजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

# अथ प्रथमाध्याये द्वितीयः पादः

## गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ १ ॥

### पदमञ्जरी

गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ कुट आदिर्येषामिति बहुव्रीहावन्तर्वर्तिन्या विभक्त्या पदत्वेऽपि जश्त्वं न भवति; अनुक्रियमाणरूपविनाशप्रसङ्गात्। अथ वा— 'कुट कौटिल्ये' इति धातुपाठे योऽकारस्तेन सह सानुबन्धानुकरणं द्रष्टव्यम् ।

अत्र चत्वारः पक्षाः सम्भवन्ति—इत्संज्ञकेन ङकारेण सह सम्बन्धप्रतिपादनम्, ङितो वा विधिः, संज्ञाकरणम्, तद्वदतिदेशो वेति । तत्राद्ये पक्षे गाङ्कुटादिभ्यः परोऽञ्णितप्रत्ययो ङिद् = इत्संज्ञकङकारयुक्तः, इत्संज्ञको ङकारस्तस्यास्तीत्यर्थः । अत्र येषामस्ति ङकारो यङादीनां तेषु व्यर्थोऽनुवादः, येषां नास्ति तव्यादीनां तेषु मिथ्योद्यमित्युपक्रममात्रमयं पक्षः ।

अथ द्वितीयः ? 'गाङ्कुटादिभ्यः' इति पञ्चम्या 'अञ्णित्' इति प्रथमायाः षष्ठ्यां प्रकल्पितायां ङिदादेशः प्राप्नोति। अत्र प्रथमाया न च वैयर्थ्यम्, लाघवार्थत्वात् । तत्र ङिदिति कर्मधारये, असमासे वा 'आदेः परस्य' इति तव्यादीनामादेर्ङकारः प्राप्नोति, कथं पुनरित्संज्ञको नामादेशः स्यात् स्वयं निवृत्त्यभिमुखः ? को दोषः ? स्थानिनं निवर्त्य निवर्तिष्यते ! स्यादेतत्—इद्ग्रहणसामर्थ्यादादेशो न भविष्यति, आदेशत्वे हि 'लशक्वतद्धिते' इत्येव सिद्धेत्संज्ञेत्यागमो ङकारो विधास्यतें इति, तन्न; अनेनेत्संज्ञा यथा स्यात् तेन मा भूदित्येवमर्थमिद्ग्रहणं स्यात् । कः पुन-

### न्यासः

गाङ्कुटादिभ्योऽञ्णिन्ङित् ॥ अत्र पक्षत्रयं सम्भाव्यते—इत्संज्ञको वा ङकारोऽनेन भाव्यते, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, इत्संज्ञको ङकार एषां सम्बन्धी भवतीति यावत्; एवं हि ते ङितो भवन्ति यदि हि तेषां ङकारोऽनुबन्धो विधीयते, नान्यथा; न हि विना चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति । ङिदितीयं वा संज्ञाऽनेन क्रियते, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, ङित्संज्ञका भवन्तीति यावत् । अतिदेशोऽयं वा स्यात्, गाङ्कुटादिभ्यः परे येऽञ्णितः प्रत्ययास्ते ङितो भवन्ति, ङिद्वद् भवन्तीत्यर्थः । तत्राद्ये पक्षे 'गाङ्कुटादिभ्यः' इत्यनया पञ्चम्याऽञ्णिदित्यस्याः प्रथमायाः षष्ठ्यां परिकल्पितायां सत्याम् 'आदेः परस्य' इति वचनादादेरलः स्थान आदेश एव ङकारः प्राप्नोति । द्वितीये तु पक्षे 'अनिदितां हल उपधायाः क्ङिति' इत्यत्र संज्ञिनः संप्रत्ययो न स्यात्; शब्दभेदात् । अन्यो हि ङिच्छब्दः, अन्यो हि क्ङिच्छब्दः ।

पदमञ्जरी

रत्र विशेषस्तेन वा सत्यामनेन वा ? अयमस्ति विशेषः—तेन सत्यां लोपः स्यात्, अनेन पुनर्न। तस्येति प्रकृतपरामर्शात् तस्येतस्य प्रकृतस्येत्संज्ञकस्येति। एवं च श्रूयमाण एव ङकारे ङित्कार्याणि भवन्ति। तत्र 'नेड्वशि कृति' इत्यत्र वरमनादौ कृतीति यदि परिगणनम्, तदात्र प्रतिषेधाभावात् कुटिङ्गा कुटिङ्गमिति प्राप्नोति। अथ तु सम्भवोदाहरणप्रदर्शनम्, तदात्रापि प्रतिषेधात् कुट्ङ्गा कुट्ङ्गमिति प्राप्नोति। बहुव्रीहौ तु येऽमी प्रसिद्धा ङितश्च ङादयस्त एव तृजादीनामादेशाः स्युः। न चान्तर्यतो व्यवस्था, यत्र खल्वन्तरतमस्यानन्तरतमस्य च प्रसङ्गस्तत्रान्तरतमपरिभाषा। न चात्रान्तरतमानां तव्यङादीनां प्राप्तिः; लोके शास्त्रे वा तेषामप्रसिद्धेः। न चान्तरतमपरिभाषेव तान् कल्पयितुमर्हति; नियामकत्वात्तस्याः। सन्तु वा तव्यङादयः, तेऽपि त्वादेशा भवन्तः 'ङिच्च' इत्यन्त्यस्यैव स्युः। ननु च नात्र श्रौतः स्थान्यादेशभावः, किं तर्हि ? गाङ्कुटादिभ्यः परोऽञ्णित्प्रत्ययो ङिद् इत्संज्ञकङकारयुक्त इति सिद्धानुवादमात्राक्षरव्यापारः। स तु सिद्धानुवादो विधानमन्तरेण नोपपद्यते इति ङकारस्येत्संज्ञकस्य विधिः कल्प्यते। किमतः ? यद्येवम्, इदं ततो भवति विधिवाक्यस्याश्रुतत्वात् क परिभाषाङ्गतामुपेयात्—'षष्ठी स्थानेयोगा' इति वा, 'आदेः परस्य' इति वा, 'ङिच्च' इति वा ? नैतदस्ति, यस्मात् षष्ठीप्रकल्पनेन श्रौत एव स्थान्यादेशभाव उपपादितः। अस्तु वा कल्पितविधानम्, य एव त्वसौ विधिः कल्प्यते, तत्रैव परिभाषाङ्गभावमुपैति; विध्यङ्गत्वात्परिभाषाणाम्। परिभाषाः खलु विधेरङ्गभूता अनुवादवाक्यश्रुतार्थान्यथानुपपत्त्या विधिवाक्यमेव कल्पन्ते इति सर्वथा दुष्ट एवायं पक्षः।

संज्ञाकरणे 'क्ङिति च' इत्यत्रास्य ग्रहणं न स्यात्; संज्ञारूपस्यानुच्चारितत्वात्। ङिच्छब्दः संज्ञा, ङिच्छब्दश्चोच्चारितः प्रत्येकसम्बन्धमपीदृग्रहणं क् इद् यस्येत्येतावदेव सम्पादयेत्। न वान्वर्थाऽवयवद्वययुक्ता संज्ञेति प्रत्यभिज्ञाभावात् क्ङित्प्रदेशेष्वस्य ग्रहणं न स्यादेव। तथा केवले ङिच्छब्द उच्चारिते तस्यैव ग्रहणं स्याद्, न यङादीनाम्; कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययात्। ततश्च ग्रहिज्यादिसम्प्रसारणं गृह्णातीत्यादावेव स्याद्, न जरीगृह्येत इत्यादौ। न च यङादीनां ङित्करणस्य वैयर्थ्यम्; क्ङित्प्रदेशेषु यत्र संज्ञारूपं न प्रत्यभिज्ञायते तत्र ग्रहणार्थत्वात्। ननु चैवं गाङ्कुटादिभ्यः परस्य ङित्संज्ञाविधानमनर्थकमापद्यते, कथम् ? क्ङित्प्रदेशेष्वस्य ग्रहणं नास्तीत्युक्तमेव। केवलश्च ङिच्छब्दो ग्रहिज्यादिसूत्र एव, न च तत्र गाङ् गृह्यते, नापि सर्वे कुटादयः, किं तु व्यतिरेक एव, सत्यम्; न्यायागतेऽर्थे किं कुर्मः ! त्यज्यतामयं पक्षः।

अतिदेशोऽयम्। 'गाङ्' इति इङादेशो गृह्यते, न 'गाङ् गतौ' इति; ङकारस्यानन्यार्थत्वात्। कुटादयोऽपि—'कुट कौटिल्ये' इत्येत-

पदमञ्जरी

तदेवमेतेषां पक्षाणां दुष्टत्वात् चतुर्थं पक्षमाश्रित्याह—*अतिदेशोऽयमिति*। *इङादेशो गृह्यत इति*। 'इङश्च' 'गाङ् लिटि' 'विभाषा लुङ्लृङोः' इति विहितः। *ङकारस्यानन्यार्थत्वादिति*। इङादेशस्य हि यो ङकारस्तस्यैतदेव प्रयोजनम्—इह तस्यैव ग्रहणं यथा स्यादिति। अथ सामान्यग्रहणं कस्मान्न भवति? असमानत्वादादेशस्य। ङकारोऽन्यार्थः; आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्, धातोस्तु चरितार्थः। यद्येवम्, आब्ग्रहणे चाप एव ग्रहणं प्राप्नोति, पकारस्यानन्यार्थत्वात्, न; एवं हि चापोऽनुबन्धावनर्थकौ स्याताम्, टापश्च टकारः। अतो यच्च यावच्च समानं सम्भवति चरितार्थपित्त्वमचरितार्थपित्त्वमपि तत्सर्वमाश्रीयते, न चाबूपमेव

न्यासः

किञ्च, ङिद्ग्रहणे ग्रह्यादौ सूत्र एषामेव संज्ञिनां ग्रहणं प्राप्नोति, न यङादीनाम्; 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति वचनात्। अथापि कथञ्चिदेते दोषाः परिहर्तुं शक्येरन्, आद्ययोः पक्षयोर्यस्तु तत्परीहारद्वारेण प्रवृत्तौ साध्यार्थप्रतिपत्तिगौरवदोष आपद्यते सोऽपरिहार्य एव। तृतीये तु पक्षे न कश्चिद् दोष इति मत्वा तमेवाश्रित्याह—अतिदेशोऽयमिति। यद्येवम्, वतिना निर्देशः कर्त्तव्यः, अन्यथा तदर्थो नावगम्येत; नैतदेवम्, परपदार्थेषु हि प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्ति, यथा—सिंहो माणवकः, गौर्वाहीकः।

गाङितीङादेशो गृह्यते—'इङश्च', 'गाङ् लिटि', 'विभाषा लुङ्लृङोः' इति। गाङादेशो य इङः स्थाने वक्ष्यते तस्येदं ग्रहणम्, न 'गाङ् गतौ' इत्यस्य। अथ 'गाङ् गतौ' इत्यस्य धातोर्ग्रहणं कस्मान्न भवतीत्याह—ङकारस्येत्यादि। इङादेशस्य यो ङकारस्तस्येदं प्रयोजनम्—इह सूत्रे तस्यैव ग्रहणं यथा स्यान्नान्यत् किञ्चिदात्मनेपदार्थं स्यादिति चेत्? न; आत्मनेपदस्य स्थानिवद्भावेनैव सिद्धत्वात्। तस्मादिङादेश एव गृह्यते; अन्यथा ङकारस्य वैयर्थ्यं स्यात्। ननु चोभयोरपि सामान्यग्रहणार्थो ङकारः स्यात्, तत् कुतो वैयर्थ्यम्? नैतदस्ति; यदि हि तौ समानौ स्यातां तदा स्यात् सामान्यग्रहणार्थता तस्य, न च तौ समानौ; गत्यर्थस्य गाङो ङकारस्यात्मनेपदविधौ चरितार्थत्वात्। इतरस्य तु न क्वचिच्चरितार्थता। तस्मादसमानार्थत्वादयुक्तं सामान्यग्रहणमिति गाङादेश एव गृह्यते। किमर्थं पुनरिह ङकार उच्चार्यते, न गा इत्येवोच्येत? नैवं शक्यम्; एवं हि सति निरनुबन्धकग्रहणेन सानुबन्धकस्येति 'कै गै शब्दे' इत्यस्यैव ग्रहणं स्यात्। कुटादयो हि 'कुट कौटिल्ये'

दारभ्य यावत् 'कुङ् शब्दे' इति । एभ्यो गाङ्कुटादिभ्यः परेऽञ्णितः प्रत्ययाः ङितो भवन्ति । ङिद्वद्भवन्तीत्यर्थः । गाङः—अध्यगीष्ट, अध्यगीषाताम्, अध्यगीषत । कुटादिभ्यः—कुटिता, कुटितुम्, कुटितव्यम् । उत्पुटिता, उत्पुटितुम्, उत्पुटितव्यम् ।

पदमञ्जरी

यावत् । कुङ् शब्द इति । तदनन्तरं वृत्करणाद् 'आकृतम्' इति प्रयोगदर्शनात् 'कूङ् दीर्घान्तो ङिद्वद्भवतीत्यर्थः' इत्यन्तरेणापि वतिं वत्यर्थो गम्यते, यथा–सिंहो माणवक इति । यद्ययमतिदेशः, 'असंयोगाल्लिट् किद्' इति प्रकरणेऽपि कित्कार्यातिदेशोऽङ्गीकर्त्तव्यः, ततश्च सिसृक्षतीत्यत्र सत्यपि 'हलन्ताच्च' इति सनः कित्त्वातिदेशे स्वाश्रयमकित्त्वमाश्रित्य 'सृजिदृशोः' इत्यमागमः प्राप्नोति । अतिदेशेन पराश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं निवर्त्यते । सिद्धं तु प्रसज्यप्रतिषेधात् किति न भवतीति । ततश्च स्वाश्रयस्य कार्यस्याभावादातिदेशिककित्त्वाश्रयः प्रतिषेधो भविष्यति । इह तर्हि उच्चुकुटिषति—'ङितः' इत्यात्मनेपदं प्राप्नोति ? ङितो धातोरात्मनेपदमुच्यते, इह चातिदेशेन सन एव ङित्त्वम्, न धातोः । यत्रावयवे लिङ्गमचरितार्थं तत्र समुदायस्य विशेषकं भवति; इह त्ववयव एव गुणप्रतिषेधादिकं ङित्त्वस्य प्रयोजनमस्ति । यङन्तादपि तर्हि न प्राप्नोति, तस्मान्नैवं शक्यं विज्ञातुम्—ङितो धातोरिति, ततश्चैकं सनमेव ङितमाश्रित्यात्मनेपदं प्राप्नोति ? नैष दोषः, सप्तमीसमर्थाद्वतिः—ङितीव ङिद्वत् । ननु च नात्र वतिर्निर्दिश्यते, सत्यम्; परत्र परशब्दप्रयोगात् कल्प्यमानो वतिर्व्याख्यानात् सप्तम्यन्तादाश्रीयते । एवमपि प्रतियोगिनि सप्तमी प्राप्नोति—अञ्णितीति ? एवं तर्हि 'अनुदात्तङितः' इत्यत्र 'उपदेशे' इति वर्त्तते, उपदेशे यो ङित्, तत आत्मनेपदं भवति ।

*अध्यगीषतेति* । 'विभाषा लुङ्लृङोः' इति गाङादेशः, 'आत्मनेपदेष्वनतः', घुमास्थादिसूत्रेणेत्त्वम् ।

न्यासः

इत्यत आरभ्य 'कुङ् शब्दे' इति यावदिति । तदनन्तरं वृत्करणात् ततोऽधिकानां कुटादित्वानुपपत्तेः ।

**अध्यगीष्टेति** । सिचो ङित्त्वे घुमास्थागादिसूत्रेणेत्त्वम् । अत्र हि 'दीङो युडचि क्ङिति' इत्यतः क्ङितीत्यनुवर्त्तते, 'ईद् यति' इत्यत ईदिति च । अध्यगीषतेति । आत्मनेपदेष्वनतः' इत्यदादेशः । अथ लिटि यो गाङादेशस्तस्य कस्मादुदाहरणं न प्रदर्शितम् ? एवं मन्यते—लुङ एवायम्, नासाविह लिङ्ग्रहणं प्रयोजयति; 'असंयोगाल्लिट् किन्' इति वक्ष्यमाणेनैव सिद्धत्वात् । उत्कुटितेति । 'कुट कौटिल्ये' ।

अञ्णिदिति किम् ? उत्कोटयति, उच्चुकोट, उत्कोटकः, उत्कोटो वर्तते ।

*व्यचेः कुटादित्वमनसीति वक्तव्यम्* । विचिता, विचितुम्, विचितव्यम् । अनसीति किम् ? उरुव्यचाः ।

विज इट् ॥ २ ॥

पदमञ्जरी

*व्यचेरित्यादि* । 'व्यच व्याजीकरणे' तुदादौ कुटादिभ्यः प्राक् पठ्यते । *उद्विचितेति* । ग्रहिज्यादिना सम्प्रसारणम् ।

*उरुव्यचा* इति बहुव्रीहिः । कथं विव्यचिथ ? 'अनसि' इति पर्युदासोऽयमसुन्प्रत्ययस्य कृत्वा तत्सदृशे कृति कार्यं विज्ञायते ।

कथं लिखितुम्, स्वयमेव लिखिष्यते, यावता कुटेः पूर्वं लिखिः पठ्यते ? कश्चिदाह—"कुटस्यादिः, कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्चेति बहुव्रीहितत्पुरुषयोः सहविवक्षायाम् 'स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते' इति बहुव्रीहेः शेषः । तत्र तत्पुरुषवृत्त्या संगृहीतो लिखिरपि ङित्त्वस्य निमित्तम्" इति । एवं तु लिखित्वा, लेखित्वा; लिलिखिषति, लिलेखिषति; 'शकुनिष्वालेखने' इत्यनुपपन्नं स्यात् । तस्मादिदमवश्यमुपपादनीयम्—'संज्ञापूर्वको विधिरनित्यः' इति गुणो न भविष्यति । 'धू विधूनने'; कुटादिः, तस्य 'अर्तिलूधूसूखनसहचर इत्रः' इतीत्रप्रत्यये गुणो न प्राप्नोति । नात्र गुण इष्यते, धुवित्रमित्येव भवति, कल्पसूत्रकाराणां तु प्रयोगाश्छान्दसत्वादुपपादनीयाः । अथ वा—'भञ्जभासमिदो घुरच्' 'विदिभिदिच्छिदेर्कुरच्' इति वक्तव्ये प्रत्ययान्तरकरणं ज्ञापकम्—आतिदेशिकं ङित्त्वमनित्यमिति ॥

*विज इट्* ॥ *ओविजी भयचलनयोरिति* । यस्तु 'सृजिविजि विद्धयनिट्-

न्यासः

उत्पुटितेति । 'पुट संश्लेषणे' । अथेहोच्चुकुटिषतीति सनो ङित्त्वादात्मनेपदं कस्मान्न भवति ? उपदेशाधिकारात् । तत्र हि 'उपदेशेऽजनुनासिकः' इत्यत उपदेशग्रहणमनुवर्त्तते । न चात्रौपदेशिकं ङित्त्वम् , किं तर्हि ? आतिदेशिकम् ।

व्यचेरित्यादि । 'व्यच व्याजीकरणे' इति तुदादौ कुटादिभ्यः प्राक् पठ्यते । विचितेति । ङित्त्वादिह ग्रह्यादिसूत्रेण संप्रसारणम् । उरुव्यचा इति । 'सर्वधातुभ्योऽसुन्' इत्यसुन्प्रत्ययः । 'अत्वसन्तस्य चाधातोः' इति दीर्घः ॥

विज इट् ॥ इडादिप्रत्यय इति । इट् आदिर्यस्य तृजादेः स तथोक्तः । अथोत्तमपुरुषस्यैकवचनस्येटो ग्रहणं कस्मान्न भवति, 'सार्वधातुकमपित्' इत्यनेनैव तस्य

'ओविजी भयचलनयोः', अस्मात्परः इडादिः प्रत्ययो ङिद्वद्भवति। उद्विजिता, उद्विजितुम् , उद्विजितव्यम् ।

इडिति किम् ? उद्वेजनम् , उद्वेजनीयम् ।

विभाषोर्णोः ॥ ३ ॥

'इट्' इति वर्तते। 'ऊर्णुञ् आच्छादने', अस्मात्पर इडादिः प्रत्ययो विभाषा ङिद्वद्भवति । प्रोर्णुविता, प्रोर्णविता । इडित्येव–प्रोर्णवनम् , प्रोर्णवनीयम् ।

सार्वधातुकमपित् ॥ ४ ॥

पदमञ्जरी

स्वरान्' इति विजिः, न स गृह्यते; अनिट्त्वात् । इतरस्तु ईदित्त्वसामर्थ्यात् सेट्, वृद्धसंज्ञासूत्राद् यस्यादिरिति वर्त्तते, तेनेड्विशेष्यते—यस्यादिरिडिति । तेनोत्तमैकवचनस्य ग्रहणं न भवति, न ह्यसौ कस्यचिदादिः। अत एवागममात्रस्यायं ङित्त्वविधिर्न भवति, किं तर्हि ? तदादेः प्रत्ययस्येत्याह—*इडादिः प्रत्यय इति* । *उद्विजितेति* । ङित्त्वाल्लघूपधगुणाभावः ॥

*विभाषोर्णोः* ॥ 'ऊर्णुञ् आच्छादने' ञिद्, नोपधः; 'रषाभ्याम्' इति णत्वेन पाठः। प्रोर्णुनाव—रेफावयोगेऽभ्यासात्परस्य नकारस्य श्रवणं भवति । *प्रोर्णुवितेति* । ङित्त्वपक्षे उवङ्, अन्यत्र गुणः ॥

*सार्वधातुकमपित्* ॥ अपिदिति पर्युदासश्चेत्, च्यवन्ते इत्यत्र च्यु अ अन्ते इति

न्यासः

कित्त्वस्य सिद्धत्वात् ? नैतदस्ति, यत्र हि तेन न सिद्ध्यति तत्रोत्तमपुरुषस्यैकवचनस्य ङित्वविधानार्थमिड्ग्रहणं स्यात् । क्व च तेन न सिध्यति ? आर्धधातुक आशिषि लिङि—उद्विजिषीयेत्यत्र । अतो युक्तश्चोत्तमपुरुषस्यैकवचनस्य ग्रहणम् , नागमस्य; 'अर्थवद्ग्रहणे नानर्थकस्य', 'प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्'—इति परिभाषाद्वयात् । अथापि कथञ्चिदागमस्येटो ग्रहणं स्यात् ? एवमपि तन्मात्रस्यैव ङित्त्वं लभ्यते, न तु तदादेः प्रत्ययस्य, तत्किमित्याह—इडादिप्रत्ययो ङिद् भवतीति ? एवं मन्यते—'वृद्धिर्यस्याचामादिः' इत्यत आदिग्रहणमनुवर्त्तते, तेन चेड् विशिष्यते । न चोत्तमपुरुषस्यैकवचनस्यादित्वमस्ति, किं तर्हि ? आगमस्यैव; तस्मात् स एव गृह्यते । तस्य च केवलस्यादिभूतस्य ङित्त्वे प्रयोजनं नास्तीति सामर्थ्यादिडादेः प्रत्ययस्य ङित्त्वं विज्ञायत इति । उद्विजितेति । ङित्त्वात् 'पुगन्तलघूपधस्य' इति गुणो न भवति ॥

विभाषोर्णोः ॥ प्रोर्णुवितेति । ङित्त्वाद् गुणे प्रतिषिद्धे 'अचि श्नुधातु' इत्यादिनोवङादेशः ॥

सार्वधातुकं यदपित् तन्ङिद्वद्भवति । कुरुतः, कुर्वन्ति । चिनुतः, चिन्वन्ति ।

पदमञ्जरी

स्थिते नित्यत्वादन्तरङ्गत्वाच्चैकादेशः । न च वार्णादाङ्गं बलीयः, नानाश्रयत्वात् । तत्र कृते परस्येहापित् आश्रितत्वात्तं प्रत्यादिवद्भावात् पिदपितोरेकादेशोऽपिद्ग्रहणेन गृह्यत इति शबेकादेशवतः सार्वधातुकस्य ङित्त्वाद् गुणनिषेधः प्राप्नोति । प्रसज्यप्रतिषेधे तु पित्त्वनिमित्तो निषेधः पूर्वस्य कार्यमिति पूर्वं प्रत्यन्तवद्भावाद् ङित्त्वाभावः । अस्तु तर्हि प्रसज्यप्रतिषेधः ? यद्येवम्, तुदानीत्यत्र विकरणोत्तमयोः पिदपितोरेकादेशः परस्य पितो ङित्त्वनिषेधे कर्तव्ये आदिवत्स्यात्, इत्यङितमुत्तममाश्रित्य गुणः प्राप्नोति । 'अन्तादिवच्च' इत्यत्र पूर्वपरौ समुदायावभिप्रेतौ, नाचौ । किं कारणम् ? आद्यन्तयोरवयवत्वात्, स्थानिनोरचोरेकादेशेन निर्वर्तितत्वाच्च । अतः स्थानिनावचौ पूर्वपरौ ययोः समुदाययोरन्तादी, एकादेशोऽपि तयोरेवान्तादिवद्भवतीत्ययमतिदेशार्थः । अत एव ब्रह्मबन्धूरित्यत्र एकादेशोऽपि प्रातिपदिकं प्रत्येवान्तवद्भवति, ध्रुवै तुवै इत्यत्र च उत्तमैकवचने कृत्स्नयोरेव पिदपितोरेकादेश इति अचावेव प्रत्यादिवत्त्वे स्यादेव दोषः ।

एवं तर्ह्येकादेशस्य पूर्वविधौ स्थानिवद्भावात्पक्षद्वयेऽपि यथा स्थानिकाले यथायोगं गुणस्य प्रवृत्तिनिवृत्ती भवतः, तथा कृतेऽप्येकादेशे स्थानिबुद्ध्या भविष्यतः ।

न्यासः

सार्वधातुकमपित् ॥ अपिदिति । किमयं प्रसज्यप्रतिषेधः ? उत पर्युदासः ? किञ्चात्र ? पूर्वस्मिन् पक्षे लोडुत्तमपुरुषस्यैकवचनस्य 'आडुत्तमस्य पिच्च' इत्याटि पिति कृते तुदानीत्यत्राड्विकरणाकारयोः पिदपितोरेकादेशः परं प्रति 'अन्तादिवच्च' इत्यादिवद्भावात् पिद्ग्रहणेन गृह्यते इति पित्त्वम्, पित्त्वे च सत्यपिदिति ङित्त्वप्रतिषेधः स्यात्, ततश्च धातोर्गुणः प्रसज्येत । इतरत्र तु पक्षे च्यवन्ते, प्लवन्ते इत्यत्र शबन्तादेशाकारयोः पिदपितोर्य एकादेशस्तस्य पितोऽन्यत्वात् ङित्त्वमापद्येत, ततश्च धातोर्गुणो न प्राप्नोति । पितोऽन्यत्वं त्वेकादेशस्य सर्वं प्रत्यादिवत्त्वात् परग्रहणेन ग्रहणाद्, उच्यते; यथेच्छसि तथैवास्तु, उभयथाप्यदोषः । पूर्वत्र तावददोषः, यस्मादपितोरेव तुदानीत्यत्रैकादेशः, न पिदपितोः । तथा हि—'आडुत्तमस्य पिच्च' इति लोडुत्तमपुरुषस्यैव पित्त्वं विधीयते, न त्वाटः । इतरत्राप्यदोषः, यस्मादपिदित्यनेन सार्वधातुकं विशिष्यते—पितोऽन्यत् सार्वधातुकमपिदिति । न चान्तशब्दाकारः सार्वधातुकम्, किं तर्हि ? तदेकदेशः । यच्चात्र सार्वधातुकं न च तेन सहैकादेशः, येन सहैकादेशो न त्र तत्सार्वधातुकम्; तेन यद्यप्ययमेकादेशः पितोऽन्यः; तथापि सार्वधातुकं न भवतीति

सार्वधातुकमिति किम्? कर्ता, कर्तुम्, कर्तव्यम्। अपिदिति किम्? करोति, करोषि, करोमि।

## असंयोगाल्लिट् कित् ॥ ५ ॥

### पदमञ्जरी

एवमुभयोर्निर्दोषत्वेऽपि प्रसज्यप्रतिषेध एवाश्रयणीयः। तत्र हि—तदाश्रयणसामर्थ्याद्यच्च यावच्च पितो ङित्त्वं प्राप्तं तस्य सर्वस्य निषेधादिदमपि सिद्धं भवति–अचिनोद्, अचिनवमिति। अत्र हि ङितो लङ आदेशस्य स्थानिवद्भावेन प्राप्तस्य निषेधो भवति। पर्युदासे त्वतिदेशेनैकवाक्यत्वात् तस्यैव पर्युदासात् स्थानिवद्भावकृतं ङित्त्वं स्यादेवेति यासुटो ङिद्वचनं ज्ञापकमाश्रयणीयं स्यात्। किं च 'ङिच्च पिन्न भवति' इत्ययमप्यत्रार्थं इष्यते। अतो न ब्रूताद्भवानित्यत्र तातङः स्थानिवद्भावात्प्राप्तस्य पित्त्वस्य निषेधात् पिदाश्रयो ब्रुव इण् न भवति, तृण्ढाद्भवान्—तृणह इण् न भवतीत्येषा दिक्। अत एतदर्थमपि प्रसज्यप्रतिषेध आश्रयणीयः। तत्र हि पृथक्कृतस्य नञो यथेष्टमभिसम्बन्धो भवति—पिद् ङिन्न भवति, ङिच्च पिन्न भवति। तत्र यस्यौपदेशिकं पित्त्वं तस्यातिदेशप्राप्तं स्थानिवद्भावप्राप्तं च ङित्त्वं निषिध्यते; यस्य पुनरौपदेशिकं ङित्त्वं तस्य स्थानिवद्भावप्राप्तं पित्त्वं निषिध्यत इति विवेक्तव्यम्।

*कुरुत इति*। ङित्त्वाद्विकरणस्य गुणाभावः, 'अत उत्सार्वधातुके' इत्युत्वं च भवति। अत्र च तृतीयासमर्थाद्वतिराश्रयणीयः, न पूर्ववत्सप्तमीसमर्थात्। तेन पचेते इत्यत्र 'आतो ङितः' इति ङितो यत्कार्यं तदपि भवति। यद्येवम्, चिनुत इति 'तास्यनुदात्तेत्' इति लसार्वधातुकानुदात्तत्वं प्राप्नोति? नैष दोषः; उपदेशग्रहणमुभाभ्यामपि सम्बध्यते–ङिदुपदेशाद्, अदुपदेशादिति। 'अह्न्विङोः' इति वा पर्युदासात् तत्सदृशस्योपदेशङकारवतो ग्रहणमिति सर्वमनवद्यम्॥

*असंयोगाल्लिट् कित्*॥ लिटाऽऽक्षिप्तो धातुरसंयोगग्रहणेन विशेष्यत इत्याह—

### न्यासः

तत्कुतो ङित्त्वस्य प्रसङ्गः? अथ वा भवतु ङित्त्वम्, सत्यपि तस्य ङित्त्वे तस्मिन् नास्ति गुणाभावप्रसङ्गः? यस्माद् 'वार्णादाङ्गं बलीयः' इति वचनादेकादेशाद्धि प्रागेव च्यवन्ते, प्लवन्ते इत्यत्र गुणेन भवितव्यम्।

कुरुत इति। तसो ङित्त्वे सति विकरणस्य गुणो न भवति। करोतेरस्य 'अत उत् सार्वधातुके' इत्युत्त्वं भवति। तत्र हि 'गमहन' इत्यादिसूत्रात् क्ङितीत्यनुवर्त्तते॥

असंयोगाल्लिट् कित्॥ धातोरेव लिड् विधीयते, नान्यस्मादिति लिटा सामर्थ्या-

'अपित्' इति वर्तते । असंयोगान्ताद्धातोः परो लिट् प्रत्ययोऽपित्

पदमञ्जरी

*असंयोगान्ताद्धातोरिति*। ननु चात्र पर्युदासत्वमुक्तं प्रतीयते, ततश्च संयोगान्तसदृशाद् हलन्तादेव स्याद्–बिभिदतुः, बिभिदुरित्यादौ; निन्यतुरित्यादौ तु न स्यात् ? ज्ञापकात् सिद्धम्, यदयम् 'ऋतश्च संयोगादेर्गुणः' इति सस्मरतुरित्यादौ गुणं विधत्ते, तज्ज्ञापयति—नात्र नञिवयुक्तन्यायो धातुमात्रस्यैव ग्रहणमिति। ङित्त्वे प्रकृते कित्त्वातिदेशस्य प्रयोजनम्—ईजनम्, ईजतुः, ईजुः, यजादीनां कितीति सम्प्रसारणं यथा स्यात्; जजागरतुः, जजागरुः—'जाग्रोविचिण्णल्ङित्सु' इति गुणो यथा स्यात् । यदि पुनर्गाङ्कुटादिभ्योऽपि कित्त्वमेवातिदिश्येत ? नैवं शक्यम्; इह हि दोषः स्याद्—'णु स्तुतौ' 'धू विधूनने' तृच्, नुविदा धुविदा—'श्र्युकः किति' इतीट्प्रतिषेधः प्राप्नोति, यथा—लूत्वा, लूनः ? नैष दोषः; पूर्वस्य कार्यातिदेशोऽयमित्युक्तम् । इह तर्हि कुटित्वा, पुटित्वा—'न क्त्वा सेट्' इत्यातिदेशिकस्यापि कित्त्वस्य प्रतिषेधः स्यात् ? ननु च सनि झल्ग्रहणं ज्ञापकं वक्ष्यते—'न क्त्वा सेट्'-इति निषेधो नातिदेशिकस्य भवतीति, सत्यम्; असति क्त्वाग्रहणे, सति तु तस्मिन् सनः 'न क्त्वा सेट्' इति निषेधो न लभ्यते इत्यज्ञापकं तत्र झल्ग्रहणम् । तथा 'सार्वधातुकमपिद्' इति कित्त्वातिदेशे जागृतः, जाग्रतीति गुणः स्याद्, ङित्त्वातिदेशे त्वविचिण्णल्ङित्स्विति पर्युदासो भवति । 'ऋदुपधेभ्यो लिटः कित्त्वं गुणात् पूर्वविप्रतिषेधेन' । कित्त्वस्यावकाशः—ऋजतुः, ऋजुः, न ह्यत्र विध्यन्तरस्य कस्यचित्प्रसङ्गः; गुणस्यावकाशः—वर्त्तित्वा,

न्यासः

धातुः सन्निधापितः; स चासंयोगग्रहणेन विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—असंयोगान्ताद्धातोरिति । यदि तर्ह्यसंयोगान्ताद्धातोः परस्य लिटः कित्त्वं विधीयते; तदा ववृते, ववृधे न इति सिध्यति, परत्वाद् गुणेन भवितव्यम् । कित्त्वस्यावकाशः—ईजतुरीजुरिति, गुणस्यावकाशः—वर्त्तित्वा, वर्धित्वेति; ववृते, ववृध इत्यादावुभयप्राप्तौ परत्वाद् गुण एव स्यात् , नैतदस्ति; इष्टवाचित्वात्परशब्दस्य, कित्त्वमेवेष्टम्, कित्वमेव परम्, अतस्तदेव भविष्यतीत्यदोषः ।

अत्र च यदि 'असंयोगात्' इति पर्युदास आश्रीयते, तदा संयोगादन्यस्मिन् गृह्यमाणे नञिवयुक्तन्यायेन सदृशस्यैव ग्रहणं स्यात् —संयोगस्य सदृशो योऽन्योऽसहायो हल् इति हलन्तादेव कित्त्वं भविष्यति, नाजन्तात्, ततश्चक्रतुश्चक्रुरिति न सिध्यति। तस्मात् प्रसज्यप्रतिषेधोऽयम् , न पर्युदासः –न चेत् संयोगात् परो लिड् भवतीति । ङित्त्वे प्रकृते किद्वचनं वच्यादीनां संप्रसारणं यथा स्यादित्येवमर्थम् । तद्धि 'वचिस्वपियजादीनां किति' इति किति विधीयते, न ङिति ।

किद्भवति । बिभिदतुः, बिभिदुः । चिच्छिदतुः, चिच्छिदुः । ईजतुः, ईजुः ।

असंयोगादिति किम् ? सस्रंसे, दध्वंसे । अपिदित्येव---बिभेदिथ ।

**इन्धिभवतिभ्यां च ॥ ६ ॥**

'इन्धि-भवति' इत्येताभ्यां परो लिट्प्रत्ययः किद्भवति । समीधे

**पदमञ्जरी**

वर्धित्वा; ववृते, ववृधुरित्यत्रोभयप्रसङ्गे कित्त्वं भवति पूर्वविप्रतिषेधेन । इह तु बिभिदतुः बिभिदुः, नित्यत्वादेव कित्त्वं सिद्धम्; तद्धि कृतेऽपि गुणे प्राप्नोत्यकृतेऽपि, गुणस्तु कित्त्वे सति न प्राप्नोति । ववृते इत्यत्र तु गुणे कृते संयोगान्तत्वात् कित्त्वं न प्राप्नोतीत्युभयमनित्यमिति पूर्वविप्रतिषेध उच्यते । स चायं कार्यातिदेशपक्षे स्फुटमेव वक्तव्यः । तथा हि—अनेनैव कित्कार्यातिदेश ईजतुरित्यादौ यत्र विध्यन्तरस्याप्रसङ्गस्तत्र सम्प्रसारणमतिदिश्य चरितार्थमतिदेशं परत्वाद् गुणो बाधेत । शास्त्रातिदेशे वा 'क्ङिति च' इत्येतच्छास्त्रमतिदिश्यते, तच्च यद्यपि गुणस्यापवादभूतम्, तथाप्यन्यत्र चरितार्थत्वाद् दुर्बलेनातिदेशेनातिदिष्टः 'क्ङिति च' इति प्रतिषेधो दुर्बल इति तं बाधित्वा गुणः स्यादेव ॥

*इन्धिभवतिभ्यां* च ॥ इन्धेरागन्तुक इकारो न तु 'इक्श्तिपौ धातुनिर्देशे' इतीक् प्रत्ययः, तेन 'अनिदिताम्' इति नलोपो न भवति । *समीध इति* । 'ञिइन्धी

**न्यासः**

बिभिदतुः, बिभिदुरिति । कित्त्वात् 'पुगन्तलघूपधस्य' इति गुणाभावः । सस्रंसे, दध्वंसे इति । कित्त्वाभावाद् 'अनिदिताम्' इत्यनुनासिकलोपो न भवति । 'स्रन्सु ध्वन्सु अधःपतने', अनुदात्तेत्त्वादात्मनेपदम्, 'लिटस्तझयोरेशिरेच्' इत्येशादेशः । बिभेदिथेति । सिप्, थल्, क्रादिनियमादिट् ॥

**इन्धिभवतिभ्याञ्च** ॥ समीध इति । 'ञिइन्धी दीप्तौ', पूर्ववदात्मनेपदम्, एशादेशः, कित्वाद् 'अनिदिताम्' इत्यादिनानुनासिकलोपः, द्विर्वचनम्, अकः सवर्णे दीर्घत्वञ्च । अथ 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् कस्मान्न भवति ? मन्त्रविषयत्वादस्य; तत्र च 'अमन्त्रे' इत्यधिकारात् । एवं तर्हि मन्त्रश्छन्द एवेति 'छन्दस्युभयथा' इति सार्वधातुकत्वम्, ततश्च 'सार्वधातुकमपित्' इति ङित्त्वम्, अत एव ङित्त्वादनुनासिकलोपो भविष्यतीति तत् किमर्थमिन्धेः परस्य लिटः कित्त्वं विधीयते ? ज्ञापनार्थम् । एतदनेन ज्ञाप्यते—अनित्योऽयमामिति । नित्ये ह्यामि तेन व्यवधानादेवेन्धेः परो लिण् न सम्भवतीति कित्त्वविधानं नोपपद्यते; तस्मादनित्योऽयमामिति । तेन भाषायामपि समीध इति प्रयोग उपपन्नो भवति ।

दस्युहन्तमम्, पुत्र ईधे अथर्वणः। भवतेः खल्वपि—बभूव। बभूविथ।

पदमञ्जरी

दीप्तौ' अनुदात्तेत्, एशः कित्त्वाद् 'अनिदिताम्' इत्युपधालोपद्विर्वचने सवर्णदीर्घत्वम्। *बभूविव, बभूविथेति*। कित्त्वाद्यथाक्रमं वृद्धिगुणौ न भवतः। *इन्धेः संयोगार्थमित्यादिना* पूर्वेणासिद्धिं दर्शयन् सूत्रारम्भं समर्थयते।

अयं योगः शक्योऽवक्तुम्, कथम्? इन्धेरनन्तरश्छन्दस्येव लिड् भवति, भाषायां त्विजादेश्चेत्यामा भवितव्यम्, छन्दसि च 'छन्दस्युभयथा' इति लिटः सार्वधातुकसंज्ञा, 'सार्वधातुकमपित्' इति ङित्त्वादुपधालोपः। श्नमि तु कर्तव्य आर्धधातुकसंज्ञा, छान्दसत्वाद्वा श्नमभावः। भवतेरपि 'भुवो वुग्लुङ्लिटोः' इति वुग्विधीयते, तत्र भूअ, भूइथ इति स्थिते वुक् प्राप्नोति, वृद्धिगुणौ च; कृताकृतप्रसङ्गित्वेन नित्यो वुक्, न च शब्दान्तरप्राप्तिः, एकदेशविकृतस्यानन्यत्वाद्; वुकि च कृतेऽनजन्तत्वादलघूपधत्वाच्च वृद्धिगुणौ न भविष्यतः। अवश्यं चैतदेवं विज्ञेयम्—'वुका वृद्धिगुणौ बाध्येते' इति। यो हि मन्यते—'कित्त्वादिमे गुणवृद्धी न भविष्यतः' इति, तस्य णलि वृद्धिः स्यादेव। न हि 'अचो ञ्णिति' इति वृद्धेः क्ङिति नेति प्रतिषेधः, अनिग्लक्षणत्वात्। एवं तर्हि ज्ञापकार्थमिन्धिग्रहणम्, एतज् ज्ञापयति—'इन्धेर्भाषायामप्यनित्य आम्' इति, समीधे समीधाञ्चक्र इति भाषायामपि भवति। भवतेरपि वुगनित्यः, किं कारणम्? उरिति वर्तते, न च गुणवृद्ध्योः कृतयोरुवर्णान्तो भवतिर्भवति; उरिति निवर्तिष्यते? यदि निवर्तते; बोभाव, अहं किल बोभव—यङ्लुक्यपि नित्यत्वाद् वुक् प्राप्नोति। अनुवर्तमाने पुनरुरित्यस्मिन् उभयोरनित्ययोः परत्वाद् गुणवृद्ध्योः कृतयोरनुवर्णा-

न्यासः

बभूव, बभूविथेति। कित्त्वाद् यथाक्रमं वृद्धिगुणौ न भवतः। 'भुवो वुग् लुङ्लिटो' इति वुक्'। 'भवतेरः' इत्यभ्यासस्यात्वम्। ननु च कृतयोरपि गुणवृद्ध्योर्वुका भवितव्यम्, अकृतयोरपीति नित्यो वुक्; कृताकृतप्रसङ्गित्वात्, तत्र नित्यत्वाद् वुकि कृते गुणवृद्ध्योः प्राप्तिरेव नास्ति, भवतेरलघूपधत्वात्, अनजन्तत्वाच्चेति भवतिग्रहणमनर्थकम्? नैतदस्ति; 'शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति' इति वुगप्यनित्यः। ततश्च परत्वात् गुणवृद्ध्योः कृतयोर्वुङ् न स्यात्। तस्माद् भवतिग्रहणं कर्त्तव्यम्। अथ कृतयोरपि गुणवृद्ध्योरेकदेशविकृतमनन्यवद्भवतीति नास्ति शब्दान्तरत्वम्? एवं सति शक्यं भवतिग्रहणमकर्तुम्। तत् क्रियते विस्पष्टार्थम्।

अथ बभूवेत्यत्र 'अचो ञ्णिति' इति वृद्धेः कथं प्रतिषेधः, यावतेक इत्यनुवर्त्तते? 'क्ङिति च' इत्यनेनेग्लक्षणा वृद्धिः प्रतिषिध्यते, न चेयमिग्लक्षणा वृद्धिः, निर्दिष्टस्थानिकत्वात्। अत्र कित्त्वविधानसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्भविष्यति प्रतिषेधः;

इन्धेः संयोगार्थं ग्रहणम्। भवतेः पिदर्थम्। अत्रेष्टिः—* श्रन्थि-

पदमञ्जरी

न्तत्वाद् वुङ्न भवति। अथेदानीं यङ्लुक्यप्यनेनैव लिटः कित्त्वं कस्मान्न भवति ? श्तिपा निर्देशात्। यदि पुनर्वुग्विधावेव श्तिपा निर्देशः क्रियते ? नेवं शक्यम्; इह हि दोषः स्याद्—बोभूवतुः, बोभूवुः। यदा पुनः कित्त्वविधौ श्तिपा निर्देशः क्रियते, न वुग्विधौ; तदा यङ्लुकि पित्सु वचनेषु लिटः कित्त्वाभावाद् गुणवृद्धयोः कृतयोरुरित्यधिकाराद् वुङ्न भवति। अपित्सु वचनेषु 'असंयोगाल्लिट् कित्' इति कित्त्वे सति गुणाभावादुवर्णान्तत्वाद्वुग् भवति। ननु चोक्तम्—'आरभ्यमाणेऽपि कित्त्वे वृद्धेः प्रतिषेधो न सिद्ध्यति, अग्निलक्षणत्वाद्' इति, नेष दोषः; ङिद्ग्रहणमप्यनुवर्तते, तत्सामर्थ्यादनग्लिक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति, सत्यम्; अस्त्ययं शुष्कस्तर्कः। वार्त्तिककारस्तु न क्षमते, यदाह—'इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम्' इति।

*श्रन्थिग्रन्थीत्यादि*। 'श्रन्थ ग्रन्थ संदर्भे', 'दम्भु दम्भे' 'ष्वञ्ज परिष्वङ्गे'। *श्रेथतुः, श्रेथुरिति* कित्त्वादुपधालोपः, एत्वाभ्यासलोपावप्यत्र वक्तव्यौ। *देभतुरिति*। नलोपे कृते 'अत एकहल्मध्येऽनादेशादेः' इत्येत्वाभ्यासलोपौ। न च लोपस्यासिद्धत्वम्, आभाच्छास्त्रीयस्यासिद्धत्वस्यानित्यत्वात्। *परिषस्वज इति*। 'ष्वञ्ज परिष्वङ्गे', अनुदात्तेत्, 'उपसर्गात्सुनोति' इति षत्वम् 'सदिस्वञ्ज्योः परस्य लिटि' इति परस्य प्रतिषेधः। अत्र केचिद्वेति पठन्ति, शश्रन्थतुरित्याद्यपि भवति। अथ पित्सु वचनेषु कथम् ? यदि संयोगार्थमेव वचनम्, पित्सु

न्यासः

अन्यथा कित्त्वविधानमनर्थकं स्यादिति चेत्, न; तस्य थल्युत्तमणं लि च गुणप्रतिषेधार्थत्वात्। एवं तर्हि ङिद्ग्रहणमप्यनुवर्त्तते, तदनुवर्त्तमाने न विद्यमानमन्यत् प्रयोजनम्, तेनानिग्लक्षणाया अपि वृद्धेः प्रतिषेधो भविष्यति। इन्धेः संयोगार्थं वचनमिति। तस्य संयोगान्तत्वात् पूर्वेणासिद्धेः।

**भवतेः पिदर्थमिति**। नापिदर्थम्; तस्यासंयोगान्तत्वादपिदिति पूर्वेण सिद्धेः। भवतेरिह श्तिपा निर्देशो यङ्लुगनिवृत्त्यर्थः—यङ्लुगन्ताल्लिटः कित्त्वं मा भूदिति। बोभावेति। तथा चोक्तम्—

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।
यत्रैकाज्ग्रहणं किञ्चित् पञ्चैतानि न यङ्लुकि॥ इति।

**श्रन्थिग्रन्थीत्यादि**। 'श्रन्थ ग्रन्थ सन्दर्भे', 'दम्भ दम्भे', 'ष्वन्ज परिष्वङ्गे'—एषामपि श्रन्थिग्रन्थिप्रभृतीनां लिटः कित्त्वं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽनुक्तसमुच्चायार्थः क्रियते, तेन श्रन्थिप्रभृतीनामपि संयोगा-

ग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम् * ॥ श्रेथतुः, श्रेथुः । ग्रेथतुः, ग्रेथुः । देभतुः, देभुः । परिषस्वजे, परिषस्वजाते ॥

## मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ ७ ॥

मृड, मृद, गुध, कुष, क्लिश, वद, वस्—इत्येतेभ्यः परः क्त्वाप्रत्ययः किद्भवति। 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधं वक्ष्यति, तस्यायं पुरस्तादपकर्षः । गुध-कुष-क्लिशीनां तु 'रलो व्युपधाद्' इति विकल्पे

### पदमञ्जरी

न भाव्यम् । अथ संयोगान्तार्थं पिदर्थं च ? पित्स्वपि भाव्यम् । किं पुनरत्रार्थतत्त्वं देवो ज्ञातुमर्हति ॥

*मृडमृदगुधकुषक्लिशवदवसः क्त्वा* ॥ 'क्लिश हिंसायाम्', अनुदात्तेद्, दिवादिरकर्मकः; 'क्लिशू विबाधने' क्र्यादिः सकर्मकः, परस्मैपदी–द्वयोरपि ग्रहणम् । किमर्थं पुनरिदम्, तावता किदेव हि क्त्वा ? तत्राह—*न क्त्वा सेडित्यादि* । अपकर्षः = अपवादः । नन्विदमेव नियमार्थं भविष्यति—'मृडादिभ्य एव क्त्वा किद्भवति नान्येभ्यः' इति नार्थः 'न क्त्वा सेट्' इत्यनेन; कथं लूत्वा पूत्वा—तुल्यजातीयस्य सेटो नियमः ? ननु 'क्लिशः क्त्वानिष्ठयोः' इति विकल्पेनेड्विधानादनिट् क्त्वा सम्भवति ? एवं तर्हि मृडमृदवदवसां कित्त्वविधानं नियमार्थम्, इतरेषां तु 'रलो व्युपधात्' इति विकल्पबाधेन विधिसम्भवान्नियमो न भविष्यति । एवमपि विपरीतोऽपि नियमः स्याद्—मृडादिभ्यः क्त्वैव किदिति । *उदित्वा, उषित्वेति* । यजादित्वात्सम्प्रसारणम् 'शासिवसिघसीनां च' इति षत्वम्, 'वसतिक्षुधोरिट्' ॥

### न्यासः

न्तानां लिटः कित्त्वं भविष्यतीति । श्रेथतुरित्यादि । कित्त्वाद् 'अनिदिताम्' इत्यनुनासिकलोपः । 'तृफलभजत्रपश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वादनेकहल्मध्यस्थस्याप्येत्वाभ्यासलोपौ । परिषस्वजे इति । अनुदात्तेत्त्वादात्मनेपदम् । पूर्वस्य सकारस्य 'स्थादिष्वभ्यासेन चाभ्यासस्य' इति वर्त्तमाने, 'उपसर्गात् सुनोति' इत्यादिना षत्वम् । परस्य तु सकारस्य सदिस्वञ्जयोः परस्य लिटि' इति षत्वप्रतिषेधः ॥

मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ 'मृड सुखने', 'मृद क्षोदे', 'गुध रोषे' 'कुष निष्कर्षे', 'क्लिशू विबाधने', 'वद व्यक्तायां वाचि', 'वस निवासे' । 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधं वक्ष्यतीति । नन्वेतदेव नियमार्थं भविष्यतीति—मृडादिभ्य एव सेट् क्त्वा किद् भवति, नान्येभ्य इति, ततश्च सिद्धं देवित्वा, सेवित्वेत्यादि, तत् किमर्थं 'न क्त्वा सेट्' इति प्रतिषेधं वक्ष्यति ? विस्पष्टार्थम्; अन्यथा हि केचिद्विपरीतनियमं सम्भावयेयुः—मृडादिभ्यः क्त्वाप्रत्यय एव किद् भवति, नान्य इति । पुरस्ता-

प्राप्ते नित्यार्थं वचनम्। मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा॥

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च॥ ८॥

रुद, विद, मुष, ग्रहि, स्वपि, प्रच्छ—इत्येतेभ्यः संश्च क्त्वा च कितौ भवतः। रुद-विद-मुषीणां 'रलो व्युपधाद्' इति विकल्पे प्राप्ते नित्यार्थं ग्रहणम्। ग्रहेर्विध्यर्थमेव। स्वपिप्रच्छ्योः सन्नर्थं ग्रहणम्। किदेव हि क्त्वा। रुदित्वा, रुरुदिषति। विदित्वा, विविदिषति। मुषित्वा, मुमुषिषति। गृहीत्वा, जिघृक्षति। सुप्त्वा, सुषुप्सति। पृष्ट्वा, पिपृच्छिषति। ग्रहादीनां कित्त्वात्संप्रसारणं भवति। 'किरश्च पञ्चभ्यः' इति प्रच्छेरिडागमः।

इको झल्॥ ९॥

पदमञ्जरी

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च॥ *सन्नर्थमिति*। तत्र चरितार्थत्वादनिटः क्त्वः कित्त्वविधानं नियमार्थं न भवति॥

इको झल्॥ सनाक्षिप्तस्य धातोरिका विशेषणात्तदन्तविधिर्भवतीत्याह—

न्यासः

दपकर्ष इत्यादि। अपकर्ष इत्यपवाद इत्यर्थः। क्लिशित्वेति। 'क्लिशः क्त्वानिष्ठयोः' इतीट्। उदित्वेति, उषित्वेति। वच्यादिसूत्रेण संप्रसारणम्। वसतेः 'शासिवसिघसीनाञ्च' इति षत्वम्, 'वसतिक्षुधोः' इतीट्।

रुदविदमुषग्रहिस्वपिप्रच्छः संश्च॥ 'रुदिर् अश्रुविमोचने', 'विद ज्ञाने', 'मुष स्तेये', 'ग्रह उपादाने', 'ञिष्वप् शये', 'प्रच्छ ज्ञीप्सायाम्'। ग्रहेर्विध्यर्थमेवेति। 'क्त्वा सेट्' इति प्रतिषिद्धस्य कित्त्वस्य पुनर्विधिर्यथा स्यात्। स्वपिप्रच्छ्योरित्यादि। सन्नर्थमिति। अथ क्त्वार्थं वचनं कस्मान्न भवतीत्याह—किदेव हि क्त्वेति। स्वपिप्रच्छ्योर्हि 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधात् क्त्वा सेड् न भवतीत्यतः 'न क्त्वा सेट्' इति निषेधो न प्रवर्त्तते। तेन किदेव हि क्त्वेति। रुदित्वेति। 'समानकर्तृकयोः पूर्वकाले' इति क्त्वा। गृहीत्वेति। 'ग्रहोऽलिटि दीर्घः', ग्रह्यादिसूत्रेण संप्रसारणम्। जिघृक्षतीति। 'हो ढः' इति ढत्वम्, 'षढोः कः सि' इति कत्वम्, 'एकाचो बशो भष्' इत्यादिना गकारस्य घकारः, 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधः। सुषुप्सतीति। वच्यादिसूत्रेण संप्रसारणम्। पिपृच्छिषतीति। अत्रापि ग्रह्यादिसूत्रेण संप्रसारणम्, 'छे च' इति तुक्, 'स्तोः श्चुना श्चुः' इति श्चुत्वम्॥

'सन्' इत्यनुवर्तते । 'क्त्वा' इति निवृत्तम् । इगन्ताद्धातोः परो झलादिः सन् किद्भवति । चिचीषति । तुष्टूषति । चिकीर्षति ।

पदमञ्जरी

*इगन्ताद्धातोरिति* । 'इक् स्मरणे' इत्यस्य तु धातोर्ग्रहणं न भवति, न ह्यतः परो झलादिसन् सम्भवति, कथम् ? 'इणो गा लुङि' 'णौ गमिरबोधने' 'सनि च' 'इण्वदिक इति वक्तव्यम्' 'गमेरिट् परस्मैपदेषु'—अधिजिगमिषति । ननु च भावकर्मणोरात्मनेपदे 'अनुदात्तोपदेश' इत्यनुनासिकलोपार्थमेतत्स्यात्, तत्र तु रूपे विप्रतिपत्तिः, गमेरिङादेशस्य ग्रहणमिति वचनात् 'अज्झनगमां सनि' इति दीर्घो न भवति—अधिजिगंस्यत इति केचित् ।

अन्ये त्वाहुः—"'अज्झनगमाम्' इत्यत्राज्ग्रहणं न कर्त्तव्यम्, कथम् ? 'सनि दीर्घः' इत्येको योगः, अचश्च, एवं 'सिद्धेऽज्ग्रहणं प्रवृत्तिभेदेन गमेरपि विशेषणार्थम्—अजादेशस्य गमेरिति; तेनास्यापि दीर्घेण भाव्यम्, अजादेशत्वाद्—अधिजिगांस्यत इति रूपमिति । तदेवं धातोरपि ग्रहणं युक्तमेव । एवं तर्हि झला साहचर्याद् गर्गादिषु जिगीषुशब्दस्य पाठाच्च प्रत्याहारस्य ग्रहणमुत्तरसूत्रे च इक्समीपाद्धलः पर इत्यनुपपन्नं धातुग्रहणे । *झलादिरिति* । कथं पुनस्सत्सप्तमीनिर्देशे तदादिविधिः शक्यो विज्ञातुम् ? झल्मात्रस्य सनोऽसम्भवात् । ननु च

न्यासः

इको झल् ॥ क्त्वेति निवृत्तमिति । झलादेः क्त्वाप्रत्ययस्यौपदेशिकं कित्त्वमस्त्येवेति तदनुवृत्तेरपार्थकत्वात् । सन्ग्रहणन्तु प्रथमान्तमिहानुवर्त्तते, तस्य झलित्यनेन सामानाधिकरण्यमुपपन्नम् । अतः सामर्थ्यात् तदादिविधिर्विज्ञायत इत्यत आह—झलादिः सन् किद् भवतीति ।

अथ तदन्तविधिः कस्मान्न भवति—झलन्तः सन्निति ? एवं मन्यते—वृद्धसंज्ञासूत्रादिहादिग्रहणमनुवर्तते, तेन झल् विशिष्यते; तस्मात् तदादिविधिरेव विज्ञायते, न तदन्तविधिरिति । यदि पुनस्तदन्तविधिः स्यात् तदा किं स्यात् ? यत्रातो लोपे कृते झलन्तत्वं सनस्तत्रैव स्यात्—चिकीर्षितेत्यादौ; चिकीर्षतीत्यादौ तु न स्यात्, अदन्तत्वात् । अदन्तत्वन्तु सञ्शबकारयोर्द्वयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् ।

अथेक इति 'इक् स्मरणे' इत्यस्य धातोर्ग्रहणं कस्मान्न भवति ? झलिति प्रत्याहारसाहचर्यात् प्रत्याहारस्यैव युक्तत्वात्; किञ्च—गर्गादिषु जिगीषुशब्दपाठाच्च । धातुग्रहणे हि सति जयतेः परस्य सनः कित्त्वं न स्यात्, तथा च जिगीषुशब्दो न सिद्ध्येत् । किञ्च—धातुग्रहणे हि सतीको धातोः समीपगतो हल् न सम्भवतीति 'हलन्ताच्च' इत्येतदप्यघटमानं स्यात् । तस्मात् प्रत्याहारस्यैव ग्रहणं न्याय्यम्, न धातोः । चिचीषतीति । 'अज्झनगमां सनि' इति दीर्घः । 'एकाचः' इत्यादिना पूर्वोक्ते-

इक इति किम् ? पिपासति। तिष्ठासति। झलिति किम् ? शिशयिषते।

किमर्थमिदमुच्यते ? गुणो मा भूदिति। 'अज्झनगमां सनि' इति दीर्घत्वं गुणस्य बाधकं भविष्यति ? यथैव तर्हि दीर्घत्वं गुणं बाधते

पदमञ्जरी

चिकीर्षितेत्यादवतो लोपे सति सम्भवति, अपूर्वविधित्वाच्च न लोपस्य स्थानिवत्त्वम्; एवं तर्हि वृद्धसंज्ञासूत्राद्यस्यादिरिति वर्त्तते सन् किङ्भवति, कीदृशः ? यस्य झलादिरिति। एतेन तदन्तविधिरपि निरस्तो वेदितव्यः। *चिचीषतीति*। 'एकाचः' इतीट्प्रतिषेधः। *तुष्टूषतीति*। 'शर्पूर्वाः खयः'। *शिशयिषत इति*। 'पूर्ववत्सनः'।

*किमर्थमिति*। योगविभागविषयः प्रश्नः। सूत्रं तूत्तरार्थं कर्त्तव्यम्। *दीर्घत्वं गुणस्य बाधकं भविष्यतीति*। ननु 'कुङ् शब्दे' कुटादिः, चुकूषत इत्यस्ति दीर्घस्यावकाशः ? दीर्घान्तोऽयमित्यवोचाम। इह तर्हि 'गु पुरीषोत्सर्गे' 'ध्रु गतिस्थैर्ययोः' कुटादी, जुगूषति, दुध्रूषति। एवमपि प्रत्याहारग्रहणमनर्थकम् 'उतो दीर्घः' इति वक्तव्यम् ? अस्ति प्रत्याहारग्रहणे प्रयोजनम्, किम् ? प्रतिभेदेन गमिमपि विशेषयिष्यामीति। यद्येतावत्प्रयोजनं स्यात् 'उतो दीर्घः' इत्युक्त्वा इङ्हन्योरिति वक्तव्यम्—येषां गमेरिङादेशस्य ग्रहणमिति पक्षः। येषामनिङादेशस्यापि ग्रहणं तेषामिहन्योरिति वक्तव्यम्, हना साहचर्यादिरिति धातुर्गृह्यते, नेकारः, तस्मादज्ग्रहणसामर्थ्याद्दीर्घत्वं गुणस्य बाधकं भविष्यतीति सुष्ठूक्तम्। यथैव तर्हि झलादौ गुणो बाध्यते, एवमिङादावपि बाध्येत—जिजविषयति, नात्र दीर्घः प्रवर्त्तते, किं कारणम् ? झलिति वर्त्तते, 'अनुनासिकस्य क्विझलोः' इति। *यथैव तर्हीत्यादि*। असति हि कित्त्वे नाप्राप्ते विध्यन्तरे आरभ्यमाणं दीर्घत्वं यथा गुणं बाधते एवं णिलोपमपि बाधेत। ननु यत्र नाप्राप्ते तस्य बाधकः, क्व च नाप्राप्ते ? दीर्घ आरभ्यते, गुणे णिलोपे तु ज्ञीप्सतीत्यत्र प्राप्ते, चिचीषतीत्यत्राप्राप्ते पाक्षिक एष

न्यासः

नेट्प्रतिषेधः। उत्तरत्रापि यत्रेटः श्रवणं नास्ति, तत्राप्यनेनैव प्रतिषेधो वेदितव्यः। यत्र नु विशेषोऽस्ति, तत्रासौ वक्तव्य एव। तुष्टूषतीति। 'शर्पूर्वाः खयः' इति खयः शेषः। शिशयिषते इति। 'पूर्ववत् सनः' इत्यात्मनेपदम्। एवमुत्तरत्रापीच्छासन्नन्तादात्मनेपदमनेनैव बोद्धव्यम्।

किमर्थं पुनरित्यादि। अत्र वक्ष्यमाणोऽभिप्रायः। गुणो मा भूदिति। यदर्थमिदमुच्यते तदाह। येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह—अज्झनगमां सनीत्यादि।

तथा णिलोपमपि बाधेत। तस्माद्दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते। चिचीषतीत्यादिषु सावकाशं दीर्घत्वं परत्वाद् णिलोपेन बाध्यते—ज्ञीप्सति॥

पदमञ्जरी

परिहारः। यत्र बाध्यं भेदेनापेक्ष्यते—'इदमस्मिन्विषये प्राप्तमिदमस्मिन्विषये' इति, तत्रैकबाधेनोपपत्तौ सत्यामनेकबाधो न न्याय्य इति किमेकं बाध्यतामित्यपेक्षायाम् 'येन नाप्राप्ते स बाधनीयः' इत्युच्यते, एवं ह्यपेक्षितविधिर्भवति। यदि तु 'नाप्राप्ते विध्यन्तरे इदमारभ्यते' इति कार्यसामान्यमपेक्ष्यते, तदा सर्वमेव बाधनीयम्। एतेन पुरस्तादपवादन्यायेन णिलोपमेव दीर्घत्वं बाधेत, न गुणमित्यपि चोद्यं निरस्तम्; यस्मादयमपि न्यायः कार्यसमान्यचिन्तायां नास्त्येव। अतः सुष्ठूक्तम्—*णिलोपमपि बाधेतेति*। *दीर्घत्वस्यावकाशदानायेति*। एतदेव स्फुटयति-*चिचीषतीत्यादिष्विति*। सति हि कित्त्वे चिचीषतीत्यादौ क्त्वेनैव गुणो बाध्यते, न दीर्घेणेत्यबाधित्वैव विध्यन्तरं सावकाशो दीर्घः परत्वाण्णिलोपेन बाध्यत इत्यर्थः। *ज्ञीप्सतीति*। 'मारणतोषणनिशामनेषु ज्ञा', 'ज्ञप मिच्च' इति चुरादिषु पाठाद् णिचि पुकि 'मितां ह्रस्वः', सन्, 'सनीवन्तर्द्ध' इतीडभावपक्षे 'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, 'अत्र लोपोऽभ्यासस्य'।

न्यासः

यदि दीर्घत्वे कृतेऽपि गुणः स्यात् तदा दीर्घत्वस्य वैयर्थ्यं स्यात्। तस्मान् मा भूत्तस्य वैयर्थ्यमिति दीर्घत्वं तद्गुणस्य बाधकं भविष्यतीति। अत्र दोषमापादयितुमाह—*यथैव तर्हीत्यादि*। असति कित्त्वेऽनवकाशं दीर्घत्वं यथा गुणस्य बाधकं भवति, तथा णिलोपस्यापि बाधकं स्यात्। ततश्च णिलोपं बाधित्वा दीर्घत्वे सति ज्ञीप्सतीति न सिद्ध्येदित्यभिप्रायेणाह—*तस्मादित्यादि*। यत एवमनारभ्यमाण एतस्मिन्नेष दोषोऽनुपज्येत, तस्माद् दीर्घत्वस्यावकाशदानाय कित्त्वमिदमारभ्यते। अथारभ्यमाणेऽप्येतस्मिन् कस्मादेष दोषो न भवतीत्यत आह—*चिचीषतीत्यादि*। कित्त्वे सति तेनैव गुणस्य बाधितत्वात्। चिचीषति, तुष्टूषतीत्यादिषु सावकाशं दीर्घत्वं भवति; तेन च परत्वाण्णिलोपो न बाध्यते। न हि कित्त्वे सति शक्यमेवं वक्तुम्—यथा दीर्घत्वं गुणं बाधते, तथा णिलोपमपीति; यस्मान्न गुणो दीर्घत्वेन बाध्यते, किं तर्हि ? कित्त्वेन। अत्र दीर्घत्वस्यावकाशो दर्शितः; णिलोपस्य त्वेषोऽवकाशः—पाचयतेः पाक्तिः, याजयतेर्याष्टिरित्यादि; ज्ञीप्सतीत्यत्रोभयप्राप्तौ दीर्घत्वं बाधित्वा परत्वात् णिलोप एव भवति। 'ज्ञा अवबोधने', 'मारणतोषणनिशामनेषु ज्ञा', 'मिच्च' इति चुरादिपाठाण्णिच्। 'अर्त्तिह्री' इत्यादिना पुक्। 'मितां ह्रस्वः' इति ह्रस्वत्वम्। अन्ये तु—'ज्ञप मारणतोषणनिशामनेषु' इति पठन्ति, ततो णिच्, तत इच्छासन्,

इकः कित्वं गुणो मा भूद्दीर्घारम्भात्कृते भवेत् ।
अनर्थकं तु ह्रस्वार्थं दीर्घाणां तु प्रसज्यते ॥

पदमञ्जरी

किमर्थो योगविभाग इत्याशङ्क्य प्रयोजनमाह—*इकः कित्त्वमित्यादि* । गुणो मा भूदित्येवमर्थमिक उत्तरस्य सनः कित्त्वं विधीयतइत्यर्थः । दूषयति—*दीर्घारम्भादिति* । गुणो न भविष्यतीति शेषः । *कृते भवेदिति* । शास्त्रमावर्तमानं जपादिवद्धर्मे साधनमिति भावः । *अनर्थकं त्विति* । शास्त्रपूर्वकात्प्रयोगाद्धर्मो न तु प्रवृत्तिमात्रादिति भावः । ननु च 'सनि मीमाघु' इत्यत्र मिनोतेरपि मीग्रहणेन ग्रहणार्थं दीर्घविधिः स्याद्, मा भून्मीग्रहणेन ग्रहणम्, 'मीनातिर्मिनोतिदीङां ल्यपि च' इत्यात्वे कृते 'गामादाग्रहणेष्वविशेषः' इति माग्रहणेन ग्रहणं भविष्यति; तत्रायमप्यर्थो मीग्रहणमपि न कर्त्तव्यं भवति । *ह्रस्वार्थमिति* । ह्रस्वानामेव दीर्घविधान-

न्यासः

'सनीवन्तर्ध' इत्यादिना पक्षे इडभावः, आप्ज्ञपृधामीत्' इतीत्त्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः । 'णेरनिटि' इति णिलोपः ।

**इकः कित्त्वमित्यादि** । अथ किमर्थमिक उत्तरस्य सनः कित्त्वं विधीयते, किमर्थमिको झलिति योगविभागः क्रियते, नन्वेकमेवेदं सूत्रं पठितव्यम् 'इको झल् हलन्ताच्च' इति ? प्रयोजनमाह–गुणो मा भूदिति । चिचीषतीत्यादौ 'सार्वधातुकार्धधातुकयोः' इति गुणः प्राप्नोति, स मा भूदित्येवमर्थं कित्त्वं विधीयते । नैतदस्ति प्रयाजनम्; यस्माद् 'अज्झनगमां सनि' इति नाप्राप्ते गुणे दीर्घत्वमारभ्यते, अतो दीर्घारम्भाद् गुणो न भविष्यतीति; अन्यथा हि दीर्घग्रहणमनर्थकं स्यात् । ननु च चुकूषते इत्यत्र दीर्घवचनस्य सार्थकत्वम्, अत्र हि गाङ्कुटादिसूत्रेण ङित्त्वे सति गुणो न प्रवर्तते, नैतदस्ति; न ह्येकमुदाहरणं प्रति योगारम्भं प्रयोजयति । यदि ह्येतत् प्रयोजनमभिमतं स्यादुकारमेव गृह्णीयात् ।

**कृते भवेदिति** । यदि कित्त्वं नोच्येत, कृते दीर्घत्वे गुणः स्यात् । **अनर्थकन्त्विति** । तुशब्दोऽवधारणे । यदि दीर्घत्वे कृते गुणः स्यात्, ननु च शास्त्रमावर्त्यमानमभ्युदयाय भवति, यथा मन्त्रजपादयः, तत् कुतस्तस्यानर्थक्यम् ? नैतदस्ति; शास्त्रप्रवृत्तिपूर्वकाद्धि प्रयोगादभ्युदयो भवति । यदि शास्त्रप्रवृत्तौ किञ्चित् प्रयोजनं सम्पद्यते, ततः शास्त्रं प्रवर्तते । ततः शास्त्रसंस्कृतप्रयोगाद्धर्मो भवति, न तु शास्त्रप्रवृत्तिमात्रात् । गुणे च कृते दीर्घस्य प्रयोगो नास्तीति दीर्घशास्त्रमनर्थकमापद्यते । तदनर्थकं मा भूदिति गुणो न भविष्यतीति ।

**ह्रस्वार्थमिति** । चिचीषतीत्यादौ ह्रस्वानां दीर्घत्वे कृते दीर्घत्वस्य श्रवणं यथा स्यादित्येवमर्थं दीर्घत्वम्: ततो न तस्यानर्थक्यम् । दीर्घाणान्तु प्रसज्यत इति ।

सामर्थ्याद्धि पुनर्भाव्यमृदित्वं दीर्घसंश्रयम् ।
दीर्घाणां नाकृते दीर्घे णिलोपस्तु प्रयोजनम् ॥

पदमञ्जरी

सामर्थ्याद् गुणो न स्याद्, दीर्घाणां तु पुनः प्राप्नोति—लुलूषति; न हि दीर्घान्तेषु दीर्घशास्त्रं प्रवर्त्तते, पूर्वमेव तद्रूपसद्भावादिति भावः । *सामार्थ्याद्धि पुनर्भाव्यमिति*। सामर्थ्यम् = प्रयोजनसद्भावः, यथा 'मो राजि समः क्वौ' इति मकारस्यैव मकारो विधीयते, विकारान्तरं मा भूदिति । तथा दीर्घस्यापि गुणो मा भूदिति पुनर्दीर्घो भविष्यति । यदि तर्हि प्राप्नुवन्विधिः दीर्घेण बाध्यते, ऋदित्वमपि न प्राप्नोति—चिकीर्षति, तत्राह—*ऋदित्त्वं दीर्घसंश्रयमिति* । दीर्घः संश्रयो निमित्तं यस्य तत्तथोक्तम् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । न चात्राकृते दीर्घे ऋदित्वं प्राप्नोति । इह तर्हि—तितीर्षति, अकृतेऽपि दीर्घत्वे ऋदित्वं प्राप्नोतीति ? ऋदित्वनिवृत्त्यर्थमेव दीर्घत्वं स्याद्, अत आह—*दीर्घाणां नाकृते दीर्घ इति* । दीर्घाणामप्यकृते दीर्घत्वे ऋदित्वं न प्राप्नोति, किं कारणम् ? इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन, अतो यावद्दीर्घेण गुणो न बाधितः, तावदित्त्वं न प्राप्नोति; तस्मान्नार्थ एतेनेति स्थिते प्रयोजनमाह—*णिलोपस्त्विति* ॥

न्यासः

ह्रस्वानां दीर्घवचनसामर्थ्यान्न गुणो भविष्यति । दीर्घाणान्तु स्यादेव, न हि तेषां दीर्घत्वमुच्यते; यतो दीर्घवचनसामर्थ्याद् गुणो न प्रवर्तते । ततश्च निनीषतीत्यादिर्न सिद्ध्येत् , नैतदस्ति; सामर्थ्याद्धि पुनर्भाव्यमिति । यथैव हि भुक्तवद्भिरपि पुरुषैः सामर्थ्याद् भोजनविशेषात् पुनर्भोजनक्रिया भाव्यते, तथा दीर्घाणामपि सामर्थ्यात् पुनर्दीर्घत्वेन भाव्यम् । सामर्थ्यन्तु प्रयोजनम्, तत् पुनर्गुणप्रतिषेधः । तस्माद् दीर्घाणामपि गुणो मा भूदित्येवमर्थं दीर्घत्वं वक्तव्यम् ; ततश्च तेषामपि दीर्घवचनसामर्थ्याद् गुणो न भविष्यतीति ।

यथैव हि गुणो न भवत्येवं चिकीर्षतीत्यादौ 'ऋत इद्धातोः' इतीत्त्वमपि न स्यादित्यत आह—ऋदित्त्वं दीर्घसंश्रयमिति । दीर्घः संश्रयो निमित्तं यस्य तत् तथोक्तम् । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेस्तदेव निमित्तं नासौ विधिर्बाध्यते । गुणं प्रति दीर्घत्वस्योपदेशोऽनर्थकः । ऋदित्त्वन्तु तन्निमित्तमेव, न हि करोतेर्विना दीर्घत्वेनेत्त्वस्य प्राप्तिरस्ति । तस्माद् दीर्घत्वेन तेन गुण एव बाध्यते, न ऋदित्त्वम् ।

स्यादेतत्—ह्रस्वानां नाकृते दीर्घत्व ऋदित्त्वं प्राप्नोत्यतस्तेषां मा भूद् दीर्घत्वमृदित्त्वस्य बाधकम्, दीर्घाणान्तु तरतिप्रभृतीनां तितीर्षतीत्यादौ बाधकमेव स्यात् ;

## हलन्ताच्च ॥ १० ॥

'इकः सन् झल्कित्' इति वर्तते । समीपवचनोऽन्तशब्दः । हल्

### पदमञ्जरी

*हलन्ताच्च ॥ समीपवचनोऽन्तशब्द इति ।* अवयववचनस्तु न भवति, धाता-वन्यपदार्थे 'येन विधिस्तदन्तस्य' इत्येव तदन्तविधेः सिद्धत्वात् । इकस्त्वन्य-पदार्थत्वं नैव सम्भवति, न हि वर्णो वर्णान्तरस्यावयव उपपद्यते । *हल् चासा-वन्तश्चेति ।* कर्मधारयं दर्शयति । निपातनाद्विशेषणस्य परनिपातः । तत्र च

### न्यासः

न हि तेषामृदित्त्वं दीर्घविधिमपेक्षत इत्यत आह—दीर्घाणां नाकृते दीर्घ इति । दीर्घाणामपि नाकृते दीर्घ ऋदित्त्वं प्राप्नोति; यस्मादित्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेनेति वचनात् परत्वाद् दीर्घाणामपि गुणः प्राप्नोति । तद् बाधनार्थं तेषामपि दीर्घत्वं वक्तव्यमेव । तदेवं सर्वत्र ऋदित्त्वं दीर्घसंश्रयमिति कुतस्तद्दीर्घत्वेन न बाध्यते ! तस्मात् सर्वत्र दीर्घेषु ह्रस्वेषु च दीर्घवचनसामर्थ्याद् गुणो न भविष्यतीति नार्थ इको झलिति सनः कित्त्वेन ।

णिलोपस्तु प्रयोजनमिति । इदं तर्हि प्रयोजनम्—ज्ञीप्सतीत्यत्र परत्वाद् णिलोपो यथा स्यात् । असति हि कित्त्वेऽनवकाशत्वाद्दीर्घत्वेन यथा गुणो बाध्यते, तथा णिलोपोऽपि बाध्येत । ततश्च ज्ञीप्सतीति न सिध्येत् । सति तु कित्त्वे, चिचीषती-त्यादिषु यत्र कित्त्वेन गुणो बाध्यते तत्र दीर्घत्वं सावकाशं भवति । तेन तत् सावकाशं दीर्घत्वं बाधित्वा ज्ञीप्सतीत्यत्र परत्वाण्णिलोप एव प्रवर्तते । ननु चासत्यपि कित्त्वे येननाप्राप्तिन्यायेन गुण एव दीर्घत्वेन बाधितः स्यान्न णिलोपः, नैतदस्ति; यस्माद् दर्शनान्तर इयं परिभाषा यत्र कार्यविशेषचिन्ता तत्र प्रवर्तते, यदा तु कार्यसामान्य-चिन्ता तदा कार्यमात्रेण सकलो विषयो व्याप्त इति सर्वत्र दीर्घत्वं बाधकं स्यात् । नन्वेवमप्यारभ्यमाणे कित्त्वे 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति णिलोपमेव दीर्घत्वं बाधेत, न गुणम्; गुणस्तु स्यादेवेति दोषायैवेदं कित्त्वम् ? एतदपि नास्ति; न ह्येकमुदाहरणं प्रति योगारम्भं प्रयोजयति । यदि ह्येतावत् प्रयो-जनमभिमतं स्यात्, णिग्रहणमेव कुर्यात् । समुदायमात्रापेक्षया वा 'पुरस्तादपवादाः' इत्यादिका परिभाषा नास्त्येवेति ॥

हलन्ताच्च ॥ इक इत्यनुवर्त्तते । अत्र यदि चान्तशब्दोऽवयववाची स्यादिको हला सह सम्बन्धो न स्यात्, न हीको हलवयवः सम्भवति । यो हि येनारभ्यते, अपृथग्-देशभूतः स तस्यावयवो भवति; यथा—पटस्य तन्तव इति । न च हले-गारभ्यते, तस्मान्नायमन्तशब्दोऽवयववाची; अपि तु समीपवचनो युक्त इति मत्वाह—समीपवचनोऽयमन्तशब्द इति । ननु च धातुरत्र सामर्थ्यादाक्षिप्तः, अतस्तदपेक्षया

चासावन्तश्च हलन्तः। इगन्तादिक्समीपाद्धलः परः सन् झलादिः किद्भवति । बिभित्सति । बुभुत्सते । इक इत्येव--यियक्षते । झलित्येव--विवर्त्तिषते ।

### पदमञ्जरी

कस्यान्तो हलित्यपेक्षायामिक इति पञ्चम्यन्तं सन्निहितं षष्ठ्यन्तं विपरिणम्यत इत्याह—*इगन्तादिति* । इकमपेक्षमाणस्याप्यन्तशब्दस्य नित्यसापेक्षत्वात् सूत्रे कर्मधारयः, बहुव्रीहौ तु धातोरन्यपदार्थत्वं नैव सम्भवति, अन्तशब्दो हि नियत-देशमेव समीपमाचष्टे परं नाम, न समीपमात्रम् । न च धातोः परसमीपा-वस्थिते हलि ततः परः सन्सम्भवति; इकि त्वन्यपदार्थे—यस्येकः परसमीपे हल् न तस्यानन्तरः सन् सम्भवतीत्येकेन हला व्यवधाने विज्ञायेतेति धिप्सतीत्यत्र न स्याद् । हलिति जातिग्रहणात् सिद्धावपि प्रतिपत्तिगौरवप्रसङ्गः। ननु च मा भूदन्त-ग्रहणम्, 'हलः' इत्येवास्तु, इका हल्विशेष्यते, तेन च धातुः—इकः परो यो हल् तदन्ताद्धातोरिति । न चेवमत्र शङ्कनीयम्--"असत्यन्तग्रहणे इग्वतो हलन्तादिति विज्ञायेत, ततश्च यजेः सन् 'सन्यतः' यियक्षते इत्यत्रापि कित्त्वे सति संप्रसारणं प्राप्नोति" इति; न हीक्छब्दस्य मुख्येऽर्थे सम्भवति तद्वति वृत्तिर्युक्ता, किं च 'इग्वतः' इत्यस्य व्यावर्त्यमपि न सम्भवति। यायज्यतेः सनि यायजिषत इत्यत्र सन्न झलादिः । तस्मादन्तग्रहणं चिन्त्यप्रयोजनम् ।

### न्यासः

हलोऽवयवत्वं भविष्यति, नैतदस्ति; एवं तर्ह्यन्तशब्दोऽतिरिच्येत, 'येन विधिस्तदन्तस्य' इत्यनेनैव तदन्तविधेर्लब्धत्वात् । हल् चासावन्तश्चेति विग्रहविशेषेण कर्मधारयत्वं दर्शयति । कस्य पुनरसावन्तः ? प्रकृतस्येकः । यद्येवम्, सापेक्षमसमर्थं भवतीतीकम-पेक्षमाणस्यान्तशब्दस्य समासो नोपपद्यते, नैष दोषः; अन्तशब्दो ह्यत्र प्रधानः। भवति च प्रधानस्य सापेक्षस्यापि समास इति द्वितीयेऽध्याये ज्ञापयिष्यति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्र सामान्याप्रयोगग्रहणेन ।

इगन्तादिति । षष्ठीसमासोऽयम् । ननु चेक इति पञ्चम्यन्तं प्रकृतम्, तत् कथं षष्ठीसमासः ? नैष दोषः; यद्यपि पञ्चम्यन्तं प्रकृतम्, तथापीह समीपसमीपिसम्बन्धे सति विभक्तिविपरिणामेन षष्ठ्यन्ततामनुभवति—इकः समीपगतादिति । इकः समीपवर्त्तिन इति । बुभुत्सत इति । 'बुध अवगमने', 'एकाचो बशो भष्' इत्यादिना भष्भावः। एवमुत्तरत्रापि यत्र भष्भावस्तत्रानेनैव बोद्धव्यः। 'खरि च' इति चर्त्वम्=धकारस्य तकारः । यियक्षत इति । यजेर्व्रश्चादिना षत्वम्, षकारस्य 'षढोः कः सि' इति कत्वम् । कित्त्वाभावाद् 'वचिस्वपि' इत्यादिना संप्रसारणं न भवति ।

दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात्सिद्धम्। धिप्सति। धीप्सति॥

पदमञ्जरी

इह धीप्सतीति य इक्समीपे हल् नकारो न ततः परः सन्, यतश्च परः सन् भकारात् न स इक्समीप इति कित्त्वं न स्यादित्यत आह – *दम्भेरिति*। दम्भेरपि परस्य सनः कित्त्वं सिद्धम्, कुतः ? हल्ग्रहणस्य जातिवाचकत्वात्। 'तत्प्रयोजकः' इतिवत्समासः। जातिवाची हल्शब्दः, एकैव च जातिर्नकारभकारयोः। व्यक्तिद्वारेव च जातेरिक्समीपत्वं तदपेक्षयात्र सनः परत्वम्। भकारव्यक्ति-रिक्समीपे वर्तत इति जातिरपि वर्तते, भकारव्यक्तेः परः सन्निति जातेरपि परः। विपर्ययस्तु सन्नपि शास्त्रेणानाश्रितत्वादकिञ्चित्करः। नकारव्यक्ति-रिक्समीपे न वर्तत इति जातिरपि न वर्तते। नकारव्यक्तेः परः सन्न भवतीति जातेरपि परो न भवतीति। *धीप्सतीति*। 'दम्भ इच्च' कित्त्वादुपधालोपः, 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावः, द्विर्वचनम्, 'अत्र लोपोऽ-भ्यासस्य'॥

न्यासः

यदि समीपवचनोऽयमन्तशब्दस्तदा दम्भेः परस्य सनः कित्त्वं न सिध्यति। तथा हि—तस्य य इकः समीपगतो हल् न तस्मात् परः सन्, यस्मात् परः सन् नासाविकः समीपगत इत्यत आह—दम्भेरित्यादि। हलित्यनेन हल्जातिरुच्यते, न तु व्यक्तिः। तेन यदा 'ता एव व्यक्तयस्त्यक्तभेदा जातिः' इति दर्शनम्, तदा तासां व्यक्तीनां हल्त्वेनाश्रितानां नास्ति व्यवधानम्। अतो यैव हल्जातिरिकः समीपवर्तिनी तत एव परः सन्निति दम्भेर्विहितस्य सनः कित्त्वं सिद्धमेव। यदाप्य-र्थान्तरभूता जातिर्व्यक्तिषु प्रत्येकं परिसमाप्ता निरवयवैका, तदापि नास्ति व्यवधानम्; यस्माद्व्यक्तिर्व्यक्त्यन्तरस्य व्यवधायिका भवति, न तु जातेः; तस्या अशरीरिणी-त्वात्। तस्मादिहापि दर्शने यैव हल्जातिरिकः समीपगता तत एव परः सन्निति दम्भेः परस्य सनः कित्त्वं भवति। तस्यास्तु व्यक्तिव्यतिरिक्ताया जातेर्यदिकमपेक्ष्य समीपवर्तिनीत्वम्, यच्च तज्जातिमपेक्षमाणस्य सनः परत्वम्—तदुभयं व्यक्तिद्वारकं वेदितव्यम्। तत्र नकारव्यक्तिरिकः समीपगतेति तदाधारा हल्जातिरपीकः समीप-गतेति भकारस्य व्यक्तेः परः सन्निति तदाधारभूताया जातेरपि परः सन्, न तु जाते-र्व्यक्तिनिरपेक्षं समीपवर्त्तिनीत्वं सम्भवति। नापि जात्यपेक्षं सनः परत्वम्; जातेर-शरीरिणीत्वात्। यदि तर्हि व्यक्तिद्वारकमेतदुभयम् ? एवं तर्हि विपर्ययोऽपि व्यक्तिद्वारकः स्यात्। भकारव्यक्तिरिकः समीपगता न भवतीति जातिरपि न स्यात्, नकारव्यक्तेः परः सन् न भवतीति जातेरपि न स्यात्, ततश्च हल्ग्रहणस्य सत्यपि जातिवाचकत्वे दम्भेः परस्य सनः कित्त्वं न सिध्यत्येव ? नैतदस्ति; यद्यपि जाते-र्व्यक्तिद्वारकमिकः समीपवर्त्तिनीत्वं तद्विपर्ययश्च, सनोऽपि यद्यपि व्यक्तिद्वारकं

## लिङ्सिचावात्मनेपदेषु ॥ ११ ॥

'हलन्तादिको झल्कित्' इति वर्तते। 'सन्' इति निवृत्तम्। इगन्तादिक्समीपाद्धलः परौ झलादी लिङ्सिचौ आत्मनेपदेषु परतः कितौ

पदमञ्जरी

*लिङ्सिचावात्मनेपदेषु ॥ आत्मनेपदेषु परत इति।* एतत्सिच एव विशेषणम्,

न्यासः

जात्यपेक्षं परत्वं तद्विपर्ययश्च; तथापि यदत्र हल्त्वसामान्यस्येकः समीपगतत्वं यदपेक्षञ्च सनः परत्वं तदाश्रयं कित्त्वं भविष्यतीति विपर्ययस्तु विद्यमानोऽपि नापेक्ष्यत एव, लक्ष्यानुरोधात्।

ननु च हल्त्वं नाम जातिर्नास्त्येव, तथा हि—हलिति संज्ञाशब्दः सङ्केतवशादेव प्रवर्तते डित्थादिशब्दवत्। न हि यथा गवादिषु गोत्वादिकं नाम सामान्यमभिन्नमस्ति, तथा हकारादिषु वर्णेषु हल्त्वं नाम सामान्यमभिन्नमस्तीति शक्यमभ्युपगन्तुम्; तन्निबन्धनस्याभावात्। ततश्चायुक्तमुक्तम्—दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमिति, नैतदस्ति; जातिपदार्थवादिनां मते येऽपि तावदेकवस्त्वभिधायिनः संज्ञाशब्दा देवदत्तादयस्तदर्थानामप्यवस्थाभेदे परिकल्पितनानात्वेन जातिरभ्युपगम्यते, किं पुनर्हलित्येवमादीनामनेकवर्णविषयाणां संज्ञाशब्दानाम्! अन्यथा ह्यतिव्यापिनी शब्दार्थस्य व्यवस्था स्यात्। इदञ्च तावद् भवान् प्रष्टव्यः—गवादिषु जातेरस्तित्वस्य किं निबन्धनं येनासौ तत्राभ्युपगम्यत इति? भिन्नेष्वभिन्नाभिधानप्रत्ययाविति चेद्, एतावितरत्रापि समानौ। यथैव हि गवादिषु भिन्नेष्वपि प्राक् सङ्केतादुत्तरकालमनुयायिनौ तौ भवतः, तथा हकारादिष्वपि। प्राक् सङ्केताद् यथा तेषु तौ न भवतस्तथा गवादिष्वपि। तस्माद् यौ भिन्नेष्वभिन्नाभिधानप्रत्ययौ जातिसद्भावसम्प्रत्ययहेतुभूतौ हल्ष्वपि स्त इति तत्रापि हल्त्वं नाम जातिरभ्युपेया, न तु गवादिष्वेव गोत्वादिकमस्तीत्येकान्त एव।

धिप्सति, धीप्सतीति। 'सनीवन्तर्ध' इत्यादिना यत्र पक्ष इण् नास्ति तत्रेदमुदाहरणम्। 'दम्भ इच्च' इतीत्त्वम्, ईत्त्वञ्च, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। 'खरि च' इति चर्त्वम्=भकारस्य पकारः। कित्त्वे सति 'अनिदिताम्' इति नलोपः। दकारस्य भष्भावेन धकारः॥

लिङ्सिचावात्मनेपदेषु ॥ लिङ्सिचावात्मनेपदषु परत इति। कथं पुनर्लिङात्मनेपदेषु परतो भवति, यावता सिच एवात्मनेपदेषु परत्वं सम्भवति, न लिङः? एवं मन्यते—लिङेकदेशेऽत्र सीयुटि लिङ्शब्दो वर्तते, यथा—'न धातुलोप आर्धधातुके' इत्यत्र धात्वेकदेशे धातुशब्दो वर्तते। तस्मात् सीयुट एवानेन प्रकारेण कित्त्वं विधीयते। अथ वा—यथा हल्ङ्याब्भ्योदिसूत्रे ययोरेव दीर्घत्वं सम्भवति

भवतः । भित्सीष्ट, भुत्सीष्ट । सिचि खल्वपि—अभित्त, अबुद्ध । इक इत्येव—यक्षीष्ट, अयष्ट । संप्रसारणं हि स्यात् ।

आत्मनेपदेष्विति किम् ? अस्राक्षीत् , अद्राक्षीत् । 'सृजिदृशोर्झल्यमकिति' इत्यमागमो न स्यात् । हलन्तादित्येव—चेषीष्ट, अचेष्ट । गुणो न स्यात् । झलित्येव—वर्तिषीष्ट, अवर्त्तिष्ट । गुणो न स्यात् ।

लिङ्सिचाविति किम् ? द्वेष्टा, द्वेक्ष्यति ॥

उश्च ॥ १२ ॥

**पदमञ्जरी**

न लिङ्परस्मैपदस्य; झल्ग्रहणानुवृत्त्यैव व्यावर्तितत्वात् । *भित्सीष्टेति* । भिदिः स्वरितेत्, 'लिङः सीयुट्', 'सुट् तिथोः' । *भुत्सीष्टेति* । बुधिरनुदात्तेत्, पूर्ववद् भष् । *अबुद्धेति* । च्लेः सिच्', 'झलो झलि', 'झषस्तथोर्धोऽधः', 'झलां जश् झशि' इति धकारस्य दकारः । *यक्षीष्टेति* । स्वरितेत्त्वादात्मनेपदम् , व्रश्चादिषत्वम्, 'षढोः कः सि' ।

*अद्राक्षीदिति* । अमागमे यणि च कृते 'वदव्रज' इत्यकारस्य वृद्धिः ॥

उश्च ॥ लिङ्सिज्भ्यामाक्षिप्तस्य धातोरुरित्यनेन तदन्तविधिरित्याह—

**न्यासः**

तयोरेव ङ्यापो दीर्घादित्येतद् विशेषणम्, तथेहापि यस्मादात्मनेपदं परं सम्भवति सिचः, तस्यैवैतद् विशेषणम् । आत्मनेपदग्रहणं भवति परस्मैपदव्यवच्छेदार्थम् ।

भित्सीष्टेति । 'आशिषि लिङ्लोटौ' इति लिङ्, स्वरितेत्त्वादात्मनेपदम् । एवमुत्तरत्रापि स्वरितञितः कर्तर्यात्मनेपदमनेनैव वेदितव्यम् । 'सुट् तिथोः' इति सुट् । कर्तरि श्नम् , 'लिङः सलोपोऽनन्त्यस्य' इति च न भवति; 'लिङाशिषि' इत्यार्द्धधातुकत्वात्, तयोश्च सार्वधातुके विधानात् । भुत्सीष्टेति । बुधेः 'अनुदात्तङितः' इत्यात्मनेपदं वेदितव्यम् । उत्तरत्राप्यनुदात्तङिद्भ्यः कर्तर्यात्मनेपदमनेनैव वेदितव्यम् । अभित्तेति । 'झलो झलि' इति सिचो लोपः । अबुद्धेति । 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, झलां जश् झशि' इति पूर्वधकारस्य दकारः । यक्षीष्टेति । स्वरितेत्त्वादात्मनेपदम् । पूर्ववत् षत्वं कत्वञ्च । संप्रसारणं हि स्यादिति । वच्यादिसूत्रेण ।

अद्राक्षीदिति । 'अस्तिसिचोऽपृक्ते' इतीट्, 'वदव्रजहलन्तस्याचः' इति वृद्धिः । पूर्ववत् षत्वकत्वे ॥

उश्च ॥ लिङ्सिचाविहानुवर्तमानौ धातुं सन्निधापयतः, तत एव तयोर्विधानात् ।

[1]ऋवर्णान्ताद्धातोः परो लिङ्सिचावात्मनेपदेषु झलादी कितौ भवतः। कृषीष्ट। हृषीष्ट। सिचः खल्वपि—अकृत। अहृत। झलित्येव—वरिषीष्ट। अवरिष्ट। 'वृतो वा'। अवरीष्ट॥

## वा गमः॥ १३॥

'लिङ्सिचावात्मनेपदेषु' इति वर्तते। गमेर्धातोः परौ लिङ्सिचौ आत्मनेपदेषु झलादी वा कितौ भवतः। संगंसीष्ट, संगसीष्ट। सिचः खल्वपि—समगत, समगंस्त। कित्त्वपक्षे अनुनासिकलोपो भवति 'अनुदात्तोपदेशवनतितनोत्यादीनाम्' इति॥

### पदमञ्जरी

*ऋवर्णान्तादिति*। 'ऋ गतौ' इत्यस्य तु ग्रहणं न भवति; 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्यङो विधानेन सिचोऽसम्भवात्। नन्वङ्विधौ कर्तरीत्यनुवृत्तेः कर्मणि सिजपि सम्भवति, एवं तर्हि शैलीयमाचार्यस्य यत्रास्य धातोर्ग्रहणमिच्छति तत्र श्तिपा निर्देशं करोति—'अर्त्तिपिपर्त्त्योश्च', 'सर्तिशास्त्यर्तिभ्यश्च', 'गुणोर्तिसंयोगाद्योः' इति, नैतदस्ति; 'स्मिपूङ्रञ्ज्वशां सनि' 'ऋच्छत्यृताम्' इति स्वरूपेणापि ग्रहणं दृष्टम्। एवं तर्हि व्याप्तिन्यायाद्वर्णग्रहणम्। *अकृतेति*। 'ह्रस्वादङ्गात्' इति सिचो लोपः। *अवरिष्टेति*। 'लिङ्सिचोरात्मनेपदेषु' इतीट्। 'वा गमः'। *संगंसीष्टेति*। 'समो गम्यृच्छि' इत्यात्मनेपदम्॥

### न्यासः

स च ऋकारेण विशिष्यते। 'येन विधिस्तदन्तस्य' इति ऋकारेण तदन्तविधिर्विज्ञायत इत्याह—ऋकारान्ताद्धातोरित्यादि।

अथ 'ऋ गतौ' इत्यस्य धातोर्ग्रहणं कस्मान्न भवति? शैलीहेयमाचार्यस्य यत्र यस्य धातोर्ग्रहणमिच्छति तत्र तस्य श्तिपा निर्देशं करोति, यथा—'अर्तिपिपर्त्त्योश्च', 'सर्तिशास्त्यर्तिभ्यश्च' इति, न चेह श्तिपा निर्देशः कृतः; तस्माद्वर्णस्यैवेदं ग्रहणम्, न धातोः। अकृतेति। 'ह्रस्वादङ्गात्' इति सिचो लोपः। वरिषीष्टेति। वृङो वृञो वैकस्य रूपम्। 'लिङ्सिचोरात्मनेपदेषु' इतीट्॥

वा गमः॥ संगसीष्टेति। 'समो गम्यृच्छि' इत्यादिनात्मनेपदम्। समगतेति। 'ह्रस्वादङ्गात्' इति सिचो लोपः॥

---

१. 'ऋकारान्तात्' इति न्याससम्मतः पाठः।

## हनः सिच् ॥ १४ ॥

हन्तेर्धातोः परः सिच् किद्भवति । आहत । आहसाताम् । आहसत । सिचः कित्त्वादनुनासिकलोपः ।

सिज्ग्रहणं लिङ्निवृत्त्यर्थम् , उत्तरत्रानुवृत्तिर्मा भूत् ।

आत्मनेपदग्रहणमुत्तरार्थमनुवर्तते । इह तु परस्मैपदे हन्तेर्वधभावस्य नित्यत्वात्कित्त्वस्य प्रयोजनं नास्ति ॥

**पदमञ्जरी**

*हनः सिच्* ॥ सौत्रत्वान्निर्देशस्याल्लोपो न कृतः । *आहसतेति* । 'आङो यमहन' इत्यात्मनेपदम्, 'आत्मनेपदेष्वनतः' इत्यदादेशः । *सिज्ग्रहणं लिङ्निवृत्त्यर्थमिति* । प्रकृतं सिज्ग्रहणं लिङ्संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः ।

ननु च 'हनो वध लिङि' इति लिङि वधादेशो नित्यः, घानिषीष्टेति चिण्वदिटि वधादेशाभावेऽप्यझलादित्वादप्रसङ्गस्तत् किं लिङ्निवृत्त्येत्यत्राह—*उत्तरत्रेति* । उत्तरार्थमवश्यं सिज्ग्रहणं कर्त्तव्यम्, तदिहैव क्रियते, न्यायानुसरणे प्रतिपत्तिगौरवं मा भूदित्येवमर्थमित्यर्थः ।

*आत्मनेपदग्रहणमित्यादि* । यमः परस्मैपदेषु 'यमरमनमाताम्' इति सगिटौ भवत इति झलादिः सिज्न भवति । उपयमने तु नित्यमात्मनेपदम्, स्थाघ्वोः

**न्यासः**

हनः सिच् ॥ आहतेति । 'आङो यमहनः' इत्यात्मनेपदम् । पूर्ववत् सिचो लोपः । आहसतेति । 'आत्मनेपदेष्वनतः' इत्यदादेशः । अथ सिज्ग्रहणे प्रकृते पुनः सिज्ग्रहणं किमर्थं क्रियत इत्याह—सिज्ग्रहणं लिङ्निवृत्त्यर्थमिति । प्रकृतं हि सिज्ग्रहणं लिङा सह सम्बद्धम्, अतस्तदनुवृत्तौ सत्यां तस्याप्यनुवृत्तिराशङ्क्येत; तस्मात्तान्निराकर्त्तुं सिज्ग्रहणं क्रियते । ननु च हन्तेर्लिङि वधादेशेन भवितव्यम्; न च तत्र सत्यपि कित्त्वे किञ्चिदनिष्टमापद्यते, तत् कस्माल्लिङ्निवृत्त्यर्थं सिज्ग्रहणं क्रियत इत्यत आह—उत्तरत्रेत्यादि । यद्यत्र लिङनुवर्त्तते तत उत्तरत्र तस्यानुवृत्तिः स्यात्, ततश्चोत्तरसूत्रेण तस्यापि कित्त्वं स्यादित्यभिप्रायः ।

इह तु वृत्तावात्मनेपदेन सिज् न विशेष्यत इत्यात्मनेपदं निवृत्तमिति कस्यचिद् भ्रान्तिः स्याद्, अतस्तान्निराकर्तुमाह—आत्मनेपदग्रहणमित्यादि । इहापि कस्मान्न भवतीत्यत आह—इह त्वित्यादि । 'लुङि च' इति हन्तेः परस्मैपदेषु लुङि वधादेशः क्रियते, स च नित्यः । नित्यत्वन्तु तस्य 'आत्मनेपदेष्वन्यतरस्याम्' इत्युत्तरसूत्रेऽन्यतरस्यांग्रहणाद् । न च नित्ये वधादेशे कित्त्वस्य किञ्चित् प्रयोजनमस्ति, अतो नेहात्मनेपदस्यानुवृत्तिरुपपद्यते ।

पदमञ्जरी

परस्मैपदेषु सिचो लुग् भवति, 'वा गमः' इत्यत्रापि परस्मैपदेष्वङ् भवति, लिङि यासुट्निवृत्त्यर्थमेव च झल्ग्रहणमनुवर्त्त्यम्, एवमस्मिन्नप्यधानिषातामिति चिण्वदिटि मा भूदिति, तदेवम् 'वा गमः' इत्यारभ्यात्मनेपदग्रहणं चिन्त्यप्रयोजनम्। किमर्थं पुनरिदम्, यावता आत्मनेपदं ङिति सिजन्तस्याङ्गस्य 'अनिदिताम्' इत्येव नलोपः सिद्धः, उच्चारणार्थो हि सिच इकारः, नानुबन्धः ? ज्ञापनार्थम्। एतज् ज्ञापयति–'न सिजन्तस्योपधालोपो भवति' इति। तेनामंस्तेति सिद्धं भवति। ननु च सिचि 'अनुदात्तोपदेश' इति लोपो यथा स्याद्, आत्मनेपदे उपधालोपो मा भूदित्येवमर्थमिदं स्यात्, कः पुनरत्र विशेषः–सिचि वा लोपो भवतु, आत्मनेपदे वा ? अयमस्ति विशेषः—आत्मनेपदे लोपे सति 'अतो लोपः' प्राप्नोति, सिचि तु न; आभीयस्यानुनासिकलोपस्यासिद्धत्वात्। यद्यपि उपधालोपोऽप्याभीयस्तथापि व्याश्रयत्वादसिद्धत्वं न प्राप्नोति–आत्मनेपदे उपधालोपः, सिच्यतो लोपः। यद्येवम्, बहिरङ्ग उपधालोपः, बहिर्भूतात्मनेपदापेक्षत्वाद्; अन्तरङ्गोऽल्लोपः, अन्तर्भूतसिजपेक्षत्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे'।

ननु चैषा परिभाषाप्याभाच्छास्त्रीया 'वाह ऊठ्' इत्यत्र ज्ञापितेति तस्यामन्तरङ्गबहिरङ्गयोरसिद्धत्वाद् यथा पपुष इत्यादावल्लोपादिषु वसोः संप्रसारणस्यासिद्धत्वं न भवति, तथात्रापि न स्यात्, ततश्चातो लोपः स्यादिति सिच्येवानुनासिकलोप एषितव्य इति वक्तव्यमेव सिचः कित्त्वमिति ज्ञापकानुपपत्तेः, अमंस्तेत्यादावुपधालोपः स्यात्। तस्मात् सिच इकारोऽनुबन्ध एव, नोच्चारणार्थः। तेन 'अदिताम्' इति प्रतिषेधादुपधालोपाभावः। 'इदितो नुम्' इत्यत्र धातुग्रहणं सिजन्तनिवृत्त्यर्थमेव क्रियते, न धातूपदेशावस्थायामेव नुम् यथा स्यादित्येवमर्थम्। कुण्डेत्यादिसिद्धये च यत्नान्तरमास्थेयमिति केचित्; नेति वयम्। उपधालोपेऽपि नातो लोपेन भवितव्यम्। किं कारणम् ? 'उपदेश' इति वर्तते उपदेशे योऽकारान्तस्तस्य लोपः, इहापि तर्हि न प्राप्नोति—'धिन्विकृण्व्योर च' धिनुतः, कृणुतः, नोपदेशग्रहणेन प्रकृतिरभिसम्बध्यते—उपदेशे या प्रकृतिरकारान्तेति, किं तर्हि ? आर्धधातुकमभिसम्बध्यते—आर्द्धधातुकोपदेशे यदकारान्तं तस्येति। तदेवमुपधालोपेऽपि न कश्चिद्दोष इति ज्ञापकार्थमेव वचनमिति सर्वमनाकुलम्॥

न्यासः

अथ किमर्थं हन्तेः परस्य सिचः कित्त्वं विधीयते, यावता 'सार्वधातुकमपित्' इति सिचः परस्य सार्वधातुकस्य ङित्त्वमस्त्येव ; तत्र 'अनिदिताम्' इत्यनुनासिकलोपः सिद्धः। सिच इदित्त्वान्न सिध्यतीति चेत् ? न; सिच इकारस्योच्चारणार्थत्वात्। तथा हि 'च्लेः सिच्' इत्यत्र वक्ष्यति—'इकार उच्चारणार्थः' इति। एवमपि

## यमो गन्धने ॥ १५ ॥

'सिच्, आत्मनेपदेषु' इति वर्तते। यमेर्धातोर्गन्धने वर्तमानात्परः सिच् प्रत्ययः किद्भवति आत्मनेपदेषु परतः। गन्धनम् = सूचनम्, परेण प्रच्छाद्यमानस्यावद्यस्याविष्करणम्। अनेकार्थत्वाद्धातूनां यमिस्तत्र वर्तते। उदायत। उदायसाताम्। उदायसत। सूचितवानित्यर्थः। सिचः कित्त्वादनुनासिकलोपः। 'आङो यमहनः' इत्यात्मनेपदम्।

गन्धन इति किम्? उदायंस्त पादम्। उदायंस्त कूपादुदकम्। उद्धृतवानित्यर्थः। सकर्मकत्वेऽपि 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम्॥

## विभाषोपयमने ॥ १६ ॥

'यमः सिच्, आत्मनेपदेषु' इति वर्तते। यमेर्धातोरुपयमने वर्तमानात्

### पदमञ्जरी

*यमो गन्धने* ॥ ननु यमिरुपरमे पठ्यते, कथं गन्धने वर्तत इत्यत आह— *अनेकार्थत्वादिति*। *उदायतेति*। परावद्यं स्वयं प्रकाशितवानित्यर्थः। *उदायंस्त पादमिति*। अपकृष्टवानित्यर्थः॥

### न्यासः

च्लेरिदित्त्वात् सिचोऽपि स्थानिवद्भावेनेदित्वमतो न सिध्यतीति चेत्, न; च्लेरकारस्योच्चारणार्थत्वात्। तथा हि 'च्लि लुङि' इत्यत्र वक्ष्यति—'इकार उच्चारणार्थः' इति। एवं तर्हि सिद्धे ङित्त्वे सति यत् पुनरिह हनः सिजिति सिचः कित्त्वं विदधाति तज् ज्ञापयति—ह्याद्यसार्वधातुकमाश्रित्य सिजन्तस्य 'अनिदिताम्' इत्यनुनासिकलोपो न भवतीति; तेनारंस्त, अमंस्त, आयंस्त पादमिति सिद्धं भवति; अन्यथा ह्यनुनासिकलोपे कृत आयतेत्यनिष्टं रूपं स्यात्॥

यमो गन्धने ॥ ननु च 'यम उपरमे' इति पठ्यते, तत् कथमयं गन्धने वर्तते, इत्यत आह—अनेकार्थत्वादित्यादि। 'आङो यमहनः' इत्यत्र 'अकर्मकाच्च' इत्यतोऽकर्मकग्रहणमनुवर्तते। तत् कथमिह सकर्मकत्वे सत्यात्मनेपदमित्यत आह—सकर्मकत्वेऽपीत्यादि। सकर्मकत्वन्तु पादादेः कर्मणोऽत्र विद्यमानत्वात्। उदायंस्त पादमिति। आकृष्टवानित्यर्थः॥

विभाषोपयमने ॥ दारकर्मेति। कर्मशब्दः क्रियावाची। दारक्रियेत्यर्थः।

परः सिच्प्रत्ययो विभाषा किद्भवति, आत्मनेपदेषु परतः। उपायत कन्याम्, उपायंस्त कन्याम्। उपायत भार्याम्, उपायंस्त भार्याम्।

उपयमनम् = स्वीकरणम्, विवाहः, दारकर्म, पाणिग्रहणमित्यर्थः। 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् ॥

## स्थाघ्वोरिच्च ॥ १७ ॥

'सिच्' 'आत्मनेपदेषु' इति वर्तते। तिष्ठतेर्धातोः घुसंज्ञकानां च इकारश्चान्तादेशः सिच्च किद्भवति आत्मनेपदेषु परतः। उपास्थित, उपास्थिषाताम्, उपास्थिषत। घुसंज्ञकानाम्—अदित, अधित ॥

इच्च कस्य तकारेत्त्वं दीर्घो मा भूदृतेऽपि सः।
अनन्तरे प्लुतो मा भूत् प्लुतश्च विषये स्मृतः ॥

### पदमञ्जरी

स्थाघ्वोरिच्च॥ चकारेण कित्त्वं समुच्चीयत इत्याह—*सिच्च किदिति*। प्रयोजनं गुणो मा भूदिति। इत्त्वं तु गुणविधानार्थमेव स्यात्; लघुत्वात्। *उपास्थितेति*। 'उपान्मन्त्रकरणे' 'अकर्मकाच्च' इत्यात्मनेपदम्, 'ह्रस्वादङ्गात्' इति सिचो लोपः। न चेत्त्वं सिचीत्युच्यते, किं तर्हि ? इकारश्चान्तादेशस्सिच्च किद्भवतीत्येतावत्। तेनेत्त्वस्यासिज्निमित्तत्वाद् भवत्येव लोपः।

*इच्चेत्यादि*। तकार इद्यस्य तस्य भावः *तकारेत्त्वम्*, इच्चेत्यत्र निर्देशे कस्य

### न्यासः

स्थाघ्वोरिच्च ॥ सिच्च किद् भवतीति चकारेण कित्त्वं समुच्चीयत इति दर्शयति। किमर्थं पुनः सिचः कित्त्वं विधीयते; यावता गुणप्रतिषेधस्तस्य फलम्, इकारविधानसामर्थ्यादेव गुणो न भविष्यति, अन्यथा ह्येकारमेव विदध्यात् ? नैतदस्ति; लाघवार्थं हीकारविधानं स्यात्। दीर्घोच्चारणाद्ध्रस्वोच्चारणं लघु भवति। उपास्थितेति। 'समवप्रविभ्यः स्थः' इत्यतः स्थग्रहणेऽनुवर्तमाने 'उपान्मन्त्रकरणे' इत्यत उपादिति च, 'अकर्मकाच्च' इत्यात्मनेपदम्, पूर्ववत् सिचो लोपः। ननु च सिचमाश्रित्येत्त्वं विधीयते, तेन 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इतीत्त्वं नोत्सहते सिचं विहन्तुम्, तत् कुतो लोपः ? नैतदस्ति; न हीत्त्वं सिचीत्युच्यते, किं तर्हि ? इकारश्चान्तादेशो भवति सिच्च किद् भवतीति। अथापि सिज्निमित्तकं स्यात् ? एवमप्यदोषः; तस्याः परिभाषायाश्चानित्यत्वात्। अनित्यत्वन्तु सप्तमेऽध्याये ज्ञापयिष्यते[1]।

१. द्रष्टव्यः ( ७।१।१३ पा० सू० ) इत्यत्र काशिकावृत्तौ।

पदमञ्जरी

कार्यस्य सिद्धये इकारस्य तकारेत्त्वं क्रियत इत्यर्थः। *दीर्घो मा भूदिति*। आन्तर्यतः प्राप्नोतीति भावः। *ऋतेऽपि स इति*। इकारविधानेनापि विनेत्यर्थः। कित्त्वे हि घुमास्थादिसूत्रेणैव दीर्घस्सिद्धः, तस्मादित्त्वविधानसामर्थ्याद् अनन्तरतमोऽपि ह्रस्व एव भविष्यतीत्यर्थः। *भाव्यमानोऽणसवर्णान्न गृह्णाति* इत्ययमप्यत्र परिहारः संभवति। *अनन्तर इति*। असदृश आदेशे क्रियमाणे ह्रस्व इव प्लुतोऽपि स्यात्, स मा भूदित्यर्थः। *प्लुतश्चेति*। अनेन तपरत्वं प्रत्याख्यायते। यद्यनेन प्लुतो विधीयेत, तदा यत्र विषये 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यादिना प्लुतो विहितस्तत्राप्यनेनैव स्याद्, अस्मिन्कर्त्तव्ये तस्यासिद्धत्वादिति पक्षेऽनुवाददोषः प्राप्नोति, ततो ह्रस्व एव भविष्यति। अन्ये तु तपरत्वमनेन समर्थितं मन्यन्ते-असति तकार आन्तर्यतो दीर्घस्य दीर्घः प्राप्नोति। ननु चोक्तम्—'सिद्धोऽत्र दीर्घः' इति ? सिद्धे सत्यारम्भो नियमार्थः स्याद्–दीर्घ एव यथा स्यात् प्लुतो मा भूदिति, तदिदमुक्तम्—अनन्तर इत्यादिना। घुमास्थादिसूत्रेणानेन वा दीर्घे सति यद्यपि विशेषो नास्ति, तथाप्यनन्तरेऽविद्यमानेऽपि विशेषे प्लुतो मा भूदिति दीर्घः स्यादित्यर्थः। मा भूद् इति चेत् तत्राह—*प्लुतश्चेति*। स चासति तपरत्वे न प्राप्नोति, सति तु तस्मिन् दीर्घस्याप्रसङ्गाद्विधिरेव संपद्यत इति स्वविषये प्लुतो न व्यावर्त्यते। तदेवमन्यत्र भिन्नकालनिवृत्त्यर्थं तपरकरणम्, इह तु दीर्घनिवृत्त्यर्थं प्लुतप्रवृत्त्यर्थं च वस्तुबलात्सम्पादि॥

न्यासः

इच्चेत्यादि। हेतुशब्दोऽत्राध्याहार्यः। तेन 'षष्ठी हेतुप्रयोगे' इति हेतुशब्दप्रयोगे कस्येति षष्ठी भवति। तकार एव इत् तकारेत्, तकार एव वा इद् यस्य स तकारेत्, तकारेतो भावस्तकारेत्त्वम्। इच्चेत्यत्र निर्देशे कस्य हेतोरिकारस्य तकारेत्त्वं क्रियते? किमर्थमिकारस्तपरः क्रियत इत्यर्थः। शेषलक्षणा वा कार्यसम्बन्धविवक्षायां षष्ठीयम्। कस्य कार्यस्य निष्पत्त्यर्थमिकारस्तपरः क्रियत इति यावत्।

दीर्घो मा भूदिति। असति हि तपरत्वेऽण् गृह्यमाणः सवर्णान् गृह्णातीतिकारेण सवर्णानां ग्रहणे सति स्थानेऽन्तरतमपरिभाषयोपास्थित, अदितेत्यत्र दीर्घस्थाने दीर्घो भवति, स मा भूदिति तपरत्वं क्रियते।

ऋतेऽपि स इति। स इत्यनेन दीर्घस्य प्रत्यवमर्शः। ऋतेऽप्यस्मादेव वचनाद् घुमास्थादिसूत्रेण दीर्घः सिद्धः, तस्माद् वचनसामर्थ्याद्दीर्घो न भविष्यतीत्यभिप्रायः। एष तु परीहारो 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इत्यतो दीर्घो न भविष्यतीति। एष तु परीहारो नोक्तः; भाव्यमानेनाप्यणा क्वचित् सवर्णानां ग्रहणात्। तथा हि–अदस औप्रत्यये परतस्त्यदाद्यत्वे 'वृद्धिरेचि' इति वृद्धौ कृतायाम् 'अदसोऽसेर्दादु दो मः' इत्युकारो

## न क्त्वा सेट् ॥ १८ ॥

क्त्वाप्रत्ययः सेण्न किद्भवति। देवित्वा, वर्त्तित्वा।

सेडिति किम्? कृत्वा, हृत्वा। क्त्वाग्रहणं किम्? निगृहीतिः। उपस्निहितिः। निकुचितिः॥

### पदमञ्जरी

*न क्त्वा सेट्* ॥ *न किद्भवतीति*। क्त्कार्यं न करोतीत्यर्थः। न पुनः ककारस्येत्संज्ञाभावात् किन्न भवतीति। प्रकृतो हि किच्छब्दः कित्कार्यकारिणि वर्तत इति तदर्थस्यैव निषेधो युक्तः—देवित्वेत्यादौ गुणप्रतिषेधाख्यं कित्कार्यं न भवतीति।

*निगृहीतिरिति*। अत्र 'तितुत्र' इतीट्प्रतिषेधो न भवति, तितुत्रेष्वग्रहादीनामिति वचनात्। *निकुचितिरिति*। 'कुञ्च कौटिल्याल्पीभावयोः'। एषूदाहरणेषु संप्रसारणम्, गुणप्रतिषेधः, उपधालोपश्च कित्त्वाद्भवन्ति।

### न्यासः

विधीयमानः सवर्णानां ग्रहणादौकारस्य दीर्घस्य स्थाने दीर्घ एव भवति—अमू इति।

**अनन्तरे प्लुतो मा भूदिति**। अनन्तरार्थं विसदृशार्थं आरम्भे सति। कुत एतत्? विसदृशस्य आकारस्य स्थाने क्रियमाणो ह्रस्वो भवति, न पुनः प्लुतः। तस्मात् प्लुतबाधनार्थं तपरत्वं कर्तव्यम्। एतदपि नास्ति प्रयोजनम्। **प्लुतश्च विषये स्मृत इति**। चशब्दो हेतौ। प्लुतो हि दूराद्धूतादिविषयविशेष उक्त एव। तत्र यद्यनेन प्लुतो विधीयते तदा सर्वत्र दूराद्धूतादिविषयेऽन्यत्र चानेन भवितव्यम्, ततश्च दूराद्धूतादिविषयेऽपि तस्मिन् भवत्युक्तानुवाददोषः स्यात्; तस्य कृतस्य करणात्। तस्मात् पक्ष उक्तानुवाददोषो मा भूदिति ह्रस्व एव भविष्यति, न प्लुतः इति प्रत्याख्यातं भाष्ये तपरत्वम्।

अन्ये तु वर्णयन्ति—प्लुतश्च विषये स्मृत इति नानेन तपरत्वं प्रत्याख्यायते, किन्तर्हि? तस्य प्रयोजनमाख्यायते। दूराद्धूतादिविषये प्लुत इष्टोऽभिप्रेतः, स न प्राप्नोति। स्थानेऽन्तरतमपरिभाषया दीर्घस्यैव स्थाने दीर्घ एव विधीयते। ननु चोक्तं सिद्ध एव दीर्घ इति? सिद्धस्य पुनर्वचनं प्लुतस्य बाधनार्थं स्यात्। इष्यते च प्लुतो दूराद्धूतादिविषये। तस्मात् तस्य बाधको दीर्घो मा भूदिति तपरत्वं कर्तव्यम्। तेन विचार्यमाणानामित्याष्टमिको भवत्येव प्लुत इति।

**न क्त्वा सेट्** ॥ क्त्वाप्रत्ययस्यौपदेशिकं कित्त्वमस्त्येवेति तदिटः क्त्वाप्रत्ययेन ग्रहणात् सेटोऽपि प्राप्नोतीत्यतः प्रतिषेधोऽयमारभ्यते। **क्त्वाप्रत्ययः सेट् किन्न भवतीति**। अथ किं ककारस्येत्संज्ञाप्रतिषेधात् कित्त्वन्न भवति? कित्कार्यस्य प्रतिषेधाद्वा? यदि ह्यत्र ककारस्येत्संज्ञाप्रतिषेधादकित्त्वं विधित्सितं स्यादित्संज्ञा-

न सेडिति कृतेऽकित्त्वे निष्ठायामवधारणात् ।
ज्ञापकान्न परोक्षायां सनि झल्ग्रहणं विदुः ॥

पदमञ्जरी

न सेडित्यादि । पूर्वार्द्धमेको ग्रन्थः, उत्तरार्द्धाच्च नेत्यपकृष्यते । न सेडित्येतावतापि योगेनाकित्त्वे कृते गुधितो गुधितवानित्यत्र निष्ठायामवधारणान्नियमान्न भविष्यति । 'निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः' इति नियमः—शीङादिभ्य एव परा निष्ठा न किदिति । विपरीतस्तु नियमः—निष्ठैवेति व्याख्यानान्न भवति । लिटि तर्हि प्रतिषेधः स्यात्, ततश्च जग्मिव, जग्मिम 'गमहन' इत्युपधालोपो न स्याद्, अत आह—*ज्ञापकादिति* । पूर्वाचार्यप्रसिद्धया परोक्षे लिडुच्यते, यथा—भवन्ती लट्, श्वस्तनी लुट् । किं ज्ञापकमित्यत आह—*सनीति* । 'इको झल्' इत्यत्र झल्ग्रहणस्यैतत्प्रयोजनम्—शिशयिषत इत्यत्र मा भूदिति । यदि च न सेडिति प्रतिषेध आतिदेशिकस्यापि कित्त्वस्य स्याद् झल्ग्रहणमनर्थकं स्यात् । प्राप्नोत्वत्र कित्त्वम्, 'न सेट्' इति प्रतिषेधो भविष्यति । तदेतद् झल्ग्रहणमौपदेशिकस्य कित्त्वस्यायं प्रतिषेधो नातिदेशिकस्येत्यस्यार्थस्य ज्ञापकं विदुः ।

न्यासः

प्रकरणे 'ल्यशकसेट्क्त्वातद्धितयोः' इति सूत्रं कुर्यात् । एवं हि द्विष्प्रतिषेधो न कर्तव्यो भवति । तस्मात् कित्त्वप्रतिबद्धं यत् कार्यं तत्प्रतिषेधादकित्त्वं सेटः क्त्वाप्रत्ययस्यानेन क्रियते, न तु ककारस्येत्संज्ञाप्रतिषेधात् ।

अथ सानुबन्धकस्य ग्रहणं किमर्थम् 'न त्वा' इत्येवोच्येत, एवं हि लघु सूत्रं भवति ? नैतदस्ति; ककारानुच्चारणे हि कश्चिद् द्वेष्यमपि विजानीयात् । सेटः क्त्वाप्रत्ययस्य ककारानुबन्ध एव नास्ति, निरनुबन्धकस्योच्चारणादिति । तदेवं मा विज्ञायीति सानुबन्धकस्योच्चारणम् । कः पुनः सेटो निरनुबन्धकत्वे दोषः स्यात् ? 'क्त्वातोसुन्कसुनः' इत्यत्र सेटो ग्रहणं न स्यात्; निरनुबन्धकत्वात् । अथाव्ययसंज्ञाविधौ निरनुबन्धक उच्चार्यते ? एवमपि सेट एव ग्रहणं स्यात्, नानिटः; सानुबन्धकत्वात् ।

निगृहीतिरिति । 'स्त्रियां क्तिन्' 'तितुत्रतथ' इति 'ग्रहादीनां प्रतिषेधो वक्तव्यः' इति तितुत्रतथेत्यादिनेट्प्रतिषेधो न भवति । उपस्निहितिरिति । 'स्निह प्रीतौ', निकुचितिरिति । 'कुन्चु क्रुन्चु कौटिल्याल्पीभावयोः' एषु त्रिषूदाहरणेषु यथाक्रमं संप्रसारणगुणप्रतिषेधौ । 'अनिदितां हल उपधायाः क्ङिति' इत्यनुनासिकलोपश्च कित्त्वाद् भवति ।

न सेडित्यादि । न सेडित्येतावता योगेनाकित्त्वे सति सिद्धं देवित्वेत्यादि, क्त्वाग्रहणं तु किमर्थम् , तेन विनाऽकित्त्वे सति 'गुध परिवेष्टने' निगुधितो निगुधितवानित्यत्र निष्ठायां प्राप्नोतीति चेत् ? नैतदस्ति; निष्ठायामवधारणात् । 'निष्ठा शीङ्स्वि-

इत्त्वं कित्संनियोगेन रेण तुल्यं सुधीवनि ।
वस्वर्थं किदतीदेशान्निगृहीतिः प्रयोजनम् ॥

पदमञ्जरी

ननु चोत्तरार्थं झल्ग्रहणम्, स्थाघ्वोरित्त्वं झलादौ यथा स्यात् चिण्वदिटि मा भूदिति—उपास्थायिषाताम्, अत्र हि उपास्थास् आतामिति स्थिते, इत्त्वं च प्राप्नोति चिण्वद्भावश्च, परत्वाच्चिण्वद्भावे युक्च प्राप्नोति वृद्धिश्च, अपवादत्वाद्युकि कृते यकारस्येत्त्वप्रसङ्गः; न च पुनर्वृद्धिर्लभ्यते, पूर्वमेव युका बाधितत्वात्, तस्मादुत्तरार्थं झल्ग्रहणम् ? नैतदस्ति; यस्मादित्त्वं कित्त्वसंयोगेनोच्यते, न चात्र कित्त्वमस्ति; न सेडिति प्रतिषेधात् । न ह्यत्रास्यां दशायां झल्ग्रहणस्य ज्ञापकत्वं स्थितमित्यातिदेशिकस्यापि कित्त्वस्यायं प्रतिषेधो भवति । *रेण तुल्यं सुधीवनीति* ।

न्यासः

दिमिदि' इत्यत्रावधारणान्निष्ठायां न भविष्यति-शीङादिभ्य एव निष्ठा सेट् किन्न भवति नान्येभ्यो धातुभ्य इति । शीङादिभ्यो निष्ठैवेति विपरीतनियमस्तु नाशङ्कनीयः, न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिरिति न भविष्यति । लिटस्तर्हि कित्त्वस्य प्रतिषेधः स्यात्, ततश्च जग्मिव, जग्मिमेत्यत्र 'गमहन' इत्यादिनोपधालोपो न स्यादित्यत्र आह-ज्ञापकान्न परोक्षायामिति । परोक्षे विहितत्वाल् लिटः श्रुतिः परोक्षेत्युच्यते, तस्यां कित्त्वप्रतिषेधो न भविष्यति । कथम् ? ज्ञापकात् । किं तज् ज्ञापकम् ? इत्याह—सनि झल्ग्रहणं विदुरिति । यदयम् 'इको झल्' इति सन्विशेषणं करोति, ततो ज्ञायते—औपदेशिकस्य कित्त्वस्य न सेडिति प्रतिषेधोऽयम्, नातिदेशिकस्येति । झल्ग्रहणं हि शिशयिषत इत्यत्र कित्त्वं मा भूदित्येवमर्थः क्रियते । यदि च न सेडिति प्रतिषेधः आतिदेशिकस्यापि कित्त्वस्य स्यात्; झल्ग्रहणमनर्थकं स्यात् । अस्त्वत्र कित्त्वम्, तस्य न सेडिति प्रतिषेधो भविष्यतीति तस्मादौपदेशिकस्य कित्त्वस्य प्रतिषेधोऽयं नातिदेशिकस्येति । अस्यार्थस्य ज्ञापकं झल्ग्रहणं विदन्ति विद्वांसः—आतिदेशिकञ्च लिटः कित्त्वम्, अतस्तस्य प्रतिषेधो न भविष्यतीति । ननु चोत्तरार्थं झल्ग्रहणं स्यात्, 'स्थाघ्वोरिच्च' इत्यत्र झलादौ सिचीत्त्वं यथा स्याद्, अजादौ मा भूदिति-उपास्थायिषातामिति । अत्र हि 'स्यसिच्सीयुट्तासिषु' इत्यादिना चिण्वद्भावः प्राप्नोति, इत्त्वञ्च; तत्र परत्वाच्चिण्वद्भावादिट् । चिण्वद्भावे सति 'आतो युक् चिण्कृतोः' इति युक्, तत्रासति झल्ग्रहण इडादावपीत्त्वं यकारस्थाने प्राप्नोति, नैतदस्ति; यस्मादित्त्वं कित्सन्नियोगेन विधीयते । कित्त्वं हि प्रधानभूतम्, इत्त्वमन्वाचयशिष्टम् । अतः कित्त्वाभावे तदित्त्वं न भविष्यतीति । अथ 'स्थाघ्वोरिच्च' इत्यत्रापि कित्त्वं कस्मान्न भवति ? 'न सेट्' इत्येतावता योगेन प्रतिषिद्धत्वात् ।

रेण तुल्यं सुधीवनीति । रेफेण तुल्यमेतदित्त्वम् । क्व चोदाहरणे ? सुधीवनीत्यत्र ।

## निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ १९ ॥

पदमञ्जरी

शोभना धीवानोऽस्याः सुधीवा स्त्री 'अनो बहुव्रीहेः' इति प्रकृतस्य ङीपो निषेधे सति 'संनियोगशिष्टानामन्यतराभावे उभयोरप्यभावः' इति यथा रेफो न भवति तद्वदिहापीत्यर्थः। *वस्वर्थमिति*। अर्थशब्दो निवृत्तौ। जग्मिवानित्यत्र क्वसोः कित्त्वप्रतिषेधो मा भूदित्येवमर्थं तर्हि क्त्वाग्रहणमित्यर्थः। दूषयति–*किदतीदेशादिति*। सिद्धमिति शेषः। अस्त्वत्रौपदेशिकस्य कित्त्वस्य प्रतिषेधः, आतिदेशिकं कित्त्वं भविष्यति। यत्र तर्हि तत्प्रतिषिध्यते संयोगान्तेष्वञ्जेः, आजिवान्–अत्र हि नलोपे कृते द्विर्वचन एकदेशे च 'वस्वेकाजाद्धसाम्' इतीडागमः, तत्र कृते कित्त्वप्रतिषेधाद् नलोपनिवृत्तौ द्विहल्त्वात् नुटि सत्येकाच्त्वाभावादिण्निवृत्तौ कित्त्वनलोपादीनां चक्रकप्रसङ्गः। एवं तर्हि छान्दसः क्वसुः, लिट् छन्दसि सार्वधातुकमपि भवति 'सार्वधातुकमपिद्' इति ङित्त्वं ङितीत्युपधालोपः। न च संयोगान्तेषु कित्त्वङित्त्वयोः कश्चिद्विशेषः, तस्माद्वस्वर्थमपि क्त्वाग्रहणं न भवति। एवं तर्हि—*निगृहीतिः प्रयोजनम्*। क्तिन्क्तिज्निवृत्त्यर्थं क्त्वाग्रहणमित्यर्थः।

यदि पुनरुपरिष्टाद्योगविभागः क्रियते—न सेण्निष्ठा शीङ्स्विदिमिदि क्ष्विदिधृषः, मृषस्तितिक्षायाम्, उदुपधाद्भावादिकर्मणोरन्यतरस्याम्; ततः पूङश्च–पूङश्च परा निष्ठा सेण् न किद्भवति; ततः क्त्वा च, क्त्वा च सेट् किन्न भवति। अत्र 'पूङः' इति निवृत्तमिति, ततः क्त्वाग्रहणं शक्यमकर्तुम्॥

न्यासः

शोभना धीवानो यस्यां सा सुधीवा। 'अनो बहुव्रीहेः' इति ङीपोऽत्र प्रतिषेधे कृते यथा 'वनो र च' इति रेफो ङीप्सन्नियोगेन विधीयमानस्तदभावे न भवति, तथा कित्त्वसन्नियोगेन विधीयमानमित्त्वं तदभावे न भविष्यति। किमर्थं तर्हि क्त्वाग्रहणम्? क्वसौ कित्त्वप्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणं कर्त्तव्यम्। क्वसौ त्वौपदेशिकं कित्त्वमस्ति, तस्य 'न सेट्' इत्येतावता योगेन प्रतिषेधः स्यात्। ततश्च जग्मिवान्—इत्यत्रोपधालोपो न स्यात्। वस्वर्थं किदतीदेशादिति। न भविष्यतीत्यध्याहार्यम्। अस्तु क्वसावौपदेशिकस्य कित्त्वस्य प्रतिषेधः, सत्यपि तस्मिन् 'असंयोगाल्लिट् कित्' इति यदातिदेशिकं कित्त्वम्, तेनोपधालोपो भविष्यति। झल्ग्रहणादातिदेशिकस्य कित्त्वस्य प्रतिषेधो न भविष्यतीत्युक्तं ह्येतत्। तस्माद् वस्वर्थं क्त्वाग्रहणं न भविष्यतीति।

एवं तर्हि—निगृहीतिः प्रयोजनम्। क्तिनि तु प्रतिषेधो मा भूदित्येवमर्थं क्त्वाग्रहणमित्यर्थः। जग्मिवानित्यत्र 'विभाषा गमहनविद्विशाम्' इति क्वसोरिट्, 'उगिदचाम्' इति नुम्, हल्ङ्यादिसंयोगान्तलोपौ, 'सान्तमहतः' इत्यादिना दीर्घः।

'न सेट्' इति वर्तते । शीङ्-स्विदि-मिदि-क्ष्विदि-धृष्--इत्येभ्यः परो निष्ठाप्रत्ययः सेण्न किद्भवति । शयितः, शयितवान् । प्रस्वेदितः, प्रस्वेदितवान् । प्रमेदितः, प्रमेदितवान् । प्रक्ष्वेदितः, प्रक्ष्वेदितवान् । प्रधर्षितः, प्रधर्षितवान् । सेडित्येव--स्विन्नः, स्विन्नवान् । स्विदादीनाम् 'आदितश्च' इति निष्ठायामिट् प्रतिषिध्यते । 'विभाषा भावादिकर्मणोः' इति पक्षेऽभ्यनुज्ञायते, स विषयः कित्त्वप्रतिषेधस्य ॥

## मृषस्तितिक्षायाम् ॥ २० ॥

### पदमञ्जरी

*निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः* ॥ 'ञिष्विदा स्नेहनमोचनयोः' इत्यस्य भौवादिकस्य ञिद्धातोर्ग्रहणम्, न तु 'ष्विदा गात्रप्रक्षरणे' इति दैवादिकस्य; ञिद्भिः साहचर्यात्, अस्य चाञित्वात् । 'ञिक्ष्विदा स्नेहनमोचनयोः' इति दैवादिकस्य ग्रहणम्, न तु 'ञिक्ष्विदा अव्यक्ते शब्दे' इत्यस्य भौवादिकस्य; मिदिना साहचर्यात्, 'ञिधृषा प्रागल्भ्ये' । *शयितवानिति* । 'अत्वसन्तस्य' इति दीर्घः । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवति, स एव धातुर्द्विरुच्यत इति कृत्वा तत्रापवादः स्मर्यते ।

श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं किञ्चित्पञ्चैतानि न यङ्लुकि ॥ इति ।

तदिह शीङोऽनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः, शेशियतः, शेशियतवान्-- 'एरनेकाचः' इति यण् ॥

*मृषस्तितिक्षायाम्* ॥ इदमेव तितिक्षाग्रहणं ज्ञापकम्--अनेकार्था धातव

### न्यासः

निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः ॥ 'शीङ् स्वप्ने', 'ञिष्विदा गात्रप्रक्षरणे', 'ञिमिदा स्नेहने', 'ञिक्ष्विदा स्नेहनमोचनयोः', 'ञिधृषा प्रागल्भ्ये' । शयितवानिति । 'अत्वसन्तस्य चाधातोः' इति दीर्घः । शयित इति । 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । प्रस्वेदितः इत्यादावादिकर्मणि क्तः, 'कर्तरि च' इत्यनेन प्रशब्द आदिकर्म = प्रारम्भं द्योतयति । प्रधर्षित इति । वैयात्यादन्यत्रेदमुदाहरणम् । तत्र हि 'धृषिशसी वैयात्ये' इतीट्प्रतिषेधेन भवितव्यम् । प्रकृतिग्रहणे यङ्लुको ग्रहणं स्मरति । अतो यङ्लुको ग्रहणं मा भूदिति शीङोऽनुबन्धनिर्देशः । तेन शेशियतः शेशियतवानित्यत्र कित्त्वप्रतिषेधाभावाद् गुणो न भवति । 'एरनेकाचः' इत्यादिना यणादेशः ।

मृषस्तितिक्षायाम् ॥ तितिक्षा=क्षमा, क्षान्तिरिति । यद्येवम्, क्षान्तिग्रहणमेव कर्त्तव्यम्, लघु ह्येवं सूत्रं भवति ? सत्यमेतत्; वैचित्र्यार्थं तु न कृतम् ।

मृषेर्धातोः तितिक्षायामर्थे निष्ठा सेण्न किद्भवति । तितिक्षा ॥ क्षमा । मर्षितः, मर्षितवान् ।

तितिक्षायामिति किम् ? अपमृषितं वाक्यमाह ॥

**उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥ २१ ॥**

'निष्ठा, सेण्न, कित्' इति वर्तते । उदुपधाद्धातोः परो भावे आदिकर्मणि च वर्तमानो निष्ठाप्रत्ययः सेडन्यतरस्यां न किद्भवति । द्युतितमनेन, द्योतितमनेन । प्रद्योतितः, प्रद्युतितः । मुदितमनेन, मोदितमनेन । प्रमुदितः, प्रमोदितः ।

उदुपधादिति किम् ? लिखितमनेन । भावादिकर्मणोरिति किम् ? रुचितं कार्षापणं ददाति । सेडित्येव—प्रभुक्त ओदनः ।

पदमञ्जरी

इति; अन्यथा मृषिस्तितिक्षायामेव पठ्येत इति तदपार्थकं स्यात् । *अपमृषितमिति* । अविस्पष्टमित्यर्थः ॥

*उदुपधाद्भावादिकर्मणोरन्यतरस्याम्* ॥ *द्युतितमिति* । 'द्युत दीप्तौ' नपुंसके भावे क्तः । *प्रद्युतित इति* । 'आदिकर्मणि क्तः कर्त्तरि च' इति कर्त्तरि क्तः । *मुदितमिति* । 'मुदी हर्षे' । *लिखितमिति* । शब्विकरणानामेवेति न तावत् स्थितमित्यशब्विकरणोऽपि लिखिः प्रत्युदाहृतः । एवं *प्रभुक्त इति* । स्थिते तस्मिन् खिटिकिटी भौवादी, क्रुशिश्च; खिटितं किटितं क्रुष्टमिति प्रत्युदाहर्तव्यम् ॥

न्यासः

**अपमृषितमिति** । अपरामृष्टमित्यर्थः, अनेकार्थत्वाद्धातूनाम् । अनेकार्थत्वन्तु तितिक्षाग्रहणाद् विज्ञायते । असति हि तत्र मृषस्तितिक्षायामेव पठ्यत इति तन्न कुर्यात्, व्यवच्छेद्याभावात् ।

**उदुपधाद् भावादिकर्मणोरन्यतरस्याम्** ॥ आदिकर्मणि वर्तमान इति । आदिभूतक्रियाक्षण आदिकर्म, तस्मिन् भूतत्वेन विवक्षिते यः क्तो भवति, स आदिकर्मणि वर्त्तते । द्योतितमनेन, द्युतितमनेनेति । 'द्युत दीप्तौ' नपुंसके भावे क्तप्रत्ययः । एवं मोदितमनेन, मुदितमनेन—इत्यत्रापि, 'मुद हर्षे' इत्यस्मात् । प्रद्युतित इत्यादिषु त्वादिकर्मणि क्तः । 'कर्त्तरि च' इति क्तः कर्त्तर्येव विधीयते, न कर्मणि; धातोरकर्मकत्वात् । नापि भावे; भावोदाहरणादविशेषप्रसङ्गात् । कर्त्तर्यव्युत्पन्नः क्त आदिकर्मसम्बन्धादादिकर्मणीत्युच्यते । आदिकर्मसम्बन्धस्त्वर्थद्वारकः ।

**रुचितमिति** । 'रुच दीप्तौ' अस्याकर्मकत्वाद् 'गत्यर्थाकर्मक' इत्यादिना कर्तरि क्तः । दीप्तिमन् कार्षापणमित्यर्थः । आदिकर्मात्र न विवक्षितम् । प्रभुक्त ओदन इति ।

व्यवस्थितविभाषा चेयम्। तेन शब्विकरणानामेव भवति। 'गुध परिवेष्टने', गुधितमित्यत्र न भवति॥

पूङः क्त्वा च॥ २२॥

'अन्यतरस्याम्' इति न स्वर्यते; उत्तरसूत्रे पुनर्वावचनात्। 'न सेट्' इति वर्तते। पूङश्च इड्विहितः 'क्लिशः क्त्वानिष्ठयोः', 'पूङश्च' इति। पूङः परो निष्ठाप्रत्ययः क्त्वा च सेण्न किद्भवति। पवितः, पवितवान्।

क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति सिद्ध एव प्रतिषेधः। तस्य

पदमञ्जरी

पूङः क्त्वा च॥ इहान्यतरस्यांग्रहणानुवृत्तौ सेडित्यस्य च निवृत्तौ इड्विधौ 'पूङश्च' इति शक्यमकर्त्तुम्, उत्तरसूत्रे च वाग्रहणम्; कथम्? अनिटोरेव क्त्वानिष्ठयोरनेन कित्त्वं विकल्प्यते, तत्र यदा कित्त्वं तदा 'श्र्युकः किति' इति प्रतिषेधात् पूतः पूतवान् पूत्वेति, अकित्त्वपक्षे ल्विटि पवितः पवितवान् पवित्वेति भवति, सेड्ग्रहणं तु विच्छिद्येत; तस्मात्सेडित्यस्मिन्नुत्तरार्थमनुवर्तमाने 'पूङश्च' इत्यारभ्य उत्तरत्र वाग्रहणमिह नित्यतासिद्ध्यर्थम्, पुवित्वेति पक्षे मा भूत्तदाह—*अन्यतरस्यांग्रहणं न स्वर्यते; उत्तरसूत्रे पुनर्वावचनादिति*। *न सेडिति वर्त्तत इति*। ननु पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यम्, 'श्र्युकः किति' इति प्रतिषेधादत आह—*पूङश्चेति*। *पूङः परो निष्ठाप्रत्यय इत्यादि*।

किं पुनः कारणं साक्षात् श्रुतं क्त्वाप्रत्ययमपहायानुवृत्तस्य निष्ठाप्रत्ययस्यान्वयो दर्शित उदाहरणं च? अत आह—*क्त्वाप्रत्ययस्येति*। एतदेव द्रढयति—

न्यासः

'भुज पालनाभ्यवहारयोः', 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि क्तः। तस्यादिकर्मसम्बन्धादादिकर्मणि वृत्तिः।

'गुध परिवेष्टने' इति दैवादिकः। निगुधितमिति भावे क्तः। यदि व्यवस्थितविभाषया शब्विकरणानामेव भवति, सेड्ग्रहणेन किमर्थमिह निष्ठा विशिष्यते? अशब्विकरणत्वादेव हि प्रभुक्त इत्यत्र न भवति। न हि भुजिः शब्विकरणः, अपि तु श्नम्विकरणः, सत्यमेतत्; उत्तरार्थं सेड्ग्रहणमनुवर्त्तनीयम्। अतस्तदुत्तरार्थमनुवर्त्तमानमिहापि मन्दधियां सुखप्रतिपत्तिर्यथा स्यादित्येवमर्थम्। तकारोऽत्र मुखसुखार्थः, न दीर्घनिवृत्त्यर्थः; अलघूपधत्वादेव हि दीर्घोपधानां गुणप्रसङ्गाभावात्।

पूङः क्त्वा च॥ 'न सेट् इति वर्त्तते' इत्युक्तम्। 'न क्त्वा सेट्' इत्यतः। ननु च पूङः परयोः क्त्वानिष्ठयोरिटा न भवितव्यमेव; 'श्र्युकः किति' इति प्रतिषेधात्। तदपार्थिका सेड्ग्रहणानुवृत्तिरिति यश्चोदयेत् तं प्रत्याह—पूङश्चेड् विहित इत्यादि।

ग्रहणमुत्तरार्थम् । तथा चोक्तम्—'नित्यमकित्त्वमिडाद्योः क्त्वानिष्ठयोः क्त्वाग्रहणमुत्तरार्थम्' इति ॥

नोपधात् थफान्ताद्वा ॥ २३ ॥

'निष्ठा' इति निवृत्तम् । नकारोपधाद्धातोस्थकारान्तात्फकारान्ताच्च परः क्त्वाप्रत्ययः सेड् वा न किद्भवति । ग्रथित्वा, ग्रन्थित्वा । श्रथित्वा, श्रन्थित्वा । गुफित्वा, गुम्फित्वा ।

पदमञ्जरी

*तथा चोक्तमिति* । इडाद्योः क्त्वानिष्ठयोर्नित्यमकित्त्वमिष्यते, ततश्च क्त्वाग्रहणमुत्तरार्थमिति *भारद्वाजीयै*रेवमुक्तम् । उत्तरार्थमपि यदिहैव कर्त्तव्यं सेडित्येनेन सम्बन्धार्थम्; अन्यथा निष्ठानिवृत्तौ तत्सम्बद्धं सेडित्येतदपि निवर्त्तेत ! अनुबन्धोच्चारणं विस्पष्टार्थं न पूञो निवृत्त्यर्थम्; इड्विधौ पूङ एव ग्रहणात् । पूञः क्त्वानिष्ठयोः इडभावान्नापि यङ्लुकि निवृत्त्यर्थम्; इड्विधावनुबन्धनिर्देशेन यङ्लुक्यपि 'न क्त्वा सेट्' इति प्रतिषेधस्य स्थितत्वात् । न च क्त्वाग्रहणसामर्थ्यात्तस्यापि प्रतिषेधः; तस्योत्तरत्राप्युपयोगसम्भवात्, अनुबन्धनिर्देशस्य च निष्ठायां चरितार्थत्वात् । एवं च 'क्त्वाग्रहणमुत्तरार्थम्' इति वृत्तिग्रन्थस्याविरोधः, तेन पोपुवितवानिति निष्ठायां भवति । क्त्वायां तु गुणे पोपवित्वेति भवति ॥

*नोपधात्थफान्ताद्वा* ॥ *निष्ठेति निवृत्तमिति* । पूर्वसूत्रे चानुकृष्टत्वात् । *गुफित्वेति* । 'गुफ गुम्फ ग्रन्थने' ।

न्यासः

अथ क्त्वाप्रत्ययस्योदाहरणं कस्मान्न प्रदर्शितमित्यत, आह—क्त्वाप्रत्ययस्येत्यादि । यदि ह्यनेन योगेन क्त्वाप्रत्ययस्य कित्त्वं प्रतिषिध्येत, तदा तस्याप्युदाहरणं प्रदर्श्येत, न चानेन प्रतिषिध्यते, किन्तर्हि ? 'न क्त्वा सेट्' इत्यनेनैव प्रतिषिद्धत्वात् । तस्मात् तस्योदाहणं न प्रदर्शितमिति भावः । क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इत्यनेन प्रतिषेध इत्येतदेव द्रढयितुमाह—तथा चेत्यादि । 'पूङश्च' इत्यत्र सूत्रे द्वयोर्विभाषयोर्मध्ये ये विधयस्ते नित्या भवन्तीति मन्यमानैर्भारद्वाजीयैरिदमुक्तम्—नित्यमकित्त्वमिडाद्योरिति । तौ पुनरिडादी क्त्वानिष्ठाप्रत्ययौ । यदि तर्हि नित्यमकित्त्वमिडाद्योः; तदा क्त्वाग्रहणमनर्थकं स्यात् । विकल्पेन ह्यत्राकित्त्वसिद्धये तस्य ग्रहणमर्थवद्भवति, नान्यथा । नित्यत्वं कित्त्वप्रतिषेधस्य 'न क्त्वा सेट्' इत्यनेनैव सिद्धत्वादिति चोद्यमाशङ्क्येदमुक्तम्—क्त्वाग्रहणमुत्तरार्थमिति । 'पूङः' इति सानुबन्धकस्योच्चारणं किमर्थम् ? पोपुवितः, पोपुवितवान्, पोपुवित्वेति यङ्लुगन्तात् कित्त्वप्रतिषेधो मा भूदिति । पूञ्निवृत्त्यर्थं सानुबन्धकस्योच्चारणं नोपपद्यते; 'श्र्युकः किति' इतीट्प्रतिषेधात् । पूञः परयोः क्त्वानिष्ठयोः सेटोरभावात् ।

नोपधादिति किम्? रेफित्वा। गोफित्वा। थफान्तादिति किम्? स्रंसित्वा। ध्वंसित्वा॥

वञ्चिलुञ्च्यृतश्च॥ २४॥

वञ्चि-लुञ्चि-ऋत्-इत्येतेभ्यः परः क्त्वाप्रत्ययः सेड् वा न किद्भवति।

पदमञ्जरी

*रेफित्वेति*। 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु'। अथैतद्विकल्पाभावेऽपि 'रलो व्युपधाद्' इति विकल्पोऽत्र कस्मान्न भवति? नोपधग्रहणसामर्थ्यात्। ननु ऋकारोपधो नोपधग्रहणस्य व्यावर्त्यः सम्भवति 'ऋफ हिंसायाम्'—अर्फित्वेति, नैतदस्ति; त्रैशब्द्यं ह्यनयोर्धात्वोर्भवति—अर्फित्वा, ऋफित्वा, ऋम्फित्वेति; तच्च सत्यसति नोपधग्रहणे भवत्येव। सति तावत्, अनोपधस्य 'न क्त्वा सेट्' इति निषेधे सति अर्फित्वेति भवति, नोपधस्य त्वस्मिन्विकल्पे—ऋफित्वेति। असत्यपि नोपधग्रहणे सर्वत्रास्मिन्विकल्पे प्रवृत्तेऽपीदमेव रूपत्रयं भवति। अन्तग्रहणं ज्ञापनार्थम्—यत्नमन्तरेणास्मिन्प्रकरणे न तदन्तविधिर्भवतीति, तेनोत्तरसूत्रे 'ऋतः' इति धातुर्गृह्यते, न ऋदन्तः॥

*वञ्चिलुञ्च्यृतश्च*॥ 'वञ्चु गतौ' भौवादिः, 'वञ्चु प्रलम्भने' चुरादिः,

न्यासः

नोपधात्थफान्ताद्वा॥ निष्ठेति निवृत्तमिति। पूर्वसूत्रे चानुकृष्टत्वात् गुथित्वेति। कित्त्वपक्षे 'अनिदिताम्' इत्यनुनासिकलोपः। गुफित्वेति। 'गुफ गुन्फ ग्रन्थे'। रिफित्वेति। 'रिफ कत्थनयुद्धनिन्दाहिंसादानेषु'। ननु चैतद्विकल्पाभावेऽपि 'रलो व्युपधाद्' इत्यादिनैवात्र विकल्पेन भवितव्यम्, न चानयोर्विकल्पयोः कश्चिद् विशेषोऽप्यस्ति? एवं तर्हि नोपधग्रहणसामर्थ्याद् योगान्तरकृतोऽपि विकल्पोऽनेन बाध्यते। ननु च ऋकारोपधो नोपधग्रहणस्य प्रत्युदाहरणविषयो भविष्यति, 'ऋफ ऋन्फ हिंसायाम्', अर्फित्वेति, नैतदस्ति; इहास्माभिरनयोर्धात्वो रूपत्रयं साध्यम्—अर्फित्वा, ऋम्फित्वा, ऋफित्वेति। एतत् तु सत्यसति वा नोपधग्रहणेऽनेनैव सिद्ध्यत्येव। सति तावन्नोपधग्रहणे, अनोपधस्य ऋफेः 'न क्त्वा सेट्' इति प्रतिषेधे सत्यर्फित्वेति सिद्ध्यति। नोपधस्य तु ऋम्फेरस्मिन् विकल्पे सति, ऋम्फित्वा ऋफित्वेतीदमपरं रूपद्वयं सिद्ध्यति। असत्यपि नोपधग्रहणे सर्वथास्मिन् विकल्पे सतीदं रूपत्रयं सिद्ध्यत्येव। तस्माद् युक्तमुक्तं प्रत्युदाहरणं रेफित्वेति। 'येन विधिस्तदन्तस्य' इति तदन्तविधौ सिद्धेऽन्तग्रहणम् 'इह क्त्वाप्रत्ययकाण्डे यत्नमन्तरेण तदन्तविधिर्न भवति' इति ज्ञापनार्थम्। तेनोत्तरसूत्रे 'ऋत' इति धातुः स्वरूपेण गृह्यते, न तु तदन्त इति।

वञ्चिलुञ्च्यृतश्च॥ 'वन्चु प्रलम्भने', 'लुन्च अपनयने', 'ऋत' इति सौत्रो

वचित्वा, वञ्चित्वा। लुचित्वा, लुञ्चित्वा। ऋतित्वा, अर्तित्वा। 'ऋतेरीयङ्' आर्धधातुके विकल्पितः। स यत्र पक्षे नास्ति तत्रेद-मुदाहरणम्। सेडित्येव—वक्त्वा॥

### तृषिमृषिकृशेः काश्यपस्य ॥ २५ ॥

'न क्त्वा सेट्' इति प्रतिषेधे प्राप्ते कित्त्वं विकल्प्यते। तृषि, मृषि, कृशि—इत्येतेभ्यः परः क्त्वाप्रत्ययः सेट् काश्यपस्याचार्यस्य मते वा न किद्भवति। तृषित्वा, तर्षित्वा। मृषित्वा, मर्षित्वा। कृशित्वा, कर्शित्वा। काश्यपग्रहणं पूजार्थम्, वेत्येव हि वर्तते॥

### रलो व्युपधाद्धलादेः संश्च ॥ २६ ॥

#### पदमञ्जरी

सोऽपि गृह्यते, 'अनित्यण्यन्ताश्चुरादयः' इति। 'लुञ्च अपनयने', ऋतिः सौत्रो धातुः 'ऋतेरीयङ्' इति, स च घृणायां वर्त्तते॥

*तृषिमृषिकृशेः काश्यपस्य*॥ 'ञितृषा पिपासायाम्', 'मृष तितिक्षायाम्', 'कृश तनूकरणे'। *काश्यपग्रहणं पूजार्थमिति*। 'काश्यपस्यैतद्विषयं विज्ञानं नान्येषाम्' इत्यसाधारणज्ञानोद्भावनमाचार्यस्य पूजाद्वारेण शास्त्रस्यापि पारम्पर्यप्रतिपादनेन प्रामाण्यप्रतिपादनात् पूजा भवति॥

#### न्यासः

धातुः, यत्र 'ऋतेरीयङ्' इतीयङ् विहितः। 'ऋतेरीयङ् आर्धधातुके विकल्प्यत इति'। 'आयादय आर्धधातुके वा' इत्यनेन। वचित्वेति। 'अनिदिताम्' इति नलोपः।

वक्त्वेति।' 'उदितो वा' इतीडभावः पक्षे। चकारो वाग्रहणस्य स्वरितत्व-विस्पष्टीकरणार्थः। तेनोत्तरसूत्रे काश्यपग्रहणस्य पूजार्थता विज्ञायते; अन्यथा हि तस्य विकल्पार्थता विज्ञायेत। तथा च द्वयोर्विभाषयोर्मध्यवर्त्तित्वान्नित्योऽयं विधिः स्यात्॥

तृषिमृषिकृशेः काश्यपस्य॥ 'ञितृषा पिपासायाम्', 'मृष तितिक्षायाम्', 'कृश तनूकरणे'॥

काश्यपग्रहणं पूजार्थमिति। 'काश्यपस्यैवैतद्विषयकं ज्ञानं नान्येषाम्' इत्य-साधारणज्ञानोद्भावनमेव पूजा। तस्य तत्पूजाद्वारेण शास्त्रस्यापि महार्थतोद्भावनलक्षणा पूजा कृता भवति। एवन्नाम शास्त्रस्य महार्थत्वं येन तथाविधा मुमुक्षवोऽप्याद्रियन्त इति। तेन विकल्पार्थं काश्यपग्रहणं कस्मान्न भवतीत्यत आह—वेत्येव हि वर्तत इति॥

'वा' इति वर्तते, 'सेट्' इति च। उश्च इश्च वी, वी उपधे यस्य स व्युपधः। उकारोपधादिकारोपधाच्च धातो रलन्ताद्धलादेः परः संश्च क्त्वा च सेटौ वा कितौ भवतः। द्युतित्वा, द्योतित्वा। दिद्युतिषते, दिद्योतिषते। लिखित्वा, लेखित्वा। लिलिखिषति, लिलेखिषति।

रल इति किम्? देवित्वा, दिदेविषति। व्युपधादिति किम्? वर्त्तित्वा, विवर्त्तिषते। हलादेरिति किम्? एषित्वा, एषिषिषति! सेडित्येव—भुक्त्वा, बुभुक्षते॥

## ऊकालोऽज्झ्रस्वदीर्घप्लुतः॥ २७॥

### पदमञ्जरी

*रलो व्युपधाद्धलादेः संश्च*॥ क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति कित्त्वे प्रतिषिद्धे सनोऽप्यकित्त्वे स्वतःसिद्ध उभयत्र विधिमुखेनेदं प्रवर्त्तत इत्याह—*वा कितौ भवत इति*। *दिद्योतिषते* इति। 'द्युतिस्वाप्योः संप्रसारणम्'। *एषिषिषतीति*। इटि कृते—'अजादेर्द्वितीयस्य'॥

*ऊकालोऽज्झ्रस्वदीर्घप्लुतः*॥ ऊः कालो यस्य स ऊकालः 'तपरस्तत्कालस्य' इति-

### न्यासः

रलो व्युपधाद्धलादेः संश्च॥ क्त्वाप्रत्ययस्य 'न क्त्वा सेट्' इति कित्त्वे प्रतिषिद्धे सनोऽप्यकित्त्वे स्वभावत एव व्यवस्थित उभयत्रेदं विधिमुखेनैव प्रवर्तत इति पक्षे कित्त्वं भवतीति।

विदिद्युतिषत इति। 'द्युतिस्वाप्योः संप्रसारणम्' इत्यभ्यासस्य संप्रसारणम्। एषिषिषतीति। 'इषु इच्छायाम्', इडागमे कृते 'अजादेर्द्वितीयस्य' इति द्वितीयस्यैकाचो द्विर्वचनम्। बुभुक्षत इति। 'हलन्ताच्च' इति नित्यं कित्त्वं भवति। लाघवार्थम् 'इणुपधात्' इति वाच्ये, इण्ग्रहणानि सर्वाणि परेण णकारेणेति ज्ञापनार्थं 'व्युपधात्' इत्युक्तम्। तेन लणित्यत्र यदुक्तम्—'इण्ग्रहणानि सर्वाणि परेण णकारेण' इति तदुपपन्नं भवति॥

ऊकालोऽज्झ्रस्वदीर्घप्लुतः। ऊः कालो यस्याचः स ऊकालः। ननु चायुक्तोऽयं निर्देशः, तथा हि—ऊ इति शब्दः, कालस्तु क्रिया, तत् कुतोऽत्र सामानाधिकरण्यम्? नैष दोषः; यस्माद् 'ऊ' इत्येतत्सहचरितायामुच्चारणक्रियायामिह साहचर्याद् 'ऊ' इत्येष शब्दो वर्त्तते, एवमप्ययुक्तम्; यतः 'ऊ' इत्येतत्सहचरितं यदुच्चारणं तदूकारस्यैव, नान्यस्याचः। तत् कथं सोऽन्यसम्बन्धिन्या क्रियया ऊकालः स्यात्, न हि यज्ञदत्तसम्बन्धिनीभिश्चित्रगवीभिर्देवदत्तश्चित्रगुर्भवति? अयमप्यदोषः; वत्यर्थस्येह विवक्षि-

'ऊ' इति त्रयाणामयं मात्रिकद्विमात्रिकत्रिमात्रिकाणां प्रश्लिष्ट-निर्देशः । 'ह्रस्वदीर्घप्लुतः' इति द्वन्द्वैकवद्भावे पुंल्लिङ्गनिर्देशः । ऊ ऊ ३

पदमञ्जरी

वन्निर्देशः समर्थनीयः । एतच्च संज्ञिनो विशेषणम्, तत्र च 'ऊ' इत्येकस्यैव शब्द-स्योच्चारणाद्विशेषणस्यैकत्वात् संज्ञाप्येकैवेति यश्चोदयेत् तं प्रत्याह--*ऊ इति त्रयाणामित्यादि* । प्रश्लेषणम् = प्रश्लिष्टम्, तेन निर्देशः=प्रश्लिष्टनिर्देशः । तेन विशेषणत्रयपरिच्छिन्नास्त्रयः संज्ञिन इत्यर्थः । प्रश्लेषणे प्रमाणमाह—*ह्रस्वेति* । ह्रस्वदीर्घप्लुत इति न तावदेका संज्ञा; गौरवादनावृत्तेश्च । अतस्तिसृणां संज्ञानां द्वन्द्वोऽयम् । न चैकस्यानेकसंज्ञाकरणे प्रयोजनमस्ति । लुगादिसंज्ञास्वपि तद्भा-वितत्वेन प्रत्ययादर्शनस्य भेद आश्रितः, प्रकारान्तरासम्भवाद् । इह तु निर्देश एव त्रयाणां सम्भवति । तस्मात्संज्ञानां त्रित्वात् संज्ञिनामपि त्रित्वमनुमीयत इति भावः । 'बहुवचननिरासार्थमेकवद्भावः' इत्युक्तम्, समाहारद्वन्द्व इत्यर्थः । 'स नपुंसकम्' इत्येतत्तु न भवतीत्याह—*पुंल्लिङ्गनिर्देश इति* । सौत्र इति भावः ।

न्यासः

तत्वात्, तस्य च विनापि वतिना गम्यमानत्वात् । परपदार्थेषु हि प्रयुज्यमानाः शब्दा वतिमन्तरेणापि वत्यर्थं गमयन्तीत्युक्तमेतत् । तदेतदुक्तम्भवति—'ऊ' इत्येतत्सहचरि-तयोच्चारणक्रियया तुल्योच्चारणक्रिया कालाख्या यस्याचः स ऊकाल इति । ननु च ऊकाल इत्येकः संज्ञी, संज्ञास्तु तिस्रः, ततो वैषम्यात् संख्यातानुदेशो न प्राप्नो-तीति यो मन्येत, तं प्रत्याह—ऊ इति त्रयाणामित्यादि । मात्रिकाणां त्रयाणामकः सवर्णे दीर्घत्वमेकादेशं कृत्वा 'ऊ' इति निर्देशः कृत इत्यर्थः । कुतः पुनरेतद् विज्ञा-यते—त्रयाणमेकः प्रश्लेषनिर्देश इति ? तिसृणां संज्ञानां विधानसामर्थ्यात् । न ह्येकस्य भिन्नप्रयोजनमन्तरेणानेकसंज्ञाविधानमर्थवद्भवति । न चेहैकस्यानेकसंज्ञाकरणे भिन्न-प्रयोजनमस्ति । 'ह्रस्वदीर्घप्लुत' इति यद्येक एवायं शब्दः संज्ञा स्यात्, लाघवार्थत्वात् संज्ञाकरणस्य, महत्याः संज्ञाया करणमयुक्तं स्यात् । किञ्च—आवृत्तिधर्माणः संज्ञा-शब्दाः प्रदेशेषु भवन्ति, न चायं समुदायः प्रदेशेष्वावर्त्यते, अपि तु प्रत्येकं ह्रस्वादि-शब्दाः । तस्मात् तेषां द्वन्द्वं कृत्वा निर्देश इति मत्वाह—ह्रस्वदीर्घप्लुत इत्यादि । द्वन्द्वैकवद्भावस्तु 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति वचनात् । ननु च द्वन्द्वैकवद्भावे 'स नपुंसकम्' इति नपुंसकत्वेन भवितव्यम्, तत् कथं पुंल्लिङ्गेन निर्देशः, सौत्रत्वा-न्निर्देशस्य । छन्दसि 'व्यत्ययो बहुलम्' इति लिङ्गव्यत्यय उक्तः । 'छन्दोवत्सूत्राणि भवन्ति' इत्यविरुद्धास्य पुंल्लिङ्गता । उऊऊ३ इत्यनया आनुपूर्व्यैषां प्रश्लेष इति दर्शयति । कुतः पुनरेष निश्चयः—एषैवैषामानुपूर्वीति ? एवं मन्यते—'विभाषा पृष्टप्रतिवचने हेः' इत्येकमात्रिकस्य हेः प्लुतविधानाज् ज्ञायते—न मात्रिकोऽन्त्य इति ।

ऊ३—इत्येवंकालोऽज् यथाक्रमं 'ह्रस्वदीर्घप्लुत'—इत्येवंसंज्ञो भवति। उकालो ह्रस्वः—दधि, मधु। ऊकालो दीर्घः—कुमारी, गौरी। ऊ३कालः प्लुतः—देवदत्ता ३ अत्र न्वसि।

पदमञ्जरी

प्रश्लेषे क्रममाह—*उ ऊ ऊ३ इत्येवं काल इति*। उकारादीनां परिच्छेदको यः कालो निमेषादिः, तत्काल इत्यर्थः। कुतः पुनरवसितमेष एव क्रम इति ? आदौ मध्ये वा त्रिमात्रे प्लुताश्रयः प्रकृतिभावः प्राप्नोति, तथा मध्येऽन्ते वा मात्रिके 'द्वन्द्वे घि' इत्येनद्बाध्येतेति चेत्, न; अनेन हि प्लुतसंज्ञा; ततश्चादौ मध्ये वा पठितस्य त्रिमात्रस्य प्लुतसंज्ञैव न, कुतः प्रकृतिभावः! यदि च मात्रिको मध्येऽन्ते वा स्यात्, ह्रस्वसंज्ञैव न स्यात् कुतो घिसंज्ञा! कुतस्तरां पूर्वनिपातः! एवं तर्हि ज्ञापकात्सिद्धम्, यदयम् 'विभाषा पृष्टप्रतिवचने हेः' इति हेः प्लुतं शास्ति, तज् ज्ञापयति—नान्ते मात्रिक इति। कथं योऽन्ते स प्लुतः? प्लुतस्य प्लुतवचनमनर्थकम्। अनन्तरतमप्लुतार्थमेतत्स्यादिति चेत्, न हि सत्यां गतौ परिभाषा बाध्या। यच्च 'सुपि च' इति दीर्घत्वं शास्ति, तज् ज्ञापयति—न मध्ये मात्रिक इति। कथं यो मध्ये स दीर्घः ? दीर्घस्य दीर्घवचनमनर्थकम्। यच्च 'ओमभ्यादाने' इत्योमः प्लुतं शास्ति, तज् ज्ञापयति—द्विमात्रिको नान्त्य इति। कथं योऽन्ते स प्लुतः ? प्लुतस्य प्लुतवचनमनर्थकम्।

*दधि, मध्विति*। रूपोदाहरणे। कुमारीत्यादि कार्योदाहरणम् 'हल्ङ्याब्भ्यः' इति दीर्घाश्रयः सुलोपो भवति। देवदत्त३ *अत्र न्वसीति*। 'अनन्त्यस्यापि

न्यासः

अन्त्यत्वे हि सति तस्य प्लुतसंज्ञा स्यात्। एवञ्च प्लुतस्य प्लुतविधानमनर्थकं स्यात्। द्विमात्रिकोऽप्यन्त्यो न भवति; 'ओमभ्यादाने' इति द्विमात्रिकस्य प्लुतविधानात्। तस्य चान्त्यत्वे हि सति यदि प्लुतसंज्ञा स्यात्, तदा च प्लुतस्य प्लुतविधानमनर्थकं स्यात्। तस्मादन्ते एकमात्रिकद्विमात्रिकौ न भवतः। मध्येऽप्येकमात्रिको न भवति, 'अतो दीर्घो यञि' इति 'सुपि च' इति च दीर्घविधानसामर्थ्यात्। यदि मध्य एकमात्रिकः स्यात् तदा तस्य दीर्घसंज्ञा स्यात्, दीर्घस्य दीर्घवचनमकिञ्चित्करं स्यात्, तस्मादादावेकमात्रिकत्वे हि सति पारिशेष्यान्मध्ये द्विमात्रिकः, अन्ते त्रिमात्रिक इति।

उ ऊ ऊ३ इति। अत्राप्युकारादिसहचरितायामुच्चारणक्रियायामुकारादयो वर्त्तन्ते। एवंकालोऽजिति प्रत्येकमेवाभिसम्बद्ध्यते। 'एवं' शब्दः सादृश्ये। तच्च सादृश्यं क्रियाश्रितत्वादुकारादिसहचरिता योच्चारणक्रिया तदपेक्षं विज्ञायते। तेनायमर्थो भवति—उकारसहचरितोच्चारणक्रियया सदृशकालो योऽच् स ह्रस्वसंज्ञो भवति; ऊकारसहचरितोच्चारणक्रियया सदृशकालो योऽच् स दीर्घसंज्ञो भवति; ऊ३कारसह-

कालग्रहणं परिमाणार्थम्; दीर्घप्लुतयोः ह्रस्वसंज्ञा मा भूत्।

### पदमञ्जरी

प्रश्नाख्यानयोः' इति प्लुतः। देवदत्त त्वमत्र भवसीति प्रश्नः। नुशब्दः प्रश्नं
द्योतयति। देवदत्तशब्दात्परस्य सोः 'रासजुषो रुः' इति रुत्वम्, 'अतो रोर-
प्लुतात्' इत्युत्वे प्रतिषिद्धे 'भोभगोअघोअपूर्वस्य योऽशि' इति यत्वम्, 'लोपः
शाकल्यस्य'। उकारोऽयमण्, तेन द्विमात्रयोरपि ग्रहणाद् ह्रस्वसंज्ञा प्राप्नोति। न
च दीर्घप्लुतसंज्ञाभ्यां बाधः, एकसंज्ञाधिकारादन्यत्र संज्ञानां समावेशाभ्युपगमाद्,
अत आह—*कालग्रहणमिति*। कालग्रहणं तावदुकारादिभिः प्रत्येकमभिसम्बध्यते,
ऊकाल इत्यस्मिन्वाक्ये सत्यपि सवर्णग्रहणे कालशब्दस्य न पुनः प्रत्येकपरि-
समाप्तिर्युज्यते, कुतः ? एकस्यैव श्रुतत्वात्। द्विमात्रत्रिमात्रौ हि संज्ञित्वेन
प्रतीयेते, न तु साक्षादुच्चरितौ। एवं चैकत्वाद्बहुव्रीहेरेक एव संज्ञी, तत्रैकस्य
विरुद्धकालद्वयासम्भवेन सवर्णग्रहणाभावाच्छ्रुत एवोकारः कालविशेषणमिति
कालग्रहणं संज्ञिनः परिमाणार्थम्।

यद्वा—ऊ अजित्येव कालार्थो लभ्यते, कथम् ? उकारादयोऽच्त्वं न व्यभि-
चरन्तीति नाच्त्वेन ते विशेष्यन्ते, अपि तु तैरच्। न चाज्मात्रस्योकारादित्व-
मुपपद्यत इति सामानाधिकरण्यान्यथानुपपत्त्या तत्सदृशस्याचः प्रतिपत्तिः। तत्र
च स्थानसाम्यमसम्भवान्न गृह्यते, प्रयत्नसाम्यं चाव्यभिचारीति कालसाम्यमेव

### न्यासः

चरितोच्चारणक्रियया सदृशकालो योऽच् स प्लुतसंज्ञो भवति। दधि, मध्विति रूपो-
दाहरणम्; कार्योदाहरणन्तु दधिच्छत्रम्, मधुच्छत्रमिति। 'छे च' इति ह्रस्वाश्रयस्तुक्।
कुमारी, गौरीति। एतदपि रूपोदाहरणम्; कार्योदाहरणं कुमारीच्छत्रम्, गौरीच्छत्र-
मिति। 'दीर्घात्' 'पदान्ताद्वा' इति वा तुक्। देवदत्ता३ अत्र न्वसीति कार्योदाहरणम्।
'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतः। देवदत्तशब्दात् परस्या विभक्तेः 'ससजुषो
रुः' इति रुत्वम्, 'अतो रोरप्लुतादप्लुते' इत्युत्वप्रतिषेधः कार्यः, 'भोभगोअघोअ-
पूर्वस्य' इति यकारः, तस्य 'लोपः शाकल्यस्य' इति यकारस्य लोपः।

ननु चोकारोऽयमण् गृह्यमाणः सवर्णान् गृह्णातीत्यत उकारेण दीर्घप्लुतयोर्ग्रहणे
सति तयोरपि ह्रस्वसंज्ञा भवतीत्यत आह—कालग्रहणमित्यादि। कालग्रहणे हि येषा-
मेताः संज्ञा विधीयन्ते तेषां यथाक्रममेकमात्रिकत्वद्विमात्रिकत्वत्रिमात्रिकत्वानि विशे-
षणानि लभ्यन्ते। तथा हि, कालग्रहणे सति प्रत्येकं वाक्यपरिसमाप्तौ क्रियमाणायां
त्रयो बहुव्रीहयो भवन्ति—उः कालो यस्य स उकालः, ऊः कालो यस्य स ऊकालः, ऊ३ः
कालो यस्य स ऊ३कालः। एषां यथाक्रममेकमात्रिकद्विमात्रिकत्रिमात्रिका अचोऽन्यपदार्थाः।
यस्मान् मात्रिक एवाचः 'उ' इत्येतत्सहचारिण्या उच्चारणक्रियायास्तुल्यकालः; एवं

आलूय, प्रलूय—'ह्रस्वस्य पिति कृति तुक्' इति तुङ् न भवति ।

अज्ग्रहणं संयोगाच्समुदायनिवृत्त्यर्थम्—प्रतक्ष्य, प्ररक्ष्य । ह्रस्वाश्रयस्तुङ् मा भूत् । तितउच्छत्रम्—'दीर्घात्' 'पदान्ताद्वा' इति विभाषा तुङ् मा भूत् ।

ह्रस्वदीर्घप्लुतप्रदेशाः—'ह्रस्वो नपुंसके प्रातिपदिकस्य', 'अकृत्सार्वधातुकयोर्दीर्घः', 'वाक्यस्य टेः प्लुत उदात्तः' ॥

पदमञ्जरी

ग्रहीष्यते, नार्थः कालग्रहणेन । तत्क्रियते श्रूयमाणेनैव कालं विशेषयितुमिति कालग्रहणं परिमाणार्थम् ।

*आलूयेति* । ह्रस्वाश्रयस्तुङ् न भवति । *तितउच्छत्रमिति* । असत्यज्ग्रहणे चद्वयसमुदायस्य प्रत्येकवर्णकालसंकलनया द्विमात्रत्वाद्दीर्घसंज्ञा स्याद् । यस्तु मध्येऽर्द्धमात्राकालः सवर्णकालो न भवतीति समुदायस्य द्विमात्रत्वं न व्याहन्तीति स्यादेव प्रसङ्गः । अज्ग्रहणे तु न भवति; अच्समुदायस्यानच्त्वात् । यद्यपि वर्णग्रहणे जातिग्रहणम्, सा तु जातिरेकैकव्यक्तिव्यङ्ग्या न समुदायव्यङ्ग्या, तेन दीर्घसंज्ञायामभावात् 'दीर्घात्' 'पदान्ताद्वा' इति तुग्विकल्पो न भवति । न च सत्यपि विकल्पे तेन मुक्ते ह्रस्वाश्रयस्तुग् लभ्यते; समुदाये कार्यमारभ्यमाणेऽवयवानां स्वकार्यं प्रत्यव्यापारात् ॥

न्यासः

द्विमात्रिक एवाच 'ऊ' इत्येतत्सहचारिण्या उच्चारणक्रियायास्तुल्यकालः; एवं त्रिमात्रिक एवाच 'ऊ३' इत्येतत्सहचारिण्या उच्चारणक्रियायास्तुल्यकालः । एवं च सति मात्रापरिमाणस्याचो ह्रस्वसंज्ञा विधीयमाना सत्यप्युकारेण दीर्घप्लुतयोर्ग्रहणे तयोर्न भवति, न हि तौ मात्रापरिमाणौ । तेन आलूय, परिणीयेत्यत्र ह्रस्वाश्रयस्तुङ् न भवति ।

प्रतक्ष्य, प्ररक्ष्येति । 'तक्षू त्वक्षू तनूकरणे', 'रक्ष पालने', 'कुगतिप्रादयः' इति समासे कृते 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् । तत्र परतो द्वयोरर्द्धमात्रयोर्हलोः संयोगसंज्ञिनोरुकालत्वमस्तीत्यसत्यज्ग्रहणे ह्रस्वसंज्ञा स्यात्, ततश्च ह्रस्वाश्रयस्तुक् प्रसज्येत ।

तितउच्छत्रमिति । अत्राकारोकारयोरचोः समुदायस्य ऊकालत्वाद् द्विमात्रिकत्वमस्तीति दीर्घसंज्ञा स्याद् । ततश्च 'पदान्ताद्वा' इति विकल्पितस्तुक् प्रसज्येत । अज्ग्रहणे तु सति दीर्घसंज्ञा न भवति, अच्समुदायस्याज्ग्रहणेनाग्रहणात् । ननु च सत्यामपि तस्यां समुदायाश्रयायां दीर्घसंज्ञायामवयवाश्रया ह्रस्वसंज्ञा भविष्यति ।

## अचश्च ।। २८ ।।

परिभाषेयं स्थानिनियमार्था । ह्रस्वदीर्घप्लुताः स्वसंज्ञया शिष्यमाणा अच एव स्थाने वेदितव्याः । वक्ष्यति—'ह्रस्वो नपुंसके प्रातिपदिकस्य' । रै–अतिरि । नौ–अतिनु । गो–उपगु ।

अच इति किम् ? सुवाग् ब्राह्मणकुलम् । 'अकृत्सार्वधातुकयोर्दीर्घः'—चीयते, श्रूयते । अच इति किम् ? भिद्यते । छिद्यते । 'वाक्यस्य टेः प्लुत उदात्तः' देवदत्ता३, यज्ञदत्ता३ । अच इति किम् ? अग्निची३त्, सोमसु३त्—तकारस्य मा भूत् ।

पदमञ्जरी

अचश्च ।। 'इको गुणवृद्धी' इत्यनेन समानमिदम् । स्वसंज्ञया विधाने नियमा-

न्यासः

तदाश्रयस्तुङ् नित्य एव, नैतदस्तिः परत्वाद् दीर्घाश्रयस्तुग्विकल्पः प्राप्नोति । न चैवंविधविषये पुनःप्रसङ्गविज्ञानमस्तिः यत्र पूर्वो विधिः प्रवर्त्तमानः परविधिविज्ञानं न बाधते तत्रैतद् भवति—'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति, इह तु नित्यो विधिः परविधिविकल्पविज्ञानं बाधते; नित्यविकल्पयोर्विरोधात् । ततश्च 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इति परिभाषयैव विकल्पः स्यात् । तस्मादज्ग्रहणं कर्त्तव्यम् ।।

अचश्च ।। परिभाषेयं लिङ्गवती स्थानिनियमार्था प्रदेशेषु 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्येवमादिषूपतिष्ठते, तदुपस्थाने च षष्ठीद्वयं प्रादुर्भवति; विशेषणविशेष्यभावं प्रति कामचारात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यत्राचा प्रातिपदिकं गृह्यमाणं विशिष्यते–अजन्तस्य प्रातिपदिकस्येति, न तु प्रातिपदिकेनाज् विशिष्यते । यदि हि प्रातिपदिकेनाज् विशिष्येत—प्रातिपदिकस्य योऽजिति, तदा मध्यस्थितस्याप्यचो ह्रस्वः स्यात् ।

सुवाग् ब्राह्मणकुलमिति । अचा तु प्रातिपदिके विशिष्यमाणे प्रातिपदिकस्यैवेत्येषा स्थानषष्ठी भवति, न चावयवषष्ठी; तेनालोऽन्त्यस्यैवाचो ह्रस्वो भवति । 'वाक्यस्य टेः प्लुत उदात्तः' इत्यत्र गृह्यमाणेन टिशब्देनाज्विशिष्यते—टेर्योऽजिति । तेन टेर्मध्यवर्त्तिनोऽप्यचः प्लुतो भवति । यदि त्वचा टिर्विशिष्यते–अजन्तस्य टेरिति, तदेहैव स्याद्—देवदत्ता३ इति; इह तु न स्याद्—अग्निचिदिति । चकारेणाजित्यनुकृष्यते, तस्य प्रयोजनमिहैव वक्ष्यति । अतिरि–इत्यादीन्युदाहरणानि 'एच इग्घ्रस्वादेशे' इत्यत्र व्युत्पादितानि । चीयते इति कर्मणि लकारः ।

स्वसंज्ञया विधाने नियमः। अजिति वर्त्तते, इह मा भूत्—द्यौः, पन्थाः, सः। द्युभ्याम्, द्युभिः। अत्र नियमो नास्ति॥

उच्चैरुदात्तः॥ २९॥

'अच्' इति वर्तते। उदात्तादिशब्दाः स्वरे वर्णधर्मे लोकवेदयोः

पदमञ्जरी

र्थमित्यत्र युक्तिमाह—*अजिति वर्त्तत इति*। ततश्च ह्रस्वादिशब्दा इहानुवृत्ता नाऽचमुपस्थापयन्ति, तस्य स्वयमुपस्थानादिति स्वरूपपदार्थका आश्रीयन्ते। तेन ह्रस्व इत्येवं योऽज्विधीयते सोऽचः स्थाने भवतीत्ययमर्थः सम्पद्यते। एवं दीर्घप्लुतयोः।

*द्यौरित्यादि*। 'दिव औत्' 'पथिमथ्यृभुक्षामात्', 'त्यदादीनामः', 'दिव उत्' इति औकारादयो न संज्ञया विधीयन्ते इति हल एव स्थाने भवन्ति॥

*उच्चैरुदात्तः*॥ ननूदात्तादयः शब्दा लोकवेदयोः प्रसिद्धा एव, तत्किं संज्ञाकरणेन, तत्राह—*उदात्तादिशब्दा इत्यादि*। सत्यं प्रसिद्धा एव, ते, कुत्र

न्यासः

संज्ञाविधाने नियम इत्यत्र युक्तिमाह—अजिति वर्त्तत इति। अज्ग्रहणे ह्यनुवर्त्तमाने ह्रस्वादिशब्दा अनुवर्तमाना अच एवोपस्थानं प्रति न व्याप्रियन्ते; तस्य स्वयमेवोपस्थित-त्वात्। ततश्च स्वरूपमात्रपदार्थकाः सन्तो विधीयमानस्याचो विशेषणतामुपयान्ति। तत्रैवमभिसम्बन्धः क्रियते—अः स्थानेऽज् भवति 'ह्रस्वदीर्घप्लुत' इत्येवं संज्ञया विधीय-मान इति। द्यौः, पन्थाः, स इति। एतानि 'इको गुणवृद्धी' इत्यत्र व्युत्पादितानि। एषु च यथायोगं 'दिव औत्' 'पथिमथ्यृभुक्षामात्' 'त्यदादीनामः' इत्येभिरौकारादयः स्वरूपेण विधीयमाना दीर्घादिसंज्ञया न विधीयन्त इति हल एव स्थाने ते भवन्ति, नाचः। द्युभ्याम्, द्युभिरित्यत्रापि 'दिव उत्' इत्युकारो ह्रस्वसंज्ञया न विधीयत इति हल एव स्थाने भवति, नाचः। ननु च द्यौरित्यादीनि त्रीण्युदाहरणानि 'इको गुणवृद्धी' इत्यनेनैव संज्ञाविधाननियमेन सिद्धानि, तत्र हि तस्याप्येतानि प्रत्युदाह-रणानि प्रागुपन्यस्तानि, तस्मान्नार्थ एतदर्थेन संज्ञया विधीयमानेन नियमेन? सत्यमेतत्; एवं मन्यते—द्युभ्याम्, द्युभिरित्येवमर्थं संज्ञाविधाने नियमः कर्त्तव्यः; न ह्युकारस्य गुणसंज्ञास्ति, नापि वृद्धिसंज्ञा; यतः पूर्वेणैव संज्ञाविधाननियमेनैतदपि सिद्ध्यति। तस्मादन्यार्थोऽयं संज्ञाविधाननियमः क्रियमाणो येऽपि विस्मरणशीलाः पूर्वस्य नियमस्य प्रयोजनं न स्मरन्तिताननुग्रहीतुम्—द्यौः, पन्थाः, स इत्येवमर्थोऽपि भवति॥

उच्चैरुदात्तः॥ उदात्तादयो लोकवेदयोः प्रसिद्धाः। तत् किं संज्ञाकरणेनेति यश्चोदयेत् तं प्रत्याह—उदात्तादिशब्द इत्यादि। आदिशब्देनानुदात्तस्वरितयोः परिग्रहः। एवकारो भिन्नक्रमो वर्णधर्मे इत्यस्यानन्तरं द्रष्टव्यः। लोकवेदयोरुदा-

प्रसिद्धा एव, त इह तद्गुणेऽचि परिभाष्यन्ते । उच्चैरुपलभ्यमानो योऽच् स उदात्तसंज्ञो भवति ।

पदमञ्जरी

प्रसिद्धाः ? धर्ममात्रे स्वरे, न तु तद्वत्यचि । ततश्च 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरिताख्यस्य धर्मस्यैव विधिः स्यात्, न च धर्मधर्मिणोः स्थान्यादेशभावः संभवतीति 'षष्ठी स्थानेयोगा' इत्यस्यानुपस्थानात् तदङ्गभूतम् 'तस्मादित्युत्तरस्य' इत्येतदपि न प्रवर्तेतेति पूर्वस्याप्यचः स्वरितप्रसङ्गः । स्यादेतत्—यथा 'कृपो रो लः' इत्यत्र ऋकारस्य रेफस्य लृकारस्थे लकारेऽपि विहिते कृत्स्नस्य वर्णस्य कृत्स्न एव वर्णो भवति, तद्वदिहापि धर्मिणोरेव स्थान्यादेशभावो भविष्यतीति युक्तं तत्र रेफलकारावृकारलृकारयोरात्मभूतौ न तावन्तरेण तावुच्चारयितुं शक्यौ, इह तूदात्तादिकमन्तरेणाप्यच उच्चारणं शक्यम्, दृष्टं च भाषायामिति धर्ममात्रमेवादेशः स्यात् । नन्वेवं स्थिते स्थान्यपि धर्म एवेति युक्त एव परिभाषाव्यापारः, सत्यम्; वर्णमात्रधर्मोऽयमुदात्तादिरिति व्यामोहनिवर्तनेनाचामेवायं धर्मो न हलामिति दर्शयितुमिदमारब्धम् । अत एव *वर्णधर्म* इति सामान्येनोक्तम् ।

*तद्गुणेऽचीति* । स उदात्तादिर्गुणो यस्य । एतेन वस्तुतोऽज्धर्मत्वमुदात्तादेर्दर्शितम् । तथा हि, अन्तरेणापि हलमच एष धर्मो दृश्यते–आ ते पितर्मरुतां सुम्नमेतु, यथा आकारस्य, नान्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति, कुत एव स्वरः ! यदि च हलामप्येते गुणास्ततो हलामचां च पृथक् स्वरोऽप्युपलभ्येत । यतस्तु खल्वचामेव स्वरमनुविदधति हलस्ततो निश्चीयते–अजुपरागादेषु स्वरप्रतिभासो न स्वत इति । अजुपरागश्च पूर्वपरसंनिधानेऽपि परेणैव भवति, न पूर्वेण ।

*परिभाष्यन्त इति* । केचिदाहुः—प्रदेशे लोकप्रसिद्ध्या हलामचां च ग्रहणे प्राप्तेऽचामेव ग्रहणं नियम्यते इति परिभाषेयमिति ।

अन्ये तु—धर्मिण्यप्रसिद्धत्वात् संज्ञात्वेन परिभाष्यन्ते इति व्याचक्षते । उच्चैरित्यस्याधिकरणप्रधानत्वात् क्रियापेक्षत्वाच्चाधिकरणस्योपलभ्यमान इत्युक्तम् ॥

न्यासः

त्तादयः शब्दा वर्णानां यो धर्मः = गुणस्तत्रैव प्रसिद्धाः, न तु तद्वत्यचि । तस्मादिह व्याकरण उदात्तादयो धर्मा यस्याचस्तद्गुणेऽचि संज्ञाप्यन्ते = परिभाष्यन्ते; अन्यथा प्रदेशेषूदात्तादिशब्दश्रवणाद् वर्णधर्म एव गृह्येत, न तद्वानजित्यभिप्रायः ।

उच्चैरिति श्रुतिप्रकर्षेऽस्ति—श्रुतिप्रकर्षवत्युच्चैर्भाषते, उच्चैः पठतीति । अस्ति च प्रमाणाधिकरणवाची—उच्चैः स्थितो देवदत्त इति, उच्चैर्नाम

उच्चैरिति च श्रुतिप्रकर्षो न गृह्यते—उच्चैर्भाषते, उच्चैः पठतीति; किं तर्हि ? स्थानकृतमुच्चत्वं संज्ञिनो विशेषणम्। ताल्वादिषु हि भागवत्सु स्थानेषु वर्णा निष्पद्यन्ते, तत्र यः समाने स्थाने ऊर्ध्व-

पदमञ्जरी

*श्रुतिप्रकर्षो न गृह्यत इति*। यदि गृह्येत उपांशुप्रयोगे न स्यादित्यव्याप्तिः, श्रुतिप्रकर्षस्य चानवस्थितत्वाद्यदेव कञ्चित्प्रत्युच्चैस्तदेव कञ्चित्प्रति नीचैरिति सर्वमुदात्तं स्यात्, सर्वं चानुदात्तमित्यतिव्याप्तिरव्यस्था च स्याद् इति भावः। *स्थानकृतमित्यादि*। उच्चता नाम प्रमाणविशेष ऊर्ध्वतापर्यायः, तत्र ताल्वादिवसंन्धो वर्णानामन्तरङ्ग इति स्थानसंबन्धिन्युच्चता गृह्यते, तत्कृतमुच्चैस्त्वं संज्ञिनो विशेषणम्। ननु पूर्वमुच्चैरुपलभ्यमान इति ताल्वादिस्थानवृत्तिरुच्चैः-शब्दो दर्शितः, इह तूच्चैःस्थाननिष्पन्नत्वाद् अजेवोच्चैरित्युच्यते इति उक्तिविरोधः, न; पूर्वमक्षरार्थ उक्तः, इह तु वस्त्वर्थो व्याख्यातः। ननु चोच्चैःस्थान उपलभ्यमान इत्याश्रितेऽपि प्रांशुपुरुषोच्चारितोऽनुदात्तोऽप्युदात्त एव स्याद्, वामनपुरुषोच्चारित उदात्तोऽप्यनुदात्तः स्यात्; तत्रान्योऽन्यमुच्चतानीचतायोगाद्, अत आह—*ताल्वादिषु हीति*। ताल्वादीनि स्थानानि भागवन्ति, भागाश्चौत्तराधर्येण व्यवस्थिताः। *तत्र यः समान इति*। एकपर्यायोऽयं समान-

न्यासः

प्रमाणम्, तस्य यदधिकरणं तदिहोच्चैःशब्देनोच्यते। तदिह द्वितीयस्योच्चैः-शब्दस्यार्थो गृह्यते, नेतरस्येति दर्शयितुमाह—उच्चैरिति। उच्चैर्भाषते इत्येवमादौ तु वाक्ये प्रयुक्तस्योच्चैःशब्दस्य योऽर्थः श्रुतिप्रकर्षः स उच्चैरित्यत्र न गृह्यते। यदि गृह्येत, उपांशुप्रयोग उदात्तादिसंज्ञा न स्यात्; प्रकर्षाभावात्, प्रकर्षस्यानवस्थितत्वादुदात्तादयो न विशिष्येरन्। य एव हि कञ्चित् प्रत्युच्चैर्भवति, स एव हि कञ्चित्प्रति नीचैर्भवति। एवञ्च सर्वमुदात्तं स्यात्, अनुदात्ततमोऽपि चेष्यत इत्यभिप्रायः।

स्थानकृतमित्यादि। उच्चता नाम प्रमाणविशेषः, तदधिकरणभूतस्थानमुच्चैर्भवति। एवञ्च सर्वमुदात्तं न स्यात्। अनुदात्तमुच्चैरुच्यत इत्यर्थः।

भागवत्स्विति। भागा अवयवा येषां तानि भागवन्ति। ते भागास्ताल्वादिषु स्थानेष्वौत्तराधर्येण व्यवस्थिताः। स्थानमुच्चैःशब्देनोच्यते, तत् कुतः संज्ञिन उच्चैस्त्व विशेषणम् ? उच्चैःस्थाननिष्पन्नत्वात्। तत्र समाने स्थान उच्चैरूर्ध्वभागे यो निष्पन्नः स उदात्तसंज्ञो भवति। यदि स्थाने य ऊर्ध्वभागनिष्पन्नोऽच्, स उदात्तसंज्ञो भवतीत्येतावदुच्यते, एवञ्च स एवानवस्थितदोषः। तथा हि—अल्पशरीरेषु य एव ताल्वादिभाग उच्चैर्भवति, स एव महाशरीरेषु ताल्वादिभागापेक्षया नीचैर्भवति। अतः 'समान' इत्येतत् स्थानविशेषणमुक्तम्। एतच्च लघ्वर्थत्वात्

भागनिष्पन्नोऽच् स उदात्तसंज्ञो भवति। यस्मिन्नुच्चार्यमाणे गात्राणामायामः = निग्रहो भवति, रूक्षता = अस्निग्धता स्वरस्य, संवृतता कण्ठविवरस्य। ये, ते, के।

उदात्तप्रदेशाः—'आद्युदात्तश्च' इत्येवमादयः॥

नीचैरनुदात्तः॥ ३०॥

'अच्' इति वर्तते। नीचैरुपलभ्यमानो योऽच् सोऽनुदात्तसंज्ञो

पदमञ्जरी

शब्दः। तेनायमर्थः—एकस्मिंस्ताल्वादिके स्थाने ऊर्ध्वावरभागयुक्ते ऊर्ध्वभागेनोच्चार्यमाणोऽजुदात्तसंज्ञो भवति। एवं चोच्चैरित्यस्योर्ध्वभाग इत्यर्थः। सर्वश्चायमर्थो लोकप्रसिद्धेरेव लभ्यते, सूत्रं तु व्यामोहनिवृत्त्यर्थम्। ऊर्ध्वभागनिष्पत्तेरप्रत्यक्षत्वात् तन्निश्चये लिङ्गमाह—*यस्मिन्निति*। *आयाम* इत्यस्य विवरणं *निग्रहः*। रूक्षतेत्यस्य विवरणम् *अस्निग्धतेति*। *संवृततेति*। अणुता। अत एव वायुः शनैर्निष्क्रामन् गलावयवान् शोषयतीति स्वरस्य रूक्षता भवति। ये ते के इति। यत्तत्किंभ्यो जसि त्यदाद्यत्वम्, 'जसः शी', आद्गुणः, 'एकादेश उदात्तेनोदात्तः'॥

नीचैरनुदात्तः॥ *अजिति वर्तते इति*। तेन हल् स्रंसनधर्मेणानुदात्तसंज्ञो न भवति,

न्यासः

संज्ञाकरणस्यैकाक्षरायां संज्ञायां कर्तव्यायामनेकाक्षरसंज्ञाकरणाल्लभ्यते। ग्रन्थाधिक्याद्र्थाधिक्यं भवतीति। ननु च ग्रन्थाधिक्यादत्र कश्चिदाचार्यस्याधिकोऽर्थोऽभिप्रेत इत्येतावन्मात्रं प्रतीयते, समानत्वमित्ययोऽर्थविशेषः कुतो लभ्यते? अविच्छिन्नादुपदेशपारम्पर्यात्। तत् पुनः समानत्वं वक्तृभिन्नत्वाद् वेदितव्यम्, न तु ताल्वादिस्थानस्याभिन्नत्वात्; अन्यथा तालव्यमेवापेक्ष्योदात्तः स्यात्, न तु कण्ठादीन्। वक्तुरभेदात् तद्द्वारेण भिन्नानामपि ताल्वादीनां समानत्वेऽपि विज्ञायमान एव दोषो न भवति। किंलक्षणः पुनरसावुच्चभागनिष्पन्नोऽजित्याह—यस्मिन्नित्यादि। आयाम इत्यस्य विवरणं निगृह इति। निग्रहः = स्तब्धता। संवृतकण्ठता=कण्ठविवरस्य संवृतता। अतएव शनैर्निष्क्रामन् वायुर्गलावयवान् शोषयति। रूक्षता भवत्यस्निग्धता।

ये ते के इति। यत्तत्किंशब्देभ्यस्त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, 'जसः शी', 'आद्गुणः'। अत्र प्रातिपदिकस्वरेण प्रकृतिरुदात्ता। 'अनुदात्तौ सुप्पितौ' इति विभक्तिस्वरः। एकादेशस्तु 'एकादेश उदात्तेनोदात्तः' इति।

नीचैरनुदात्तः॥ अन्ववसर्ग इत्यस्य विवरणं मार्दवमिति। शैथिल्यमित्यर्थः।

भवति । समाने स्थाने नीचभागे निष्पन्नोऽच् अनुदात्तः । यस्मिन्नु-च्चार्यमाणे गात्राणामन्ववसर्गः = मार्दवम् भवति, स्वरस्य मृदुता = स्निग्धता, कण्ठविवरस्योरुता = महत्ता । त्व-सम-सिम-नेमेत्यनुच्चानि । नमस्ते रुद्र नीलकण्ठ सहस्राक्ष ।

अनुदात्तप्रदेशाः—'अनुदात्तौ सुप्पितौ' इत्येवमादयः ॥

समाहारः स्वरितः ॥ ३१ ॥

'अच्' इति वर्तते । उदात्तानुदात्तस्वरसमाहारो योऽच् स स्वरित-संज्ञो भवति । सामर्थ्याच्चात्र लोकवेदयोः प्रसिद्धौ गुणावेव वर्णधर्मा-

पदमञ्जरी

*अन्ववसर्ग* इत्यस्य विवरणं *मार्दवमिति*, शैथिल्यमित्यर्थः । *मृदुतेत्यस्य स्निग्धतेति* । *उरुतेत्यस्य महत्तेति* । महत्त्वादेव च शीघ्रं वायोर्निष्क्रमणाद्गलावयवानामशोष-णात्स्वरस्य स्निग्धता भवति । *अनुच्चानीति* । सर्वादावेवमेव पठात् । फिषि तु 'सिमस्याथर्वणे' इत्यन्त उदात्त इत्युक्तम् । अनाथर्वणेऽपि तुच्छन्दस्यन्तोदात्तत्वं दृश्यते, आद्रात्री वासस्तनुते सिमस्मै, उच्छुक्रमजते सिमस्मादिति, नमस्ते रुद्रेति, 'तेमयावेकवचनस्य' इत्यत्र 'अनुदात्तं सर्वम्' इत्यधिकारात्तेशब्दोऽनुदात्तः । रुद्रा-दयोऽप्यामन्त्रितनिघातेन । पदकाले चानुदात्तस्य श्रवणम् । संहितायां तु 'स्वरि-तात्संहितायाम्' इत्यैकश्रुत्यं भवति ॥

*समाहारः स्वरितः* ॥ *सामर्थ्याच्चात्रेति* । पारिभाषिकयोरुदात्तानुदात्तयोरचोः

न्यासः

मृदुतेत्यस्य विवरणं स्निग्धतेति । उरुतेत्यस्यापि महत्तेति । महत्त्वादेव कण्ठविवरस्य पुनः शीघ्रं वायुर्निष्क्रामन् गलावयवान्न शोषयतीति । अतः स्वरस्य स्निग्धता भवति । त्व-सम-सिम-नेमेत्यनुच्चानीति सर्वादिष्वेव पठ्यन्ते । अनुच्चानि अनुदात्तानीत्यर्थः । नमस्ते रुद्रेत्यादि । तेशब्दः 'तेमयावेकवचने' इति 'अनुदात्तं सर्वमपादादौ' इत्य-धिकारादनुदात्तः । रुद्रादयोऽपि 'आमन्त्रितस्य च' इत्यनेनाष्टमिकेन सर्वेऽनुदात्ता भवन्तीति ॥

समाहारः स्वरितः ॥ उदात्तानुदात्तशब्दावविशेषयोः संज्ञे । संज्ञा हि प्रदेशे-पूच्चारिताः संज्ञिनं प्रत्याययन्ति । ताभ्यामिहानुवृत्ताभ्यामुदात्तानुदात्तयोरचोरुपस्थापि-तयोः प्रत्ययः । तस्मात् समाहारात्मकस्याचः स्वरितसंज्ञा विधीयते । समाहारशब्दश्च समाहरणं समाहार इति भावसाधनोऽयं लोके समुदाये रूढः । न चोदात्तानुदात्ता-त्मकः कश्चिदच्समुदायः सम्भवतीति, ततश्च संज्ञिनोऽसम्भवात् संज्ञापि न सम्भवतीति यश्चोदयेत् , तं प्रत्याह—सामर्थ्याच्चेत्यादि । उच्यते चेदम्—उदात्तानुदात्तसमाहारः स्वरित

वुदात्तानुदात्तौ गृह्येते, नाचौ । तौ समाह्रियेते यस्मिन्नचि तस्य 'स्वरितः' इत्येषा संज्ञा विधीयते । शिक्यम् , कन्या, सामन्यः, क्व ।

स्वरितप्रदेशाः–'तित्स्वरितम्' इत्येवमादयः ॥

**तस्यादित उदात्तमर्धह्रस्वम् ॥ ३२ ॥**

पदमञ्जरी

समाहाररूपस्याचः कचिदप्यसम्भवः सामर्थ्यम् । ननु च समाहरणं समाहारः, विप्रकीर्णानामेकत्र राशीकरणमेकधर्मयोर्योगो वा, यथा—पञ्चपूली, षण्णगरी दृष्टेति । तत्र पूर्वो मूर्त्तानामेव, उत्तरस्तु धर्मयोरपि सम्भवति; किं तु अचा सामानाधिकरण्यं न घटते, न हि वर्णधर्मयोरुदात्तानुदात्तयोः समुदायरूपः कश्चिदज् भवतीत्यत आह—*तौ समाह्रियेते अस्मिन्नचीति* । नानेनाधिकरणसाधनत्वं समाहारशब्दस्य दर्शितम् । तत्र हि 'करणाधिकरणयोश्च' इति ल्युटा भवितव्यम् । वासरूपविधिश्च नास्ति; क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात् । तस्मादर्थकथनमात्रमेतत् । सामानाधिकरण्यं त्वर्शआदित्वादच्प्रत्ययान्तत्वेन समर्थनीयम् । *शिक्यम्, कन्येति* । 'शिल्पशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इति फिट्सूत्रेणान्तःस्वरितत्वम् । *सामान्य इति* । सामसु साधुः 'तत्र साधुः' इति यत्, 'तित्स्वरितम्' । *क्वेति* । 'किमोऽत्', 'क्वाति' ॥

*तस्यादित उदात्तमर्धह्रस्वम्* ॥ आदौ = आदितः, सप्तम्यन्तात्तसिः । *अर्द्धह्र-*

न्यासः

संज्ञो भवतीति, न च पारिभाषिकोदात्तानुदात्तसमाहारात्मनोऽचः सम्भवोऽस्ति । तत्र सामर्थ्याल्लोकवेदप्रसिद्धौ यौ धर्मावुदात्तानुदात्तौ तावेव गृह्येते; नाचौ । नन्वेवमपि स एव दोषः, लोके प्रसिद्धोदात्तानुदात्तसमाहारात्मकस्याप्यचोऽसम्भवादित्याह—तौ समाह्रियेते यस्मिन्नित्यादि । न हि लोकप्रसिद्धोदात्तानुदात्तात्मनोऽच एषा संज्ञा विधीयते, कस्य तर्हि ? लोकवेदप्रसिद्धावुदात्तानुदात्तौ समाह्रियेते यस्मिन्नचि तस्य । सम्भवति चैकस्मिन्नप्यचि तयोः समाहार इति कुतः संज्ञिनोऽसम्भवः ! 'समाह्रियेते यस्मिन्' इति ब्रुवताऽधिकरणसाधनोऽयं समाहारशब्दो न भावसाधन इति दर्शितम् । समाह्रियेते = संहन्येते, सहितावुपलभ्येते इत्यर्थः । शिक्यमिति । 'पूञो यण्णुग्ह्रस्वश्च' इति यदिति वर्तमाने 'श्नसेः शि कुट् किच्च' इति श्रंसतेर्यत्प्रत्यये शिशब्दादेशे कुडागमे च कृते रूपम् । तित्स्वात् स्वरितत्वम् । कन्येति । 'तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः' इत्यन्तःस्वरितत्वम् । सामन्य इति । सामनि साधुः । 'तत्र साधुः' इति यत्प्रत्ययः । क्वेति किम्शब्दात् सप्तम्यन्तात् 'किमोऽत्' इत्यत् प्रत्ययः । 'क्वाति' इति क्वादेशः ॥

तस्यादित उदात्तमर्धह्रस्वम् ॥ आदौ = आदितः, सप्तम्यर्थे तसिः । अयमेव

'उदात्तानुदात्तस्वरसमाहारः स्वरितः' इत्युक्तम्। तत्र न ज्ञायते—कस्मिन्नंशे उदात्तः? कस्मिन्नंशेऽनुदात्तः? कियान्वा उदात्तः? कियान्वा अनुदात्तः इति? तदुभयमनेनाख्यायते। तस्य स्वरितस्य आदावर्धंह्रस्व-मुदात्तम्, परिशिष्टमनुदात्तम्। 'अर्धंह्रस्वम्' इति चार्धंमात्रोपलक्ष्यते।

ह्रस्वग्रहणमतन्त्रम्। सर्वेषामेव ह्रस्वदीर्घप्लुतानां स्वरितानामेष स्वरविभागः। शिक्यमित्यत्रार्द्धमात्रा आदित उदात्ता, अपरार्धमात्रा अनुदात्ता, एकश्रुतिर्वा। कन्या इत्यत्रार्द्धमात्राऽऽदित उदात्ता,

पदमञ्जरी

*स्वमिति*। 'अर्द्धं नपुंसकम्' इति समासः। ह्रस्वशब्द उभयलिङ्गः—'ह्रस्वो नपुंसके', 'ह्रस्वं लघु' इति। तदिह परवल्लिङ्गत्वेन नपुंसकत्वम्। उक्तपरिमाणस्याचो ह्रस्वसंज्ञा कृतेति यत्रैव तस्यार्धमिति दीर्घप्लुतयोरेतद्विभागवचनं न स्यादित्याशङ्क्याह—*अर्द्धह्रस्वमिति*। चेत्यादि। ह्रस्वस्य हि मात्रा भवति अतोऽर्द्धह्रस्वग्रहणेनार्द्धमात्रोप-लक्ष्यते। इह प्रकृतत्वादेव स्वरितस्य विभागाख्यानसिद्धे तस्येति वचनं स्वरित-मात्रपरिग्रहार्थम्। यदि चार्द्धह्रस्वग्रहणमर्द्धमात्रोपलक्षणं तत्र स्वरितमात्रपरिग्र-होऽर्थवान् भवति।

*ह्रस्वग्रहणमतन्त्रमिति*। अप्रधानम् उपलक्षणत्वाद्, यथा—काकेभ्यो दधि रक्ष्यतामित्यत्र काकाः। नन्वेवमप्याष्टमिकस्वरितस्य विभागो न सिद्ध्यति,

न्यासः

निर्देशो ज्ञापकः—'आद्यादिभ्यस्तसिर्भवति' इत्यत्र। तेन तसिप्रकरणे 'आद्यादिभ्यः उपसंख्यानम्' इत्येतन्न वक्तव्यं भवति। अर्द्धह्रस्वमिति। ह्रस्वस्यार्द्धमित्यर्थः। 'अर्धं नपुंसकम्' इति समासः, ततश्च 'परवल्लिङ्गम्' इत्यादिना पुंल्लिङ्गेन भवितव्यम्, ह्रस्वशब्दस्य पुंल्लिङ्गत्वात्, नैतदस्ति; ह्रस्वशब्दो हि प्रमाणविशेषं गुणमुपादाय प्रवृत्तः, 'गुणवचनानामाश्रयलिङ्गवचनानि भवन्ति' इति गुणवचनत्वाच् शुक्लशब्द इव ह्रस्वशब्दस्त्रिलिङ्गः। 'ह्रस्वः' इति मात्रिकस्य संज्ञा कृता, तस्यैव विभागः स्यात्, न तु दीर्घप्लुतयोरित्याशङ्क्याह—अर्द्धह्रस्वमित्यादि। ह्रस्वस्यार्द्धमर्द्धमात्रा भवति, अतोऽर्द्धह्रस्वग्रहणेनार्द्धमात्रोपलक्ष्यते। तत एव च तस्येत्युक्तम्। त्रयाणां ह्रस्वदीर्घ-प्लुतानां स्वरितानां निर्देशार्थम्। यदि चार्द्धह्रस्वग्रहणमर्द्धमात्रोपलक्षणम्, अतस्त्रयाणां निर्देशोऽर्थवान् भवति; नान्यथा।

ह्रस्वग्रहणमतन्त्रमिति। अतन्त्रमप्रधानम्, उपलक्षणार्थत्वात्। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकाः। तेन सर्वेषामेव ह्रस्वादीनामेष स्वरविभागो भवति। नन्वेव-मप्याष्टमिकस्य स्वरितस्य विभागो न सिध्यति, तस्यासिद्धत्वात्, नैतदेवम्; यस्मात्

अध्यर्धमात्रा अनुदात्ता। माणवका३ माणवकेत्यत्रार्धमात्राऽऽदित उदात्ता, अर्धतृतीयमात्रा अनुदात्ता॥

एकश्रुति दूरात्संबुद्धौ॥ ३३॥

त्रैस्वर्ये पदानां प्राप्ते दूरात्संबुद्धावैकश्रुत्यं विधीयते। एका श्रुतिर्यस्य तदिदमेकश्रुति। एकश्रुति वाक्यं भवति। दूरात्संबोधयति

पदमञ्जरी

तस्यासिद्धत्वात्, नैष दोषः; इत आरभ्य नव सूत्राणि असिद्धकाण्डे 'उदात्तादनुदात्तस्य' इत्यस्मात्पराणि पठितव्यानि, किं प्रयोजनम्? इदं तावद्विभागाख्यानमाष्टमिकस्यापि भवति। उत्तरत्रापि प्रयोजनं तत्र तत्र वक्ष्यामः।

*एकश्रुतिर्वेति*। उदात्तभागस्य पटुत्वात्पटुत्वकृतो विकल्पः। पटुत्वे हि तदुपरागात्तद्रूपतामिवापन्नो नानुदात्तव्यपदेशमर्हति, नाप्युदात्तव्यपदेशम्; उपरागमात्रत्वात्। तेन भेदतिरोधानलक्षणमैकश्रुत्यं परो भागः प्रतिपद्यते। अन्वर्थं वा एकश्रुतित्वम्, पूर्वभागश्रुतेरेकाऽभिन्नाकारा श्रुतिरस्येति कृत्वा।

*अध्यर्धमात्रानुदात्तेति*। एकश्रुतिर्वेति नोक्तम्; पूर्वानुसारेण गम्यमानत्वात्, लघुना वा महतोऽनुपरागात्। *माणवका३ माणवकेति*। 'स्वरितमाम्रेडितेऽसूया' इति प्लुतः स्वरितः॥

*एकश्रुति दूरात्संबुद्धौ*॥ इह यद्यप्यामन्त्रितान्तस्य पदस्याप्यभिमुखीकरणं प्रति सामर्थ्यम्, तथापि ह्यर्थविशेषस्य कस्यचिदनुष्ठेयतया। संबोधना=संबुद्धिः, अन्तर्भावितण्यर्थो बुद्धिः, तथा च संबोधयति येनेति णिच् प्रयुक्तः, तत्र च वाक्यस्यैव करणभावो न पदस्येति मत्वाह—*एकश्रुति वाक्यं भवतीति*। कतरत्पुनस्त-

न्यासः

परविधिः पूर्वविधावसिद्धः। न चायं विधिः, किं तर्हि? तस्य विहितस्य विभागाख्यानार्थः। अथ वा—'न मु ने' इत्यत्र नेति योगविभागात् सिद्धं भवति। एकश्रुतिर्वेति। पूर्वो भागोऽयमुदात्तः पटुतरः। तेनोपरज्यमानस्तद्रूपतामिवापन्नः परो भागः स्फटिकमणिरिवोपधानेनोपरक्तः शुद्धेनोदात्तेन भिन्नश्रुतिकत्वादनुदात्तव्यपदेशं नार्हति। उदात्तव्यपदेशमपि नार्हति; उपरागमात्रत्वात्। तस्मादेकश्रुतिरिति केचित्।

अन्ये त्वाहुः—पूर्वेण भागेनानुपजातरूपातिशयेन नोपरज्यते यदोत्तरभागस्तदा स्वेन रूपेणप्रतिभानादनुदात्त इति व्यपदिश्यते। यदा तूपधानेन स्फटिकमणिरिव पूर्वेण भागेन पटीयसोदात्तेनाभिभूयानुरज्यमानस्तद्रूपतामिवोपपद्यते तदैकश्रुतिरिति व्यपदिश्यते। पूर्वभागश्रुतेरभिन्नैका तुल्याकारा श्रुतिर्यस्येति कृत्वा। न हि तदानीं पूर्वोत्तरयोः स्वरितश्रुतिं प्रति कश्चिद् भेदोऽस्ति; द्वयोरप्युदात्तगुणवत्तया प्रतीयमानत्वादिति॥

एकश्रुति दूरात् सम्बुद्धौ॥ एकश्रुति वाक्यं भवतीति। वाक्यग्रहणेन पदपदैक-

येन वाक्येन तत्संबोधनं संबुद्धिः, नैकवचनं संबुद्धिः । स्वराणामुदात्तादीनामविभागो भेदतिरोधानमेकश्रुतिः । आगच्छ भो माणवक देवदत्ता३ ।

पदमञ्जरी

दित्यत आह—*दूरादिति संबोधनं संबुद्धिरिति* । अनेनान्वर्थस्य संबुद्धिशब्दग्रहणं न पारिभाषिकस्येति दर्शयति । पारिभाषिकस्य हि ग्रहणे, देवा ब्राह्मणा इत्यत्र न स्यात् । अन्वर्थग्रहणं च दूरादित्यनेन सम्बन्धाल्लभ्यते, न ह्यामन्त्रितैकवचनस्य दूरत्वमदूरत्वं वा सम्भवति । संबोधनस्य तु क्रियारूपत्वाद् अपादानतया दूरादिति विशेषणसम्भवात् । दूरत्वं च न देशस्वरूपागतमाश्रीयते, अनवस्थितत्वात्; किन्तु सम्बोधनक्रियापेक्षया दूरत्वम् । यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोध्यमानेन न श्रूयते, किन्त्वधिकं प्रयत्नमपेक्ष्यते, तत्संबुद्धौ दूरं भवति । *स्वराणामित्यादि* । एकश्रुति-स्वरूपाख्यानम्, *भेदतिरोधान*मित्यनन्तरोक्तस्यैव विवरणम् ।

*आगच्छेत्यादि* । दूराद्धूते वाक्यस्य टेः प्लुत उदात्तः, परिशिष्टमेकश्रुति । ननु च प्लुतैकश्रुत्योर्द्वयोरपि दूरात्संबोधनं द्योत्यमिति फलैक्याद्विकल्पो युक्तः, कथं

न्यासः

देशयोर्निरासं करोति; तयोः सम्बोधनं प्रत्यसामर्थ्यात् । वाक्यस्य सम्बुद्धौ कर्तव्यायां करणभावोपगमादस्ति सामर्थ्यम् । ततस्तस्यैकश्रुत्यं विधीयते । कुतः पुनस्तद्वाक्यमित्याह—दूरात् सम्बोधयति येनेति । एतेन सम्बुद्धिं प्रति वाक्यस्य करणभावो दर्शितो भवति । दूरादिति—'दूरान्तिकार्थेभ्यो द्वितीया च' इति पञ्चमी । सम्बोधनं सम्बुद्धिरित्यादिना सम्बुद्धिरित्यन्वर्थग्रहणम्, न पारिभाषिकं सम्बुद्धिग्रहणमिति दर्शयति । यदि पारिभाषिक्याः सम्बुद्धेर्ग्रहणं स्यात् तदा 'देवा ब्रह्माणः' इत्यत्रैकश्रुत्यं न स्यात्; पारिभाषिक्याः सम्बुद्धेरसत्त्वात् । अन्वर्थग्रहणे तु भवति; सम्बोधनलक्षणक्रियारूपायाः सम्बुद्धेरिहापि विद्यमानत्वादिति भावः । कुतः पुनरेतदन्वर्थग्रहणं व्यवसितम् ? दूरग्रहणात् । अन्वर्थग्रहणे दूरादित्यनेन सम्बुद्धिरुत्पद्यते । दूरात् सम्बोधने कर्तव्य इति । तेनार्थवद् भवति दूरशब्दस्योपादानम् । पारिभाषिक्यास्तु ग्रहणे तदसम्बद्धमेव स्यात् । न ह्यामन्त्रितविभक्तेर्दूरत्वमस्ति । दूरत्वञ्च यद्यप्यनवस्थितम्, तथापि यत्र प्राकृतप्रयत्नसंस्थापितं वचनं न श्रूयते, तदिह दूरं वेदितव्यम् । स्वराणामित्यादि । एकश्रुतिस्वरूपाख्यानमविभाग इति । भेदतिरोधानमित्यनन्तरं विवरणम् । उदात्तादिस्वरविशेषानुपलब्धिरकारादिवर्णमात्रावबोध एकश्रुतिरित्युक्तं भवति । आगच्छ भो माणवक देवदत्ता३ इति । 'दूराद्धूते च' इत्यत्रैवार्थे प्लुतः, स चोदात्तः; 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकारात् । तस्यै-

दूरादिति किम् ? आगच्छ भो माणवक देवदत्त ॥

**यज्ञकर्मण्यजपन्यूङ्खसामसु ॥ ३४ ॥**

त्रैस्वर्येण वेदे मन्त्राः पठ्यन्ते, तेषां यज्ञक्रियायामपि तथैव प्रयोगे प्राप्ते एकश्रुतिर्विधीयते, जपन्यूङ्खसामानि वर्जयित्वा । यज्ञकर्मणि मन्त्राणामैकश्रुत्यं भवति । अग्निमूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वतो३म् ।

पदमञ्जरी

समावेशः ? उच्यते, वाक्यमेव प्रतिपादकत्वात् संबुद्धौ करणं प्लुतैकश्रुतीत्यस्यैव संस्कारमात्रम्, यथा—विषयग्रहणे चक्षुष उन्मीलनादि, तत्कृतः समानफलत्वमिति वाक्यापेक्षया च समावेशः। अन्त्याजपेक्षया तु बाध्यबाधकभाव एव। प्रत्युदाहरणे त्रैस्वर्यमेव भवति। तत्राङ् 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तः। गच्छेति तिङन्तस्य 'तिङ्ङतिङः' इति निघातः। भोःशब्दः 'निपाता आद्युदात्ताः' इति आद्युदात्तः, शेषयोरामन्त्रितनिघातः ॥

*यज्ञकर्मण्यजपन्यूङ्खसामसु* ॥ *ऐकश्रुत्यमिति* । बहुव्रीहेर्भावप्रत्ययः,चातुर्वर्ण्यादित्वाद्वा कर्मधारयात्स्वार्थे ष्यञ् ।

न्यासः

कश्रुत्योदात्तस्य समावेश इष्यते, प्लुतनिवृत्त्यर्थम् । यथा चासौ लभ्यते तथा वक्ष्यति । प्रत्युदाहरणे त्रैस्वर्यमेव भवतीति तत्र आकारः 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्युदात्तः । गच्छेत्यस्य 'तिङ्ङतिङः' इति निघातः । भो इति 'निपाता आद्युदात्ताः' इत्युदात्तः । माणवक–देवदत्तशब्दयोः 'आमन्त्रितस्य च' इति निघातः ॥

**यज्ञकर्मण्यजपन्यूङ्खसामसु ॥** अग्निर्मूर्धा दिव इत्यादि । 'अगि रगि गत्यर्थाः' । 'वीज्याज्वरिभ्यो निः' इति वर्त्तमाने 'अङ्गेर्नलोपश्च' इति निप्रत्ययः, नलोपश्च भवति । अग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः । 'मुर्वी बन्धने', 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इत्यतः कनिन्निति वर्त्तमाने 'श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्' इति मूर्धन्शब्दः कनिन्प्रत्ययान्तो निपातित इति निपातनादाद्युदात्तः । वकारस्य धकारोऽत्र निपातनादेव । 'दिवु क्रीडादौ' डिविन् प्रत्ययः । इकार उच्चारणार्थः । डित्यभस्याप्यनुबन्धकरणसामर्थ्यात् 'टेः' इति टिलोपः । दिव् इति स्थिते 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति विभक्तेरन्तोदात्तत्वम् । ककुच्छब्दः 'प्रातिपदिकमन्तोदात्तं भवति' इत्यन्तोदात्तः । पतिशब्दः 'पातेर्डतिः' इति डतिप्रत्ययान्तः प्रत्ययस्वरेणाद्युदात्तः, ततः ककुदः पतिः ककुत्पतिरिति षष्ठीसमासः, 'समासस्य' इत्यन्तोदात्तत्वम् । 'प्रथ प्रख्याने', 'प्रथेः षिवन्

यज्ञकर्मणीति किम्? संपाठे मा भूत्। अजपेष्विति किम्? ममाग्ने वर्चो विहवेष्वस्तु। जपः = अनुकरणमन्त्रः, उपांशुप्रयोगः।

पदमञ्जरी

*संपाठ इति*। स्वाध्यायकाले अग्निर्मूर्धा दिवः ककुत्, 'अङ्गेर्नलोपश्च' इत्यग्निशब्दः प्रत्ययस्वरेणान्तोदात्तः, 'मुर्वी बन्धने', 'कनिन्युवृषितक्षि' इति वर्त्तमाने 'श्वन्नुक्षन्पूषन्तक्षन्' इत्यत्र सूत्रे मूर्धन्शब्दः कनिन्प्रत्यान्तोऽन्तोदात्तो निपातितः। 'दिवु क्रीडादौ', दिवेरन्तो डिविः षष्ठचेकवचनस्य 'ऊडिदम्' इत्युदात्तम्, ककुच्छब्दः प्रातिपदिकस्वरेणान्तोदात्तः, 'पातेर्डतिः', पतिशब्दः प्रत्ययस्वरेणाद्युदात्तः, प्रथेः षिवन् संप्रसारणं च षित्त्वात् ङीष्, षठ्येकवचनस्य 'उदात्तयणो हल्पूर्वात्' इत्युदात्तत्वम्, इदंशब्दः प्रातिपदिकस्वरेणान्तोदात्तः, आप्नोतेः क्विप् ह्रस्वश्च, 'ऊडिदम्' इति विभक्तेरुदात्तत्वम्। 'रि गतौ', 'स्रुरिभ्यां तुट् च' इति असुन्प्रत्ययः, नित्स्वरेणाद्युदात्तो रेतः शब्दः। *जिन्वतीति*। जिन्वतेः प्रीणनार्थस्य तिपि निघातः 'प्रणवष्टेः' इति प्रयोगकाले प्रणयः।

न्यासः

संप्रसारणञ्च'। 'षिद्गौरादिभ्यश्च' इति पृथिवशब्दान् ङीष्। प्रत्ययस्वरेण धातुप्रत्ययङीष आद्युदात्तोदात्ताः। षष्ठयेकवचनम् ङस्। 'आण्नद्याः' इत्याट्। 'आगमा अनुदात्ता भवन्ति' इत्यनुदात्तत्वम्। विभक्तेः 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वम्। सवर्णदीर्घः। 'इको यणचि' इति यणादेशः। 'उदात्तयणो हल्पूर्वात्' इति विभक्तिरुदात्ता। अयमिति। 'इदि परमैश्वर्ये' 'इदितो नुम् धातोः' इति नुम्, 'इन्देः कमिर्नलोपश्च' इति कमिप्रत्ययं नलोपश्च, इदम्शब्दः कमिप्रत्ययेनान्तोदात्तः। सौ परतः 'इदोऽय् पुंसि' इतीदम इद्रूपस्यादेशः। अपामिति। 'आप्लृ व्याप्तौ', 'आप्नोतेर्ह्रस्वश्च' इति क्विप्, ह्रस्वश्च, षष्ठीबहुवचनम्। 'ऊडिदं पद' इति विभक्तेरुदात्तत्वम्। तेनापामित्यस्यान्तोदात्तत्वम्। 'रि गतौ', 'स्रुरिभ्यां तुट् च' इत्यसुन्प्रत्ययः। तुडागमः। रेतांसीति नित्स्वरेणाद्युदात्तः। जिन्वतीति। 'जि जये' लट्, शत्रादेशः। 'व्यत्ययो बहुलम्' इति व्यत्ययेन श्नुप्रत्ययः। 'हुश्नुवोः सार्वधातुके' इति यणादेशः। 'उगितश्च' इति ङीप्। 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः। 'एङ् ह्रस्वात् सम्बुद्धेः' इति सुलोपः। 'ये यज्ञकर्मणि' इति वर्त्तमाने 'प्रणवष्टेः' इति प्रणवादेशः। स च प्लुत उदात्तश्च, 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकारात्। प्रणव इत्योकारम्, ओङ्कारं वाऽऽचक्षते। प्रणवस्योदात्तविधानसामर्थ्यादसिद्धत्वाच्च 'पदादुत्तरस्यामन्त्रितस्य च' इत्यनुदात्तं न भवति, शेषस्य तु भवति। एषु स्वरेषु प्राप्तेष्वेकश्रुतिर्विधीयते।

संपाठे मा भूदिति। संपाठः = स्वाध्यायकालः। ममाग्न इत्यादि। 'अग्नु

अन्यूङ्खेति किम् ? न्यूङ्खा ओकाराः षोडश; तेषु केचिदुदात्ताः, केचिदनुदात्ताः ।

पदमञ्जरी

*ममेत्यादि* । 'युष्मदस्मदोर्ङसि' इत्याद्युदात्तत्वम् । अग्नेशब्दस्यामन्त्रितनिघातः, वर्चंश्शब्दोसुन्प्रत्ययान्तः, विपूर्वाद् ह्वयतेः 'ह्वः संप्रसारणं च' इत्यप्प्रत्यये थाथादि-सूत्रेणान्तोदात्तत्वम् । *जपोऽनुकरणमन्त्र इति* । यद्यपि स एव मन्त्र उच्चार्यते, तथापि वर्णाभिव्यक्त्यनभिव्यक्तिभ्यां भेदपरिकल्पनयाऽनुकरणव्यवहारः । अत एवाह—*उपांशुप्रयोग इति* । यथा जले निमग्नस्य पाठः । क्वचिदकरणमन्त्र इति पाठः, अनेनेदं कुर्यादिति चोदितः करणमन्त्रः, ' ततोऽन्योऽकरणमन्त्रः । प्रसिद्धस्तु पाठोऽन्तःकरणमन्त्र इति । ननु वागिन्द्रियेण शब्द उच्चार्यते स कथ-मन्तःकरणेन सर्वेन्द्रियसाधारणेन व्यपदिश्यते, सत्यम्; वागिन्द्रियस्य स्थूलो व्यापार उपांशुप्रयोगे नास्ति, स एव च तद्व्यापारत्वेन प्रसिद्ध इति सूक्ष्मव्यापारे मन एव प्रधानं मन्यते ।

*न्यूङ्खा इत्यादि* । षोडशेति पाठः, ओकारा इति च, न त्वेते मकारान्ताः, तेषु प्रथमसप्तमत्रयोदशास्त्रय उदात्तास्त्रिमात्राः, इतरे त्रयोदशा अनुदात्ता अर्धौ-काराः । एतच्च *आश्वलायनेन* चतुर्थेऽहनीत्यस्मिन् खण्डे लक्षणेनोक्तमुदाहृतं च ।

न्यासः

क्षेपणे', 'युष्यसिभ्यां मदिक्' इनि मदिक् । अस्मच्छब्दः प्रत्ययस्वरेणान्तोदात्तः । षष्ठ्येकवचनस्य 'युष्मदस्मद्भ्यां ङसोऽश्' इत्यशादेशः 'तवममौ ङसि' इत्यस्मदो मगादेशः । स्थानिवद्भावादन्तोदात्तः । 'अतो गुणे' पररूपत्वम् । 'एकादेश उदात्तेनोदात्तः' अग्निशब्दस्य 'आमन्त्रितस्य च' इति निघातः । 'वर्च दीप्तौ', असुन्निति असुन्प्रत्ययः । वर्चंशब्दो नित्स्वरेणाद्युदात्तः । 'ह्वेञ् स्पर्धायाम्' । 'ह्वः संप्रसारणञ्च न्यभ्युपविषु' इत्यप् प्रत्ययः । 'उपपदमतिङ्' इति समासः । 'गतिकारको-पपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते, 'अन्त' इत्यनुवर्त्तमाने 'थाथघञ्क्ताजवि-त्रकाणाम्' इत्यन्तोदात्तत्वम्, सप्तमीबहुवचने 'बहुवचने झल्येत्' इत्येत्त्वम्, स्थानि-वद्भावादेकारोऽप्युदात्त एव । 'अस भुवि', लोट्, तिप्, 'एरुः' इत्युत्वम्, अदादित्वा-च्छपो लुक् । 'तिङ्ङतिङः' इति निघातेन 'अस्तु' शब्दोऽनुदात्तः । जपोऽनुकरणमन्त्र इति । 'जप' इत्युक्तेरर्थकथनमनुकरणमन्त्र इति । अनुकृतिः = अनुकरणम् । सर्वत्र मन्त्रे स्फुटमुच्चारणमित्यनुकरणमन्त्रः । अत एवाह—उपांशुप्रयोग इति । यथा जले निमग्नस्य पाठः ।

क्वचिदकरणमन्त्र इति पाठः । तत्रायमर्थः—ईषत् करणमुच्चारणं यस्य सोऽकरण-मन्त्र इति; नञ ईषदर्थत्वात् ।

असामस्विति किम् ? ए३ विश्वं समत्रिणं दहा३ । सामानि वाक्यविशेषस्था गीतय उच्यन्ते । तत्रैकश्रुतिर्न भवति ॥

## उच्चैस्तरां वा वषट्कारः ॥ ३९ ॥

'यज्ञकर्मणि' इति वर्तते । यज्ञकर्मणि वषट्कारः उच्चैस्ततरां वा भवति, एकश्रुतिर्वा । 'वषट्' शब्देनात्र 'वौषट्' शब्दो लक्ष्यते, 'वौषट्'-इत्यस्यैवेदं स्वरविधानम् ।

### पदमञ्जरी

'षडोङ्कारा:' इति पाठे मूलान्तरं मृग्यम् । *ए३ विश्वमित्यादि* । एशब्दो गीतिपूरणः, निपात इत्यन्ये । विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः, विश्वमन्त्रिणं पाप्मानं संदहेति सम्बन्धः, गीतिवशादेशब्दोऽनेकमात्रः । *वाक्यविशेषस्था गीतय इति* । तदुक्तमृषिणा—'गीतिषु सामाख्या' इति ॥

*उच्चैस्तरां वा वषट्कारः ॥ वषट्शब्देन चात्र वौषट्शब्दो लक्ष्यते इति* । समानार्थत्वाद् द्वावपि हि तौ देवतासंप्रदानस्य द्योतकौ । कारग्रहणं तु ज्ञापकम्—अवर्णादपि कारप्रत्ययो भवतीति । तेन एवकार इत्यादि सिद्धं भवति ।

### पदमञ्जरी

एशब्दो निपातः । 'निपाता आद्युदात्ताः' । 'विश प्रवेशने', 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्प्रत्ययान्तत्वाद्विश्वशब्दो नित्स्वरेणाद्युदात्तः । समञ्च तत् अत्रिणश्चेति विशेषणसमासः । समासान्तोदात्तत्वम् । 'दह भस्मीकरणे', लोट्, सिप्, सेर्हिरादेशः, 'अतो हेः' इति हेर्लुक्, 'तिङ्ङतिङः' इति निघातविधानाद् दहशब्दोऽनुदात्तः । केचिद् दहा३ इति प्लुतान्तं पठन्ति; तेषां साहसमनिच्छतां 'सर्वत्र विभाषा प्लुतो वक्तव्यः' इत्यतो वचनात् प्लुतो वक्तव्यः, स चोदात्तः ।

अन्ये त्वाकारान्तं पठन्ति, तेषां छान्दसत्वादाकारः । ह्रस्वोऽपि हि वर्णो व्यत्ययेन दीर्घो भवति, 'पूरुषः' 'नारकः' इति यथा । वाक्यविशेषस्था गीतय इति । यथोक्तं जैमिनिना—'गीतिषु सामाख्या' इति । गीतिः=ध्वनिविशेषः ।

अथ कर्मग्रहणं किमर्थम्, यज्ञ इत्येवोच्येत, यज्ञमन्त्राणां यज्ञक्रियार्थत्वाद् यज्ञकर्मणि भविष्यति ? सत्यमेतत्; विस्पष्टार्थं हि कर्मग्रहणम् । अथ वा—योऽपि न प्रसिद्धो यज्ञः पञ्चयज्ञनादिः, तत्रापि यथा स्यादित्येवमर्थम्; अन्यथा 'यज्ञे' इत्युच्यमाने प्रसिद्धो यो यज्ञोऽश्वमेधादिस्तत्रैव स्यात् ।

उच्चैस्तरां वा वषट्कारः ॥ वषट्शब्देनात्र वौषट्शब्दो लक्ष्यत इति । समानार्थत्वादित्यभिप्रायः । द्वावपि तौ देवानां नियचनौ । यथा 'वषट्' शब्देन देवानां दानं दीयते तथा वौषट्शब्देनापि । तस्मात् समानार्थत्वाद् 'वषट्' शब्दो 'वौषट्' शब्दं

यद्येवम्, वौषड्ग्रहणमेव कस्मान्न कृतम्? वैचित्र्यार्थम्। विचित्रा हि सूत्रस्य कृतिः पाणिनेः।

सोमस्याग्ने वीही३ वौ३षट्। सोमस्याग्ने वीही३ वौ३षट्॥

पदमञ्जरी

*यद्येवमिति*। लक्षणायां हि प्रतिपत्तिगौरवं भवतीति भावः। *विचित्रा हीति*। क्वचिदक्षरलाघवमाश्रीयते, क्वचित्प्रतिपत्तिलाघवमिति वैचित्र्यम्। *उच्चैस्तरामिति*। उच्चैःशब्द उदात्तभवने वर्त्तते, तत्र भवनक्रियापेक्षया प्रत्ययः। उदात्ततर इत्यर्थो विवक्षितः, प्रकर्षश्च वौषट्शब्दे 'ब्रूहिप्रेष्यश्रौषड्वौषड्वहानामादेः' इति यः प्लुतो विहितः तदपेक्षया वेदितव्यः। सन्त्युदात्ताः, अयं तूदात्ततरः। अन्त्यसदेशस्येत्येके। प्लुतोदात्तस्य च विधानसामर्थ्याच्छेषनिघाताभावोऽसिद्धत्वाद्वा द्वयोरप्यचोरुदात्ततरो भवतीत्येके। तदा याज्यान्तापेक्षः प्रकर्षः स्वार्थिकस्तरबित्यन्ये; ततो ह्युदात्तमात्रम्प्रथमस्य सिद्धमिति द्वितीयस्याचो विधीयते। वषट्कारशब्दोऽयं मन्त्रब्राह्मणयोः कल्पसूत्रेषु वौषट्शब्दे निरूढः। वषट् क्रियतेऽनेनेति वषट्कारः। 'मा मान्प्रमृज' इति मन्त्रे, 'त्रयो वै वषट्काराः वौषडिति वषट्करोति' इति ब्राह्मणे च वषट्कारोऽन्त्यः। 'सर्वत्रोच्चैस्तरां बलीयान्याज्याया' इति सूत्रे उच्चैस्तरामिति श्रुतिप्रकर्षो विधीयत इत्याहुः॥

न्यासः

लक्षयति। कारशब्दग्रहणमर्थपदार्थकत्वं विहाय शब्दपदार्थकत्वेन दानक्रियामुपयुज्यमानस्य तस्योदात्ततरत्वं यथा स्यादित्येवमर्थम्। कारग्रहणे शब्दपदार्थता दृष्टा, यथा एवकार इति।

अन्ये कारग्रहणमन्त्यस्यापि यथा स्यादिति वर्णयन्ति। तेन 'अस्तु श्रौषट्' इत्यत्रायमुदात्ततरो भवति। उच्चैस्तरामिति प्रकर्षप्रत्ययो वौषट्शब्दे 'ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः' इति यः प्लुतो विहितस्तदपेक्षया वेदितव्यः; स ह्युदात्तः, अयं तूदात्ततरः 'अन्त्यसदेश' इत्यस्याः परिभाषायाः समाश्रयणादन्त्यसदेशस्यानुदात्तस्योदात्ततरो भवति।

अन्ये वर्णयन्ति—द्वयोरपि तयोरुदात्ततरो भवति। अन्त्यसदेशपरिभाषा नाश्रीयते। प्रकर्षप्रत्ययस्तु याज्या ऋचः सम्बन्धी वषट्कारः; तस्य याज्यान्त इत्यनेन य उदात्तः प्लुतो विहित तदपेक्षया प्रकर्षस्य सत्त्वात्। अथ वा—प्रकर्षप्रत्ययान्तः स्वरूपशब्दान्तरमेवैतदिति।

अपरे त्वाहुः—'अनुदात्तं पदमेकवर्जम्' इति वचनेन प्लुतश्चोदात्तः। अन्यस्त्वनुदात्ततर इति।

## विभाषा छन्दसि ॥ ३६ ॥

छन्दसि विषये विभाषा एकश्रुतिर्भवति, पक्षान्तरे त्रैस्वर्यमेव भवति। वेति प्रकृते विभाषाग्रहणं 'यज्ञकर्मणि' इत्यस्य निवृत्त्यर्थम्। तेनायं स्वाध्यायकालेऽपि पाक्षिक ऐकश्रुत्यविधिर्भवति। इषे त्वोर्जे त्वा। इषे त्वोर्जेत्वा। अग्न आयाहि वीतये। अग्नआयाहि वीयते।

**पदमञ्जरी**

*विभाषा छन्दसि ॥ यज्ञकर्मणीत्यस्य निवृत्त्यर्थमिति*। ननु यद्ययं योगो यज्ञकर्मणि स्यात्, पूर्वो योगो निर्विषयः स्यात्। न च जपन्यूङ्खसामान्यस्य विषयः, जपादिव्यतिरिक्तस्तु पूर्वस्य विषय इति व्यवस्था; तथा हि सत्यत्रैव जपादिग्रहणं कर्त्तव्यं स्यात्, किं छन्दोग्रहणेन? छन्दोग्रहणात्तु छन्दोमात्रेऽयं विकल्प इति गम्यते, ततश्च यज्ञकर्मणीत्यस्यानुवृत्तौ पूर्वो नित्यो विधिर्निर्विषयः स्यात्? एवं मन्यते—ऊहमन्त्राणामच्छन्दस्त्वात्ते पूर्वयोगस्य विषया इति छन्दोरूपेषु मन्त्रेष्वयमेव विकल्पः स्यादिति। यद्यूहमन्त्रेषु सावकाशः पूर्वो योगः, तदा यज्ञकर्मणीत्यस्य विभाषाग्रहणेन निवृत्तावपि छन्दोरूपेष्वनूहितेषु मन्त्रेषु परत्वादयमेव विकल्पः प्राप्नोति, नैष दोषः; यज्ञकर्मणीत्यत्र कर्मग्रहणं यज्ञानुष्ठानमात्रे सर्वत्र नित्यो विधिर्यथा स्यादित्येवमर्थम्। यद्यप्यूह्यमानाश्मन्त्रा न भवन्ति, तथाप्यमन्त्राणामेव तेषां यज्ञकर्मणि प्रयुज्यमानानां पूर्वयोगस्य विषयत्वं भवत्येव। ये तु जपादिपर्युदासेन मन्त्राणामेव तत्र ग्रहणमिच्छन्ति, तेषां सामर्थ्यलभ्या यज्ञकर्मणीत्यस्य निवृत्तिरिति विभाषाग्रहणमनर्थकं स्यात्। इष इत्यादि। इडन्नम्, ऊर्ग् बलम्। चतुर्थ्येकवचनस्य 'सावेकाचः' इत्युदात्तत्वम्। 'त्वामौ द्वितीयायाः'

**न्यासः**

विभाषा छन्दसि ॥ इषे त्वेत्यादि। 'इषु इच्छायाम्', अन्येभ्योऽपि दृश्यते' इति क्विप्। इडस्यास्तीति लुगधिकारस्य 'अप्रत्ययः' इत्यनेनोपसंख्यानेन अकारप्रत्ययः, प्रत्ययस्वरेणाद्युदात्तः, इषशब्दात् सप्तम्येकवचनम्, 'आद्गुणः', 'एकादेश उदात्तेनोदात्तः'। युष्मच्छब्दस्य द्वितीयान्तस्य 'त्वामौ द्वितीयायाः' इति त्वामादेशः, स त्वनुदात्तः; 'अनुदात्तं सर्वमपादादौ' इत्यधिकारात्। अग्न इति। 'आमन्त्रितस्य च' इति पाष्ठिकमाद्युदात्तत्वम्। आङ्पूर्वाद् 'या प्रापणे' इत्यस्माल्लोट्, सिप्, सेर्हिरादेशः, आङ् 'उपसर्गाश्चाभिवर्जम्' इत्युदात्तः। 'तिङ्ङतिङः' इति याहीत्यस्य निघातः। 'वी गत्यादिषु', 'मन्त्रेवृषेषपच' इत्यादिना क्तिन्नुदात्तः, चतुर्थ्येकवचने प्रत्यये 'घेर्ङिति' इति गुणः, अयादेशः, द्वावपि स्थानिवद्भावेनोदात्तौ, शेषमनुदात्तम्। अग्निशब्दः पूर्ववन्निप्रत्ययस्वरेणान्तोदात्तः। द्वितीयैकवचनेऽमि पूर्वत्वम्। 'एकादेश

अग्निमीळे पुरोहितम्। अग्निमीळे पुरोहितम्। शन्नो देवीरभिष्टये। शन्नो देवोरभिष्टये। व्यवस्थितविकल्पोऽयमिति केचित्। व्यवस्था च वेदे मन्त्रदले नित्यं त्रैस्वर्यम्, ब्राह्मणदले नित्यमैकश्रुत्यमिति ॥

"इच्छासंहितयोरार्षे छन्दो वेदे च छन्दसि।"

इति नानार्थकोशात् छन्दसि वर्णसंहितायामिति भट्टाचार्यचरणा इति। भाषायामप्येकश्रुतिर्विभाषा भवतीति सिद्धम् ॥

### पदमञ्जरी

इति त्वादेशोऽनुदात्तः। अग्ने इत्यामन्त्रिताद्युदात्तत्वम्। आङुपसर्गः। *याहीति*। 'तिङ्ङतिङः' 'वी गत्यादिषु', 'मन्त्रे वृषेषपच' इत्यादिना क्तिन्नुदात्तः, अग्नि-शब्दोऽन्तोदात्तः। अमि पूर्वत्वम् 'एकादेश उदात्तेनोदात्तः'। *ईळे इति*। 'ईड स्तुतौ' लडुत्तमैकवचनम्। बह्वृचा द्वयोरचोर्मध्ये स्थितस्य डकारस्य ळकारं विदधति। *पुरोहितम्*। 'पुरोऽव्ययम्' इति गतिसंज्ञा, 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरः, पुरःशब्दोऽसिप्रत्ययान्तोऽन्तोदात्तः। शन्शब्दो निपातः, नसादेशोऽनुदात्तः। देवडिति पचादिषु पठ्यते, टित्त्वान् ङीप्, 'अनुदात्तस्य च यत्रोदात्तलोपः' अभिपूर्वादिषेः क्तिनि शकन्ध्वादित्वात् पररूपेऽभिष्टेत्यादौ च 'निति कृत्यतौ' इति पूर्वपदप्रकृतिस्वरेणाभिशब्दस्यान्तोदात्तत्वं चतुर्थ्येकवचनम्।

### न्यासः

उदात्तोनोदात्तः'। 'ईड स्तुतौ'। अनुदात्तेत्त्वादात्मनेपदम्। 'तिङ्ङतिङः' इतीडे-शब्दस्य निघातः। पुरः पूर्वस्मिन् देश इति विगृह्य 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययः, पूर्वशब्दस्य पुरादेशः। पुरःशब्दः प्रत्ययस्वरेणान्तोदात्तः। दधातेर्निष्ठायाम् 'दधातेर्हिः' इति हिरादेशः। 'पुरोऽव्ययम्' इति गतिसंज्ञायां सत्याम् 'कुगतिप्रादयः' इति समासः। समासस्यान्तोदात्तत्वे प्राप्ते 'गतिरनन्तरः' इति पूर्वपद-प्रकृतिस्वरेण पुरःशब्दोऽन्तोदात्तः। शंशब्दश्चादित्वान्निपातः। निपातस्वरेणाद्युदात्तः। अस्मच्छब्दस्य षष्ठी, 'बहुवचनस्य वस्नसौ' इति नसादेशोऽनुदात्तः, अनुदात्ताधि-कारात्। दिवः पचाद्यच्। पचादिषु देवडिति पठ्यते। 'टिड्ढाणञ्' ङीप् अनुदात्तः, 'यस्येति च' इत्यकारलोपः। 'अनुदात्तस्य च यत्रोदात्तलोपः' इति ङीबुदात्तः। द्विती-याबहुवचने 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णदीर्घत्वम्। 'एकादेश उदात्तेनो-दात्तः'। 'ष्टुञ् स्तुतौ', अभिपूर्वाद् 'ऋदोरप्' इत्यप्, गुणावादेशौ। वर्णव्यत्ययेन वकारस्य यकारः। 'गतिकारक' इत्युत्तरपदप्रकृतिस्वरत्वे प्राप्ते 'अन्त' इति वर्तमाने 'थाथघञ्-क्ताजवित्रकाणाम्' इत्युत्तरपदान्तोदात्तत्वम्। सप्तम्येकवचनम्। 'आद्गुणः', 'एकादेश उदात्तेनोदात्तः', तस्मात् 'अभिष्टये' शब्दोऽन्तोदात्तः।

## न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ ३७ ॥

सुब्रह्मण्या नाम निगदः, तत्र 'यज्ञकर्मणि' इति 'विभाषा छन्दसि' इति च एकश्रुतिः प्राप्ता प्रतिषिध्यते। सुब्रह्मण्यायामेकश्रुतिर्न भवति। यस्तु लक्षणप्राप्तः स्वरितस्तस्योदात्त आदेशो भवति।

सुब्रह्मण्यो३मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार कौशिकब्राह्मण गौतमब्रुवाण श्वः सुत्यामागच्छ मघवन्।

अत्र सुब्रह्मण्योमित्योकारस्तित्स्वरेण स्वरितः, तस्योदात्तो विधीयते।

इन्द्र आगच्छेत्यामन्त्रितमाद्युदात्तं द्वितीयो वर्णोऽनुदात्तः। 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः प्रसक्तः, तस्यानेनोदात्तः

### पदमञ्जरी

*न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ सुब्रह्मण्या नाम निगद इति।* अपादबन्धे गदिर्वर्त्तते, यथा गद्यमिति, निशब्दः प्रकर्षे। उच्चैरपादबन्धं यजुरात्मकं यन्मन्त्रवाक्यं पठ्यते स निगदः, नितरां गद्यत इति कर्मणि 'नौ गदनद' इत्यप्, तस्य च सुब्रह्मण्याशब्दोपलक्षितत्वात् सुब्रह्मण्याशब्दोपरित्यक्तस्त्रीलिङ्ग एव नाम। ओङ्कारस्तित्स्वरेण स्वरित इति सुब्रह्मणि साधुरिति यत्प्रत्ययः, तित्स्वरेण स्वरितः। तस्य टाबेकादेशः स्वरितानुदात्तयोरान्तर्यात् स्वरितः, ततो निपातेनौंशब्देन 'ओमाङोश्च' इत्युदात्तस्वरितयोरेकादेशः स्वरित एव। 'आमन्त्रितमाद्युदात्तम्'

### न्यासः

न सुब्रह्मण्यायां स्वरितस्य तूदात्तः ॥ सुब्रह्मण्या नाम निगद इति। अपादबन्धे गदतिवर्त्तते। अपादबन्धं हि गद्यमुच्यते। निशब्दः प्रकर्षे। यदुच्चैरविच्छिन्नमपादबन्धं मन्त्रवाक्यं निगद इति तस्य व्यपदेशः। तस्य च सुब्रह्मण्योपलक्षणत्वात् सुब्रह्मण्या इति स्त्रीलिङ्गनिर्देशः। सुब्रह्मण्योमिति। सुब्रह्मणि साधुः। 'तत्र साधुः' इति यत्। 'तित् स्वरितम्' इति स्वरितत्वम्, 'प्रणवष्टेः' इत्योङ्कार आदेश इति केचित्, तदयुक्तम्; 'पादस्य वार्द्धर्चस्य वान्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोकारमोङ्कारं वा विदधति तं प्रणवमित्याचक्षते' इति वक्ष्यति[1]। न च निगदे पादव्यवस्था, नाप्यर्द्धर्चव्यवस्था। तस्मादोंशब्दोऽस्ति निपातोऽनर्थकः। तस्य स्वरितेन सहैकादेशः स्वरितः। आमन्त्रितमाद्युदात्तमिति। 'आमन्त्रितस्य च' इत्यनेन षाष्ठिकेन। तस्यानेनो-

---

१. 'प्रणवष्टेः' इति सूत्रव्याख्यायां वामनः—इति शेषः।

क्रियते; तेन द्वावप्युदात्तौ संपन्नौ। आगच्छेत्याकार उदात्तः। ततः परोऽनुदात्तः स्वरितः, तस्यानेनोदात्तः क्रियते। तदेवमिन्द्र आगच्छेति चत्वार उदात्ताः। पश्चिम एकोऽनुदात्तः।

हरिव आगच्छेत्यनयैव प्रक्रियया चत्वार उदात्ताः, द्वावनुदात्तौ।

मेधातिथेरिति षष्ठ्यन्तं परमामन्त्रितमनुप्रविशति 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति। ततः सकलस्यामन्त्रिताद्युदात्तत्वे कृते द्वितीयमक्षरमनुदात्तम्। तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितत्वे प्राप्ते इदमुदात्तत्वं विधीयते। तेन द्वावप्युदात्तौ भवतः। शेषमनुदात्तम्।

### पदमञ्जरी

इति आष्टमिकस्तु निघातोऽसमानवाक्यत्वान्न भवति। *तस्यानेनेति*। न च तस्यासिद्धत्वम्, इदं हि प्रकरणमसिद्धकाण्ड उत्कृष्टव्यमित्युक्तम्। अत एवास्मिन्नुदात्ते कृते शेषनिघातोऽपि न भवति; यथोद्देशपक्षेऽनुदात्तपरिभाषायां कर्त्तव्यायाम् असिद्धत्वेन वर्ज्यमानाभावात्। तेनेह द्वावप्युदात्तौ सम्पन्नौ इति। *पश्चिम एकोऽनुदात्त इति*। न च तस्य 'उदात्तादनुदात्तस्य' इति स्वरितप्रसङ्गः; प्रकरणोत्कर्षणास्यासिद्धत्वाद्, 'नोदात्तस्वरितोदयम्' इति निषेधाच्च। *द्वावनुदात्ताविति*। वकारच्छकारौ, शिष्टं स्पष्टम्। 'असावमुष्येत्यन्तः' एतस्मिन्नेव सुब्रह्मण्यानिगदे प्रथमान्तस्य षष्ठ्यन्तस्य चान्त उदात्तो भवति। गार्ग्यो यजते, दाक्षेः पिता यजते—तित्स्वरे प्राप्ते वचनम्। 'स्यान्तस्योपोत्तमं च' स्यशब्दान्तस्योपोत्तममुत्तमं चोभयमुदात्तं भवति। गार्ग्यस्य पिता यजते 'वा नामधेयस्य'। देवदत्तस्य पिता यजते॥

### न्यासः

दात्तः क्रियत इति। ननु चासिद्धोऽसौ स्वरितः; वचनात् तस्यासिद्धत्वं न भवति। ननु च वचनस्य सुब्रह्मण्योमिति प्रयोजनं वक्तुं शक्यम्? न हि समस्ते निगदे सुब्रह्मण्याशब्देनोपलक्षिते सतीदमेकमुदाहरणं युक्तम्। आकार उदात्त इति। निपातस्वरेण। ततः परोऽनुदात्तः स्वरित इति। 'तिङ्ङतिङः' इति निघाते कृते, 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन। पश्चिम एक इति। छकाराकारः। चत्वार उदात्ता इति। वकारच्छकाराभ्यामन्ये। द्वावनुदात्ताविति। वकारच्छकारौ। द्वितीयमक्षरमिति। मेधाशब्दाकारः। शेषमनुदात्तमिति। मेधाशब्दे यावचौ ताभ्यामन्यत्। पूर्वेणेति। मेधातिथेर्मघेत्यनेन। तथैव द्वे आद्ये अक्षरे उदात्ते इति। यदि गौरावस्कन्दिन्निति समस्तमामन्त्रितमाद्युदात्तमिति। अथापि गौरेति शब्दान्तरमामनन्ति, तथापि तस्यापि

'वृषणश्वस्य मेने' इति समानं पूर्वेण। गौरावस्कन्दिन्निति तथैव द्वे आद्ये अक्षरे उदात्ते, शेषमनुदात्तम्। अहल्यायै जारेति सुबन्तस्यामन्त्रितानुप्रवेशात् तद्वदेव स्वरः। द्वावुदात्तौ। शेषमनुदात्तम्।

कौशिकब्राह्मणेति समस्तमामन्त्रितमाद्युदात्तम्। तत्र पूर्ववद् द्वावुदात्तौ। शेषमनुदात्तम्।

एवं गौतमब्रुवाणेति द्वावुदात्तौ। शेषमनुदात्तम्।

श्वः सुत्यामागच्छ मघवन्निति श्वःशब्द उदात्तः, सुत्यामित्यन्तोदात्तः। 'संज्ञायां समजनिपद' इति क्यपो विधाने 'उदात्तः' इति वर्तते। आगच्छेति द्वावुदात्तौ। अन्त्योऽनुदात्तः। मघवन्निति पदात्परमामन्त्रितं निहन्यते॥

## देवब्रह्मणोरनुदात्तः॥ ३८॥

सुब्रह्मण्यायामेव 'देवा ब्रह्माणः' इति पठ्यते, तत्र पूर्वेण स्वरितस्योदात्ते प्राप्तेऽनेनानुदात्तो विधीयते। देवब्रह्मणोः स्वरितस्यानुदात्त

पदमञ्जरी

देवब्रह्मणोरनुदात्तः॥ *स्वरितस्योदात्ते प्राप्ते इति*। कथं प्राप्तः, यावताऽसिद्धः स्वरितः? एवं तर्ह्येतज्ज्ञापयत्याचार्यः—'तस्यादितः' इत्यारभ्य नवसूत्री 'उदा-

न्यासः

प्रवेशे कृते सकलस्यामन्त्रितस्याद्युदात्तत्वे 'उदात्तादनुदात्तस्य' इत्यादिना पूर्वोक्तेन विधिना द्वे उदात्ते भवतः। अहल्यायै जारेति। षष्ठ्यर्थे चतुर्थी, 'बहुलं छन्दसि' इत्यत्र 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इत्युपसङ्ख्यानात्, 'व्यत्ययो बहुलम्' इति व्यत्ययेन वा। समस्तमामन्त्रितमाद्युदात्तमिति। कौशिकशब्दस्य परामन्त्रितानुप्रवेशात्। एवं गौतमब्रुवाण इति। एतदपि कौशिकब्राह्मणेत्यनेन तुल्यमित्यर्थः। द्वावुदात्ताविति। अनन्तरयोरुदाहरणयोः प्रत्येकमाद्याविर्त्यर्थः। श्वःशब्द उदात्त इति। प्रातिपदिकस्वरेण। उदात्त इति वर्तत इति। 'मन्त्रे वृष' इत्यादेः सूत्रात्। द्वावुदात्ताविति। तौ पुनरादी आगच्छेत्यत्र दर्शितौ। पदात् परमामन्त्रितं निहन्यत इति। 'आमन्त्रितस्य च' इत्यनेन॥

देवब्रह्मणोरनुदात्तः॥ द्वयोरपि पदयोरामन्त्रिताद्युदात्तत्वे कृत इति। 'विभाषितं विशेषवचने बहुवचनम्' इति पूर्वस्याविद्यमानत्वाद् 'आमन्त्रितस्य च' इति पदात् परस्यापि निघातो न भवति। तेन द्वयोरपि पृथगेव षाष्ठिकमाद्युदात्तत्वं भवति। शेषनिघात इति। 'अनुदात्तं पदमेकवर्जम्' इत्यनेन॥

आदेशो भवति । देवा ब्रह्माण आगच्छत । द्वयोरपि पदयोरामन्त्रि-ताद्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः कृतः, तस्यानु-दात्तो भवति ॥

स्वरितात्संहितायामनुदात्तानाम् ॥ ३९ ॥

'एकश्रुतिः' इति वर्तते । संहितायां विषये स्वरितात्परेषामनुदात्ता-नामेकश्रुतिर्भवति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । माणवक जटिलकाध्यापक क्व गमिष्यसि । इममित्यन्तोदात्तम्, मे इति अनु-दात्तम्; विधिकाल एव निघातविधानात् । तत्पुनः 'उदात्तादनु-दात्तस्य स्वरितः' इति स्वरितं संपद्यते । तस्मात्स्वरितात्परेषामनु-दात्तानां गङ्गेप्रभृतीनामेकश्रुतिर्भवति । सर्वं एते आमन्त्रितनिघाते-नानुदात्ताः । माणवक जटिलकेति प्रथममामन्त्रितमाद्युदात्तम्,

पदमञ्जरी

त्तादनुदात्तस्य स्वरितः' इत्यस्मात्परा द्रष्टव्येति । उक्तानि प्रयोजनानि, उत्तरत्र च वक्ष्यामः । सामान्यापेक्षत्वाज्ज्ञापकस्य नवसूत्र्यप्युत्कृष्यते, न सुब्रह्मण्यास्वर एव । *द्वयोरपि पदयोरिति* । द्वितीयस्य पदात्परस्यापि निघातो न भवति; 'आमन्त्रितं पूर्वमविद्यमानवद्' इति पूर्वस्याविद्यमानत्वात् । प्रथमस्यापि न भवति; भिन्नवाक्यत्वात् ॥

*स्वरितात्संहितायामनुदात्तानाम्* ॥ अनुदात्तानामिति बहुवचनं जातौ, तेनैकस्य द्वयोर्बहूनां च भवति—एकस्य पचति, द्वयोराग्निवेश्यः; बहूनां तु वृत्ता-वेव दर्शितम् । *इममित्यन्तोदात्तमिति* । इदं-शब्दः प्रातिपदिकस्वरेणान्तोदात्तः, विभक्तिरनुदात्ता, त्यदाद्यत्वे 'अमि पूर्वः' 'एकादेश उदात्तेनोदात्तः' । *विधिकाल एवेति* । यद्यप्यत्र विहितस्यानुदात्तविधानेऽपि न कश्चिद्दोषः, तथापि तत्त्वेन व्यवहर्त्तव्यमित्येवमुक्तम् । *तस्मात् स्वरितादिति* । न च तस्यासिद्धत्वम्; उत्कृ-ष्टत्वाद् नवसूत्र्यास्तेन कार्यं देवदत्तेत्यादावविवेकश्रुतिर्भवत्येव । *गङ्गे प्रभृतीनामिति* ।

न्यासः

स्वरिताद् संहितायामनुदात्तानाम् ॥ अनुदात्तानामिति जातौ बहुवचनम् । तेन द्वयोरपि भवति । इममित्यन्तोदात्तमिति । इदम्शब्दस्य कमिप्रत्ययान्तत्वात् प्रत्ययस्व-रेणान्तोदात्तत्वम्, तस्य त्यदाद्यत्वे 'अतो गुणे' पररूपत्वे तस्याप्येकादेश उदात्तेनोदात्तत्वात् । विधिकाल एवेति । 'तेमयावेकवचनस्य' इति विधिकाल एव निघातविधानात् । सर्वं एत आमन्त्रितनिघातेनानुदात्ता इति । यद्यपि

तस्य द्वितीयमक्षरं स्वरितम्, ततः परेषामनुदात्तानामेकश्रुतिर्भवति।

संहिताग्रहणं किम्? अवग्रहे मा भूत्। इमं मे गङ्गे यमुने सरस्वति ॥

उदात्तस्वरितपरस्य सन्नतरः ॥ ४० ॥

अनुदात्तग्रहणमनुवर्तते। उदात्तः परो यस्मात्स उदात्तपरः, स्वरितः परो यस्मात्स स्वरितपरः; उदात्तपरस्य स्वरितपरस्य चानुदात्तस्य सन्नतर आदेशो भवति। अनुदात्ततर इत्यर्थः। देवा मरुतः

पदमञ्जरी

न च यमुनेप्रभृतीनां व्यवधानम्; जातेरेकत्वाद्, व्यक्तीनां सतीनामप्यनाश्रितत्वाद् अकिञ्चित्करत्वम्। *ततः परेषामिति*। 'नामन्त्रिते समानाधिकरणे' इति माणवकशब्दस्याविद्यमानत्वं न भवति।

*अवग्रहे मा भूदिति*। इदमेव च संहिताग्रहणं ज्ञापकम्—पञ्चमीनिर्देशे कालो न व्यवध्यायक इति। तेन 'तिङ्ङतिङः' इत्यवग्रहेऽपि भवति–अग्निमीले।

*उदात्तस्वरितपरस्य सन्नतरः* ॥ परशब्दः प्रत्येकमभिसम्बध्यत इत्याह— *उदात्तः परो यस्मादिति*। सन्नशब्देन नीचैरर्थ उच्यते, तेनानुदात्तत्वं लक्ष्यत इत्याह—*अनुदात्ततर इति*। प्रकर्षः स्थान्यनुदात्तापेक्षः। *मातर इत्यनुदात्त इति*।

पदमञ्जरी

'आमन्त्रितं पूर्वमविद्यमानवत्' इति, तथापि मेशब्दापेक्षया सर्वेषां निघातापत्तेः। प्रथममान्त्रितमाद्युदात्तमिति। 'आमन्त्रितस्य च' इति षाष्ठिकेन। तस्य द्वितीयमक्षरं स्वरितमिति। 'उदात्तादनुदात्तस्य स्वरितः' इति। ततः परेषामनुदात्तानामिति। 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इत्यविद्यमानत्वस्य प्रतिषेधे सति माणवकात् परयोः 'आमन्त्रितस्य च' इति निघातविधानात् परेऽनुदात्ताः। अवग्रहे मा भूदिति। अवग्रहः = असंहितापाठः। ननु च स्वरितादिति पञ्चमी, तेन 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थकत्वादवग्रहे प्राप्तिरेव नास्ति, यथैव हि वर्णा व्यवधायकस्तथा कालोऽपि, तत् किं संहिताग्रहणम्? पञ्चमीनिर्देशकालो न व्यवधायक इति ज्ञापनार्थम्। तेन 'तिङ्ङतिङः' इत्यत्रावग्रहेऽतिङन्तात् परं तिङन्तं निहन्यते।

उदात्तस्वरितपरस्य सन्नतरः ॥ मातर इत्यनुदात्त इति। अनुदात्तत्वं तु विभक्तिस्वरेण। मातर इति मातृशब्दाज्जस्, 'ऋतो ङिसर्वनामस्थानयोः' इति गुणः। जसः सकारस्य रुत्वम्। तस्याप्यश्शब्दे शसन्ते परतः 'अतो रोरप्लुतादप्लुते' इत्युत्वम्। 'आद्गुणः', 'ऊडिदम्' इत्यादिना विभक्तेरन्तोदात्तत्वे कृते 'एङः पदान्तादति' इति

पृश्निमातरोऽपः । मातर इत्यनुदात्तः । अप इत्यन्तोदात्तः—'ऊडि-दंपदाद्यप्पुम्रैद्युभ्यः' इति । तत्रानुदात्तयोरेकादेश ओकारोऽनुदात्तः । तस्योदात्ते परभूते सन्नतर आदेशो भवति । इमं मे गङ्गे यमुने सरस्वति शुतुद्रि । इकारोऽनुदात्तः । शुतुद्रि इत्येतदामन्त्रितं पादादौ तस्मान्न निहन्यते, 'अनुदात्तं सर्वमपादादौ' इति । तस्य प्रथममक्षर-मुदात्तम्, तस्मिन्परभूते पूर्वस्य सरस्वतीकारस्य सन्नतर आदेशो भवति । माणवक जटिलकाध्यापक क गमिष्यसि । क इति स्वरितः, तस्मिन्परभूते क इति अनुदात्तस्तस्य सन्नतर आदेशो भवति ॥

## अपृक्त एकाल्प्रत्ययः ॥ ४१ ॥

### पदमञ्जरी

समासैकदेशो निष्कृष्यानुकृतः, देवा इत्यादीनां त्रयाणामामन्त्रितानामेकीभूता-नामाद्युदात्तत्वे शेषनिघातः । 'विभाषितं विशेषवचने बहुवचनम्' इति विद्यमान-पक्षे चामन्त्रितनिघातः, जसः सकारस्य रुत्वम्, तस्य स्रंसनयुक्तस्य 'अतो रोरप्लु-तात्, इति उकारोऽनुदात्तः, 'आद्गुणः' सोऽप्यान्तर्यतोऽनुदात्तः, अच्छब्दाकारस्य शेषनिघातः, तयोरनुदात्तयोः 'एङः पदान्तादति' इत्येकादेश आन्तर्यतोऽनुदात्तः । *सरस्वतीकारस्येति* । ननु च नवसून्युत्कृष्यत इति ज्ञापितम्, ततश्च गङ्गेप्रभृती-नामिव सरस्वतीकारस्यापि पूर्वेणैकश्रुतिरेव प्राप्नोति, कः पुनः सन्नतरस्याव-काशः, यः स्वरितात्परो न भवति ? अग्निरिति । न च विप्रतिषेधेन सन्नतरो लभ्यते; पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य । एवं तर्हि 'न मु ने' इत्यत्र नेति योगविभागात् सिद्धत्वं भविष्यति । इह देवदत्तस्य न्यङ् इति 'न्यधी च' इति पूर्वपदप्रकृतिस्वरे 'उदात्तस्वरितयोर्यणः' इत्यत्रत्यकारस्य स्वरितः पूर्वस्य सन्नतरं प्रत्यसिद्धो न भवति; प्रकरणोत्कर्षाद् । 'उदात्तस्वरितयोः' इत्येव सिद्धे परग्रहणं बहुव्रीहावेकवचनविवक्षार्थमिति गङ्गेप्रभृतीनां सन्नतराभावः ॥

*अपृक्त एकाल् प्रत्ययः* ॥ *घृतस्पृगिति* । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् ।

### न्यासः

य ओकारः, सोऽपि स्थानिवद्भावेनानुदात्तो भवति । तस्योदात्ते परभूत इति । विभक्त्यकारे । इकारोऽनुदात्त इति । सरस्वतीतिशब्दसम्बन्धी; 'आमन्त्रितस्य च' इति सरस्वतीशब्दस्य निघातविधानात् । तस्मान्न निहन्यत इति । 'अनुदात्तं सर्वमपादादौ' इत्यत्रापदादाविति निघातप्रतिषेधात् । प्रथममक्षरमिति । शकारोकार उदात्तः, 'आमन्त्रितस्य च' इति पाष्ठिकेन ।

'अपृक्त' इतीयं संज्ञा भवति, एकाल् यः प्रत्ययस्तस्य । असहाय-वाची एकशब्दः । 'स्पृशोऽनुदके क्विन्'—घृतस्पृक् । 'भजो ण्विः'—अर्धभाक्, पादभाक् ।

एकालिति किम् ? दर्विः, जागृविः । प्रत्यय इति किम् ? सुराः ।

अपृक्तप्रदेशाः—'वेरपृक्तस्य' इत्येवमादयः ॥

पदमञ्जरी

*अर्धभागिति* । अत्र 'वेरपृक्तस्य' इति लोपः प्रयोजनम् । *एकाल्ग्रहणं किमिति* । समुदायद्वारेणायमेकपदविषयः प्रश्नः, अन्यथा प्रत्ययमात्रस्य संज्ञा स्यादिति प्रदेशेषु प्रत्ययग्रहणमेव कर्तव्यं स्यात्, किं सञ्ज्ञया ! यत्र यद्यलन्तस्य स्यात्, केवलस्य चाप्यन्तवद्भावात् अल्ग्रहणं व्यर्थं स्यादिति तत्सामर्थ्यादल्समुदायस्य न भविष्यतीति भावः ।

*दर्विरिति* । 'दॄ विदारणे' औणादिको विन् प्रत्ययः । वर्णग्रहणे जातिग्रहणादल्समुदाया गृह्यन्ते इति भावः । स्यादेतत्—'वेरपृक्तस्य' इत्यत्र 'वोऽपृक्तस्य' इत्यस्तु, क्विबादिषु च मा भूदिकारः, न चान्यः प्रत्ययो वकारोऽस्तीति, तन्न; 'राजनि युधिकृञः' राजकृत्वा, तमाचष्ट इति णिचि टिलोपे क्विपि णिलोपे च कृते क्वनिपः सम्बन्धी प्रत्ययो वकारोऽस्ति । अवश्यं च क्विबादीनामुच्चारणार्थे कश्चिदजासंजनीयः, तत्राकारे 'सृशृभ्यां वः' इत्यादिष्वपि लोपः प्रसज्येत । उकारे, तु ण्वुलादिषु । अन्यत्र तु गौरवमिति यथान्यासमेव साधीयः । ननु च यद्यल्समुदायोऽपि गृह्येत, अल्ग्रहणमनर्थकं स्याद् । अतो यद्यपि 'निपात एकाजनाङ्' इत्यत्रैकग्रहणाद्वर्णग्रहणे जातिग्रहणं ज्ञापितम्, तथाप्यत्राल्ग्रहणसामर्थ्यात्समुदायस्य न भविष्यतीति चिन्त्यप्रयोजनमेकग्रहणम् । तथाऽपृक्तप्रदेशेष्वल्ग्रहणेनैव सिद्धे नार्थः संज्ञया; नतराम्महत्या, नतमाम्पूर्वनिर्दिष्टया ।

*सुरा इति* । सुरां सुनोतीति क्विपि तुक् सुरासुतमाचष्टे इति णिचि टिलोपः क्विब् णिलोपः, अत्र धातुसकारस्य 'हल्ङ्याब्भ्य' इति लोपो न भवति, प्रत्ययपरि-

न्यासः

**अपृक्तं एकाल् प्रत्ययः** ॥ घृतस्पृगिति । 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् = शकारस्य खकारः, तस्य जश्त्वम् = खकारस्य गकारः । अर्द्धभागिति । 'चोः कुः' इति जकारस्य गकारः । उभयत्र 'वावसाने' इति चर्त्वं ककारः । तत्रापृक्तसंज्ञायां सत्याम् 'वेरपृक्तस्य' इति वकारलोपो भवति । प्रत्युदाहरणेषु हि तदभावान्न भवति ।

दर्विरिति । 'दॄ विदारणे', 'दॄदृभ्यां विन्' इति विन् । जागृविरिति । 'जागृ निद्राक्षये', 'जॄशॄस्तॄजागृभ्यः क्विन्' इति क्विन् । सुरा इति । 'षुञ् अभिषवे', सुरां

## तत्पुरुषः समानाधिकरणः कर्मधारयः ॥ ४२ ॥

'तत्पुरुष' इति समासविशेषस्य संज्ञां वक्ष्यति। स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवति। अधिकरणशब्दोऽभिधेय-

पदमञ्जरी

भाषया सिद्धम्। तिपा साहचर्याच्चैकवचनस्य ग्रहणं सिद्धमिति प्रत्ययग्रहणमपि चिन्त्यप्रयोजनमेव ॥

*तत्पुरुषः समानाधिकरणः कर्मधारयः* ॥ अत्र 'तत्पुरुषः' 'समानाधिकरणः' इति द्वयोरपि पदयोर्मुख्यार्थत्वे ब्राह्मणराज्यं शोभनमित्यादौ यत्र बाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यं तत्रैव संज्ञा स्याद्, न तु परमराज्यमित्यादौ; शब्दान्तरस्याप्रयोगादित्यन्यतरद्गौणार्थमिति स्थिते कामचाराद्यदि तत्पुरुषशब्दो गौणः स्यात् तत्पुरुषार्थानि पदानि समानाधिकरणानीति, ततः सहग्रहणाभावात् प्रत्येकं संज्ञा इति शङ्क्येत, अतस्तत्पुरुष इति पदं मुख्यार्थमित्याह—*तत्पुष इति*। *समासविशेषस्येत्यादि*। इतरद्गौणार्थमित्याह—*समानाधिकरणपद इति*। समाना-

न्यासः

सुनोतीति 'अन्येभ्योऽपि दृश्यते' इति क्विप्, सुरासुत्, ह्रस्वस्य तुक्। 'तमाचष्टे' इति णिच्। 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इति टिलोपः। सुरासवतेः पुनः क्विप्, णिलोपः, प्रथमैकवचनम्, हल्ङ्यादिना सुलोपः, रुत्वविसर्जनीयौ। अत्रापि णिलोपे कृतेऽसति प्रत्ययग्रहणे धातुसकारस्यापृक्तसंज्ञा स्यात्। तस्याञ्च सत्याम् 'हल्ङ्याब्भ्यः' इति धातुसकारलोपः स्यात्। ननु चासत्यपि प्रत्ययग्रहणे 'प्रत्याप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति संज्ञा विज्ञास्यते, तत् किमर्थं प्रत्ययग्रहणम्? तत् क्रियते विस्पष्टार्थम्।

अथैकग्रहणं किमर्थम्? अल्समुदायस्य मा भूदिति, नैतदस्ति; अल्ग्रहणसामर्थ्यान्न भविष्यति, अन्यथा ह्यल्ग्रहणमनर्थकं स्याद्—यदि हल्समुदायस्यापि संज्ञा स्यात्। एवं तर्ह्यल्ग्रहणेनात्र जातिग्रहणं भवतीति ज्ञापनार्थमेकग्रहणम्। तेन 'हलन्ताच्च' इत्यत्र यदुक्तम्—'दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्' इति, तदुपपन्नं भवति।

**तत्पुरुषः समानाधिकरणः कर्मधारयः** ॥ 'तत्पुरुष' इति समासविशेषस्याख्या। स च एक एव शब्दः। अनेकस्य च शब्दस्य भिन्नप्रवृत्तिनिमित्तस्यैकस्मिन्नर्थे वृत्तिः = सामानाधिकरण्यम्। ततश्च यत्र बाह्येन पदेन तत्पुरुषस्य सामानाधिकरण्यम्, तत्रैवेयं संज्ञा स्याद्—राजपुरुषः, शोभन इत्यादौ, अस्ति ह्यत्र तत्पुरुषस्य सामानाधिकरण्यं शोभनशब्देन सह। पाचकवृन्दारिकेत्यादौ तु न स्यात्, न ह्यत्र तत्पुरुषस्य केनचित् सामानाधिकरण्यमस्ति; शब्दान्तरस्य प्रयोगाभावादिति चोद्यमपाकर्त्तुमाह—**समानाधिकरणपद इति**। समानम् = अभिन्नम्, एकमधिकरणम् = वाच्यं येषां पदानां

वाची । समानाधिकरणः = समानाभिधेयः । परमराज्यम्, उत्तम-राज्यम् । अकर्मधारये राज्यमित्युत्तरपदाद्युदात्तं न भवति । पाचक-वृन्दाकारिका ।

पदमञ्जरी

धिकरणानि पदान्याश्रयत्वेन यस्य सन्ति स तथोक्तः; अवयवद्वारकं सामाना-धिकरण्यमौपचारिकमपि पदान्तनिरपेक्षमन्तरङ्गमिति तदेवाश्रीयत इति भावः । भवति ह्यवयवधर्मेण समुदायस्य व्यपदेशः, यथा—समं चूर्णमिति । अत्र ह्यवयव-द्वारकं चूर्णस्य साम्यम्, न तु कृत्स्नस्य चूर्णस्यात्न्येन । *परमराज्यमिति, अकर्मधारये राज्यम्* इत्यत्राकर्मधारय इति निषेधादुत्तरपदाद्युदात्तत्वाभावे समासान्तोदात्तमेव भवति । *पाचकवृन्दारिकेति* । 'न कोपधायाः' इति प्रतिषेधं बाधित्वा 'पुंवत्कर्म-धारय' इति पुंवद्भावो भवति ।

*तत्पुरुष इति किमिति* । प्रतिपदोक्तत्वादधिकारावगतेर्वा समानाधिकरणा-धिकारविहितस्तत्पुरुष एव प्रतिपत्स्यत इति प्रश्नः । *पाचिकाभार्य इति* । अय-मेवार्थो दुरवधार इति भावः । *ब्राह्मणराज्यमिति* । अत्रोत्तरपदाद्युदात्तत्वमेव भवति । अथ 'पूर्वकालैक' इत्यस्य प्रकरणस्यान्ते 'कर्मधारय' इति कस्मान्नोक्तम्, योऽयं समानाधिकरणाधिकारविहितस्तत्पुरुषः स कर्मधारय इति, एवं हि 'तत्पुरुषः समानाधिकरण' इति न वक्तव्यं भवति ? सत्यम्; एकसंज्ञाधिकारात्तु कर्मधारसंज्ञया तत्पुरुषसंज्ञाया बाधः स्यादिति द्विगोरिव पुनस्तत्पुरुषसंज्ञा-विधानाय कर्मधारयपदमुपादेयम् । पुनश्च पर्यायप्रसङ्गे समावेशाय चकारोऽपि वक्तव्यः । नन्वेवं करिष्यते—द्विगुकर्मधारयौ चेति ? एवं तु न कृतमित्येव ॥

न्यासः

तानि समानाधिकरणानि पदानि, तान्याश्रयभूतानि यस्य तत्पुरुषस्य स समानाधिकर-णपदस्तत्पुरुषः । एतेन तत्पुरुषार्थानां पदानां समानाधिकरणत्वाद्धुपचारेण तत्पुरुषोऽत्र सूत्रे समानाधिकरणशब्देनोक्त इति दर्शयति । कथं पुनर्बाह्यान्यपदापेक्षया तत्पुरुषस्य मुख्ये सामानाधिकरण्ये सम्भवति सत्यौपचारिकस्य ग्रहणमुपपद्यते ? 'कर्मधारय' इति महत्याः संज्ञायाः करणात् । इह हि लाघवार्थत्वात् संज्ञाकरणस्य, लघीयस्यां संज्ञायां कर्त्तव्यायाम् 'कर्मधारय' इति महतीं संज्ञां कुर्वता—'अन्योऽप्यत्र कश्चिद् विपर्ययः संज्ञायामाश्रितः' इत्येषोऽर्थः सूचितः । तेन 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति मुख्यस्य समानाधिकरणस्य ग्रहणं न विज्ञायते ।

अन्ये त्वाहुः—तत्पुरुषार्थानि पदानि तत्पुरुषशब्देनोक्तानीति । तेषामेवैषा संज्ञेत्युक्तं भवति । एतत्तु वृत्तिकारस्यानभिमतम्; यतस्तत्पुरुष इति समासविशेषस्य

तत्पुरुष इति किम्? पाचिकाभार्यः। समानाधिकरण इति किम्? ब्राह्मणराज्यम्।

कर्मधारयप्रदेशाः—'कर्मधारये निष्ठा' इत्येवमादयः॥

## प्रथमानिर्दिष्टं समास उपसर्जनम्॥ ४३॥

### पदमञ्जरी

*प्रथमानिर्दिष्टं समास उपसर्जनम्*॥ *समास* इत्यधिकरणनिर्देशोऽयम्। कष्टश्रितादयश्च समासाः, तेषु किं प्रथमानिर्दिष्टं भवितुमर्हति? समासे सति यस्मात्प्रथमा विधीयते, न च तथाभूतं सम्भवति। समासे हि कृते तत एव प्रथमोत्पद्यते, न तदवयवाद्। अन्तर्वर्तिन्या च विभक्त्या श्रितशब्द एव प्रथमानिर्दिष्टो न कष्टशब्दः। सापि न समासे सत्युत्पन्ना, किं तर्हि? वाक्यकाल एव। निर्दिष्टग्रहणं चानर्थकं स्यात्, समासे प्रथमान्तमित्येव वाच्यं स्याद्, अतो मुख्यस्यासम्भवाद्गौणः समासो गृह्यते इत्याह—*प्रथमयेत्यादि*। कथं पुनः समास इति शास्त्रस्य ग्रहणमित्याह—*समासविधायीति*। समासविधायित्वात्तादर्थ्यात्ताच्छब्द्यमित्यर्थः। निर्दिष्टग्रहणादेव च तुल्येऽपि समासार्थत्वे वाक्यं न गृह्यते, न हि तत्र निर्देशार्था प्रथमा, अर्थप्रयुक्तत्वात्। *द्वितीयेत्येतत्प्रथमानिर्दिष्टमिति*। प्रथमया विभक्त्या उच्चारितम्। यद्येवम्, तस्यैव संज्ञा स्यान्न कष्टादीनाम्, न हि ते शास्त्रे प्रथमानिर्दिष्टाः। य एव द्वितीयेत्यस्य प्रथमानिर्देशः, स एव कष्टादीनामपि; तत्परत्वात्तस्य। यथा

### न्यासः

यस्य संज्ञां वक्ष्यति, स तत्पुरुषः समानाधिकरणपदः कर्मधारयसंज्ञो भवतीत्येवं ब्रुवता वृत्तिकारेण समासस्यैवेयं संज्ञा, न तदर्थानां पदानामिति स्फुटमेवाख्यातं भवति।

समानाभिधेय इति! तदर्थानां पदानां समानाभिधेयत्वात् तत्पुरुषोऽप्युपचारेण समानाभिधेय इत्युक्तः। परमराज्यम्, उत्तमराज्यमिति। 'सन्महत्' इत्यादिना समासः। कर्मधारये सति 'अकर्मधारये राज्यम्' इत्युत्तरपदाद्युदात्तत्वं न भवति। पाचकवृन्दारिकेति। 'वृन्दारकनागकुञ्जरैः' इत्यादिना समासः। 'न कोपधायाः' इति प्रतिषेधे प्राप्ते 'पुंवत्कर्मधारय' इति पुंवद्भावः। पाचिकाभार्य इति। बहुव्रीहिरयम्। तेनात्र 'न कोपधायाः' इति प्रतिषेधो भवत्येव। ब्राह्मणराज्यमिति। षष्ठीतत्पुरुषोऽयम्। तेनात्र समासान्तोदात्तत्वमेव न भवति, अपि तूत्तरपदाद्युदात्तत्वम्।

प्रथमानिर्दिष्टं समास उपसर्जनम्॥ समास इत्यधिकरणनिर्देशोऽयम्। कष्टश्रितादयः समासाः, तेषु न किञ्चित् प्रथमानिर्दिष्टं शब्दरूपमस्ति। तथा हि—समासे कृते तत एव समासाद् विभक्तिरुत्पद्यते, न तु तत्रस्थाच्छब्दात्। न च वाक्यकाले समा-

प्रथमया विभक्त्या यन्निर्दिश्यते समासशास्त्रे तदुपसर्जनसंज्ञं भवति। 'समासे' इति समासविधायि शास्त्रं गृह्यते। वक्ष्यति—

न्यासः

सार्थात् पदाद् या प्रथमोत्पन्ना तदाश्रयं प्रथमानिर्दिष्टत्वं समासावयवस्य कल्पयितुं युक्तम्; यतः 'समास' इत्यधिकरणनिर्देशोऽयम्। तत्र समासे कृते यस्मात् प्रथमोत्पद्यते, तदेव समासे प्रथमानिर्दिष्टं भवति; न तु यस्माद् वाक्यकाले विभक्तिरुत्पद्यते। तद्धि वाक्य एव प्रथमानिर्दिष्टम्, न तु समासे; प्रागेव समासात् तस्य प्रथमानिर्दिष्टत्वात्। ततश्च समासे कृते प्रथमानिर्दिष्टस्य संज्ञिनोऽसम्भवात् संज्ञा न सम्भवतीत्येतच्चोद्यमपाकर्तुमाह—प्रथमया विभक्त्या यन्निर्दिश्यत इति। समासार्थं यच्छास्त्रं तत् समासशास्त्रं गृह्यते। तत्र प्रथमानिर्दिष्टस्येयं संज्ञा विधीयते, न तु कष्टश्रितादौ; समासे प्रथमानिर्दिष्टस्याविद्यमानत्वात् विद्यते च समासशास्त्रे प्रथमानिर्दिष्टं संज्ञीति कुतः संज्ञाया अप्रसिद्धिः? कथं पुनः 'समासे' इत्युच्यमाने समासशास्त्रे यत् प्रथमया निर्दिश्यते तस्य संज्ञित्वं लभ्यत इत्यत आह—समास इति। समासशास्त्रं गृह्यत इति। कथं पुनः 'समासे' इत्युच्यमाने समासशास्त्रं ग्रहीतुं शक्यम्? तादर्थ्यात् तत्र समासशब्दस्य प्रवृत्तेः। भवति हि तादर्थ्यात् ताच्छब्द्यम्, यथा—प्रदीपार्था मल्लिका 'प्रदीपः' इति, इन्द्रार्था स्थूणा 'इन्द्रः' इति। कष्टश्रितादिषूपसर्जनसंज्ञायाः कार्यम्—'उपसर्जनं पूर्वम्' इति पूर्वनिपातः।

तत्रेदं चोद्यते—राज्ञः कुमारीं पश्य राजकुमारीं पश्येत्यत्र राजन्शब्दः 'षष्ठी' इति समासशास्त्रे प्रथमानिर्दिष्टः, 'द्वितीया श्रितातीतपतित' इति द्वितीयासमासशास्त्रे कुमारीशब्दश्च। समासशास्त्रे तत्रोभयोरप्यस्यां संज्ञायां सत्यां पूर्वनिपातानियम उपसर्जनह्रस्वत्वञ्चेत्येतद्दोषद्वयं प्राप्नोतीति। इह च राज्ञः कुमार्याः स्वं राजकुमारीस्वमिति द्वयोरपि षष्ठ्यन्तयोः समासशास्त्रे प्रथमानिर्दिष्टत्वादुभयोरप्युपसर्जनसंज्ञायां सत्यां तदेव दोषद्वयं प्राप्नोति? नैष दोषः; यस्मादुपसर्जनमिति महत्याः संज्ञायाः करणस्यैतदेव प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेतेति। अप्रधानमुपसर्जनम्, प्रधानमनुपसर्जनमिति। अप्रधानञ्च प्रधानमपेक्षते; सम्बन्धिशब्दत्वात्। तत्र सम्बन्धादेतदवगन्तव्यं यत् प्रति यदप्रधानं तत् प्रति तदुपसर्जनमिति। श्रितादींश्चापेक्ष्य द्वितीयान्तमुपसर्जनं भवति, न तु द्वितीयान्तमात्रम्। न चेह श्रितादयः सन्ति। राज्ञः कुमार्याः स्वं राजकुमारीस्वमित्यत्राप्येष परीहारः। अत्रापि कुमारीशब्दमपेक्ष्य राजशब्दस्याप्राधान्यम्, न तु राजशब्दमपेक्ष्य कुमारीशब्दस्य। तस्माद् राजन्शब्दस्योपसर्जनसंज्ञा, न तु कुमारीशब्दस्य। यदि ह्यन्वर्थसंज्ञेयम्, पाचकवृन्दारिका, पुरुषव्याघ्रः, अर्धपिप्पली, पूर्वकायः—इत्येतेषु पूर्वपदार्थ एव प्रधानमिति पाचिकादीनामिह प्राधान्यम्। अतो यद्यप्येते 'वृन्दारकनागकुञ्जरैः पूज्यमानम्', 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे', 'अर्धं नपुंसकम्', पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे'—इत्येतेषु समासशास्त्रेषु

'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति द्वितीयासमासे द्वितीयेत्येतत्प्रथमानिर्दिष्टम् । तृतीयासमासे तृतीयेति, चतुर्थीसमासे चतुर्थीति, पञ्चमीसमासे पञ्चमीति, षष्ठीसमासे षष्ठीति, सप्तमीसमासे सप्तमीति । कष्टश्रितः । शङ्कुलाखण्डः । यूपदारु । वृकभयम् । राजपुरुषः । अक्षशौण्डः ।

उपसर्जनप्रदेशाः 'उपसर्जनं पूर्वम्' इत्येवमादयः ॥

पदमञ्जरी

वक्ष्यति—'तस्येति सामान्यं विशेषोपलक्षणार्थं तदीयप्राथम्यं विशेषाणां विज्ञायते' इति । कष्टश्रितादिषूपसर्जनत्वात् पूर्वनिपातः । महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम् । लोकेऽप्रधानमुपसर्जनमुच्यते, इहाप्यप्रधानमुपसर्जनम् । प्रधानमप्रधानमिति च सम्बन्धिशब्दावेतौ, तेन यत्प्रति यदप्रधानं तदेव प्रति तदुपसर्जनं भवति, तेन राज्ञः कुमारीश्रित इति 'द्वितीया श्रित' इत्यत्र प्रथमानिर्दिष्टस्यापि कुमारीशब्दस्य संज्ञा न भवति । यदि स्यात्, पूर्वनिपातानियम उपसर्जनह्रस्वत्वं च स्यात् । अन्वर्थत्वे तु श्रितादीनेवापेक्ष्य द्वितीयान्तमुपसर्जनमिति न प्रसङ्गः । एवं राज्ञः कुमार्या इत्यत्र द्वयोरपि 'षष्ठी' इत्यत्र प्रथमानिर्देशेऽपि कुमारीमपेक्ष्य राज्ञ उपसर्जनत्वम्, न तं प्रति तस्याः । यद्यन्वर्थसंज्ञा,नार्थोऽनेन. प्रदेशेष्वेवान्वर्थग्रहणमस्तु । वाक्येऽपि तर्हि स्यात्—कुमारीं श्रिता गवां कुलम् । अथ संज्ञाविधिर्वाक्ये कस्मान्न भवति, यावता 'समासे' इति प्रथमानिर्देशस्याधारो न संज्ञायाः ? तथा गोकुलं कुमारीपुत्र इत्यत्र समासेऽपि पूर्वनिपातवद् ह्रस्वत्वं कस्मान्न भवति ? तस्मात्सत्येवोपसर्जनत्वे उपसर्जनगोशब्दान्तस्योपसर्जनत्वात्

न्यासः

प्रथमानिर्दिष्टाः, तथापि तेषामुपसर्जनसंज्ञा न प्राप्नोति; कुतः ? तेषां प्राधान्यात् । एवं तर्ह्युत्तरसूत्रेऽनुक्तसमुच्चयार्थत्वाच्चकारस्य भविष्यतीत्यदोषः ।

अन्यस्त्वेवं मन्यते—"पाचकवृन्दारिकेत्येवमादिषु पूर्वोक्तेषु समासेष्वाद्यौ 'विशेषणं विशेष्येण बहुलम्', 'उपमानानि सामान्यवचनैः' इत्येताभ्यामेव सिद्धौ; शेषो तु 'षष्ठी' इत्यनेनैव । तस्माद् 'वृन्दारकनागकुञ्जरैः' इत्यादीनां न तदर्थ आरम्भः, किं तर्हि ? उपसर्जनसंज्ञार्थः, तेनासत्यपि पाचिकादीनामप्रधानत्वे तेषामियं संज्ञा भविष्यति" इति, एतच्चासम्यक्, तथा हि–'पूज्यमानम्' 'सामान्याप्रयोगे' 'नपुंसकम्' 'एकाधिकरणम्'–इत्येतान् विशेषान् वक्ष्यामीत्येतदर्थ आरम्भः स्यात् । सति चैतदर्थ आरम्भेऽत्राप्रधानस्योपसर्जनसंज्ञा विधीयमाना प्रधानस्य न स्यात् ॥

## एकविभक्ति चापूर्वनिपाते ॥ ४४ ॥

एका विभक्तिर्यस्य तदिदमेकविभक्ति, समासे विधीयमाने यन्नियतविभक्तिकं द्वितीये सम्बन्धिनि बहुभिर्विभक्तिभिर्युज्यमानेऽप्येकयैव

पदमञ्जरी

स्त्रीप्रत्ययान्तान्तस्य प्रातिपदिकस्य ह्रस्वविधानात्समासाधिकारे पूर्वनिपातवचनाच्च वाक्ये तौ न भवत इति वाच्यम् । संज्ञाविधानं तून्मत्तगङ्गमित्यादौ द्वयोरप्यप्राधान्ये पूर्वनिपातनियमार्थम् । यत्र चानन्यार्थः प्रथमानिर्देशस्तत्र प्रधानस्यापि यथा स्यादित्येवमर्थं च । यथा—पाचकवृन्दारकः, पुरुषव्याघ्रः, अर्द्धपिप्पली, पूर्वकाय इति अत्र 'वृन्दारकनागकुञ्जरैः पूज्यमानम्', 'उपमितं व्याघ्रादिभिः', 'अर्द्धं नपुंसकम्', 'पूर्वापराधरोत्तरम्' इति प्रथमानिर्देशस्येदमेव प्रयोजनम्; समासस्य विशेषणं विशेष्येण षष्ठीत्येव सिद्धत्वाद् । न च पूज्यमानतादिविषय एव यथा स्यादिति नियमार्थस्तदारम्भः ? उपसर्जनसंज्ञार्थत्वेऽर्द्धादिपूर्वपदस्य विशिष्टरूपस्यार्द्धपिप्पलीत्यादेः समासस्य विधिसम्भवात् । तस्मादेतदर्थापि संज्ञा । अन्वर्थत्वं तु सति संभवे व्यवस्थापकम् ॥

*एकविभक्ति चापूर्वनिपाते* ॥ विभक्तिशब्दः सुपां वाचकः,कारकशक्तिवचनो वा; विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा । *समासे विधीयमान इति* । यदुपमर्देनेन समासो भवति तस्मिन्वाक्य इत्यर्थः, समासरूपप्राप्त्यभिमुखे पदत्रय इति यावत् । एतेन समासार्थं वाक्यमत्र समासः, न पूर्वसूत्र इव शास्त्रमिति दर्शयति । शास्त्रे सर्वमेकविभक्तिमित्येकविभक्तीत्यनर्थकं स्यात्, मुख्येऽपि समासे प्रत्ययलक्षणेनैकविभक्तित्वं समर्थनीयमिति वाक्यमेवात्र समासः । एकस्मिंश्च प्रयोगे सर्वमेकविभक्तिकमिति विशेषणोपादानसामर्थ्यात्प्रयोगभेदेनापि यस्य न सर्वविभक्तित्वं तदाश्रीयत इत्याह—*यन्नियतविभक्तिकमिति* । एतदेव स्पष्टयति—*द्वितीये सम्बन्धिनीत्यादि* ।

न्यासः

एकविभक्ति चापूर्वनिपाते ॥ अप्रथमानिर्दिष्टार्थोऽयमारम्भः । विभक्तिशब्दः सुपां वाचकः, विभागवचनो वा । कारकशक्तिर्विभागः—विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा । समासे विधीयमान इति । समासार्थवाक्यकाले । तदा हि तस्य समासस्य विधीयमानता भवति । एतेन समासग्रहणमनुवर्तमानं समासार्थे वाक्ये वर्तते, न समासशास्त्र इति दर्शयति । समासशास्त्रे हि सर्वमेव शब्दरूपमेकविभक्तिकमेव भवतीत्येकविभक्तिग्रहणमनर्थकं स्यादिति भावः । सर्वमेव हि प्रातिपदिकं पर्यायेणैकया विभक्त्या प्रयुज्यते । तस्मादेकविभक्तिग्रहणसामर्थ्यादवधारणमत्र विज्ञायत इत्यत आह—यन्नियतविभक्तिकमिति । तदेव स्पष्टीकुर्वन्नाह—द्वितीये सम्बन्धिनी-

विभक्त्या युज्यते तदुपसर्जनसंज्ञं भवति अपूर्वनिपाते। पूर्वनिपातं पूर्वनिपाताख्यमुपसर्जनकार्यं वर्जयित्वा।

निरादयः क्रान्ताद्यर्थे पञ्चम्या। पूर्वपदे नानाविभक्तिकेऽप्युत्तरपदं पञ्चम्यन्तमेव भवति। निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः। निष्क्रान्तं कौशाम्ब्या निष्कौशाम्बिम्। निष्क्रान्तेन कौशाम्ब्या निष्कौशाम्बिना। निष्क्रान्ताय कौशाम्ब्या निष्कौशाम्बये। निष्क्रान्तात् कौशाम्ब्या निष्कौशाम्बेः। निष्क्रान्तस्य कौशाम्ब्याः निष्कौशाम्बेः। निष्क्रान्ते कौशाम्ब्या निष्कौशाम्बौ। एवं निर्वाराणसिः।

एकविभक्तीति किम्? राजकुमारी। अपूर्वनिपात इति किम्? न हि भवति कौशाम्बीनिरिति॥

पदमञ्जरी

केचिदाहुः—'येन सह समस्यते द्वितीयसम्बन्धी' इति, एवं तु पञ्चानां खट्वानां समाहारः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे उपसर्जनह्रस्वत्वं न स्यात्। समाहारो ह्यत्र नानाविभक्तियुक्तो न पञ्चन्शब्दः, तस्मात्प्रधानार्थवाची शब्दो द्वितीयः सम्बन्धः। निष्कौशाम्बिरिति कौशाम्बीशब्दो निष्क्रमणक्रियापेक्षयाऽपादानशक्तियोगात् पञ्चम्यन्त एव, न तस्य क्रियान्तरमपेक्ष्य शक्त्यन्तरावेशः सम्भवति। निःशब्दस्तु निष्क्रान्तप्रधानो नानाशक्तिभिर्युज्यते।

*निष्कौशाम्बिरिति*। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः। *निर्वाराणसिरिति*। अनो जलं तद्वरं यस्याः सा वराणा

न्यासः

त्यादि। पूर्वपदे नानाविभक्तिकेऽपीति। निष्क्रान्तशब्दः कर्तृशक्त्युपसर्जनीभूतं द्रव्यमाह। तच्चानेकसाधनशक्त्युपचितमिति क्रियान्तरसम्बन्धादनेकसाधनविभक्तिकं भवति। उत्तरपदं तु पञ्चम्यन्तमेव भवतीति। निष्क्रमणक्रियापेक्षयाऽऽविर्भूतापादानशक्तिकत्वात्। निष्कौशाम्बिरित्यत्रोपसर्जनसंज्ञाकार्यम् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। अथ निसोऽत्र केनोपसर्जनसंज्ञा विधीयते, यतोऽस्य पूर्वनिपातः? पूर्वसूत्रेणेति चेत्, नैतदस्ति; तेनाप्रधानस्योपसर्जनसंज्ञाविधानात्, निसश्चात्र प्रधान्यात्। एवं तर्हि चकारस्यानुक्तसमुच्चयार्थत्वाद् भविष्यति।

अन्ये त्वाहुः—मा भून्निस उपसर्जनसंज्ञा, असत्यामपि तस्यां तस्यैव पूर्वनिपातो भविष्यति, 'एकविभक्ति चापूर्वनिपाते' इति वचनादिति, एतच्चायुक्तम्; पूर्वनिपाते हि कर्तव्य एकविभक्तिकस्योपसर्जनसंज्ञा नास्त्येव। तत्र यदि निस उपसर्जनसंज्ञा न

## अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ ४५ ॥

अभिधेयवचनोऽर्थशब्दः । अर्थवच्छब्दरूपं प्रातिपदिकसंज्ञं भवति धातुप्रत्ययौ वर्जयित्वा । डित्थः । कपित्थः । कुण्डम् । पीठम् ।

**पदमञ्जरी**

गङ्गा, तस्या अदूरभवा नगरी वाराणसी । *पुराणे* तु वरणा चासिश्च नद्यौ, शकन्ध्वादिः, तयोरदूरभवा पृषोदरादित्वाद्रेफाकारस्य दीर्घः । निसः पूर्वेणोपसर्जनत्वम्, प्रधानस्यापि हि प्रथमानिर्देशसामर्थ्यात् भवतीत्युक्तम् । इहास्यात्रकाशोऽप्रथमानिर्दिष्टः, पूर्वस्यावकाशोऽनेकविभक्तिः नीलोत्पलादिः, अर्द्धपिप्पल्यादिश्च; कष्टश्रितादिषु कष्टादय एकविभक्तिकाः प्रथमानिर्दिष्टाश्चेत्युभयप्रसङ्गे परत्वादनेनैव प्राप्नोति, ततश्च 'अपूर्वनिपाते' इति प्रतिषेधप्रसङ्गः, न; अप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः—पूर्वनिपाते नेति, किं तर्हि ? पर्युदासोऽयम्, पूर्वनिपाते न विधिर्न प्रतिषेधः । प्रसज्यप्रतिषेधेऽप्यनन्तरप्राप्तिः प्रतिषिध्यते, कुत एतद् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा भवति, पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति । न चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते, प्रतिषिद्धत्वात् ॥

*अर्थवदधातुरप्रत्ययः प्रातिपदिकम्* ॥ *अभिधेयवचनोऽर्थशब्द* इति । न प्रयोजनवचनोऽव्यभिचारात्; न निवृत्तिवचनः, स्वयं निवृत्तस्य किं संज्ञया ! न धनवचनः, स्वस्वामिभावस्यासम्भवात् । तच्चाभिधेयं चतुर्द्धा—जातिगुणक्रियाद्रव्यभेदेन; गौः, शुक्लः, पाचकः, डित्थ इति । यद्यर्थवतः संज्ञा, अभावशशविषाणादीनां न प्राप्नोति; अर्थाभावात् । मा भूदनेन, समास इति भविष्यति ? न; अर्थवदित्यनुवृत्तेः । अन्यथाऽनर्थकेऽत्र विधिसम्भवात् समासग्रहणं नियमार्थं न स्यात्, उच्यते; येषां तावद्भूतलाद्याश्रयं घटादिप्रतियोगिकं नास्तीति बुद्धि-

**न्यासः**

स्यात्, तदोदाहरणे द्वयोरप्यसत्यां तस्यां पर्यायेणानियतः पूर्वनिपातः प्रसज्येत । अथ कथमर्धपिप्पल्यादीनामुपसर्जनसंज्ञा न भवति ? अत्र च 'विभाषा छन्दसि' इत्यतो विभाषाग्रहणं मण्डूकप्लुतिन्यायेनानुवर्तते, सा च व्यवस्थितविभाषा । तेनार्धं पिप्पल्या अर्धपिप्पलीत्यादौ विषये पिप्पल्यादीनामेकविभक्तियुक्तानामप्युपसर्जनसंज्ञा न भवति । यदि हि स्यात्, तदा ह्रस्वत्वं स्यात् ॥

अर्थवदधातुरप्रत्ययः प्रातिपदिकम् ॥ अभिधेयवचनोऽयमर्थशब्द इति । एतेन प्रयोजनादिवचनाद्व्यवच्छिनत्ति । अर्थशब्दो हि प्रयोजनवचनोऽप्यस्ति, यथा—अनेनार्थेनागतः, अनेन प्रयोजनेनेति गम्यते । निवृत्तिवचनोऽप्यस्ति, यथा—मशकार्थो धूम इति, मशकनिवृत्त्यर्थ इति गम्यते । धनवचनोऽप्यस्ति, यथा—अर्थवान् देवदत्त इति, धनवानिति गम्यते । अभिधेयवचनोऽप्यस्ति, यथा—अस्य

अर्थवदिति किम्? वनम्, धनमिति नान्तस्यावधेर्मा भूत्। न-

पदमञ्जरी

बोध्यं तत्त्वान्तरमभावस्तन्मते तेनार्थेनार्थवत्त्वम्; येषामप्याश्रयाभिमतं भूतलादिस्वरूपमेव तद्बुद्धिविशेषो वा प्रतियोगिनो घटादेरभावस्तन्मते तेनैव भूतलादिनार्थऽवत्त्वमित्यभावस्य तावत्सिद्धा संज्ञा। शशविषाणमित्यत्रापि गवादिष्वनुभूतविषाणं शशमस्तकवर्तितया बुद्ध्योत्प्रेक्ष्य तस्यैवाभिधानाय शब्दप्रयोगः। बुद्ध्युपारोह एव चार्थस्य शब्दप्रयोगे कारणम्, न बहिःसत्ता। यदि बहिःसन्तमेवार्थं शब्दा अभिदधति; घटोऽस्ति, घटो नास्तीति प्रयोगो न स्याद्; एकत्र पौनरुक्त्याद्, अपरत्र विरोधाद्। बुद्ध्युपारूढस्य बहिःसत्त्वासत्त्वप्रतिपादनायोपपद्यते प्रयोगः। एवमपाक्षीत्, पक्ष्यति, अस्य सूत्रस्य शाटकं वयेत्यादावपि बुद्ध्युपारूढ एव पच्यादीनामर्थः; न तु शब्दप्रयोगकाले बहिःसिद्धः।

डित्थादीन्यव्युत्पन्नान्युदाहरणानि। व्युत्पत्तौ कृदन्तत्वादेव सिद्धम्। सर्वं नाम धातुजमित्यत्रापि पक्षेऽव्ययार्थमनुकरणशब्दार्थं च सूत्रमारम्भमेव। ननु लौकिके प्रयोगे शब्दानामर्थवत्ताध्यवसायः, स च वाक्यस्यैव पदस्य वा विभक्त्यन्तस्य; न तु प्रकृतिभागमात्रस्येति कथं तस्य निष्कृष्यार्थवत्त्वनिश्चयः! येषां हि सहैव प्रयोगस्तेषां सङ्घातस्यैवार्थवत्ता यथा वर्णानाम्? उच्यते; अन्वयव्यतिरेकाभ्यां शब्दार्थनिश्चयः, यस्य शब्दस्यान्वये योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थः। वृक्षौ वृक्षा इत्यादौ च प्रत्ययसामान्यव्यभिचारेऽपि तद्विशेषव्यभिचारः, वृत्तौ सामान्यव्यभिचारश्च वृक्षखण्डं दार्क्षी शाखेति, अर्थस्तु मूलस्कन्धफलपलाशादिमान् यावद्वृक्षशब्दं प्रतीयते।

*नान्तस्यावधेरिति*। ननु 'वन षण सम्भक्तौ', 'धन धान्ये' इत्येतयोर्धात्वोरेतौ

न्यासः

वचनास्यायमर्थ इति, इदमस्याभिधेयमिति गम्यते। इह त्वभिधेयवचनस्यैव ग्रहणम्। तत् पुनरभिधेयं जातिगुणक्रियाद्रव्यभेदेन चतुर्विधम्। अत एव चतुष्टयी शब्दानां प्रवृत्तिर्भवति। तत्र जातिशब्दानां जातिरभिधेया—गौरिति। गुणशब्दानां गुणः—शुक्ल इति। क्रियाशब्दानां क्रिया—पाचक इति। द्रव्यशब्दानां द्रव्यम्—डित्थ इति। यद्यर्थवतः प्रातिपदिकसंज्ञा विधीयते तदाऽभाववचन-शशविषाणादिशब्दानां प्रातिपदिकसंज्ञा नोपपद्यते, अर्थाभावात्, नैतदस्ति; 'अर्थशब्दोऽभिधेयवचनः' इत्युक्तम्, अभावोऽप्यभिधेयो भवत्येव। अन्यथा ह्यर्थाभावादितीदं वचनमनुच्चारणीयं स्यात्; अनर्थकत्वात्, न ह्यनर्थकं वचनं प्रयोगमर्हति। तस्मादभाववचनानामपि प्रातिपदिकसंज्ञा भवत्येव।

नान्तस्यावधेर्मा भूदिति। ननु चाधातुरिति प्रतिषेधो भविष्यति, तथा हि

पदमञ्जरी

शब्दौ पचाद्यचि व्युत्पादितौ, तत्राधातुरिति निषेधो भविष्यति। एवं तर्ह्यव्युत्पत्तिपक्ष एतदुक्तम्, अत एवोदाहरणत्वेनाप्यनयोरुपन्यासः। किं चासत्यर्थवद्ग्रहणे प्रतिवर्णं संज्ञाप्रसङ्गः, न च प्रतिवर्णं धातुसंज्ञा, न चाधातुरप्रत्यय इति पर्युदासाश्रयणाद् अर्थवतो ग्रहणम्। अनर्थकयोरपि धातुप्रत्यययोः सम्भवाद्, यथा—अधीते, यावक इति। अत्र ह्यधिपूर्वस्येङोऽर्थवत्त्वं न तु इङि; तस्य क्वचिदप्यप्रयोगाद्। यावक इत्यत्रापि यावशब्दस्यैवार्थवत्त्वं न तु कनः; अन्तरेणापि तदर्थावगमात्। न च ज्ञायते—केन धर्मेण सादृश्यमिति! न चार्थवद्ग्रहणपरिभाषयार्थवतो ग्रहणम्? एषा हि नियतरूपोपादाने व्यवस्थापयति, न चात्र रूपविशेषोपादानम्। ननु सत्यामप्यनर्थकस्य संज्ञायां संख्याकर्मादिषु विधीयमानाः स्वादयो न भविष्यन्ति, नैतदस्ति; अविशेषेणोत्पद्यन्ते, उत्पन्नानामर्थनियमः, ततश्चाव्ययवत् स्वादयः स्युरेव। *नलोपो हि स्यादिति*। विभक्तेस्तु श्रवणं न भवति, समुदायस्यापि पृथक् प्रातिपदिकसंज्ञायां तदन्तर्भावाल्लुको भावात्। यद्येवम्, द्विर्वचनन्यायेनावयवस्य न भविष्यति, युक्तं तत्र पज् इत्यत्र येनैवाचा समुदाय एकाच्, तेनैव तदवयवोऽच्छब्दः पशब्दश्च; न चैकस्यैकदाऽनेकं प्रत्ययवयवत्वं निरूपयितुं शक्यम्। किञ्च—समुदायद्विर्वचनेनावयवा अपि द्विरुच्यन्ते, तदात्मकत्वात्तस्य। इह त्ववयवानां समुदायस्य च संज्ञानिबन्धनं शब्दत्वं पृथगेव। तत्र समुदायस्य यत् तेन तस्यैव कार्यं नावयवानाम्। ननु च एति, आभ्याम्, औपगवः, अ अपेहीति, धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् वृक्षादिष्वपि वर्णा अर्थवन्तः, तथा कूप इति ककारे सति कश्चिदर्थो गम्यते. यूप इति यकारोपजनेऽर्थान्तरम्, तेन मन्यामहे यः कूपे कूपार्थः स ककारस्य, यो यूपे यूपार्थः स यकारस्येति; तथा 'ब्राह्मण' इत्युक्ते योऽर्थो गम्यते नासौ बकारादीनामन्यतरापायेऽपि गम्यते। येषां च संघातो यत्कार्यं करोति प्रत्येकमपि तत् कुर्वन्ति, यथा—तिलानां खारी तैलमुत्पादयति, प्रत्येकं च तिलाः। ये च यस्मिन् प्रत्येकमसमर्थास्तेषां संघातोऽपि तत्रासमर्थः, यथा—प्रत्येकं सिकतास्तैलं नोत्पादयन्ति तथा खार्यपि तासाम्। अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः, तत्कथमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिः। अनर्थकास्तु, प्रतिवर्णानामर्थानुपलब्धेः, न हि 'ब्रा' इत्युक्ते कश्चिदर्थो गम्यते। अतो धात्वादीनामेकवर्णानामर्थवत्त्वाद् अन्येऽपि वर्णा अर्थवन्त इत्यनुपलब्धिबाधितमेतद्। एवमन्येऽपि हेतवो बाधितविषयाः। किं च कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वे यूप इति चतुर्णां वर्णानामानर्थक्यमभ्युपगतं स्यात्; अथ तेषामर्थवत्त्वं भूयिष्ठः कूपे यूपार्थः स्यात्, कूपार्थश्च यूपे, यत्र भूयसामर्थवतामन्वयः, व्यतिरेकस्तु कस्यचित्; तत्रार्थानामपि भूयसानुमवृत्तिर्भवति, व्यतिरेकस्त

लोपो हि स्यात्। अधातुरिति किम्? हन्तेर्लङ्, अहन्—नलोपो

### पदमञ्जरी

कस्यचिद्; यथा देवदत्त गामभ्याज शुक्लाम्, देवदत्त गामभ्याज कृष्णामिति। अतः संघाता एव तेनार्थवन्तः। संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिकः, तैलाग्नि-वर्तिसंघातेन दीपः, न प्रत्येकम्, रथावयवैश्चक्रादिभिः संहतैव्रजिक्रिया। किञ्चार्थ-वतां विपर्यासेऽर्थप्रत्ययस्यापि विपर्यासः—आहर पात्रं पात्रमाहरेति, अपाये चापायः—गामभ्याज शुक्लां गामभ्याजेति, उपजने चोपजनः—गामभ्याज शुक्लामिति। वर्णेषु तु नैवम्, हिनस्तीति सिंहो हन्ति हतः घ्नन्ति। अतः संघाता एवार्थवन्तः।

*अहन्निति*। हन्तेर्लङि तिप् 'इतश्च' लोपे हल्ङ्यादिलोपोऽट्, स हन्ग्रहणेनैव गृह्यते, अत्र प्रागेव लङुत्पत्तेः संज्ञायां सत्यामुत्तरकालं पदत्वे सति नलोपः स्यात्। यद्वा प्रातिपदिकसंज्ञा पदसंज्ञासमकालमेव स्यात्, न वाऽप्रत्यय इति प्रतिषेधः; 'न ङिसम्बुद्ध्योः' इति लिङ्गात्; अन्यथा हे 'राजन्नित्यादावप्रत्यय इति निषेधाद-प्रातिपदिकत्वादेव नलोपप्रसङ्गात्।

अधातुरिति शक्यमकर्तुम्, 'सुपो धातु' इति धातुग्रहणं ज्ञापकम्—न धातोरियं संज्ञेति। नैतदस्ति ज्ञापकम्, प्रतिषिद्धार्थमेतत् स्यात्, श्येनायत इत्यादावप्रत्यय इति निषिद्धा संज्ञेति भिद्, भूः, पूरित्येवमादौ क्विबन्तत्वे कृदन्तत्वादुत्तरसूत्रेण संज्ञा। न च तस्या अपि प्रतिषेधोऽयम्, 'मध्येऽपवादाः' इति न्यायात्, पर्युदासत्वाद्वा।

### न्यासः

'वन सम्भक्तौ', 'धन धान्ये' इत्येतयोः धात्वोरेते रूपे, नैतदस्ति; अव्युत्पन्नावपि वनधनशब्दौ स्तः, तयोरेवायं प्रयोगः। अत्र यदि नान्तस्यावधेः प्रातिपदिकसंज्ञा स्यात् तदा सुबुत्पत्तिः स्यात्, ततश्च पदसंज्ञायां सत्यां नलोपः स्यात्। ननु च 'अ-धातुः' 'अप्रत्ययः'—इति पर्युदासावेतौ, ततो नञिवयुक्तन्यायेनार्थवतस्तत्सदृशस्यै-वैषा संज्ञा भविष्यति, ततो नार्थोऽर्थवद्ग्रहणेन? नैतदस्ति; अनर्थकस्यापि धातो-र्विद्यमानत्वात्, यथा—'इङ् अध्ययने', 'इक् स्मरणे' इति—एतयोरधिपूर्वयोरेवार्थ-वत्त्वम्, न केवलयोः। यस्तु गणपाठेऽनयोरर्थनिर्देशः, स समुदायार्थमवयवेऽध्यारोप्य कृत इति वेदितव्यम्। अध्यारोपितार्थयोरपि तयोर्गणपाठसामर्थ्याद् धातुसंज्ञा भवत्येव। एवं प्रत्ययोऽप्यनर्थकोऽप्यस्ति। यथा—'यावादिभ्यः कन्', याव एव यावक इति। न ह्यत्र प्रत्ययस्यान्वयव्यतिरेकाभ्यां शक्यतेऽर्थवत्त्वं प्रत्येतुम्। विनापि तेन कन्प्रत्ययेन यावशब्दादेव तदर्थः प्रतीयते। तस्मादर्थवदिति युक्तमुक्तम्।

**अहन्निति**। अदादित्वाच्छपो लुक्, तिपो हल्ङ्यादिना लोपः, अट्। स च हन्तिग्रहणेन गृह्यत इति कृतेऽपि तस्मिन् हन्तिर्धातुरेव। अत्र विना धातुग्रहणेन

हि स्यात्। अप्रत्यय इति किम्? काण्डे, कुड्ये—'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः स्यात्।

### पदमञ्जरी

*काण्डे इति।* प्रथमाद्विवचनस्य 'नपुंसकाच्च' इति शीभावः, अप्रत्यय इति च प्रत्ययग्रहणपरिभाषया तदन्तस्य निषेधः। यत्र हि प्रत्ययः संज्ञिरूपेऽनुप्रविशति, यथा—'तरप्तमपौ घः' इति, तत्र पदसंज्ञायामन्तवचनेन तदन्तविधिप्रतिषेधः। इह तु पर्युदासे प्रत्ययव्यतिरिक्तः संज्ञी, प्रसज्यप्रतिषेधेऽपि न संज्ञाविधौ प्रत्ययग्रहणं, किं तर्हि? प्रतिषेध इति, नास्ति निषेधः। ननूत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति—प्रत्ययान्तस्य यदि भवति कृत्तद्धितान्तस्यैवेति, उच्यते; अस्मिन् सत्यप्रतिषेधे संज्ञाविधौ तदन्तविधिप्रतिषेधात्प्रत्ययस्य यदि भवति कृत्तद्धितस्यैवेति स्थानिनियमः स्यान्न। सति त्वस्मिन्, अत्र तावत्प्रत्ययान्तस्य निषेध इति उत्तरसूत्रेऽपि तद्धितान्तस्य ग्रहणं भवति। अथ क्रियमाणेऽप्यप्रत्यय इत्यस्मिन्नपुंसकह्रस्वत्वं कस्मान्न भवति? पर्युदासे तावत्प्रत्ययाप्रत्यययोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावः, प्रसज्यप्रतिषेधेऽप्यन्तरङ्गत्वात् प्रागेव प्रत्ययोत्पत्तेः काण्डशब्दस्य प्रवृत्ता संज्ञेति एकादेशस्यान्तवद्भाव इत्यस्त्येव प्रातिपदिकत्वम्। तथा च ब्रह्मबन्धूरित्यूङेकादेशस्यान्तवत्त्वात् स्वाद्युत्पत्तिः। न चाप्रत्यय इत्यस्य वैयर्थ्यम्; त्रपुणी इत्यादौ यत्रैकादेशत्वं नास्ति तत्रार्थवत्त्वात्। एवं तर्हि नपुंसके यद्वर्तते तस्य

### न्यासः

प्रागेव प्रत्ययोत्पत्तेः प्रातिपदिकसंज्ञा स्यात्। नलोपस्तु प्रत्ययोत्पत्तौ पदत्वे सत्युत्तरकालम्। अथ वा—प्रतिपदिकसंज्ञापि प्रत्ययोत्पत्तेरुत्तरकालमेव स्यात्, तस्माद् धातुग्रहणं कर्तव्यम्। ननु चात्र प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रतिषेधेन भवितव्यम्, तत् किमधातुग्रहणेन? नैतदस्ति; प्रातिपदिकसंज्ञायां नलोपः कार्यः, नलोपे च 'न ङिसम्बुद्ध्योः' इति प्रतिषेधो ज्ञापकः—प्रत्ययलक्षणेन 'अप्रत्ययः' इति प्रतिषेधो न प्रवर्त्तत इति। यदि ह्यप्रत्यय इति प्रत्ययलक्षणेन हे राजन्नित्येवमादिषु प्रातिपदिकसंज्ञायाः प्रतिषेधः स्यात्, 'न ङिसम्बुद्ध्योः' इति प्रतिषेधोऽनर्थकः स्यात्; प्राप्त्यभावात्। अथ भिद्-छिद्-लूः-पूरित्येवमादीनां कथं प्रातिपदिकसंज्ञा, यावता क्विबन्ता धातुत्वं न जहतीति धातव एवैत इति, अत्राधातुरिति प्रतिषेधेन भवितव्यम्? नैष दोषः; मा भूदनेन, कृदन्तत्वादुत्तरसूत्रेण भविष्यति। न चोत्तरस्याः प्राप्तेरयं बाधकः; वाक्यान्तरस्थत्वात्। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति वा।

काण्डे, कुड्ये इति। प्रथमाद्विवचनान्ते एते रूपे। 'नपुंसकाच्च' इति शीभावः। अत्र च 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य' इति तदन्तस्य प्रतिषेधो भविष्यति, न प्रत्ययमात्रस्य। ननु च 'सुप्तिङन्तं पदम्' इत्यत्रान्तग्रहणेन 'अन्यत्र

* अनर्थकस्यापि निपातस्य प्रातिपदिकसंज्ञेष्यते * ॥ अध्यागच्छति । प्रलम्बते ।

प्रातिपदिकप्रदेशाः—'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्येवमादयः ॥

पदमञ्जरी

ह्रस्वः, विभक्त्यन्तं तु संख्याप्रधानं कारकशक्तिप्रधानं च, न च तयोर्लिङ्गयोगः, न चान्यवद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्वः । यद्येवम्, त्रपुणी इत्यादावप्येवमेव न भविष्यति, नार्थोऽनेन, न चान्यः प्रत्ययान्तो व्यावर्त्यः सम्भवति । तथा हि, षड्विधाः प्रत्ययाः—सनादयः, कृतः, तिङः, सुपः, स्त्रीप्रत्ययाः, तद्धिताश्चेति । प्रातिपदिककार्यमपि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्, 'ङ्याप्प्रातिपदिकात्' इति प्रत्ययविधिश्च । तच्च कृत्तद्धितान्तस्येष्यत एव । सन्प्रभृतिषु येषां तावद्धातुत्वं तेषामधातुरित्येव प्रतिषेधः, श्यन्शबादीनामपि विकरणानां लिङ्गाभावः, संख्याकर्माद्यभावोऽपत्याद्यर्थायोगश्च । एवं तिङन्तानाम्, यथा—यः पचतिरूपम्, तस्यापत्यम् इति रूपवन्तत्वात्सत्यपि प्रातिपदिकत्वे । ये तु सम्भवन्ति स्वार्थिकास्ते 'तिङश्च' इति ज्ञापकान्न भवन्ति । स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग एव, कुमारीपुत्र इत्यत्र 'गोस्त्रियोः' इति ह्रस्वः स्यादिति चेद् ? अथ क्रियमाणेऽपि प्रतिषेधे राजकुमारीपुत्र इत्यत्र कस्मान्न भवति, अत्र हि समासत्वादस्त्येव प्रातिपदिकत्वम् ? अतो यस्तत्र परिहारः, स

न्यासः

संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति ज्ञापितत्वात् 'अप्रत्ययः' इति प्रत्ययान्तस्य प्रतिषेधो न लभ्यते, नैष दोष; संज्ञाविधौ स प्रतिषेधः, न चायं संज्ञाविधिः, किं तर्हि ? प्रतिषेधविधिः । अथ किमर्थमप्रत्यय इति प्रतिषेध उच्यते, यावतोत्तरसूत्रे कृत्तद्धितग्रहणं नियमार्थं भविष्यति—'कृत्तद्धितान्तस्यैव प्रातिपदिकसंज्ञा, नान्यप्रत्ययान्तस्य—काण्डे कुड्ये इत्येवमादेः' इति ? नैतदस्ति, असत्यस्मिन् प्रतिषेधेऽन्यत्र 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति कृत्तद्धितयोरेव प्रातिपदिकसंज्ञा स्यान्न तदन्तस्य; तदन्तस्य चैवेष्यते—भिच्छिल्लः पूरित्येवमादीनां प्रातिपदिकसंज्ञार्थम् । सत्यप्रत्यय इत्येतस्मिन् प्रतिषेधे प्राप्ते यथा कृत्तद्धितान्तस्य प्रातिपदिकसंज्ञा लभ्यते तथोत्तरसूत्रे प्रतिपादयिष्यामः । ननु च 'काण्डे' 'कुड्ये'—इत्येतयोः पूर्वमेव प्रकृतेः प्रातिपदिकसंज्ञा प्रवृत्ता, विभक्त्या च सहैकादेशे कृतेऽन्तादिवद्भावादस्त्येव प्रातिपदिकत्वमिति सत्यप्यप्रत्ययग्रहणे ह्रस्वत्वं प्राप्नोत्येव, नैतदस्ति; अप्रत्ययग्रहणसामर्थ्यान्न भविष्यति, अन्यथा ह्यप्रत्ययग्रहणमनर्थकं स्यात् ।

## कृत्तद्धितसमासाश्च ॥ ४६ ॥

कृतस्तद्धिताः समासाश्च प्रातिपदिकसंज्ञा भवन्ति। 'अप्रत्ययः'

पदमञ्जरी

एवात्रापि भविष्यति। प्रत्ययविधिस्त्विष्यत एव। 'ङ्याप्प्रातिपदिकात्' इति सुबन्तस्य ह्रस्वत्वं न प्राप्नोतीत्युक्तमेव। सुपां चाप्रसङ्गः; तद्विधानदशायां तदन्तस्यासम्भवात्, लिङ्गाभावात् स्त्रीप्रत्ययाभावः। तद्धितास्त्विष्यन्त एव 'समर्थानां प्रथमाद्वा' इति। अतो नार्थोऽनेन, उत्तरसूत्रे तद्धितग्रहणेन च, उच्यते; 'बहुषु बहुवचनम्' 'कर्मणि द्वितीया' इत्यादिनां स्वादिविधिवाक्येन भिन्नवाक्यतापक्षे सर्वेभ्यः प्रत्ययान्तेभ्यः स्वादयः स्युः, यथा—अव्ययेभ्यः। विकरणान्ताच्च स्वार्थिकास्तद्धिताः स्युरेवेत्यतोऽप्रत्ययग्रहणं कर्त्तव्यं तद्धितग्रहणं च। काण्डे कुड्य इत्येतयोस्तु प्रत्युदाहरणत्वम् 'ह्रस्वो नपुंसके' इत्यत्रोपपादयिष्यामः।

अथ प्रत्ययमात्रस्य संज्ञा कस्मान्न भविष्यति, सत्यां हि संज्ञायामुक्तेन न्यायेन बहुपटव इत्यादौ स्वादयः स्युः ? उच्यते—व्यपदेशिवद्भावेन प्रत्ययान्तवदप्रत्यय- इति प्रतिषेधो भविष्यति। यद्येवम्, कृत्तद्धितमात्रेऽपि विधिसम्भवात् उत्तरसूत्रे तदन्तविधिर्न भवति। अत्र परिहारं वक्ष्यामः॥

*कृत्तद्धितसमासाश्च* ॥ कृतो विहितास्तदादय इति वेदितव्यम्। अत्र हि कृद्ग्रहणपरिभाषा नोपतिष्ठते, तेन मूलकेनोपदंशमिति वाक्यस्य संज्ञा न भवति। मध्येऽपवादन्यायेन ह्यप्रत्यय इति निषेधः कृद्ग्रहणेन बाध्यते, न तु समासग्रहणेन कृतो नियमः। संज्ञाविधौ प्रत्ययग्रहणेऽप्यत्र तदन्तविधिर्भवतीत्यत्रोपपत्तिमाह—

न्यासः

'अधातुरप्रत्ययः' इति द्विष्प्रतिषेधः षष्ठीतत्पुरुषाशङ्कानिरासार्थः[1] 'अधातुप्रत्ययः' इत्युच्यमाने षष्ठीतत्पुरुषोऽप्याशङ्क्येत—धातोर्यः प्रत्ययस्तस्य न भवतीति।

कृत्तद्धितसमासाश्च ॥ अत्रान्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्तीत्येतन्नोपतिष्ठते, यस्मादप्रत्यय इति प्रतिषेधे प्राप्ते वचनमिदम्। 'अप्रत्ययः' इति प्रत्ययान्तस्य प्रतिषेध उक्तः। तेन यत्र संज्ञायाः प्रतिषेधस्तत्रेयमारभ्यमाणा तदन्तस्यैव भवतीत्येतच्चेतसि कृत्वाह—अप्रत्यय इति पूर्वसूत्रे पर्युदासात् कृदन्तस्येत्यादि।

---

१. अत्र 'अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थमिति मनोरमाशब्दकौस्तुभयोर्भट्टोजिवाक्यन्तु न्यासादर्शनमूलकमेव प्रतिभाति। सर्वथा न्यासकारव्याख्यैव साधीयसी' इति श्रीशचन्द्रचक्रवर्तिनः। वस्तुतस्तु 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति व्याख्यानत एव षष्ठीतत्पुरुषाशङ्का व्यपगता भवेदिति 'नञ्द्वयोपादानं स्पष्टार्थम्' इति दीक्षितमतमेव सर्वथा ज्यायः।

इति पूर्वसूत्रे पर्युदासात्कृदन्तस्य तद्धितान्तस्य चानेन प्रातिपदिकसंज्ञा विधीयते । अर्थवत्समुदायानां समासग्रहणं नियमार्थम् । कृत्—कारकः

पदमञ्जरी

*अप्रत्यय इति* । पूर्वसूत्रे प्रत्ययान्तस्य निषेधो न केवलस्य प्रत्ययस्येत्याश्रित्यैतदुच्यते । अप्राप्तप्रापणं विधिः, न च तदा कृत्तद्धितमात्रस्याप्राप्ता संज्ञा तदन्तस्य त्वप्राप्तेति विध्यर्थत्वात्तदन्तस्यैव ग्रहणम् । येषां तु पूर्वत्र प्रत्ययमात्रस्यापि निषेधस्तेषामर्थवद्ग्रहणानुवृत्तेरर्थवद्विशेषस्य तदन्तस्य ग्रहणं समासग्रहणमनर्थकम्, अर्थवत्त्वात्पूर्वेणैव संज्ञासिद्धेरित्यत आह—*अर्थवत्समुदायानामिति* । कर्मणि षष्ठी । नियमः = व्यावृत्तिः । ननु सुराजा अतिराजेत्यादौ अन्तर्वर्त्तिन्यां विभक्तौ लुप्तायां समुदायस्य संज्ञा, तामपेक्ष्य सोरुत्पन्नस्य हल्ङ्यादिलोपे तस्यामवस्थायां नलोपार्थं या संज्ञा प्राप्नोति तस्याः प्रत्ययलक्षणेनाप्रत्यय इति निषेधे प्राप्ते विध्यर्थमेतत्स्यात् ? ज्ञापकात्सिद्धम्, 'न ङिसंबुद्ध्योः' इति निषेधो ज्ञापयति—न प्रत्ययलक्षणेन निषेध इति; अन्यथा उक्तेन न्यायेन हे राजन्नित्यादौ नलोपप्रसङ्गात् । नैतदस्ति ज्ञापकम्; हे सुराजन्नित्यादौ यत्र समासग्रहणेन संज्ञा विहिता तत्र नलोपप्रसङ्गे निषेधः स्याद् । एवं तर्ह्यत्राप्यप्रत्यय इत्यनुवर्त्तते, तेन प्रत्ययान्ते समासे विध्यर्थत्वासंभवान्नियमार्थमेव समासग्रहणम् ।

न्यासः

अथ समासग्रहणं किमर्थम् ? यावता समासस्यार्थवत्त्वात् पूर्वेणैव संज्ञा सिद्धेत्यत आह—अर्थवत्समुदायानामित्यादि । निर्धारणषष्ठीयम्—अर्थवन्तो ये समुदायास्तेषां मध्ये समासस्यार्थवतः समुदायस्य प्रातिपदिकसंज्ञा यथा स्यादिति नियमार्थं समासग्रहणम् ।

यद्येवम्, प्रकृतिप्रत्ययसमुदायस्यार्थवतः प्रातिपदिकसंज्ञा न स्यात्—बहुपटव उच्चकैरिति ?, कोऽत्र दोषः ? 'चितः' इत्यस्मिन् सूत्रे चितः सप्रकृतेर्बह्वकजर्थमिति वचनादेतद्व्यवस्थाप्यते—प्रकृतिमन्तर्भाव्य चित्स्वरो विधीयत इति । बहुपटव इत्यत्र बहुचि विहिते यदि प्रातिपदिसंज्ञा न स्यात्, तदा प्रातिपदिकत्वाभावात् यथा सुबुत्पत्तिर्न स्यात् तथोत्पन्नाया अपि विभक्तेः 'सुपो धातुप्रातिपदिकयोः' इति लुका न भवितव्यम् । ततश्च बहुपटव इत्यत्र जस्विभक्तेरकारस्य स्वरः स्यात्, उकारस्य चेष्यते । प्रातिपदिकत्वे तु सति पूर्वोत्पन्नाया विभक्तेर्लुकि कृते याऽन्या विभक्तिरुत्पद्यते, सा बहुजुत्पत्तेरुत्तरकालभाविनीत्वात् प्रकृतौ नान्तर्भवति । तेन तामुत्सृज्य पूर्वो भागः स्वरभाग् भवति । अत उकारस्य स्वरः सिध्यति । उच्चकैरित्यत्र प्रातिपदिकत्वाभावादकज्वतः समुदायाद्विभक्तिर्न स्यात्, तस्याश्चासत्यां पदत्वं न स्यात् । ततश्चोच्चकैः पठतीति 'तिङ्ङतिङः' इति निघातो न स्यात् । तस्मात् प्रकृतिप्रत्ययसमुदायस्य प्रतिपदिकसंज्ञा वक्तव्या ? न वक्तव्या, यस्मात् तुल्यजातीयानां नियमः,

हारकः, कर्त्ता, हर्त्ता । तद्धितः—औपगवः, कापटवः । समासः—राजपुरुषः, ब्राह्मणकम्बलः । समासग्रहणस्य नियमार्थत्वाद्वाक्यस्यार्थवतः संज्ञा न भवति ॥

पदमञ्जरी

यद्वा—अनुद्दिश्य प्रयोजनविशेषं न कृत्संज्ञा प्रवर्तते, तस्यां तु सत्यां यस्यामवस्थायां यत्कार्यं प्राप्नोति तस्यां तद्भवति, न प्रतिकार्यमावर्त्तनीया संज्ञेत्ययं पक्ष आश्रीयते । अत्र च पक्षे सुबुत्पत्त्यर्थं नलोपार्थं च समाससंज्ञानन्तरमेव सकृत्संज्ञा प्रवर्त्तते, न तु नलोपदशायामिति विध्यर्थत्वासम्भवान्नियमार्थमेव समासग्रहणम् । तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयो यस्यार्थवत्समुदायस्य पूर्वो भागस्तावत्पदम्, यश्चैव हि सुबन्तानां समासः—राजपुरुष इति, यश्चैव हि तिङन्तानाम्—"आख्यतमाख्यातेन क्रियासातत्ये', अश्नीतपिबता, खादतमोदतेति, यश्च सुबन्तानां तिङन्तानां च—'जहि कर्मणा बहुलमाभीक्ष्ण्ये', जहिजोडः, जहिशकट इति, यश्च सुबन्तानां प्रातिपदिकानां च—गतिकारकोपपदानामिति, वस्त्रक्रीती निष्कक्रीतीति, सर्वत्रात्र पूर्वो भागस्तावत्पदम् । अतः स तुल्यजातीयो नियमेन व्यावर्त्यते, तेन बहुपटव इत्यत्र जसन्तस्य पुरस्ताद्बहुचि कृते नोत्तरत्र संघाते पूर्वो भागः पदमित्यसति नियमे ईषदसमाप्तिलक्षणेनार्थेनार्थवत्त्वात्सत्यां संज्ञायां पूर्वोत्पन्नस्य जसः 'सुपो धातु' इति लुकि कृते चित्स्वरोऽपि भवन् 'चितः सप्रकृतेर्बहुजकजर्थमिति' पटुशब्दोकारस्य भवति । पूर्वोत्पन्नस्य तु जसोऽवस्थाने तस्यैव स्यात् । *वाक्यस्यार्थवत इति* । प्रत्येकं पदे रप्रतीतस्य संसर्गस्य वाक्येन प्रतीयमानत्वात्तस्यार्थवत्त्वम्, समुदायाच्च प्रत्ययस्याविधानान्नास्त्यप्रत्यय इति निषेधः। न च 'नास्ति यस्मिन् प्रत्ययः सोऽप्रत्ययः' इति बहुव्रीहिः शक्य आश्रयितुम्; बहुपटव इत्यत्रापि निषेधप्रसङ्गात् ॥

न्यासः

तेन तुल्यजातीयो नियमेन व्यवच्छिद्यते । तुल्यजातीयश्च समाससुबन्तसमुदायादन्यः वाक्यसमुदाय एव, न तु प्रकृतिप्रत्ययसमुदायः ।. तेनायं तस्य नियमेन व्यवच्छेदो न करिष्यते, नैतदस्ति; सुबन्तासुबन्तसमुदायोऽपि समासोऽस्ति, यथा—प्रकर्त्ता, प्रकारक इति । अत्र हि 'गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः' इति कृदन्तेनासुबन्तेन गतिकारकं सुबन्तं समस्यते, तेन सुबन्तासुबन्तसमुदायोऽयं समास इति तुल्यजातीयस्यापि नियमे विज्ञायमाने बहुपटवः, उच्चकैरित्यत्र प्रातिपदिकसंज्ञा न स्यात् । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—भवति प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञेति, यदयमप्रत्यय इति प्रत्ययान्तस्य प्रतिषेधं शास्ति ॥

## ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ ४७ ॥

नपुंसकलिङ्गेऽर्थे यत्प्रातिपदिकं वर्तते तस्य ह्रस्वो भवति आदेशोऽलोन्त्यस्याचः । अतिरि कुलम्, अतिनु कुलम् ।

नपुंसक इति किम् ? ग्रामणीः । सेनानीः । प्रातिपदिकस्येति

### पदमञ्जरी

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ सूत्रे नपुंसकशब्देन तद्वद्द्रव्यं विवक्षितं न लिङ्गमात्रमित्याह—*नपुंसकलिङ्गेऽर्थे इति* । नपुंसकं लिङ्गमस्येति बहुव्रीहिः ।

*ग्रामणीरिति* । 'सत्सूद्विष' इत्यादिना क्विप् । *प्रातिपदिकस्येति किमिति* । नपुंसकलिङ्गं द्रव्यस्यैव धर्मः, द्रव्यवाचित्वं च प्रातिपदिकस्यैव, न सुबन्तस्य; शक्तिसङ्ख्याप्राधान्यात् । न धातोस्तिङन्तस्य वाक्यस्य वा; क्रियाप्रधानत्वात् । वर्णास्त्वनर्थकाः, स्त्रीप्रत्ययानां तु विरुद्धेन नपुंसकेनायोग इति प्रश्नः । *काण्डे कुण्ड्ये इति* । अत्र 'अप्रत्ययः' इति निषेधात् प्रतिपदिकत्वं नास्ति । ननु च एकादेशः पूर्वं प्रत्यन्तवद्भावात् प्रातिपदिकग्रहणेन गृह्यते इति क्रियमाणेऽपि प्रातिपदिकग्रहणे ह्रस्वत्वं स्यादेवात आह—*प्रातिपदिकग्रहणसामर्थ्यादिति* । कथं पुन सामर्थ्यम्, यावता यत्रान्तवद्भावो नास्ति—वाः वारी त्रपुणी इत्यादौ, तद्व्यावर्त्यं स्यात् ? अथ शक्तिसङ्ख्याप्रधानत्वात् तत्र नपुंसकेनायोगः, काण्डे इत्यादावपि एवमेव न भविष्यति । न ह्यन्तवद्भावेन प्रातिपदिकत्वे सत्यपि शक्तिसङ्ख्याप्राधान्यं हीयते । एवं मन्यते—'असति प्रातिपदिकग्रहणे नपुंसकवृत्तेरनपुंसकवृत्तेश्च य एकादेशः स नपुंसकवृत्तिग्रहणेन गृह्यते नपुंसक इति स्यात्प्रसङ्गः । प्रातिपदिकग्रहणे तु मुख्यप्रातिपदिकग्रहणार्थत्वाद् अतिदिष्टप्रातिपदिकत्वस्य ह्रस्वस्याभावः' इति । उत्तरार्थं च प्रातिपदिकग्रहणम् । इह वनाय, वनाभ्याम्, वनार्थम्, वनेभ्य इति ह्रस्वो न भवति, वहिरङ्गयोर्दीर्घत्वयोरसिद्धत्वात् । काण्डीभूतमित्यत्र पूर्वं नपुंसकत्वेऽपि च्व्यन्तदशायाम् अव्ययत्वेनालिङ्गत्वाद् ह्रस्वाभावः ॥

### न्यासः

ह्रस्वो नपुंसके प्रातिपदिकस्य ॥ नपुंसकलिङ्गे इति । नपुंसकं लिङ्गं यस्येति बहुव्रीहिः । स पुनर्नपुंसकलिङ्गोऽर्थो द्रव्यभूतो वेदितव्यः; नपुंसकलिङ्गस्य द्रव्यधर्मत्वात् । अलोऽन्त्यस्येति । 'अलोऽन्त्यस्य' इति परिभाषया ।

ग्रामणीरिति । 'सत्सूद्विष' इत्यादिना क्विप् । 'अग्रग्रामाभ्यां च' इत्युपसंख्यानाण्णत्वम् । काण्ड्ये, कुड्ये—इत्यत्रापि 'अप्रत्ययः' इति प्रतिषेधात्प्रातिपदिकसंज्ञा नास्ति, तेन ह्रस्वत्वं न भवति । ननु च प्रातिपदिकाप्रातिपदिकयोरेकादेशोऽन्तादिवद्भावान् प्रातिपदिकग्रहणेन गृह्यते, ततश्च क्रियमाणे प्रातिपदिकग्रहणे ह्रस्वत्वं प्राप्नोतीत्यत आह—प्रातिपदिकग्रहणसामर्थ्यादित्यादि । इह यद्यन्तवद्भावः स्यात्, प्रातिपदिकग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावादिति भावः ॥

किम् ? काण्डे तिष्ठतः । कुड्ये तिष्ठतः । प्रातिपदिकग्रहणसामर्थ्यादेकादेशः पूर्वस्यान्तवन्न भवति ॥

## गोस्त्रियोरुपसर्जनस्य ॥ ४८ ॥

प्रातिपदिकस्य' इति वर्तते । 'गो' इति स्वरूपग्रहणम्, 'स्त्री' इति प्रत्ययग्रहणम्; स्वरितत्वात् । उपसर्जनग्रहणं तयोर्विशेषणम्—गोरुपसर्जनस्य, स्त्रीप्रत्ययान्तस्योपसर्जनस्येति । ताभ्यां प्रातिपदिकस्य तदन्तविधिः । उपसर्जनगोशब्दान्तस्य उपसर्जनस्त्रीप्रत्ययान्तान्तस्य च

पदमञ्जरी

*गोस्त्रियोरुपसर्जनस्य* ॥ *स्त्रीति प्रत्ययग्रहणमिति* । अत्र हेतुमाह—*स्वरितत्वादिति* । 'स्वरितेनाधिकारः' इत्यस्य यत्र स्वरितत्वं प्रतिज्ञायते तत्र तदधिकारो ग्राह्य इत्ययमप्यर्थः । इह च स्त्रीग्रहणं स्वर्यते, तेन स्त्रियामित्यधिकृत्य विहितानां टाबादीनां ग्रहणं भवति; नार्थस्य, नापि स्वरूपस्य । क्तिन्नादीनां तु ह्रस्वभाविल्वाभावादग्रहणम् । *उपसर्जनग्रहणं तयोर्विशेषणमिति* । प्रत्येकं सम्बन्धात्तु द्विवचनं न भवतीत्याह—*गोरुपसर्जनस्येत्यादि* । *स्त्रीप्रत्ययान्तस्येति* पाठः । पारिभाषिकं ह्यत्रोपसर्जनं गृह्यते । न च स्त्रीप्रत्ययमात्रस्य पारिभाषिकोपसर्जनत्वसम्भवः । *ताभ्यामिति* । उपसर्जनेन गोशब्देन स्त्रीप्रत्ययान्तेन च यदि ताभ्यां तदन्तविधिर्न विज्ञायते, तदा उपसर्जनस्य गोशब्दस्य स्त्रीप्रत्ययान्तस्य च प्रातिपदिकस्य ह्रस्व इत्यर्थः स्यात्; ततश्च गोकुलं राजकुमारीपुत्र इत्यत्रापि स्यादिति भावः । इह तु 'कुमारीपुत्रः' इत्यत्र प्रातिपदिकत्वादेवाप्रसङ्गः । *उपसर्जनस्त्रीप्रत्ययान्तान्तस्येति* पाठः । उपसर्जनं यत् स्त्रीप्रत्ययान्तं तदन्तस्येत्यर्थः । यदि तु लौकिकेनोपसर्जनेन स्त्रीप्रत्ययमात्रं विशेष्य पश्चात्तेन प्रातिपदिकस्य तदन्तविधिर्विज्ञायते—उपसर्जन यः स्त्रीप्रत्ययस्तदन्तस्य प्रातिपदिकस्येति, ततो हरीतक्यः फलानीत्यत्रापि स्यात्; स्त्रीप्रत्ययार्थस्य फलं प्रत्युपसर्जनत्वात्तद्धितान्तत्वेन प्रातिपदिकत्वाच्च । अत एवमेवाश्रयणीयम्—स्त्रीप्रत्ययान्तं यच्छास्त्री-

न्यास

गोस्त्रियोरुपसर्जनस्य ॥ स्त्रीति स्त्रीप्रत्ययग्रहणमिति । अत्र हेतुमाह—स्वरितत्वादिति । स्त्रीग्रहणस्येह स्वरितत्वं क्रियत इति स्वरितेनाधिकारादवगतिर्भवति । तेन 'स्त्रियाम्' इत्यधिकृत्य ये प्रत्यया विहितास्टाबादयस्तेषां ग्रहणं भवति; न स्त्र्यर्थाभिधायिनः शब्दमात्रस्य, नापि स्त्रीशब्दस्यैव स्वरूपस्य । उपसर्जनग्रहणं द्वयोर्विशेषणमित्यादेः स्पष्टीकरणायाह—गोरुपसर्जनस्य, स्त्रीप्रत्ययस्योपसर्जनस्येत्यादि । ताभ्यां प्रातिपदिकस्येत्यादेरपि स्फुटीकरणायाह—उपसर्जनगोशब्दान्तस्येत्यादि । उपसर्जनगो-

प्रातिपदिकस्य ह्रस्वो भवति। चित्रगुः। शबलगुः। स्त्रियाः—निष्कौशाम्बिः। निर्वाराणसिः। अतिखट्वः। अतिमालः।

उपसर्जनस्येति किम्? राजकुमारी। स्वरितत्वं किम्? अतितन्त्रीः। अतिलक्ष्मीः। अतिश्रीः।

पदमञ्जरी

यमुपसर्जनं तदन्तस्य प्रातिपदिकस्येति। *निष्कौशाम्बिरिति*। कौशम्बीत्येकविभक्तीत्युपसर्जनं स्त्रीप्रत्ययान्तं तदन्तं समासप्रातिपदिकम्। अथेह कथं ह्रस्वत्वम् अतिराजकुमारिरिति, यावता कुमारशब्दान् ङीब्विहितो न तु राजकुमारशब्दात्? सत्यम्; अनुपर्जने स्त्रीप्रत्यये तदादिनियमो नास्ति। अथ गोशब्देन स्त्रीप्रत्ययान्तेन च प्रातिपदिकस्य तदन्तविधौ सत्यपि गोकुलं राजकुमारीपुत्र इत्यत्र कस्मान्न भवति, यावता 'येन विधिस्तदन्तस्य' इत्यत्र 'स्वं रूपम्' इत्यनुवर्तते, ततश्च येन तदन्तविधिः तत्स्वरूपस्यापि ग्रहणेन भाव्यम्? एवं तर्हि गोशब्देन प्रातिपदिकस्य विशेषणसामर्थ्यात् केवलस्य न भवति; अन्यथा गोशब्दस्यैवोपसर्जनस्य ह्रस्वं विदध्याद्, 'येन विधिस्तदन्तस्य' इत्यत्र वा 'स्वं रूपम्' इति निवर्त्यम्। व्यपदेशिवद्भावोऽपि प्रातिपदिके नास्ति। राजकुमारीपुत्र इत्यत्र तु परिहारः—शास्त्रीयमप्युपसर्जनं सति सम्भवेऽन्वर्थमेवाप्रधानमुपसर्जनमिति, प्रधानं चापेक्ष्याप्रधानं भवति। स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासमन्तरेणानुपपन्नम्, समासश्चावयवात्मकः; द्वयं चात्र संनिहितम्—प्रधानमप्रधानमिति; तत्रैवं विज्ञास्यामः—यत् स्त्रीप्रत्ययान्तं समासप्रातिपदिकं तदन्तर्भूतमेवापेक्ष्य स्त्रीप्रत्ययान्तस्याप्राधान्यमिति। इह तु तत्रानन्तर्भूतं पुत्रमपेक्ष्याप्राधान्यमिति न भवति ह्रस्वः।

न्यासः

शब्दोऽन्तो यस्येति विग्रहः। एवं गोशब्देनोपर्जनेन स्त्रीप्रत्ययेन च प्रातिपदिकस्य तदन्तविधौ सति गोः कुलं गोकुलम्, राज्ञः कुमार्याः पुत्रो राजकुमारीपुत्र इत्यत्र गोशब्दस्य कुमारीशब्दस्य च ह्रस्वत्वं न भवति, अन्यथा इहापि स्यात्। भवति ह्यत्र गोशब्दस्य राजकुमारीशब्दस्य चोपसर्जनत्वमित्यभिप्रायः।

चित्रगुरिति। 'प्रथमानिर्दिष्टम्' इत्यादिना गोशब्दस्योपसर्जनसंज्ञा, निष्कौशाम्बिरित्यादौ तु 'एकविभक्ति चापूर्वे' इत्यादिना। अतितन्त्रीरित्यादि 'तत्रि कुटुम्बधारणे', 'इदितो नुम्', 'अवितृस्तृतन्त्रिभ्यः' इतीः—तन्त्रीः। 'लक्ष दर्शनाङ्कयोः', 'लक्षेर्मुट् च' इति मुट्, ईप्रत्ययश्च—लक्ष्मीः। 'श्रिञ् सेवायाम्', 'क्विब् वचिप्रच्छि' इत्यादिना क्विप्, दीर्घः—श्रीः। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति प्रादिसमासः।

* ईयसो बहुव्रीहेः प्रतिषेधो वक्तव्यः * ॥ बहुश्रेयसी । विद्यमानश्रेयसी ॥

लुक्तद्धितलुकि ॥ ४९ ॥

स्त्रीग्रहणमनुवर्त्तते, 'उपसर्जनस्य' इति च । पूर्वेण ह्रस्वत्वे प्राप्ते लुग्विधीयते । तद्धितलुकि सति स्त्रीप्रत्ययस्य उपसर्जनस्य

पदमञ्जरी

*ईयस इत्यादि* । ईयसुन्नन्ताद्यः स्त्रीप्रत्ययो विहितस्तदन्तान्तस्येत्यर्थः । *बहुश्रेयसीति* । 'प्रशस्यस्य श्रः' ङीप्, बह्व्यः श्रेयस्योऽस्येति बहुव्रीहिः, 'नद्यृतश्च' इति कप्, 'ईयसश्च' इति प्रतिषेधः, पुंस्यपि सोर्हल्ङ्यादिलोपः । बहुव्रीहेरिति किम् ? अतिश्रेयसिः ॥

*लुक्तद्धितलुकि* ॥ *स्त्रीग्रहणमनुवर्त्तते इति* । न तु गोग्रहणम्, कुतः ? प्रत्ययादर्शनस्य लुक्संज्ञाविधानाद् गोशब्दस्याव्युत्पन्नत्वाद् व्युत्पत्तिपक्षेऽप्यम्वरितत्वात् । *उपसर्जनस्य चेति* । 'अनुवर्त्तते' इत्यपेक्षते । लौकिकं चात्रोपसर्जनं

न्यासः

यदि स्त्रीति स्त्र्यधिकारविहिताः प्रत्यया गृह्यन्ते ततश्च 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य' इति तदन्तग्रहणेऽतिराजकुमारिरित्यत्र ह्रस्वत्वं न सिध्यति, न हि राजकुमारशब्दाद् 'वयसि प्रथमे' इति ङीप्प्रत्ययो विहितः, किन्तर्हि ? कुमारशब्दात्, नैष दोषः; एषा परिभाषा 'यस्मात् प्रत्ययविधिस्तदादि' इत्यत्र सूत्रे प्रतिपादिता । तत्र च 'नामि' इत्यतः 'वा' ग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते । तेन व्यवस्थितविभाषावतोयं क्वचिन्नोपतिष्ठत एव । अथ वा—'कृत्तद्धितसमासाश्च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः, तेनातिराजकुमारिरित्यत्रापि ह्रस्वत्वं भविष्यतीत्यदोषः ।

ईयसो बहुव्रीहौ प्रतिषेध इति । ईयसन्ताद् यो विहितः स्त्रीप्रत्ययः, तदन्तस्य बहुव्रीहौ प्रतिषेध इति । कथं पुनरसौ लभ्यते ? 'विभाषा च्छन्दसि' इत्यतो विभाषाग्रहणानुवृत्तेः । न चैवं सत्यतिप्रसङ्गः; व्यवस्थितविभाषाविज्ञानात् ।

बहुश्रेयसीति । अतिशयेन प्रशस्येति 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्प्रत्ययः । 'प्रशस्यस्य श्रः' इति प्रशस्यशब्दस्येयसुनि परतः श्रादेशो भवति, 'प्रकृत्यैकाच्' इति प्रकृतिवद्भावः, 'आद्गुणः', 'उगितश्च' इति ङीप् । बह्व्यः श्रेयस्यो यस्येति बहुश्रेयसीति 'नद्यृतश्च' इति कप् न भवति; 'ईयसश्च' इति कपो निषेधात् ॥

लुक्तद्धितलुकि ॥ अदर्शनं लुक्, तच्चाभावः । अभावे पौर्वापर्यन्नोपपद्यते । तस्माल्लुकीति सती सप्तमीयम्, न परसप्तमीति मत्वाह—तद्धितलुकि सतीति ।

लुग्भवति । पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः । दशेन्द्रः । पञ्चभिः शष्कुलीभिः क्रीतः पञ्चशष्कुलिः । आमलक्याः फलमामलकम् । बदरम् । कुवलम् ।

### पदमञ्जरी

गृह्यते, न शास्त्रीयम् । *पूर्वेण ह्रस्वत्वे प्राप्ते* इति क्वचित्पठ्यते, तत्र क्वचिदिति विशेषः । पूर्वसूत्रेण हि शास्त्रीयमुपसर्जनं गृहीतं तस्यावकाशो यत्र न तद्धितलुग्—निष्कौशाम्बिरिति; अस्यावकाशो यत्र शास्त्रीयमुपसर्जनम्—आमलकमिति । तद्धितलुक्च यथा—पञ्चेन्द्र इति, अत्र हि समासार्थे नानाविभक्तिके पञ्चेन्द्राणीत्येकविभक्तिकमिति अस्त्युपसर्जनत्वम्; तत्रोभयप्रसङ्गे परत्वादयमेव लुग् ह्रस्वं बाधत इत्यर्थः ।

केचित्त्वस्मादेव ग्रन्थात् पूर्वसूत्रेऽपि लौकिकस्योपर्जनस्य ग्रहणं मन्यन्ते, तेषां हरीतक्यः फलानि इति लुब्विषये ह्रस्वप्रसङ्ग इत्युक्तम् । स्यादेवम्—लुपि युक्तवदिति शब्दार्थयोरप्यतिदेशः प्रकृत्यर्थस्य यल्लिङ्गं यश्च तदभिधायी प्रत्ययः तयोर्द्वयोरतिदेशः, तत्रोपदेशिकस्य ह्रस्वत्व आतिदेशिकस्य श्रवणं भविष्यतीति ? यद्येवम्, युवतिरिव पुरुषः 'लुम् मनुष्ये' युवतिः, द्वौ तिशब्दौ श्रूयेयाताम्; तस्मात् 'लुब्योगाप्रख्यानात्' इति लुपः प्रत्याख्यानेन वात्र परिहारो वाच्यः, शास्त्रीयं वोपसर्जनं ग्राह्यम् । ग्रन्थस्य च व्याख्यात एवार्थः ।

अभावरूपेण लुका पौर्वापर्यासम्भवाल्लुकीति सत्सप्तमीत्याह—*लुकि सतीति* । *पञ्चेन्द्र इति* । 'तद्धितार्थ' इति समासः, 'सास्य देवता' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक्, 'इन्द्रवरुण' इत्यादिना विहितस्य ङीषोऽनेन लुक्, सन्नियोगविशिष्टानामन्यतराभाव इत्यानुको निवृत्तिः। *पञ्चशष्कुल इति*। 'तेन क्रीतम्' इत्यार्हीयस्य ठकः 'अध्यर्द्धपूर्व' इति लुक् । *आमलकमिति* । 'नित्यं वृद्धशरादिभ्यः' इति मयटः 'फले लुक्' । बदरीकुवलीशब्दाभ्याम् 'अनुदात्तादेश्च' इति अञ् । शष्कुल्यादयो गौरादिङीषन्ताः ।

### न्यासः

**पञ्चेन्द्र इति** । 'तद्धितार्थ' इत्यादिना समासे कृते 'सास्य देवता' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक्, 'इन्द्रवरुण' इत्यादिना विहितस्य ङीषोऽनेन लुक् । तस्मिन्निवृत्ते सन्नियोगशिष्टानामेकतरापाय उभयोरप्यपाय इत्यानुको निवृत्तिः । **पञ्चशष्कुलिरिति** । अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्' इत्यार्हीयस्य ठकस्तेन क्रीतार्थं विहितस्य लुक् । **आमलकमिति** । आमलक्याः फलं विकार इति 'नित्यं वृद्धशरादिभ्यः' इति मयट्, तस्यापि 'फले लुक्' इति लुक् ।

तद्धितग्रहणं किम् ? गार्ग्याः कुलं गार्गीकुलम् । लुकीति किम् ? गार्गीत्वम् । उपसर्जनस्येत्येव—अवन्ती, कुन्ती, कुरूः ॥

इद् गोण्याः ॥ ५० ॥

पूर्वेण लुकि प्राप्ते इकारो विधीयते । गोण्यास्तद्धितलुकि सति इकारादेशो भवति । पञ्चभिर्गोणीभिः क्रीतः पटः पञ्चगोणिः । दशगोणिः ।

'इत्' इति योगविभागः । पञ्चभिः सूचीभिः क्रीतः पञ्चसूचिः । दशसूचिः । स च एवंविषय एव ॥

पदमञ्जरी

*अवन्तीत्यादि* । अवन्ति-कुन्ति-शब्दाभ्यामपत्ये 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' । कुरोः 'कुरुनादिभ्यो ण्यः', स्त्रियामवन्तीति लुक्, कुरुशब्दाद् 'ऊङुतः' इत्यूङ् । इतराभ्याम् 'इतो मनुष्यजातेः' इति ङीष् । अत्रापत्यलक्षणा जातिः स्त्रीप्रत्ययान्तेन प्राधान्येनाभिधीयते ॥

इद् *गोण्याः* ॥ *पञ्चगोणिरिति* । गोणीशब्दः परिमाणवचनः, आवपनवचनश्च; तत्राद्यात् 'प्राग्वतेष्ठञ्', द्वितीयादार्हीयष्ठक् । तयोः पूर्वल्लुक् ।

*इदिति योगविभाग इति* । इहेद्ग्रहणमनर्थकम्. गोण्या इत्येवास्तु, ह्रस्व

न्यासः

बदरं बुवलमिति । विकारार्थे 'अनुदात्तादेरञ्' इत्यञ् । पूर्ववल्लुक् । शष्कुली, वदरी, आमलकी, कुवली—गौरादिपाठादेते ङीपन्ताः ।

गार्गीकुलमिति । गार्ग्यशब्दाद् 'यञश्च' इति ङीप्, 'यस्येति च' इत्यकारलोपः, 'हलस्तद्धितस्य' इति यकारस्य च लोपः, गार्ग्याः कुलमिति षष्ठीसमासः, षष्ठ्या लुक् । गार्गीशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वाच्छास्त्रीयमुपसर्जनत्वम्, मूलोदाहरणेषु त्विन्द्राणीप्रभृतीनां लौकिकमात्रोपसर्जनत्वम् । उभयगतिरिह शास्त्रे सम्भवतीति लौकिकमप्रधानत्वमुपसर्जनत्वम् । लोके ह्यप्रधानमुपसर्जनमित्युच्यते । गार्गीत्वमित्यत्रापि गार्गीशब्दस्य लौकिकमेवोपसर्जनत्वम् । अवन्ती, कुन्ती, कुरूरिति । अवन्तेरपत्यं गोत्रं स्त्री, कुन्तेरपत्यं गोत्रं स्त्री—'वृद्धेत्कोशलाजादाञ्ञ्यङ्' । कुरोरपत्यं स्त्री—'कुरुनादिभ्यो ण्यः' इति ण्यः । 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुक् । अवन्तिकुन्तिशब्दाभ्याम्, 'इतो मनुष्यजातेः' इति ङीष् । कुरुशब्दाद् 'ऊङुतः' इत्यूङ् । अत्र ङीषा ऊङा च तद्धितार्थो गोत्रापत्यं स्त्रीप्रधानमेवाभिधीयत इत्युपसर्जनत्वं नास्ति लौकिकम् । शास्त्रीयमपि नास्ति; अप्रथमानिर्दिष्टत्वात् समासशास्त्र इति ॥

इद् गोण्याः ॥ पञ्चगोणिरिति । 'तद्धितार्थ' इति समासे कृत आर्हीयष्ठक् । तस्य

## लुपि युक्तवद्व्यक्तिवचने ॥ ५१ ॥

पदमञ्जरी

इत्येव, लुकस्तु वचनासामर्थ्यादननुवृत्तिः ? तदेतदिद्ग्रहणमेव लिङ्गं योगविभागस्य। यदि योगविभागः क्रियते, सर्वत्रैत्वं प्राप्नोति, तत्राह—*स चेति*। यदि सर्वत्र स्याद् गोणीग्रहणमनर्थकं स्यादिति भावः। ननु तद्धितलुकि लुगप्युक्तः, इत्वं चेति, तयोर्विकल्पप्रसङ्गे नित्यमित्वमेव यथा स्यादित्येवमर्थं गोणीग्रहणं स्यात्, तत्कथं ततो विशिष्टविषयत्वं योगविभागस्य ? उच्यते; एक एव तावद्योगः सूत्रकारेण पठितः, तत्सामर्थ्याद् विभागसंस्कारोऽप्यनुवर्त्तते, अविभक्तश्च योगो विशिष्टविषयः। इद्ग्रहणसामर्थ्यात्क्रियमाणो विभागो विशिष्टविषय एव कल्प्यते; अत एवोच्यते-—योगविभागादिष्टसिद्धिरिति। स पुनर्विशिष्टो विषयो व्याख्यानादवसेयः। तपरकरणं तत्कालार्थम्—दीर्घस्य दीर्घो मा भूद्। वचनं तु लुग्ह्रस्वबाधनार्थं स्याद्। असति च तकारे, प्राप्तप्रतिषिद्ध ईकार एवं प्रतिप्रसूतः स्याद्, न त्वपूर्व इकारो विहितः स्याद् इति भाव्यमानत्वमेव न स्यात् ॥

*लुपि युक्तवद्व्यक्तिवचने* ॥ अभिधेयवल्लिङ्गवचनयोः प्राप्तयोरयमारम्भः।

न्यासः

पूर्ववल्लुक्। इदितो योगविभाग इति। एतस्येद्ग्रहणमेव लिङ्गम्। तथा हि गोणी इत्येतावति सूत्रे ह्रस्वग्रहणानुवृत्तौ ह्रस्वत्वे कृते पञ्चगोणिरिति सिद्ध्यत्येव, किमिद्ग्रहणेन ? तदेतदिद् ग्रहणं क्रियमाणं योगविभागार्थं विज्ञायते। ननु चानन्तरसूत्राल्लुक एवानुवृत्तिः स्यात्, न ह्रस्वस्य, नैतदस्ति; लुगनुवृत्तौ हि सूत्रमिदमनर्थकं स्यात्; लुकोऽनन्तरसूत्रेणैव सिद्धत्वात्। तस्माद्ध्रस्वग्रहणमेवानुवर्त्तते, न लुग्ग्रहणम्।

पञ्चसूचिरिति। पञ्चगोणिरित्यनेन तुल्यम्। यदि योगविभागः क्रियते, तदातिप्रसङ्गः स्यात्। अन्येषामपि प्रसज्यत इत्यत आह—स चेत्यादि। यदि सर्वत्रेत्वं पूर्वयोगेणैव स्यात् तदा 'गोण्याः' इति वचनमनर्थकम्। तस्माद् गोणीग्रहणादस्यासर्वविषयत्वम्। तेन योगविभागः सूचीविषय एव, नान्यविषय इति। तपरकरणं दीर्घनिवृत्त्यर्थम्। दीर्घस्य दीर्घकरणमनर्थकं स्यात्। अतो विना तपरकरणेन दीर्घो न भविष्यतीति चेत्, न; लुग्ह्रस्वबाधनार्थत्वाद् दीर्घकरणस्य। भाव्यमाणोऽण् सवर्णान् न गृह्णातीति, तस्माद् दीर्घनिवृत्त्यर्थं तपरत्वं नोपपद्यत इति चेत्, न; तस्याभाव्यमानत्वात्। अपूर्वस्य हि विधानं भाव्यमानत्वम्। न चात्रापूर्वस्य विधानम्। तथा हि—लुग्ह्रस्वयोः प्राप्तयोः पुनः स एव ईकारः प्रतिप्रसूयते। तस्मात् तपरकरणं कर्त्तव्यम्।

लुपि युक्तवद्व्यक्तिवचने ॥ अभिधेयस्य लिङ्गसंख्ययोः प्राप्तयोरयमारम्भः। लुपिति

'लुपि' इति लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थं उच्यते। तत्र लुपि युक्तवद्व्यक्तिवचने भवतः। 'युक्तवत्' इति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थं उच्यते। स हि प्रत्ययार्थमात्मना युनक्ति, तस्य युक्तवतो व्यक्तिवचने लुबर्थे विधीयेते।

अथ वा—युक्तः प्रकृत्यर्थः प्रत्ययार्थेन संबद्धः, तस्मिन्निव व्यक्तिवचने लुबर्थे भवतः। सप्तम्यर्थे वतिः। 'व्यक्तिवचने' इति च लिङ्ग-

पदमञ्जरी

अभावरूपस्य लुपो लिङ्गसङ्ख्यातिदेशासम्भवादाह—*लुपीति लुप्संज्ञेत्यादि*। क्वचित्तु सप्तम्यन्तो लुप्शब्द उपादीयते तत्रापि प्रकृत्यर्थं एवाभिधातुमिष्टः। सप्तम्युपादानं तु सूत्रे पठितत्वाद्, यथा—मताविति मत्वर्थं उच्यत इति। *युक्तवदिति निष्ठाप्रत्ययेनेत्यादि*। अत्र हेतुमाह—*स हीति*। युनक्ति सम्बध्नाति। यद्यपि प्रत्ययार्थोऽपि प्रकृत्यर्थमात्मना युनक्ति, तथापि न तस्येह ग्रहणम्; आनर्थक्याद्, न हि तस्यैव लिङ्गसङ्ख्ये तस्यैव विधातव्ये।

*अथ वेत्यादि*। पूर्वं 'युजियोगे' इत्यस्य क्तवत्वन्तस्य षष्ठीसमासो दर्शितः, इदानीं तु तस्यैव धातोः क्तान्तस्य वतिनिर्देशः, असमासश्चेति प्रदर्श्यते। *युक्तः प्रकृत्यर्थ इति*। अत्र हेतुः—*प्रत्ययार्थेन सम्बद्ध इति*। अस्मिन्नपि पक्षे पूर्ववदेव प्रत्ययार्थस्याग्रहणम्। *सप्तम्यर्थे वतिरिति*। 'लुपि' इति प्रतियोगिनि सप्तमी-

न्यासः

प्रत्ययस्यादर्शनम्, तच्चाभावात्मकम्। न चाभावे व्यक्तिवचनयोः शक्यतेऽतिदेशः कर्त्तुम्। तस्माल्लुप्संज्ञया लुप्तस्य प्रत्ययस्यार्थो लुप्शब्देन विवक्षित इति मत्वाह—लुपीति लुप्संज्ञयेत्यादि। कथं पुनरेतल्लभ्यते, यावता प्रत्ययादर्शनस्यैषा संज्ञा, न तु प्रत्ययार्थस्य? साहचर्यात्। साहचर्यन्तु यत्र लुप्, तत्रावश्यं प्रत्ययार्थस्य सद्भावात्। युक्तवदिति निष्ठाप्रत्ययेन क्तवतुना प्रकृत्यर्थ उच्यत इति। अत्र कारणमाह—स हीत्यादि। युनक्ति = अभिसम्बध्नाति, विशेषणविशेष्यभावलक्षणसम्बन्धेनात्मसम्बन्धिनं करोतीत्यर्थः। तत्र 'तस्य निवासः' इत्यादि प्रत्ययार्थो विशेष्यः, पञ्चालादिशब्दस्यार्थः प्रकृत्यर्थो विशेषणम्। तेन हि पूर्वं विज्ञातेन स्वाम्यन्तरव्यवच्छेदेन प्रत्ययार्थो विशिष्यते।

अथ वेत्यादि। पूर्वं 'युजिर् योगे' इत्यस्माद्धातोः क्तवतुप्रत्यये सति युक्तवदित्येतद्रूपं प्रदर्शितम्, इदानीं तस्यैव धातोः क्तप्रत्ययाद्वतिप्रत्यये सति युक्तवदित्येतद्रूपं दर्शयति। यद्यपि द्विष्ठत्वात् सम्बन्धस्य—यथा प्रत्ययार्थेन प्रकृत्यर्थो युक्तः, तथा प्रकृत्यर्थेनापि प्रत्ययार्थः; तथापि प्रत्ययार्थसम्बन्धिनोर्व्यक्तिवचनयोः प्रत्ययार्थ एवातिदेशो-

संख्ययोः पूर्वाचार्यनिर्देशः, तदीयमेवेदं सूत्रम्। तथा चास्य प्रत्याख्यानं भविष्यति—'तदशिष्यं संज्ञाप्रमाणत्वात्' इति।

व्यक्तिः—स्त्रीपुंनपुंसकानि, वचनम्—एकत्व-द्वित्व-बहुत्वानि पञ्चालाः क्षत्रियाः, पुंलिङ्गाः बहुवचनविषयाः। तेषां निवासो जनपदः यथा तेषु क्षत्रियेषु व्यक्तिवचने, तद्वज्जनपदे भवतः—पञ्चालाः मगधाः, मत्स्याः, अङ्गाः, सुह्माः, पुण्ड्राः।

### पदमञ्जरी

निर्देशात् सप्तम्यर्थे वर्तमानादिवार्थे वतिरित्यर्थः। व्यक्तिशब्द आविर्भावादिकेऽप्यर्थे वर्तते। वचनशब्दोऽपि भीमसेनो भीम इतिवद्, एकवचनादिशब्दानां एकदेशप्रयोगोऽपि सम्भाव्येत, तस्य च ग्रहणे 'पञ्चालानां निवासः' इति वाक्यावस्थायां षष्ठीदर्शनात्तस्या एवातिदेशः स्यात्; कुरुपञ्चाला इति च द्वन्द्वे वाक्यावस्थायामतिदिष्टस्य वचनस्य लुकि समुदायाद् बहुवचनं न स्यात्, ततस्तत्सम्प्रत्ययो मा भूदित्याह—*व्यक्तिवचने इति चेत्यादि*। पूर्वाचार्यनिर्देशाश्रयणे कारणमाह—*तदीयमेवेत्यादि*। कुत इत्यत आह—*तथा चेत्यादि*। न हि स्वकृतमेव स्वयं प्रत्याचष्ट इति युक्तम्; 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति न्यायादिति भावः।

*पञ्चालाः क्षत्रिया इति*। पञ्चालस्यापत्यानि बहूनि 'जनपदशब्दात् क्षत्रियादञ्' 'ते तद्राजाः', 'तद्राजस्य बहुषु'। *तेषां निवासो जनपद इति*। अस्य वक्ष्यमाणेन 'पञ्चालाः' इत्यनेन सम्बन्धः। 'तस्य निवास' इत्यणः 'जनपदे लुप्'। *कुरव इत्यादि*। 'कुरवः क्षत्रियाः' इत्यादिकं तु पूर्वानुसारेण गम्यमानत्वान्नोक्तम्। कुरुशब्दादपत्ये 'कुरुनादिभ्यो ण्यः' मगधादिभ्यः 'द्व्यञ्मगध' इत्यण्, शेषं पूर्ववत्।

### न्यासः

ऽनर्थक इति प्रकृत्यर्थं एवात्र युक्तशब्देन विवक्षित इति मत्वाह—युक्तः प्रकृत्य इति। सप्तम्यर्थे वतिरिति। लुपीति सप्तमीनिर्देशात्।

व्यक्तिशब्दः प्रादुर्भावादावप्यर्थे वर्तते, वचनशब्दो हि भाषणादिषु, अतस्तत्संप्रत्ययो मा भूदित्यत आह—व्यक्तिवचने इति। किं पुनः कारणं पूर्वाचार्यनिर्देश आश्रीयत इत्यत्र आह—तदीयमित्यादि। कुत एतदित्यत आह—तथा चेत्यादि। न हि स्वकीयस्यैव प्रत्याख्यानं युक्तमिति भावः।

पञ्चालाः क्षत्रिया इति। पञ्चालस्यापत्यानि बहूनीति विवक्षायाम् 'जनपदशब्दात् क्षत्रियादञ्', तस्य 'तद्राजस्य बहुषु तेनैवास्त्रियाम्' इति लुक्। तेषां निवासो जनपद

लुपीति किम् ? लुकि मा भूत् । लवणः सूपः, लवणा यवागूः, लवणं शाकम् । व्यक्तिवचने इति किम् ? शिरीषाणामदूरभवो ग्रामः शिरीषाः, तस्य वनं शिरीषवनम्—'विभाषौषधिवनस्पतिभ्यः' इति णत्वं न भवति ।

पदमञ्जरी

*लुपीति किमिति* । तद्धितोऽनुवृत्तः साहचर्यादर्थमुपस्थापयिष्यतीति प्रश्नः । *लुकि मा भूदिति* । अन्यथा 'तद्धितलुकि' इत्यनुवृत्तेस्तत्रैव स्यादिति भावः । *लवणः सूप इति* । 'संसृष्टे' 'लवणाल्लुक्' । *व्यक्तिवचने इति किमिति* । युक्तवदिति क्तान्ताद्वतिरेवाश्रयिष्यते, षष्ठीनिर्देशो वा करिष्यते इति मन्यते । *शिरीषाणामदूरभव इत्यादि* । अरीहणादिषु वराहादिषु कुमुदादिषु शिरीषशब्दस्य पाठाद् वुञ्छणादिसूत्रेण वुञादयोऽस्माद्भवन्ति, तेषां च विशेषविहितत्वाल्लुका न भवितव्यम्, सत्यम्; 'औत्सर्गिकोऽपि तत इष्यते' इति वक्ष्यति, तस्य वरणादिदर्शनाल्लुप् । असति व्यक्तिवचनग्रहणे शिरीषेषु यद्वनस्पतित्वं तस्यापि ग्रामेऽतिदेशः स्यात्, ततश्च णत्वं प्राप्नोति; णत्वविधौ विफली वनस्पतिरिति नाश्रीयते विशेषः । अत एव वृक्षवृत्तेर्णत्वं भवत्येव । *शिरीषवनमिति* । ननु च ग्रामेऽपि वर्तमानो गुणभूतं वनस्पतित्वमाहेति णत्वप्रसङ्गः, न चात्र किञ्चित्प्रधानाश्रयं कार्यमस्ति येन गुणः स्वकार्यं नारभेत । न च व्यक्तिवचनग्रहणस्य वैयर्थ्यम्, असति हि तस्मिन्प्रकृत्यर्थगतस्य व्यतिरेकस्याप्यतिदेशात् षष्ठी प्रसज्येत; सति तु तस्मिन् सङ्ख्यामात्रातिदेशे व्यतिरेकसहितायाः सङ्ख्याया अनतिदेशाद् ? नायं दोषः; एवं तर्हि णत्वविधौ प्रधानवनस्पतिग्रहणाद् अत्र तदभावः ।

न्यासः

इत्यस्य वक्ष्यमाणेन पञ्चालानामित्यनेन सम्बन्धः । पञ्चालानां निवास जनपद इति । तस्य 'जनपदे लुक्' इति लुक् । कुरुशब्दादपत्यार्थे 'कुरुनादिभ्यो ण्यः' इति ण्यप्रत्ययः । मत्स्यादिशब्देभ्योऽप्यपत्यार्थे 'द्व्यञ्मगध' इत्यादिनाण् । शेषं पूर्ववत् ।

लवणः सूप इति । लवणेन संसृष्ट इति प्राग्वहतीयष्ठक्, तस्य 'लवणाल्लुक्' इति लुक् । अत्राभिधेयवल्लिङ्गवचने भवतः । शिरीषाणामदूरभवो ग्राम इति शिरीषाः । 'अदूरभवश्च' इति शिरीषशब्दादण्, तस्य 'वरणादिभ्यश्च' इति लुप् । णत्वन्न भवतीति व्यक्तिवचनग्रहणस्य फलम् । यदि 'व्यक्तिवचने' इति नोच्येत, तदा शिरीषेषु यद्वनस्पतित्वम् तस्यापि ग्रामेऽतिदेशः स्यात् । एवञ्च शिरीषवनमित्यत्र 'विभाषौषधिवनस्पतिभ्यश्च' इति णत्वं प्रसज्येत ।

* हरीतक्यादिषु व्यक्तिः * । हरीतक्याः फलानि हरीतक्यः फलानि । *खलतिकादिषु वचनम्* । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि ॥

**विशेषणानां चाजातेः ॥ ५२ ॥**

'लुपि' इति वर्तते । लुबर्थस्य यानि विशेषणानि तेषामपि व्यक्ति-वचने भवतः, जातिं वर्जयित्वा । पञ्चालाः रमणीयाः, बह्वन्नाः, बहु-

**पदमञ्जरी**

*हरीतक्यः फलानीति* । हरीतकीशब्दाद् गौरादिङीषन्ताद् 'अनुदात्तादेश्च' इत्यञः 'हरीतक्यादिभ्यश्च' इति लुप् । अत्र व्यक्तिरेव युक्तवद्भवति, वचनं त्वभिधेयवदेव । *खलतिकं वनानीति* । खलतिकशब्दो वरणादिः, । समासे उत्तर-पदस्य बहुवचनस्य लुपो नियमार्थमेतद्—लुबर्थस्य बहुत्वातिदेशः समासे यदि भवति उत्तरपदस्यैवेति, मधुरापञ्चालाः; इह न भवति—पञ्चालमधुरे इति, बहुवचनस्येति वचनाद् । द्वित्वातिदेशः पूर्वपदस्यापि भवति—गोदौ च ग्रामः मधुरा च गोदमधुरा इति ॥

*विशेषणानां चाजातेः* ॥ पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसङ्ख्ययोर्लुबर्थेऽतिदेशः कृतः, न तु लुबन्ते शब्दे इति तत्र वर्तमानानां विशेषणानां सिद्ध एव युक्त-वद्भावः । वचनं तु जातिप्रतिषेधार्थम् । अथ व्यधिकरणानां विध्यर्थं कस्मान्न भवति, ब्रह्मदत्तस्य पञ्चाला इति ? 'तत्पुरुषः समानाधिकरणः' इत्यतः समाना-

**न्यासः**

हरीतक्यः फलानीति । हरीतकीशब्दो गौरादिषु पिप्पल्यादिदर्शनान् ङीषन्तः । ततः फले विकारे 'अनुदात्तादेरञ्' इत्यञ्; तस्य 'हरीतक्यादिभ्यश्च' इति लुप् । अत्र व्यक्तिरेव युक्तवद्भावेन भवति, वचनन्त्वभिधेयवदिति । एतच्च विभाषाग्रहणानु-वृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च लभ्यते । खलतिकं वनानीति । 'अदूरभवश्च' इत्यण्, तस्य 'वरणादिभ्यश्च' इति लुप् । अत्र वचनमेव युक्तवद्भावेन भवति, व्यक्तिस्त्व-भिधेयवदेवेति । एतदपि पूर्ववदेव लभ्यते ॥

विशेषणानां चाजातेः ॥ पूर्वं प्रकृत्यर्थगतयोर्लिङ्गसंख्ययोर्लुबर्थेऽतिदेशात् तद्विशेषणानामपि रमणीयादीनां व्यक्तिवचनातिदेशः सिद्ध एव । यद्यपि भिन्नं विशेषणानां प्रवृत्तिनिमित्तम्; तथापि तेन भिन्नेनापि तत्र प्रवर्त्तमानानां स एव लुबर्थोऽतिदिष्टव्यक्तिवचनस्तेषामभिधेयः, तस्मात् तद्गतेनैव लिङ्गसंख्याभिधाने सिद्धे जातिप्रतिषेधार्थमिदं वचनम् । गोदौ रमणीयाविति । गोदौ नाम ह्रदौ, तयोरदूरभवो ग्राम इत्यर्थेऽण् । 'वरणादिभ्यश्च' इति लुप् तस्य ।

क्षीरघृताः, बहुमाल्यफलाः। गोदौ रमणीयौ, बह्वन्नौ, बहुक्षीरघृतौ, बहुमाल्यफलौ ।

अजातेरिति किम् ? पञ्चालाः जनपदः । गोदौ ग्रामः ।

जात्यर्थस्य चायं युक्तवद्भावप्रतिषेधः। तेन जातिद्वारेण यानि विशेषणानि तेषामपि युक्तवद्भावो न भवति—पञ्चालाः जनपदो रमणीयो बह्वन्नः, गोदौ ग्रामो रमणीयो बह्वन्न इति ।

पदमञ्जरी

धिकरणानुवृत्तेः। *गोदाविति*। गोदौ ह्रदौ वरणादिः, ग्रामजनपदशब्दौ जातिवाचिनौ ताभ्यां लुबर्थो जातिरूपेणोच्यते। *जात्यर्थस्य चेत्यादि*। जातिरूपस्य चार्थस्य, न जातिवाचिनः शब्दस्येत्यर्थः। तेन किं सिद्धं भवतीत्याह—*तेनेति*। द्वारग्रहणेनेतद्दर्शयति—जातौ प्रक्रान्तायां यद्विशेषणमुपनिपतितं तज्जातिमेव साक्षाद्विशिनष्टि, तद्द्वारेण तु लुबर्थो विशिष्टः प्रतीयते; तत्र विशेषणविशेष्यभावं प्रति कामचार इति रमणीयादीनां जात्युपनिपाते युक्तवद्भावो न भवति; लुबर्थो पनिपाते तु भवति। यद्येवम्, नार्थोऽनेन, लुपोऽन्यत्राप्ययं प्रकारो दृष्टः, यथा—बदरी सूक्ष्मकण्टका मधुरावृक्ष इति, मधुरादीनां बदर्युपनिपाते तल्लिङ्ग-सङ्ख्यायोगः, वृक्षोपनिपाते वृक्षलिङ्गसङ्ख्यायोगः, वृक्षस्य च नियतलिङ्गता ? एवं तर्हि यत्तत्रतत्रोच्यते—गुणवचनानां हि शब्दानां नाश्रयतो लिङ्गवचनानि भवन्तीति, तदनेन क्रियते । *विशेषणानां* गुणवचनानामित्यर्थः। *युक्तवद्व्यक्ति-वचने*। आश्रयवल्लिङ्गसंख्ये इत्यर्थः। यदा तु जातिविशेषणं तदा नेति। पदसंस्कारपक्षे च वाचनिकमेतत्; पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे लिङ्गसर्वनामनपुंसकं वस्त्वन्तरानपेक्षमेकत्वं च प्राप्तमिति शुक्लं पटा इति प्राप्ते भाविनो बहिरङ्ग-स्याश्रयस्य लिङ्गसंख्ये विधीयेते। वाक्यसंस्कारे त्वयमनुवाद एव; आश्रयविशेष-निष्ठत्वेन विशेषणानामपि तल्लिङ्गसंख्ययोरसिद्धत्वात्।

न्यासः

पञ्चालाः जनपदः। गोदौ ग्राम इति। जनपदग्रामशब्दौ जातिवचनौ। ताभ्यां जातिनिमित्ताभ्यां स एव लुबर्थो जातिरूपेणोच्यत इति तयोरपि व्यक्तिवचने युक्तवत् स्याताम्। ततो 'जातेः' इति प्रतिषेधः।

जात्यर्थस्येत्यादि। जातिशब्दस्यार्थो जात्यर्थः, तस्यायम् 'अजातेः' इति युक्त-वद्भावप्रतिषेधः, न जातिशब्दस्यैवेत्यर्थः। किमेवं सति सिद्धं भवतीत्यत आह—तेने-त्यादि। अर्थस्य युक्तवद्भावप्रतिषेधे सति यथा जातिशब्दस्य तत्रार्थे वर्त्तमानस्य तदीये लिङ्गसंख्ये न भवतः, तथा तद्विशेषणानामपि युक्तवद्भावो न भवति। यदि पुनर्जाति-

* मनुष्यलुपि प्रतिषेधो वक्तव्यः * । चञ्चाभिरूपः । वध्रिका-दर्शनीयः ॥

तदशिष्यं संज्ञाप्रमाणत्वात् ॥ ५३ ॥

तदिति प्रकृतं युक्तवद्भावलक्षणं निर्दिश्यते । तदशिष्यं न वक्तव्यम्, कस्मात्? संज्ञाप्रमाणत्वात् । संज्ञाशब्दा हि नानालिङ्गसंख्याः प्रमाणम् । पञ्चाला वरणा इति च नैते योगशब्दाः, किं तर्हि? जनपदादीनां संज्ञा एताः ।

पदमञ्जरी

*मनुष्यलुपीति* । मनुष्यलक्षणे लुबर्थे विशेषणानां प्रतिषेधः । लुबन्तस्य तु भवत्येव—चञ्चाभिरूप इति, तृणपुरुषश्चञ्चा तत्सदृशो मनुष्यश्चञ्चा 'संज्ञायाम्' इति कन्, 'लुम्मनुष्ये' इति लुप् । चर्मविकारविशेषो वध्रिका ॥

*तदशिष्यं संज्ञाप्रमाणत्वात्* ॥ *संज्ञाप्रमाणत्वादिति* । प्रमाणानां हि प्रमाणत्वं प्रतिपादकत्वं स्वार्थप्रत्यायनलक्षणम् । एतच्च सर्वेषामेव शब्दानामस्ति, न संज्ञाशब्दानामेव । उच्यते चेदं तत्र विशेषो विज्ञायत इत्याह—*संज्ञाशब्दा हीत्यादि* । ये संज्ञाशब्दास्ते नानालिङ्गसंख्या अपि स्वाभिधेयगतलिङ्गसंख्यापेक्षया भिन्नलिङ्गसंख्या अपि प्रमाणम्, स्वार्थस्य प्रतिपादका इत्यर्थः । भवतु संज्ञाशब्दानामेवंविधं प्रमाणत्वम्,

न्यासः

शब्दस्यायं प्रतिषेधः स्यात्, तदा पञ्चाला जनपदः, गोदौ ग्राम इत्यत्रैव स्यात्, रमणीयो बहुन्न इत्यादौ न स्यात्, रमणीयादीनामजातिशब्दत्वात् । द्वारग्रहणं लुबर्थे जातिशब्दस्य प्रवृत्तत्वात्, लुबर्थे जातिविशेषणानां साक्षादप्रवृत्तेः । तानि हि साक्षाज्जातिमेव विशेषयन्ति । तस्यां तु विशेषितायां लुबर्थोऽपि विशिष्ट एव प्रतीयत इति जातिद्वारेण तस्य तानि विशेषणानि भवन्ति ।

मनुष्यलुपीति । मनुष्यलक्षणो यो लुप् तस्य विशेषणानां युक्तवद्भावप्रतिषेध इति । स च विभाषाग्रहणानुवृत्तेर्व्यवस्थितविभाषाविज्ञानाल्लभ्यते । चञ्चाभिरूप इति । चञ्चेव मनुष्यश्चञ्चा —'इवे प्रतिकृतौ' इति कन् । तस्य 'लुम् मनुष्ये' इति लुप् । अभिरूप इति —विशेषणस्याभिधेयवल्लिङ्गवचनानि भवन्ति । वध्रिकेति पूर्ववत् कंल्लुपौ ॥

तदशिष्यं संज्ञाप्रमाणत्वात् ॥ तदशिष्यमिति प्रतिज्ञा, संज्ञाप्रमाणत्वादिति हेतुः । यस्मात् संज्ञाभूतानां पञ्चालादिशब्दानां प्रमाणत्वम्, तस्मात् तदशिष्यम् । प्रमाणत्वं पुनः प्रत्ययलक्षणम् । सर्वेषामेव शब्दानामेवंविधे स्वविषये प्रमाणत्वमस्ति, उच्यते चेदम्, तत्र विशेषो विज्ञायते, स पुनरभिधेयगतलिङ्गसंख्यानपेक्षया भिन्नलिङ्गसंख्यानामपि तेषां स्वार्थे प्रत्यायकत्वम् । अत एवाह—संज्ञाशब्दा हि नानालिङ्ग-

तत्र लिङ्गं वचनं च स्वभावसिद्धमेव, न यत्नप्रतिपाद्यम्; यथा—आपः, दाराः, गृहाः, सिकताः, वर्षा इति ॥

## लुब्योगाप्रख्यानात् ॥ ५४ ॥

लुबप्यशिष्यः । योऽयम् 'जनपदे लुप्', 'वरणादिभ्यश्च' इति

### पदमञ्जरी

किमायातं यौगिकानां पञ्चालादिशब्दानामित्यत आह—*पञ्चाला वरणा इत्यादि* । तदनेन पक्षधर्मत्वं हेतोरुक्तम्, पूर्वं तु दृष्टान्तगतो हेतुर्व्याख्यातः । दृष्टान्तमाह—*यथेति* । युक्तवद्भावमारभमाणोऽपि नात्र कश्चिदयत्नं करोति, तदवश्यमयं शब्दस्वभाव एवाश्रयणीयः । कश्चिद्धि शब्दः स्वभावात् समुदायसंख्यामभिधत्ते, कश्चिदवयवसंख्याम्, यथा–वनं वृक्षा इति । एवं लिङ्गेऽपि द्रष्टव्यम् ॥

*लुब्योगाप्रख्यानात्* ॥ *किं कारणमिति* । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति प्रथमा द्वितीया वा । तथा च योगाप्रख्यानादित्युत्तरोपपत्तिः । योगः= जनपदादेः क्षत्रियादिभिः सम्बन्धः, तस्याप्रख्यानादनुपलब्धेरित्यर्थः । तदाह –

### न्यासः

संख्या इति । प्रमाणमिति । प्रमाणं प्रत्यायका वाचका इत्यर्थः । तत्रैतत् स्यात्—संज्ञाशब्दा एवामी पञ्चालादयो न भवन्ति, किं तर्हि ? योगनिमित्तका इत्यत आह—पञ्चाला वरणा इत्यादि । योगनिमित्तकाः शब्दा योगशब्दाः । न हि पञ्चालादयः शब्दाः क्षत्रियादिसम्बन्धेन जनपदादौ वर्त्तन्ते, किं तर्हि ? संज्ञा एता जनपदादीनाम् ।

यदि संज्ञाशब्दा एते, ततः किमिति ? तदशिष्यमित्यत आह—तत्र लिङ्गं वचनञ्चेत्यादि । कुत एतत् ? यत् संज्ञाशब्दानां लिङ्गं वचनञ्च तत्स्वभावसिद्धमित्यत आह—यथेत्यादि । एकस्यामपि जलकणिकायां बहुवचनान्तः स्त्रीलिङ्गोऽप्शब्दः प्रयुज्यते, एकस्यामपि योषिति दारशब्दः पुंल्लिङ्गो बहुवचनान्तः, गृहशब्दश्चैकस्मिन् वेश्मनि बहुवचनान्तः पुंल्लिङ्गश्च, एकस्यामपि वालुकायां बहुवचनान्तः सिकताशब्दः स्त्रीलिङ्गः, वर्षा इति एकस्मिन् विशिष्टकालेऽपि प्रवर्त्तमानः स्त्रीलिङ्गो बहुवचनान्तश्च वर्त्तते । तस्माद् यथैवैषामप्प्रभृतिशब्दानां स्वाभाविकं लिङ्गं वचनं च तथा पञ्चालादिशब्दानामपीति नार्थो युक्तवद्भाववचनेन । यद्येवम्, कस्मात् पूर्वं तदुक्तम् ? प्रतिषेधविषयोपदर्शनार्थम् । न ह्यनिर्दिष्टविषयस्य प्रतिषेधः शक्यते कर्त्तुं ज्ञातुं वा ॥

लुब्योगाप्रख्यानात् ॥ योगाप्रख्यानादिति । योगो जनपदादेः क्षत्रियादिभिः सह सम्बन्धः, तस्याप्रख्यानादनुपलब्धेरित्यर्थः । ये हि योगनिमित्तकाः शब्दा योगमभिधाय

लुबुच्यते, अयं न वक्तव्यः; किं कारणम् ? योगाप्रख्यानात्। न हि पञ्चाला वरणा इति योगः = संबन्धः प्रख्यायते। नैतदुपलभामहे— वृक्षयोगान्नगरे वरणा इति, किं तर्हि ? संज्ञा एताः। तस्मादत्र 'तस्य निवासः', 'अदूरभवश्च' इति तद्धितो नैवोत्पद्यते, किं लुपो विधानेन॥

**योगप्रमाणे च तदभावेऽदर्शनं स्यात् ॥ ५५ ॥**

'पञ्चालादयः संज्ञाशब्दाः, न योगनिमित्ताः' इत्युक्तम्। तच्चा-

**पदमञ्जरी**

*न हीति*। एतदेव विवृणोति—*नैतदिति, संज्ञा एता इति*। यद्यपि संज्ञाशब्दा अपि पङ्कजादयोऽपेक्षितप्रवृत्तिनिमित्ताः सन्ति, तथापीह प्रकरणादनपेक्षितप्रवृत्तिनिमित्ता अपीति बोद्धव्यम्। अत एवाह—*तस्मादत्रेत्यादि*। ननु योगाप्रख्यानेऽपि तद्धित उत्पद्यते, तद्यथा—'कम्बलाच्चं संज्ञायाम्' कम्बल्यमूर्णापलशतमिति, सत्यम्; यत्र रूपे विशेषोऽस्ति। ननु च संज्ञाप्रमाणत्वादिति पञ्चालादिशब्दानामयौगिकत्वमुपपादितमित्यर्थाल्लुवपिं प्रत्याख्यात एव, किमनेन क्रियते ? उच्यते; संज्ञाप्रमाणत्वादित्यनेन दृष्टान्तगतो हेतुः शब्देनोक्तः, तस्यैव त्वर्थात्पञ्चालादिगतत्वेन प्रतीयमानस्यासिद्धिमाशङ्क्य योगाप्रख्यानादिति यौगिकत्वमपाकुर्वन् हेतुमेव समर्थयते॥

*योगप्रमाणे च तदभावे दर्शनं स्यात्*॥ *पञ्चालादय इत्यादि*। पूर्वयोगस्याप्रति-

**न्यासः**

तद्वति द्रव्ये वर्त्तन्ते, तेभ्यो योग उपलभ्यते; यथा—दण्डिशब्दादिभ्यः। न च पञ्चालादिशब्देभ्यो दण्ड्यादिशब्दवद् योग उपलभ्यते, तस्मान्नैते योगशब्दा इत्यत आह—न हीत्यादि। प्रख्यायते=कथ्यते, प्रकाश्यते, बुद्धेर्विषय आपाद्यत इति यावत्। यत एवं पञ्चाला वरणा इति सम्बन्धो न प्रख्यायते, अत एव नैतदुपलभामहे वृक्षयोगान्नगरे वरणा इति, किं तर्हि ? संज्ञा एता अनपेक्षितप्रवृत्तिनिमित्ताः। यदि संज्ञाशब्दा एते, ततः किमित्याह—तस्मादत्रेत्यादि। गतार्थम्। ननु च संज्ञाशब्दानामपि व्युत्पत्त्यर्थं तद्धित उत्पद्यत एव, यथा 'हस्ताज्जातौ' हस्ती, 'कम्बलाच्च संज्ञायाम्' कम्बल्यमिति, तत्किमुच्यते—"तस्मादत्र 'तस्य निवासः' 'अदूरभवश्च' इति तद्धितो नोत्पद्यते" इति ? सत्यम् ! संज्ञाशब्दव्युत्पत्त्यर्थं तद्धित उत्पद्यते। स च क्वोत्पद्यते ? यत्र श्रुतिकृतो विशेषो विद्यते, न चेह तद्धितोत्पत्तौ लुपि सति कश्चिद् विशेष इति न तद्धितोत्पत्तिः।

**योगप्रमाणे च तदभावेऽदर्शनं स्यात्** ॥ योगप्रमाण इति। योगस्य प्रमाणं योगप्रमाणम्, येन योगः प्रत्याय्यते। तत् पुनरिह प्रकृतत्वात् पञ्चालादिशब्दः। स हि

वश्यमेवाभ्युपगन्तव्यम्, योगप्रमाणे हि तदभावेऽदर्शनं स्यात्। यदि पञ्चालादिशब्दो योगस्य प्रमाणं योगस्य वाचकः स्यात्, ततस्तदभावेऽदर्शनम् = अप्रयोगः स्यात्। दृश्यते च संप्रति विनैव क्षत्रियसम्बन्धेन जनपदेषु पञ्चालादिशब्दः, ततोऽवसीयते—नायं योगनिमित्तकः, किं तर्हि ? रूढिरूपेणैव तत्र प्रवृत्त इति ॥

**प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ ५६ ॥**

'अशिष्यम्' इति वर्त्तते। प्रधानं समासे किञ्चित्पदम्, प्रत्ययः तव्यदादिः, ताभ्यामर्थवचनम् = अर्थाभिधानमनेन प्रकारेण भवतीति

पदमञ्जरी

भास उक्तः, यस्तु तमपजानीते तं प्रत्यनेनानिष्टमापद्यत इतं दर्शयति—*योगप्रमाणे हीति*। 'हि' शब्दो हेत्वर्थे प्रयुञ्जानः सूत्रे 'च' शब्दो हेतौ प्रयुक्त इति दर्शयति। एतदेव व्याचष्टे—*यदीति, अदर्शनमप्रयोगः स्यादिति*। दर्शनं ज्ञानं तच्च प्रयोगस्योच्चारणस्य फलम्, अतः फलाभावेन हेत्वभावो विवक्षित इत्याचष्टे। योगनिमित्तको हि योगाभावेन प्रदर्शनं युज्यते, यथा—दण्डीशब्द इति भावः। ननु भूतपूर्वमपि निमित्तं भवति, ततश्च सम्प्रति वरणादियोगाभावेऽपि भूतपूर्वः स एव निमित्तं भविष्यति, नैतदेवम्; भूतपूर्वनिमित्तो हि व्यपदेशो गौणः स्याद्, न चायं गौणः; पदान्तरस्य प्रयोगमन्तरेणाऽपि प्रतीयमानत्वात्। किञ्च यौगिकत्वे पुरुषान्तरसंबंधनिबंधनोऽपि व्यपदेशः कस्मान्न प्रवर्तते ? विपर्ययो वा कस्मान्न भवति ? देशसम्बन्धाद्राजसु पञ्चालशब्द इत्यतोऽक्षादिशब्दवदनेकार्थ एवायं पञ्चालादिशब्दः ॥

*प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्॥ अर्थवचनमिति*। कर्मणि षष्ठ्याः समासः। ननु च प्रधानप्रत्यययोः कर्त्रोर्निर्देशादुभयप्राप्तावित्यनेनात्र षष्ठी, ततश्च

न्यासः

परमतेन पञ्चालादिसम्बन्धं स्वप्रवृत्तिनिमित्तमभिधायैव जनपदादौ वर्त्तते, नानभिधाय। तेन योगस्य प्रमाणं प्रत्यायको वाचक इत्यर्थः। तदभावेऽदर्शनं स्यादिति। यो हि योगनिमित्तकः स योगाभावे न प्रयुज्यते, दण्ड्यादिशब्दवदित्यभिप्रायः। योगप्रमाणे हीत्यादि। हिशब्दं हेत्वर्थं प्रयुञ्जानश्चशब्दो हेत्वर्थवृत्तिः सूत्रे उपात्त इति दर्शयति। स्यादेतत्, भवत्येव योगाभावे पञ्चालादिशब्दस्यादर्शनमित्यत आह—दृश्यते चेत्यादि। गतार्थम् ॥

प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् ॥ अन्यप्रमाणत्वादिति। अन्यत् प्रमाणम् अवगतिहेतुर्यस्यार्थाभिधानलक्षणस्य तदन्यप्रमाणम्, तस्य भावोऽन्यप्रमाणत्वम्। प्रधानं समासे किञ्चित् पदमिति। यथा राजपुरुषशब्दे पुरुष इत्येतत्। प्रधानोपसर्जने

पूर्वाचार्यैः परिभाषितम् । * प्रधानोपसर्जने प्रधानार्थं सह ब्रूतः', * 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति । तत्पाणिनिराचार्यः प्रत्याचष्टे—अशिष्यमेतत्, अर्थस्यान्यप्रमाणत्वादिति । अन्य इति शास्त्रापेक्षया लोको व्यपदिश्यते । शब्दैरर्थाभिधानं स्वाभाविकम्, न पारिभाषिकम्; अशक्यत्वात्, लोकत एवार्थावगतेः ।

पदमञ्जरी

'कर्मणि च' इति निषेधः प्राप्नोति, नैष दोषः; प्रधानप्रत्यययोरत्र करणत्वं विवक्षितम् । कस्तर्हि कर्ता, पुरुषः, समुदायो वा प्रधानोपसर्जनयोः प्रकृतिप्रत्यययोश्च ? एतदुक्तं भवति–प्रधानप्रत्ययाभ्यां करणाभ्यां पुरुषेण समुदायेन वा यदर्थस्य वचनशब्देन सह 'कर्तृकरणे कृता बहुलम्' 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति समासः । ननु च प्रत्ययोऽपि प्रकृत्यपेक्षया प्रधानम्, कस्माद्भेदेनोपादीयते ? उच्यते; यदा 'प्रकृतिः प्रत्ययार्थं प्रति विशेषणतया स्वार्थमभिधत्ते' इति सिद्धं भवति, तदा प्रत्ययस्य प्राधान्यम्, तदेवेदानीं परिभाष्यत इति पूर्वाचार्यैस्तावत्प्रत्ययो भेदेन निर्दिष्टः-प्रधानोपसर्जने, प्रकृतिप्रत्ययाविति, ततश्च तल्लक्षणनिराकरणे प्रत्ययोऽपि भेदेनोपादेयः । *अशक्यत्वादिति* । अशक्यत्वमनन्तप्रकारत्वात् । बहुव्रीहावन्यपदार्थं उच्यते; प्लक्षन्यग्रोधमिति समाहारः; क्वचित्प्रधानयोरेव सहाभिधानम्–प्लक्षन्यग्रोधाविति । स्वार्थिकेषु च प्रकृतिप्रत्ययो प्रकृत्यर्थं सह ब्रूतः—शुक्लतर इति; तथा आख्यातेषु क्रियाप्रधानमाख्यातमिति; तथा 'कर्तरि कृत्' 'कर्तरि तृतीया', तत्र 'कृत्सु शक्तिमद् द्रव्यं प्रधानमुच्यते' इति क्रियाभेदे शक्त्यन्तराविर्भावः; पाचकं पश्येति विभक्तिषु शक्तिप्राधान्यम् —इत्याद्यनन्तप्रकारमर्थाभिधानमशक्यं परिभाषितुमिति लोकत एवार्थावगतेः कथमेतदित्याह—*यैरपीत्यादि* ॥

न्यासः

इत्यादि । राजपुरुष इत्यत्र पूर्वपदमुपसर्जनम्, इतरत् प्रधानम् । ते च प्रधानार्थं सह ब्रूतः । प्रकृतिप्रत्ययावित्यादि । औपगव इत्यत्रोपगुशब्दः प्रकृतिः, अण् प्रत्ययः, तावपत्यलक्षणं प्रत्ययार्थं सह ब्रूतः । अशक्यत्वादिति । अशक्यत्वं त्वनन्तप्रकारत्वात् । तथा हि—चित्रगुरिति बहुव्रीहौ कृते गुणगुणिभ्यामन्यपदार्थ उच्यते । अत्र गुणपदं चित्रशब्दोऽप्रधानम्, विशेषणत्वात्; गुणिपदं गोशब्दः प्रधानम्, विशेष्यत्वात् । क्वचिदुपसर्जनाभ्यामन्योऽर्थोऽभिधीयते—प्लक्षन्यग्रोधमिति, अत्र हि समुदायार्थः प्रधानमुपसर्जनाभ्यामभिधीयते । क्वचित् प्रधानाभ्यां प्रधानार्थयोरेव सहाभिधानम्—प्लक्षन्यग्रोधाविति । तथा हि, न केवलं प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, अपि तु क्वचित् प्रकृत्यर्थमपि, यथा— स्वार्थिकेषु शुक्लतरम्, शुक्लतममिति । तथा केचिदाख्यातेषु स्वभावात् प्रधानमाहुः प्रकृत्यर्थम्—'क्रियाप्रधानमाख्यातम्' इति ।

यैरपि व्याकरणं न श्रुतम्, तेऽपि 'राजपुरुषमानय' इत्युक्ते राजविशिष्टं पुरुषमानयन्ति; न राजानम्, नापि पुरुषमात्रम्। 'औपगवमानय' इत्युक्त उपगुविशिष्टमपत्यमानयन्ति; नोपगुम्, नाप्यपत्यमात्रम्, नोभौ। यश्च लोकतोऽर्थः सिद्धः, किं तत्र यत्नेन ! ॥

कालोपसर्जने च तुल्यम् ॥ ५७ ॥

'अशिष्यम्' इति वर्तते। कालोपसर्जने चाशिष्ये। कस्मात्? अर्थस्यान्यप्रमाणत्वात्। तुल्यशब्दो हेत्वनुकर्षणार्थः। अशिष्यविशेषणं चैतत। कालोपसर्जने च तुल्यमशिष्ये भवतः।

इह्यन्ये वैयाकरणाः कालोपसर्जनयोः परिभाषां कुर्वन्ति। आन्याय्यादुत्थानादान्याय्याच्च संवेशनात्—एषोऽद्यतनः कालः। अपरे पुनराहुः—अहरुभयतोऽर्धरात्रम्—एषोऽद्यतनः काल इति। तथोपसर्जनपरिभाषां कुर्वन्ति—अप्रधानमुपसर्जनमिति।

पदमञ्जरी

कालोपसजने च तुल्यम् ॥ *अर्थस्यान्यप्रमाणत्वादिति*। कथं पुनरयमत्र हेतुर्लभ्यत इत्याह—*तुल्यशब्दो हेत्वनुकर्षणार्थ इति*। कथमेतदित्याह—*अशिष्यविशेषणं चैतदिति*। चशब्दो हेतौ। *आन्याय्यादिति*। रात्रेश्चतुर्धा विभक्तायाः पश्चिमे यामे न्याय्यं स्वापादुत्थानम्; शास्त्रीयत्वात्। प्रथमे यामे गते च संवेशनं शयनम्। अत्र लक्षणे रात्रेर्मध्ययामद्वयं नाद्यतनम्, द्वितीये तु तदपि। *उभयतोऽर्धरात्रमिति*। बहुव्रीहिः, कृत्स्नो दिवस आगामिन्या रात्रेः पूर्वार्धेनातीतायाः

न्यासः

अन्ये तु मन्यन्ते—आख्यातेषु प्रधानभूतः प्रत्ययार्थ स्वं-शक्तिरूपेणोच्यते, यथा विभक्तिभिः क्वचित् प्रत्यये; न तु शक्तिमान् पदार्थो द्रव्यभावमापन्न उच्यते। अतः क्रियान्तरेण च सम्बन्धे शक्त्यन्तरमाविर्भवति कर्त्तारं पश्येति। एवमाद्यनन्तप्रकारमर्थाभिधानमशक्यं सर्वमुपदेष्टुम्, तस्माल्लोकत एवार्थावगतिः। कथं पुनरेतद् विज्ञायत इत्यत आह—यैरपीत्यादि। सुगमम् ॥

कालोपसर्जने च तुल्यम् ॥ अर्थस्यान्यप्रमाणत्वादित्युक्तम्। कथं पुनरत्राप्ययं हेतुर्लभ्यत इति प्रश्नावसर इत्याह—तुल्यशब्दो हेत्वनुकर्षणार्थं इति। कथं पुनस्तुल्यशब्दो हेत्वनुकर्षणार्थो भवति? मन्यते—तुल्यमिति प्रत्याख्यानक्रियाविशेषणमेतत्। अनन्तरोक्तेन प्रत्याख्यानेन तुल्यमेतत् प्रत्याख्यानम्। एवञ्च तुल्यं भवति यदि यस्तस्य हेतुः स एवास्यापि भवति। तस्मात् तुल्यग्रहणसामर्थ्यात् पूर्वको हेतुरत्रानुवर्तते। तेन तुल्यशब्दो हेत्वनुकर्षणार्थो भवतीति। आन्याय्यादुत्थानादित्यादि। उत्थानं

तत्पाणिनिराचार्यः प्रत्याचष्टे—लोकतोऽर्थावगतेः। यैरपि व्याकरणं न श्रुतं तेऽप्याहुः—इदमस्माभिरद्य कर्तव्यम्, इदं श्वः कर्तव्यम्, इदम् ह्यः कृतमिति; नैवं व्युत्पाद्यन्ते! तथोपसर्जनम्—वयमत्र गृहे ग्रामे वा उपसर्जनप्रधानमिति गम्यते। यश्च लोकतोऽर्थः सिद्धः, किं तत्र यत्नेन!

यद्येवम्, पूर्वसूत्र एव कालोपसर्जनग्रहणं कस्मान्न क्रियते, किमर्थो योगविभागः? प्रदर्शनार्थः।

अन्यदप्येवञ्जातीयकमशिष्यमिति। तथा च पूर्वाचार्याः परिभाषन्ते—'मत्वर्थे बहुव्रीहिः', 'पूर्वपदार्थप्रधानोऽव्ययीभावः', 'उभयपदार्थप्रधानो द्वन्द्वः' इत्येवमादि; तदशिष्यमिति॥

जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्॥ ५८॥

'अशिष्यम्' इति निवृत्तम्। जातिर्नामायमेकोऽर्थः, तदभिधाने एक-

पदमञ्जरी

पश्चिमार्धेन च युक्त इत्यर्थः। *यद्येवमिति*। यद्यर्थस्यान्यप्रमाणत्वादित्ययमेवात्रापि हेतुरित्यर्थः। *पूर्वसूत्र एवेति*। एवं हि तुल्यमिति न वक्तव्यं भवतीति भावः॥

*जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्*॥ *जात्याख्यायामिति* विषयसप्तमी। एवमेकस्मिन्नित्यपि व्यधिकरणे चैते सप्तम्यौ। *जातिर्नामेत्यादिना* सूत्रारम्भस्य कारणमाह—*एकोऽर्थ इति*। यद्यपि वैशेषिकपरिभाषिता संख्या जातेर्न विद्यते, तस्या द्रव्यधर्मत्वात्; तथापि भेदगणनरूपा संख्या विद्यत एव। यथोक्तम्—

न्यासः

शयनाद्रात्रेः पश्चिमे यामे न्याय्यमुक्तम्। संवेशनम्=शयनम्, तदपि रजन्याः प्रथमे यामे न्याय्यम्। तदेवं सकलो दिवसः; पूर्वस्याश्च रात्रेः पश्चिमो यामः, आगामिन्याश्च प्रथमो याम इत्येषोऽद्यतनः काल इत्युक्तं भवति। अहरुभयतोऽर्धरात्रमित्यादि। कृत्स्नो दिवस उभयतश्चार्धरात्रम्। अतिक्रान्तायाश्च रात्रेरागामिन्याश्च रात्रेरद्यतनः काल इत्यपरे।

जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्॥ जातिर्नामायमेकोऽर्थ इत्यादिना सूत्रारम्भस्य प्रयोजनमाह। ननु च जातेः संख्या न विद्यते? तस्या द्रव्यधर्मत्वात्। यद्यपि वैशेषिकसिद्धान्तप्रसिद्धा गुणपदार्थसंगृहीता या संख्या सा न विद्यते, तथापि 'भेदका गुणाः' इत्यस्मद्दर्शने भेदमात्रा या संख्या सा विद्यत एवेत्यदोषः। जातेर-

वचनमेव प्राप्तम्, अत इदमुच्यते। जातेराख्या जात्याख्या, जात्याख्यायामेकस्मिन्नर्थे बहुवचनमन्यतरस्यां भवति। जात्यर्थो बहुवद् भवतीति यावत्। तेन तद्विशेषणानामजातिशब्दानामपि संपन्नादीनां बहुवचनमुपपद्यते। संपन्नो यवः, संपन्ना यवाः। संपन्नो व्रीहिः, संपन्ना व्रीहयः। पूर्वंवया ब्राह्मणः प्रत्युत्थेयः, पूर्ववयसो ब्राह्मणाः प्रत्युत्थेयाः।

जातिग्रहणं किम्? देवदत्तः, यज्ञदत्तः। आख्यायामिति किम्?

पदमञ्जरी

दिष्टिप्रस्थसुवर्णादि मूर्त्तंभेदाय कल्पते।
क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका॥ इति।

वैशेषिकाश्च व्यवहरन्ति—पञ्च कर्माणि, चतुर्विंशतिर्गुणा इति। *जातेराख्येति*। आख्यानमाख्या=प्रत्ययनम्। *एकस्मिन्नर्थ इति*। जात्याख्ये बहुवचनशब्दोऽन्वर्थो न पारिभाषिकः, उक्तिर्वचनम्, बहूनां वचनं बहुवचनम्। ततश्चायमर्थः—एकस्मिन्नर्थे बहूनामुक्तिर्भवतीति सामर्थ्याद्वत्यर्थो गम्यते—बहूनामिवोक्तिः। यदि च जात्यर्थो बहुवद्भवतीति बहूनामिवोक्तिर्भवतीति सामर्थ्यात् स एवार्थः संपद्यत इत्याह—*जात्यर्थो बहुवद्भवतीति*। तेन किं सिद्धं भवतीत्याह—*तेनेति*। यदि तु जातिशब्दाद्बहुवचनं जात्यादि विधीयेत, ततो विशेषणेभ्यः संपन्नादिभ्यो न स्यात्, तेषामजातिशब्दत्वादिति भावः।

देवदत्त *इति*। यद्यपि जातिपदार्थवादिपक्षे ह्यत्राप्यवस्थाभेदानुगता जातिः

न्यासः

ख्येति। आख्यानमाख्या = प्रत्यायनम्। एकस्मिन्नर्थं इति। जात्याख्योऽर्थो जात्यर्थो बहुवद्भवतीति यावदिति। एतेनैतद्दर्शयति—न हि जातिशब्दाज्जसादिर्बहुवचनं विधीयते, किं तर्हि? बहुवद्भावः। यदि हि जातिशब्दाज्जसादिर्बहुवचनं विधीयेत; जातिविशेषणेभ्यः सम्पन्नादिभ्यस्तन्न स्यात्। तेषामजातिशब्दत्वादित्यभिप्रायः। कथं पुनर्जात्यर्थस्य बहुवद्भावो लभ्यते? अन्वर्थग्रहणात्। बहुवचनमिह न पारिभाषिकं बहुवचनं गृह्यते, किं तर्हि? अन्वर्थम्। उक्तिः = वचनम्। बहूनां वचनं बहुवचनम्। न चैकस्मिन्नर्थे बहूनां वचनं सम्भवति, अतः सामर्थ्याद् वत्यर्थो गम्यते—एकस्मिन्नर्थे बहुवदिति। तदनेन प्रकारेण जात्यर्थो बहुवद्भवति। तेनेत्यादि। यत एव जात्यर्थस्य बहुवद्भावो विधीयते, तेन जातिविशेषणानामजातौ वर्तमानानां बहुवचनमुपपद्यते, जातिशब्दवत्।

देवदत्त इति। देवदत्तशब्दो यदृच्छाशब्दः। नानेनैकं वस्त्वनेकव्यक्त्यनुगतम-

काश्यपप्रतिकृतिः काश्यपः। भवत्ययं जातिशब्दः, न त्वनेन जाति-राख्यायते, किं तर्हि ? प्रतिकृतिः। एकस्मिन्निति किम् ? व्रीहियवौ।

* संख्याप्रयोगे प्रतिषेधो वक्तव्यः * ॥ एको व्रीहिः संपन्नः सुभिक्षं करोति ॥

पदमञ्जरी

शब्दवाच्या, तथापीह सामर्थ्याद्भिन्नपिण्डसमवेता जातिराश्रीयत इत्यनतिदेशः। *काश्यप इति*। कश्यपशब्दाद्बिदाद्यञ्, तत इवार्थे संज्ञायां कन् 'लुम्मनुष्ये'। *भवत्ययं जातिशब्द इति*। गुणभूताया गोत्रजातेरभिधानात्। *न त्वनेन जाति-राख्यायत इति*। प्राधान्येनेति भावः। असत्याख्याग्रहणे जातौ वर्तमानादित्यर्थः स्यात्, तत्र यथा व्यक्तिपर्यन्ताभिधाने गवादिभ्योऽपि भवति, एवमत्रापि स्यात्। सति तु तस्मिंस्तत्सामर्थ्याज्जातिप्राधान्ये भवति। *व्रीहियवाविति*। ननु च यथा काशिकोसलीया इति जनपदलक्षणो वुञ् न भवति, तथा बहुवद्भावोऽत्र न भविष्यति ? विषम उपन्यासः; जनपदवाचिनो वुञ् विधीयते, न च जनपदरूपः समुदायोऽवयवाभ्यामारभ्यते; अतो यत्स्वतन्त्रं प्रातिपदिकं न तज्जनपदवाचि, यज्जनपदवाचि न तत्स्वतन्त्रं प्रातिपदिकमिति कुतो वुञः प्रसङ्गः! अयं तु जातिप्रत्यायने विधिर्न जातिशब्दादिति स्यादेव प्रसङ्गः।

*संख्याप्रयोगे इति*। एकस्यैव बहुत्वातिदेशे क्रियमाण एकशब्दप्रयोगेऽपि स्यादिति भावः। आरभ्यमाणेऽप्येतस्मिन् गोत्वं व्रीहित्वमित्यादि निष्कृष्य जात्यभिधानेनैवायं विधिरिष्यते। व्यक्तिपर्यन्ते त्वभिधाने जातिव्यक्त्योस्ता-

न्यासः

भिधीयते। अनेकव्यक्त्याधारा हि जातिः। ततो न देवदत्तत्वं नाम जातिरस्तीति न भवत्यत्र बहुवद्भावः। ननु चात्रावस्थाभेदेनानेकाधारं देवदत्तत्वमस्ति, नैतदस्ति; एवं हि जातिग्रहणमनर्थकं स्यात्, सर्वत्र जातेः सम्भवात्। तस्माज्जातिग्रहणसामर्थ्या-ल्लोके ये जातिशब्दाः प्रतीताः, तदर्था एवात्र जातिशब्देन विवक्षिता इति विज्ञायते, न च देवदत्तशब्दो लोके जातिशब्दः प्रतीतः।

काश्यपप्रतिकृतिः काश्यप इति। कश्यपस्यापत्यम् 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' इत्यञ्—काश्यप इति। तत इवार्थे 'इवे प्रतिकृतौ' इति कन्। 'लुम् मनुष्ये' इति लुप् भवति। अयं जातिशब्द इति। 'गोत्रञ्च चरणैः सह' इति ( ४।१।६३, म० भा० ) लक्षणात्, तस्य च गोत्रप्रत्ययान्तत्वात्। न त्वयं जातिरूपेणोच्यते, किं तर्हि ? प्रति-कृतिरिति। एवं तर्हि जातिप्रत्यायने हि चिकीर्षिते बहुवद्भावे भवितव्यम्। न चेह जातिप्रत्यायनं चिकीर्षितम्, किं तर्हि ? प्रतिकृतिप्रत्यायनम्। व्रीहियवाविति। एक-

## अस्मदो द्वयोश्च ॥ ५९ ॥

अस्मदो योऽर्थस्तस्यैकत्वे द्वित्वे च बहुवचनमन्यतरस्यां भवति। अहं ब्रवीमि, वयं ब्रूमः । आवां ब्रूवः, वयं ब्रूमः ॥

### पदमञ्जरी

दात्म्यं सम्बन्ध इति जातिरूपेण व्यक्तीनामभिधाने एकवचनं सिद्धम् । व्यक्त्यात्मना तु जातेरभिधाने बहुवचनमिति नार्थोऽनेन ॥

*अस्मदो द्वयोश्च* ॥ 'अस्मदः' इत्यभिधेयसम्बन्धेन षष्ठीत्याह—*अस्मदो योऽर्थ इति* । पञ्चम्यां तु तत्र वर्त्तमानस्य तिङन्तस्य न स्यादिति भावः । *एकत्वे द्वित्वे चेति* । ननु चास्मच्छब्दः प्रत्यगात्मनि वर्त्तते, स चैकस्तस्य कथं द्वित्वयोगः, एकत्वमपि तस्यायुक्तं विशेषणम्, अव्यभिचारात् ? उच्यते; यदाऽन्यत्रात्मत्वमध्यारोप्यते—अयं मे द्वितीय आत्मेति, यदा वा 'त्यदादीनि सर्वैर्नित्यम्' इति एकशेषः क्रियते, तदा सम्भवत्यनेकार्थत्वम् । अथ यत्रैवास्मच्छब्दो बहुवचनान्तः प्रयुज्यते, तत्र कथं द्वित्वैकत्वविशेषावसायः, प्रकरणादाराच्छब्दस्येव दूरान्तिकयोः । *अहमिति* । 'ङेप्रथमयोरम्', 'त्वाहौ सौ' । *वयमिति* । 'मपर्यन्तस्य', 'यूयवयौ जसि', 'शेषे लोपः' । *आवामिति* । 'युवावौ द्विवचने', 'प्रथमायाश्च द्विवचने' इत्यात्वम् ।

### न्यासः

स्मिञ्जात्यर्थे बहुवद्भावोऽनेन विधीयते । इह तु द्वौ जात्यर्थौ विवक्षितौ । वक्तव्यशब्दस्य व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—अन्यतरस्यामिति व्यवस्थितविभाषेयम् । तेन संख्याप्रयोगे न भविष्यति । अथ वा—एको व्रीहिः सम्पन्न इत्यत्रैकशब्दः प्रयुज्यमानो जात्यर्थस्यैकत्वमुद्भावयति, तच्च बहुत्वेन विरुध्यते । तस्मादेकत्वबहुत्वयोर्विरोधाद्बहुवद्भावो नेह भविष्यति ।

अस्मदो द्वयोश्च ॥ अत्राप्यर्थस्य बहुत्वातिदेशः । अस्मदो योऽर्थः स बहुवद्भवतीति । तेन तिङन्तस्यापि तत्र वर्तमानस्य बहुवचनान्तत्वं भवति । वयं ब्रूम इति । एकत्वे द्वित्वे चेत्यादि । युक्तं यदेकत्वे भवति, द्वित्वे तु कथम् ? न हि द्वित्वमस्मदर्थस्य सम्भवति; अस्मच्छब्दस्यात्मविषयत्वात्, आत्मनश्चैकत्वात्, नैष दोषः; आत्मत्वं परत्र यदोपचर्यते 'अयं मे द्वितीय आत्मा' इति तदा अस्मच्छब्दस्य तत्रापि वृत्तेर्द्व्यर्थविषयत्वं सम्भवति । अथ वा—त्यदादीनां मिथो यद् यत् परं तच्छिष्यत इत्यस्मच्छब्द एव शिष्यमाणो युष्मदर्थमप्याहेति द्व्यर्थतोपपद्यत इति युज्यते द्व्यर्थता। अथ यद्यस्मच्छब्दो बहुवचनान्तः प्रयुज्यते तदैकार्थविषयोऽयम्, न द्व्यर्थविषय इति; अथ द्व्यर्थविषयोऽयं नैकार्थविषय इति कुतस्तस्यैकार्थद्व्यर्थविषये वृत्तिरवसीयते ? प्रकरणात् । यथा—आराच्छब्दस्य दूरान्तिकार्थयोर्वृत्तिरिति । अहमिति । 'ङे प्रथमयोरम्'

* सविशेषणस्य प्रतिषेधो वक्तव्यः *। अहं देवदत्तो ब्रवीमि। अहं गार्ग्यो ब्रवीमि। अहं पटुर्ब्रवीमि।

* युष्मदि गुरावेकेषाम् *। त्वं मे गुरुः, यूयं मे गुरवः॥

## फल्गुनीप्रोष्ठपदानां च नक्षत्रे ॥ ६० ॥

चकारः 'द्वयोः' इत्यनुकर्षणार्थः। फल्गुन्योर्द्वयोः प्रोष्ठपदयोश्च

### पदमञ्जरी

*सविशेषणस्येति*। 'त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः' इत्यत्रोन्नतत्वमेव विधीयते। न च विधेयोऽर्थो विशेषणमिति अतिदेशो भवत्येव।

*युष्मदीति*। भाष्यवार्त्तिकयोरपठितमपि शिष्टप्रयोगदर्शनात्पठितम्॥

*फल्गुनीप्रोष्ठदानां च नक्षत्रे*॥ *चकार इत्यादि*। केचिदाहुः—ज्योतिषामावस्थिकी नक्षत्रता चन्द्रयोगे सति भवति, अन्यदा तु ज्योतिष्ट्वमेव। चन्द्रयोगश्च द्वयोः समुदितयोरिति द्वयोरेव बहुवचने सिद्धे चकारेण द्वयोरित्यनुकर्षन्नाचार्यो ज्ञापयति—नक्षत्रग्रहणं ज्योतिष उपलक्षणमिति। उपलक्षितज्योतिष्ट्वमेकैकस्याप्यस्तीति एकनिवृत्त्यर्थं द्वयोरित्यनुकर्षणीयमिति।

### न्यासः

इत्यम्भावः, 'त्वाहौ सौ' इत्यहादेशः। वयमिति। जसि 'मपर्यन्तस्य' 'यूयवयौ जसि' इति वयादेशः, 'शेषे लोपः'। आवामिति। औप्रत्यये परतोः 'युवावौ द्विवचने' इत्यावादेशः। 'प्रथमायाश्च' इत्यादिनात्वम्। वक्तव्य इति व्याख्येय इत्यर्थः। व्याख्यानं तु—अन्यतरस्यांग्रहणं यदनुवर्त्तते तस्य व्यवस्थितविभाषात्वमाश्रित्य कर्त्तव्यम्। युष्मदि गुरावेकेषामिति। एतदपि चकारस्यानुक्तसमुच्चयार्थत्वात् सूत्रेणैव संगृहीतम्।

फल्गुनीप्रोष्ठपदानाञ्च नक्षत्रे॥ चकारो द्वयोरनुकर्षणार्थ इति। ननु च फल्गुन्यौ नक्षत्रे द्वे एव, तथा प्रोष्ठपदे अपि द्वे; अत्रानयोर्द्वित्वाद् द्वित्व एव बहुवचनं भविष्यति, तत् किं चकारेण द्वयोरित्यनुकर्षणार्थेन? एवं तर्ह्येतज्ज्ञापयति—नक्षत्रग्रहणं ज्योतिष उपलक्षणार्थमिति। तेनैतदपि सिद्ध भवति—उदिताः पूर्वाः फल्गुन्यः, उदिते पूर्वे फल्गुन्याविति। यदि नक्षत्रग्रहणं ज्योतिष उपलक्षणार्थमिति न ज्ञाप्यते, तदिह तु न स्यात्, यतो ज्योतिषामावस्थिकी नक्षत्रता चन्द्रमसा योगे सति भवति, नान्यदा; अन्यदा तु ज्योतिष्ट्वमेव। न च नक्षत्राभिधायिनः 'उदिताः पूर्वाः फल्गुन्यः' इत्यत्र फल्गुनीशब्दस्य प्रयोगः, किं तर्हि? ज्योतिर्मात्राभिधायिन इति। अत्र ज्योतिष्ट्वमेकस्याप्यस्तीति तन्निवृत्त्यर्थं द्वयोरित्यनुकर्षणार्थं चकारकरणं युक्तम्। यदि पुनर् ज्योतिष उपलक्षणार्थं नक्षत्रग्रहणं न स्यात्, तदा क्व स्यात्? तदेहैव स्यात्—अद्य पूर्वाः फल्गुन्यः, अद्य पूर्वे फल्गुन्याविति। अस्ति ह्यत्र फल्गुन्योर्नक्षत्रता, चन्द्रमसा युक्तत्वात्।

द्वयोर्नक्षत्रयोर्बहुवचनमन्यतरस्यां भवति । कदा पूर्वे फल्गुन्यौ, कदा पूर्वाः फल्गुन्यः । कदा पूर्वे प्रोष्ठपदे, कदा पूर्वाः प्रोष्ठपदाः ।

नक्षत्र इति किम् ? फल्गुन्यौ माणविके ॥

## छन्दसि पुनर्वस्वोरेकवचनम् ॥ ६१ ॥

'अन्यतरस्याम्' इत्यनुवर्त्तते । द्वयोर्द्विवचने प्राप्ते पुनर्वस्वोश्छ-

### पदमञ्जरी

तत्रोच्यते—सत्यप्येकैकस्य ज्योतिष्ट्वे न तत्र फल्गुनीशब्दो वर्त्तते, एवं प्रोष्ठपदादिशब्द उद्भूतावयवभेदः समुदाय एव ताभ्यामुच्यते । अत एव 'छन्दसि पुनर्वस्वोरेकवचनम्' 'विशाखयोश्च' इति सूत्रारम्भः । नक्षत्रशब्दश्च *निघण्टुषु* तारकापर्याय एव पठितः । वेदेऽपि 'नक्षत्रेभिः पितरो द्यामपिंशन्' 'त्वं नक्षत्राणां मेध्यसि चित्रम्' 'नक्षत्रमुदगात्पुरस्तात्' इत्यादौ ज्योतिर्मात्रवचन एव नक्षत्रशब्दः । 'नक्षत्रेण युक्तः कालः' इत्यत्र *वृत्तिकारो* वक्ष्यति—'कथं पुनर्नक्षत्रेण पुष्यादिना कालो युज्यते' इति, तदप्यनुपपन्नम्; आवस्थिके नक्षत्ररूपे पुष्यादिभिर्योगस्य कादाचित्कत्वात् । 'तिष्यपुनर्वस्वोः' इत्यत्र च उदितौ तिष्यपुनर्वसू दृश्येते । इत्थं चन्द्रयोगेऽप्युदाहरिष्यते । प्रत्युदाहरणे च ज्योतिःस्वभावमेवार्थं दर्शयति—तिष्यपुनर्वसवो माणवका इति, तस्मान्नायं *वृत्तिकारस्य* पक्षः—आवस्थिकी नक्षत्रतेति । ज्योतिर्मात्रवचन एवायम् । चकारेण द्वयोरित्यस्यानुकर्षणमपि— उद्भूतावयवभेदः समुदायोऽभिधीयते, न त्वेकैकं ज्योतिरिति प्रदर्शनार्थम् । प्रोष्ठपदानामिति सप्तम्यर्थे षष्ठी, नक्षत्रे इति वा षष्ठ्यर्थे सप्तमीत्याह—*फल्गुन्योर्द्वयोरित्यादि* । *नक्षत्रयोरिति* प्रत्येकमभिसम्बध्यते । सूत्रे तु व्यत्ययेनैकवचनम् । अत्राप्यर्थस्य बहुत्वातिदेश इति विशेषणस्यापि भवति । *पूर्वे फल्गुन्याविति* । फल्गुनीभ्यां फल्गुनीभिर्वा युक्तः काल इति अण्, 'लुबविशेषे', 'लुपि युक्तवद्व्यक्तिवचने' ।

*फल्गुन्यौ माणविके इति* । फल्गुन्योर्जाते 'फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ' इति टप्रत्ययः, 'टिड्ढाणञ्' इति ङीप् ॥

*छन्दसि पुनर्वस्वोरेकवचनम्* ॥ *द्वयोर्द्विवचने प्राप्त इति* । पूर्वसूत्रे चानुकृष्टस्य

### न्यासः

तथा हि—'नक्षत्रेण युक्तः कालः' इत्यण् भवति । श्रवणं तस्य न भवति; 'लुबविशेषे' इति लुप्तत्वात् ।

फल्गुन्यौ माणविके इति । फल्गुन्योर्जाते इति । 'फल्गुन्याषाढाभ्यां टानौ' इत्युपसंख्यानाट्टप्रत्ययः । 'टिड्ढाणञ्' इति ङीप् ।

न्दसि विषये एकवचनमन्यतरस्यां भवति। पुनर्वसुर्नक्षत्रमदितिर्देवता। पुनर्वसू नक्षत्रमदितिर्देवता। नक्षत्र इत्येव–पुनर्वसू माणवकौ।

छन्दसीति किम्? पुनर्वसू इति॥

**विशाखयोश्च॥ ६२॥**

'छन्दसि' इति वर्तते। द्विवचने प्राप्ते छन्दसि विषये विशाखयोरेकवचनमन्यतस्यां भवति। विशाखा नक्षत्रमिन्द्राग्नी देवता। विशाखे नक्षत्रमिन्द्राग्नी देवता।

**तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्॥ ६३॥**

'छन्दसि' इति निवृत्तम्। तिष्य एकः पुनर्वसू द्वौ तेषां द्वन्द्वो बह्वर्थः। तत्र बहुवचने प्राप्ते द्विवचनं विधीयते। तिष्यपुनर्वस्वोर्नक्षत्रविषये द्वन्द्वे बहुवचनप्रसङ्गे नित्यं द्विवचनं भवति। उदितौ तिष्यपुनर्वसू दृश्यते।

**पदमञ्जरी**

द्वयोरित्यस्येहाननुवृत्तावपि पुनर्वसुशब्देनोद्भूतावयवभेदस्य ज्योतिर्द्वयस्य समुदायस्याभिधानाद् द्वयोरेवायं विधिरिति दर्शयति॥

*विशाखयोश्च*॥ किमर्थो योगविभागः? इह चकारेण छन्दसीत्यनुवर्तयिष्यामीति तेनोत्तरत्र 'छन्दसि' इति नानुवर्त्तते।

*तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्*॥ *तिष्यपुनर्वस्वोः* इत्यनेनैव सूत्रेण द्विवचनापेक्षया सप्तमीद्विवचनम्। नक्षत्रद्वन्द्वे इति सत्सप्तमी, नक्षत्रद्वन्द्वे सति तिष्यपुनर्वस्वोरर्थयोर्द्वयोरिवोक्तिर्भवतीति द्वन्द्वापेक्षया षष्ठीद्विवचनं वा। *तेषां द्वन्द्व इति*। अत्र तच्छब्दाद् द्विवचनं न भवति, वाक्यस्य प्रस्तुतत्वादद्वन्द्वार्थवृत्तित्वाद्। अत्र पारिभाषिकयोर्द्विवचनबहुवचनयोर्ग्रहणे बहुवचनस्य द्विवचनमादेशः स्यात्। तत्र जसादेशे प्रथमाद्विवचने 'जसि च' इति गुणः स्यात्, विशेषणानां च न स्यादिति मत्वाह—*बहुवचनस्य प्रसङ्ग इति*। बहूनामर्थानामुक्तिप्रसङ्ग इत्यर्थः। *द्विवचनं भवति*। द्वयोरिवोक्तिर्भवतीत्यर्थः।

**न्यासः**

छन्दसि पुनर्वस्वोरेकवचनम्॥ विशाखयोश्च॥ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम्॥ तिष्यपुनर्वसवो माणवका इति। तिष्यपुनर्वसुशब्दाभ्यां 'नक्षत्रेण युक्तः कालः' इत्यण् भवति। तस्य 'लुबविशेषे' इति लुप्। ततस्तिष्ये जातो माणवकः पुनर्वस्वोर्जातौ माणवकाविति 'सन्धिवेलादि' इत्यादिनाऽण्, तस्य

तिष्यपुनर्वस्वोरिति किम्? विशाखानुराधाः।

नक्षत्रेति किम्? तिष्यश्च माणवकः पुनर्वसू माणवकौ = तिष्यपुनर्वसवो माणवकाः। ननु च प्रकृतमेव नक्षत्रग्रहणं किमर्थं पुनरुच्यते? पर्यायाणामपि यथा स्यात्—तिष्यपुनर्वसू, सिद्धचपुनर्वसू।

द्वन्द्व इति किम्? यस्तिष्यस्तौ पुनर्वसू येषां त इमे तिष्यपुनर्वसवः, उन्मुग्धाः। तिष्यादय एव विपर्ययेण दृश्यमाना बहुव्रीहिणोच्यन्ते। तेन नक्षत्रसमास एवायम्।

पदमञ्जरी

*तिष्यपुनर्वसवो माणवका इति*। तिष्यपुनर्वसुशब्दाभ्यां नक्षत्राणो लुपि जातार्थे सन्धिवेलादिसूत्रेणाण्, तस्य 'श्रविष्ठाफल्गुन्यनुराधा' इत्यादिना लुक्। नात्र द्वन्द्वो नक्षत्रे वर्त्तते, किं तर्हि? माणवकेषु। तत्रापि न गौणः; योगपरम्परया वृत्तेः। *पर्यायाणामपीति*। पुनर्नक्षत्रग्रहणसामर्थ्यादर्थस्यैवायमनपेक्षितोपात्तशब्दस्यातिदेशो भवति, तेन पर्यायाणामपि ग्रहणं सिद्धयति।

*द्वन्द्व इति किमिति*। तिष्यश्च पुनर्वसू चेति वाक्ये समासेऽप्युत्तरपदार्थप्रधाने बहुत्वं न सम्भवति, तादृशः समासश्च न सुलभः, बहुव्रीहिश्च न सम्भवति व्यधिकरणत्वात्, 'संख्यापूर्वो द्विगुः' अप्यपूर्वोऽव्ययपूर्वः, अव्ययीभावश्चासम्भाव्य एवेति द्वन्द्व एव भविष्यतीति मन्यते। *यस्तिष्य इत्यादि*। अवयवेन विग्रहे उद्भूतावयवभेदः समुदायः समासार्थः। *उन्मुग्धाः* पुरुषास्तदाह—*तिष्यादय एवेति*। क्वचित्तु *इमे तिष्यपुनर्वसवो मुग्धा* इति पठ्यते, तत्रापि वैकृत्यवचनान्मुहेः कर्त्तरि क्तः, अविविक्ता इत्यर्थः। ऋतवो मुह्यन्तीति यथा। नक्षत्रसमास

न्यासः

'श्रविष्ठाफल्गुन्यनुराधा' इत्यादिना लुप्। पर्यायाणामपि यथा स्यादिति। नक्षत्रग्रहणे सत्यर्थग्रहणादेतद् भवति। शब्दग्रहणे च 'स्वं रूपम्' इत्येषा परिभाषा भवतीत्युक्तमेतत्। तदभावे पर्यायाणामपि भवति। सिद्धयपुनर्वसू इति सिद्धयशब्दस्तिष्यपर्यायः। यस्तिष्यस्तौ पुनर्वसू येषामित्यवयवेन विग्रहं दर्शयति। समुदायस्तु समासार्थो वेदितव्यः। अथ तिष्यपुनर्वसव इति? बहुव्रीहिणा विपर्यस्तमतयः पुरुषा एवैवमुच्यन्ते। ततश्च नक्षत्रसमास एवायं न भवति। तत् किमेतन्निवृत्त्यर्थेन द्वन्द्वग्रहणेनेत्येवं यो देशयेत् तं प्रत्याह—तिष्यादय एवेत्यादि। स्वदर्शनापराधादन्यथा तिष्यादीन् दृष्ट्वा प्रतिपत्तृभिस्त एव तिष्यादयो विपर्ययेण दृश्यमाना बहुव्रीहिणैवमुच्यन्ते, न तु पुरुषाः; तस्मान्नक्षत्रसमास एवायम्। तिष्यपुनर्वस्विदमिति। केन पुनरत्रैकवद्भावः? 'जातिरप्राणिनाम्' इति चेत्, न; संज्ञाशब्दत्वात्, देवदत्तादिशब्दवत्। नायं जाति-

बहुवचनस्येति किम् ? एकवचनस्य मा भूत्—तिष्यपुनर्वसु इदमिति ।

'सर्वो द्वन्द्वो विभाषा एकवद्भवति' इत्यस्यैतदेव ज्ञापकम् । नित्यग्रहणं विकल्पनिवृत्त्यर्थम् ॥

**सरूपाणामेकशेष एकविभक्तौ ॥ ६४ ॥**

समानं रूपमेषामिति सरूपाः । सरूपाणां शब्दानां एकविभक्तौ

**पदमञ्जरी**

*एवायमिति* । समुदायसमुदायिनोरभेदादिति भावः । *सर्वो द्वन्द्व इति* । ननु च एकवद्भावप्रकरणे प्राण्यङ्गादीनां समाहार एव द्वन्द्वः, दधि-पयआदीनामितरेतरयोग एवेति नियम आश्रितः; ततश्च तस्मिन् प्रकरणेऽनुपात्तानाम् 'चार्थे द्वन्द्वः' इत्येव समाहारेतरेतरयोगयोर्द्वन्द्वसिद्धिः, किं ज्ञापकोपन्यासेन ? सत्यम्; विपरीतोऽपि नियमः सूत्रे सम्भाव्येत—प्राण्यङ्गादीनामेव समाहार इति । तस्माद्बहुवचनग्रहणेन प्राण्यङ्गादीनां नियम्यत्वं ज्ञाप्यते । वृक्षादिविभाषाप्रयोजनं तत्रैव वक्ष्यामः ॥

*सरूपाणामेकशेष एकविभक्तौ* ॥ *समानं रूपं येषामिति सरूपा इति* । 'ज्योतिर्जनपद' इत्यादिना समानस्य सभावः । 'सह रूपेण वर्तन्त इति सरूपाः' इति तु न भवति; व्यभिचाराभावात् । रूपशब्दश्चेह श्रोत्रग्राह्ये शब्दसम्बन्धिनि स्वरूपे वर्त्तते, न चक्षुर्ग्राह्ये शुक्लादौ; शब्दानुशासनप्रस्तावात्तदाह—*सरूपाणां शब्दानामिति* । निर्धारणे चैषा षष्ठी, समुदायापेक्षया वा ।

**न्यासः**

शब्दः, अनेकाधारा हि जातिर्भवति, न च तिष्यादिस्तथा । किञ्च वक्ष्यति—'जातिप्रधानपरत्वे च जातिद्रव्याणामयमेकवद्भावः, न नियतद्रव्यविवक्षायाम्' इति; नियतद्रव्यविवक्षा चात्र, तस्मान्न 'जातिरप्राणिनाम्' इत्यनेनैकवद्भाव उपपद्यते । न चान्यदेकवद्भावलक्षणमस्ति । तत्र तिष्यपुनर्वस्वोर्नक्षत्रे द्वन्द्वसमासे बहुत्वाद् बहुवचनेन भवितव्यम् । एवञ्च बहुवचनग्रहणमनर्थकमित्यत आह—सर्वो द्वन्द्वो विभाषेत्यादि । यदयमेकवचननिवृत्त्यर्थं बहुवचनग्रहणं करोति, ततोऽवसीयते—अस्तीयम्परिभाषा 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इति । तेनेह बहुवचनग्रहणमेकवचननिवृत्त्यर्थं कृतमित्यभिप्रायः ।

**सरूपाणामेकशेष एकविभक्तौ ॥** सरूपाणामिति बहुव्रीहौ कृते 'ज्योतिर्जनपद' इत्यादिना समानस्य सभावः । रूपशब्दोऽत्र स्वभावे वर्त्तते । सरूपाणां शब्दानामिति निर्धारणे षष्ठी । तेन स्वरूपाणां मध्ये समानजातीयो यः सरूपः, स एक एव शिष्यते,

पदमञ्जरी

अत्र पञ्च पक्षाः सम्भवन्ति। समानपर्याय एकशब्दः 'तेनैकदिक्' इतिवत्। समानत्वं च भेदाधिष्ठानमिति पृथक् सर्वेभ्यः समानायां विभक्तौ परत एकः शिष्यत इति *प्रथमः*। 'द्वन्द्वे' इति वर्तते, तत्र विरूपेषु सावकाशमपि द्वन्द्वमेकशेषो न बाधते, निमित्तत्वात्; सरूपाणां द्वन्द्वे कृते समासादेकस्यां विभक्तौ परत इति *द्वितीयः*। अत्र पक्षे सङ्ख्यावाच्येकशब्दः। 'ह्रस्वो नपुंसके' इत्यतः 'प्रातिपदिकस्य' इति वर्त्तते, एकविभक्ताविति सारूप्योपलक्षणम्। एकविभक्तौ यानि सरूपाणि दृष्टानि तेषां प्रातिपदिकानामेवानैमित्तिक एकशेष इति *तृतीयः*। विभक्तिशब्दः कारकशक्तिवचनः, विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा; एकस्मिन्कारके विवक्षिते यानि सरूपाणि तेषामेकशेषः, कारकं च विवक्षितं स्वनिमित्तां विभक्तिं प्रसूत इति; पृथग् विभक्त्यन्तानामेकशेष इति *चतुर्थः*। सरूपसमुदायादेकस्यां विभक्तौ परत इति *पञ्चमः*।

तत्राद्ये पक्षे—वृक्षस् वृक्षस् वृक्षस् इति स्थिते पूर्वयोर्निवृत्तौ स् स् वृक्षस् इति स्थिते मध्यसम्बन्धिनः सोर्हल्ङ्यादिलोपे तदितरयोः श्रवणप्रसङ्गः। एवमाद्यन्तयोरपि निवृत्तौ द्रष्टव्यम्। परयोर्द्वयोर्निवृत्तावपि शिष्यमाणसम्बन्धिनो लोपासिद्धिरेव। गोदौ वरणा इत्यादौ च पृथग् द्विवचनयोः परत एकशेषे तयोः श्रवणप्रसङ्गः। यत्र हि प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्र केवलस्यापि प्रत्ययस्य प्रयोगो भवत्येव, यथा—इयानिति।

द्वितीये तु—अश्व अश्व औ इति स्थिते विभक्त्यपेक्षाच्छेषात्पूर्वमन्तरङ्गत्वात्समासान्तोदात्तत्वे कृते यदि पूर्वशेषः सर्वानुदात्तं पदं स्यात् परशेषे तु अश्वशब्दान्तोदात्तः स्यात्, इह च ऋक्च ऋक्च ऋचौ अन्तरङ्गत्वात् 'ऋक्पूरब्धूः' इति समासान्ते कृते विभक्तेरकारेण व्यवधानान्नैकशेषः स्यात्। समासान्तो हि समासग्रहणेन गृह्यमाणस्तमेव न व्यवदध्यात्, सरूपं तु व्यवदधात्येव। एकग्रहणं वानर्थकम्, न हि द्वन्द्वाद्युगपदनेका विभक्तिः सम्भवति। यदि पुनरेकविभक्तावित्येतदकृत्वा द्वन्द्वक्रियानन्तरमेवैकशष इत्युच्येत, एवमपि पादौ पादा इत्यादौ द्विवचनबहुवचने न स्याताम्; प्राण्यङ्गादीनां समाहार इव द्वन्द्व इति नियमाद्।

तृतीये तु पक्षे जननीवचनो यो मातृशब्दः, यश्च 'माङ् माने' इत्यस्मात्तृचि धान्यमातृवचनः, तयोरपि माता मातृभ्याम् इति क्वचिद्विभक्तौ सरूपत्वात्सर्वत्रैकशेषप्रसङ्गः। तथा हरितशब्दाद्वर्णादनुदात्तादिति ङीब्नकारयोर्यो हरिणीशब्दः सम्पद्यते, यश्च हरिणशब्दाज्जातिलक्षणे ङीषि, तयोर्न स्यात्; ङ्यन्तयोः सारूप्येऽपि प्रातिपदिकावस्थायामसारूप्यात्।

परत एकशेषो भवति। एकः शिष्यते, इतरे निवर्तन्ते। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षाः।

पदमञ्जरी

चतुर्थे तु निवर्त्तमानः शब्दो यद्यपि सह विभक्त्या निवर्त्तते, शिष्यमाणस्य त्वेकवचनश्रवणप्रसङ्गः।

अतः पञ्चमं पक्षमाश्रित्याह—*सरूपाणां शब्दानामेकविभक्तौ परत इति*। सरूपसमुदायादेकस्यां विभक्तौ परत इत्यर्थः। ननु 'ङ्याप्प्रातिपदिकात्' इत्येकवचनान्तानां द्वन्द्वः, तत्र चैकत्वं विवक्षितम्, तत्कथं प्रातिपदिकसमुदायाद्विभक्तिः? अस्तु प्रत्येकं प्रातिपदिकत्वम्, समुदायोऽपि त्वर्थवत्त्वात्प्रातिपदिकम्, कः पुनः समुदायस्यार्थः? परस्परसम्बन्धः, एकैकेन विशकलितोऽर्थ उच्यते। समुदायेन तु सम्बन्धः तुल्यजातीयस्य चार्थवत्समुदायस्य समासग्रहणेन निवृत्तिः। कश्च तुल्यजातीयः? यत्र पूर्वो भागः पदम्। न चात्रैवमिति समुदायाद्विभक्तिरविरुद्धा। सा त्वनुद्भूतावयवभेदत्वाद् द्विवचनं बहुवचनं वा, न त्वेकवचनम्। नावौ जनावौ कर्तारावित्यादावच्परत्वादावादिष्वपि कृतेषु विरूपाणामपि समानार्थत्वादेकशेषः। शेषशब्दोऽयं नागराजे अनन्ते अप्रधाने उपयुक्तादन्यत्र च न वर्त्तते, किं तर्हि? निवृत्तिमदवस्थान इत्याह—*एकः शिष्यते इतरे निवर्त्तन्ते इति*।

न्यासः

न विरूपः। समानजातीयस्यैव हि निर्धारणं भवति, न विजातीयस्य। अथ वा—समुदायलक्षणैषा षष्ठी, सरूपसमुदायान्तःपाती च सरूप एव भवति, न विरूपः। तेन सरूप एव शिष्यते। एकविभक्ताविति। एकशब्दः समानार्थः, एकधनाविति यथा। एका चासौ विभक्तिश्चेति 'पूर्वकालैक' इत्यादिना समासः। एवमेकशेष इत्यत्रापि। अत्र त्वेकशब्दः संख्यावचनः, शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह, नावस्थानमात्रम्। अत एवाह—एकः शिष्यते, अपरे निवर्त्तन्त इति। वृक्षश्च वृक्षश्च वृक्षावित्यादि। अविभक्तिकानामयमेकशेषः; अनैमित्तिकत्वाद्विभक्तेः। न ह्ययं परां विभक्तिमाश्रित्य विधीयते। एकविभक्तावितीह सारूप्योपलक्षणमेतत्; न निमित्तनिर्देशः। एकस्यां विभक्तौ परतो यानि रूपाणि दृष्टानि, तेषामनुत्पन्नायामेव विभक्तौ प्रातिपदिकानामेकशेषो भवति। ततः कृत एकशेषे विभक्तिरुत्पद्यते। अथ वा—सविभक्तिकानामेवैकशेषः, कथम्? विभक्तिशब्देन हि कारकमभिधीयते, विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तदेतदुक्तं भवति—एकस्मिन् समानेऽभिन्ने कारके यानि सरूपाणि तेषामेवैककारकाणामेकशेषो भवतीति। यद्येवम्, 'परतः' इति वृत्तिग्रन्थो नोपपद्यते, कारकं ह्यर्थसमवायिनी शक्तिः, न च तया शब्दानां पौर्वापर्यं सम्भवति, कथञ्च विभक्तिशब्देन कारकेऽभिधीयमाने सविभक्तिकानामेकशेषो लभ्यते? उच्यते:

पदमञ्जरी

नन्वस्मिन् पक्षे एकग्रहणमनर्थकम्, न हि समुदायाद्युगपदनेका विभक्तिः सम्भवति ? उच्यते, असत्येकग्रहणे पृथक् सर्वेभ्यो विभक्तौ परतः इति प्रथमोऽपि पक्षः सम्भाव्येत। अतो यत्र पक्ष एकैव विभक्तिः सरूपाणां सम्भवति स एवैकग्रहणादाश्रीयते। अथ वा चतुर्थे पक्षे ग्रन्थः—कथं तर्हि विभक्तौ परत इति, न हि कारकशक्त्या शब्दानां पौर्वापर्यं भवति, उच्यते; इष्टवाची परशब्दः एकस्यां विभक्ताविष्टायां एकस्मिन्कारके विवक्षित इति यावत्। ननु चोक्तम्—शिष्यमाणस्यैकवचनश्रवणप्रसङ्ग इति, न वेदानीं निवर्त्तमानसङ्ख्यावेशादुपजायमाने द्वित्वबहुत्वे द्विवचनबहुवचने उपजनयितुमुत्सहेते, प्रत्ययान्तत्वेनाप्रातिपदिकत्वात्, नैष दोषः; सहविवक्षायामेकशेषः। का पुनः सहविवक्षा ? उक्तमत्र—

अनुद्भूतेव भेदानामेका प्रख्योपजायते।
यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः॥ इति।

अयमर्थः—यदा बहवोऽर्था एकस्यां बुद्धौ उपारूढाः, यथा—पुरोऽवस्थितस्य हस्तस्य पञ्चाङ्गुलयः, ते चैकस्मिन्गुणे क्रियायां वा तथैव विनियुज्यन्ते—शोभना इति वा, दृश्यन्त इति वा, तदा सहविवक्षा। तथा हि—आत्मनो या बुद्धिस्तां परत्र संक्रमयितुं प्रयोक्त्रा शब्दः प्रयुज्यत इति। यदि चावयवाः पृथक् पृथगवधारिताः स्युः, यथा वातायनगतेन क्रमेण गच्छन्तः ततो भिन्नैरेव शब्दैः प्रत्येकं पर्यवसायिभिरेकवचनान्तैरभिधीयेरन्। समुदायाकारा त्वनुस्यूतावयवभेदैका बुद्धिः, तां परत्र सङ्क्रमयितुमिच्छता तदनुरूपं शब्दः प्रयोक्तव्यः। न च तादृशस्य समुदायस्यासाधारणः कश्चिच्छब्दोऽस्तीत्यवयवशब्दैरेवासौ प्रतिपाद्यः। उपपद्यते चावयवशब्दैरेवाभिधानम्; समुदायसमुदायिनोरभेदात्। स चैकैक एवावयवशब्द उद्भूतावयवभेदसमुदायप्रतिपादनाद् द्विवचनान्तो बहुवचनान्तश्च प्रवर्तत इति नैकवचनश्रवणप्रसङ्गः। यद्येवम्, एकेनैवावयवशब्देन तादृशस्य समुदायस्याभिधातुं शक्यत्वान्न यावदवयवशब्दप्रयोगप्रसङ्गः।

अथ मतम्—अन्योऽन्यसन्निधावेव समुदायरूपार्थाभिधानशक्तिः प्रादुर्भवति, कथं तर्हि एकशेषारम्भे एकस्य सा भवति, न हि सतोऽसती शक्तिरेकशेषवचनेन कर्तुं शक्यते ? उच्यते; विरूपेष्वन्योऽन्यसन्निधाने समुदायार्थाभिधानशक्तिः प्रादुर्भवति। पटुगुप्तावित्यत्रापि ह्युद्भूतावयवभेदं समुदायं प्रतिपादयितुमवयवशब्द एव प्रत्येकं द्विवचनान्तः प्रवर्त्तते, अन्यथा द्विवचनबहुवचनायोगात्स्वार्थमात्रपर्यवसायिभिरवयवशब्दैः क्रमेणैवोच्चरणादर्थोऽपि प्रतीयते। क्रमेण चानेकार्थप्रतीतौ द्विवचनबहुवचने न भवतः। समुच्चयश्च भवति, तद्यथा वाक्ये—पटुश्च गुप्तश्चेति। अतो विरूपेष्वेवं दर्शनात्सरूपेष्वपि द्वन्द्वाशङ्कायां सरूपेष्वेकस्यैवानेकार्थप्रतिपादनशक्तिरस्तीति वचनेन व्युत्पाद्यते।

## पदमञ्जरी

अन्ये तु तृतीयमपि पक्षं ग्रन्थारूढं वर्णयन्ति। सरूपाणां शब्दानामेकविभक्तौ परत एकशेषो भवति; एकविभक्तौ परतः सरूपाणामित्यन्वयः, न त्वेकशेष इति। एकस्मिन्कारके विवक्षिते, एकविभक्तौ वा परतो ये सरूपा दृष्टाः शब्दास्तेषामित्यर्थः। तत्र च शिष्यमाण एव निवर्त्तमानस्याप्यर्थमाचष्टे। अग्निचिदिति प्रत्ययनिवृत्तौ प्रकृतिवदिति द्विवचनबहुवचने यथायोगं भवतः। तत्र यदुक्तम्—हरितहरिणयोर्ङ्यन्तयोर्न स्यादिति, तन्न; प्रातिपदिकग्रहणं नानुवर्त्तते, तेन ङ्यन्तयोरेव सारूप्याद् भविष्यति। यदप्युक्तम्—मातृशब्दयोः प्रसङ्ग इति, अर्थविप्रतिषेधान्न भविष्यति। कृते ह्येकशेषे ताभिरित्यनुप्रयोगे पुमर्थो न गम्यते, तैरित्युक्ते स्त्र्यर्थः। वक्ष्यमाणस्य वा एवकारस्येहानुकर्षणादेकविभक्तौ यानि सरूपाण्येवेत्याश्रयणात्तरिच्छेतृवाचिनश्च 'अप्तृन्तृच्' इति सर्वनामस्थाने दीर्घविधानादसारूप्यादेकशेषाभावः। अत्र पक्षे एकग्रहणं चिन्त्यप्रयोजनम्। तदेवं पञ्चसु पक्षेषु त्रयः स्वीकृताः।

*वृक्षश्च वृक्षश्चेति*। 'अनैमित्तिक एकशेषः' इति पक्षे विभक्तौ सारूप्यं दर्शयितुं विभक्त्यन्तेन विग्रहः। कथं पुनर्विग्रहः, यावता एकशेषवृत्तिर्नित्या? नैतद्वृत्त्या समानार्थवाक्यम्, प्रत्येकमत्र विवक्षा। आतश्च प्रत्येकम्; यतोऽत्र भेदनिबन्धेन समुच्चयश्चशब्देन द्योत्यते, भिन्नार्थमपि किञ्चिन्मात्रसाधर्म्याद्वाक्यं भवत्येव। समानार्थन्तु बाध्यत एव, यथा—वृक्षौ च वृक्षौ च वृक्षाः, वृक्षाश्च वृक्षाश्च वृक्षा इति। ननु यद्येतावदेकार्थाभिनिवेशिनः शब्दाः—आकाशद्रव्यत्वगोत्वादयः, न तेषु द्विवचनबहुवचनेनाप्येकशेषः; ये त्वनेकार्थाभिनिवेशिनः—गौः, शुक्लः, पाचक इत्यादयः, तेष्वनुस्यूतं किञ्चिदर्थगतमेकं गोत्वादिनिमित्तं वक्तव्यम्; अन्यथा सम्बन्धग्रहणासम्भवादत्र गवादिषु तद्गुणता जातिर्निमित्तं न, यथा शुक्लादिष्वपि गुणमात्रनिष्ठेषु। गुणनिष्ठेषु तु स्वगतया जात्या एकीभूतो गुणः। एवं पाचकादिष्वपि गोत्वाश्वत्वे सामान्ये, निःसाम्यानि सामान्यानीत्यत्र भिन्नेष्वभिन्नप्रत्ययहेतुत्वं तावेतावित्यादौ परोक्षत्वप्रत्यक्षत्वादिकम्।

अभावाश्चत्वार इत्यत्र निरूपाख्यत्वमित्यादि सर्वत्र द्रष्टव्यम्। निमित्ततद्वतोश्च तादात्म्यम्, सर्वं हि वस्तु एकं नाना च गवादिरूपेणैकं खण्डमुण्डादि प्रातिपदिकरूपेण नाना। एवं स्थिते यदि तावज्जातिरेव शब्दार्थस्तदा तस्या एकत्वान्नानेकशब्दप्रसङ्गः। अथाप्युभयम्, एवमपि जातिरूपेणैव शब्दो द्रव्यमभिधत्ते न प्रातिस्विकेनाकारेणेति नास्त्यनेकशब्दप्रसङ्गः। केवलद्रव्यपदार्थपक्षेऽपि अस्मिन्विषयेऽनेकार्थाभिधानसामर्थ्यं शब्दस्य द्व्यादिपदवदभ्युपगन्तव्यम्, अन्यथा सत्यप्येकशेषे तन्न स्यादिति सिद्धमेकशब्दत्वम्। द्रव्यगतसङ्ख्याप्रति-

प्रत्यर्थं शब्दनिवेशान्नैकेनानेकस्याभिधानम् । तत्रानेकार्थाभिधानेऽनेकशब्दत्वं प्राप्तम्, तस्मादेकशेषः ।

सरूपाणामिति किम् ? प्लक्षन्यग्रोधाः । रूपग्रहणं किम् ? भिन्नेऽप्यर्थे यथा स्यात्—अक्षाः, पादाः, माषाः । एकग्रहणं किम् ?

पदमञ्जरी

पादनाय द्विवचनबहुवचने भविष्यतः, नार्थ एतेनेत्याशङ्क्याह-–*प्रत्यर्थमित्यादि* । एकैकस्मिन्नर्थे यस्माच्छब्दानां निवेशस्ततोऽनेकेन शब्देनानेकस्याभिधानं सिद्ध्यति । तत्रैवं स्थितेऽनेकार्थाभिधाने कर्त्तव्ये यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, इष्यते चैकशब्दत्वम्, तस्मादेकशेष आरभ्यते ।

अयमभिप्रायः—केवलं जातिपक्षे अक्षाः पादाः माषा इत्यादौ अनेकशब्दत्वं स्याद्, न हि बिभीतकदेवनशकटाक्षेष्वनुस्यूतं किञ्चित्सामान्यमस्ति । अत एव तत्र व्युत्पत्तिर्भेदेनापेक्ष्यते, एवमुभयपक्षेऽपि । केवलद्रव्यपक्षेऽपि वृक्षश्चेति वाक्येऽनेकशब्ददर्शनाद्विरूपेषु द्वन्द्वदर्शनाच्चारम्भणीयमेतदिति ।

*रूपग्रहणं किमिति* । अन्तरङ्गत्वादहेयत्वादुपदेशानपेक्षत्वाच्च रूपकृतमेव समानत्वं ग्रहीष्यते इति प्रश्नः । प्रतिपत्तिलाघवं च समानानामित्युच्यमाने भवति रूढिशब्दत्वेन रूढिरिति तुल्यार्थावगमात् । रूपग्रहणे तु वर्तिपदार्थमवगम्यान्यपदार्थोऽवगन्तव्य इति गौरवं भवति । *भिन्नेऽप्यर्थे इति* । 'स्वं रूपम्' इत्यत्र रूपग्रहणेन ज्ञापितं शास्त्रे रूपवदर्थोऽपि तन्त्रमिति । ततश्चार्थरूपाभ्यां समानत्वं गृह्येतेति भावः ।

*एकग्रहणं किमिति* । शेष इत्येकत्वं विवक्ष्यत इति प्रश्नः । *द्विबह्वोरिति* ।

न्यासः

वृत्तिग्रन्थस्तावदुपपद्यते—परशब्दो ह्ययमिष्टवाची, एकावभक्तौ परतः=एकस्यां विभक्ताविष्टायामित्यर्थः । विषयसप्तमी चेयम्, सती सप्तमी वा । एकस्मिन् कारके विषयभूत इष्टे सति चेत्यर्थः । किञ्चेष्टं कारकं भवति ? यद् विवक्षितम् । अत एव विवक्षितत्वात् कारकं स्वनिमित्तां विभक्तिमुत्पादयतीति सविभक्तिकानामेकशेषो लभ्यते ।

सहभावविवक्षायाञ्चायमेकशेषो भवति । यद्येकेन युगपत् सर्वेषामर्थोऽभिधातुमिष्यत एवं सति भवति; नान्यथा । ननु च जातिः पदार्थः, जातिश्चैकैव; तत्रैकत्वाज्जातेर्बहूनां शब्दानां प्रसङ्ग एव नास्ति, तत्किमेकशेषारम्भेण ? इति चोद्यावसरे 'द्रव्यं पदार्थः' इत्येतद्दर्शनमाश्रित्याह—प्रत्यर्थमित्यादि । प्रत्यर्थम् = एकैकस्मिन्नर्थे यस्माच्छब्दानां निवेशप्रवृत्तिस्ततोऽनेकेन शब्देनानेकार्थस्याभिधानम् । तत्रैतद्दर्शनेऽनेकेषामर्थाभिधाने प्रत्येकेनैव कर्तव्येऽनेकशब्दत्वं प्रसज्यत इति यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, इष्यते चैकशब्दता । तस्मादेकशेष आरभ्यते ।

रूपग्रहणं किमिति ? एवं मन्यते—रूपग्रहणे क्रियमाणे पदद्वयसमनुगम्योऽर्थः

द्विबह्वोः शेषो मा भूत्। शेषग्रहणं किम्? आदेशो मा भूत्।

पदमञ्जरी

द्वित्वबहुत्वविषयस्यानेकस्य शब्दस्येत्यर्थः। ननु द्वयोर्बहूनां चेति बहुवचनप्रसङ्गाद् इह शेषविधानद्वारेण संस्क्रियमाणत्वाच्छिष्यमाणं प्रधानम्, प्रधाने च सङ्ख्या न विवक्ष्यते, यथा—ग्रहं संमार्ष्टीति, विषम उपन्यासः; संमार्गे विधौ द्वितीयानिर्देशात् ग्रहाः प्रधानभूताः, संमार्गस्तु तेषां संस्कारः। संस्कारो नाम तस्य भवति यच्छास्त्रान्तरे प्रयोजनवत्यां क्रियायां साधनत्वेन विनियुक्तम्, संस्कृतस्य वा यस्य विनियोगः, द्रव्यमात्रस्य रूपसंस्कारोऽनर्थकः स्यात्। यदिह संमार्गसंकारो विधीयमानः शास्त्रान्तरे विनियुक्तं ग्रहमपेक्षते तत्र नवसङ्ख्या ग्रहा श्रुता इति तदपेक्षः संमार्गविधिर्नवानामपि भवितुमर्हति। ग्रहमित्येकवचनं तु कर्मत्वमात्रमभिधायकतार्थं भविष्यति। इह तु शेषस्य वाक्यान्तरेऽनवधारणादिदमेवोत्पत्तिवाक्यमिति विवक्षणीया सङ्ख्या, पशुमालभेतेतिवत्, सत्यम्; इदमेवैकग्रहणं ज्ञापकम्—शास्त्रान्तरानवगतेऽपि प्रधाने सङ्ख्या न विवक्ष्यत इति, तेन कर्तुरीप्सिततममित्यत्र ईप्सिततमस्य सङ्ख्याया अविवक्षा सिद्धा भवति।

*शेषग्रहणं किमिति*। साध्वनुशासनप्रक्रमात्सरूपाणामेकः साधुर्भवतीति विज्ञास्यत इति भावः। *आदेशो मा भूदिति*। असति हि शेषग्रहणे 'षष्ठी स्थाने-

न्यासः

प्रतिपत्तव्य इति प्रतिपत्तिगौरवं भवति। समानानामित्युच्यमाने सत्येकपदसमनुगम्योऽर्थः प्रतीयत इति प्रतिपत्तिलाघवं भवति, तस्मात् समानग्रहणमेव कर्तव्यमिति? भिन्नेऽप्यर्थे यथा स्यादिति रूपग्रहणम्। यदि रूपग्रहणं न क्रियेत तदा विशेषानभिधानाद् यत्र सर्वं समानं शब्दोऽर्थश्च तत्रैव स्याद्—वृक्षा इत्यादौ, अक्षा इत्यादौ तु न स्यात्; अर्थभेदात्! तथा ह्यक्षशब्द इन्द्रियाख्ये, शकटाङ्गे, बिभीतकादावर्थे च वर्तते, पादशब्दोऽपि कार्षापण-श्लोकपाद-पाणिपादादावर्थे वर्तते, माषशब्दोऽपि व्रीह्यादौ। द्विबह्वोः शेषो मा भूदिति। ननु च 'शेष' इत्येकत्वसंख्याविवक्षायां द्वयोर्बहूनाञ्च शेषो न भविष्यति, नैतदेवम्; इह विधीयमानत्वाच्छेष एव प्रधानम्, न च प्रधाने संख्या विवक्ष्यते। तथा हि—'कर्त्तुरीप्सिततमं कर्म' इति कर्मसंज्ञा; ईप्सिततमस्य प्राधान्यात्। असत्यां संख्याविवक्षायां द्वयोर्बहूनाञ्च कर्मसंज्ञा भवति। गुणे तु संख्या विवक्ष्यते, यथा—'ङ्याप्प्रातिपदिकात्' इति स्वादयो विधीयमानत्वात् प्रधानम्, ङ्याप्प्रातिपदिकमप्रधानमिति तत्र संख्या विवक्ष्यते। तेनैकैकस्मादेव स्वादय उपपद्यन्ते। लक्षणानुरोधाद् गुणेऽपि क्वचित् संख्या न विवक्ष्यते, यथा इहैव—सरूपाणामिति। तेन द्वयोरपि सरूपयोरेकः शिष्यते।

आदेशो मा भूदिति। असति शेषग्रहणे सरूपाणामिति स्थानषष्ठीयं स्यात्,

एकविभक्ताविति किम् ? पयः पयो जरयति । ब्राह्मणाभ्यां च कृतं ब्राह्मणाभ्यां च देहि ॥

## वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ ६५ ॥

### पदमञ्जरी

योगा' इति वचनात् स्थानषष्ठी स्यात्, ततश्चादेशः स्याद्, अस्तु; शब्दतोऽर्थतश्चान्तरतमो भविष्यति ? नैवं शक्यम्, स्वरे हि दोषः स्याद् द्वयोरश्वशब्दयोः समुदायः स्थानी, तत्र च द्वावुदात्ताविति द्व्युदात्त आदेशः स्यादेतेन द्व्यनुदात्तत्वं व्याख्यातम् ।

*एकविभक्ताविति किमिति* । नानाविभक्तौ वैरूप्यमवश्यंभावीति भावः । *पयः पय इति* । एकविभक्तावित्यस्मिन्नसति सरूपाणां सर्वत्र सह प्रयोगो न स्याद् । अथ क्रियमाणेऽप्यस्मिन्ननैमित्तिकपक्षे कस्मादेवात्र न भवति, एतदपि ह्येकस्यां विभक्तौ परतः सरूपं दृष्टमेव ? नैष दोषः; एकग्रहणमस्मिन्पक्षे अतिरिच्यत इत्युक्तम्, तत्सामर्थ्यादेकस्यामेव विभक्तौ विषयभूतायां भविष्यति । अत्र तु सत्येकशेषे पर्यायेण भिन्ना विभक्तिः स्यात् ।

अथ वा—किं न एतेन पक्षेण क्लेशतो व्याख्येयेन ? स्तां द्वावेव पक्षौ ? इह एकश्चेति सङ्ख्याशब्दानामेकशेषो न भवति, अनभिधानाद् । विंशत्यादीनां तु भवत्येव ॥

*वृद्धो यूना तल्लक्षणश्चेदेव विशेषः* ॥ वृद्धशब्दोऽयं लोके चरमे वयसि प्रसिद्धः,

### न्यासः

ततश्चादेशः स्यात् । एवञ्च 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' इति क्वन्प्रत्ययान्तोऽश्वशब्दो नित्स्वरादाद्युदात्त इति द्वयोरश्वशब्दयोराद्युदात्तयोः स्थान आद्युदात्तद्वयवानेवादेशः स्यात् ; आन्तरतम्यात् ।

पय इत्यादि । एकः पयःशब्दः प्रथमान्तः कर्तृपदम्, द्वितीयो द्वितीयान्तः कर्मपदम्, ततो भिन्नविभक्तिकत्वम् ; नैकविभक्तिपरत्वमित्येकशेषो न भवति ।

ब्राह्मणाभ्यामिति । प्रथमो ब्राह्मणशब्दस्तृतीयान्तः, द्वितीयस्तु चतुर्थ्यन्तः । तेनात्रापि समानविभक्तिकत्वं नास्ति ॥

वृद्धो यूना तल्लक्षणश्चेदेव विशेषः ॥ वृद्धशब्दोऽयमस्ति लौकिकः, यश्चरमे वयसि वर्तते; अस्ति च शास्त्रीयः—'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इति; अस्ति च पूर्वाचार्यसंज्ञा—अपत्यमन्तर्हितं वृद्धमिति । तत्र यदि लौकिको गृह्येत ? युवशब्दस्यापि तत्साहचर्याल्लौकिकस्यैव वयोविशेषवाचिनो ग्रहणं स्यात्, ततश्चाजश्च बर्करश्चेत्येवमादौ प्रसज्येत । वृद्धावस्थो हि पशुविशेषोऽज इत्युच्यते, युवा तु बर्करः । अथ शास्त्रीय उपादीयते ? औपगवश्चौपगविश्चेत्यादावपि स्यादित्येतदालोच्याह—वृद्धशब्द

'शेष' इति वर्त्तते। 'यूना' इति सहयोगे तृतीया। वृद्धो यूना सहवचने शिष्यते, युवा निवर्त्तते। वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य। अपत्यमन्तर्हितं वृद्धमिति। वृद्धयूनोः सहवचने वृद्धः शिष्यते तल्लक्षणश्चेदेव विशेषः। तदिति वृद्धयूनोर्निर्देशः, लक्षणशब्दो निमित्तपर्यायः, चेच्छब्दो यद्यर्थे, एवकारोऽवधारणे, विशेषो वैरूप्यम्। वृद्धयुवनिमित्तकमेव यदि वैरूप्यं भवति ततो वृद्धः शिष्यते, युवा निवर्तते। समानायामाकृतौ वृद्धयुवप्रत्ययौ भिद्येते। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। वात्स्यश्च वात्स्यायनश्च वात्स्यौ।

पदमञ्जरी

युवशब्दो द्वितीये, तयोरिह ग्रहणे तरुणश्च वृद्धश्च युवा च स्थविरश्चेत्यादौ स्यात्। 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' 'जीवति तु वंश्ये युवा'—अनयोः शास्त्रीययोर्ग्रहणे औपगवश्चानन्तर औपगविश्च युवेत्यादावपि स्यात्। अतो युवशब्दस्य तावत्कृत्रिमस्य व्यवहितापत्यवाचिनोऽत्र ग्रहणम्, तत्साहचर्याद्वृद्धशब्दस्यापि व्यवहितापत्यवाचिनः शास्त्रान्तरे प्रसिद्धस्य ग्रहणमित्याह—*वृद्धशब्द इत्यादि*। गोत्रग्रहणे त्वपत्याधिकारादन्यत्र लौकिकस्य ग्रहणमित्यपत्यमात्रस्य ग्रहणं स्यात्। क्वचित्पुनरधिकोऽपि ग्रन्थः पठ्यते—*यूनेति सहयोग एषा तृतीयेति*। स इदानीन्तनैः प्रक्षिप्तः, यूना सह वचन इति सहशब्दं प्रयुञ्जानः सूत्रे सहयोगे तृतीयेति दर्शयति। अत एव ज्ञाप्यते—सहविवक्षायामेकशेष इति। *विशेषो वैरूप्यमिति*। शब्दस्य वृद्धयुवनिमित्तस्य ग्रहणान्नान्य इति भावः। पदार्थं दर्शयित्वा तदयमर्थं इत्याह—*वृद्धयुवनिमित्तकमेवेत्यादि*। *समानायामाकृताविति*। आकृतिः शब्दस्य

न्यासः

इत्यादि। एतेन पूर्वाचार्यप्रणीतायाः संज्ञाया वृद्धस्येदं ग्रहणमिति दर्शयति। कथं पुनरेतल्लभ्यते ? उपदेशात्। अथ वा एवन्मन्यते—युवशब्दो यद्यपि लोके द्वितीये वयसि रूढः, तथापि 'जीवति तु वंश्ये युवा' इति परिभाषाबलादपत्ये यो वर्त्तते स स एव गृह्यते। तेन तत्साहचर्यात् वृद्धशब्दस्यापत्यार्थवृत्तेरेव ग्रहणं युक्तमिति। गोत्रग्रहणं तु न कृतम्, वैचित्र्यार्थम्। यूना सह वचन इति। सहग्रहणेन यूनेति सहयोग एषा तृतीयेति दर्शयति। अत एव सहयोगे तृतीयाविधानादवगम्यते—सहभावविवक्षायामेकशेषो भवतीति। समानायामित्यादिना यत्र वृद्धयुवनिमित्तमेव वैरूप्यं तद्विषयं दर्शयति। आकृतिः = शब्दस्य प्रवृत्तिनिमित्तम्, गार्ग्यत्वादि, तस्यां समानायाम्-अभिन्नायां यत्र वृद्धयुवप्रत्ययावेव केवलं भिद्येते, नान्यत् प्रकृत्यादिकम्,

वृद्ध इति किम् ? गर्गश्च गार्ग्यायणश्च गर्गगार्ग्यायणौ । यूनेति किम् ? गार्ग्यश्च गर्गश्च गार्ग्यगर्गौ । तल्लक्षण इति किम् ? गार्ग्यवात्स्यायनौ । एवकारः किमर्थः ? भागवित्तिश्च भागवित्तिकश्च भागवित्तिकौ । कुत्सा सौवीरत्वं च भार्गवित्तिकस्यापरो विशेषो विद्यते ॥

**पदमञ्जरी**

प्रवृत्तिनिमित्तं गर्गापत्यत्वादि । क्वचित्तु *प्रकृताविति* पाठः, प्रकृतिः मूलप्रकृतिर्गर्गशब्दादिः । *गार्ग्यश्चेत्यादि* । गर्गवत्सशब्दाभ्यां गर्गादित्वाद्यञन्ताभ्यां यूनि 'यञिञोश्च' इति फक् । *गार्ग्यायणाविति* । प्रकरणादिनात्र जीवद्वंश्यतावसायः; शब्दस्य गोत्रद्वयस्यापि साधारणत्वाद् ।

यद्येवम्, गार्ग्यश्च गार्ग्यश्चेति गोत्रशब्दयोरेव पूर्वेणैकशेषोऽस्ति प्रकरणादिनैव युवत्वमन्यतरस्य गंस्यते । यूनो हि द्वावाकारौ—जीवद्वंश्यत्वम्, पौत्रप्रभृत्यपत्यत्वं च; तत्र विशेषाविवक्षायां सामान्यशब्दो न निवर्तते, यथा—वस्तुतो भूतानद्यतनेऽपि 'अभून्नृपो विबुधसखः' इति लुङ् भवति, तस्मान्नार्थ एतेन ? उच्यते; प्रकरणानपेक्षेण शब्देन जीवद्वंश्यत्वं प्रतिपादयितुकामो द्वन्द्वं प्रयुञ्जीत गार्ग्यायणाविति । अतो द्वन्द्वनिवृत्त्यर्थं वचनम् । प्रत्युदाहरणे तु सर्वत्र द्वन्द्वो भवति—गार्ग्यवात्स्यायनाविति । नन्वत्र विशेषान्तरसद्भावेऽपि तल्लक्षणो विशेषो विद्यत इति स्यादेकशेषः, नैष दोषः; एवमर्थवचनं व्यज्यते—योऽसौ विशेषो यस्य सद्भावात्पूर्वेणाप्राप्तिः, स तल्लक्षणश्चेदिति । एवं च यावदुद्देश्यं विधेयसम्बन्धात् सूत्रारम्भहेतुस्तस्य कृत्स्नस्य विशेषस्य तल्लक्षणत्वविधानात् कुतोऽत्र प्रसङ्गः ! इह तु प्राप्नोति—भागवित्तिभागवित्तिकाविति, कृत्स्नस्य विशेषस्य तल्लक्षणत्वात् ? एवकारेण तु व्यावर्त्यते, न ह्यत्र तल्लक्षण एव विशेषस्तदाह—*कुत्सा सौवीरत्वं चापरो विशेष इति* । विशेषहेतुरित्यर्थः ॥

**न्यासः**

तत्र वृद्धयुवप्रत्ययनिमित्तमेव वैरूप्यं भवतीति भावः । गार्ग्यश्चेत्यादि । गर्गवत्सशब्दाभ्यां गर्गादित्वाद् यञ्, गार्ग्यः, वात्स्यः, ताभ्यां यून्यपत्ये 'यञिञोश्च' इति फक् । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ, वात्स्यश्च वात्स्यायनश्च वात्स्यौ । प्रकरणादिनात्र युवार्थो गम्यते । गर्गश्चेति । गर्गशब्दोऽयं मूलप्रकृतिः; न वृद्धे वर्त्तते, नापि यूनि । गार्ग्यवात्स्यायनाविति । अत्र न केवलं वृद्धयुवप्रत्ययनिमित्तको विशेषोऽस्ति, अपि तु प्रकृतिनिमित्तकोऽपि । भागवित्तिशब्दो गोत्रापत्ये भगवित्तशब्दादिञन्तः । भागवित्तिकश्चेति । भागवित्तिशब्दाद् यून्यपत्ये 'गोत्रस्त्रियाः कुत्सने ण च' इत्यतः 'कुत्सने' इत्यनुवृत्तौ 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति ठक् ।

स्त्री पुंवच्च ॥ ६६ ॥

'शेषः' इति वर्त्तते, 'वृद्धो यूना' इति च सर्वम्। स्त्री वृद्धा यूना सहवचने शिष्यते तल्लक्षणश्चेदेव विशेषो भवति। पुंस इवास्याः कार्यं भवति। स्त्र्यर्थः पुमर्थवद्भवति। गार्गी च गार्ग्यायणश्च गार्ग्यौ। वात्सी च वात्स्यायनश्च वात्स्यौ। दाक्षी च दाक्षायणश्च दाक्षी॥

पदमञ्जरी

स्त्री पुंवच्च॥ स्त्रीत्वस्य वैरूप्यकारणस्याधिक्याद्वचनं पुंवच्चेति वक्ष्यामीति च। अत्र स्त्रीशब्दस्य स्वरितत्वे स्त्र्यधिकारविहितानां टाबादीनां ग्रहणादयमर्थो भवति—पुंवत् स्त्रीप्रत्ययो न भवति। यथा पुंवदस्यास्तनावित्यभावातिदेशस्तद्वत्। ततश्च स्त्रीत्वस्यानिवृत्तत्वाद् गार्ग्यश्च स्त्रियो गार्ग्यायणश्च गर्गा इत्यत्र 'यञञोश्च' इति लुग् न स्यात्। 'अस्त्रियाम्' इत्यधिकारात् प्रसज्यप्रतिषेधेऽयं दोषः। पर्युदासे तु शिष्यमाणस्य निवर्त्तमानार्थाभिधायित्वादस्ति स्त्रीसदृशोऽर्थ इति सिद्ध्यति। इह तु गर्गान्पश्येति स्त्रीत्वस्यानिवृत्तत्वान्नायं पुंसां बहुत्वे शस् उत्पन्न इति नत्वं न स्यात्। स्त्र्यर्थवृत्तेः शब्दस्य तु ग्रहणे स्त्रीशब्दस्य पुंशब्दस्येव रूपं भवतीत्यर्थः स्यात्। स्त्रीत्वं त्वनुवृत्तमेव। तत्र यद्यपि गर्गा इति बहुषु पुंशब्दस्य रूपमिति तस्मिन्नतिदिष्टे जसादिषु न दोषः, नत्वं तु विभक्तिकार्यं न स्यात्। एवं स्त्र्यर्थग्रहणे तु पुमर्थातिदेशात्तत्प्रतिबद्धानां कार्याणां सिद्धिरिति न कश्चिद् दोषः। स्त्रीति चोक्तेऽर्थ एव प्रतीयते। शब्दानामर्थपरत्वात्स्वरूपग्रहणं त्वनाशङ्क्यमेव; वृद्धो यूनेत्यनुवर्त्तनाद्। अतोऽर्थस्यैव ग्रहणमित्याह—*स्त्र्यर्थः पुमर्थवद्भवतीति*। *गार्गी चेत्यादि*। गार्ग्यवात्स्यशब्दाभ्याम्। 'यञश्च' इति ङीप्। दाक्षीति। 'इतो

न्यासः

स्त्री पुंवच्च॥ स्त्र्यर्थस्य वैरूप्यकारणस्याधिक्यात् पूर्वेण न सिध्यतीति वचनम्। पुंवच्चेति वचनादतिदेशोऽयम्। स्त्रीति। स्त्रीप्रत्ययग्रहणं वेदं स्यात्? स्त्र्यर्थवृत्तिशब्दस्य वा ग्रहणम्? अर्थग्रहणं वा? यदि स्त्रीप्रत्ययस्य ग्रहणं स्यात्, ततोऽनेन तस्यैव निवृत्तिः क्रियते—पुंवत् स्त्रीप्रत्ययो भवतीति, न तु स्त्र्यर्थस्य निवृत्तिः क्रियते; ततो गार्ग्यश्च गार्ग्यायणाश्चेति गर्गा इत्यत्र 'अस्त्रियाम्' इत्यनुवर्त्तमाने 'यञञोश्च' इति लुङ् न स्यात्; इह तु गर्गान् पश्यतीति 'तस्माच्छसो नः पुंसि' इति नत्वं न स्यात्। द्वितीये तु पक्षे स्त्र्यर्थवृत्तेः शब्दस्यानेन पुंवद्भावः क्रियते, न तु स्त्रीत्वस्य निवृत्तिः; तथापि स एव दोषः स्यात्। अर्थग्रहणे तु न कश्चिद् दोष इत्यतः स्त्र्यर्थस्येदं ग्रहणमिति मत्वाह—स्त्र्यर्थः पुंवद्भवतीति। कथं पुनरर्थस्येदं ग्रहणं

## पुमान् स्त्रिया ॥ ६७ ॥

'तल्लक्षणश्चेदेव विशेषः' इति वर्त्तते । 'वृद्धो यूना' इति निवृत्तम् । स्त्रिया सहवचने पुमान् शिष्यते, स्त्री निवर्त्तते । स्त्रीपुंस-लक्षणश्चेदेव विशेषो भवति । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कुक्कुटश्च कुक्कुटी च कुक्कुटौ । तल्लक्षणश्चेदेव विशेष इत्येव—कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ ।

पदमञ्जरी

मनुष्यजातेः' दाक्षी इति ङीषि निवृत्ते इञन्ताद् द्विवचने 'प्रथमयोः' इति दीर्घः । इदमपि द्वन्द्वनिवृत्त्यर्थमेव वचनम् ॥

*पुमान् स्त्रिया* ॥ *स्त्रीपुंसलक्षणश्चेदेव विशेष इति* । पदान्तरगम्येऽपि तल्लक्षणे विशेषे भवति, यथा—गौश्चायं गौश्चेयमिति एतौ गावौ चरत इति । एवं कन्याखुकृकवाकुग्रामणीखलपूप्रभृतिषु पुंसः शेषो वेदितव्यः । इह कस्मान्न भवति—हंसश्च वरटा च कच्छपश्च डुलिश्च ऋश्यश्च रोहिच्च अश्वश्च वडवा च पुरुषश्च योषिच्चेति, सर्वत्राप्यत्र स्त्रीपुंसकृत एव विशेषः ? 'सरूपाणाम्' इति वर्त्तते, तेन समानायां प्रकृतौ यत्र स्त्रीपुंसकृत एव विशेषस्तत्रैव भवति । इह तु ब्राह्मणवत्सश्च ब्राह्मणीवत्सा चेत्यत्र प्राप्नोति, नैष दोषः; स्त्रीपुंसयोः सहविव-

न्यासः

लभ्यते ? उच्यते; स्त्रीप्रत्ययानां तावदेतद् ग्रहणं न भवति; अस्वरितत्वात् । स्त्र्यर्थ-वृत्तेरपि शब्दस्य ग्रहणं न भवति; अप्राधान्यात् । अप्राधान्यं तु तस्याभिधेयपारतन्त्र्यात् । अर्थस्याप्राधान्यमपारतन्त्र्यात् । प्रधानगुणसन्निपाते तु प्रधानस्य ग्रहणं न्याय्यम्, अतः स्त्र्यर्थ एव गृह्यते । गार्गी, वात्सी चेति । गार्ग्यवात्स्यशब्दाभ्यां 'यञश्च' इति ङीप्, पूर्ववदकारयकारलोपौ । दाक्षी इति : पूर्ववन् ङीप् । दाक्षायणश्चेति । दाक्षेरपत्य-मिति 'यञिञोश्च' इति फक् ।

पुमान् स्त्रियाः ॥ स्त्रीपुंसलक्षणश्चेदेव विशेष इति । यद्येवम्, इह न स्यात्—गौश्चायं गौश्चेयमित्येतौ गावौ तिष्ठत इति, न ह्यत्र स्त्रीपुंसकृतः कश्चिद् विशेषोऽस्ति ? मा भूदनेन, 'सरूपाणाम्' इत्यादिना भविष्यति ? नैतदस्ति; यदि हि तेन स्यात् स्त्रीशब्दस्याप्येकशेषः प्रसज्येत । ततश्च स्त्रीलिङ्गतापि स्यात्, लिङ्गमशिष्यं लोका-श्रयत्वात् । स्त्रीलिङ्गस्यैकशेषे कृते पुंस्त्वं विवक्षितव्यमित्यदोषः ।

अथ वा, पुमानिति योगविभागः क्रियते । तेनेहाप्यसत्यपि स्त्रीपुंसकृते विशेषे पुंस एवैकशेषो भवति । न चैवं सत्यतिप्रसङ्गो भवति; योगविभागादिष्टसिद्धेरिति । ब्राह्मणी, कुक्कुटी, मयूरीति । 'जातेरस्त्रीविषयादयोपधात्' इति ङीष् । कुक्कुटमयू-

एवकारः किमर्थः ? इन्द्रश्च इन्द्राणी चेन्द्रेन्द्राण्यौ । 'पुंयोगादाख्यायाम्' इत्यपरो विशेषः । पुमानिति किम् ? प्राक्च प्राची च प्राक्प्राच्यौ । 'प्राक्' इत्यव्ययमलिङ्गम् ॥

**भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ ६८ ॥**

यथासंख्यं भ्रातृपुत्रशब्दौ शिष्येते सहवचने स्वसृदुहितृभ्याम् । स्वस्रा सहवचने भ्रातृशब्दः शिष्यते—भ्राता च स्वसा च भ्रातरौ । दुहित्रा सहवचने पुत्रशब्दः शिष्यते—पुत्रश्च दुहिता च पुत्रौ ॥

**नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ ६९ ॥**

'तल्लक्षणश्चेदेव विशेषः' इति वर्तते । नपुंसकानपुंसकमात्रकृते

**पदमञ्जरी**

क्षायामेकशेषः । सा च प्रधानयोरेव भवतीति यत्र प्रधानस्त्रीपुंसकृत एव विशेषस्तत्रैवैकशेषः, इह त्वप्रधानकृतोऽपीत्येकशेषाभावः । इहापि मृगक्षीरादिवज्जातिविवक्षायां कुक्कुटावित्यादि सिद्धम् । द्वन्द्वनिवृत्त्यर्थन्तु वचनम् । *प्रागित्यव्ययमिति* । प्रपूर्वादञ्चतेः क्विन्नन्तादस्तातेः 'अञ्चेर्लुक्' इति लुकि 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वं सत्त्वासत्त्वयोर्द्वन्द्वैकशेषौ चिन्त्यौ ॥

*भ्रातृपुत्रौ स्वसृदुहितृभ्याम्* ॥ इदमपि द्वन्द्वनिवृत्त्यर्थं वचनम् । स्वसृशब्दस्य ह्येकापत्यत्वं निमित्तम्, दुहितृशब्दस्यापत्यत्वमेव । भ्रातृपुत्रशब्दयोः स्त्रीत्वपुंस्त्वं चोभयत्र विशेषः । तत्र 'भ्रातरौ पुत्रौ' इति स्त्रीपुंस्त्वाविवक्षायां सिद्धं स्वसृदुहित्रोरभिधानम् । एकशेषारम्भेऽप्ययमेव निर्वाहः ॥

*नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्* ॥ *शुक्ला च शुक्लं चेति* । विभक्तौ विभक्त्यन्तयोश्चासारूप्यादप्राप्त एकशेषः, शुक्लं च शुक्लश्चेति विभक्त्यन्तयोरसारूप्यम् । विभक्तौ सारूप्येऽपि पुंनपुंसकयोः पर्यायः स्यादिति वचनम्, एकवद्भावार्थं च । *तल्लक्षणश्चेदेव विशेष इति वर्तत इति* । शुक्लं च कृष्णश्चेत्यत्र मा

**न्यासः**

र्यावेति । अत्र न केवलं स्त्रीपुंसकृतो विशेषः, किं तर्हि ? आकृतिश्रुतिकृतोऽपि । इन्द्राणीति । 'इन्द्रवरुण' इत्यादिना ङीष्, आनुगागमश्च । प्राक् च प्राचीति । प्राङिति प्रपूर्वादञ्चतेः 'ऋत्विक्' इत्यादिना क्विन्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । क्विनन्ताद् 'दिक्छब्देभ्यः' इत्यादिनाऽस्तातिप्रत्ययः । तस्य 'अञ्चेर्लुक्' इति लुक् । प्राचीति । प्राक्छब्दाद् 'उगितश्च' इत्यत्राञ्चतेश्चोपसंख्यानाद् ङीप् । प्रागित्यव्ययमिति । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् ॥

भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ॥ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ॥ अनडु-

विशेषेऽनपुंसकेन सहवचने नपुंसकं शिष्यते, एकवच्चास्य कार्यं भवति अन्यतरस्याम्। शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लं च वस्त्रं तदिदं शुक्लम्, तानीमानि शुक्लानि।

अनपुंसकेनेति किम्? शुक्लं च शुक्लं च शुक्लं च शुक्लानि। 'एकवच्च' इति न भवति॥

## पिता मात्रा ॥ ७० ॥

### पदमञ्जरी

भूत्। एवाकारस्तु हिमहिमान्यौ अरण्यारण्यान्यावित्यत्र मा भूदिति। 'अत्र हिमारण्ययोर्महत्त्वे' इति महत्त्वमपरो विशेषः, अन्यतरस्यांग्रहणमानन्तर्यादेकवच्चेत्यनेन सम्बन्ध्यते, न त्वेकशेषेण चेत्याह—*एकवच्चेत्यादि*। अस्य ग्रहणमेकवच्चेत्यस्योत्तरत्रानुवृत्तिर्मा भूदिति। इह शुक्लेन च वस्त्रेण शुक्लेन च कम्बलेन तेनानेन शुक्लेनेति तल्लक्षणविशेषाभावादेकशेषो न प्राप्नोति, सामान्यविवक्षायामेकशब्दत्वमेकवचनं नपुंसकत्वं च भविष्यति। यद्येवम्, तदिदं शुक्लमित्यत्राप्येवमेव भविष्यति, नार्थ एतेन? द्वन्द्वनिवृत्त्यर्थं तु वचनम्।

*अनपुंसकेनेति किमिति*। नपुंसकेनापि सहवचने सरूपाणामित्येकशेषेण भवितव्यमिति प्रश्नः, तेन यथा स्यादनेन मा भूदिति प्रत्युत्तरम्। को न्वत्र विशेष इत्यत आह—*एकवच्चेति*॥

*पिता मात्रा* ॥ *मातापितराविति*। अभ्यर्हितत्वान्मातुः पूर्वनिपातः, 'पितु-

### न्यासः

सकेनेति। किमित्यादि। ननु च विना नपुंसकेनापि सहवचनेन सरूपाणामित्यादिनैकशेषो भवत्येव, तत् कोऽत्र विशेषः, यस्तेनैकशेष विधीयमानः, अनेनैव चेत्यत आह—एकवच्चेति न भवतीति। यद्यनेनैकशेषः स्यात्, पक्ष एकवद्भावः स्यात्। तेन त्वेकशेषे सति न भवति। अथास्येति किमर्थमुच्यते? यद्यस्येति नोच्येत, उत्तरत्राप्येकवच्चेत्यनुवृत्तिः स्यात्। ततश्चोत्तरत्र तु यस्यैकशेषः करिष्यते, तस्यैकवद्भावः प्रसज्येत। तस्मादस्यैव नपुंसकस्यैकवद्भावो यथा स्यात्। उत्तरत्र तु यस्यैकशेषः करिष्यते, तस्य मा भूदित्येवमर्थमस्येति वचनम्। अस्येति हि वचने सति मा भूदस्य वैयर्थ्यमित्युत्तरत्राप्येकवच्चेति नानुवर्त्तते। ननु चास्वरितत्वादेव नानुवर्त्तिष्यते। एवं तर्हि तदेवास्वरितत्वमनेन प्रकारेणाख्यायते विस्पष्टार्थम्। एकारोऽत्रानुवर्त्तते। तेन हिमश्च हिमानी च हिमहिमान्यौ, अरण्यश्चारण्यानी चारण्यारण्यान्यावित्यत्र न भवति। इन्द्रवरुणादिसूत्रेण 'हिमारण्ययोर्महत्त्वे' इति वचनात् महत्त्वमपरो विशेषः॥

पिता मात्रा ॥ पितराविति। 'ऋतो ङि' इति गुणः। मातापितराविति। 'आनङृतो द्वन्द्वे' इत्यानङ्, अभ्यर्हितत्वान्मातुः पूर्वनिपातः॥

'अन्यतरस्याम्' इति वर्त्तते, न 'एकवत्' इति। मात्रा सहवचने पितृशब्दः शिष्यते अन्यतरस्याम्। माता च पिता च पितरौ। मातापितराविति वा ॥

श्वशुरः श्वश्र्वा ॥ ७१ ॥

'अन्यतरस्याम्' इति वर्तते। श्वश्र्वा सहवचने श्वशुरशब्दः शिष्यते अन्यतरस्याम्। श्वशुरश्च श्वश्रूश्च श्वशुरौ। श्वश्रूश्वशुराविति वा ॥

त्यदादीनि सर्वैर्नित्यम् ॥ ७२ ॥

त्यदादीनि शब्दरूपाणि सर्वैः सहवचने नित्यं शिष्यन्ते त्यदादिभिरन्यैश्च। सर्वग्रहणं साकल्यार्थम्। नित्यग्रहणं विकल्पनिवृत्त्यर्थम्। स च देवदत्तश्च तौ। यश्च देवदत्तश्च यौ।

पदमञ्जरी

दंशगुणं माता गौरवेणातिरिच्यते'। पितरावित्यभिधानं जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। एकशेषारम्भेऽपि द्वन्द्वस्त्विष्यत एवेति नार्थ एतेन ॥

*श्वशुरः श्वश्र्वा*। पितृश्वशुरौ मातृश्वश्रूभ्यामिति नोक्तम्, लाघवार्थम्। श्वश्रूशब्दोऽव्युत्पन्नं प्रातिपदिकं श्वशुरस्योकाराकारलोपश्चेत्यूङन्तत्वे प्रत्ययान्तत्वाद् ब्रह्मबन्धूरित्यादिवदेकदेशाभावाच्चाप्रातिपदिकत्वेऽपि श्वश्रेत्यस्मादेव निर्देशाल्लिङ्गात् सुपस्तद्धिताश्च भवन्ति। *श्वश्रूश्वशुराविति*। अभ्यर्हितत्वादेव पूर्वनिपातः, 'श्वश्रूः पूर्वजपत्नी च मातृतुल्या प्रकीर्तिता' अत्रापि दम्पत्योर्जनयितृत्वमात्रविवक्षायां लिङ्गाविवक्षायां समर्थनीयम्। अनारम्भपक्षेऽपि श्वश्रूश्वशुरावित्यभिधाने द्वन्द्वस्त्विष्यत वेति, नार्थ एतेन ॥

*त्यदादीनि सर्वैर्नित्यम्* ॥ सर्वशब्दस्यार्थमाह—*त्यदादिभिरन्यैश्चेति*। एतदेव प्रकटयति—*सर्वग्रहणमिति*। *त्यदादिभिरन्यैश्चेति*। यदिदं साकल्यमुक्तं तदर्थमित्यर्थः; अन्यथा प्रत्यासत्तेः 'तल्लक्षणश्चेदेव विशेषः' इत्यधिकाराद्वा त्यदादिभिरेव सहवचने स्यादिति भावः। *स च देवदत्तश्चेति*। ननु देवदत्तोऽपि सामान्यविवक्षायां तच्छब्देनैव निर्देष्टुं शक्यते, ततश्च सरूपाणामित्येव सिद्धम्।

न्यासः

श्वशुरः श्वश्र्वा ॥ श्वश्रूश्वशुराविति। पूर्ववत् पूर्वनिपातः ॥

त्यदादीनि सर्वैर्नित्यम् ॥ सर्वग्रहणं साकल्यार्थमिति। विना तेनानपुंसकेनेत्यस्यानुवृत्तिराशङ्क्येत, ततश्च नपुंसकेन सह न स्यात्। अथ वा—तल्लक्षणश्चेदेव विशेष

❀ त्यदादीनां मिथो यद्यत्परं तत्तच्छिष्यते ❀। स च यश्च यौ। यश्च कश्च कौ ॥

ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ७३ ॥

ग्राम्याणां पशूनां संघाः ग्राम्यपशुसंघाः, एतेषु सहविवक्षायां स्त्री शिष्यते। 'पुमान् स्त्रिया' इति पुंसः शेषे प्राप्ते स्त्रीशेषो विधीयते। अंतरुणग्रहणं सामर्थ्यात्पशुविशेषणम्। गाव इमाः। अजा इमाः।

पदमञ्जरी

न चारब्धेऽपि सूत्रे वृत्तौ विशेषोऽन्तर्भावयितुं शक्यः, तावित्यस्य सरूपसाधारणत्वाद्विरूपाणां च नानाविधत्वात्, सत्यम्; तद्देवदत्तावित्यादिद्वन्द्वनिवृत्त्यर्थं वचनम्, अन्यथा 'तत्पुत्रस्तदीयः' इत्यादिवृत्त्यन्तरवद् द्वन्द्वोऽपि स्यात्।

*यद्यत्परमिति*। त्यदादिपाठे शब्दपरविप्रतिषेधाश्रयणादिति भावः। *स च यश्च यावित्यादि*। भाष्ये तु 'पूर्वशेषः खल्वपि दृश्यते—स च यश्च तौ' इत्युक्तम्। इह चाहं च भवांश्चावामिति भवतीत्याहुः।

*त्यदादितः शेषे पुंनपुंसकतो लिङ्गवचनानि*[1]। आद्यादित्वात्तसिः, त्यदादीनां शेषे सह विवक्षितो योऽर्थः पुमान्, यच्च नपुंसकं तद्वशेन लिङ्गवचनानि भवन्तीत्यर्थः। स च देवदत्त च तौ, सा च देवदत्तश्च तौ, तच्च देवदत्ता च ते। पुंनपुंसकयोस्तु सहविवक्षायां परत्वान्नपुंसकवशेन व्यवस्था। तच्च देवदत्तश्च ते, इह स च कुक्कुटः सा च मयूरी—कुक्कुटमयूर्याविते, अर्धं पिप्पल्यास्तद् अर्धपिप्पली च सा अर्धपिप्पल्यौ ते इति परवल्लिङ्गमिति समासार्थस्य लिङ्गातिदेशात्तद्विशेषणस्यापि सर्वनाम्नस्तदेव लिङ्गं भवति ॥

*ग्राम्यपशुसंघेष्वतरुणेषु स्त्री* ॥ ग्रामे भवा ग्राम्याः। 'ग्रामाद्यखञौ'। *पुंसः शेषे प्राप्त इति*। 'पुमान् स्त्रिया' इत्यनेन। *सामर्थ्यादिति*। प्रधानस्य संघस्य तारुण्यातारुण्ये न सम्भवत इत्यस्मात्सामर्थ्याद् गुणभूतानामपि पशूनां विशेषणमित्यर्थः।

न्यासः

इत्येतदिहानुवर्त्तत इत्याशङ्क्येत, ततश्च यत्र त्यदादिकृत एव विशेषस्तत्रैव स्यात्—स च यश्च यावित्यादि, इह तु न स्यात्—स च देवदत्तस्य ताविति। अतः सर्वग्रहणम्। स च देवदत्तश्च ताविति। यदा विशेषविवक्षा तदैतदुदाहरणम्, यदा तु सामान्यविवक्षा, तदा देवदत्तोऽपि तच्छब्देन सम्बध्यत इति 'सरूपाणाम्' इत्यनेनैव सिध्यति। यद् यत् परमिति। गणपाठापेक्षं परत्वं वेदितव्यम्।

ग्राम्यपशुसंघेष्वतरुणेषु स्त्री ॥ ग्राम्याणामिति। ग्रामे भवा ग्राम्याः। 'ग्रामाद्

---

१. एतत्पाठपर्यालोचनयानुमीयते यदस्य वृत्तिपाठो विनष्टः।

ग्राम्यग्रहणं किम् ? रुरव इमे। पृषता इमे। पशुष्विति किम् ? ब्राह्मणाः, क्षत्रियाः। संघेष्विति किम् ? एतौ गावौ चरतः। अतरुणेष्विति किम् ? वत्सा इमे। बर्करा इमे।

* अनेकशफेष्विति वक्तव्यम् *। इह मा भूत्—अश्वा इमे॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमाध्यायस्य द्वितीयः पादः॥

—:※:—

## पदमञ्जरी

*एतौ गावाविति*। यद्यपि द्वयोरपि संघो भवत्येव, तथापीह संघग्रहणसामर्थ्याद् बहूनां संघो गृह्यते, अन्यथा शेषस्यानेकविषयत्वाद् अनर्थकं न स्यात्। *अनेकशफेष्विति*। शफाः=खुराः। उष्ट्राणां त्वारण्यत्वादेकशेषाभावः॥

*इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः॥*

—०:०—

## न्यासः

यखञौ' इति यः। ननु च संघस्य तरुणत्वं न संभवति, नापि तद्व्यवच्छेद्यं तरुणत्वम्। अतः अतरुणेषु' इत्ययुक्तं विशेषणमित्याह—अतरुणग्रहणमित्यादि। उच्यते चेदं विशेषणम्, न च संघस्य तत् सम्भवति, तत्र सामर्थ्यादन्येषां संघो विज्ञायते। गाव इमा इति। इमा इत्यनुप्रयोगः स्त्रीत्वाभिव्यक्तये। एतौ गावाविति। कथं पुनरिदं प्रत्युदाहरणम्, यावता द्वाभ्यामपि संघो भवत्येव ? नैष दोषः, यस्मात् संघग्रहणादिह बह्वयवः संघो विवक्षितः—बहूनां यः संघ इति; अन्यथा यदि द्व्यवयवस्य ग्रहणमिति मतं स्यात् संघग्रहणमनर्थकं स्यात्, व्यवच्छेद्याभावात्। अनेकशफेष्वित्यादि। अनेकानि शफानि खुरा येषां तेष्वयमेकशेषो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—अन्यतरस्यांग्रहणमिहानुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनानेकशफेष्वेव भवति, नान्यत्रेति।

इति श्रीबोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः॥

—०—

# अथ प्रथमाध्याये तृतीयः पादः

## भूवादयो धातवः ॥ १ ॥

'भू' इत्येवमादयः शब्दाः क्रियावचना धातुसंज्ञा भवन्ति। भू—भवति। एध—एधते। स्पर्द्ध—स्पर्द्धते। 'धातु' शब्दः पूर्वाचार्य-

### पदमञ्जरी

*भूवादयो धातवः* ॥ *'भू' इत्येवमादयः शब्दा* इत्यनेन पाठनिबन्धनेयं संज्ञेति दर्शयति। यदि त्वनादृत्य पाठम्, क्रियावचनो धातुरित्युच्येत, तत आणवेदु-इत्यादिष्वपि स्यात्। कथं पुनरपभ्रंशानामनुशासनमाशङ्क्यते? कुतो नु खल्वे-तद् आणवेद्वित्यादयोऽपभ्रंशा इति, यावता ये शास्त्रेणानुगम्यन्ते ते साधवः? अवश्यं चानुबन्धादिविशिष्टं रूपं पाठेनैव दर्शनीयम्, न हि तद्रूपं प्रयोगे सम्भवति। अतोऽन्यार्थः सन् गणपाठ एवाश्रितो भवतीति धातुत्वे सति लड् भवति। *एधते, स्पर्द्धते* इत्यनुदात्तेतौ। यदि पाठमात्रनिबन्धनेयं संज्ञा, या-वा-दिव्-शब्दानां सर्वनामविकल्पस्वर्गवाचिनां समानशब्दानामपि प्रसङ्गः? न च प्रापणा-दिरर्थो नियामकः, अनार्षत्वाद्, अभियुक्तैरुत्तरकालनिर्दिष्टत्वाद्, अनेकार्थत्वाभ्यु-पगमाच्च, सत्यम्; संज्ञायां को दोषः? न तावद्धातुप्रत्ययानां लडादीनां प्रसङ्गः; कर्त्रादीनामभावात्, उच्यते; याः पश्येति 'आतो धातोः' इति लोपः स्यात्। ननु 'अधातुः' इति निषेधाद् अप्रातिपदिकत्वाद्विभक्तिरेव न स्यात्, नैतदस्ति; विभक्तावुत्पन्नायां त्यदाद्यत्वे टापि च यारूपत्वे सति धातुत्वम्, सुबुत्पत्तिदशायां तु यदित्यस्य नास्ति धातुत्वम्; वाशब्दात्तु सुबेव न स्यात्; एवं दिव्शब्दादपि। न च 'दिव औत्' इत्येतद्धातुत्वाभावे लिङ्गम्; क्विबन्तस्य दीव्यतेः सुपि सम्भ-वात्। सानुबन्धकत्वेऽपि तस्यैव ग्रहणं स्याद्, अतः समानशब्दानां प्रतिषेधो वक्तव्य इत्यत आह—*धातुशब्द इत्यादि*। क्वचित्तु 'भू' इत्येवमादयः शब्दा

### न्यासः

भूवादयो धातवः ॥ भूरादिर्येषां ते भूवादयः। भूवादयो दशगणीपरिपठिता गृह्यन्ते। भवतीत्यादि। अत्र धातुसंज्ञायां सत्याम् 'धातोः' इत्यनुवर्त्तमाने 'वर्त्तमाने लट्' इति लट्प्रत्ययः। भू इत्येवमादयः शब्दा धातुसंज्ञका भवन्तीत्यनेन गणपाठेनैवेयं धातुसंज्ञा विधीयत इति दर्शयति। तेन अणपयति, कखुपयति—इत्येवमादीनां धातु-संज्ञा न भवतीत्युक्तं भवति। यद्येवम्, या-वा-दिव—इत्येवमादीनां सर्वनाम-विकल्प-स्वर्गाभिधायिनां धातुसमानशब्दानामक्रियावचनानामपि धातुसंज्ञा प्राप्नोतीति कस्य-चिद् भ्रान्तिः स्याद्, अतस्तान्निराकर्त्तुमाह—धातुशब्द इत्यादि। लघ्वर्थं हि संज्ञाकरण-

संज्ञा । ते च क्रियावचनानां संज्ञां कृतवन्तः । तदिहापि पूर्वाचार्य-संज्ञाश्रयणात् क्रियावाचिनामेव भूवादीनां धातुसंज्ञा विधीयते ॥

पदमञ्जरी

इत्यस्यानन्तरं *क्रियावाचिन* इति पठ्यते, तस्मिन् पक्षे यास्य ग्रन्थस्य शङ्का सा तस्य द्रष्टव्या। अस्य तु कथं पुनः सूत्रेऽनुपात्तः क्रियावचन इत्ययं विशेषो लभ्यते ? अत आह—*धातुशब्दः पूर्वाचार्यसंज्ञेति* । ततः किमित्याह—*ते चेति* । ततोऽपि किमित्याह—*तदिहापीति* । महत्याः पूर्वाचार्यसंज्ञाया आश्रयणं तदीयोपाधिपरि-ग्रहार्थमेवेति भावः ॥

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥

सिद्धं वा भवत्वसिद्धं वा, शब्देन तु यद्वस्तु साध्यत्वेनाभिधीयते सा क्रिया साध्यत्वे त्वाश्रितक्रमरूपत्वात् पूर्वापरीभूतावयवत्वं विततरूपत्वं यत्तद्रूपमभि-धीयते तस्यैकस्मिन् क्षणेऽनवस्थानम्, यदाह—'क्रिया नामेयम् अत्यन्तापरिदृष्टा-ऽशक्या च, सा पिण्डीभूता निदर्शयितुम्' इति। एकैकस्य क्रियाक्षणस्य प्रत्यक्षत्वेऽपि समूहरूपा धातुवाच्या क्रिया न प्रत्यक्षेत्यर्थः। क्रमवन्त एव क्षणा एकफलो-द्देशेन संपाद्यमानत्वात् ऐक्यमिवापन्ना धातुवाच्याः । तद्यथा—पचतीत्यधिश्रयणा-दयोऽधःश्रयणान्ताः क्लेदनफलावच्छिन्नाः । एवमपचदित्यत्रापि क्रिया साध्यैव । तादृशस्यैव हि रूपस्य तत्रात्ययः प्रतीयते यत्पूर्वापरीभूतं क्रियते । घट इत्यत्र तु घटशब्देन चक्रोदरगतोऽपि घटः सिद्धरूप उच्यते, एकस्मिन्नेव क्षणे यद्दर्शन-योग्यं रूपं तेन रूपेणेत्यर्थः। तदेवं क्रियावचनो धातुरित्याश्रयणादतिप्रसङ्गो नास्तीति स्थितम्।

इह भूरादिर्येषामिति बहुव्रीहौ यणादेशे कृते 'भ्वादयः' इत्यनुपपन्नो निर्देश

न्यासः

भिच्छन्त्याचार्या इत्येकाक्षरायां संज्ञायां कर्त्तव्यायां महत्याः पूर्वाचार्यसंज्ञाया यदा-श्रयणं तस्यैतत्प्रयोजनम्—यथाविधानां ते धातुसंज्ञां कृतवन्तः, तथाविधानामेवैषा संज्ञा यथा स्यादिति । ते च क्रियावचनानामेव धातुसंज्ञां विहितवन्तः । तदिहापि पूर्वाचार्यसंज्ञाश्रयणात् क्रियावचनानामेव धातुसंज्ञा विधीयते । तेन या-वा-दिव-इत्येवमादीनां धातुसमानशब्दानामक्रियावचनानान्न भवतीति भावः ।

ननु च भूरादिर्येषामिति बहुव्रीहौ कृते, आदिशब्दे परतो यदि संहितया निर्देशः, तदा 'इको यणचि' इति यणादेशे कृते 'भ्वादयः' इति भवितव्यम्, अथाऽसंहितया निर्देशस्तदा भू आदय इति, तत् कुतोऽयं वकारो यस्मिन् सति भूवादय इति

भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते ।
भूवो वार्थं वदन्तीति भ्वर्था वा वादयः स्मृताः ॥

पदमञ्जरी

इत्यत आह—*भूवादीनां वकारोऽयं मङ्गलार्थ इति*। अभिधानधर्मस्यायमभिधेये उपचारः, यथा—भ्रमरे द्विरेफ इति। भूवादीनां संज्ञिनां सम्बन्धी यो वकारः, तदभिधायिनि भूवादिशब्दे स्थितोऽयं प्रयुज्यते, लक्षणेनाप्राप्तो निपात्यत इत्यर्थः। स च मङ्गलार्थः। अपूर्वस्य लाभो मङ्गलम्, दध्यादिलाभ इव। अस्य वशब्दस्यापूर्वस्य लाभायेत्यर्थः। धर्मो वा मङ्गलम्; साधुशब्दप्रयोगेऽपि धर्मो भवति, भूवादिशब्दश्च साधुः। किं च वकारे सत्यविकृतो भूशब्दो व्याहृत्यादि स्मारयतीत्यपि धर्मो भवतीति।

प्रकारान्तरमाह—*भुवो वार्थं वदन्तीति*। भुवो धातोरर्थं वदन्तीति वा, भुवादय इति निर्देश इत्यर्थः। अर्थकथनं चैतद्। व्युत्पत्तिस्तु भवनं भूः, क्रियासामान्यमुवं वदन्तीत्यौणादिकोऽयम्, 'वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्' इति कर्तरि वदेः इञ् प्रत्ययः। यदि क्रियासामान्यं ये वदन्ति ते संज्ञिनः, अस्तिभवतिविद्यतीनामेव स्याद्, न पचत्यादीनां विशेषवाचिनाम् ? घञ्विधिवद्भविष्यति, तद्यथा—'भाव' इति सामान्योपादानेन विधीयमानो घञ् विशेषवाचिभ्योऽपि भवति—पाकः, त्याग इति। तत्कस्य हेतोः ? विशेष्वपि सामान्यस्य सम्भवाद् विशेषाश्रयनिषेधाभावाच्च, तद्वदिहापि। अस्मिन् पक्षे गणपाठसामर्थ्यात् सोऽप्यङ्गीक्रियते, अन्यथा शब्विकरणा ये सेटो निरनुबन्धका अन्तर्गणकार्यवर्जिता भूप्रभृतयस्तेषां पाठोऽनर्थकः स्याद्। बहुव्रीहेस्तु भूत्वादिशब्दस्य पृषोदरादित्वात्साधुत्वम्।

तृतीयं प्रकारमाह—*भ्वर्था वा वादयः स्मृता इति*। भवनं भूः, सोऽर्थो

न्यासः

निर्देशो भवतीत्यत आह—भूवादीनामित्यादि। भूवादीनां संज्ञिनां निर्देशेऽयं वकारो मङ्गलार्थः प्रयुज्यते। मङ्गलमर्थः प्रयोजनं यस्य स तथोक्तः। स मङ्गलशब्दो धर्मपर्यायः, धर्मार्थ इति यावत्। यथा वेदे 'त्रियम्बकं यजामहे' इत्यत्र यकारस्य दृष्टप्रयोजनं नास्तीत्यदृष्टार्थो धर्मार्थ एव पाठस्तस्य, तथेहापि वकारस्य। अथ वा—अपूर्वस्य वस्तुनो लाभो लोके मङ्गलं सम्मतम्, यथा प्रातर्दध्यादीनाम्; तथेहापि वकारस्यापूर्वस्य लाभो मङ्गलं प्रशस्तम्। प्रशस्तार्थो मङ्गलशब्दः। तथा चोक्तम्—'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्त्यायुष्मत्पुरुषाणि च' इति। इह चादौ वृद्धिशब्दो मङ्गलम्, मध्ये चायं वकारः, अन्ते च 'स्वरितोदयम्' इत्युदयशब्दः।

धातुप्रदेशाः—'धातो' इत्येवमादयः ॥

पदमञ्जरी

येषां ते भ्वर्थाः, एवम्भूता वादयो वात्र संज्ञिनः स्मृता इत्यर्थः। किमिदं वादय इति ? 'वा गतिगन्धनयोः' वा आदिर्येषां ते वादयः, 'वा गति' इत्यारभ्या चुरादिसमाप्तेः। तथा च भ्वादयो वादयः भूप्रभृतय आ 'वा गतिगन्धनयोः' इत्यस्माद्। वादयश्च वादयश्च बहुव्रीहितत्पुरुषयोः सहविवक्षायां स्वरभिन्नानां यस्योत्तरः स्वरविधिरिति बहुव्रीहेः शेषः। ततो भुवो वादय इति वाच्यवाचकसम्बन्धे शेषषष्ठीसमासः। अस्मिन्पक्षे पाठविशेषोऽर्थश्चेत्युभयं सूत्राक्षरैरेवोपात्तं भवति ॥

न्यासः

भुवो वार्थमित्यादि। अथ वा—भूवादय इत्यत्र निर्देशे नायमादिशब्दस्य प्रयोगः, नापि मङ्गलार्थस्य वकारस्य, किं तर्हि ? वादिशब्दस्यौणादिकस्य। वदन्तीति वादयः, वाचका इत्यर्थः। वदेर्धातोः 'वसिवपियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्' इति कर्त्तरीञ्प्रत्ययः। यद्यपि वादीति सूत्रे ण्यन्तस्योपादानम्, तथापि बहुलवचनादण्यन्तादपि भवति। भ्वर्था इति। तेषां वादीनामिदं विशेषणम्, भवनं भूः, सम्पदादित्वाद् भावे क्विप्। भवतेरर्थः क्रियासामान्यम्। भूरर्थो येषां ते भ्वर्थाः। कस्मात् पुनस्ते भ्वर्थाः ? भुवो वार्थं वदन्तीति। इतिकरणो हेतौ—यस्माद् भुवो धातोरर्थं वदन्त्यभिदधति तस्मात् ते भ्वर्थाः। एवंविधा वादयो वाचकाः शब्दा भवत्यर्थाभिधायिन इतीह सूत्रे संज्ञिनः स्मृताः = अभिमताः, अभिप्रेता इत्यर्थः। तदेवं क्रियावचनाः शब्दा भूवादयो धातुसंज्ञा भवन्तीत्युक्तं भवति। तेन या-वा-दिव-प्रभृतीनां धातुसमानशब्दानामक्रियावचनानां धातुसंज्ञा न भवति। गणपाठसामर्थ्यात् पाठोऽप्यङ्गीक्रियते। तेनाणपयतीत्येवमादीनां क्रियावचनानामपि धातुसंज्ञा न भवतीत्युक्तं भवति। अस्मिन् व्याख्याने भूवादय इति षष्ठीसमासो वेदितव्यः—भुवो वादयो भूवादय इति।

अथ वा—आदिशब्दस्यैवात्र 'वा गतिगन्धनयोः' इत्यस्मात् परस्य प्रयोगः। वा आदि येषां ते वादयः। आदिशब्दः प्रकारवाची, वाप्रकारा इत्यर्थः। प्रकारस्तु सादृश्यम्, तत् पुनः क्रियात्मकतया, यदाऽह—भ्वर्था इति। भ्वर्थता तु भुवोऽर्थं वदतीति हेतोः। एवंविधा वाप्रकारकाः शब्दा इह सूत्रे संज्ञिनः स्मृताः। तदनेन प्रकारेण क्रियावचनानामेव भूवादीनां धातुसंज्ञा भवतीत्युक्तम्। तेन धातुसमानशब्दानां या-वा-दिव-प्रभृतीनां धातुसंज्ञा न भवति। न हि ते क्रियावचनाः; निष्पन्नवस्त्वभिधायित्वात्। साध्यमानस्वरूपा हि क्रिया निरवयवा क्वचित् पूर्वापरीभूतावयवाऽनिष्पन्नवस्तुस्वभावा। गणपाठस्तु पूर्ववदेवाङ्गीक्रियते। तेनाणपयतीत्येवमादीनां शब्दानां धातुसंज्ञा न भवतीति। अस्मिन्नपि व्याख्याने 'भूवादयः' इति षष्ठीसमासोऽयम्। षष्ठी च वाच्यवाचकसम्बन्धलक्षणा वेदितव्या ॥

## उपदेशेऽजनुनासिक इत् ॥ २ ॥

उपदिश्यतेऽनेनेत्युपदेशः = शास्त्रवाक्यानि; सूत्रपाठः, खिलपाठश्च। तत्र योऽनुनासिकः स इत्संज्ञो भवति। एध। स्पर्द्ध। प्रतिज्ञानुनासिक्याः पाणिनीयाः।

पदमञ्जरी

*उपदेशेऽजनुनासिक इत्* ॥ *उपदिश्यतेऽनेनेत्युपदेश इति* । 'अकर्त्तरि च कारके' इति करणे घञ्। ननु च नेयं संज्ञा, परत्वाच्च 'करणाधिकरणयोः' इति ल्युट् प्राप्नोति, 'हलश्च' इत्यत्रापि संज्ञायामित्येव। ल्युट् तावन्न भवति, 'कृत्यल्युटो बहुलम्' इति। 'अकर्त्तरि च' इत्यत्र चकारो भिन्नक्रमः—संज्ञायां चेति, तेन क्वचिदसंज्ञायामपि भवति। अथोपदिश्यतेऽनेनेत्यत्रोपदेशः कोऽर्थः? विधानम्। यद्येवम्, लण्' 'एध वृद्धौ' इत्यादौ न स्यात्, न ह्यत्र किञ्चिद्विधीयते। अथानिर्ज्ञातस्वरूपस्य स्वरूपज्ञापनं तत्, 'आचारेऽवगल्भक्लीबहोडेभ्यः क्विप्' इत्यत्र गल्भाद्यकारस्य न स्यात्, न हि गल्भादीनां स्वरूपज्ञापनार्थमुच्चारणम्; पञ्चमीनिर्देशेन क्विपो विधानात्। यद्येवम्, क्विबनेनानिर्ज्ञातरूपो ज्ञाप्यते, तत्र चायं भवत्यकार इति भविष्यति। *शास्त्रवाक्यानीति* । लण्-एध-स्पर्द्धेत्यादीनामपि विशिष्टप्रयोजनपरत्वेनोच्चारणाद् वाक्यत्वम्। अस्यैव विवरणम्—*सूत्रपाठ इति* । *खिलपाठः* = धातुपाठः, प्रातिपदिकपाठः, वाक्यपाठश्च। तत्र सूत्रे मतुबादेरुकारः, धातुषु एधाद्यकारः, प्रातिपदिकेषु भवच्छब्दस्योकारः, वाक्ये गल्भाद्यकारः। ननु च सर्वत्रात्र शुद्धोऽच् पठ्यते, नानुनासिक इत्यत आह—*प्रतिज्ञानुनासिक्या इति* ।

न्यासः

उपदेशेऽजनुनासिक इत् ॥ उपदिश्यतेऽनेनेत्युपदेश इति। 'अकर्तरि च कारके संज्ञायाम्' इति करणे घञ्। ननु च संज्ञायामित्युच्यते, न चेयं संज्ञा? नैतदस्ति; 'कृत्यल्युटो बहुलम्' इति बहुलवचनादसंज्ञायामपि भवतीत्यदोषः। शास्त्रवाक्यानीति। अस्येदं विवरणम्—सूत्रपाठः, खिलपाठश्चेति। खिलपाठः=धातुपाठः। चकारात् प्रातिपदिकपाठश्च। अथ रगेलगेप्रभृतीनां कथमानुनासिक्यम्, न हि तेषामानुनासिक्यं गणे पठ्यते? अथापरिपठितानामपि भवति, तदा 'भू' इत्येवमादीनां कस्मान्न भवतीत्याह—प्रतिज्ञानुनासिक्याः पाणिनीया इत्यादि। प्रतिज्ञयाऽऽनुनासिक्यं येषां ते प्रतिज्ञानुनासिक्याः। यत्रैवानुनासिक्यं पाणिनीयाः प्रतिजानते, तत्रैव तदपठ्यमानमपि भवति, नान्यत्र। एतदपि प्रतिज्ञानं नानियमेन भवति, किं तर्हि? यत्रैवाचार्याः स्मरन्ति तत्रैव तेन भवितव्यम्। यथा स्वरितत्वमनुदात्तत्वञ्च स्मरणेन विज्ञायते, तथाऽऽनुनासिक्यमपि। यदि तर्ह्यानुनासिक्यं प्रतिज्ञामात्रभावि तत् किमर्थं तत् क्वचित् पठ्यते—डुपचँष् पाक इत्यादौ? एवंविधोऽर्थोऽनुनासिकः प्रतिज्ञेय इत्यर्थस्य प्रदर्शनार्थम्।

उपदेश इति किम् ? अभ्र आँ अपः । अजिति किम् ? 'आतो मनिन्क्वनिब्वनिपश्च' । अनुनासिक इति किम् ? सर्वस्याचो मा भूत् ।

पदमञ्जरी

प्रतिज्ञामात्रेण समधिगम्यमानुनासिक्यं येषां ते तथोक्ताः । *प्रतिज्ञानुनासिका* इति तु प्रसिद्धः पाठः । तत्र प्रतिज्ञासमधिगम्यत्वाद् अनुनासिके प्रतिज्ञाशब्दो द्रष्टव्यः । ततः समानाधिकरणपदो बहुव्रीहिः । तच्च प्रतिज्ञानं नानियमेन भवति, किं तर्हि ? यत्राचार्याः स्मरन्ति तत्रैव । सूत्रकारेण तावद्विवक्षिताः सर्वेऽनुनासिकाः पठिताः, 'डुलभँष् प्राप्तौ' इतिवत्, लेखकैस्तु संकीर्णा लिखिताः, तत्र स्मृतिपरम्परया निर्णयमित्यर्थः ।

*अभ्र आँ अप इति* । नायं सूत्रादिषु स्वरूपेणोच्चरितोऽनुनासिकः, किं तर्हि ? 'आङोऽनुनासिकश्छन्दसि' इत्यनुनासिकशब्देन विहितः । अथ क्रियमाणेऽप्युपदेशग्रहणे 'उञः' 'ऊँ' इत्यत्र कस्मान्न भवति ? विधानसामर्थ्याद् । इत्संज्ञायां हि 'तस्य लोपः' इति लोपः स्यात् । यद्येवम्, अत्रापि विधानसामर्थ्यादेव न भविष्यति । एवं तर्हि उदाहरणदिगियं दर्शिता । इदं तत्रोदाहरणम्—'अणोऽप्रगृह्यस्यानुनासिकः' दधीच्छति ब्राह्मणकुलमिति क्यजन्तात्क्विपि अल्लोपे, वलि लोपे, नपुंसकह्रस्वत्वं दधि इति । यद्यत्रेत्संज्ञा स्यात् 'इदितो नुम् धातोः' इति नुम् स्यात् । अत्राप्यनुनासिकविधानसामर्थ्यादेवेत्संज्ञा न भविष्यति । ननु च यत्रेत्संज्ञायां सत्यां प्रयोजनं न सम्भवति, यथा—दधि, मध्विति प्रातिपदिकेषु तत्रेत्संज्ञाया अभावः । अत्रानुनासिकविधानमर्थवत्, नैतदेवम्; लोपस्येत्कार्यस्य सर्वत्र सम्भवात् । तस्मादणोऽप्रगृह्यस्य इत्संज्ञायामेव विधेयायामनुनासिकविधानसामर्थ्यादेवात्र लोपो न भविष्यति । एवं तर्ह्युत्तरार्थमवश्यम् 'उपदेश' इति वक्तव्यम्, तदिहापि विस्पष्टार्थं भविष्यतीति मन्यते । *आतो मनिन्निति* । अत्र

न्यासः

**अभ्र आँ अप इति** ॥ अत्रोपदेशात्तूत्तरकालम् 'आङोऽनुनासिकश्छन्दसि' इत्यनेनानुनासिको विहितः, तेनेत्संज्ञा न भवति । ननु चानुनासिकविधानसामर्थ्यादेव न भविष्यति, तत् किमुपदेशग्रहणेन ? इत्संज्ञायां हि सत्याम् 'तस्य लोपः' इति लोपः स्यात्, ततश्चानुनासिकविधानमनर्थकं स्यात्, सत्यमेतत्; एवं मन्यते—उत्तरार्थमवश्यमुपदेशग्रहणं कर्त्तव्यम् । उत्तरार्थं क्रियमाणमिहापि विस्पष्टार्थं भविष्यति । अथ वा—प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता । इदन्त्वत्र प्रत्युदाहरणम्—'अणोऽप्रगृह्यस्यानुनासिकः', दधिं ब्राह्मणकुलम् । यद्यत्रेत्संज्ञा स्यात् 'इदितो नुम् धातोः' इति नुम् स्यात् । ननु च धातोरित्युच्यमाने धातोर्नुम् विधीयते, न चायं धातुः, किं तर्हि ?

इत्प्रदेशाः—'आदितश्च' इत्येवमादयः ॥

## हलन्त्यम् ॥ ३ ॥

'उपदेशे' इति वर्त्तते। अन्ते भवमन्त्यम्। धात्वादेः समुदायस्य यदन्त्यं हल् तदित्संज्ञं भवति। अ इ उ ण्—णकारः। ऋ लृ क्—ककारः। ए ओ ङ्—ङकारः। ऐ औ च्—चकारः।

### पदमञ्जरी

मकारस्येत्संज्ञा न भवति। यदि स्याद्, 'अन्येभ्योऽपि दृश्यन्ते' इति हलन्तेऽन्त्यादचः परः स्यात्। *सर्वस्येति*। दरिद्राप्रभृतिसम्बन्धिनोऽपि ॥

हलन्त्यम् ॥ अन्तशब्दोऽत्र समाप्तौ वर्त्तते; नावयवे; असम्भवात्। न समीपे; अतिप्रसङ्गात्। येन समाप्यते समुदायस्तदन्ते भवमन्त्यम्, दिगादित्वाद्यत्। हलन्त्ये सर्वप्रसङ्गः, सर्वस्य हलः संज्ञा प्राप्नोति। सर्वो हि हल् तं तमवधिं प्रत्यन्तो भवति, अन्त्यग्रहणं त्वादिनिवृत्त्यर्थं स्याद्, अत आह—*धात्वादेरिति*। आदिशब्देन सूत्रप्रातिपदिकप्रत्ययनिपातागमादेशानां ग्रहणम्। शीङ्, लण्, नदट्, सन्, आङ्, 'त्रपुजतुनोः षुक्', 'चक्षिङः ख्याञ्' इति योऽयं धात्वादिरूपः समुदायस्तदर्थः स उपदेशः, न तु नान्तरीयकावान्तरसमुदायार्थं इत्यन्त्यस्य समुदायापेक्षायां

### न्यासः

प्रातिपदिकम्, तत् कथं नुम् स्यात्? नैतदस्ति; 'क्विबन्ता धातुत्वं न जहति' इति क्विबन्तत्वाद्धातुत्वं भवति। आत्मनो दधीच्छति 'सुप आत्मनः क्यच्' दधीयति, दधीयतेः क्विप्; दधि ब्राह्मणकुलमिति। अतो लोपः' इत्यकारलोपः। 'लोपो व्योर्वलि' इत्यत्रादौ लोपग्रहणात् पूर्वं यकारस्य लोपो भवति। 'वेरपृक्तस्य' इति लोपाद् पूर्वं वलि लोपो भवति, पश्चाद् 'वेरपृक्तस्य' इति वकारस्य। प्रत्ययलोपलक्षणेन 'अकृत्सार्वधातुकयोः' इति दीर्घः। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वत्वम्। 'अणोऽप्रगृह्यस्यानुनासिकः' इत्यनुनासिके कृते 'क्विबन्ता धातुत्वं न जहति' इति नुम् स्यात्। अश्मा, भस्मेति 'आतो मनिन्' इत्यत्र मकारस्येत्संज्ञा न भवति। यदि हि स्यात्, 'अन्येभ्योऽपि दृश्यन्ते' इति हलन्तेभ्यो विधीयमानो मनिजचोऽन्त्यात् परः स्यात्।

सर्वस्याचो मा भूदिति। दरिद्राप्रभृतिसम्बन्धिनोऽपि ॥

हलन्त्यम् ॥ अन्ते भवमन्त्यमिति। दिगादित्वाद् यत्। अन्तशब्दोऽयं समाप्तौ वर्त्तते, यथा—एतदन्तं वनमिति। येन च समाप्यते समुदायः सोऽन्तः। तत्रान्ते—समाप्तौ भवमन्त्यम्। हलिति हल्शब्दस्योभयलिङ्गत्वादन्त्यमिति नपुंसकेन निर्देशः। धात्वादेरित्यादि। आदिशब्देन सूत्रप्रातिपदिकप्रत्ययागमादेशानां ग्रहणम्। तत्र

उपदेश इत्येव—अग्निचित्। सोमसुत्। हस्य ल् हलिति द्वितीयमत्र हल्ग्रहणं तन्त्रेणोपात्तं द्रष्टव्यम्, तेन प्रत्याहारपाठे 'हल्'

पदमञ्जरी

प्राधान्याद्धात्वादेरेव ग्रहणमिति भावः। *अग्निचिदिति*। अत्रेत्संज्ञायां लोपः स्यात्। न च तुको वैयर्थ्यम्; आगत्येत्यादौ चरितार्थत्वात्। न च क्विपः पित्त्वस्य वैयर्थ्यम्, अग्निचितावित्यादौ चरितार्थत्वात्। यद्यप्यत्रोभयत्रापि तावतोऽवधेस्तकारोऽन्त्यः, तथापि मुख्यसमुदायस्य नान्त्य इति नास्ति प्रसङ्गः। इह च दण्डिन्निति नकारस्येत्संज्ञायां सत्याम् 'न ङिसंबुद्ध्योः' इति निषेधाल्लोपाभावेऽपि समुदायस्य नित्त्वादाद्युदात्तत्वप्रसङ्गः, यथा—श्रोत्रियशब्दे वाक्यार्थे पदवचनमिति पक्षे। अथोपदेशानुवृत्तावपि सनुतरित्यस्य रेफस्य कस्मान्न भवति? स्वरादिष्वन्तोदात्तपाठसामर्थ्यात्।

इह 'शषसर्' 'हल्' इति यो लकारस्तस्येत्संज्ञायां सत्यां हलित्ययं प्रत्याहार उपपद्यते, सति च प्रत्याहारे लणित्यत्र लकारस्य हल्त्वात्तस्यैव 'शषसर्हल्', इत्यत्रान्त्ये निर्दिष्टत्वादित्संज्ञा, तदाश्रयश्च प्रत्याहार इति इतरेतराश्रयत्वात् प्रत्याहारो नोपपन्नः। ततश्च सर्वेषामेव णकारादीनामित्संज्ञा न स्यादिति सर्व एव प्रत्याहारव्यवहारोऽनुपपन्नः, 'आदिरन्त्येन' इत्येतस्यापि वैयर्थ्यम्? स्यादेतत्—हलित्यत्र हकारात् पर ऌकारः, तस्य ऌकारस्यैकादेशो लपरः, तस्य 'उपदेशेऽजनुनासिकः' इति इत्संज्ञा, स एव 'हलन्त्यम्' इत्यत्राप्येकादेशेन लपरेण निर्दिष्ट इति। एवमपीतरेतराश्रयमेव, ऌकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्रत्याहारे 'ऐऔच्' इति चकारस्येत्संज्ञा, तस्यां सत्यामजिति प्रत्याहारः, अजिति प्रत्याहारे सति ऌकारस्येत्संज्ञेति तस्मादुक्तयोरत्र परिहारस्तमाह—हस्य ल् हलित्यादि। साधारणं भवेत्तन्त्रम्, यथा—तुल्यकक्ष्ययोर्भुञ्जानयोः

न्यासः

धातोः—'डुकृञ्' इति ञकारः, सूत्रस्य—'अइउण्' इति णकारः; प्रातिपदिकस्य—'नदट्' इति टकारः, नदडिति पचादिषु पठ्यते। प्रत्ययस्य—'गुप्तिज्किद्भ्यः सन्' इति नकारः, आगमस्य—'त्रपुजतुनोः षुक्' इति ककारः, आदेशस्य च—'चक्षिङः ख्याञ्' इति ञकारः।

अग्निचिद्, सोमसुदिति। चिनोतेः सुनोतेश्चाग्निं चितवान् सोमं सुतवानिति क्विप्, तुक्।

ननु च हलिति प्रत्याहारपाठे योऽन्त्यो लकारस्तस्येत्संज्ञा न प्राप्नोति; इतरेतराश्रयत्वात्। तथा हि—इत्संज्ञायाम् 'आदिरन्त्येन सहेता' इति हलिति प्रत्याहारग्रहणं भवति। तस्मिंश्च तस्य लकारस्य हलन्त्यमितीत्संज्ञा। तदिदमितरेतराश्रयत्वं स्फुटतरमेव। 'इतरेतराश्रयाणि कार्याणि शास्त्रे न प्रकल्प्यन्ते' इत्यत आह—हस्य ल्

इत्यत्र लकारस्य इत्संज्ञा क्रियते। तथा च सति, 'हलन्त्यम्' इत्यत्र प्रत्याहारे नेतरेतराश्रयदोषो भवति ॥

## न विभक्तौ तुस्माः ॥ ४ ॥

पूर्वेण प्राप्तायामित्संज्ञायां विभक्तौ वर्तमानानां तवर्गसकारमकाराणां प्रतिषेध उच्यते। तवर्गः, 'टाङसिङसामिनात्स्याः'—वृक्षात्,

### पदमञ्जरी

प्रदीपः। स चेह प्रयत्नविशेषः, यथा—श्वेतो धावतीत्यत्र साधारणेनैकेनैव प्रयत्नेन द्वयोर्वाक्ययोरुच्चारितयोः फलं सम्पद्यते, तथेहाप्येकेन तन्त्रेण प्रबलेन द्वितीयं हल्ग्रहणमुपात्तं परिगृहीतं वेदितव्यम्। तस्य द्वितीयस्यार्थमाह—*हस्येति*। समीपसमीपिसम्बन्धे षष्ठीसमास इत्यर्थः। ततः किमित्याह—*तेनेत्यादि*। एतद् दर्शयति—हकारसमीपवर्तिनो लकारस्य न प्रत्याहारसमाश्रयणेनेत्संज्ञा, किं तर्हि? साक्षादुपादानेनेति। प्रत्याहारपाठः=अक्षरसमाम्नायः। *तथा चेत्यादि*। गतार्थम्। किं पुनस्तन्त्रे प्रमाणम्? अगृह्यमाणविशेषत्वमेव। ननु गृह्यते विशेषः—'कृत्रिमाकृत्रिमयोः कृत्रिमस्य ग्रहणम्' इति, कृत्रिमो हि प्रत्याहारः, सत्यम्; स एवासति तन्त्रेऽनुपपन्न इति त्वयैवोक्तम् ॥

*न विभक्तौ तुस्माः* ॥ वृक्षादिति तकारस्येत्संज्ञायाम् 'तित्स्वरितम्' स्यात्। ननु चादेशोत्तरकालं स्थानिवद्भावेनास्य विभक्तिसंज्ञा, उपदेशानन्तरमेवेत्संज्ञा प्राप्नोति? सत्यम्; प्रतिषेधसामर्थ्यात्तु भाविन्यपि विभक्तित्वे प्रतिषेधो भविष्यति। वर्गग्रहणं किम्? वृक्षानित्यत्रापि यथा स्यात्, क्व पुनरुपदेशे नकारोऽयमन्त्यः, न तावत्तस्य क्वचिदुपदेशः? 'शसो न' इत्यत्र त्वकारो नकारस्येत्संज्ञापरित्राणार्थं

### न्यासः

हलित्यादि। यदेकमावृत्तिभेदमन्तरेणाप्यनेकेषामुपकारं करोति तत् तन्त्रम्। यथा—प्रदीपः सुप्रज्वलितो बहूनां छात्राणामुपकारं करोति। इह तु प्रयत्नविशेषस्तन्त्रशब्देन विवक्षितः। तेन तन्त्रेण द्वितीयमत्र हल्ग्रहणमुपात्तं परिगृहीतं वेदितव्यम्। यथा श्वेतो धावतीत्येकेन प्रयत्नेन द्वे वाक्ये उच्चारिते भवतः, तथेहाप्येकेनैव प्रयत्नेन द्वौ हल्शब्दावुच्चारितावित्यभिप्रायः। हस्य ल् हलिति समीपिसामीप्यसम्बन्धे षष्ठी। तेनेत्यादि। यतस्तन्त्रेण न्यायेन द्वितीयं हल्ग्रहणं कृतम्, तेन प्रत्याहारपाठे हलित्यस्य लकारस्य हकारसमीपवर्तिनः साक्षादेव संज्ञित्वेनोपात्तस्येत्संज्ञा क्रियते, न तु प्रत्याहारसमाश्रयणेन। एवञ्च सति 'हलन्त्यम्' इत्यत्र प्रत्याहारपाठे इतरेतराश्रयदोषो न भवति ॥

न विभक्तौ तुस्माः ॥ वृक्षादित्यत्र तकारस्येत्संज्ञायां सत्याम् 'तित्स्वरितम्' इति

प्लक्षात् । सकारः, जस्—ब्राह्मणाः । तस्, थस्—पचतः, पचथः । मकारः—अपचताम्, अपचतम् ।

विभक्काविति किम् ? 'अचो यत्', 'ऊर्णाया युस्', 'रुचादिभ्यः श्नम्'। 'किमोऽत्', 'इटोऽत्' इत्यत्र प्रतिषेधो न भवति; अनित्यत्वादस्य प्रतिषेधस्य। 'इदमस्थमुः' इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते ॥

## आदिर्ञिटुडवः ॥ ५ ॥

'इत्' इति वर्तते । आदिशब्दः प्रत्येकमभिसंबध्यते । 'ञि, टु, डु' इत्येतेषां समुदायानामादितो वर्तमानानामित्संज्ञा भवति । 'ञिमिदा'—

### पदमञ्जरी

इति शक्यं वक्तुम् । इह तर्हि 'ज्ञस्य रन्' पचेरन्निति । *ब्राह्मणा इति* । रूपोदाहरणमेतत् । कार्योदाहरणं तु 'भवतः' इति । अत्र 'सिति च' इति पदत्वे जश्त्वं स्यात् । *पचतः पचथ* इत्यत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम् । *अपचतामित्यादि* । तामादयस्तसादीनामन्त्यादचः परे स्युः । 'किमोऽत्' इत्यस्य 'प्राग्दिशो विभक्तिः' इति विभक्तित्वम् । 'इटोऽत्' इत्यस्यापि स्थानिवद्भावेनेति तयोरपि प्रतिषेधः प्राप्नोति, तत्राह—*किमोऽदित्यादि* । अनित्यत्वं तु 'इदमस्थमुः' इति थमोरुकारोऽनुबन्धाद्विज्ञायते । क्वचित्तु वृत्तावेव 'इदमस्थमुः' इत्युकारानुबन्धनिर्देशादनित्यत्वमुपलक्ष्यते इति पठ्यते । *इदानीं तदानीमिति* । दानीमस्तु प्रतिषेधो भवत्येव । अनित्यत्वं हि ज्ञापितम्, न पुनः प्राग्दिशीयेष्वस्याप्रवृत्तिः ॥

*आदिर्ञिटुडवः* ॥ आदिशब्दः प्रत्येकमभिसंबध्यते, तेनैकवचनमुपपद्यते इति भावः । अत्र 'टु' इति न टवर्गस्य ग्रहणम्; उकारस्याननुनासिकत्वेनानुदित्त्वात्,

### न्यासः

स्वरितत्वं स्यात् । अपचताम्, अपचतमिति । पचेर्लङ्, 'तस्थस्थमिपां तान्तन्तामः' इति तान्तमादेशौ भवतः । 'किमोऽत्' इत्यत्राच्छब्दस्य 'प्राग् दिशो विभक्तिः' इति विभक्तिसंज्ञा, 'इटोऽत्' इत्यत्रापि स्थानिवद्भावेन; ततश्चेत्संज्ञाप्रतिषेधः प्राप्नोति, स कस्मान्न भवतीत्याह—अनित्यत्वादित्यादि । अनित्यत्वमस्य विधेः 'इदमस्थमुः' इत्यस्य मकारस्येत्संज्ञापरित्राणार्थादुकारानुबन्धाद् विज्ञायते । नित्यत्वे हि सत्येतस्मादेव प्रतिषेधान्मकारस्येत्संज्ञा न भविष्यतीत्युकारानुबन्धग्रहणमनर्थकं स्यात् ॥

आदिर्ञिटुडवः ॥ अत्र टुग्रहणेन 'अणुदित्सवर्णस्य चाप्रत्ययः' इति टवर्गस्य ग्रहणं कस्मान्न भवति ? उकारस्यानुनासिकत्वाप्रतिज्ञानात्, 'चुटू' इत्यत्र टुग्रहणाच्च । यद्यत्र टवर्गस्य ग्रहणं स्यात्, तदानेनैव प्रत्ययादेरपि सिद्धत्वाट् टुग्रहणमनर्थकं

मिन्नः। 'ञिधृषा'—धृष्टः। 'ञिक्ष्विदा'—क्ष्विण्णः। 'ञि इन्धी'—इद्धः। 'टुवेपृ'—वेपथुः। 'टुओश्वि'—श्वयथुः। 'डुपचष्'—पक्त्रिमम्। 'डुवप्'—उप्त्रिमम्। 'डुकृञ्'—कृत्रिमम्।

आदिरिति किम्? पटूयति, कण्डूयति। उपदेशे इत्येव—ञिकारीयति॥

पदमञ्जरी

'चुटू' इत्युत्तरत्र वर्गग्रहणाद्, ञिडुभ्यां साहचर्याच्च। *मिन्न इति*। 'आदितश्च' 'रदाभ्यां निष्ठातो नः'। *वेपथुरिति*। 'ट्वितोऽथुच्'। *उप्त्रिममिति*। 'ड्वितः क्त्रिः' 'क्त्रेर्मम् नित्यम्' यजादित्वात्संप्रसारणम्।

*पटूयतीति*। पृथ्वादिषु टुशब्दस्योपदेशः, अत्रेत्संज्ञायां सत्यामवयवे कृतं लिङ्गं समुदायस्य विशेषकमिति समुदायादथुच्प्रसङ्गः। केवलस्यानुदाहरणत्वम्; इत्कार्याभावात्। *कण्डूयतीति*। ननु चायं दीर्घान्तः कण्ड्वादिषूपदिश्यते, एवं तर्हि कण्डूमिच्छतीति क्यजन्तात् क्विपि कण्डु ब्राह्मणकुलं तदिच्छतीति पुनः क्यचि द्रष्टव्यम्, तत्रेत्संज्ञायामन्तरङ्गत्वादकृत एव दीर्घे भवत्ययं डुशब्दः, गणपठितश्च कण्डूशब्द एकदेशविकृत इति स्यात् प्रसङ्गः। *ञिकारीयतीति*। नायं समुदायः क्वचिदुपदिष्टः॥

न्यासः

स्यात्। मिन्न इति। 'ञीतः क्तः', 'आदितश्च' इतीट्प्रतिषेधः। वेपथुरिति। 'ट्वितोऽथुच्'। पक्त्रिममिति। 'ड्वितः क्त्रिः'। पाकेन निर्वृत्तम्, 'क्त्रेर्मम् नित्यम्' इति मप्। उप्त्रिममिति। वच्यादिसूत्रेण संप्रसारणम्।

पटूयतीति। 'सुप आत्मनः क्यच्', 'अकृत्सार्वधातुकयोः' इति दीर्घः। कण्डूयतीति। 'कण्ड्वादिभ्यो यक्'। कथं पुनरत्रेत्संज्ञाप्राप्तिः, यावता सूत्रे टुडुशब्दौ ह्रस्वान्तावुपात्तौ, दीर्घान्ताविमौ? नैतत्; यद्यपि दीर्घत्वे कृते दीर्घान्तावेतौ भवतस्तथाप्युपदेशे ह्रस्वान्तावेव, उपदेश इति चेहानुवर्तते। तत्र पटुशब्दस्य पृथ्वादिपाठाट् टुशब्दस्योपदेशे ह्रस्वान्तता सिद्धा। कण्डुशब्दस्य 'कण्ड्वादिभ्यो यक्' इत्यत्र पाठाड् डुशब्दस्यापि। द्विविधा हि कण्ड्वादयः—धातवः, प्रातिपदिकानि च। तत्र धातुः कण्डुशब्दो ह्रस्वान्तः। प्रातिपदिकं तु कण्डूशब्दो दीर्घान्तः।

अथ वा—यद्यप्युपदेश इति नानुवर्तते, तथापि दीर्घत्वे कृतेऽप्येकदेशविकृतस्यानन्यत्वादस्त्येव प्राप्तिः। ञिकारीयतीति। पूर्ववत् क्यच्। ञिकारशब्दो न क्वचित् पठ्यत इति तेनात्रेत्संज्ञा न भवति।। यदि स्यात्, लोपे कृते रूपं न सिद्ध्येत्॥

## षः प्रत्ययस्य ॥ ६ ॥

षकारः प्रत्ययस्यादिरित्संज्ञो भवति । 'शिल्पिनि ष्वुन्'—नर्त्तकी, रजकी ।

प्रत्ययस्येति किम् ? षोडः । षण्डः । षडिकः । आदिरित्येव—'अविमह्योष्टिषच्'—अविषः, महिषः ॥

### पदमञ्जरी

*षः प्रत्ययस्य* ॥ *रजकीति* । 'षिद्गौरादिभ्यश्च' इति ङीष् । कथं पुनरत्रोपधालोपः, यावता 'अनिदितां हल उपधायाः क्ङिति' इत्युच्यते ? ज्ञापयति—रञ्जेरक्ङित्यपि क्वचिदुपधालोपो भवतीति । *षोड इति* । षड् दन्ता अस्य 'वयसि दन्तस्य दतृ', षष उत्वम्, 'दतृदशधासूत्तरपदादेः ष्टुत्वम्' ; षषोऽन्त्यस्योत्वम्, उत्तरपदादेर्डकारः, षोडन्तमाचष्टे इति णिचि टिलोपे पचाद्यचि णिलोपः । *षण्ड इति* । 'षणु दाने' 'अमन्ताड्डः', 'उणादयो बहुलम्' इति बहुलवचनात् इत्संज्ञासत्वयोरभावः । *षडिक इति* । अनुकम्पितः षडङ्गुलिः 'बह्वचो मनुष्यनाम्नष्ठज् वा', 'ठाजादावूर्ध्वं द्वितीयादचः' इति ङ्गुलिशब्दस्य लोपः, यस्येतिलोपस्य स्थानिवद्भावात् षकारान्तेऽवधौ भसंज्ञाया अभावादन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वाज्जश्त्वम् । अत्रेत्संज्ञायां स्त्रीविवक्षायां ङीष्प्रसङ्गः । यद्यप्येते समुदाया न क्वाप्युपदिश्यन्ते, षकारस्तु षष उत्वम्, 'षणु दाने' इत्युपदेशस्थो भवति । *अविषः महिष इति* । *अविमह्योष्टिषच्* । नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति; ईकारस्य टित्वादेव सिद्धेः । न च पक्षे ङीषर्थः षकारः, ङीपोऽपि चितः परस्योदात्तनिवृत्तिस्वरेणोदात्तत्वात्, सत्यम्; अन्यतरस्यैव श्रवणार्थ उपदेशः स्यादिति टकारस्यापि शङ्क्येत ॥

### न्यासः

षः प्रत्ययस्य ॥ रजकीति । षित्त्वात् 'षिद्गौरादिभ्यश्च' इति ङीष् । अथ केनात्रानुनासिकलोपः ? 'अनिदिताम्' इति चेत् ? न; तत्र क्ङितीत्युच्यते, न चात्र क्ङित्प्रत्ययोऽस्ति, नैष दोषः; 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञाकरणं रञ्जेर्ज्ञापकम्—अक्ङित्यपि तस्यानुनासिकलोपो भवति, अन्यथा णौ रञ्जेरकारस्यानुपधात्वाद् 'अत उपधायाः' इति वृद्ध्या न भवितव्यमिति मित्संज्ञाकरणमनर्थकं स्यादित्येके ।

'घञि च भावकरणयोः' इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादक्ङित्यपि क्वचिद् रञ्जेरनुनासिकलोपो भवतीत्यपरे ।

षोड इति । षड् दन्ता अस्येति बहुव्रीहिः, 'वयसि दन्तस्य दतृ' इति दत्रादेशः,

## चुटू ॥ ७ ॥

चवर्गटवर्गौ प्रत्ययस्यादी इत्संज्ञौ भवतः। 'गोत्रे कुञ्जादिभ्यश्च्फञ्'—कौञ्जायन्यः। छस्य ईयादेशं वक्ष्यति। जस्—ब्राह्मणाः। झस्यान्तादेशं वक्ष्यति। 'शण्डिकादिभ्यो ञ्यः'—शाण्डिक्यः। टवर्गः,

### पदमञ्जरी

चुटू ॥ *आदी इदिति*। प्रारम्भे वर्त्तमानावित्यर्थः। *कौञ्जायन्य इति*। च्फञन्तात् 'व्रातच्फञोरस्त्रियाम्' इति स्वार्थे ञ्यः। *शण्डिकादिभ्यो ञ्य इति*। 'सोऽस्या-

### न्यासः

ऋकार उगित्कार्यार्थः, षष उत्वम्, 'दतृदशधासूत्तरपदादेः ष्टुत्वञ्च' पृषोदरादिपाठात् षषोऽन्त्यस्योत्वम्, 'आद्गुणः', उत्तरपदादिष्टुत्वमिति दकारस्य डकारः। षोडत् इति स्थिते षोडन्तमाचष्ट इति 'तत्करोति तदाचष्टे' इति णिच्, 'णाविष्ठवत् कार्यम् प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः—षोडयतीति, ततः पचाद्यच्, णिलोपः।

षण्ड इति ॥ 'षणु दाने'। 'अमन्ताड्डः', 'उणादयो बहुलम्' इति बहुलवचनाद् 'धात्वादेः षः सः' इति सत्वं न भवति। अथ वा—'षण्ड' इत्येतदव्युत्पन्नं प्रातिपदिकमिति।

षडिक इति। षडङ्गुलिदत्तशब्दाद् अनुकम्पायाम् 'बह्वचोऽमनुष्यनाम्नष्ठज्वा' इति ठच्। 'ठाजादावूर्ध्वं द्वितीयादचः' इति ङ्गुलिदत्तस्य लोपः, 'ठस्येकः' इतीकादेशः। षडशब्दस्य 'यस्येति च' इत्यकारलोपः, तस्य स्थानिवद्भावे सति व्यवधानात् षट्शब्दस्य 'यचि भम्' इति भसंज्ञा न भवति। अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् 'झलां जशोऽन्ते' इति जश्त्वम् = षकारस्य डकारः। यद्येषां षकारस्येत्संज्ञा स्यात्, स्त्रीविवक्षायाम् 'षिद्गौरादिभ्यश्च' इति ङीष् स्यात्। षण्डशब्दोऽयं यद्यपि बलीवर्दे वर्त्तते, तथापि स्त्रीगवीष्वपि षण्डधर्मयोगाद् वृत्तिरस्य सम्भवत्येव। यद्यप्येते षोडादयो लाक्षणिकाः, तथाप्युपदेशग्रहणेन षकारो विशिष्यत इति भवन्त्येतानि प्रत्ययग्रहणस्य प्रत्युदाहरणानि। भवति ह्यत्राप्युपदेशे षकारः।

अविषः, महिष इति। 'अव रक्षणे', 'मह पूजायाम्', 'अविमह्योष्टिषच्'। ननु च 'उणादयो बहुलम्' इति बहुलवचनात् प्रत्ययसंज्ञैवात्र न भवति, सत्यामपि तस्यामित्संज्ञा न भविष्यति, बहुलवचनात्, तत् कस्मादादिग्रहणमेतदनुवर्त्तते? एवं मन्यते—उत्तरार्थमवश्यमादिग्रहणमनुवर्तनीयम्। उत्तरार्थमनुवर्त्तमानमिहापि स्पष्टार्थं भविष्यति ॥

चुटू ॥ कौञ्जायन्य इति। च्फञन्ताद् 'व्रातच्फञोरस्त्रियाम्' इति स्वार्थे ञ्यः। छस्येयादेशं वक्ष्यतीति। इत्संज्ञापवादम्। शाण्डिक्य इति। 'शण्डिकादिभ्यो ञ्यः'

'चरेष्टः'—कुरुचरी, मद्रचरी। ठस्य इकादेशं वक्ष्यति। 'सप्तम्यां जनेर्डः'—उपसरजः, मन्दुरजः। ढस्यैयादेशं वक्ष्यति। 'अन्नाण्णः'—आन्नः।

पृथग्योगकरणमस्य विधेरनित्यत्वज्ञापनार्थम्। 'तेन वित्तश्चुञ्चुप्चणपौ'—केशचुञ्चुः, केशचणः। 'अवात्कुटारच्च'। 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः'—अवटीटः। आदिरित्येव—'कर्मणि घटोऽठच्'—कर्मठः॥

## लशक्वतद्धिते॥ ८॥

तद्धितवर्जितस्य प्रत्ययस्यादितो वर्तमाना लकारशकारकवर्गा इत्संज्ञा भवन्ति। लकारः, 'ल्युट् च'—चयनम्, जयनम्। शकारः, 'कर्तरि शप्'—भवति, पचति। कवर्गः, 'क्तक्तवतू निष्ठा'—भुक्तः, भुक्तवान्। 'प्रियवशे वदः खच्'—प्रियंवदः, वशंवदः। 'ग्लाजिस्थश्च

### पदमञ्जरी

भिजनः' इति तत्र वर्त्तते। *मन्दुरज इति*। 'ङ्यापोस्संज्ञाच्छन्दसोः' इति ह्रस्वः। *अन्नाण्ण इति*। 'धनगणं लब्धा' इत्यतो लब्धेति तत्रानुवर्त्तते। किमर्थो योगविभागः, 'चुटूषाः प्रत्ययस्य' इत्येक एव योगः क्रियतामत आह—*पृथगित्यादि*। *केशचुञ्चुः, केशचण इति*। अत्र चकारस्येत्संज्ञायाम् 'चितः' इत्यन्तोदात्तत्वं स्यात्, पित्करणन्तु पर्यायार्थं स्यात्। *अवात् कुटारच्चेति*। अनेन 'नते नासिकायाः संज्ञायाम्' इत्यत्र अवादित्यस्यानुवृत्तिर्दर्शिता॥

*लशक्वतद्धिते*॥ *प्रियंवद इति*। 'अरुर्द्विषदजन्तस्य मुम्'। *जिष्णुरिति*।

### न्यासः

इति शण्डिकोऽभिजनोऽस्येत्यर्थे ञ्यः, तत्र हि 'सोऽस्याभिजनः' इति वर्त्तते। मन्दुरज इति। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति मन्दुराशब्दस्य ह्रस्वत्वम्। 'अन्नाण्णः' आन्न इति। 'अन्नं लब्धा' इत्यर्थे णः। तत्र हि 'धनगणं लब्धा' इत्यतो लब्धेत्यनुवर्त्तते। अथ किमर्थं पृथग्योगः क्रियते, 'चुटूषाः प्रत्ययस्य' इत्येक एव योगः क्रियतामित्यत आह—पृथग्योगकरणमित्यादि। 'तेन वित्तः' इत्यादिनाऽस्य विधेरनित्यत्वज्ञापनस्य प्रयोजनं दर्शयति॥

लशक्वतद्धिते॥ प्रियंवद इति। 'प्रियवशे वदः खच्', 'अरुर्द्विषदजन्तस्य' इति मुम्। जिष्णुरिति। ग्लाजिस्थश्च क्स्नुः' इति। ये तु क्स्नुप्रत्ययं गितमि-

स्नुः'—ग्लास्नुः। जिष्णुः। भूष्णुः। 'भञ्जभासमिदो घुरच्'—भङ्गुरम्। 'टाङसिङसामिनात्स्याः'—वृक्षात्। वृक्षस्य।

अतद्धित इति किम्? चूडालः। लोमशः। कर्णिका॥

पदमञ्जरी

स्नुप्रत्ययस्य गित्त्वपक्षे गकारस्येदमुदाहरणम्। *चूडाल इति*। मत्वर्थे 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच्। अत्र लित्स्वरचित्स्वरयोः पर्यायः स्यात्। *लोमश इति*। अत्र प्रयोजनाभावादेव न भविष्यतीति शक्यं वक्तुम्। *कर्णिकेति*। 'कर्णललाटात् कनलङ्कारे' इति भवार्थे कन्। अत्र 'किति च' इति वृद्धिः स्यात्, रूपञ्च न सिध्येत्। अथ तुदिर्छिदिर्प्रभृतिषु इरित्यस्य समुदायस्य केनेत्संज्ञा? मा भूत्समुदायस्य, रेफस्य 'हलन्त्यम्' इति भविष्यति, इकारस्य 'उपदेशेऽजनुनासिक इत्' इति। 'इरितो वा' इत्यत्रापि—इश्च रश्चेरौ तावितावस्येति विग्रहः, न तु इरित्ययं समुदायः स इद्यस्येति। अवश्यं च इकारस्य पृथगित्संज्ञेषितव्या, स्वरितेत इत्यात्मनेपदं यथा स्यादिति। यद्येवम्, 'इदितो नुम् धातोः' इति नुम् प्राप्नोति, कुम्भीधान्यन्यायेन न भविष्यति। तद्यथा—कुम्भीधान्यः श्रोत्रिय इत्युच्यते, यस्य कुम्भ्यामेव धान्यं भवति; यस्य पुनः कुम्भ्यां चान्यत्र वा, नासौ कुम्भीधान्यः। नायं न्यायो नुम्विधौ शक्य आश्रयितुम्। इह हि न स्यात्—'टुनदि' नन्दथुरिति। ज्ञापकात् सिद्धम्, यदयम् 'न दृशः' इति क्सस्य प्रतिषेधं शास्ति, तज्ज्ञापयति—नेदितां नुम्भवति; अन्यथा दृशेरिदित्त्वान्नुमि सति अनिगुपधात्वात् क्सस्य प्राप्तिरेव नास्ति, किं तन्निषेधेन! परिहारान्तरमप्यत्र नुम्विधौ वक्ष्यते॥

न्यासः

च्छन्ति तन्मतेनेदं गकारस्योदाहरणम्। ये तु कितमिच्छन्ति तन्मतेनेदमपि ककारस्योदाहरणं भवति।

चूडाल इति। मत्वर्थे 'प्राणिस्थादातो लजन्यतरस्याम्' इति लच् प्रत्ययः। ननु च प्रयोजनाभावादत्रेत्संज्ञा न भविष्यति, लित्प्रत्ययात् पूर्वस्योदात्तत्वं प्रयोजनमिति चेत्, न; चित्स्वरस्य हि सर्वस्वरस्यापवादत्वात् प्रत्ययस्वरेण ह्यन्तोदात्तत्वे सिद्धे चित्करणस्यैतत् प्रयोजनम्—चित्स्वर एव यथा स्यात्, योऽन्यः स्वरः प्राप्नोति स मा भूदिति। इदं तु प्रत्युदाहरणम्—लोमान्यस्य सन्तीति 'लोमादिपामादि' इत्यादिना शः, लोमशः? एतदपि नास्ति, अत्रापि प्रयोजनाभावादेवेत्संज्ञा न भविष्यति। इदं तर्हि प्रत्युदाहरणम्—'कर्णललाटात् कनलङ्कारे' इति भवार्थे कन्, कर्णिका, यद्यत्रेत्संज्ञा स्यात् 'किति च' इत्यादिवृद्धिः स्यात्, ततश्च रूपमेव न सिद्ध्येत्? यद्येवम्, इदमेवोपन्यसनीयम्, नेतरे? एवं मन्यते—एतदर्थम् 'अतद्धिते' इति क्रियमाणमिहापि मन्दधियां प्रतिपत्तिगौरवं परिहर्तुं चूडालः, लोमश इत्येवमर्थमपि भवितुमर्हतीति॥

## तस्य लोपः ॥ ९ ॥

तस्येत्संज्ञकस्य लोपो भवति । तथा चैवोदाहृतम् । तस्य ग्रहणं सर्वलोपार्थम् । अलोऽन्त्यस्य मा भूत्–'आदिर्ञिटुडवः' इति ॥

## यथासंख्यमनुदेशः समानाम् ॥ १० ॥

संख्याशब्देनात्र क्रमो लक्ष्यते । यथासंख्यं यथाक्रममनुदेशो भवति ।

### पदमञ्जरी

*तस्य लोपः* ॥ तस्य ग्रहणं किमर्थम्, यावताऽभावो लोपः, स च कस्यचिदेव भवति, तत्र प्रकरणादित्संज्ञकस्यैव लोपो भविष्यतीत्यत आह—*तस्य ग्रहणमित्यादि* । *आदिर्ञिटुडव इति* । असति तस्य ग्रहणे येऽनेकाल इत्संज्ञका ञिप्रभृतयस्तेष्वलोऽन्त्यस्य लोपः स्यात्, तस्य ग्रहणसामर्थ्यात्तु सर्वस्य भविष्यति । एतच्च 'नानर्थकेऽलोन्त्यस्य विधिः' इत्यनाश्रित्योक्तम् ॥

*यथासङ्ख्यमनुदेशः समानाम्* ॥ *सङ्ख्याशब्देनात्र क्रमो लक्ष्यत इति* । कथम् ? अव्यभिचारात् । यत्रैक एवोद्देश्यनुद्देशी च, यथा 'मुद्रादण्' इति, न तत्र नियमप्रसङ्ग इत्यनेकत्वसङ्ख्याया एवेह ग्रहणम् । सा च क्रमं न व्यभिचरति; युगपदनेकस्य शब्दस्योच्चारयितुमशक्यत्वात् । मुख्ये त्वर्थेऽयमर्थः स्यात्—समानां समसङ्ख्यानामुद्देशिनां या सङ्ख्या चतुरादिलक्षणा तया उद्देश्यः सम्बध्यते = तत्सङ्ख्याको भूत्वा सम्बध्यते इति, ततश्चानर्थकमेव स्यात्; समत्वादेवास्यार्थस्य सिद्धत्वाद् । अतः क्रमपर एव सङ्ख्याशब्द इति । यथाक्रमग्रहणं तु न कृतम्, सङ्ख्याद्वारकं साम्यं यथा विज्ञायेत; अन्यथा स्थानप्रयत्ना-

### न्यासः

तस्य लोपः ॥ अथ किमर्थम् 'तस्य' इत्युच्यते, यावतेत्संज्ञायाः प्रकृतत्वाद् यस्येत्संज्ञा विहिता सामर्थ्यात् तस्यैव लोपो भविष्यतीत्यत आह—तस्य ग्रहणमित्यादि । कः पुनरित्संज्ञको योऽलोऽन्त्यस्य निवृत्त्यर्थं तस्य ग्रहणं प्रयोजयतीत्याह—आदिर्ञिटुडव इति । असति तस्य ग्रहणे, एषामपि ञिप्रभृतीनाम् 'अलोऽन्त्यस्य' इति वचनादन्त्यस्य लोपः स्यात् । तस्य ग्रहणेन तु प्रकृत इत्संज्ञके सन्निधापिते सर्वस्य लोपो भवति, नान्त्यस्य; अन्यथा हि तस्य ग्रहणमनर्थकं स्यात् । यदि तु 'नानर्थकेऽलोऽन्त्यविधिः' इत्येषा परिभाषाऽऽश्रीयते, तदा तस्य ग्रहणमकर्तुं शक्यते । तत् क्रियते विस्पष्टार्थम् ॥

यथासंख्यमनुदेशः समानाम् ॥ संख्याशब्देनात्र क्रमो लक्ष्यत इति । यत्रानेके उद्देशिनोऽनुदेशिनश्च, तत्रानियमेन सम्बन्धे प्राप्ते नियमार्थमिदमारभ्यते । यत्रोद्देशिनोऽनुदेशिनोऽनेकसंख्याः; तत्रावश्यं संख्याभेदेन भवितव्यम् । यत्र च संख्याभेदः,

अनुदिश्यत इत्यनुदेशः। पश्चादुच्चार्यत इत्यर्थः। समानाम् = समसंख्यानां समं परिपठितानामुद्देशिनामनुदेशिनां च यथाक्रममुद्देशिभिरनुदेशिनः

पदमञ्जरी

दिकृतमपि समत्वं प्रतीयेत। ननु च क्रियमाणमपि सङ्ख्याग्रहणं क्रमपरमिति कथमतः संख्यासाम्यप्रतिपत्तिः ? सत्यम्; क्रमे शब्दः पर्यवस्यति, मुख्योऽप्यर्थः प्रतीयते। स हि प्रतीतो लाक्षणिकं गमयति; तस्मात् संख्याग्रहणसामर्थ्यात् तद्द्वारकमेव साम्यं गृह्यते। *यथासंख्यमिति*। 'यथाऽसादृश्ये' इति वीप्सायामव्ययीभावः। *अनुदेशो भवतीति*। सम्बन्धी भवतीति द्रष्टव्यम्। तथा च वक्ष्यति—*अनुदेशिनः सम्बध्यन्ते इति*। *अनुदिश्यत इत्यनुदेश इति*। 'अकर्त्तरि च कारके संज्ञायाम्' इत्यसंज्ञायामपि कर्मणि घञ्। अनुशब्दः पश्चादर्थे, दिशिरुच्चारणक्रिय इत्याह—*पश्चादुच्चार्यत इत्यर्थ इति*। यदुक्तं संख्याद्वारकं साम्यं गृह्यते इति तद्दर्शयति—*समानां समसंख्यानाम्*। अस्यैव विवरणम्—*समं पठितानामिति*। *उद्देशिनामिति*। कश्चिद्धर्मं विधातुं प्रसिद्धवच्छब्दपरामर्शयोग्येन रूपेण उपादानमुद्देशः, तद्वन्त उद्देशिनः; विधेयतया पश्चादुच्चारणमनुदेशः, तद्वन्तोऽनुदेशिनः। यद्यपि सूत्रे उद्देशिनो न श्रुतास्तथाप्यनुदेशशब्दस्य सम्बन्धिशब्दत्वात् समसंख्यत्वस्य च प्रतियोग्यपेक्षत्वात् त एव गम्यन्ते। उद्देशिनामनुदेशिनां चेति यथाक्रममित्येतदपेक्षया षष्ठ्यौ। *यथाक्रममिति*। पूर्ववदव्ययीभावस्तृतीयान्तं चैतत्।

तदयमत्रार्थः—समसंख्यानामुद्देशिनामनुदेशिनां च यो यः क्रमः=प्रथमचरमभावस्तेन तेनानुदेशिनः सम्बध्यन्ते, उद्देशिभिः सहेत्यर्थाद् गम्यते। क्वचित्

न्यासः

तत्र नियतभावी क्रमः; संख्याभेदवतां युगपदुच्चारयितुमशक्यत्वात्। अतः साहचर्यात् संख्याशब्देन क्रमो लक्ष्यते। अर्थधर्मत्वं तु शब्दे समारोप्य संख्याशब्देन क्रमो लक्ष्यत इत्युक्तम्। यथाक्रमग्रहणं कथं न कृतम् ? वैचित्र्यार्थम्।

*यथासंख्यमिति*। *यथाऽसादृश्ये*' इति वीप्सायामव्ययीभावः। *अनुदिश्यत इत्यनुदेश इति*। 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ्। *पश्चादुच्चार्यत इति*। अनुशब्दस्य पश्चादर्थवृत्तित्वाद्दिशेश्चोच्चारणक्रियत्वात्। *समसंख्यानामिति*। समसंख्यतया समानत्वं दर्शयति। *समगणनपरिपठितानामिति*। तमेवार्थं शब्दान्तरेण व्यक्तीकरोति। *उद्देशिनामनुदेशिनाञ्चेति*। यथाक्रममित्येतदपेक्षया षष्ठी। उद्देशिनो यद्यपि सूत्रे न श्रूयन्ते, तथापि सम्बन्धित्वात् पश्चाद्भावस्यानुदेशग्रहणाल्लभ्यन्ते। *यथाक्रममिति*। पूर्ववद् वीप्सायामव्ययीभावः, तृतीयान्तञ्चैतत्; तदयमत्रार्थः—उद्देशिनामनुदेशिनाञ्च योऽयं क्रमस्तेन क्रमेणानुदेशिनः सम्बध्यन्त उद्देशिभिः सहेति।

संबध्यन्ते । 'तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः' । प्रथमात् प्रथमः, द्वितीयाद् द्वितीय इत्यादि । तौदेयः । शालातुरीयः । वार्मतेयः । कौचवार्यः ।

समानामिति किम् ? 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः' । लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्त्रयः; सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा भवति ।

पदमञ्जरी

उद्देशिभिरिति पठ्यते । तत्र सहयोगे तृतीया । *प्रथमाद् प्रथम* इत्यादिना सूत्रार्थमुदाहरणे योजयति । वहन्ति, वर्षन्ति, नदन्तीत्यादौ लोक एव यथासंख्यसम्बन्धस्य दृष्टत्वान्नार्थ एतेन ? उच्यते; व्युत्क्रमेणापि सम्बन्धो लोके दृश्यते—कन्याब्रह्मचारिणौ, दण्डकन्दुकहस्ताविति । योग्यतावशादत्र सम्बन्ध इति चेत्; क्रमेणापि सम्बन्धः, तद्वशादेव योग्या हि नद्यो वहने, घनाश्च वर्षणे । अत एवैकस्य धर्मिणि बहुषु धर्मेषु विहितेषु विधानक्रमेणान्यथा वा योग्यतानुरूप एव सम्बन्धो भवति—अमुमुद्वर्त्तय, स्नापय, भोजय; भोजय, स्नापय उद्वर्त्तयेति ! स्यादेतत्—'स्वतः प्राप्तिरियं यदुक्तक्रमेण सम्बन्धः । तथा हि, योग्यताविशेषानवधारणे प्रथमप्रतीतयोः सम्बन्धः, बाधकाभावात् । तावता हि द्वयोरपि चरितार्थत्वम्, द्वितीयस्य धर्मिणो धर्मस्य वा प्रतियोग्यपेक्षायां प्रथमश्रुतस्य चरितार्थत्वाद्, अचरितार्थेन द्वितीयेन प्रतियोगिना सम्बन्धः । एवं सर्वत्र तस्मात् स्वतः प्राप्त्या क्रमसम्बन्धः सिद्धः' इति । यद्येवम्, 'लक्षणेत्थम्भूताख्यान' इत्यादौ वैषम्येऽप्येवमेव स्याद्, यावतां साम्यं तावतामादितः क्रमेण सम्बन्धः, परिशिष्टस्य तु सर्वैरनन्तरेण वेत्यतः समानामिति वक्ष्यामीत्यारम्भः ।

स्वरितेनेति विशेषं वक्ष्यामीति । क्वचिद्धि साम्येऽपि नेष्यते । अथारभ्यमाणेऽप्यस्मिन् परस्मैपदानां णलादयः, 'लुटः प्रथमस्य डारौरसः', 'एचोऽयवायावः' इत्यत्र कथमस्य प्रवृत्तिः, यावता परस्मैपदादिसंज्ञया युगपदेव संज्ञिनां प्रतीतिः, न क्रमेण ? सत्यम्; तिबादिसूत्रे, अक्षरसमाम्नाये च तिबादयः क्रमेण प्रतीताः, स एव क्रमो नियामको भविष्यति । एवं द्वन्द्वेऽपि । पाघ्रेत्यादौ

न्यासः

यद्यप्युद्देशिनामिति षष्ठ्यन्तं प्रकृतम्, तथाप्यर्थाद्विभक्तेर्विपरिणामो भविष्यतीति तृतीयान्तं सम्पद्यते । प्रथमात् प्रथम इत्यादिना यथाक्रमसम्बन्धं दर्शयति । आदिशब्दस्तृतीयात् तृतीयः, चतुर्थाच्चचतुर्थ इत्यादि परिग्रहाय । तौदेय इत्यादौ 'सोऽस्याभिजनः' इत्यत्रार्थे तद्धितः ।

इह कस्मान्न भवति—'वेशोयशआदेर्भगाद्यल् ख च' इति ? स्वरितेन लिङ्गेन यथासंख्यम्। यत्र नेष्यते, तत्र स्वरितत्वं न प्रतिज्ञायते। 'स्वरितेनाधिकारः' इति स्वरितग्रहणं पूर्वेणापि संबध्यते।

पदमञ्जरी

युगपदधिकरणवचनतायां द्वन्द्वेऽपि क्रमस्य प्रतीतेः स एव नियामकः। ननु च तिपो णल्, तसोऽतुस्, पः पिबः, घ्रो जिघ्रः—इत्येवं भिन्नवाक्यतयोपदेशोऽस्तु, एवं हीदं न वक्तव्यं भवति ? सत्यम्; एवं तु गौरवं स्यात्, तस्य रूपेणानिर्देशात्, तत्र विभक्तेर्भेदेनोच्चारणाच्च। तथा 'विदो लटो वा' इत्यत्रानन्तर्यान्मसो मेत्येव सम्बध्येत, तदाह—'संज्ञासमासनिर्देशात् सर्वप्रसङ्गोऽनुदेशस्य। तत्र यथासंख्यवचनं नियमार्थम्, संज्ञासमासनिर्देशश्च पृथग्विभक्तिसंश्रयनुच्चारणार्थः, प्रकरणे च सर्वसम्प्रत्यार्थः' इति। तौदेय इत्यादौ 'सोऽस्याभिजनः' इत्यत्रार्थे प्रत्ययः।

*इहेत्यादि*। एकयोगत्वपक्षे चोद्यम्, भिन्नयोगपक्षे तु योगविभागो यथासंख्यनिरासार्थं इति वक्ष्यति। केचित्तु विभज्य योगं पठन्ति, अन्ये त्वेकमेव। *स्वरितेनेत्यादि* परिहारः। कथं पुनरयं विशेषो लभ्यत इत्याह- *स्वरितेनाधिकार इत्यादि*। यद्येवम्, स्वरिते दृष्टे सन्देहः स्यात्, न ज्ञायते—किमयं यथासंख्यार्थः ? आहोस्विदधिकारार्थः ? इति। सन्देहमात्रमेतद् भवति, सर्वसन्देहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति। तत्र व्याख्यानान्निर्णयो भविष्यति॥

न्यासः

इहेत्यादि। 'वेशोयश आदेर्भगात्' इति द्वे प्रकृती, 'यल्खौ' इति प्रत्ययावपि द्वावेव; अतो यथासंख्येन भवितव्यमित्यभिप्रायः। इह केनचिदाचार्येण शिष्याः प्रतिग्राहिताः—'वेशो यश आदेर्भगाद्यल् ख च' इत्येको योगः। अन्ये तु द्वावेतौ योगाविति—'वेशोयश आदेर्भगात्' इत्येको योगः, 'यल् ख च' इति द्वितीयः। तत्र य एक एवायं योग इत्येवं शिष्या ग्राहितास्तान् प्रत्ययं प्रश्नः। वृत्तिकारेणापि तन्मतमेवाश्रित्य 'स्वरितेन' इत्यादिना परीहार उक्तः। ये तु द्वावेतौ योगावित्येवं ग्राहितास्तान् प्रत्येप प्रश्नो नास्ति; योगविभागेनैव यथासंख्यस्य निरस्तत्वात्। तथा च तत्र वक्ष्यति—'योगविभागो यथासंख्यस्य निरासार्थः'। यदि योगविभागे सति यथासंख्यं स्याद्, योगविभागकरणमनर्थकं स्यादित्यभिप्रायः। कथं पुनः स्वरितेन लिङ्गेन यथासंख्यं लभ्यते, यावता नेह स्वरितग्रहणमस्तीत्याह—स्वरितेनाधिकार इत्यादि। 'स्वरितेनाधिकारः' इति योगं विभज्य 'स्वरितेन' इत्येको योगः, 'अधिकारः' इति द्वितीयः। तत्र प्रथमो योगः पूर्वेणापि 'यथासंख्यम्' इत्यादिना सम्बध्यते। अपि-

## स्वरितेनाधिकारः ॥ ११ ॥

'स्वरितेन' इति इत्थम्भूतलक्षणे तृतीया। स्वरितो नाम स्वरविशेषो वर्णधर्मः, तेन चिह्नेनाधिकारो वेदितव्यः। अधिकारः= विनियोगः। स्वरितगुणयुक्तं शब्दरूपमधिकृतत्वादुत्तरत्रोपतिष्ठते।

### पदमञ्जरी

*स्वरितेनाधिकारः* ॥ अत्र पारिभाषिकस्य स्वरितस्य ग्रहणे 'रषाभ्यान्नो णः' इत्यादौ नकारादेर्व्यञ्जनस्याधिकारोपलक्षणं नोक्तं स्याद्, पारिभाषिकस्याज्धर्मत्वादिति मत्वाह—*स्वरितो नाम वर्णधर्म इति*। वर्णमात्रधर्म इत्यर्थः। स चायं धर्मः कलाध्मातादितुल्यः केवलं सूत्रेष्वेव भवति, न प्रयोगे। क्वचित्तु *स्वरितो नाम स्वरदोषो वर्णधर्म* इति पाठः। तत्र स्वरदोषः=उच्चारणदोषः, अधिकारशब्दो भावसाधनः। *विनियोग इति*। व्यापारणम्। अथ शब्दस्य विनियुक्तस्य को व्यापार इत्याह—*अधिकृतत्वादुत्तरत्रोपतिष्ठत इति*। उपस्थानमप्येतदेव यदुतास्य तत्रबुद्धिस्थता। उत्तरत्रेत्युपलक्षणम्, क्वचित् पूर्वत्राप्युपतिष्ठते; सूत्रकारेण पठितस्यास्य स्वरितत्वस्य संकीर्णत्वात् पाठस्य विषयविभागो दुर्ज्ञेय इत्याह—*प्रतिज्ञास्वरिता इति*। *प्रत्यय* इत्याद्युदाहरणानि।

### न्यासः

शब्दात् परेणापि 'अधिकारः' इत्यनेन। यदि तर्हि स्वरितेन लिङ्गेन यथासंख्यम् भवति, एवं हि सति सन्देहः स्यात्। तथा हि—यथासंख्यमिति स्वरितेनाधिकारोऽपि, तत्र न ज्ञायते—किमधिकारार्थः स्वरितानुषङ्गः? अथ वा यथासंख्यार्थ इति? सन्देहमात्रमेतत्। सर्वसन्देहेष्विदमुच्यते—'भवति व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति॥

स्वरितेनाधिकारः॥ इत्थम्भूतलक्षणे तृतीयेति। स्वरितेन चिह्नेनाधिकारस्योपलक्षणीयत्वात्। यदि पारिभाषिकस्येह स्वरितस्य ग्रहणं स्याद्, 'रषाभ्यां नो णः समानपदे' इत्यत्र णकाराणणकारस्याधिकारता न स्यात्; पारिभाषिकस्याज्धर्मत्वात्। णकारस्यानच्कत्वादिति मत्वा सर्वेषां वर्णानामचां हलाञ्च स्वरिताख्यो यो वर्णधर्मो गुणस्तस्येदं ग्रहणम्, न परिभाषिकस्येति दर्शयन्नाह—स्वरितो नाम स्वरदोषो वर्णधर्म इति। वर्णधर्मस्य तु ग्रहणमधिकारावगमाय। स इह हल्यपि स्वरितासञ्जनाद् विज्ञायते। अधिकारो विनियोग इति। व्यापारकरणम्। अधिकृतत्वादुत्तरत्रोपतिष्ठत इति। यथा पुरुषो यत्राधिकृतो नगरादौ तत्रैवोपतिष्ठते, तथा स्वरितगुणयुक्तं शब्दरूपं नियुक्तं सूत्रकारेण तत्र तत्रोपतिष्ठते। 'उत्तरत्र' इति वचनमुपलक्षणार्थम्। क्वचित् पूर्वत्राप्युपतिष्ठत एव।

प्रतिज्ञास्वरिताः पाणिनीयाः—'प्रत्ययः', 'धातोः', 'ङ्याप्प्रातिपदिकात्', 'अङ्गस्य', 'भस्य', 'पदस्य' ॥

### पदमञ्जरी

किमर्थं पुनरिदमुच्यते, यावता निर्दिश्यमानं लोकेऽधिक्रियते, यथा—देवदत्ताय गौर्दीयतां कम्बलश्चेति देवदत्तायेति गम्यते, तथा 'स्तृ स्थिरे' इत्यादीनां साकाङ्क्षत्वादनुवृत्तेर्घञादिभिरेव सम्बन्धो भविष्यति ? अन्यनिर्देशस्तन्निवर्त्तकः, तद्यथा—देवदत्ताय गौर्दीयताम्, विष्णुमित्राय कम्बल इति कम्बलो गोर्निवर्त्तको भवति, तथेहापि 'अभिविधौ भावे' इतीनुण् घञो निवर्त्तकः स्यात्, ततश्च 'आक्रोशेऽवन्योर्ग्रहः' इत्यादिष्वनन्तर इनुणेव स्यात्, तस्मात्परिभाषा। अधिकारपरिमाणज्ञानं तु न ज्ञायते—कियन्तमवधिमधिकारोऽनुवर्त्तत इति ? यथा—प्रागभ्यासविकारेभ्योऽङ्गाधिकारः ? उतासप्तमपरिसमाप्तेः ?, धातोरिति प्राक् लादेशेभ्यः ? उताध्यायस्य परिसमाप्तेः ? एवं तर्ह्युभयार्थमिदम्—अधिकारार्थं च निवृत्त्यर्थं च। कथम् ? स्वरितेनाधिकारः स्वरिते दृष्टेऽधिकारो न भवतीत्यर्थः, तेन 'विंशतिकात् खः' इत्यत्र स्वरितत्वं प्रतिज्ञेयं तद्दर्शनाच्च द्वित्रिपूर्वादित्यस्य निवृत्तिरवसीयते। एवमपि स्वरिते दृष्टे संदेहः स्यात्—किमयमधिकारार्थः ? आहोस्वित् प्रकृतस्य निवृत्त्यर्थ इति ? एवं तर्हि यस्य यावत्सु योगेष्वनुवृत्तिरिष्यते तत्र तावतिथोऽलनुबन्धनीयः, यथा—'द्वित्रिपूर्वान्निष्कात्' इत्यत्रेकारः। तेन द्वयोर्योगयोरनुवृत्तिर्भविष्यति। एवमन्यत्रापि यत्र तावतिथोऽल् नास्ति तत्र प्राग्वचनं कर्त्तव्यम्, यथा—'अङ्गस्य प्राक् टेः' इति तद् गुरु भवति। स्यादेतत्, व्याख्यानात् परिमाणं ज्ञास्यते इति ? अधिकारोऽपि

### न्यासः

क्व पुनरस्य सद्भावो भवति ? क्व च वा न भवति ? इत्याह—प्रतिज्ञास्वरिताः पाणिनीया इति। प्रतिज्ञया स्वरितो येषां ते तथोक्ताः। तदेतदुक्तं भवति—यत्रैव त आचार्याः स्वरितत्वं प्रतिजानते तत्रैवास्य सद्भावो भवति, नान्यत्रेति। तदपि प्रतिज्ञानं नानियमेन भवति, किं तर्हि ? यत्राचार्याः स्मरन्ति तत्रैव भवति। स चायं धर्मः कलाद्युपम इति वेदितव्यः। कार्यार्थमुपादीयते, कृतकार्यस्तु निवर्तते; न तु प्रयोगसमवायी भवति। 'प्रत्ययः' इत्यादिना येऽधिकाराः स्वरितेनावच्छिद्यन्ते तेषामुदाहरणानि दर्शयति। अथ किमर्थोऽयमधिकारः क्रियते ? प्रतियोगं तस्य ग्रहणं मा कार्षीदित्येवमर्थमिति चेत्, न; यथा देवदत्ताय गौर्दीयतां कम्बलश्चेत्युक्ते न च पुनरुच्यते देवदत्तायेति, अथ च प्रस्तुतत्वाद्देवदत्तस्य कम्बलश्चेत्यस्य साकाङ्क्षत्वात् तेनैव सम्बन्धो भवति; तथा च 'स्तृ स्थिरे' 'भावे' इत्येवमादीनामपि वाक्यानां साकाङ्क्षत्वाद् घञादीनाञ्च प्रस्तुतत्वात् तैरेव सम्बन्धो भविष्यति, तत्

## अनुदात्तङित आत्मनेपदम् ॥ १२ ॥

अविशेषेण धातोरात्मनेपदं परस्मैपदं च विधास्यते, तत्रायं

पदमञ्जरी

तर्हि व्याख्यानात् ज्ञायताम् । इनुण्घञिति संदेहे घञिति व्याख्यास्यामः, इनुण आनन्तर्यम्, घञोऽप्यनुवृत्तिसामर्थ्यं दृष्टमित्यस्त्येव संदेहः । 'ग्रहवृदृनिश्चिगमश्च' इत्यादिषु त्वनन्तरस्याप एवाधिकारः, न दृष्टानुवृत्तिसामर्थ्यस्यापि घञः; सिद्धत्वाद्, व्याख्यानाद्वा । यदप्युत्प्रेक्षितम्—आकांक्षारहितेऽपि वाक्ये प्रकृतस्य सम्बन्धार्थं शास्त्रीयोऽधिकारः—यथा 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यत्र पञ्चम्यधिकार इति । तत्रापि व्याख्यानमेव शरणमिति तदेव सर्वत्रास्तु नार्थ एतेन ? इदं तर्हि प्रयोजनम्—अन्यत्र दृष्टस्याधिकारस्य स्वरितेनोपलक्षणं यथा स्याद्, यथा—'गोस्त्रियोरुपसर्जनस्य' इत्यत्र स्त्रीग्रहणस्य, न ह्येतल्लौकिकेनाधिकारेण सिद्धम्, आनुषङ्गिकं वास्य प्रयोजनं यत् साकाङ्क्षेषु व्यहितस्य चानुवृत्तिः ॥

*अनुदात्तङित आत्मनेपदम्* ॥ *अविशेषेणेत्यादि* । लस्य तिबादयः, 'लटः शतृशानचौ' 'लिटः कानज्वा' 'क्वसुश्च' 'लृटः सद्वा' इत्यात्मनेपदपरस्मैपदयो-

न्यासः

किमधिकारेण ? सत्यमेतत्; यत्रान्यनिर्देशो नास्ति तत्रोपतिष्ठते, यत्र त्वन्यनिर्देशस्तत्रासौ प्रकृतस्य निवर्तक एव स्यात् । तथा हि—गौर्दीयतां यज्ञदत्ताय कम्बलो विष्णुमित्रायेत्युक्तेऽन्यनिर्देशेन प्रस्तुतो देवदत्तो निवर्तते । एवञ्चान्यनिर्देशेनास्य निवर्तकत्वे सति 'अभिविधौ भाव इनुण्' इत्यस्येनुणो निर्देशेन प्रस्तुतस्य घञो निवर्तितत्वाद् 'आक्रोशेऽवन्योर्ग्रहः' इत्यत्रानन्तरेणेनुणा संबन्धः स्यात्, न पुनर्व्यवहितेन घञा, घञ् त्विष्यते । ननु च दृष्टानुवृत्तिसामर्थ्याद् घञेवानुवर्तिष्यते, तेनैवाभिसम्बन्धो भविष्यति, तथा च तत्र वक्ष्यति—'दृष्टानुवृत्तिसामर्थ्यात् तत्र घञेवानुवर्तते, नानन्तर इनुण्' इति ? नैतदस्ति; यदि दृष्टानुवृत्तिसामर्थ्याद् घञ एवानुवृत्तिः स्यात्, तदा 'ऋदोरप्' इत्यत्रोत्तरेष्वपि योगेषु घञेवानुवर्त्तेत, नाप्प्रत्ययः । यत् पुनर्वक्ष्यति—'दृष्टानुवृत्तिसामर्थ्यात्' इति, तत्र दृष्टानुवृत्तिसामर्थ्यशब्देन स्वरितत्वमेवोक्तम् । दृष्टमनुवृत्तौ सामर्थ्यम्—अधिकृतस्य शब्दरूपस्य यस्मादिति बहुव्रीहिं कृत्वा । तस्मात् स्वरितत्वादित्ययमत्रार्थः । यद्ययमर्थः सूत्रकाराभिमतः स्यात्, स्वरितत्वादिति कस्मान्नोक्तमिति चेत् ? न; स्वच्छन्दतो हि वचसां प्रवृत्तिः, अर्थस्तु परीक्षणीय इत्यचोद्यमेतत् । तदेवं यतोऽन्यनिर्देशः प्रस्तुतस्य निवर्त्तको भवति तस्मादधिकारः कर्त्तव्यः । तस्मिंश्च क्रियमाणे तदवगमोपायदर्शनाय 'स्वरितेनाधिकारः' इत्येतदपि कर्त्तव्यः ॥

अनुदात्तङित आत्मनेपदम् ॥ तत्रायं नियमः क्रियत इति । विधीयमानत्वात्

पदमञ्जरी

विहितत्वादापादपरिसमाप्तेर्नियमार्थं प्रकरणमित्यर्थः। एकवाक्यतया विधावितरेतराश्रयणप्रसङ्गः। स्यादेतत्—"यथा 'बहुषु बहुवचनम्', 'कर्मणि द्वितीया', 'ङ्याप्प्रातिपदिकात्' इत्येतैरेकवाक्यभूतैः स्वादीनां विशिष्टविधिः; एवमनेन प्रकारेण लस्य तिबादय इत्यादिभिश्च तिङामपि विशिष्टविधिरस्तु" इति, यद्येवम्; आत्मनेपदपरस्मैपदसंज्ञाभ्यां तिबादीनां विधिः, विहितानां च संज्ञाभ्यां भाव्यमितीतरेतराश्रयं प्राप्नोति। स्वरूपेण विशिष्टविधौ शत्रादिष्वतिप्रसङ्गः। स्यान्मतम्—लस्य 'तिप्तस्झिसिप्थस्थमिप्वस्मस्' लस्य तिबादयो भवन्ति, ततः 'अनुपराभ्यां कृञः'—कर्त्रर्थेऽनुपूर्वात् करोतेः परस्य लस्य तिबादयो भवन्ति। किमर्थमिदम् ? 'गन्धनावक्षेपणस्वरितञितः' इति वक्ष्यति, तद्बाधनार्थं कर्तृग्रहणम्; 'भावकर्मणोः' इति वक्ष्यमाणस्य तङो बाधो मा भूदिति। एवम् 'अभिप्रत्यतिभ्यः क्षिपः' इत्यादि 'लुटि च क्लृपः' इत्येवमन्तं कृत्वा ततः 'अनुदात्तङितस्ताताञ्झथासाथान्ध्वमिड्वहिमहिङ्', अनुदात्तङितः परस्य लस्य तादयो भवन्ति, तिबादीनामपवादः, ततो 'भावकर्मणोः' इत्यादि, 'विभाषोपपदेन प्रतीयमाने' इत्येवमन्तं करिष्यते, तत्रायमप्यर्थः—आत्मनेपदग्रहणं शेषग्रहणं परस्मैपदग्रहणं च न कर्तव्यं भवति। एवमपि प्रकरणान्तरावस्थितानां शत्रादीनां नियमो न स्याद्, अतो न स्वरूपेण विशिष्टविधिर्युक्तः। संज्ञाश्रयणे तु यत्रैतत्संज्ञकयोर्विधानं तत्र सर्वत्रोपस्थानान्नायं दोषः, किं त्वितरेतराश्रयः प्राप्नोति। यदि त्वस्य सूत्रस्य शाटकं वयेतिवद् भाविनी संज्ञा विज्ञायेत, ततो नेतरेतराश्रयं लाघवं प्रति न कश्चिद्विशेष इति किं मुधा भाविसंज्ञाश्रयणखेदेनेति भिन्नवाक्यतया नियमपक्ष एवाश्रितो वृत्तिकारेण।

यद्येवम्, विकरणव्यवधाने नियमाप्रसङ्गः; लिङ्लिट्श्नम्श्लुलुक्षु वचनानुबन्धयोरर्थवत्त्वाद्। इह हि विकरणानामवकाशः—अलादेशाश्चानशादयः; नियमस्यावकाशः, यत्र विकरणा न सन्ति—स्पर्द्धिषीष्ट, पस्पर्द्धे, आस्ते, शेते, अर्त्ति, जुहोति, भिनत्ति, भूयादित्यादि; एधते स्पर्द्धते, कुरुते, निविशते इत्यादावुभयप्रसङ्गे परत्वाद्विकरणेषु कृतेषु तैर्व्यवधानान्नियमो न स्याद्। असति नियमे, यदि तावत् प्रकृतिनियमोऽनुदात्तङिदादिभ्य आत्मनेपदमेव, शेषाद्धातोः परस्मैपदमेवेति, ततोऽस्मिन् विषये उभयप्रसङ्गः; प्रत्ययनियमेऽपि तुल्यजातीयस्य नियमेन व्यावृत्तिरिति धातोरनन्तरस्य लस्य यद्यात्मनेपदपरस्मैपदे भवतः, अनुदात्तङिच्छेषानन्तरमेवेत्येवं नियमो विज्ञायमानो धात्वन्तरादेव व्यावर्तयेदिति विकरणव्यवधाने नियमाप्रवृत्तावुभयप्रसङ्ग एव। एकवाक्यतया विधाने तु नायं दोषः, विहितेषु लादेशेषु सार्वधातुकापेक्षैर्विकरणैर्भाव्यम्, विधानं चानेन

नियमः क्रियते—अनुदात्तेतो ये धातवो ङितश्च तेभ्य एव आत्मनेपदं

पदमञ्जरी

प्रकरणेन सहेति नेतः प्राग्विकरणसम्भवः। स्यादयो लावस्थायां विधीयमाना अपि लकारविशेषापेक्षत्वाद्बहिरङ्गा इति लमात्रापेक्षेष्वन्तरङ्गेष्वादेशेषु कृतेष्वेव भविष्यन्तीति न तत्रापि दोषः। ज्ञापकात् सिद्धम्, यदयं 'वृद्भ्यः स्यसनोः' इति स्ये विकल्पं शास्ति, तज्ज्ञापयति—विकरणेभ्यो नियमो बलीयानिति। एतेनेतदपि निरस्तम्—चङङ्भ्यामात्मनेपदप्रसङ्ग इति, कथम्? पूर्वंनियमे प्रवृत्ते पश्चात् चङङौ भवत इति।

प्रत्येकमिच्छब्दस्यान्वय इत्याह—*अनुदात्तेत इति*। *ये धातवो ङितश्चेति*। समुदायसम्बन्धे तु चक्षिङ एव स्यात्; स ह्यनुदात्तेत् पठ्यते, विचक्षण इत्यत्र युज्यथा स्याद्। अकारस्त्वनुदात्तेत्वनिबन्धनस्यात्मनेपदस्यानित्यत्वज्ञापनार्थः, तेन 'स एवायं नागः सहति कलभेभ्यः परिभवम्', 'न सहामि साहसमसाहसिकि' इत्यादि सिद्धम्।

*धातव* इत्येतत् कुतो लभ्यते? केचिदाहुः—'भूवादयो धातवः' इत्यतो धातुग्रहणमनुवर्तते, तच्च 'अनुदात्तङितः' इत्यनेन सामानाधिकरण्यात् पञ्चम्या विपरिणम्यते, अत एव चङङ्भ्यामात्मनेपदं न भवतीति। यङन्तादपि तर्हि न प्राप्नोति वेभिद्यत इति, यङेवं ह्यत्र ङिद्, न तदन्तो धातुः; अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकं भवति, तस्मादिह धातोरिति नानुवर्त्यम्। प्रायोवृत्त्या तु वृत्तौ धातव इत्युक्तम्। चङङोस्तु परिहार उक्त एव। यद्ययं प्रकृतिनियमः स्याद्—अनुदात्तङित आत्मनेपदमेवेति, वृजादयो न स्युः? वचनाद् भविष्यन्ति। अस्ति वचनस्यावकाशः—परस्मैपदिनः, तत्रापि नियमः—शेषात् परस्मैपदमेवेति, तेन वचनाद् भविष्यन्ति। तुल्यजातीयस्य च नियमेन व्यावृत्तिः, कश्च तुल्यजातीयः? आत्मनेपदस्य परस्मैपदम्, तस्य च तत्। एवमपि 'शेषात् कर्तरि' इति शेषग्रहणं न कर्त्तव्यं प्रकृतिनियमपक्षे, कथम्? प्रकृतयो नियताः, आत्मनेपदं परस्मैपदं चानियतम्, ततो वक्ष्यामि—परस्मैपदमिति, तन्नियमार्थं भविष्यति—यत्र परस्मैपदं चान्यच्च प्राप्नोति तत्र परस्मैपदमेवेति। प्रत्ययनियमस्तु नान्तरेण शेषग्रहणं शक्यो विज्ञातुमिति शेषग्रहणं

न्यासः

प्रधानस्य प्रत्ययस्य न तु प्रकृतेरिति विज्ञायते। अत एवाह—**अनुदात्तेतो ये धातवो ङितश्च तेभ्य इति**। यदि पुनरयं प्रकृतिनियमः स्यात्, तदा किं स्यात्? अनुदात्तङिद्भ्यः प्रत्ययान्तरं न स्यात्। कामं वचनसामर्थ्यात् प्रत्ययान्तरमपि भविष्यतीत्येष दोषः शक्यते परिहर्त्तुम्। यस्तु वचनसामर्थ्यद्वारेणाभीष्टेऽर्थे प्रतीयमाने प्रतिपत्ति-

भवति, नान्येभ्यः। अनुदात्तेद्भ्यः—आस्, आस्ते। वस्, वस्ते। ङिद्भ्यः खल्वपि—षूङ्, सूते। शीङ्, शेते ॥

## भावकर्मणोः ॥ १३ ॥

'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावकर्मणोर्विहितस्य

### पदमञ्जरी

कुर्वतः *सूत्रकारस्य* स एवाभिप्रेत इत्याह—*तेभ्य आत्मनेपदं भवति, नान्येभ्य इति*। यदि प्रत्ययनियमोऽयम्? 'शेषात् कर्त्तरि परस्मैपदम्' इत्यत्र यदि तावदेवं नियमः—कर्तरि यदि भवति शेषादेवेति, ततोऽशेषात् कर्तरि मा भूद्, भावकर्मणोस्तु शेषाच्च परस्मैपदं प्राप्नोति। अथ शेषाद्यदि भवति कर्तर्येवेति? ततः शेषाद् भावकर्मणोर्मा भूद्, अशेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति। न चैकस्मिन्वाक्ये नियमद्वयं शक्यं विज्ञातुम्—शेषादेव भवति, तत्रापि कर्त्तर्येवेति। एवं तर्हि योगविभागेन नियमद्वयं तत्रैव साधयिष्यामः। *आस्ते इत्यादि*। 'आस उपवेशने', 'वस आच्छादने', 'षूङ् प्राणिप्रसवे', शीङ् स्वप्ने—अदादयः। 'शीङः सार्वधातुके गुणः' ॥

*भावकर्मणोः* ॥ भाव्यत इति भावः, ण्यन्ताद् भवतेः कर्मणि घञ्। धात्वर्थः क्रियात्मक उच्यते, कर्म तु पारिभाषिकम्। घञादिविधौ तु 'भाव' इति शुद्धाद् भवतेर्भावे घञ्। भावः = सत्ता, धात्वर्थस्य सिद्धतावस्थोच्यते। अयमपि नियम इति दर्शयितुमन्यतः सिद्धिमाह—*लः कर्मणि चेत्यादि*। कथं पुनरयं नियमः, यावता 'अनुदात्तङित एवात्मनेपदम्' इति पूर्वेण नियमेन यथा शेषात् कर्त्तर्यात्मनेपदं व्यावर्त्तितम्, एवं भावकर्मणोरपीति तद्विषये विध्यर्थमिदं युक्तम्? सत्यम्; यदि पूर्वसूत्रे प्रवृत्तेऽस्य प्रवृत्तिः, विपर्ययोऽपि शक्यते वक्तुम्—भावकर्मणोरेवात्मनेपदमिति, अस्मिन्नियमे प्रवृत्ते 'अनुदात्तङितः' कर्त्तर्यात्मनेपदमप्राप्तमिति

### न्यासः

गौरवदोषः स्यात्, सोऽपरिहार्य एव। यदि तर्हि प्रत्ययनियमोऽयम्, तदा प्रकृतीनामनियतत्वात् ताभ्यः परस्मैपदमपि स्यात्? न भविष्यति; 'शेषात् कर्त्तरि परस्मैपदम्' इति द्वितीयनियमविधानाच् शेषादेव परस्मैपदम्, नान्यस्मादिति। आस्त इत्यादि। 'आस उपवेशने', 'वस आच्छादने', 'षूङ् प्राणिगर्भविमोचने', 'शीङ् स्वप्ने', अदादित्वाच्छपो लुक्। शेते इति। 'शीङः सार्वधातुके गुणः' ॥

भावकर्मणोः ॥ भाव इति धात्वर्थः क्रियात्मक उच्यते, कर्म तु पारिभाषिकमेव। तत्रेदमुच्यते नियमार्थं इति विशेषः। अयमपि पूर्ववत् प्रत्ययनियमः—भावकर्मणोरेवात्मनेपदं भवति, नार्थनियमः। अर्थनियमे सति 'को भवता दायो दत्तः', 'को

लस्य तिबादयः सामान्येन वक्ष्यन्ते, तत्रेदमुच्यते—भावे कर्मणि चात्मनेपदं भवति। भावे—ग्लायते भवता, सुप्यते भवता, आस्यते भवता। कर्मणि—क्रियते कटः, ह्रियते भारः। कर्मकर्त्तरि—लूयते केदारः स्वयमेवेति, परस्मैपदं न भवति। तस्य विधाने द्वितीयं कर्तृग्रहणमनुवर्तते, तेन कर्त्तैव यः कर्त्ता तत्र परस्मैपदं भवति ॥

पदमञ्जरी

पूर्वसूत्रमपि विध्यर्थमिति। तेन द्वयोरपि लस्य तिबादय इत्येतदपेक्षया नियमार्थत्वम्, परस्परापेक्षया तु विध्यर्थत्वमेवमापादपरिसमाप्तेर्द्रष्टव्यम्। अत एवास्यान्यथासिद्धं दर्शयताप्येवशब्दो न प्रयुक्तः। तिबादिसूत्रेण धातुसामान्यविहितं च लकारमाश्रित्य तिबादयो विहितास्तत्रैभ्य एव धातुभ्य इति पूर्वो नियमः, अयं त्वेतयोरेवार्थयोरिति। ननु चात्रार्थनियम एव ग्रन्थे प्रतीयते, अयं त्वत्रार्थः—'लः कर्मणि च' इति भावकर्मणोर्यो विहितो लकारस्तस्य सामान्येन तिबादयः सर्वे वक्ष्यन्ते, न त्वात्मनेपदमेव, अतस्तदेव यथा स्यादित्यमारम्भ इति। प्रत्ययनियमे तु भावकर्मकर्तृष्वपि विहितस्य लस्य सामान्येन तङ् वक्ष्यत इति वाच्यं स्यात्, सत्यम्; अयं त्वत्रार्थः—'भावकर्मणोः' इत्युपलक्षणम्, भावकर्मकर्तृष्वित्यर्थः, तिबादय इति सूत्रे तिपः प्रथमनिर्देशादेवमुक्तम्। तिबादिष्वन्तर्भूतास्तङ इत्यर्थः, तङानाविति यावत्। किं पुनः स्याद् यद्ययमर्थनियमः स्याद् ? इह को भवता लाभो लब्धः, को भवता दायो दत्त इति कर्मणि घञ् न स्याद्। 'अकर्त्तरि च' इत्यस्य त्वपादानादिरवकाशः यद्यपि तुल्यजातीयस्य परस्मैपदस्य नियमेन व्यावृत्तिरिति परिहारोऽस्ति; तथापि पूर्वसूत्रे तावत् प्रत्ययनियम इतीहापि स एवाश्रितः। *ग्लायत इति*। 'ग्लै म्लै हर्षक्षये'। *सुप्यत इति*। 'ञिष्वप् शये', 'वचिस्वपि' इत्यादिना संप्रसारणम्। *क्रियत इति*। 'रिङ् शयग्लिङ्क्षु' यदा 'कर्मवत्कर्मणा' इत्ययं शास्त्रातिदेशो :व्यपदेशातिदेशो वा, तदा शास्त्रव्यपदेशयोरतिदिष्टयोः स्वेन स्वेन शास्त्रेण तत्तत्कार्यं भवति तत्र कर्मण्यात्मनेपदमित्यस्यावकाशः शुद्धं कर्म, कर्त्तरि परस्मैपदमित्यस्य शुद्धः कर्ता, कर्मकर्तर्युभयप्रसङ्गे परत्वात्परस्मैपदं प्राप्नोति, अत आह—*कर्मकर्तरीत्यादि*। *द्वितीयं कर्तृग्रहणमनुवर्त्तत इति*। 'कर्त्तरि कर्मव्यतीहारे' इत्यतः कार्यातिदेशपक्षे त्वात्मनेपदमेव। *परमिति*। नायं परिहारो वाच्यः॥

न्यासः

भवता लाभो लब्धः' इति कर्मणि घञादिर्दुर्लभः स्यात्। सुप्यत इति। 'ञिष्वप् शये', वच्यादिना संप्रसारणम्। क्रियत इति। 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। लूयते केदारः स्वयमेवेति। 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यत्र व्यपदेशातिदेश-

## कर्त्तरि कर्मव्यतीहारे ॥ १४ ॥

कर्मशब्दः क्रियावाची, व्यतीहारो विनिमयः। यत्रान्यसंबन्धिनीं क्रियामन्यः करोति इतरसंबन्धिनीं चेतरः, स कर्मव्यतीहारः। तद्-विशिष्टक्रियावचनाद्धातोरात्मनेपदं भवति। व्यतिलुनते, व्यतिपुनते।

### पदमञ्जरी

*कर्त्तरि कर्मव्यतीहारे* ॥ अत्र लौकिकं कर्म गृह्यते, न पारिभाषिकमित्याह—*कर्मशब्दः क्रियावाचीति*। ननु कृत्रिमत्वात्पारिभाषिकस्येव ग्रहणं युक्तं ततो देवदत्तस्य धान्यं व्यतिलुनन्तीत्यत्रैव स्यात्, एवं मन्यते—इह 'कर्त्तरि व्यतीहारे' इतीयता सिद्धं, करणादिव्यतीहारे कस्मान्न भवति, उच्यते; क्रियायाः साध्यत्वात् प्राधान्यं क्रिययाप्तुमिष्टतमत्वात्तादर्थ्येन क्रियाप्रवर्तनात् कर्मणोऽपि प्राधान्यमित्युभयव्यतीहारे लब्धे कर्मग्रहणं क्रियते; तद्यदि साधनं कर्म गृह्येत, तदा क्रियाया अपि संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् कृत्रिमकर्मत्वमिति पुनरुभयोरपि ग्रहणात् कर्मग्रहणमनर्थकं स्यात्। किं चात्मनेपदेनाक्षिप्तोऽनुवृत्तो वा धातुः कर्मव्यतिहारेण विशेष्यते—तत्र वर्त्तमानाद्धातोरिति, न च साधन-कर्मणि धातोर्वृत्तिः सम्भवति, तस्य क्रियावाचित्वादिति। विनिमयो व्यत्यास इत्यर्थः। एतदेव स्पष्टयति—*यत्रेति*। योग्यतावशादस्येदं साधनम्, अस्येयं क्रिया

### न्यासः

शास्त्रातिदेशपक्षयोः कर्मकर्त्तरि परस्मैपदेन परत्वाद् भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्त्तुमाह—कर्मकर्त्तरीत्यादि। द्वितीयं कर्त्तृग्रहणमुपतिष्ठत इति। 'कर्त्तरि कर्मव्यतीहारे' इत्यतः। तेन कर्त्तैव यः कर्त्ता शुद्धः केवलः कर्मवद्भाव-रहितः, तत्र परस्मैपदं भवति; यत्र कर्मवद्भावस्तत्रात्मनेपदं भवति। कार्यातिदेशपक्षे 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यनेनैवात्मनेपदं भवति ॥

**कर्त्तरि कर्मव्यतीहारे** ॥ **कर्मशब्दः क्रियावाची**। एतेन लौकिकमिह कर्म क्रिया-त्मकं गृह्यते, न पारिभाषिकमिति दर्शयति। कुत एतल्लभ्यते? प्रत्यासत्तेः। क्रिया हि धातोः प्रत्यासन्ना, तत्र साक्षाद्वृत्तेः। साक्षाद्वृत्तिस्तु धातुवाच्यत्वात् क्रियायाः। पारिभाषिके तु साधनात्मके कर्मणि धातुः साक्षान्न वर्त्तते; तस्याधातुवाच्यात्। तस्माद् धातुं प्रति न तस्य प्रत्यासत्तिरिति न गृह्यते, तेन साधनकर्मव्यतीहारे न भवत्यात्म-नेपदम्—देवदत्तस्य धान्यं व्यतिलुनन्तीति। लुनातिरुपसंग्रहार्थे लवने वर्त्तते। देवदत्तेन यद् धान्यं संगृहीतं पुरस्ताल्लवनेनोपसंगृह्णन्तीत्यर्थः। ततश्चान्यसम्बन्धिनो धान्यस्यान्येन संग्रहणाद् भवति साधनकर्मव्यतीहारः। **अन्यसम्बन्धिनीमिति**। अन्यस्य कर्त्तुरभीष्टा या क्रियेमां क्रियां करिष्यामीति सेहान्यसम्बन्धिन्यभिप्रेता, अन्यथा यद्यन्येन

कर्मव्यतीहारे इति किम् ? लुनन्ति ।

कर्तृग्रहणमुत्तरार्थम्—'शेषात्कर्त्तरि परस्मैपदम्' इति ।

**पदमञ्जरी**

साध्येति निर्ज्ञातयोर्विपर्यासः साध्यसाधनभावस्य स व्यतीहार इति विवक्षितम् । यत्रेत्युपक्रमात्तु स व्यतीहारस्य विषयो विवक्षित इत्यर्थः । परस्परकरणमपि कर्मव्यतीहार उच्यते—संप्रहरन्ते राजानः, व्यात्युक्षीमभिसरणग्लहामदीव्यन्निति । *व्यतिलुनत इति* । 'लूञ् छेदने' 'आत्मनेपदेष्वनतः' इत्यदादेशः, 'श्नाभ्यस्तयोः' इत्याकारलोपः, 'प्वादीनां ह्रस्वः' । अन्योन्ययोग्यमन्योन्यविषये वा लवनं कुर्वन्तीत्यर्थः । एवंरूपश्चार्थोऽनेककर्तृकत्वे सति प्रतीयत इत्येकवचनं न भवतीति केचिदाहुः । व्यत्यसे, व्यतिहे इत्येकवचनमपि तत्र तत्रोदाहरिष्यते । 'अन्यो व्यतिस्ते तु ममापि धर्मः' इति *भट्टिप्रयोगः* ।

*कर्मव्यतीहार इति किमिति* । कर्तृग्रहणमेव व्यतिलुनत इत्यादौ प्रापकत्वेनोपयोक्ष्यत इति भावः ।

अथ कर्तृग्रहणं किमर्थम् ? भावकर्मनिवृत्त्यर्थं न वा पूर्वेण भावाद् । भावकर्मणोर्हि पूर्वेणात्मनेपदं भवत्येव—व्यतिलूयते व्यतिपूयत इति, तेन यथा स्याद्, अनेन मा भूत्, कः पुनरत्र विशेषः ? तेन वा स्यादनेन वा ? अयमस्ति विशेषः—अनेन सति 'न गतिहिंसार्थेभ्यः' इति प्रतिषेधः प्राप्नोति—व्यतिगम्यते ग्रामः, व्यतिहन्यन्ते दस्यव इति । न वानन्तरस्य प्रतिषेधाद् व्यतिहन्यत इत्यत्र द्वे प्राप्ती—'भावकर्मणोः' इति च, 'कर्मव्यतीहारे' इति च । तथा 'अनन्तरस्य विधिर्भवति प्रतिषेधो वा' इति अनन्तरा कर्मव्यतीहारलक्षणा प्राप्तिः प्रतिषिध्यते, पूर्वा तु भविष्यति, नार्थ एतेन कर्तृग्रहणेनेत्यत आह—*कर्तृग्रहण-*

**न्यासः**

निष्पादिता या क्रिया सेहान्यसम्बन्धिन्यभिप्रेता स्यात् तदा व्यतीहारो नोपपद्येत, न ह्यन्येन निष्पादितायाः पुनर्निष्पादनमुपपद्यते । **व्यतिलुनत इति** । 'आत्मनेपदेष्वनतः' इत्यदादेशः, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः ।

अथ कर्तृग्रहणं किमर्थम् ? भावकर्मनिवृत्त्यर्थमिति चेत्, न; अभीष्टत्वाद् भावकर्मणोरात्मनेपदम्—व्यतिभूयते सेनया, व्यतिगम्यन्ते ग्रामाः, व्यतिहन्यन्ते दस्यव इति । 'भावकर्मणोः' इत्यनेनैव यथा स्यात्, अनेन मा भूदित्येवमर्थमिति चेत्, न; विशेषाभावात् । न हि तेनात्मनेपदे सत्यनेन या कश्चिद् विशेषोऽस्ति । यद्यनेन स्यात् तदा 'न गतिहिंसार्थेभ्यः' इति प्रतिषेधः स्यात्, तेन चात्मनेपदे विधीयमाने न भवत्येष दोष इति चेत्, सत्यम्; एषोऽस्तु विशेषः, तथापि न कर्तृग्रहणं कर्त्तव्यम्; यस्मात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यनन्तरा या प्राप्तिः सा प्रतिषिध्यते, न पूर्वा । तेन भावकर्मणोरात्मनेपदं भविष्यति । अत आह—**कर्तृग्रहणमुत्तरार्थमिति** । कः पुनरसावुत्तरो योगो यत्रास्य प्रयोजनमित्याह—**शेषादित्यादि** ॥

## न गतिहिंसार्थेभ्यः ॥ १५ ॥

पूर्वेणात्मनेपदं प्राप्तं प्रतिषिध्यते। गत्यर्थेभ्यो हिंसार्थेभ्यश्च धातुभ्यः कर्मव्यतीहारे आत्मनेपदं न भवति। व्यतिगच्छन्ति, व्यतिसर्पन्ति। हिंसार्थेभ्यः—व्यतिहिंसन्ति, व्यतिघ्नन्ति।

* प्रतिषेधे हसादीनामुपसंख्यानम् *। व्यतिहसन्ति, व्यतिजल्पन्ति, व्यतिपठन्ति।

* हरतेरप्रतिषेधः *। सम्प्रहरन्ते राजानः।

पदमञ्जरी

*मिति*। 'शेषात्कर्तरि' इति प्रदर्शनमेतद्। 'आङो दोऽनास्यविहरणे' इत्यादावप्यस्योपयोगं वक्ष्यामः॥

*न गतिहिंसार्थेभ्यः*॥ *व्यतिगच्छन्तीत्यादि*। 'गम्लृ सृप्लृ गतौ' 'तृहि हिंसि हिंसायाम्' 'हन हिंसागत्योः', गमेः 'इषुगमियमां छः', 'छे च' इति तुक्, सृपेर्लघूपधगुणः, हन्तेर्गमहनेत्युपधालोपः, 'हो हन्तेः' इति कुत्वम्।

*हसादीनामिति*। हसिप्रकाराणां शब्दक्रियाणामित्यर्थः।

*उपसंख्यानमिति*। संख्यायते = संक्षिप्य प्रतिपाद्यतेऽनेनार्थ इति संख्यानम् = सूत्रम्, तस्योपोच्चारितमुपसंख्यानं सूत्रम्, समीप इदमपि सूत्रं पठितव्यमित्यर्थः। *हरतेरप्रतिषेध इति*। अर्थग्रहणसामर्थ्याद्ये शब्दान्तरनिरपेक्षा गतिहिंसयोर्वर्तन्ते त इह गृह्यन्त इति उपसर्गवशेन हिंसार्थत्वाद्धरतेरप्रतिषेध इत्याहुः। इह तु 'ततः संप्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ' इति योत्स्यमानाविति विवक्षितम्, न व्यतीहारः। इह च संव्यवहरन्ते गर्गैरिति वहेरगत्यर्थत्वादप्रतिषेधः, देशान्तरप्रापणं हि वहेरर्थः—भारं वहतीति; नान्तरीयकस्तु गतिप्रत्ययः कन्याप्रापणमुखेन गर्गैः सम्बध्यन्त इत्यर्थः॥

न्यासः

न गतिहिंसार्थेभ्यः॥ व्यतिगच्छन्तीति। 'इषुगमियमां छः' इति छत्वम्, 'छे च' इति तुक्। व्यतिसर्पन्तीति। 'गम्लृ सृप्लृ गतौ', लघूपधगुणः। व्यतिहिंसन्तीति। 'तृहि हिंसि हिंसायाम्'। व्यतिघ्नन्तीति। 'हन हिंसागत्योः', 'गमहन' इत्युपधालोपः, 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्।

प्रतिषेध इत्यादि। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। उपसंख्यानशब्दोऽत्रानेकार्थत्वाद्धातूनां प्रतिपादने वर्त्तते। तच्च प्रतिपादनं प्रकृतत्वात् प्रतिषेधस्येति गम्यते। तदयमर्थः—प्रतिषेधे कर्त्तव्ये हसादीनामप्यात्मनेपदप्रतिषेधस्य प्रतिपादनं कर्त्तव्यमिति। तत्रेदं प्रतिपादनम्—नेति योगविभागः क्रियते, तेन हसादीनामपि

इतरेतरान्योऽन्योपपदाच्च ॥ १६ ॥

इतरेतरः, अन्योऽन्यः-इत्येवमुपपदाद्धातो कर्मव्यतीहारे आत्मनेपदं न भवति। इतरेतरस्य व्यतिलुनन्ति, अन्योऽन्यस्य व्यतिलुनन्ति।

* परस्परोपपदाच्चेति वक्तव्यम् *। परस्परस्य व्यतिलुनन्ति ॥

नेर्विशः ॥ १७ ॥

पदमञ्जरी

इतरेतरान्योऽन्योपपदाच्च ॥ उपोच्चारितं पदमुपदम्, न पारिभाषिकम्; असम्भवाद्। असत्युपपदग्रहणे पञ्चमीनिर्देशे परस्यैवानन्तरस्य स्यात्; 'तस्मादित्युत्तरस्य' इति वचनात्। सप्तमीनिर्देशे तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति पूर्वस्यैवानन्तरस्य स्यात्। तत्र यद्यपि लकारोऽनन्तरः परो न सम्भवति, धातुस्तु सम्भवति; पूर्वस्तु धातुरनन्तरो न सम्भवति, लकारस्तु संभवति। तृतीयानिर्देशस्तु पञ्चमीसाधारणत्वादनध्यवसान इत्युपपदग्रहणं क्रियते। इतरेतरस्येत्यादि। लौकिके तु शब्दव्यवहारे लाघवं प्रत्यनादराद् इतरेतरादिशब्दास्तङ् उपसर्गाश्च कर्मव्यतीहारद्योतनाय समुच्चीयन्ते। "कर्मव्यतीहारे 'सर्वनाम्नो द्वे भवतस्समासवच्च बहुलम्' यदा न समासवत् प्रथमैकवचनं तदा पूर्वपदस्येति षष्ठ्येकवचनान्तस्येतरशब्दस्य द्विर्वचने समासवद्भावेन सुब्लुकि समासत्वादेव प्रातिपदिकत्वात् पुनः षष्ठ्येकवचनम्। अन्यशब्दस्य तु बहुलग्रहणादसमासवद्भावे पूर्वपदस्थस्य षष्ठ्येकवचनस्य प्रथमैकवचनम्। एवं परस्परस्येत्यत्रापि कस्कादिषु दर्शनाद्विसर्जनीयस्य सत्वम्। पदस्य द्विर्वचनविधानादन्योऽन्यपरस्परेति सूत्रवाक्ययोः प्रकृतिभागमात्रस्यानुकरणं द्रष्टव्यम् ॥

न्यासः

भविष्यतीति। ततः "गतिहिंसार्थेभ्यः' इति द्वितीयो योगः, तत्र 'न' इति वर्त्तते। किमर्थं पुनरयम्? पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थम्, तेन 'न' इति योगविभागेन हसादीनामेव प्रतिषेधो भविष्यति, नान्येषामिति ॥

इतरेतरान्योऽन्योपपदाच्च ॥ उपोच्चारितं पदमुपदम्। इतरेतरान्योऽन्यशब्दावुपपदे यस्य स तथोक्तः। अथोपपदग्रहणं किमर्थम्, 'नेतरेतरान्योऽन्याभ्याम्' इत्युच्यताम्? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने पञ्चमीनिर्देशात् 'तस्मादित्युत्तरस्य' इत्युत्तरस्यैव स्यात्—इतरेतरस्य व्यतिलुनन्तीति, इह तु न स्याद्—व्यतिलुनन्तीतरेतरस्येति।

परस्परोपपदाच्चेति वक्तव्यमिति। परस्परशब्द उपपदं यस्य तस्मात् प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेन परस्परोपपदादपि प्रतिषेधो भविष्यतीति ॥

'शेषात्कर्तरि' इति परस्मैपदे प्राप्ते, निपूर्वाद्विश आत्मनेपदं विधीयते। नेः परस्माद्विश आत्मनेपदं भवति। निविशते, निविशन्ते।

नेरिति किम्? प्रविशति। यदागमास्तद्ग्रहणेन गृह्यन्ते, तेनाटा नास्ति व्यवधानम्। न्यविशत। नेरुपसर्गस्य ग्रहणम्—'अर्थवद्ग्रहणे नानर्थकस्य' इति, तस्मादिह न भवति—मधुनि विशन्ति भ्रमराः॥

पदमञ्जरी

*नेर्विशः॥ शेषात्कर्त्तरि परस्मैपदे प्राप्ते इति*। अनारम्भस्यापि शेषपक्षे निक्षेपात्। *आत्मनेपदं विधीयत इति*। यद्यपि तिबादिसूत्रापेक्षया सर्वस्यैव प्रकरणस्य नियमार्थत्वम्, 'अनुदात्तङित आत्मनेपदम्' 'भावकर्मणोः' इति सूत्रद्वयापेक्षया तु विध्यर्थत्वमपि सम्भवतीति मत्वैवमुक्तम्। एवं सर्वत्र द्रष्टव्यम्।

*न्यविशतेत्यत्र* लङि निविश् ल् इति स्थिते लादेशो लकारमात्रापेक्षत्वाद् अन्तरङ्गः, अडागमस्तु लुङादिविशेषापेक्षत्वाद्बहिरङ्ग इति पूर्वं लादेशे विकरणश्च प्राप्नोति अडागमश्च, नित्यत्वाद्विकरणः। अडागमो हि विकरणे कृते तदन्तमेव लङि परतोऽङ्गम् तदादिग्रहणस्य स्यादिनुमर्थत्वादिति तस्यैव प्राप्नोति, अकृते विकरणे धातुमात्रस्येति शब्दान्तरप्राप्तेरनित्यः; ततश्च विकरणान्तस्य विधीयमानोऽडागमो धातुमात्रं प्रत्यभक्त इति नेश्च धातोश्च व्यवधायक इत्यात्मनेपदं न प्राप्नोतीत्यत आह—*यदागमा इत्यादि*। एवं मन्यते—बाह्योपसर्गसम्बन्धापेक्षत्वादयं विधिर्बहिरङ्गः, अस्मिश्चाप्रवृत्ते लादेशोऽप्यप्रवृत्त एव, अपवादविषयपरिहारेण हि तेन प्रवर्तितव्यम्। अनिर्वृत्तश्च लादेशो विकरणोत्पत्तौ न निमित्तम्, तेन लावस्थायामेवाड् भवन् धातुमात्रस्यैव भवति, ततश्च तदवयवत्वान्न तस्यैव व्यवधायक इति। कथं तर्ह्युक्तम्—व्यवधानेऽपि भवतीति? श्रुतिमात्रापेक्षया। केचित्तु—*अटा नास्ति व्यवधानमित्येव* पाठः। *मधुनि विशन्तीति* अङ्गभक्तो नुम् ङेरनवयव इति निशब्दस्यानर्थक्यम्। क्वचित्तु *मधूनि निविशन्ति भ्रमरा इति* शसन्तं पठ्यते॥

न्यासः

नेर्विशः॥ निविशत इति। 'विश प्रवेशने', तुदादित्वाच्छः।

न्यविशतेति। अडागमेन व्यवधानमित्यात्मनेपदेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—अडागम इत्यादि। मधुनि विशन्तीति। अत्र नेः परस्य विशतेरात्मनेपदं प्राप्नोति, तत् कस्मान्न भवतीत्याह—नेरुपसर्गस्येत्यादि। मधुशब्दस्य सप्तम्येकवचने 'इकोऽचि विभक्तौ' इति नुमि कृते मधुनीति रूपं भवति, तस्य चावयवो निशब्दोऽनर्थकः॥

## परिव्यवेभ्यः क्रियः ॥ १८ ॥

'डुक्रीञ् द्रव्यविनिमये' ञित्त्वात्कर्त्रभिप्राये क्रियाफले सिद्ध-मात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति । परिक्रीणीते, विक्रीणीते, अवक्रीणीते ।

पर्यादय उपसर्गा गृह्यन्ते, तेनेह न भवति—बहुविक्रीणाति वनम् ॥

## विपराभ्यां जेः ॥ १९ ॥

'शेषात्कर्त्तरि परस्मैपदम्' इत्यस्यापवादः । विपरापूर्वाज्जयतेर्धातो-तोरात्मनेपदं भवति । विजयते, पराजयते । विपराशब्दावुपसर्गौ गृह्येते; साहचर्यात् । तेनेह न भवति—बहुवि जयति वनम् । परा जयति सेनेति ॥

### पदमञ्जरी

*परिव्यवेभ्यः क्रियः* ॥ पर्यादय उपसर्गा गृह्यन्त इति कथं 'क्रियः' इति षष्ठी, उपसर्गैरेव पर्यादिभिरर्थद्वारको विशेषणविशेष्यभावलक्षणसम्बन्धः, न च क्रियो ये उपसर्गास्तेभ्यः परं धात्वन्तरं सम्भवतीति क्रीणातेरेवात्मनेपदं भवतीति । यद्वा—पर्यादिविशेषणाय षष्ठीमनुभूयात्मनेपदसम्बन्धे 'क्रियः' इति पञ्चमी सम्पद्यते, तदाह—*इत्येतेभ्य उतरस्मात् क्रीणातेरिति* ।

*बहुवीति* । बहवो वयः पक्षिणोऽस्मिन्निति बहुव्रीहिः, कर्मपदं चैतत्, पक्षि-वाचिनो विशब्दस्य नपुंसकत्वाभावाद् विभक्त्यास्य व्यवधानात्केवलो नोदाहृतः । ननु बहुव्रीहावपि जहत्स्वार्थायां वृत्तौ वेरानर्थक्यम्, अजहत्स्वार्थायामपि तदर्थ-स्योपसर्जनत्वमिति न भविष्यति ? एवं तर्ह्युदाहरणदिगियं दर्शिता । इदं तत्रोदाहरणम्—वे क्रीणासि, अत्रैकदेशविकृतस्यानन्यत्वात्प्रसङ्गः; वी क्रीणीतः—अत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः ॥

*विपराभ्यां जेः* ॥ *साहचर्यादिति* । द्वयोर्दृष्टापचारत्वेऽपि परस्परसाहच-र्यादित्यर्थः । 'नेर्विशः' इत्यादिप्रकरणसाहचर्याद्वा । *बहुवीति* । अत्रापि वे जयसि,

### न्यासः

परिव्यवेभ्यः क्रियः ॥ परिक्रीणीते इति । 'ई हल्यघोः' इतीत्त्वम् । पर्यादय उपसर्गा गृह्यन्त इति । कथम् ? क्रिय इति सम्बन्धलक्षणा षष्ठी, न पञ्चमी—क्रियो ये सम्बन्धिनः पर्यादय इति । अर्थद्वारकश्च तेषां सम्बन्धो विशेषणविशेष्यभावलक्षणः । स चोपसर्गैरेव पर्यादिभिः सम्भवति, नान्यैरिति सामर्थ्यादुपसर्गग्रहणं भवति । बहुवि क्रीणातीति । बहवो वयो यस्मिन्निति बहुव्रीहिः । विशब्दोऽत्र पक्षिणि वर्त्तते ॥

विपराभ्यां जेः ॥ साहचर्यादिति । उपसर्गग्रहणे हेतुः 'नेर्विशः' इत्यत्र नेरुप-

## आङो दोऽनास्यविहरणे ॥ २० ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः । आङ्पूर्वाद्ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति । विद्यामादत्ते ।

अनास्यविहरण इति किम् ? आस्यं व्याददाति ॥

* आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः * । विपादिकां व्याददाति । कूलं व्याददाति ।

पदमञ्जरी

वी जयत इत्युदाहार्यम् । *परा* उत्कृष्टा। अथ कथं जेरिति निर्देशः, यावता प्रकृतिवदनुकरणं भवतीति 'अचि श्नुधातु' इत्यादिनेयङादेशेन भवितव्यम्, न च दीर्घेषु सावकाशमियङं परत्वाद् 'घेर्ङिति' इति गुणो बाधत इति युक्तम्; ह्रस्वेष्वपि पूर्वविप्रतिषेधेन इयङ इष्टत्वात्, तथा च 'क्षियः' इति निर्देशः ? उच्यते; धातुत्वं तावदर्थाश्रयम्—क्रियावचनो धातुरिति, इह वा विवक्षितार्थं रूपमात्रमनुकृतमिति । अनुकार्यस्यापि धातुत्वं नास्ति, प्रागेवानुकरणस्य ॥

*आङो दोऽनास्यविहरणे* ॥ यथैवावत्सा धेनुरानीयतामित्युक्ते सम्भवद्वत्ससम्बन्धा गोधेनुरेवानीयते, न महिष्यादिधेनुः; तथेहापि सम्भवदास्यविहरणस्य 'डुदाञ् दाने' इत्यस्यैव ग्रहणम्, न तु 'गामादाग्रहणेष्वविशेषः' इति सर्वेषां दारूपाणामित्याह—*आङ्पूर्वाद्दाञ इति* ॥ *आदत्त इति* । श्लौ द्विर्वचनम्, पूर्ववदाकारलोपः, दकारस्य चर्त्वम् । क्वचिद्—*आङो ङिद्विशिष्टस्य ग्रहणं किम् ? भिक्षामाददातीति* पठ्यते, तत्र स्मृतावाकारः ।

*आस्यविहरणसमानक्रियादपीति* । कथमिह 'आङो दोऽनास्ये' इतीयता सिद्धं

न्यासः

सर्गस्य ग्रहणम् । अनन्तरसूत्रेऽपि पर्यादीनामुपसर्गाणामेव ग्रहणम् । अतः प्रकरणसाहचर्याद् विपराशब्दावुपसर्गौ गृह्येते—इत्येके ।

अपरे तु वर्णयन्ति—साहचर्यं प्रत्यासत्त्युपलक्षणम् । येषां साहचर्यं तेषां नियोगतः प्रत्यासत्त्या भवितव्यमिति । अतः साहचर्यस्य प्रत्यासत्त्याऽविनाभावित्वात् तेन प्रत्यासत्तिर्लभ्यते । तदेतदुक्तं भवति—प्रत्यासत्तेर्विपराशब्दावुपसर्गौ गृह्येते इति । प्रत्यासत्तिश्च जयतेर्विपराशब्दाभ्यामुपसर्गाभ्यामेव, नानुपसर्गाभ्याम् । तथा हि—ताभ्यामेव जयत्यर्थो विशिष्यते, नेतराभ्यामिति ॥

आङो दोऽनास्यविहरणे ॥ ददातेरेवास्यविहरणे वृत्तिः सम्भवति, नान्येषां दारूपाणां धातूनामिति । अतस्तत्प्रतिषेधेन तस्यैव ग्रहणं विज्ञायत इत्यत आह—आङ्पूर्वाद्दाञ इति । आदत्ते इति । पूर्ववदाकारलोपः, 'खरि च' इति चर्त्वम् ।

'आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः' इत्युसंख्यानव्याजेनास्यविहरण-

* स्वाङ्गकर्मकाच्चेति * । इह मा भूत्—व्याददते पिपीलिका पतङ्गस्य मुखम् ॥

पदमञ्जरी

द्रव्ये धातोर्वृत्त्यसम्भवादास्यसमवायिन्यां क्रियायां वर्तमानस्य समुदायस्य निषेधो विज्ञायते, नचैवं स्वं मुखमादत्त इत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधप्रसङ्गः, ग्राह्यास्य एव समवेता क्रिया, तस्यां वर्तमानो ददातिरास्ये वृत्तिर्भवति, ग्रहणन्तु ग्राह्यग्राहिणोरुभयोरपि समवेतम् । अनास्य इति पर्युदासः, आस्यानास्य-समुदायश्चास्यादन्य इति विधिरेव भविष्यति । एवं सिद्धे विहरणग्रहणं विहरण-विशेषोपलक्षार्थम्, तेनासत्यप्यास्ये तादृशे विहरणे भविष्यति यादृशमास्यविहरणम् आस्यव्यादानम् । *विपादिकेति* । पादस्फोटः = विपादिका ।

*स्वाङ्गकर्मकाच्चेति* । स्वमङ्गं स्वाङ्गम्, न तु पारिभाषिकमद्रवादिलक्षणम् । एतच्च न्यायसिद्धमेवोक्तम्, कथम् ? कर्तरीति वर्तते, आस्यशब्दश्चायं सम्बन्धि-शब्दः, कस्यास्यमित्यपेक्षायां यस्मिन् कर्तर्यात्मनेपदं तस्य चेत्तदास्यमिति विज्ञाते तेन परकीयास्यविहरणे विधिरेव भवति ॥

न्यासः

विषयं दर्शयति । कथम् ? विहरणग्रहणं न कर्त्तव्यम् , इहा 'आङो दोऽनास्ये' इत्येत-द्वक्तव्यम् , तत्रास्ये दाञो वृत्तिर्न सम्भवतीति सामर्थ्यादास्यसमवायिन्यां क्रियायां वृत्तिर्विज्ञास्यते, तत्रैव प्रतिषेधः, तत् किं विहरणग्रहणेन ? ननु च 'आङो दोऽनास्ये' इत्येतावत्युच्यमाने, स्वं मुखमादत्ते देवदत्त इत्यत्रापि प्रतिषेधः स्यात् , नैष दोषः; या ह्यास्यविषयैव क्रिया तस्यां वर्त्तमानो ददातिरास्यवृत्तिर्भवति, विहरणमेवास्य-विषयम् , ग्रहणं त्वास्यविषयं ग्रहीतृविषयञ्च । तदेवं विहरणमन्तरेणापि सिद्धे यद्विहरणग्रहणं क्रियते तस्यैतत् प्रयोजनम्—आस्यविहरणसमानक्रियादपि प्रतिषेधोऽयं यथा स्यादित्येवमित्येके । 'इतरेतरान्योऽन्योपपदाच्च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्त-समुच्चयार्थः । तेनास्यविहरणसमानक्रियादपि प्रतिषेधो भवतीत्यपरे ।

**स्वाङ्गकर्मकाच्चेति** । वक्तव्यमिति शेषः । न चात्राद्रवमूर्त्तिमल्लक्षणं पारिभाषिकं स्वाङ्गं विवक्षितम् , किं तर्हि ? स्वमङ्गं स्वाङ्गमिति । तत् कर्म यस्य स स्वाङ्गकर्मकः, तस्मात् स्वाङ्गकर्मकात् प्रतिषेधो भवतीत्येतदर्थरूपं वक्तव्यमित्यर्थः । तेन परसम्बन्धिना मुखेन यदा सकर्मको भवति तदा भवत्येवात्मनेपदम्—व्याददते पिपीलिकाः पतङ्गस्य मुखमिति । वक्तव्यशब्दस्य व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—कर्त्तरीति वर्त्तते, आस्यमिति च सम्बन्धिशब्दः, तत्रैवं विज्ञायते—'यस्मिन् कर्त्तर्यात्मनेपदं भवति तस्य चेदास्यम् , इति । 'आङः' इति योगविभागः क्रियते—आगमयस्व

## क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥

'क्रीडृ विहारे'—एतस्माद् अनु, सम्, परि—इत्येवंपूर्वाद् आङ्पूर्वाच्च आत्मनेपदं भवति। अनुक्रीडते, संक्रीडते, परिक्रीडते। आङः खल्वपि—आक्रीडते।

समासाहचर्यादन्वादिरुपसर्गो गृह्यते, तेनेह कर्मप्रवचनीयप्रयोगे न भवति—माणवकमनुक्रीडति।

* समोऽकूजने इति वक्तव्यम् *। संक्रीडन्ति शकटानि।

* आगमेः क्षमायामात्मनेपदं वक्तव्यम् *। क्षमा = उपेक्षा, कालहरणमिति यावत्। आगमयस्व तावन्माणवकम्।

* शिक्षेर्जिज्ञासायाम् *। विद्यासु शिक्षते।

पदमञ्जरी

*क्रीडोऽनुसंपरिभ्यश्च* ॥ *माणवकमनुक्रीडतीति*। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थे' इत्यनुः कर्मप्रवचनीयसंज्ञकः। *आगमेरिति* ण्यन्तस्येदं ग्रहणम्। *आगमयस्व तावदिति*। सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः।

*शिक्षेरिति*। 'शिक्ष विद्योपादाने' इत्यस्यानुदात्तेत्त्वादेव सिद्धमिति शकेः सन्नन्तस्य ग्रहणम्। *शिक्षत इति*। 'सनि मीमाघु' इत्यच इस्, 'स्कोः संयोगाद्योः' इति सलोपः, 'अत्र लोपोऽभ्यासस्य' धनुर्विषये ज्ञाने शक्तो भवितुमिच्छ-

न्यासः

तावन्माणवकम्, आनुते श्रृगालः, आपृच्छते गुरूनित्येवमर्थः। तेन 'आगमेः क्षमायाम्' इति 'आङि नुप्रच्छयोः' इति च नोपसंख्येयं भवति॥

क्रीडोऽनुसंपरिभ्यश्च ॥ समा साहचर्यादिति। यद्यप्यन्वादिरुपसर्गत्वं व्यभिचरति, सम्शब्दस्तु न व्यभिचरति, अतस्तत्साहचर्यादन्वादिरुपसर्ग एव गृह्यते। माणवकमनुक्रीडतीति। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थे' इत्यनुशब्दस्य कर्मप्रवचनीयसंज्ञा।

आगमेरिति। आङ्पूर्वस्य गमेर्ण्यन्तस्य ग्रहणम्। क्षमा उपेक्षा कालहरणमिति। कालप्रतिपालनं प्रतीक्षणमित्यर्थः। आगमयस्वेति। 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायाम्, 'मितां ह्रस्वः' इति ह्रस्वत्वम्। लोण्मध्यमपुरुषैकवचनम्, 'थासः से', 'सवाभ्यां वामौ' इति वादेशः।

शिक्षेरिति। शकिः सन्नन्तो गृह्यते। विद्यासु शिक्षत इति। विद्यां जिज्ञासितुं घटत इत्यर्थः। शकेः सन्, 'सनि मीमाघुरभलभ' इत्यादिनेस्भावः। 'अत्र लोपो-

* आशिषि नाथः *। सर्पिषो नाथते । मधुनो नाथते। आशिषीति किम् ? माणवकमनुनाथति ।

* हरतेर्गतिताच्छील्ये *। पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते। गतिताच्छील्य इति किम् ? मातुरनुहरति, पितुरनुहरति ।

* किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् *। अपस्किरते वृषभो हृष्टः। जीविकायाम्–अपस्किरते कुक्कुटो भक्षार्थी।

पदमञ्जरी

तीत्यर्थः। क्रियाविषयो हि शकेः प्रयोगः—भोक्तुं शक्नोति, गन्तुं शक्नोतीति। तदिह ज्ञानं विषयः, आत्मनेपदेनैव ज्ञानविषयत्वस्य गमितत्वाज्ज्ञानमिति न प्रयुज्यते ।

*आशिषि नाथ इति*। 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' अनुदात्तेत्। नियमार्थं तु वचनम्—आशिष्येव यथा स्याद् याच्ञादिषु मा भूदिति। अनुदात्तेत्त्वं युजर्थम्। *सर्पिषो नाथ इति*। 'आशिषि नाथः' इति कर्मणि षष्ठी सर्पिर्मे भूयादित्याशास्त इत्यर्थः। *हरतेरिति*। गतिः प्रकारः। *पैतृकमिति*। पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः। 'ऋतष्ठञ्', 'इसुसुक्तान्तात्कः'। प्रत्युदाहरणे सादृश्यमात्रं विक्षितम्, न प्रकारताच्छील्यम्।

*किरतेरिति*। विक्षेपार्थः किरतिः। हर्षादयस्तु विषयत्वेनोपात्ताः। तत्र हर्षो

न्यासः

ऽभ्यासस्य' इत्यभ्यासस्य लोपः। 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः, शिक्ष इति स्थिते लट्। यस्तु 'शिक्ष विद्योपादाने' इति पठ्यते, ततोऽनुदात्तेत्त्वादात्मनेपदं सिद्धमेव ।

**आशिषि नाथ इति**। 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' इत्यनुदात्तेत् पठ्यते। अनुदात्तेत्त्वादात्मनेपदे सिद्धे 'आशिष्येव नाथतेरात्मनेपदं भवति, याच्ञादिषु मा भूत्' इति नियमार्थमेतत्। **सर्पिष इति**। 'आशिषि नाथः' इति कर्मणि षष्ठी।

**हरतेर्गतिताच्छील्य इति**। गतेस्ताच्छील्यं गतिताच्छील्यम्, ताच्छील्यम् = तत्स्वभावता। **पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्त इति**। पितृवत् मातृवद् गमनमेषां स्वभाव इत्यर्थः। **मातुरनुहरति, पितुरनुहरतीति**। मातुराकारं पितुराकारमनुकरोतीत्यर्थः। मातृसदृशः, पितृसदृश इत्यर्थः। पैतृकमिति पितुरागतमिति 'ऋतष्ठञ्', 'इसुसुक्तान्तात् कः'। मातुरनुहरतीत्यत्र गतिताच्छील्यं न विवक्षितम्।

**किरतेरित्यादि**। 'कॄ विक्षेपे'। अस्य विक्षेप एवार्थः। हर्षादयस्तस्य विषय-

कुलायकरणे—अपस्किरते श्वाऽऽश्रयार्थी। हर्षादिष्विति किम् ? अपकिरति कुसुमम्।

❋ आङि नुप्रच्छ्योरुपसंख्यानम् ❋। आनुते शृगालः, आपृच्छते गुरुम्।

❋ शप उपलम्भन इति वक्तव्यम् ❋। वाचा शरीरस्पर्शनम् = उपलम्भनम्। देवदत्ताय शपते, यज्ञदत्ताय शपते। उपलम्भन इति किम् ? शपति॥

समवप्रविभ्यः स्थः॥ २२॥

सम्, अव, प्र, वि—इत्येवं पूर्वात् तिष्ठतेरात्मनेपदं भवति। संतिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते॥

पदमञ्जरी

विक्षेपस्य कारणम्। जीविकाकुलायकरणे तु फलम्। एतेष्वर्थेषु अपाच्चतुष्पात्' इति सुड्विधीयते। *आनुत इति*। उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। 'णु स्तुतौ' अदादिः। *आपृच्छत इति*। 'प्रच्छ ज्ञीप्सायाम्' तुदादिः, ग्रहीत्यादिना सम्प्रसारणम्। *वाचा शरीरस्पर्शनमिति*। 'त्वत्पादौ स्पृशामि, नैतन्मया कृतम्' इत्येवंरूपः शपथविशेषः। *देवदत्तायेति*। 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानसंज्ञा॥

*समवप्रविभ्यः स्थः*॥ *सन्तिष्ठत इति*। पाघ्रादिसूत्रेण तिष्ठादेशः। अत्राप्युपसर्गग्रहणादिह न भवति—वे तिष्ठसि, वी तिष्ठत इति।

न्यासः

भूताः। अत्र हर्षो विक्षेपस्य कारणम्, जीविकाकुलायकरणञ्च तत्फलम्। एतेष्वेवार्थेषु किरतेरात्मनेपदं भवति। अपस्किरत इति। 'अपाच्चतुष्पाच्छकुनिष्वालेखने' सुट्।

आनुते इति। 'णु स्तुतौ', अदादिः। अयञ्चात्रोत्कण्ठापूर्वकशब्दने वर्तते। आपृच्छत इति। 'प्रच्छ ज्ञीप्सायाम्', तौदादिकः, ग्रह्यादिना संप्रसारणम्।

वाचा शरीरस्पर्शनमुपलम्भनमिति। शपथविशेषः। तथा हि—देवदत्तस्य शरीरं स्पृशामीति शपथं कुर्वाणो देवदत्ताय शपत इति प्रयुज्यते। 'श्लाघह्नुङ्स्थाशपाम्' इत्यादिना सम्प्रदानसंज्ञायाम्, देवदत्तायेति सम्प्रदाने चतुर्थी। शपतीत्याक्रोशतीत्यर्थः। 'समोऽकूजने' इत्यादिग्रन्थस्य शप उपलम्भनपर्यन्तस्य योऽर्थः स इह चकारेणानुक्तसमुच्चयार्थेनोपात्तः, तस्यैवार्थस्य चकारोपात्तस्य स्पष्टीकरणायास्य ग्रन्थस्योपन्यासः कृतः॥

समवप्रविभ्यः स्थः॥ सन्तिष्ठते इति। पाघ्रादिसूत्रेण तिष्ठादेशः।

* आङः स्थः प्रतिज्ञाने इति वक्तव्यम् *। अस्ति सकारमात्र-मातिष्ठते । आगमौ गुणवृद्धी आतिष्ठते ॥

प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥

स्वाभिप्रायकथनं प्रकाशनम्। स्थेयस्याख्या स्थेयाख्या । तिष्ठन्त्य-स्मिन्निति स्थेयः, विवादपदनिर्णेता लोके स्थेय इति प्रसिद्धः, तस्य प्रति-पत्त्यर्थमाख्याग्रहणम्। प्रकाशने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति।

पदमञ्जरी

*अस्ति सकारमिति*। "स्तः सन्तीत्यादौ सकारमात्रस्य दर्शनात् 'स भुवि' इत्येव धातुः पाठ्यः, अस्तीत्यादौ पिति सार्वधातुके अडागमो विधेयः, आस्ताम् आस-न्नित्यादौ आडागमः स्यात्" इति *आपिशला* मन्यन्ते। *आगमौ गुणवृद्धी इति*। वैया-करणाः, सौवश्व इत्यादौ वृद्धेरागमत्वमित्याहुः। गुणस्य त्वागमत्वे उदाहरणं मृग्यम् ॥

*प्रकाशनस्थेयाख्ययोश्च* ॥ *स्वाभिप्रायकथनमिति* । कथनमाविष्करणमात्रं न तु शब्देनैव, तेनाभाषमाणायामपि कन्यकायां भवति । *तिष्ठत्यस्मिन्निति* । प्रकरणा-दिनात्र विवादपदनिर्णेतुः प्रतीतिः, न तु शाब्दीति विग्रहवाक्ये आत्मनेपदं न

न्यासः

अस्ति सकारमातिष्ठत इति। सकारमात्रमस्ति धातुम् आपिशलिराचार्यः प्रतिजानीते। तथा हि—न तस्य पाणिनेरिव 'अस भुवि' इति गणपाठः, किं तर्हि ? 'स भुवि' इति स पठति। आगमौ गुणवृद्धी आतिष्ठत इति। स त्वागमौ गुणवृद्धी आतिष्ठते। एवं हि स प्रतिजानीत इत्यर्थः[1] ॥

प्रकाशनस्थेयाख्ययोश्च ॥ तिष्ठन्त्यस्मिन्निति स्थेय इति। 'कृत्यल्युटो बहुलम्' इत्यधिकरणे 'अचो यत्'। 'ईद् यति' इतीत्त्वम्। गुणः। विवाद इति। सन्देहविषये। निर्णेतेति निश्चेता, प्रमाणभूत इत्यर्थः। कथं पुनः स्थेयशब्दात् तस्य प्रतीतिर्भवति, यावता स्थेयशब्दो भावसाधनोऽप्यस्ति गतिनिवृत्तिवचन इत्याह—तस्येत्यादि। यस्य 'स्थेय' इत्याख्या, लोके तस्य प्रतीतिर्यथा स्यादित्येवमर्थमाख्या-ग्रहणम्। तेनाख्याग्रहणेन तस्य प्रतीतिर्भवतीति दर्शयितुमाख्याग्रहणं कृतम्। तिष्ठते

---

१.-स इति आपिशलिरित्यर्थः। आपिशलिमते सकारमात्रस्यासधातोः स्तः स्थः सन्तीत्यादीन्युदाहरणानि। अस्ति, आसीदित्यादिसिद्धये तु सोऽडाटावागमौ प्रति-जानीते। तावडाटावेव पाणिनीयशास्त्रेऽकाराकारस्वरूपत्वाद् गुणवृद्धी इति; अतः स गुणवृद्धी आगमौ प्रतिजानीत इति न्यासकृदाशयः।

प्रकाशने तावत्—तिष्ठते कन्या छात्रेभ्यः । तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानमित्यर्थः । स्थेयाख्यायाम्—त्वयि तिष्ठते, मयि तिष्ठते, संशय्य कर्णादिषु तिष्ठते यः ॥

उदोऽनूर्ध्वकर्मणि ॥ २४ ॥

उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्त्तमानादात्मनेपदं भवति । कर्मशब्दः क्रियावाची । अनूर्ध्वकर्मविशिष्टात्क्रियावचनात्तिष्ठतेरात्मनेपदं भवति । गेहे उत्तिष्ठते । कुटुम्बे उत्तिष्ठते । तदर्थं यतत इत्यर्थः ।

* उद ईहायामिति वक्तव्यम् * । इह मा भूत्—अस्माद् ग्रामात्

पदमञ्जरी

कृतम् । *संशय्य कर्णादिष्विति* । संशयस्थानेषु कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थः ॥

*उदोऽनूर्ध्वकर्म्मणि* ॥ *कर्मशब्दः क्रियावाचीति* । साधनकर्मणि धातोर्वृत्त्यसम्भवादिति भावः । *उद ईहायामिति* । ईहा=परिस्पन्दः । *ईहाग्रहणमित्यादि* ।

न्यासः

कन्या छात्रेभ्य इति । पूर्ववत् संप्रदानसंज्ञायां सत्यां छात्रेभ्य इति चतुर्थी । प्रकाशयत्यात्मनमित्यर्थं इति । अनेकार्थत्वाद्धातूनां तिष्ठतिरत्र प्रकाशने वर्त्तते । संशय्येति ;

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः ।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि[1] ॥

इत्यस्य श्लोकस्यायमेकदेश इहोपन्यस्तः । संशय्येति विवादपदभूते वस्तुनि संशयितो भूत्वा कर्णादिषु तिष्ठत इति । कर्णशकुनिप्रभृतिषु निर्णेतृत्वेनाभिमतेषु सत्सु पक्षान्तरं परित्यज्य तिष्ठते; तदुपदर्शितस्यैव पक्षस्याश्रयणात् ॥

उदोऽनूर्ध्वकर्मणि ॥ अनूर्ध्वकर्मणि वर्त्तमानादित्युक्ते, यश्चोदयति—'ननु च तिष्ठतेरकर्मकक्रियावचनत्वान्न कर्मणि वृत्तिरुपपद्यते । तत् किमुच्यते—अनूर्ध्वकर्मणि वर्त्तमानात्' इति, तं प्रत्याह—क्रियावाचीति । यदुक्तम्—अनूर्ध्वकर्मणि वर्त्तमानादिति, तस्यार्थं विस्पष्टीकर्त्तुमाह—अनूर्ध्वकर्मविशिष्टात् क्रियावचनादिति ।

उद ईहायामिति वक्तव्यमिति । उत्पूर्वात् तिष्ठतेरीहायां परिस्पन्दने वर्त्तमानादात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—अन्तरेणापि कर्मग्रहणं क्रियामात्रवृत्तित्वे तिष्ठतेः सिद्धे यत् कर्मग्रहणं तल्लोके या क्रिया कर्मत्वेन प्रसिद्धा तस्याः प्रतिपत्त्यर्थं कृतम्, सा तु परिस्पन्दनात्मिकैव घटनभ्रमणादिका, तथा हि—तां कुर्वाणः 'सक्रियः' इत्युच्यते । स्थानासनादिकां त्वपरिस्पन्दनात्मिकां

१. किरा० ३।१४

शतमुत्तिष्ठति । शतमुत्पद्यते इत्यर्थः । ईहाग्रहणमनूर्ध्वकर्मण एव विशेषणम्, नापवादः ।

अनूर्ध्वकर्मणीति किम् ? आसनादुत्तिष्ठति ॥

उपान्मन्त्रकरणे ॥ २५ ॥

उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्त्तमानादात्मनेपदं भवति । ऐन्द्र्या गार्हपत्यमुपतिष्ठते । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते ।

मन्त्रकरण इति किम् ? भर्तारमुपतिष्ठति यौवनेन ।

* उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् * । देवपूजायाम्—आदित्यमुपतिष्ठते । सङ्गतिकरणे—रथिकानुपतिष्ठते । मित्रकरणे—महामात्रानुपतिष्ठते । मित्रकरणसंगतिकरणयोः को विशेषः ?

पदमञ्जरी

ईहात्मकं यदनूर्ध्वकर्म इत्येवमनूर्ध्वकर्मण एव विशेषणमीहाग्रहणम्, न पुनरनूर्ध्वकर्मग्रहणमपनीय ईहाग्रहणं कर्त्तव्यमित्युच्यते इत्यर्थः । तथा हि सत्यासनादुत्तिष्ठतीत्यत्रापि स्यात्, परिस्पन्दरूपत्वादुत्थानस्येति भावः । उद ईहायामित्येतत्कर्मग्रहणात् सिद्धमित्याहुः । कथम् ? 'ईहाऽनूर्ध्वं' इत्येतावताऽनूर्ध्वताविशिष्टं क्रियावाचित्वं सिद्धम्, धातोः क्रियावाचित्वात् । एवं सिद्धे कर्मग्रहणाल्लोकप्रसिद्धं परिस्पन्दात्मकं कर्म गृह्यत इति ॥

*उपान्मन्त्रकरणे* ॥ पारिभाषिकमत्र करणं गृह्यते, मन्त्रः करणं यस्यार्थस्य तस्मिन्वर्त्तमानादित्यर्थः ।

न्यासः

कुर्वाणोऽपि 'निष्क्रियः' इति । तस्मादात्मनेपदमिदं कर्मग्रहणादीहायामेव वर्त्तमानाद् भविष्यति। उद ईहायामित्युक्ते, ईहाग्रहणमनूर्ध्वकर्मणोऽपवाद इति कस्यचित् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—ईहाग्रहणमित्यादि । विशेषणं व्यक्तीकरणमिहाभिप्रेतम् । एतदुक्तम् भवति—यदिदमुक्तम् 'उद ईहायामिति वक्तव्यम्' इति, तत्र यदीहाग्रहणं तदनूर्ध्वकर्मण एव विशेषण सूत्रोपात्तस्य व्यक्तीकरणार्थम् । ईहात्मकमिहानूर्ध्वकर्म विवक्षितमिति प्रतिपादनार्थमित्यर्थः ॥

उपान्मन्त्रकरणे ॥ मन्त्रकरण इति । मन्त्रः करणं साधकतमं यस्य धात्वर्थस्य स तथोक्तः । उपादित्यादि । अत्र वक्तव्यशब्दस्य व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रे चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः; तेन उपपूर्वात्तिष्ठतेर्देवपूजादिष्वर्थेष्वप्यात्मनेपदं भवति ।

संगतिकरणमुपश्लेषः, तद्यथा—गङ्गा यमुनामुपतिष्ठते; मित्रकरणं तु—विनाप्युपश्लेषेण मैत्रीसंबन्धः । पथि—अयं पन्थाः स्रुघ्नमुपतिष्ठते ।

*वा लिप्सायामिति वक्तव्यम्* । भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा ॥

अकर्मकाच्च ॥ २६ ॥

'उपात्' इति वर्तते । उपपूर्वात् तिष्ठतेरकर्मकक्रियावचनादात्मनेपदं भवति । यावद्भुक्तमुपतिष्ठते । भुक्तमिति भोजने भोजने सन्निधीयत इत्यर्थः । भावे क्तप्रत्ययः ।

पदमञ्जरी

*उपादित्यादि* । अमन्त्रकरणार्थमिदम् । *सङ्गतकरणमुपश्लेष इति* । विनापि मैत्रीसम्बन्धात् । *स्रुघ्नमुपतिष्ठते इति* । प्राप्नोतीत्यर्थः ।

*भिक्षुक इति* । लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ॥

*अकर्मकाच्च* ॥ अत्रासम्भवात् क्रिया कर्म न गृह्यते, न ह्यस्ति सम्भवः = धातुश्च भवत्यक्रियावचनश्चेति । ननु च साधनकर्मणाम्यकर्मकत्वमव्यभिचाराद-विशेषणम्, न हि शब्दात्मकस्य धातोः कर्मणा योगवियोगौ सम्भवतः, साधन-योगस्य क्रियाधर्मत्वादत आह—*अकर्मकक्रियावचनादिति* । एतेनार्थद्वारकमेतद् धातोर्विशेषणमिति दर्शयति । *यावद्भुक्तमिति* । यथार्थे यदव्ययमिति वीप्सायाम-व्ययीभावः । सप्तम्यन्तं चैतत् । *संनिधीयत इत्यर्थ इति* । भावे लकारः । अर्थतो व्याख्यानं चैतत्—यो ह्युपतिष्ठते स संनिधत्ते, यश्च संनिधत्ते तेन संनिधीयते ।

न्यासः

वा लिप्सायामिति । लब्धुमिच्छा लिप्सा । लिप्सायां गम्यमानायामित्येषोऽर्थो वेदितव्यः, न तु तत्र वर्त्तमानात् तिष्ठतेरिति न लिप्सा तिष्ठतेरर्थः । तथा हि—भिक्षुको ब्राह्मणकुलमुपतिष्ठते इत्यत्र तिष्ठतिरुपसंक्रमणे वर्त्तते । लिप्सा तूपसंक्रमणस्य हेतुभूता गम्यते । लिप्सायां हेतुभूतायां ब्राह्मणकुलमुपसंक्रामतीत्यर्थः ॥

अकर्मकाच्च ॥ अकर्मकादिति । नास्य कर्मास्तीति बहुव्रीहिः । 'डुकृञ् करणे', 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्, धातोर्गुणः, 'शेषाद् विभाषा' इति कप् । ननु धातोः क्रियावचनादकर्मकत्वं न सम्भवतीति तस्मादयुक्तमकर्मकादिति विशेषणम्, व्यवच्छेद्याभावादित्यत आह—अकर्मकक्रियावचनादिति । अकर्मिका चासौ क्रिया चेत्यकर्मकक्रिया, तस्या वचनो यः, तां वक्ति सोऽकर्मकक्रियावचनः । एतेनार्थ-द्वारकं विशेषणमिदं दर्शयति—अकर्मको यो धात्वर्थस्तत्साहचर्यादभिधेयधर्मस्या-

अकर्मकादिति किम्? राजानमुपतिष्ठति ॥

उद्विभ्यां तपः ॥ २७ ॥

'अकर्मकात्' इति वर्त्तते। उत्, वि—इत्येवम्पूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति। उत्तपते, वितपते। दीप्यत इत्यर्थः। अकर्मकादित्येव—उत्तपति सुवर्णं सुवर्णकारः। वितपति पृष्ठं सविता।

*स्वाङ्गकर्मकाच्चेति वक्तव्यम्*। उत्तपते पाणिम्, उत्तपते पृष्ठम्; वितपते पाणिम्, वितपते पृष्ठम्। स्वाङ्गं चेह न पारिभाषिकं गृह्यते—'अद्रवं मूर्त्तिमत् स्वाङ्गम्' इति, किं तर्हि? स्वमङ्गं स्वाङ्गम्। तेनेह न भवति—देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति।

उद्विभ्यामिति किम्? निष्टपति ॥

पदमञ्जरी

*अकर्मकादिति किमिति*। पूर्वसूत्रे 'उपात्' इति योगविभागादिष्टस्य सिद्धं पश्यति। न चैवमतिप्रसङ्गः, 'मन्त्रकरणे' इत्यस्य नियमार्थत्वात्—सकर्मकाद्यदि भवति मन्त्रकरण एवेति। *राजानमुपतिष्ठतीति*। विपरीतोऽपि नियमः स्यात्—करणे यदि भवति मन्त्रकरण एवेति, ततश्चात्र स्यादेवेति भावः॥

*उद्विभ्यां तपः*॥ उत्तपति सुवर्णमित्यत्र सन्तापने विलापने वा तपिर्वर्तत इति सकर्मकत्वम्।

*स्वमङ्गं स्वाङ्गमिति*। यस्मिन्कर्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणम्? ततोऽप्राणिन्यपि कर्त्तरि यस्य यदङ्गं तत्कर्मकादपि प्रसङ्गः।

न्यासः

भिधान उपचारात् धातुरकर्मक इति। अर्थस्य च युक्तमेतद् विशेषणम्, तस्य सकर्मकत्वाकर्मकत्वसम्भवात्। यावद्भुक्तमिति। यावच्छब्दो निपातोऽव्ययम्, तस्य यथार्थे वीप्सायामव्ययीभावः, सप्तम्यन्तञ्चैतद्। अत एवाह—भोजने भोजने सन्निधीयत इति। भावे क्त इति। 'नपुंसके भावे क्तः' इत्यनेन॥

उद्विभ्यां तपः॥ स्वाङ्गकर्मकाच्चेति वक्तव्यमिति। स्वाङ्गं कर्म यस्य तस्मात् तपतेरात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, तस्यानुक्तसमुच्चयार्थत्वात् स्वाङ्गकर्मकादपि भविष्यति। स्वाङ्गञ्चेह न पारिभाषिकम्, किं तर्हि? स्वमङ्गं स्वाङ्गमिति। आत्मीयमङ्गमित्यर्थः। निष्टपतीति। 'निसस्तपतावनासेवने' इति मूर्धन्यः॥

## आङो यमहनः ॥ २८ ॥

'अकर्मकात्' इति वर्त्तते । 'यम उपरमे', 'हन हिंसागत्योः' इति परस्मैपदिनौ । ताभ्यामकर्मकक्रियावचनाभ्यामाङ्पूर्वाभ्यामात्मनेपदं भवति । आयच्छते, आयच्छेते, आयच्छन्ते । हनः खल्वपि—आहते, आघ्नाते, आघ्नते । अकर्मकादित्येव—आयच्छति कूपाद्रज्जुम्, आहन्ति वृषलं पादेन ।

*स्वाङ्गकर्मकाच्चेति वक्तव्यम् * । आयच्छते पाणिम् । आहते शिरः । स्वाङ्गं चेह न पारिभाषिकं गृह्यते, किं तर्हि ? स्वमङ्गं स्वाङ्गम्, तेनेह न भवति—आहन्ति शिरः परकीयमिति ॥

## समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ २९ ॥

'अकर्मकात्' इति वर्त्तते । शेषात् कर्त्तरि परस्मैपदे प्राप्ते, संपूर्वेभ्यो गमि-ऋच्छि-प्रच्छि-स्वरति-अर्ति-श्रु-विदि—इत्येतेभ्योऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति । संगच्छते । संपृच्छते । संस्वरते । संकल्पा अस्य समरन्त ।

### पदमञ्जरी

पारिभाषिके त्वेष दोषो न भवति; तस्य प्राणिस्थत्वात् । अन्वर्थेऽपि न दोषः, तपेः प्राणिकर्तृकत्वात् । पारिभाषिकस्य त्वसम्बन्धिशब्दत्वात् कर्तुश्चेत्स्वमङ्गमित्येव न प्रतीयेतेति भावः ॥

*आङो यमहनः* ॥ *आहतेति* । 'अनुदात्तोपदेश' इत्यनुनासिकलोपः । *आघ्नत इति* । पूर्ववदादेशोपधालोपौ कुत्वं च । *आहन्ति शिरः परकीयमिति* । 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र तु गाण्डीवी विषमविलोचनस्य वक्ष एत्य स्वं वक्षो हतवानित्यर्थः । मल्लोऽप्युत्साहवर्धनाय स्वं वक्ष आस्फालयति ॥

*समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः* ॥ 'समो गम्यृच्छिभ्याम्' इत्येतावत्सूत्रम् ।

### न्यासः

आङो यमहनः ॥ आहते इति । 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः । आघ्नते इति । 'गमहन' इत्युपधालोपः, 'हो हन्तेः' इत्यादिना कुत्वम् ।

स्वाङ्गकर्मकाच्चेति वक्तव्यमिति । अस्य पूर्ववदर्थः । व्याख्यानमपि पूर्ववदेव ॥

समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ संस्वरते इति । 'स्वृ शब्दोपतापयोः' ।

अर्तेर्लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङादेशः । तत्र 'परस्मैपदेषु' इत्येतन्नाश्रीयते, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्याट् प्रतिषिध्यते ।'ऋदृशोऽङि गुणः' इति गुणः । समरन्त । संशृणुते । संवित्ते ।

ऋच्छेरनादेशस्य ग्रहणम्–समृच्छिष्यते । अर्त्यादेशस्य त्वर्त्तीत्येवं सिद्धमात्मनेपदम् । अर्तिरुभयत्र पठ्यते–'ऋ गतिप्रापणयोः' इति भ्वादौ, 'ऋ सृ गतौ' इति जुहोत्यादौ; विशेषाभावाद् द्वयोरपि ग्रहणम् ।

विदेर्ज्ञानार्थस्य ग्रहणम्, परस्मैपदिभिर्गमादिभिः साहचर्यान्न लाभार्थस्य । स्वरितेत्त्वादुभयतोभाषस्य ।

### पदमञ्जरी

प्रच्छयादयस्तु वार्त्तिकदृष्टाः सूत्ररूपेण पठिताः, सूत्रकारवद्वार्त्तिककारोऽपि शास्त्रस्य कर्ता, न व्याख्यातेति दर्शयितुम् । *तत्र हीति* । उत्तरार्थमनुवर्तमानमपि योगविभागसामर्थ्यात् तत्र न सम्बध्यत इत्यर्थः ।

न *लाभार्थस्येति* । सत्ताविचारणार्थयोस्त्वनुदात्तेत्त्वादात्मनेपदेन भाव्यमेवेति भावः । *दृशेश्चेत्यादि* । इदं वक्तव्यरूपेणैव पठितम् । विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण । अथास्मिन्नकर्मकाधिकारे ये सकर्मका हनिगमिप्रभृतयः, तेषां कथमकर्मकत्वम् ? उच्यते—

### न्यासः

**समरन्त इति** । अर्त्तेः 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्यत्र पुषादिसूत्रात् परस्मैपदग्रहणानुवृत्तेरात्मनेपदेऽङादेशेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—**तत्र हीत्यादि** । **संश्रृणुत इति** । 'श्रु श्रवणे', 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च ।

**ऋच्छेरनादेशस्य ग्रहणमिति** । 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' इत्यस्य । **समृच्छिष्यते इति** । लृट्, स्यप्रत्ययः । यद्यादेशस्य ग्रहणं स्यात् तदेतन्न सिध्येत्, पाघ्रादिसूत्रेणार्त्तेर्ऋच्छादेशस्य शितीत्येवं विधानात् । अथार्त्त्यादेशस्यापि ग्रहणं कस्मान्न भवतीत्याह—**अर्त्यादेशस्य त्वर्त्तीत्येवमित्यादि** ।

अथ वा—यद्यनादेशस्य ग्रहणं स्यात्, आदेशस्यात्मनेपदं न सिध्यतीत्यत आह—**अर्त्यादेशस्य त्वर्त्तीत्येवमित्यादि** । स्थानिवद्भावेनेत्यभिप्रायः ।

**न लाभार्थस्येति** । 'विद्लृ लाभे' इत्यस्य । अथ 'न तु सत्तार्थस्य, नापि

* दृशेश्चेति वक्तव्यम् * । संपश्यते । अकर्मकादित्येव—ग्रामं संपश्यति ।

## निसमुपविभ्यो ह्वः ॥ ३० ॥

'अकर्मकात्' इति निवृत्तम् । अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम् । नि, सम्, उप, वि—इत्येवम्पूर्वाद् ह्वयतेर्धातोरात्मनेपदं भवति । निह्वयते, संह्वयते, उपह्वयते, विह्वयते । अकर्त्रभिप्रायार्थोऽयमारम्भः । अन्यत्र हि ञित्वात्सिद्धमेवात्मनेपदम् ॥

### पदमञ्जरी

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

वहति भारमिति—प्रापणे सकर्मको वहिः, स्यन्दने त्वकर्मकः । वहन्ति नद्य इति—प्राणविशिष्टं धारणं जीवतिराह, तत्र प्राणानां धातुनैवोपात्तत्वान्न तेन कर्मणा सकर्मकत्वम्, न च प्राणकर्मके धारणेऽन्यस्य कर्मत्वमिति जीवतिरकर्मकः । प्रसिद्धेर्यथा—वर्षतीत्यनुपात्ते कर्मान्तरे नियमेन जलं प्रतीयत इति न तेन सकर्मकत्वम्, तेन 'वृष्टे देवे' इति कर्तरि क्तो भवति । व्यभिचारिणा तु रुधिरादिना सकर्मक एव—रुधिरं वर्षति, शरान्वर्षतीति । कर्मणोऽविवक्षयाप्यकर्मकत्वम्, यथा—नेह पच्यते, नेह भुज्यते इत्यत्र कर्मविवक्षायां तत्कर्मिकैव क्रिया प्रतिषिद्धा स्याद्, न पाकमात्रमित्यविवक्षा कर्मणः ॥

*निसमुपविभ्यो ह्वः ॥ निह्वयते इति ।* कथं पुनरत्रात्मनेपदम्, यावता 'ह्वा'

### न्यासः

विचारणार्थस्य' इत्येवमपि कस्मान्नोक्तम् ? एवं मन्यते—नित्यात्मनेपदित्वादनयोरात्मनेपदार्थग्रहणं नाशङ्क्यतैवेति ।

दृशेश्चेति वक्तव्यमिति । 'दृशिर् प्रेक्षणे' इत्यस्मात् संपूर्वादात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । व्याख्यानन्तु पूर्ववदेव । संपश्यते इति । पाघ्रादिना पश्यादेशः ॥

निसमुपविभ्यो ह्वः ॥ ह्व इति 'ह्वेञ् स्पर्द्धायां शब्दने च' इत्यस्य कृतात्त्वस्य 'आतो धातोः' इत्याकारलोपं कृत्वा निर्देशः । निह्वयत इति । ननु च कृतात्त्वस्य निर्देशादत्रात्मनेपदेन न भवितव्यम्, न हि विकृतिः प्रकृतिं गृह्णाति; अन्यत्वात्, नैष दोषः; क्वचिद्विकृतिरपि प्रकृतिं गृह्णात्येव । कथं ज्ञायते ? यदयं 'न व्यो लिटि' इति कृतात्त्वस्य व्येञो निर्देशेनात्त्वप्रतिषेधं शास्ति, ततो ज्ञायते—विकृतिरपि

*उपसर्गादस्यत्यूह्योर्वा वचनम् *। निरस्यति, निरस्यते। समूहति, समूहते ॥

## स्पर्द्धायामाङः ॥ ३१ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः। स्पर्द्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति। स्पर्द्धा = संघर्षः, पराभिभवेच्छा, स विषयो धात्वर्थस्य। धातुस्तु शब्दक्रिय एव। मल्लो मल्लमाह्वयते, छात्रश्छात्रमाह्वयते। स्पर्द्धमानस्तस्याह्वानं करोतीत्यर्थः।

स्पर्द्धायामिति किम्? गामाह्वयति गोपालः ॥

### पदमञ्जरी

इत्याकारान्तादियं पञ्चमी, एकारान्तश्चायम्, न च विकृतिः प्रकृतिं संगृह्णाति? सत्यम्; आकारान्तात्पञ्चमी, न त्विदं प्रयोगस्थस्याकारान्तस्यानुकरणम्, किं तर्हि? धातुपाठेऽवस्थितैकारान्तस्य, तस्यैव लक्षणवशादात्वम्। न चानुक्रियमाणरूपविनाशप्रसङ्गः; शास्त्रवासनया तस्यैव प्रतीतेः, यथा—'यस्येति च' इतीकाराकारयोः ॥

*स्पर्द्धायामाङः* ॥ *सविषय इति*। हेतुभावेन च विषयत्वम्, अत एव हेतौ शानच् प्रयुक्तः। *स्पर्द्धमानस्तस्याह्वानमिति*। *शब्दक्रिय एवेति*। यद्यपि स्पर्द्धायां पठ्यते, तथाप्याङ्पूर्वस्तत्र न वर्तते, किं तर्हि? शब्दनक्रियावाचीत्यर्थः ॥

### न्यासः

प्रकृतिं गृह्णातीति; अन्यथा 'व्यः' इति निर्देशेन व्येञो ग्रहणाभावात् कस्यायं प्रतिषेधः स्यात्!

उपसर्गादस्यत्यूह्योर्वा वचनमिति। वक्तव्यमित्यर्थः। 'असु क्षेपणे', 'ऊह वितर्के'। अस्यतीति श्यना निर्देशाद्दैवादिकस्य ग्रहणम्, न त्वादादिकस्य—'अस भुवि' इत्यस्य ॥

स्पर्धायामाङः ॥ स्पर्धायां विषय इति। स्पर्धेह धात्वर्थस्य विषयोऽभिमतः, न धातोः। अत एवाह—स्पर्धा संघर्षः। पराभिभवेच्छेति। स्पर्धायाः स्वरूपं दर्शयित्वा धात्वर्थस्य विषयं दर्शयितुमाह—स विषयो धात्वर्थस्येति। कः पुनर्धातोरर्थो नाम यस्यैवं विषयः? इत्याह—धातुस्तु शब्दक्रिय इत्यादि। शब्दनं शब्दः। सा क्रिया यस्य स तथोक्तः। शब्दनक्रियावाचीति यावत्। यद्यपि ह्वयतिः स्पर्द्धायामपि पठ्यते, तथाप्याङ्पूर्वस्तत्र न वर्त्तते, यथा—तिष्ठतिर्गतिनिवृत्तौ पठ्यते, अथ च प्रपूर्वो गतावेव वर्त्तते, न गतिनिवृत्तौ; तथा हि प्रतिष्ठित इत्युक्ते गच्छतीत्यर्थः।

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥३२॥**

कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। गन्धनादिष्वर्थेषु वर्त्तमानात्करोतेरात्मनेपदं भवति। गन्धनम् = अपकारप्रयुक्तं हिंसात्मकं सूचनम्। तथा हि–'वस्त गन्ध अर्द्दने', 'अर्द्द हिंसायाम्', इति चुरादौ पठ्यते। अवक्षेपणम् = भर्त्सनम्। सेवनम् = अनुवृत्तिः। साहसिक्यम् = साहसिकं कर्म। प्रतियत्नः = सतो गुणान्तराधानम्। प्रकथनम् = प्रकर्षेण कथनम्। उपयोगः = धर्मादिप्रयोजनो विनियोगः।

गन्धने तावत्—उत्कुरुते। उदाकुरुते। सूचयतीत्यर्थः। अवक्षेपणे–श्येनो वर्त्तिकामुदाकुरुते। भर्त्सयतीत्यर्थः। सेवने–गणकानुप-

पदमञ्जरी

*गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः॥ अपकारप्रयुक्तमिति* अपकारेण प्रयुक्तमनेन मेऽपकृतमित्येतया बुद्धया कृतमित्यर्थः। अथ वा—कथं मयाऽपकृतं स्यादिति बुद्धया प्रवर्तितमित्यर्थः। *हिंसात्मकमिति*। सूचितस्य वधबन्धनादिका हिंसा, इह तु तत्करणत्वात्सूचनमेव हिंसा स्वभावमित्युक्तम्। कथं पुनर्ज्ञायते गन्धनं हिंसात्मकमित्यत आह—*तथा हीति*। *चुरादाविति*। स्वभावा-

न्यासः

तस्मादाङ्पूर्वस्य ह्वयतेः स्पर्द्धायां वृत्त्यभावात् स्पर्द्धा धात्वर्थस्य विषयः। धात्वर्थविषयत्वं तु तद्धेतुभावेन वेदितव्यम्॥

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः।** 'अपकारप्रयुक्तमिति। तृतीयासमासोऽयम्। अपकारमुद्दिश्य यत् प्रवर्त्तते तदपकारप्रयुक्तं वेदितव्यम्। हिंसात्मकमिति। हिनस्तीति हिंसः, पचाद्यच्, हिंस आत्मा यस्य तत् तथोक्तम्। पीडाकरणमित्यर्थः। सूचनमिति दोषाविष्करणम्। कथमेतद् विज्ञायत एवंविधं सूचनं गन्धनमित्याह—तथा हीत्यादि। वस्तेत्यादिना गन्धयतिधातुरर्दयतेरर्थे वर्त्तत इति दर्शयति। अर्द्द हिंसायामित्यादिना अर्दयतेर्हिंसात्मकत्वम्। एवञ्च हिंसार्थेनार्दयतिना गन्धयतेः समानार्थतां दर्शयता गन्धनशब्दवाच्यस्यार्थस्य हिंसात्मकत्वं दर्शितम् भवति। भर्त्सनं तिरस्करणम्। अनुवृत्तिः परचित्तावधारणम्। साहसिक्यं साहसं कर्म इति। 'ओजः सहोऽम्भसा वर्त्तते' इति ठक्, साहसिकः। तस्य कर्मेति तस्माद् गुणवचनब्राह्मणादित्वात् ष्यञ्, साहसिक्यम्। उपयोगो धर्मादिप्रयोजनो विनियोग इति। धर्मादिषु प्रयोजनं यस्य स तथोक्तः। आदिशब्दः

कुरुते, महामात्रानुपकुरुते । सेवत इत्यर्थः । साहसिक्ये—परदारान्प्रकुरुते । तेषु सहसा प्रवर्तत इत्यर्थः । प्रतियत्ने—एधो दकस्योपस्कुरुते । काण्डं गुडस्योपस्कुरुते । तस्य सतो गुणान्तराधानं करोतीत्यर्थः ।

* षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयेते * । प्रकथने—गाथाः प्रकुरुते । जनापवादान्प्रकुरुते । प्रकर्षेण कथयतीत्यर्थः । उपयोगे—शतं प्रकुरुते, सहस्रं प्रकुरुते । धर्मार्थं शतं विनियुङ्क्त इत्यर्थः ।

एतेष्विति किम् ? कटं करोति ।

**अधेः प्रसहने ॥ ३३ ॥**

अकर्त्रभिप्रायार्थोऽयमारम्भः । अधिपूर्वात् करोतेः प्रसहने वर्त्तमानादात्मनेपदं भवति । प्रसहनम् = अभिभवः, अपराजयो वा । तमधिचक्रे । तमभिबभूव, न तेन पराजित इति वा ।

प्रसहन इति किम् ? अर्थमधिकरोति । पृथग्योगकरणमुपसर्ग-विशेषणार्थम् ॥

**पदमञ्जरी**

नुवादः । *साहसिक्यमिति* । सहसा वर्तते साहसिकः 'ओजःसहोम्भसा वर्तते' इति ठक्, तस्य कर्मणि ष्यञ् । *वर्तिका* = शकुनिविशेषः । *एधोदकस्येति* । समाहारद्वन्द्वः । 'कृञः प्रतियत्ने' इति षष्ठी । *उपस्कुरुत इति* । 'उपात्प्रतियत्न' इत्यादिना सुट् ॥

*अधेः प्रसहने* ॥ *प्रसहनमभिभव इति* । 'सा साह्या युधा नृभिः पृतनाषाड्' इत्यादौ दर्शनात् । केचित्तु 'षह मर्षणेऽभिभवे छन्दसि' इति पठन्ति, तत्र 'छन्दसि' इति प्रायिकं द्रष्टव्यम् । *अपराजयो वेति* । पराजेतुं समर्थस्यैव क्षमया यस्तदभावः स इत्यर्थः । तथा च *भारविः*—'भवादृशाश्चेदधिकुर्वते परान्' इति, भवादृशाश्चेत्परानधिकुर्वते = क्षमया न पराजयन्ते, क्षमन्त इत्यर्थः, तदाह—*न वा तेन पराजित इत्यर्थ इति* । तेनात्मनेपदवाच्येन कर्त्रा तमित्येतद्वाच्यः कर्मभूतो न पराजित इत्यर्थः । *पृथग्योगकरणमित्यादि* । प्रकथनोपयोगप्रसहनेषु

**न्यासः**

कामादिपरिग्रहाय । एधो दकस्योपस्कुरुत इति । 'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु' इति सुट् । 'कृञः प्रतियत्ने' इति षष्ठी ॥

**अधेः प्रसहने ॥ तमधिचक्र इति । कृञो लिट्, तस्य एशादेशः । 'द्विर्वचनेऽचि**

### वेः शब्दकर्मणः ॥ ३४ ॥

'कृञः' इत्यनुवर्तते । विपूर्वात्करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति। कर्मशब्द इह कारकाभिधायी, न क्रियावचनः । क्रोष्टा विकुरुते स्वरान् । ध्वाङ्क्षो विकुरुते स्वरान् ।

शब्दकर्मण इति किम् ? विकरोति पयः ॥

### अकर्मकाच्च ॥ ३५ ॥

'वेः कृञः' इत्यनुवर्त्तते । विपूर्वात्करोतेरकर्मकक्रियावचनादात्मनेपदं भवति । विकुर्वते सैन्धवाः । साधुदान्ताः शोभनं वल्गन्तीत्यर्थः । ओदनस्य पूर्णाश्छात्रा विकुर्वते । निष्फलं चेष्टन्त इत्यर्थः ॥

पदमञ्जरी

'अधेः' इत्युच्यमाने गन्धनादिष्वपि अधिपूर्वादेव स्यात्। अथ तत्राधिग्रहणं न क्रियेत, प्रसहनेऽप्यध्यभावेऽपि प्रसङ्गः; अत उत्सर्गेण प्रसहनं विशेषयिस्यामीति प्रसहने वा उत्सर्गं विशेषयिष्यामीति योगविभाग इत्यर्थः ॥

*वेः शब्दकर्मणः* ॥ 'उदोऽनूर्ध्वकर्मणि' इत्यादिवत् कर्मशब्दः क्रियावाची मा विज्ञायीत्याह—*कर्मशब्द इत्यादि* । विपूर्वस्य करोतेः शब्दक्रियायां वृत्त्यसम्भवात्, कृत्रिमसम्भवे लौकिकस्य ग्रहणायोगाच्च। किंच 'वेः शब्दः' इत्येव वक्तव्यम्, कर्मग्रहणमनर्थकम्, *विकरोति पय इति* सकर्मकत्वाद् उत्तरेणापि न भवति ॥

*अकर्मकाच्च* ॥ *ओदनस्य पूर्णा इति* । सुहितार्थयोगे षष्ठी भवति, ज्ञापनात्, यदयं पूरणगुणसुहितार्थेति सुहितार्थयोगे या षष्ठी सा न समस्यत इत्याह, तज्ज्ञापयत्याचार्यः—भवति सुहितार्थयोगे षष्ठीति । *अकर्मकादिति किमिति*[1] । पूर्वसूत्रे

न्यासः

इति स्थानिवद्भावाद् द्विर्वचनम्, 'उरत्' इत्यत्त्वम्, रपरत्वञ्च, 'हलादिः शेषः', 'कुहोश्चुः' इति चुत्वम् ॥

वेः शब्दकर्मणः ॥ 'कर्त्तरि कर्म' इत्येवमादौ क्वचित् कर्मशब्दस्य क्रियावाचिता दृष्टा । इहापि तस्य क्रियावाचिता मा विज्ञायीत्याह—कर्मशब्द इह कारकाभिधायीति । अथ क्रियाभिधायी कस्मान्न भवति ? विपूर्वस्य करोतेः शब्दनक्रियायां वृत्त्यसम्भवात् । शब्दकर्मण इति । धातोरर्थद्वारकं चेदं विशेषणम्—शब्दः कर्मास्येति; शब्दकर्मा धात्वर्थः । तदर्थस्य शब्दकर्मत्वाद् तद्द्वारेण धातुरपि शब्दकर्मेति; अन्यथा हि क्रियावाचित्वाद्धातोः कथं शब्दः कर्मास्येति सम्बन्ध उपपद्यते ॥

अकर्मकाच्च ॥ ओदनस्य परिपूर्णा इति । सुहितार्थयोगे षष्ठी । 'पूरणगुणसुहितार्थ'

---

१. एतत्पाठपर्यालोचनयानुमीयते—वृत्तावयं पाठो भ्रष्ट इति ।

**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ ३६ ॥**

'णीञ् प्रापणे'—अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'णीञ् प्रापणे'—इत्येतस्माद्धातोरात्मनेपदं भवति सम्माननादिषु विशेषणेषु सत्सु।

सम्माननम् = पूजनम्। नयते चार्वी लोकायते। चार्वी = बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान्नयते, उप-

पदमञ्जरी

वेरिति योगविभागेनेष्टसिद्धिं मन्यते, न चैवमतिप्रसङ्गः, शब्दकर्मण इत्यस्य नियमार्थत्वात्—कर्मणि यदि भवति शब्द एवेति, कटं विकरोतीति। विपरीतोऽपि नियमः सम्भाव्येत—शब्दे यदि भवति कर्मण्येवेति, ततश्चात्रापि स्यादिति भावः ॥

*सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ सम्माननादिषु विशेषणेषु सत्स्विति*। युक्तं सम्माननाचार्यकरणवेतनानां विशेषणत्वम्, तत्र हि प्रापणमेव धात्वर्थः, सम्माननादीनि तु तमेव विषयतया व्यवच्छिन्दन्ति। उत्सञ्जनादीनां त्वयुक्तम्; तेषामेव धात्वर्थत्वात्, तद्व्यतिरिक्तस्य विशेष्यस्यासम्भवात्, उच्यते; सम्माननादेरुत्सञ्जनादेश्च विशेषणत्वं समानं पूर्वोक्तं धात्वर्थविशेषणम्, उत्तरस्तु धातुविशेषणमिति विशेष्यमात्रं भिद्यते, अतः सुष्ठूक्तम्—सम्माननादिषु विशेषणेष्विति। *चार्वी बुद्धिरिति*। चारुशब्दात् 'वोतो गुणवचनात्' इति ङीष्। *आचार्योऽपि चार्वीति*। यथा यष्टीः प्रवेशयेति

न्यासः

इत्यादिना षष्ठीसमासप्रतिषेधेन ज्ञापितमेतत्—सुहितार्थयोगे षष्ठी भवतीति। सुहितार्थाः = तृप्त्यर्थाः। पूर्णास्तृप्ता इत्यर्थः ॥

**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ सम्माननादिषु विशेषणेष्विति**। किंस्विदत्र विशिष्यते नयत्यर्थोऽनेनेति विशेषणम्? किंस्विन्नयत्यर्थ एव विशेषणम्? विशिष्यते व्यावर्त्यतेऽर्थान्तरादिति कृत्वा। तत्र सम्माननमाचार्यकरणं भृतिश्चेति पूर्वेणैवार्थेनैतानि विशेषणानि, परिशिष्टानि तु नयत्यर्थस्वभावानि द्वितीयेन विशेषणानि। **नयते चार्वी लोकायत इति**। अत्र नयतेः प्रापणमर्थो विशेष्यः, शिष्यसम्माननन्तु तस्य फलभावेन विशेषणम्। तत्सम्बन्धादाचार्योऽपि चार्वीत्युच्यत इति। यथा कुन्तान् प्रवेशयेत्युक्ते कुन्तशब्दः कुन्तसम्बन्धात् पुरुषेष्वपि वर्त्तते, तथेहापि चार्वीशब्दश्चार्वीसम्बन्धादाचार्येऽपि। **स्थिरीकृत्येति**। निश्चलीकृत्येत्यर्थः।

पत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति, ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति।

उत्सञ्जनम् = उत्क्षेपणम्। माणवकमुपनयते। उत्क्षिपतीत्यर्थः।

आचार्यकरणम् = आचार्यक्रिया। माणवकमीदृशेन विधिनाऽऽत्मसमीपं प्रापयति, यथा स उपनेता स्वयमाचार्यः संपद्यते। माणवकमुपनयते। आत्मानमाचार्यीकुर्वन्माणवकमात्मसमीपं प्रापयतीत्यर्थः।

### पदमञ्जरी

पुरुषेष्वजहत्स्वलिङ्ग एव यष्टिशब्दः, तद्वच्चार्वीशब्दः। *ते युक्तिभिरित्यादि*। पूर्वस्मिन् वाक्ये गुणभावेनापि प्रकृताः शिष्याः तच्छब्देन परामृश्यन्ते। *स्थाप्यमानेति*। तिष्ठतिः प्रतिपादनेऽत्र वर्त्तते। ते शिष्याः युक्तिभिः प्रतिपाद्यमानाः, निष्पाद्यमाना इत्यर्थः। *पूजिता भवन्तीति*। अभिलषितार्थसंपादनमेवैतेषां पूजा। पदार्था युक्तिभिः स्थाप्यमाना इति तु व्याख्याने पदार्थानामचेतनत्वात् न मुख्यं सम्माननम्।

*उत्क्षिपतीत्यर्थ इति*। तेनोत्सञ्जनं नयतेरर्थ इति दर्शयति।

*आचार्यकरणमाचार्यक्रियेति*। सूत्रवृत्तौ च कारणावस्थाया विवक्षितत्वात् च्विः प्राप्तोऽपि विकल्पाधिकारान्न कृतः। तथा चाचार्यीकुर्वन्निति च्विः प्रयुक्तः। ननूपनयनं माणवकस्य संस्कारः, येनासावध्ययने योग्यो भवति, न त्वनेनाचार्ये कश्चिदतिशयो जन्यते; आचार्यशब्दस्य तु प्रवृत्तिनिमित्तमुपनीयाध्यापनं नाम क्रियाविशेषः, यथोपाध्यायशब्दस्यैकदेशाध्यापनं तत्कथमाचार्यकरण आत्मनेपदं विधीयते इत्यत आह—*माणवकमीदृशेनेत्यादि*। एवं मन्यते—उपनीयाध्यापनेनादृष्टरूपः कश्चिदतिशय आचार्ये जन्यते, तदेव प्रवृत्तिनिमित्तमाचार्यशब्दस्येति तदाह—*स्वयमाचार्यः सम्पद्यते इति*। 'आत्मानमाचार्यीकुर्वन्' इति च हेतुलक्षणे लटः शत्रादेशः। *ईदृशेनेति*। यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः।

### न्यासः

निश्चलत्वन्तु तेषामनन्यार्थभावः। **स्थाप्यमाना इति**। लोकायते शास्त्रे पदार्थानां सम्यगवबोधः। **पूजिता भवन्तीति**। अभिलषितार्थसम्पादनमेव तेषां पूजा। अभिलषितोऽर्थस्तु लोकायते शास्त्रे पदार्थानां सम्यगवबोधः। **उत्क्षिपतीत्यर्थ इति**। एतेनोत्सञ्जनं नयतेरर्थः, न तु तस्य विशेषणमिति दर्शयति। एवं निश्चिनोतीत्यर्थ इत्यादिभिरपि ज्ञानादीनां यथासम्भवं नयत्यर्थतां दर्शयतीति वेदितव्यम्। **ईदृशेनेति**। यादृशः शास्त्रोक्तो विधिः, तादृशेनेत्यर्थः। अत्राप्याचार्यकरणं नयत्यर्थस्य फलभावेनैव

ज्ञानम् = प्रमेयनिश्चयः । नयते चार्वी लोकायते । तत्र प्रमेयं निश्चिनोतीत्यर्थः ।

भृतिः = वेतनम् । कर्मकरानुपनयते । भृतिदानेन समीपं करोतीत्यर्थः ।

विगणनम् = ऋणादेर्निर्यातनम् । मद्राः करं विनयन्ते । निर्यातयन्तीत्यर्थः ।

व्ययः = धर्मादिषु विनियोगः । शतं विनयते, सहस्रं विनयते । धर्माद्यर्थं शतं विनियुङ्क्त इत्यर्थः ।

एतेष्विति किम् ? अजां नयति ग्रामम् ॥

**कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥**

नयतेः कर्त्ता देवदत्तादिर्लकारवाच्यः । कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति । शरीरम् = प्राणिकायः, तदेकदेशोऽपि शरीरम् । क्रोधं विनयते, मन्युं विनयते ।

**पदमञ्जरी**

ननु यद्याचार्यकमुपनयनस्य प्रयोजनं तत्कर्त्रभिप्रायमिति नार्थं आचार्यकरण आत्मनेपदविधानेन ? उच्यते; नोपनयनेनाचार्यकं जन्यते, किं तर्हि ? तत्पूर्वकेणाध्ययनेन । उपनयनक्रियायास्तु माणवकसंस्कारः साक्षात्फलम् । एवं संस्कृतस्य माणवकस्य यदध्यापनं तेनाचार्यकं जन्यते इति न तदुपनयनायाः क्रियायाः फलम् । यच्च तस्याः फलं तन्माणवकगामि, न कर्तृगामि ।

*निश्चिनोतीत्यर्थ इति* । अनेन ज्ञानं नयतेरर्थ इत्याह । *कारं विनयते इति* । कर एव कारः, प्रज्ञादिः, राजग्राह्यो भागः कर्षकैः कल्पितः ॥

*कर्तृस्थे चाशरीरे कर्मणि* ॥ नयतेरात्मनेपदविधानात्तत्सम्बन्ध्येव कर्त्ता लकारवाच्यः प्रत्यासन्नो गृह्यत इत्याह—*नयतेः कर्त्तेति* । *तदेकदेशोऽपि शरीर-*

**न्यासः**

विशेषणम् । कर्मकरानुपनयते इति । अत्र हि भृतिर्हेतुभावेन नयत्यर्थस्य समीपकरणस्य विशेषणम् । ऋणादेरिति । आदिशब्देन करशुल्कदण्डादीनां ग्रहणम् । करो नाम राजग्राह्यो भागः कर्षकैः रक्षार्थं परिकल्पितः । धर्मादिष्विति । आदिशब्देन कामादिष्वपि ॥

**कर्तृस्थे चाशरीरे कर्मणि** ॥ नयतेः कर्त्तेति । अर्थद्वारकः सम्बन्धो वेदितव्यः । तदेकदेशोऽपि शरीरमिति । समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त

कर्तृस्थ इति किम् ? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति । अशरीर इति किम् ? गडुं विनयति । घाटां विनयति । कर्मणीति किम् ? बुद्धया विनयति । प्रज्ञया विनयति ॥

**वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥**

शेषात्कर्त्तरि परस्मैपदे प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति । वृत्तिः = अप्रतिबन्धः । सर्गः = उत्साहः । तायनम् = स्फीतता । वृत्तौ तावत्—ऋक्ष्वस्य क्रमते बुद्धिः । न प्रतिहन्यत इत्यर्थः । यजुःष्वस्य क्रमते बुद्धिः । सर्गे—व्याकरणाध्ययनाय क्रमते । उत्सहत इत्यर्थः । तायने—अस्मिन् शास्त्राणि क्रमन्ते । स्फीतीभवन्तीत्यर्थः ।

एतेष्विति किम् ? अपक्रामति ॥

**पदमञ्जरी**

*मिति* । अपिशब्दोऽवधारणे । इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियन्ति, न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य । न च शरीरमेव शरीरस्थं भवति, अतस्तदेकदेश एव तद्ग्रहणेन गृह्यते इत्यर्थः । अत्र क्रोधाद्यपनयनफलं कर्त्रभिप्रायमिति 'स्वरितञितः' इत्येव सिद्धे नियमार्थमिदम्—कर्तृस्थे कर्मण्यशरीरस्थ एवेति । अथ कथम् 'विगणय्य नयन्ति पौरुषं विजितक्रोधरया जिगीषवः' इति ? केचिदाहुः—अपगमे वर्तमानादिदमात्मनेपदविधानं भवति, अत्र तु करोत्यर्थे प्राप्त्यर्थे वा वर्तते, अनेकार्थत्वाद्धातूनामिति ॥

*वृत्तिसर्गतायनेषु क्रमः ॥ सर्ग उत्साह इति ।* 'सृष्टश्चेद्ब्राह्मणवधे', 'येनेन्द्र-

**न्यासः**

इति भावः । कथं पुनर्मुख्ये सति गौणस्यापि ग्रहणं लभ्यते ? शरीरग्रहणात् । इह लघुत्वात् कायग्रहणे कर्त्तव्ये यच्छरीरग्रहणं करोति तच्छरीरैकदेशोऽपि शरीरश्रुत्या नाम गृह्येतेत्येवमर्थम् । क्रोधं विनयते इति । अत्र नयतेर्यः कर्त्ता स हि बुद्धीन्द्रियदेहसमुदायस्वभावो देवदत्तादिः । तत्रैव कर्म क्रोधो वर्त्तत इति कर्तृस्थं कर्माशरीरं भवति । एवं गडुं विनयतीत्यादौ गड्वादेः शरीरैकदेशस्य कर्मणः कर्तृस्थाभावो वेदितव्यः । अत्र च क्रोधाद्यपगमः क्रियाफलं कर्त्रभिप्राय एवेति 'स्वरितञितः कर्त्रभिप्राये' इत्यनेनैव सिद्धे नियमार्थमेतद् वचनं वेदितव्यम्—कर्तृस्थे कर्मण्यशरीर एव, नान्यत्रेति ॥

**वृत्तिसर्गतायनेषु क्रमः** ॥ शेषलक्षणेन क्रमेः परस्मैपदे प्राप्त आत्मनेपदं विधीयते । वृत्त्यादयोऽर्था अप्रतिबन्धोत्साहस्फीततासु प्रसिद्धाः ॥

## उपपराभ्याम् ॥ ३९ ॥

'वृत्तिसर्गतायनेषु' इति वर्त्तते । उपपरापूर्वात्क्रमतेर्वृत्त्यादिष्वर्थेषु वर्त्तमानादात्मनेपदं भवति। किमर्थं तर्हीदमुच्यते ? उपसर्गनियमार्थम्—सोपसर्गादुपपरापूर्वादेव, नान्यपूर्वादिति । उपक्रमते, पराक्रमते ।

उपपराभ्यामिति किम् ? संक्रामति । वृत्त्यादिष्वित्येव—उपक्रामति, पराक्रामति ॥

## आङ उद्गमने ॥ ४० ॥

आङ्पूर्वात् क्रमतेरुद्गमने वर्त्तमानादात्मनेपदं भवति । आक्रमते आदित्यः । आक्रमते चन्द्रमाः । आक्रमन्ते ज्योतींषि ।

उद्गमन इति किम् ? आक्रामति माणवकः कुतुपम् ।

※ ज्योतिरुद्गमन इति वक्तव्यम् ※ । इह मा भूत्—आक्रामति धूमो हर्म्यतलात् ॥

### पदमञ्जरी

लोकापजयाय सृष्टः' इत्यादौ दर्शनात्सृजिरुत्सहार्थः। वृत्त्यादिष्विति किम् ? अपक्रामति ॥

*उपपराभ्याम्* ॥ *उपपराभ्यामिति किमिति* । उपसर्गनियमः किमर्थ इत्यर्थः । *संक्रामतीति* । 'क्रमः परस्मैपदेषु' इति दीर्घः ॥

*आङ उद्गमने* ॥ *आक्रामति माणवकः कुतुपमिति* । अवष्टभ्नातीत्यर्थः । ह्रस्वा कुतूः कुतुपः, 'कुत्वा डुपच्' । *कुतुपमिति* पाठे कुतपो दर्भसंस्तरः । *आक्रामति धूमो हर्म्यतलमिति* । उद्गमने क्रमिरकर्मकः, तस्माद्धर्म्यतलादिति पञ्चम्यन्तं पठितव्यम् । यद्वा—उद्गमनपूर्विकायां व्याप्तावत्र क्रमिर्द्रष्टव्यः । इह तु 'नभः समाक्रामति चन्द्रमाः क्रमात्' इति क्रमिर्व्याप्तौ वर्तते; नोद्गमने ॥

### न्यासः

उपपराभ्याम् ॥ संक्रामतीति । 'क्रमः परस्मैपदेषु' इति दीर्घः ॥

आङ उद्गमने ॥ आक्रामति माणवकः कुतपमिति । अवष्टभ्नातीत्यर्थः । ज्योतिरुद्गमन इति वक्तव्यमिति । ज्योतिषां ग्रहनक्षत्रादीनामुद्गमन एवात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'अनुपसर्गाद्वा' इत्यतो वाग्रहणमनुवर्त्तते सिंहावलोकितन्यायेन, सा च व्यवस्थितविभाषा; तेन ज्योतिरुद्गमन एव भविष्यति, नान्यत्रेति । यदि तर्हि 'वा' ग्रहणमनुवर्त्तते, उत्तरयोरपि योगयोरनुवर्त्तेत ? मण्डूकप्लुतिन्यायेन नानुवर्त्तिष्यत इत्यदोषः ॥

## वेः पादविहरणे ॥ ४१ ॥

विपूर्वात्क्रमतेः पादविहरणेऽर्थे वर्त्तमानादात्मनेपदं भवति । विहरणम् = विक्षेपः । सुष्ठु विक्रमते, साधु विक्रमते । अश्वादीनां गतिविशेषो विक्रमणमुच्यते । यद्यपि क्रमिः पादविहरण एव पठ्यते—'क्रमु पादविक्षेपे' इति, तथाप्यनेकार्थत्वाद्धातूनामेवमुक्तम् ।

पादविहरण इति किम् ? विक्रामत्यजिनसन्धिः ॥

## प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥

'प्र उप' इत्येताभ्यामुपसर्गाभ्यां परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ तुल्यार्थौ भवतः । क चानयोस्तुल्यार्थता ? आदिकर्मणि । प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम् ।

समर्थाभ्यामिति किम् ? पूर्वेद्युः प्रक्रामति । गच्छतीत्यर्थः । अपरेद्युरुपक्रामति । आगच्छतीत्यर्थः । अथ 'उपपराभ्याम्' इत्यनेनात्मनेपदमत्र कस्मान्न भवति ? वृत्त्यादिग्रहणं तत्रानुवर्त्तते, ततोऽन्यत्रेदं प्रत्युदाहरणम् ॥

## अनुपसर्गाद्वा ॥ ४३ ॥

### पदमञ्जरी

*वेः पादविहरणे* ॥ *विक्रामत्यजिनसन्धिरिति* । द्विधा भवति, स्फुटतीत्यर्थः ॥

*प्रोपाभ्यां समर्थाभ्याम्* ॥ अन्योऽन्यसाहचर्यात्प्रोपयोरुपसर्गयोर्ग्रहणम्, न प्रातिपदिकान्तकर्मप्रवचनीययोः, नापि क्रियान्तरसम्बन्धिनोः, नाप्यनर्थकयोरित्याह—*प्र उप इत्येताभ्यामुपसर्गाभ्यामिति* । *तुल्यार्थाविति* । एतेन समोऽर्थो ययोरिति समर्थौ, शकन्ध्वादित्वात्पररूपम्, संशब्दस्येव वाऽनेकार्थत्वात्तुल्यार्थत्वमिति दर्शयति । ननु 'समर्थः पदविधिः' इत्यादौ सम्बन्धार्थत्वं प्रसिद्धम्, सत्यम्; इह तु धात्वर्थं प्रति पारतन्त्र्यान्न परस्परेण सम्बन्धार्थत्वम् । धातुना चोपसर्गयोः सम्बन्धोऽव्यभिचारी, तस्मात्पूर्वोक्त एवार्थः । *प्रक्रमते इति* । आरभत इत्यर्थः ॥

### न्यासः

वेः पादविहरणे ॥ विक्रामत्यजिनसन्धिरिति । द्विधा भवति । स्फुटतीत्यर्थः ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ प्रक्रमते, उपक्रमते इति । आरभत इत्यर्थः ॥

'क्रम' इति वर्त्तते। अप्राप्तविभाषेयम्। उपसर्गवियुक्तात्क्रमतेरात्मनेपदं वा भवति। क्रमते। क्रमति।

अनुपसर्गादिति किम्? संक्रामति॥

## अपह्नवे ज्ञः॥ ४४॥

शेषात्कर्त्तरि परस्मैपदे प्राप्ते जानातेरपह्नवे वर्त्तमानाद् आत्मनेपदं भवति। अपह्नवः = अपह्नुतिः, अपलापः। सोपसर्गश्चायमपह्नवे वर्त्तते, न केवलः। शतमपजानीते, सहस्रमपजानीते। अपलपतीत्यर्थः।

अपह्नव इति किम्? न त्वं किञ्चिदपि जानासि॥

## अकर्मकाच्च॥ ४५॥

अकर्त्रभिप्रायार्थमिदम्, कर्त्रभिप्राये हि 'अनुपसर्गाज्ज्ञः' इति जानातेरकर्मकादकर्मकक्रियावचनादात्मनेपदं भवति। सर्पिषो जानीते, मधुनो जानीते। कथं चायमकर्मकः? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्, किं तर्हि? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन। तथा च—

### पदमञ्जरी

*अनुपसर्गाद्वा*॥ *अप्राप्तविभाषेयमिति*। 'उपपराभ्याम्' इत्यस्य नियमार्थत्वाद् वृत्त्यादिसूत्रमनुपसर्गविषयमेवेति न तत्रायं विकल्प इति भावः॥

*अपह्नवे ज्ञः*॥ *शेषादित्यादि*। असत्यस्मिन् सूत्रे अयमविशेष एव भवतीति भावः। *सोपसर्गश्चेति*। तेन 'अनुपसर्गाज् ज्ञः' इत्यनेन कर्त्रभिप्राये क्रियाफले न सिद्ध्यतीति भावः। *अपजानीते इति*। 'ज्ञाजनोर्जा'॥

*अकर्मकाच्च*॥ *अकर्त्रभिप्रायार्थमिदमिति*। अथ कर्त्रभिप्राये कथम्, तत्राह—*कर्त्रभिप्राये हीति*। ननु सोपसर्गात्कर्त्रभिप्रायेऽप्यनेनैवात्मनेपदमेषितव्यम्—औषधस्यानुजानीते, औषधस्यानुजिज्ञासत इति; तस्मात्सर्पिषो जानीते इत्युदाहरणा-

### न्यासः

**अनुपसर्गाद्वा**॥ **अप्राप्तविभाषेयमिति**। वृत्त्यादीनां निवृत्तत्वात्॥

**अपह्नवे ज्ञः**॥ **शतमपजानीते इति**। 'ज्ञाजनोर्जा' इति जादेशः, श्ना, पूर्ववद् 'ई हल्यघोः' इतीत्त्वम्॥

**अकर्मकाच्च**॥ **कथञ्चायमकर्मक इति**। एवं मन्यते—सर्पिरादि ज्ञेयत्वेन विवक्षितं कर्म, अतस्तेन कर्मणा सकर्मक एवायमित्यभिप्रायः। **कथमिति**। न कथञ्चिदित्यर्थः। **तथा चेत्यादिना** 'नात्र सर्पिरादि कर्मत्वेन, अपि तु करणत्वेन विवक्षितम्' इत्यत्र

'ज्ञोऽविदर्थस्य करणे' इति षष्ठी विधीयते। सर्पिषो जानीते, मधुनो जानीते। सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः।

अकर्मकादिति किम्? स्वरेण पुत्रं जानाति॥

**संप्रतिभ्यामनाध्याने॥ ४६॥**

'ज्ञः' इति वर्त्तते। सकर्मकार्थमिदम्। 'सं प्रति' इत्येवं पूर्वात् जानातेरनाध्याने वर्त्तमानादात्मनेपदं भवति। आध्यानम् = उत्कण्ठास्मरणम्। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते, सहस्रं प्रतिजानीते।

अनाध्याने इति किम्? मातुः संजानाति, पितुः संजानाति। उत्कण्ठते इत्यर्थः।

**पदमञ्जरी**

भिप्रायमेतद्वेदितव्यम्। *कथं चायमकर्मक इति*। 'सर्पिषः' इति कर्मणि शेषत्वेन षष्ठी, न माषाणामश्नीयादितिवत्। तेन सर्पिरादिना ज्ञेयेन सकर्मक इति मत्वा प्रश्नः।

*अकर्मकादिति किमिति*। यदि सर्पिरादि करणत्वेन विवक्षितम्, तर्हि करणादिति वक्तव्यमित्यभिप्रायः। एवमुच्यमाने सकर्मकादपि स्यादेवेति दर्शयति–*स्वरेणेति*॥

*सम्प्रतिभ्यामनाध्याने*॥ उत्कण्ठास्मरणम् उत्कण्ठापूर्वकं स्मरणम्। *मातुरिति*। 'अधीगर्थदयेशाम्' इति षष्ठी। ननु 'शेष' इति तत्रानुवर्त्तते, तेन कर्म शेषत्वेन

**न्यासः**

युक्तिमाह—सर्पिषोपायेनेत्यादि। यस्य सर्पिःष्वभिष्वङ्गो विना तेन भुजिक्रियायामभिलाषो न भवति तस्य भोजने प्रवृत्तिं प्रति सर्पिरुपायभावं प्रतिपद्यत इति तेनोपायेन स प्रवर्त्तत इति।

अकर्मकादिति किमिति। 'नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि?.... करणत्वेन' इति ब्रुवता वृत्तिकृता साक्षाच्छब्दोपात्तेन करणेन सकरणादात्मनेपदं भवतीत्युक्तं भवति। एवञ्च सकरणादित्येवं वाच्यम्, किमकर्मकग्रहणेनेति भावः। एवमुच्यमाने करणयुक्तात् सकर्मकादपि स्यादिति दर्शयितुमाह—स्वरेण पुत्रं जानातीति॥

संप्रतिभ्यामनाध्याने॥ उत्कण्ठास्मरणमिति। उत्कण्ठापूर्वकस्मरणमिति। मातुरिति। 'अधीगर्थदयेशां कर्मणि' इति षष्ठी।

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥**

शेषात्कर्त्तरि परस्मैपदे प्राप्ते भासनादिषु विशेषणेषु सत्सु वदते-रात्मनेपदं भवति । भासनम् = दीप्तिः । वदते चार्वी लोकायते । भासमानो दीप्यमानस्तत्र पदार्थान् व्यक्तीकरोतीत्यर्थः । उपसंभाषा = उपसान्त्वनम् । कर्मकरानुपवदते । उपसान्त्वयतीत्यर्थः । ज्ञानम् = सम्यगवबोधः । वदते चार्वी लोकायते । जानाति वदितुमित्यर्थः । यत्नः = उत्साहः । क्षेत्रे वदते, गेहे वदते । तद्विषयमुत्साहमाविष्करोतीत्यर्थः । विमतिः = नानामतिः । क्षेत्रे विवदन्ते, गेहे विवदन्ते ।

**पदमञ्जरी**

विवक्षितव्यमिति अकर्मकत्वात्पूर्वेणात्रात्मनेपदप्रसङ्गः । 'अनाध्याने' इत्यस्य तु मातरं संजानातीति व्यावर्त्यं स्याद्यत्र कर्मतैव विवक्षिता, नैष दोषः; 'अनाध्याने' इति विभज्यते, तेन पूर्वयोगस्यापि शेषो भविष्यति ॥

*भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः* ॥ *भासनादिष्विति* । अत्रापि किञ्चिद्धातोर्विशेषणम्, किञ्चिद्धात्वर्थस्य । उपसान्त्वनम् = उपच्छन्दनम्, धातोः, भासनादि धात्वर्थस्य । *भासमान इति* । हेतौ लटः शानजादेशप्रयोगेण भासनं हेतुत्वेन विशेषणमित्याह । शिष्यैः स्तूयमानो भासते । तथा चोपर्युपरि शास्त्रार्थस्य प्रतिभासनात् सुष्ठु वदनं भवति, तेजोभङ्गे तु न शक्नुयाद्वदितुम् । *जानाति वदितुमिति* । 'शकधृष' इत्यादिना तुमुन्, अत्र वदत्यर्थो ज्ञानस्य विषयः, ज्ञानं विषयि । *तद्विषयमित्यादि* । अत्र यत्नस्याविष्करणरूपस्य वदत्यर्थस्य कर्म ।

**न्यासः**

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** ॥ **भासनादिष्वर्थेषु विशेषणेष्विति** अत्रापि किंस्विद्विशिष्यते वदत्यर्थोऽनेनेति विशेषणम् ? किंस्विद्वदत्यर्थ एव, विशेषणं ह्यर्थान्तराद् विशिष्यते व्यवच्छिद्यत इति कृत्वा ? तत्रोपसम्भाषोपसान्त्वनमुपमन्त्रणञ्च द्वितीयेनार्थेन वदत्यर्थ एव विशेषणम् । परिशिष्टानि तु भासनादीनि प्रथमेनार्थेन विशेषणानि । भासमानेत्यादिना भासनं वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणमिति दर्शयति । तथा ह्यत्र भासमान इति 'लक्षणहेत्वोः क्रियायाः' इत्यनेन शानजादेशो विहितः । जानातीत्यादिना ज्ञानं वदत्यर्थस्य विषयिभावेन विशेषणमिति दर्शयति । ज्ञानेन ह्यसौ वदितुं जानाति । अत्र येन ज्ञानेन वदनं वदत्यर्थं जानाति, तत्र तेनैव विषयेण परिच्छेद्येन विषयीभवति । तद्विषयमित्यादिना यत्र आविष्करणस्य वदत्यर्थस्य हेतुभावेन विशेषणमित्याचष्टे । उत्साहो ह्याविष्क्रियमाण आविष्करण-

विमतिपतिता विचित्रं भाषन्त इत्यर्थः। उपमन्त्रणम् = रहस्युपच्छन्दनम्। कुलभार्यामुपवदते। परदानुपवदते। उपच्छन्दयतीत्यर्थः।

एतेष्विति किम्? यत्किञ्चिद्वदति॥

**व्यक्तवाचां समुच्चारणे॥ ४८॥**

'वदः' इति वर्त्तते। व्यक्तवाचां समुच्चारणं सहोच्चारणम्, तत्र वर्त्तमानाद्वदतेरात्मनेपदं भवति। ननु 'वद व्यक्तायां वाचि' इत्येव पठ्यते, तत्र किं व्यक्तवाचामिति विशेषणेन? प्रसिद्ध्युपसंग्रहार्थमेतत्। व्यक्तवाच इति हि मनुष्याः

पदमञ्जरी

*विमतिपतिता इति* हेतुगर्भविशेषणं प्रयुञ्जानो विमतिर्हेतुत्वेन विशेषणमित्याह। विमतौ हि सत्यां विचित्रभाषणरूपो वदत्यर्थो निवर्तते। *उपच्छन्दयतीति*। 'भद्रे भजस्व माम्, इदं ते दास्यामि' इति, स्वाभिलषिते प्रवर्तयतीत्यर्थः॥

*व्यक्तवाचां समुच्चारणे॥ मनुष्याः प्रसिद्धा इति*। यद्यपि कुक्कुटादिरुतमपि स्वरूपेण व्यक्तम्–अस्येदं रुतमस्येदमिति। मनुष्यवाक्तु व्यक्ततरा भवति, वर्णात्मकत्वाद्, अर्थावगतिहेतुत्वाच्च, अतस्त एव गृह्यन्ते। शुकशारिकादीनां तु

न्यासः

क्रियायाः कर्माख्यं साधनं भवति, साधनञ्च हेतुः; कारकाणां क्रियानिमित्तत्वात्। विमतिपतिता इत्यादिना विमतिर्भाषणस्य वदत्यर्थस्य हेतुभावेन विशेषणमिति दर्शयति। सत्यां विमतौ विचित्रं नानाप्रकारं भाषन्ते। यदि ह्यभिन्ना मतिः स्यादभिन्नमेव भाषेरन्। उपच्छन्दयतीति। 'भद्रे भजस्व मामिदं ते दास्यामि' इत्येवमादिभिरभीष्टेऽर्थे प्रवर्त्तयतीत्यर्थः॥

व्यक्तवाचां समुच्चारणे॥ प्रसिद्ध्युपसंग्रहार्थमिति। यदि तदर्थं व्यक्तवाचामिति नोच्येत, वरतनु सम्प्रवदन्ति कुक्कुटा[1] इत्यत्रापि स्यात्; कुक्कुटा अपि व्यक्तवाच एव। तथा हि—कुक्कुटेनापि लपिते विशेषपरिच्छेदादुच्यते—कुक्कुटा लपन्तीति। वरतन्विति तनूशब्दस्य 'अम्बार्थनद्योर्ह्रस्वः' ह्रस्वः। ह्रस्ववचनसामर्थ्याद् 'ह्रस्वस्य गुणः' इति गुणो न भवति। नृणामिति न कृतं वैचित्र्यार्थम्॥

---

१. अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोद्गम एष वर्त्तते वरतनु संप्रवदन्ति कुक्कुटाः॥
इत्येवं कृत्स्न श्लोकः।

प्रसिद्धाः, तेषां समुच्चारणे यथा स्यात्। संप्रवदन्ते ब्राह्मणाः। संप्रवदन्ते क्षत्रियाः।

व्यक्तवाचामिति किम्? संप्रवदन्ति कुक्कुटाः। समुच्चारण इति किम्? ब्राह्मणो वदति। क्षत्रियो वदति॥

अनोरकर्मकात्॥ ४९॥

'वदः' इति 'व्यक्तवाचाम्' इति च वर्त्तते। अनुपूर्वाद्वदतेरकर्मकाद्व्यक्तवाग्विषयादात्मनेपदं भवति। अनुवदते कठः कलापस्य। अनुवदते मौद्गः पैप्पलादस्य। अनुः सादृश्ये। यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः।

अकर्मकादिति किम्? पूर्वमेव यजुरुदितमनुवदति। व्यक्तवाचामित्येव—अनुवदति वीणा॥

पदमञ्जरी

पुरुषप्रयत्नवशेन क्वाचित्कं व्यक्तवाक्त्वम्, न स्वाभाविकमिति न तेषां ग्रहणम्।

*वरतनु सम्प्रवदन्ति कुक्कुटा इति।*

अपनय पादसरोजमङ्कतः, शिथिलय बाहुलतां गलादताम्।

क च वदनेंऽशुकमाकुलीकृतम्,.........इति पूर्वपादाः।

क्वचित्तु कृत्स्न एव श्लोकः पठ्यते, तत्र वरतनुरिति वहुव्रीहौ यदि ह्रस्वान्तस्तनुशब्दः, ततः 'संबुद्धौ च' इति गुणप्रसङ्गः, दीर्घान्ते तु नदीलक्षणः कप् प्राप्नोति। केचिदाहुः—तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते, तस्माद् 'ऊङुतः' इति ऊङि कृते कर्मधारयोऽयमिति॥

*अनोरकर्मकात्॥ व्यक्तवाचामिति वर्त्तत इति।* न तु समुच्चारण इति सर्वानुवृत्तौ वचनमिदमनर्थकं स्यादिति भावः। तद्व्यक्तवाक्सम्बन्धिनो वदेरिति सूत्रार्थमाह—*व्यक्तवाग्विषयादिति। अनुः सादृश्ये इति।* तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठीति भावः। *यथेत्यादि।* वदनमात्रसादृश्ये तात्पर्यमिति कर्म न विवक्षितमिति भावः। *अनुवदति।* पुनर्वदतीत्यर्थः॥

न्यासः

अनोरकर्मकात्। अनुवदतीति। अनुशब्दः पुनरित्यस्यार्थे वर्त्तते। पुनर्वदतीत्यर्थः। यजुषात्र कर्मणा सकर्मकत्वम्॥

## विभाषा विप्रलापे ॥ ५० ॥

'वद' इति वर्त्तते, 'व्यक्तवाचां समुच्चारणे' इति च । विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्त्तमानाद्वदतेरात्मनेपदं भवति विभाषा । प्राप्तविभाषेयम् । विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः । विप्रवदन्ते मौहूर्त्ताः, विप्रवदन्ति मौहूर्त्ताः । युगपत्परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः ।

विप्रलाप इति किम् ? संप्रवदन्ते ब्राह्मणाः । व्यक्तवाचामित्येव—विप्रवदन्ति शकुनयः । समुच्चारण इत्येव—क्रमेण मौहूर्त्ता मौहूर्त्तेन सह विप्रवदन्ति ॥

## अवाद् ग्रः ॥ ५१ ॥

'गॄ निगरणे' इति तुदादौ पठ्यते, तस्येदं ग्रहणम्; न तु 'गॄ शब्दे' इति क्र्यादिपठितस्य । तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति । 'शेषात्' इति परस्मैपदे प्राप्ते; अवपूर्वाद्गिरतेरात्मनेपदं भवति । अवगिरते, अवगिरेते, अवगिरन्ते ।

अवादिति किम् ? गिरति ॥

## समः प्रतिज्ञाने ॥ ५२ ॥

### पदमञ्जरी

*विभाषा विप्रलापे* ॥ संवत्सरान् वदन्तीति सांवत्सराः — ज्योतिषिकाः । एवं मौहूर्तिकाः ॥

*अवाद् ग्रः* ॥ 'गिरः' इति पाठे धात्वनुकरणत्वाद् विभक्त्यावित्वम् । 'ग्रः' इति तु पाठे रूपमात्रानुकरणं द्रष्टव्यम् । *तस्य ह्यवपूर्वस्येति* । नियतविषयाण्यपि क्रियाविशेषणानि भवन्ति, यथा—उर्यादयः कृभ्वस्तिभ्योऽन्यविषया न भवन्तीति भावः ॥

### न्यासः

विभाषा विप्रलापे ॥ विप्रलापात्मके इति । परस्परप्रतिबन्धेन विरुद्धः प्रलापो विप्रलापः, स यस्यात्मा स्वभावः स तयोक्तः । प्राप्तविभाषेयमिति । 'व्यक्तवाचां समुच्चारणे' इत्यस्यानुवृत्तेः ॥

अवाद् ग्रः ॥ अवगिरत इति । 'ॠत इद्धातोः' इतीत्त्वम्, रपरत्वञ्च ॥

'ग्रः' इति वर्त्तते । संपूर्वाद् गिरतेः प्रतिज्ञाने वर्त्तमानादात्मनेपदं भवति । प्रतिज्ञानम् = अभ्युपगमः । शतं संगिरते, नित्यं शब्दं संगिरते ।

प्रतिज्ञान इति किम् ? संगिरति ग्रासम् ॥

**उदश्चरः सकर्मकात् ॥ ५३ ॥**

शेषात्कर्तरि परस्मैपदे प्राप्ते उत्पूर्वाच्चरतेः सकर्मकक्रियावचनादात्मनेपदं भवति । गेहमुच्चरते, कुटुम्बमुच्चरते, गुरुवचनमुच्चरते । उत्क्रम्य गच्छतीत्यर्थः ।

सकर्मकादिति किम् ? बाष्पमुच्चरति ॥

**समस्तृतीयायुक्तात् ॥ ५४ ॥**

सम्पूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपदं भवति । 'तृतीया' इति तृतीयाविभक्तिर्गृह्यते, तया चरतेरर्थद्वारको योगः । अश्वेन संचरते ।

पदमञ्जरी

*समः प्रतिज्ञाने* ॥ *प्रतिज्ञानमभ्युपगम इति* । केचिदाहुः—"परोपदेशनिरपेक्षमात्मनैव विप्रतिपन्नस्य पक्षस्य परिग्रहोऽभ्युपगमः, परेण प्रार्थितस्यार्थस्य नियमवचनम् 'एतावद्दास्यामि' इति, 'अस्मिन्काले दास्यामि' इत्येवंरूपः प्रतिश्रवः । परेण युक्त्या साधितस्यार्थस्य सम्माननम्—समीचीनमुक्तमत्र भवतेत्येवं रूपमङ्गीकरणमिति, प्रतिज्ञासामान्यावान्तरभेदा एते, न तु पर्यायाः" इति । वृत्तिकारस्तु परस्परविषयेऽङ्गीकरणादिव्यहारदर्शनात् पर्यायत्वमेव मन्यते ॥

*उदश्चरः सकमकात्* ॥ *उत्क्रम्येति* उल्लङ्घ्येत्यर्थः । *उच्चरतीति* उपरिष्टाद् गच्छतीत्यर्थः ॥

*समस्तृतीयायुक्तात्* ॥ *विभक्तिर्गृह्यते इति* । तत्रैव तृतीयाशब्दस्य मुख्य·

न्यासः

समः प्रतिज्ञाने ॥ उदश्चरः सकर्मकात् ॥ गेहमुच्चरत इति । चरिर्गत्यर्थः । गुरुवचनमुच्चरते इति । अत्रोत्क्रमणात्मिकायां गतौ वर्त्तमानश्चरतिर्गुरुवचनेन कर्मणा सकर्मकः । बाष्पमुच्चरतीति । उपरिष्टाद् गच्छतीत्यर्थः । नात्र किञ्चित् कर्म विवक्षितमित्यकर्मकत्वम् ॥

समस्तृतीयायुक्तात् ॥ यद्यत्र तृतीयेति तृतीयार्थो गृह्यते, तदेहापि स्यात्—उभौ लोकौ सञ्चरसि इमञ्चामुञ्च देवलेति[1] । अत्रापि तृतीयार्थो गम्यत एव । स तपसा श्रुतेन

---

१. देवलेतीत्यस्य स्थाने नारदेतीति पाठोऽपि क्वचित् ।

तृतीयायुक्तादिति किम् ? उभौ लोकौ संचरसि इमं चामुं च देवल । यद्यप्यत्र तदर्थयोगः संभवति, तृतीया तु न श्रूयत इति प्रत्युदाहरणं भवति ॥

## दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५ ॥

'दाण् दाने' परस्मैपदी । ततः संपूर्वात्तृतीयायुक्तादात्मनेपदं भवति, सा चेत्तृतीया चतुर्थ्यर्थे भवति ।

कथं पुनस्तृतीया चतुर्थ्यर्थे स्यात् ? वक्तव्यमेवैतत्—* अशिष्टव्यव-

पदमञ्जरी

त्वात् । यद्येवम्, तया सह धातोः सम्बन्धो न भवति; न हि तृतीया धातुवाच्या, नापि धातुस्तृतीयान्त इत्यत आह—*तयेत्यादि* । तृतीयार्थेन धात्वर्थस्य योगादौपचारिको धातोस्तृतीयायोग इत्यर्थः । *यद्यप्यत्रेति* । न हि चेष्टारूपसञ्चरणमन्तरेण करणं सम्भवति, अतोऽश्रुतेऽपि करणपदे तपसा श्रुतेन वेति गम्यमानत्वात्तदर्थयोगस्य सम्भवः । *तृतीया त्विति* । एतदर्थमेव हि पूर्वमुक्तम्—विभक्तिर्गृह्यत इति । तृतीयायुक्तादिति वाऽनर्थकं स्यात् । यदि तदर्थयोगः स्यात्, सर्वत्रैवं तदर्थभावादिति भावः ॥

*दाणश्च सा चेच्चतुर्थ्यर्थे* ॥ *वक्तव्यमेवैतदिति* । सूत्रे चेच्छब्दश्चशब्दश्चार्थे, अनेकार्थ-

न्यासः

वा विद्यत एवेत्येतच्चेतसि कृत्वाह—तृतीयेति । तृतीयाविभक्तिर्गृह्यत इति । यद्येवं तया सह धातोः सम्बन्धो नोपपद्यते । न हि तृतीया धातुवाच्येत्याह—तयेत्यादि । अर्थो द्वारं मुखमुपायो यस्य स तथोक्तः । तृतीयार्थेन धात्वर्थस्य युक्तत्वादौपचारिको धातोस्तृतीयार्थेन योग इति दर्शयति । यद्यप्यत्र तदर्थेन योगः सम्भवतीति । विना करणेन क्रियानिष्पत्तेरभावात्, तथापि न भवति । तृतीया त्वित्यादि । तृतीयायुक्तग्रहणं ह्येवमर्थं क्रियते—श्रूयमाणतृतीयायुक्ताद् यथा स्यादिति, अन्यथा सम इत्येवं वक्तव्यं स्यात् ? अनुक्तेऽपि सिद्धत्वात् तृतीयाप्रयोगस्य । न हि तेन विना क्रियानिष्पत्तिरुपपद्यते । तस्माद् यत्र तृतीया श्रूयते तन्मूलोदाहरणम्, यत्र तु न श्रूयते तत् प्रत्युदाहरणम् ।

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ कथं पुनस्तृतीया चतुर्थ्यर्थे स्यादिति ? न कथञ्चिदित्यर्थः । तद्विधायिनः शास्त्रस्याभावादिति भावः । वक्तव्यमेवैतदिति । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—तदेव संप्रदानं यदा साधकतमत्वेन विवक्ष्यते तदा चतुर्थ्यर्थेऽपि तृतीया भवति, विवक्षातः कारकाणि भवन्तीति कृत्वा; न तु स्वभावतः । सा च विवक्षा लौकिकी समाश्रीयते, न तु प्रायोगिकीति । लोके चाशिष्टव्यवहारे

हारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् * । दास्या मालां संप्रयच्छते । कामुकः सन् दास्यै ददातीत्यर्थः ।

चतुर्थ्यर्थे इति किम् ? पाणिना संप्रयच्छति । समः प्रशब्देन व्यवधाने कथमात्मनेपदं भवति ? 'समः' इति विशेषणे षष्ठी, न पञ्चमी ॥

**उपाद्यमः स्वकरणे ॥ ५६ ॥**

शेषात्कर्त्तरि परस्मैपदे प्राप्ते उपपूर्वाद् यमः स्वकरणे वर्तमानादात्मनेपदं भवति । पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम् । भार्यामुपयच्छते ।

**पदमञ्जरी**

त्वान्निपानामिति । केचिद्—दाणस्तृतीयायुक्तादात्मनेपदं भवति, 'सा च तृतीया चतुर्थ्यर्थे वेदितव्येति व्याचक्षते; एवमपि 'अशिष्टव्यवहारे' इति वक्तव्यमेव, अशिष्टानां सङ्कीर्णाचाराणां यो व्यवहार आचारः तस्मिन्नित्यर्थः । *दास्या सम्प्रयच्छत इति* । यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते, स्वयं च तस्यै ददाति तद्विषयोऽयं प्रयोग इत्याहुः । *कथमात्मनेपदमिति* । न कथञ्चित्, 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति भावः । *विशेषणषष्ठीति* । एवं च पूर्वसूत्रेऽप्यश्वेन समुदाचरत इत्यादावपि भवितव्यम् ॥

*उपाद्यमः स्वकरणे* ॥ इह स्वस्य सतो रूपान्तरेण यत्करणं तत्स्वकरणमिति न गृह्यते, किं तर्हि ? यदाऽस्वं स्वं करोति तदा भवितव्यम्, च्विप्रत्ययस्तु विकल्पितत्वान्न भवति । *पाणिग्रहणविशिष्टमिति* । पाणिग्रहणं नाम कश्चित्कन्या-

**न्यासः**

एव सा सम्भवति, नान्यत्र । लौकिकविवक्षात्र समाश्रीयत इति अस्यैवार्थस्य द्योतनाय चेच्छब्दः प्रयुक्तः । दास्या मालां संप्रयच्छत इति । यो हि धर्मशास्त्रविरुद्धां दासीं कामयितुं तस्यै मालां ददाति तस्यासावशिष्टव्यवहारो भवतीत्यस्त्यत्राशिष्टव्यवहारः । संप्रयच्छत इति पाघ्रादिसूत्रेण दाणो यच्छादेशः । कथमात्मनेपदं भवतीति । न कथञ्चिदित्यर्थः । 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति । एवं मन्यते—सम इति विशेषणे षष्ठीत्यादि । यदि 'समः' इति पञ्चमी स्यान्न षष्ठी, तदा प्रशब्देन व्यवधानादात्मनेपदं न स्यात्; तस्मान्नेयं पञ्चमी, किं तर्हि ? षष्ठी—समो विशेषणस्य सम्बन्धी यो विशेष्यो दाणिति । ततश्च व्यवहितोऽपि विशेषणविशेष्यभावो भवतीति तेन व्यवधानेऽपि भवत्यात्मनेपदम् ॥

**उपाद्यमः स्वकरणे** ॥ यदि स्वकरणमात्र आत्मनेपदं भवति शाटकादिस्वीकारेऽपि स्यादिति चोद्यमपाकर्तुमाह—पाणिग्रहणमित्यादि । एवं मन्यते—प्रतिनियत-

स्वकरण इति किम् ? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति ॥

ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥

ज्ञा, श्रु, स्मृ, दृश्—इत्येतेषां सन्नन्तानामात्मनेपदं भवति । तत्र जानातेः 'अपह्नवे ज्ञः' इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि 'समो गम्यृच्छि' इत्यत्र विहितम्; तस्मिन्विषये 'पूर्ववत्सनः' इत्येव सिद्धमात्मनेपदं ततोऽन्यत्रानेन विधीयते । स्मरतेः पुनरप्राप्त एव विधानम् । धर्मं जिज्ञासते । गुरुं शुश्रूषते । नष्टं सुस्मूर्षते । नृपं दिदृक्षते ।

सन इति किम् ? जानाति, शृणोति, स्मरति, पश्यति ।

नानोर्ज्ञः ॥ ५८ ॥

पूर्वेण योगेन प्राप्तमात्मनेपदं प्रतिषिध्यते । अनुपूर्वाज्जानातेः

पदमञ्जरी

संस्कारस्तद्विशिष्टमित्यर्थः । *भाष्ये* तु—अस्वस्य सतः स्वत्वापादनमेव स्वकरणमित्युक्तम् । *भट्टिकाव्येऽपि* तदनुगुणः प्रयोगः—उपायंस्त महास्त्राणि, उपायंसत तासतम्, नोपायंस्त दशानन इति । देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति, यज्ञदत्तसम्बन्धिनीं भार्यां दास्यादिरूपेण स्वीकरोतीत्यर्थः । पाणिग्रहणाभावाद् *वृत्तिकारमते* युक्तं प्रत्युदाहरणम्, *भाष्यकारमते* त्वत्रापि भवितव्यम् ॥

*ज्ञाश्रुस्मृदृशां सनः* ॥ *श्रुदृशोरपीति* । श्रुवः सूत्र एव निर्देशाद्, दृश उपसंख्यानात् ॥

*नानोर्ज्ञः* ॥ *पूर्वेणेति* । अनन्तरसूत्रेण यत्प्राप्तं तत्प्रतिषिध्यते, कुत एतत् ?

न्यासः

विषया हि शब्दशक्तयो भवन्ति, यस्मादुपपूर्वो यमिरात्मनेपदान्त एवंविध एव स्वीकारे वर्त्तते, न तु सर्वस्मिन् । तस्मात् पाणिग्रहणात्मकमेव स्वीकरणं गृह्यते । उपयच्छत इति पूर्ववद् यच्छादेशः ॥

ज्ञाश्रुस्मृदृशां सनः ॥ त्रिभिः सूत्रैरिति । 'अपह्नवे ज्ञः' इत्यादिभिः । धर्मं जिज्ञासत इति । 'ज्ञा अवबोधने', सन्, द्विर्वचनम्, अभ्यासस्य ह्रस्वत्वम्, 'सन्यतः' इतीत्त्वम् । शुश्रूषत इति । 'श्रु श्रवणे', 'इको झल्' इति सनः कित्त्वम्, 'श्रयुकः किति' इतीट्प्रतिषेधः, 'अज्झनगमां सनि' इति दीर्घः । सुस्मूर्षत इति । 'स्मृ आध्याने'; पूर्ववत् कित्त्वाद् 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वम् । दिदृक्षत इति । 'हलन्ताच्च' इति कित्त्वम्, ततश्च व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम् ॥

नानोर्ज्ञः ॥ पूर्वेणेति । अनन्तरसूत्रप्राप्तं यत् तत् प्रतिषिध्यते—'अनन्तरस्य

सन्नन्तादात्मनेपदं न भवति। तथा च सति सकर्मकस्यैवायं प्रतिषेधः संपद्यते। पुत्रमनुजिज्ञासति।

अनोरिति किम्? धर्मं जिज्ञासते॥

**प्रत्याङ्भ्यां श्रुवः॥ ५९॥**

'प्रति, आङ्' इत्येवम्पूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति। प्रतिशुश्रूषति। आशुश्रूषति। उपसर्गग्रहणं चेदम्, तस्मादिह प्रतिषेधो न भवति—देवदत्तं प्रति शुश्रूषते॥

**शदेः शितः॥ ६०॥**

**पदमञ्जरी**

'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति। *तथा चेति*। अनन्तरस्य प्रतिषेध इत्युक्तम्, एवं सति सकर्मकस्यैवायं प्रतिषेधः सम्पद्यते, अनन्तरयोगस्य सकर्मकविषयत्वाद्, अकर्मकाविषयत्वाद् 'अकर्मकाच्च' इति प्रागेव विहितत्वात्। तेनाकर्मकात् 'पूर्ववत्सनः' इत्यात्मनेपदं भवत्येव—औषधस्यानुजिज्ञासत इति। औषधेन प्रवर्तितुमिच्छतीत्यर्थः॥

*प्रत्याङ्भ्यां श्रुवः॥ उपसर्गग्रहणं चेदमिति*। परस्परसाहचर्यात्। देवदत्तं *प्रतीति*। 'लक्षणेत्थंभूत' इत्यादिना प्रतिः कर्मप्रवचनीयः, नोपसर्गः॥

शदेः *शितः*॥ यद्यत्र शदेः परो यः शित्, तत आत्मनेपदं भवतीत्येवं व्यधिकरणे पञ्चम्यावाश्रित्य व्याख्यायेत, ततोऽपि विकरणे सत्यनेन विधिना

**न्यासः**

विधिर्वा भवति प्रतिषेधो वा' इति कृत्वा। तथा चेत्यादि। यस्मादनन्तरसूत्रेणात्मनेपदं यत् प्राप्नोति, तस्यायं प्रतिषेधः सम्पद्यते। एवं सति सकर्मकस्यैवायं प्रतिषेधः; अनन्तरसूत्रेण सकर्मकादात्मनेपदविधानात्। अकर्मकाद्धि 'अकर्मकाच्च' इत्यनेन प्रागेवात्मनेपदं विहितमित्यनन्तरातीतो योगः सकर्मकार्थो विज्ञायते; यतश्चैवम्, तेनाकर्मकात् 'पूर्ववत् सनः' इत्यात्मनेपदं भवत्येव—औषधस्यानुजिज्ञासत इति॥

प्रत्याङ्भ्यां श्रुवः॥ उपसर्गग्रहणञ्चेदमिति। कथं श्रुव इति? विशेषणविशेष्यभावसम्बन्धे षष्ठी। तेनायं सम्बन्धो भवति—शृणोतेर्यौ विशेषणभूतौ प्रत्याङौ तत्पूर्वाच्छ्रुवः सम्बन्धात् सन्नन्तादात्मनेपदं न भवति। उपसर्गादेवार्थद्वारेण शृणोतेर्विशेषणभूताविति सामर्थ्यादुपसर्गयोर्ग्रहणम्। देवदत्तं प्रति शुश्रूषत इति। प्रतिशब्दस्य 'लक्षणेत्थम्भूताख्यान' इत्यादिना लक्षणे कर्मप्रवचनीयसंज्ञा, तेन प्रतिना देवदत्त एव सम्बध्यते; न श्रुत्वर्थ इति।

शदेः शितः॥ यदि 'शदेः शितः' इति व्यधिकरणे एते पञ्चम्यावित्यभ्युपगम्यैवं

'शद्लृ शातने' परस्मैपदी, तस्मादात्मनेपदं विधीयते। शदेर्यः शित्, शिद्भावी शितो वा सम्बन्धो तस्मादात्मनेपदं भवति। शीयते, शीयेते, शीयन्ते।

शित इति किम्? अशत्स्यत्। शत्स्यति। शिशत्सति॥

म्रियतेर्लुङ्लिङोश्च॥ ६१॥

'मृङ् प्राणत्यागे', ङित्वादात्मनेपदमत्र सिद्धमेवेति नियमार्थमिदं

पदमञ्जरी

भवितव्यम्। सार्वधातुके च परतो विकरणो विधीयते, ततश्च प्रागेवास्माद्विधेः सार्वधातुकं भवच्छेषत्वात्परस्मैपदं स्यात्, तस्मिंश्च सति तन्निमित्ते शिति विकरणे कृते परस्मैपदस्य निवृत्तिर्न सिद्धयेत्। न हि निर्वृत्तस्य निर्वृत्तिर्वचनशतेनापि शक्यते कर्तुमिति–इमं व्यधिकरणपक्षे दोषं दृष्ट्वा सामानाधिकरण्ये पञ्चम्याविति दर्शयन्नाह–*शदेर्यः शिदिति*। कथं पुनः शदिः शिद्भवति, विकरणे हि शकार इद् भवति, तत्राह—*शिद्भावीति*। शिद्भावी यस्मात् स तथोक्तः। शिद्भावित्वाद् उपचारेण शदिरेव शिदित्युक्तमित्यर्थः। *शितो वा सम्बन्धीति*। 'शितः' इत्यस्य षष्ठ्यन्तततां दर्शयति। कश्च शदिः शितः सम्बन्धी? यस्तस्य प्रकृतिः। प्रागेव च शिदुत्पत्तियोग्यतया तत्प्रकृतित्वमस्त्येव। *शीयत इति*। पाघ्रादिसूत्रेण शीयादेशः॥

*म्रियतेर्लुङ्लिङोश्च*॥ 'लुङ्लिङोः' इति स्थानषष्ठीयम्, विषयसप्तमी वा।

न्यासः

व्याख्यायते–शदेः परो यः शित् तस्मादात्मनेपदं भवतीति, तदा सार्वधातुकाश्रयत्वाच्छितः प्रागेव तदुत्पत्तेर्धातोः शेषत्वादस्य लावस्थायां परस्मैपदं स्यात्, ततस्तन्निमित्तकः शिद्विकरणः। तथा च विहितमिदानीं परस्मैपदमशक्यं निवर्त्तयितुमित्यात्मनेपदाभावः स्यादित्यालोच्यान्यथा व्याचिख्यासुराह—शदेर्यः शिदिति। एतेन 'शदेः शितः' इति समानाधिकरणे एते पञ्चम्याविति दर्शयति। कथं पुनः शदिः शिद्भवति, यावता विकरणस्य शकार इत्संज्ञक इत्संज्ञासम्बन्धी, न तु शदेः? इत्यत आह—शिद्भावीति। भाविशब्दोऽयम् 'भविष्यति गम्यादयः' इति भविष्यत्कालविषयः। शिद्भावीति यतः शिद्भविष्यति स शिद्भावी। एतदुक्तं भवति—शिन्निमित्तत्वादुपचारेण शदिः शिदित्युक्तमिति। भवति हि कारणे कार्योपचारात् तथा व्यपदेशः, यथा—नड्वलोदकं पादरोग इति। शितो वा सम्बन्धीति। एतेन 'शितः' इत्यस्य षष्ठ्यन्ततां दर्शयति। कः शदेः शित्सम्बन्धी? यस्तस्य प्रकृतिः। प्रागपि शितः शदेस्तत्प्रकृतित्वमस्त्येवेति शित्प्रकृतेः शदेरात्मनेपदं भवति। शीयते इति। पाघ्रादिसूत्रेण शीयादेशः।

म्रियतेर्लुङ्लिङोश्च॥ नियमार्थमिदं वचनमिति म्रियतेर्लुङ्लिङोः शित एव यथा

वचनम्—म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति। अमृत। मृषीष्ट। शितः खल्वपि—म्रियते, म्रियेते, म्रियन्ते।

नियमः किमर्थः? मरिष्यति। अमरिष्यत्॥

**पूर्ववत्सनः॥ ६२॥**

सनः पूर्वो यो धातुः आत्मनेपदी तद्वत्सनन्तादात्मनेपदं भवति। येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सनन्तादपि भवति।

**पदमञ्जरी**

*नियमार्थमिति*। यदि नियमः क्रियते, ङित्करणं किमर्थम्, यावताऽप्राप्ते विधिरेवास्तु? इह मा हि मृतेति लुङि 'तास्यनुदात्तेत्' इति ङिल्लक्षणः सार्वधातुकनिघातो यथा स्यात्। तिङ्निघातोऽत्र 'हि च' इति प्रतिषिद्धः॥

*पूर्ववत्सनः॥ पूर्ववदिति*। 'तेन तुल्यम्' इत्यादिना तृतीयान्ताद्वतिः, न पञ्चम्यन्तात्; लक्षणाभावात्। यथा च ब्राह्मणेन तुल्यं वैश्यादधीत इत्युक्ते ब्राह्मणादिवद् वैश्यादधीते इति पञ्चम्यर्थो गम्यते, तथेहापि पूर्वस्मादिव सनन्तादप्यात्मनेपदमित्यर्थो लभ्यते। 'तुल्यार्थैः' इति हि तृतीया सर्वविभक्त्यर्थानन्तर्भावयति। *यदि सनः पूर्वो यो धातुरिति*। एतेन 'सनः' इति पूर्वस्यावधिनिर्देशः, न त्वात्मनेपदापेक्षया परपञ्चमीति दर्शयति।

यद्येवम्, सनन्तादात्मनेपदमिति न लभ्येत, 'सनः' इत्यस्य सकृच्छ्रुतस्यावधिनिर्देशेनोपक्षीणत्वाद्, अत आह—*तद्वत्सनन्तादपीति*। अवधित्वेनापि तावत्सनः

**न्यासः**

स्यात्। यद्येवम्, ङिद्ग्रहणं किमर्थम्? यावतान्यत्रात्मनेपदेन न भवितव्यमिति? उच्यते; स्वरार्थमुपदिश्यते—मा हि मृतेति लुङि 'तास्यनुदात्तेन्ङिदुपदेशाल्ल सार्वधातुकस्य' अनुदात्तत्वे कृते धातोरन्तोदात्तत्वं भवति। 'तिङ्ङतिङः' इति निघातोऽत्र 'हि च' इति प्रतिषिध्यते। अडागमोऽपि 'न माङ्योगे' इति। अमृतेति। 'ह्रस्वादङ्गात्' इति सिचो लोपः। मृषीष्टेति। आशिषि लिङ्, तस्य 'लिङाशिषि' इत्यार्द्धधातुकत्वाद्विकरणाभावः, 'सुट् तिथोः' इति सुट्, वलि यलोपः। म्रियत इति। तुदादित्वाच्छः, 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः, 'अचि श्नुधातु' इत्यादिनेयङ्। मरिष्यतीति। 'ऋद्धनोः स्ये' इतीट्॥

पूर्ववत् सनः॥ पूर्ववदिति। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः। पूर्वशब्दः सम्बन्धिशब्दत्वादवधिमपेक्षते। स चावधिः श्रुतत्वात् सन्नेव विज्ञायत इत्याह—सन पूर्वो यो धातुरिति। यद्येवम्, अवधिभावोपगम एव सन्ग्रहणस्योपयुक्तत्वात् सन्नन्तादात्मनेपदं भवतीति, न तत्रैतल्लभ्यते; कुतस्तर्हि स्यात्? धातुमात्रात्, नैतदस्ति

'अनुदात्तङित आत्मनेपदम्'–आस्ते, शेते। सनन्तादपि तदेव निमित्तम्—आसिसिषते, शिशयिषते। 'नेर्विशः'–निविशते, निविविक्षते। 'आङ उद्गमने'—आक्रमते, आचिक्रंसते।

पदमञ्जरी

श्रुतत्वात् प्रत्यासत्या तदन्तादेव विधिर्विज्ञायत इति भावः। अथैवं कस्मान्न विज्ञायते सनन्तादात्मनेपदं भवति, पूर्ववदिति श्रौतोऽन्वयः, तत्र कुतः पूर्ववदित्यपेक्षायां सन्निहितत्वात्सन एव पूर्ववदिति विज्ञास्यत इति? एवं मन्यते—एवं विज्ञायमानेऽयमेव योगः पूर्वस्यावधिः सम्भाव्येत, यथा—'पूर्वत्रासिद्धम्' इत्यत्र तत एव योगात् पूर्वत्रेति। ततश्चायमर्थः स्याद्—'अनुदात्तङितः' इत्यारभ्येतः पूर्वं ये धातवो निर्दिष्टास्तेभ्यः सनन्तेभ्यस्तद्वदेवात्मनेपदं भवतीति, ततश्चोत्तरो विधिः सनन्तान्न स्यात्—'भुजोऽनवने', बुभुक्षत इति, तस्मात्सनः पूर्ववदित्येव श्रौतोऽन्वय एष्टव्य इति। यद्ययं कार्यातिदेशः शास्त्रातिदेशो वा विज्ञायेत, तदा सन्प्रकृतौ प्रयोगान्तरे दृष्टमि.त्येव निमित्तनिरपेक्षं कार्यं शास्त्रं वातिदिश्यमानमिहाप्यतिदिश्येत–शिशत्सति, मुमूर्षति; शीयते, म्रियते इत्यत्र दृष्टत्वादिति मतेऽनयोः पक्षयोर्दोषं दृष्ट्वा निमित्तातिदेशमाश्रित्याह—*येन निमित्तेनेति*। निमित्तस्य तुल्यत्वात्तद्द्वारकं यदात्मनेपदविधेस्तुल्यत्वं तदाश्रीयते इत्यर्थः। *पूर्वमिति*। सनुत्पत्तेः प्राक् प्रयोगान्तर इत्यर्थः। *पूर्वस्मादिति* युक्तः पाठः, तथा च सनन्तात्पीति सङ्गच्छते। यद्यपि प्रकृतिगतं ङित्त्वादिकं सनन्ते धातौ वचनशतेनापि प्रापयितुमशक्यम्—शिशयिषति; तथापि प्रकृतिगतमेव तत्सना व्यवधानेऽपि तदन्तादात्मनेपदस्य निमित्तं भवतीत्यतिदेशार्थः, तावता च निमित्तातिदेशवाचोयुक्तिः। *आसिसिषत इति*। इटि कृते 'अजादेर्द्वितीयस्य' इति सिशब्दस्य द्विर्वचनम्। *निविविक्षत इति*। 'हलन्ताच्च' इति सनः कित्त्वम्, व्रश्चादिषत्वम्, 'षढोः कः सि'। *आचिक्रंसत इति*। आङ आत्मनेपदनिमित्तत्वात् 'स्नुक्रमोः' इतीड् नैव भवति।

न्यासः

एवं ह्यात्मनेपदं परस्मैपदानुक्रमणमनर्थकं स्यात्। अथ प्रत्ययान्तात् स्यात्? एवमपि सन्ग्रहणमनर्थकं स्यात्, पूर्ववत् प्रत्ययादिति वाच्यं स्यात्। तस्मात् प्रत्यासन्नं सनं त्यक्त्वा न युक्तान्यस्याश्रुतस्य परिकल्पनेति सनन्तादेव भवतीति विज्ञायते। येनेत्यादिना वत्यर्थमाचष्टे। तदेव निमित्तमिति। अनुदात्तेत्त्वं ङित्त्वञ्च धात्वन्तरावस्थायामपि सनन्ताद् वचनसामर्थ्यान्निमित्तं भवति। आसिसिषत इति। इटि कृते 'अजादेर्द्वितीयस्य' इति सिशब्दस्य द्विर्वचनम्। निविविशत इति। 'विश प्रवेशने',

इह न भवति—शिशत्सति । मुमूर्षति । न हि शदिम्रियतिमात्र-मात्मनेपदनिमित्तम्, किं तर्हि ? शिदाद्यपि, तच्चेह नास्ति ।

यस्य च पूर्वत्रैव निमित्तभावः प्रतिषिध्यते, तत्सन्नन्तेऽप्यनिमि-त्तम्—अनुचिकीर्षति । पराचिकीर्षति ।

पदमञ्जरी

निमित्तातिदेशाश्रयणस्य फलमाह—*इहेति* । कारणमाह—*न हीति* । *शिदाद्य-पीति* । शिड्वावित्वादिकमपीत्यर्थः । आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह नास्ति । कृते सनि तदन्तमेव शिड्वावि, न शदिम्रियतिभ्याम् । शिशयिषत इत्यादौ तु कृतेऽपि सनि तदानीमपि ङित्त्वादिकं प्रकृतिगतं विद्यत इति भावः ।

यदि तर्हि निमित्तातिदेशः, अनुचिकीर्षतीत्यत्रापि प्रसङ्गः; गन्धनादेरर्थस्य ञित्त्वस्य चात्मनेपदनिमित्तस्य सत्यपि परस्मैपदे निमित्तत्वात् । कार्यातिदेशे तु न दोषः; 'अनुपराभ्यां कृञः' इति परस्मैपदेनापवादेनात्मनेपदस्य बाधितत्वादत आह—*यस्य चेति* । न योग्यतामात्रेण निमित्तत्वम्, किं तर्हि ? कुर्वद्रूपस्येति स्नुक्रमोरित्यत्र वक्ष्यत इति भावः । यदि कुर्वद्रूपं निमित्तम्, जुगुप्सत इत्यादौ कथम्, न ह्यत्र प्रकृतिगतमनुदात्तेत्त्वं तत्रात्मनेपदं कदाचिदपि करोति नित्य-

न्यासः

पूर्ववत् कित्त्वषत्वकत्वानि । आचिक्रंसत इति । आत्मनेपदनिमित्तत्वात् 'स्नुक्रमोरना-त्मनेपदनिमित्ते' इतीण् न भवति ।

शिशत्सति, मुमूर्षतीति । अत्र सनो यः पूर्वो भागः, तस्यात्मनेपदनिमित्तत्व-मस्ति; शीयते, म्रियत इत्यात्मनेपददर्शनात् । तत आत्मनेपदेन भवितव्यमिति कस्य-चिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—इह न भवतीत्यादि । किं कारण-मित्याह—न हीत्यादि । किं तर्हि ? शिदाद्यपीतीति । शिच्छब्देनात्र शिड्वावित्वं शित्सम्बन्धित्वञ्चोक्तम् । आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह नास्तीति न ह्यत्र सनः पूर्वभागस्य शिड्वावित्वं शित्सम्बन्धित्वं वास्ति; शित्प्रत्ययस्यास्मिन् विषयेऽत्यन्ता-सम्भवात्, नापि म्रियतेः परौ लुङ्लिङौ स्तः; तस्माच्चेह शदिम्रियत्योरात्मनेपद-निमित्तत्वमस्तीति न भवत्यात्मनेपदम् ।

इह तर्हि कस्मान्न भवति—अनुचिकीर्षति, पराचिकीर्षतीति ? करोतेर्हि गन्धना-दिष्वर्थेष्वात्मनेपदं विहितम्, अतस्तद्विवक्षायां सनन्तादपि तेन भवितव्यमित्याह—यस्य चेत्यादि । गन्धनादिष्वर्थेषु पूर्वत्रासनन्तावस्थायाम् 'अनुपराभ्यां कृञः' इत्यनेन परस्मैपदविधानात् करोतेरात्मनेपदाभावः क्रियते । तस्मादाभ्यां सनन्तादप्यात्मनेपद-निमित्ताभावान्न भवति ।

इह जुगुप्सते, मीमांसते इति ? 'अनुदात्तेतः' इत्येव सिद्धमात्मनेदमवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवतीति ॥

पदमञ्जरी

सनत्वाद् गुपादीनामत आह—इहेत्यादि । न वात्रानेनात्मनेपदम्, किं तर्हि ? 'अनुदात्तङितः' इत्यनेनेत्यर्थः । कथं पुनः समुदायस्य जुगुप्सादेरनुदात्तेत्त्वमत आह—अवयव इति । अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकं भवति । यद्येवम्, गोपयति तेजयतीत्यादावपि प्रसङ्गः । अथ यं समुदायं योऽवयवो न व्यभिचरति, तत्र कृतं लिङ्गं तस्य विशेषकं भवति; णिजन्तं च व्यभिचरति, विनापि तेन जुगुप्सत इति गुपेः प्रयोगादित्युच्येत । यद्येवम्, सनन्तादपि न स्याद्, विनापि तेन गोपायतीत्यत्र गुपेः प्रयोगात् । वक्तव्यो वा विशेषः, अयमुच्यते–'गुप गोपने' इत्यस्य सन्निधौ ग्रहणम्, तस्माच्च नित्यं सनेव भवति, नापरः प्रत्ययः। गोपायतीत्यादिकस्तु प्रयोगः 'गुपू रक्षणे' इत्यस्य, स चान्य एव । अवश्यञ्चैतदेवं विज्ञेयम्–अन्य एव सन्प्रकृतिः तस्माच्च सनेव भवतीति; अन्यथा निन्दाया अन्यत्र यथा णिज् भवति तथा लङादिरपि स्यात् । एवं तिजिप्रभृतयोऽपि, क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्यसनन्ताश्च; क्षमादिभ्योऽन्यत्र तु यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः ॥

न्यासः

अथ जुगुप्सते, मीमांसत इत्यत्र कथमात्मनेपदम्, यावता 'पूर्ववत्सनः' इत्युच्यते, न च गुपादिषु सनः प्रागेवात्मनेपदं भवतीति; अतः पूर्ववदित्यतिदेशाभावान्न भवितव्यमात्मनेपदेनेत्यत आह—इहेत्यादि । जुगुप्सत इति । 'गुप्तिज्किद्भ्यः सन्' इति सन् । मीमांसत इति । 'मानबध' इत्यादिना सन्, अभ्यासस्य 'सन्यतः' इतीत्त्वे दीर्घः । कथं पुनरिह 'अनुदात्तङित आत्मनेपदम्', यावता गुपादाववयवेऽनुदात्तेत्त्वं लिङ्गम्, न जुगुप्सादौ समुदाय इत्यत आह—अवयवे कृतमित्यादि । यथा गोः कर्णादाववयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति, तथा गुपादाववयवे कृतमनुदात्तेत्त्वं समुदायस्य जुगुप्स इत्येवमादेर्विशेषकं भवति । यद्येवम्, गोपयति, तेजयति, सङ्केतयतीत्येवमादावपि प्राप्नोति, सत्यम्; स्यादेतत्—अवयवे कृतं लिङ्गं तस्य समुदायस्य गोर्विशेषकं भवति, यं समुदायं सोऽवयवो न व्यभिचरति; सनन्तं पुनर्न व्यभिचरति ; णिजन्तन्तु व्यभिचरतीत्यतोऽत्रात्मनेपदेन न भवितव्यम्; वार्त्तमेतत्, सनन्तमपि व्यभिचरतीति विनापि तेन गोपयतीत्यादौ सम्भवात् । तस्मात् समुदायं यं गुपादिर्न व्यभिचरति, तस्यासम्भवात् सर्वस्य गुपादाववयवे कृतमनुदात्तेत्त्वं लिङ्गं समुदायस्य विशेषकं भविष्यति । ततश्च गोपयतिप्रभृतिभ्योऽप्यात्मनेपदं प्राप्नोतीत्येव ।

## आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥

अकर्त्रभिप्रायार्थोऽयमारम्भः । आम् प्रत्ययो यस्मात्सोऽयमाम्प्रत्ययः । आम्प्रत्ययस्यैव धातोः कृञोऽनुप्रयोगस्यात्मनेपदं भवति । ईक्षाञ्चक्रे, ईहाञ्चक्रे । यदि विध्यर्थमेतत्, तर्हि उदुब्जाञ्चकार, उदुम्भाञ्चकारेति कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्नोति ? नैष दोषः; उभयमनेन क्रियते—विधिः, नियमश्च । कथम् ? पूर्ववदिति वर्तते । स द्वितीयो यत्नो नियमार्थो भविष्यति ।

पदमञ्जरी

*आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य* ॥ नन्वामन्तस्याधातुत्वाददृष्टमात्मनेपदम्, तत्कथं कृञोऽतिदिश्यते ? स्यादियमनुपपत्तिः, यदि प्रत्ययग्रहणं न क्रियते, कृतेऽपि वा तस्मिन् प्रत्ययग्रहणे कर्मधारयस्तद्गुणसंविज्ञानो वा बहुव्रीहिराश्रीयेत; इह त्वतद्गुणसंविज्ञानो बहुव्रीहिः, धातुरन्यपदार्थस्तदाह—*आम्प्रत्ययो यस्मादिति* । तद्गुणसंविज्ञानेऽवयवेन विग्रहः, समुदायः समासार्थ इति, आम् प्रत्ययो यस्येति विग्रहः स्यात्; प्रतियोगिनि षष्ठीनिर्देशात्, 'तत्र तस्य' इति षष्ठ्यान्ताद्वतिरित्याह—*आम्प्रत्ययस्यैवेति कृञोऽनुप्रयोगस्येति* । समानाधिकरणे षष्ठ्यौ । अनुप्रयोगशब्दः कर्मसाधनः । *ईक्षाञ्चक्रे इति* । 'ईक्ष दर्शने' 'ईह चेष्टायाम्' लिट्, 'इजादेश्च' इत्याम्, 'आमः' इति लेर्लुक् । 'अकर्त्रभिप्रायार्थोऽयमारम्भः' इति ब्रुवता विध्यर्थमेवैतदित्युक्तम् । तत्र दोषमुद्भावयितुमाह—*यदीति* । किं पुनः कारणं विध्यर्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्यते, न पुनर्नियमार्थत्वम-

न्यासः

एवं तर्हि 'निगरणचलनार्थेभ्यश्च' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः क्रियते । तेन गुपादिभ्यो ण्यन्तेभ्यः परस्मैपदमात्मनेपदापवादो भविष्यति ॥

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य** ॥ आम्प्रत्ययवदिति 'तत्र तस्येव' इति षष्ठीसमर्थाद् वतिः । 'कृञोऽनुप्रयोगस्य' इति समानाधिकरणे षष्ठ्यौ । ईक्षाञ्चक्रे इत्यादि । 'ईक्ष दर्शने', 'ईह चेष्टायाम्', 'ऊह वितर्के, लिट्, 'इजादेः' इत्यादिनाऽऽम्, 'आमः' इति लेर्लुक्, प्रातिपदिकत्वात् सुप् प्राप्तः, सुः, स्वरादित्वादव्ययत्वात् सुब्लुक्, 'कृञ्च' इत्यादिना कृञो लिट्परस्यानुप्रयोगः । 'अकर्त्रभिप्रायार्थोऽयमारम्भ इति ब्रुवता विध्यर्थमेतदित्युक्तं भवति । तत्रास्मिन् विध्यर्थे यो दोषस्तमुद्भावयितुमाह—यदीत्यादि । उदुब्जाञ्चकारेति । 'उब्ज आर्जवे', उत्पूर्वाल् लिट्, पूर्ववदाम् । 'परस्मैपदानाम्' इत्यादिना तिपो णल् । उदुम्भाञ्चकारेति । 'उभ उम्भ पूरणे', उभयमित्यादिना । परिहारः । कथमिति ? एकेन प्रयत्नेनाशक्यमेतदुभयं कर्तुमित्यत आह—पूर्ववदित्यादि । नैवात्रैको यत्नः, किं तर्हि ? द्वौ—'आम्प्रत्ययवत्' इत्येको यत्नः, पूर्ववद्ग्रहणमनुवर्तमानं द्वितीयः । तत्र पूर्वेण यत्नेन विधिः क्रियते, इतरेण नियमः ।

कृञ इति किम्? ईक्षामास, ईक्षाम्बभूव। कथं पुनरस्यानुप्रयोगः, यावता 'कृञ्च'इत्युच्यते? 'कृञ्' इति प्रत्याहारग्रहणं तत्र विज्ञायते। क्व संनिविष्टानां प्रत्याहारः? 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' इति कृशब्दादारभ्य यावत् 'कृञो द्वितीयतृतीया' इति ञकारम्॥

पदमञ्जरी

ङ्गीकृत्य तदनुगुणो दोष उद्भाव्येत? सत्यम्; अकर्त्रभिप्राये पाचयाञ्चक्रे, उब्जाञ्चकारेति प्राप्ते आम्प्रत्ययवदेव, तत्र विधिनियमसम्भवे विधिरेव ज्यायान्, तस्मादेवमुच्यते—'उब्ज आर्जवे', 'उम्भ पूरणे'। *उभयमित्यादि* परिहारः। *कथमिति*। नैकेनैव यत्नेनोभयं लभ्यमिति भावः।

*ईक्षाम्बभूवेति*। 'भवतेरः', 'भुवो वुग् लुङ्लिटोः'। *कथं पुनरिति*। 'कृञः' इत्यत्र स्वरूपग्रहणं मन्यमानस्य प्रश्नः। *प्रत्याहारग्रहणमिति*। यदि तत्र स्वरूपग्रहणं स्याद्, इह कृञ्ग्रहणमनर्थकं स्याद्; अन्यस्यानुप्रयोगस्याभावादिति भावः। अत एव विपर्ययोऽपि न भवति—तत्र स्वरूपग्रहणं स्याद्, इह प्रत्याहारग्रहणमिति, इह हि प्रत्याहारग्रहणे भ्वस्त्योरप्यात्मनेपदविधिः प्रयोजनम्। यदि चानुप्रयोगविधिना कृञ् एवानुप्रयुक्तः स्यात्, तदा भ्वस्त्योरनुप्रयोगाभावादात्मनेपदविधिरनुपपन्नः स्यात्। तस्मादिह स्वरूपग्रहणम्, आमनुप्रयोगविधौ प्रत्याहारस्येति सिद्धम्। 'अभिविधौ सम्पदा च' इति सम्पदोऽपि तत्रान्तर्भावादनुप्रयोगः प्राप्तः 'सनाद्यन्ता धातवः' इत्यतो धात्वधिकाराद्धातूपसर्गसमुदायस्य न भवति। योऽत्र धातुस्तस्यापि न भवति; अर्थविप्रतिषेधादिति तत्रैव वक्ष्यामः॥

न्यासः

यद्यनुप्रयोगस्थ कृञ आत्मनेपदं भवति, पूर्ववदेव; नान्यथा। तेनोदुब्जाञ्चकारेत्येवमादौ न भवति। न ह्युब्जादीनामात्मनेपदं सम्भवति, परस्मैपदित्वात्।

ईक्षामासेति। आम्, अस्तेरनुप्रयोगः। ईक्षाम्बभूवेति। 'भवतेरः' 'कृञ' इत्यत्र करोतेरेव ग्रहणमित्यभिप्रायेणाह—कथं पुनरित्यादि। कृञिति प्रत्याहारग्रहणमित्यादि। तत्र प्रत्याहारेऽस्तिभवत्योरपि सन्निवेशः। अतस्तयोरप्यनुप्रयोगो भवतीति भावः। यद्येवम्, सम्पदोऽप्यनुप्रयोगः प्राप्नोति, तस्यापि तत्र सन्निवेशोऽस्त्येव; 'अभिविधौ सम्पदा च' इति वचनात्। सत्यपि सन्निवेशे नासौ प्रत्याहारग्रहणेन गृह्यत इत्यदोषः। यथा तस्याग्रहणं तथोत्तरत्र प्रस्तावान्तरे प्रतिपादयिष्यामः। अथाम्प्रत्ययवदिति किम्? असति हि तस्मिन्ननुप्रयोगमात्रस्यात्मनेपदं स्यात्—देवदत्तः करोतीति? अत्रापि पूर्ववदित्यनुवर्त्तते। तथापीह स्यात्—ईहते, करोतीति? 'आम्प्रत्ययवत्' इत्युच्यमाने प्रत्यासत्तेराम एवानुप्रयोगस्येति गम्यते, नानुप्रयोगमात्रे, तेनातिप्रसङ्गो न भवति॥

## प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥

'युजिर् योगे' स्वरितेत्। तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। प्र, उप—इत्येवम्पूर्वाद् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति। प्रयुङ्क्ते।

अयज्ञपात्रेष्विति किम्? द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति।

❀ स्वराद्यन्तोपसृष्टादिति वक्तव्यम् ❀। उद्युङ्क्ते, नियुङ्क्ते।

स्वराद्यन्तोपसृष्टादिति किम्? संयुनक्ति ॥

## समः क्ष्णुवः ॥ ६५ ॥

'क्ष्णु तेजने' परस्मैपदी। ततः सम्पूर्वादात्मनेपदं भवति। 'समो

### पदमञ्जरी

*प्रोपाभ्यां युजेरयज्ञपात्रेषु* ॥ *युजिर्योगे इति*। 'युज समाधौ' इत्यस्य, न दैवादिकस्य, अनुदात्तेत्त्वादेव सिद्धम्, युजरिति च विवक्षित इकारः, न त्वागन्तुकः। यज्ञपात्रविषयता चास्यैव सम्भवतीति भावः। *प्रयुङ्क्त इति*। 'रुधादिभ्यः श्नम्' 'श्नसोरल्लोपः' कुत्वचर्त्वे, अनुस्वारपरसवर्णौ।

*स्वराद्यन्तोपसृष्टादिति*। स्वरः=अ इ, आदिरन्तो वा यस्य स स्वराद्यन्तः। तेनोपसर्गेण सम्बन्धः, स्वराद्यन्तोपसृष्टः—सम् निस् दुस् इत्येतान् वर्जयित्वा सर्वं एवोपसर्गास्संगृहीताः ॥

*समः क्ष्णुवः* ॥ इह 'शर्परे विसर्जनीयः' इत्यस्यावकाशो यत्र कुप्वोरसम्भवः—पुरुषः त्सरुकः; 'कुप्वोः≍क≍पौ च' इत्यस्य यत्र शर्परौ कुपू न सम्भवतः—पुरुषः करोतीति; शर्परयोरुभयोः प्रसङ्गे पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽ-

### न्यासः

प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ 'युज समाधौ' इत्यस्यानुदात्तेत्त्वात् सिद्धमात्मनेपदमित्यतस्तस्येह ग्रहणमयुक्तमित्यभिप्रायेणाह—युजिर् योगे इति। प्रयुङ्क्त इति। रुधादित्वात् 'श्नसोरल्लोपः' इत्यकारलोपः। 'चोः कुः' इति कुत्वम्=जकारस्य गकारः, 'खरि च' इति चर्त्वम्=ककारः, 'नश्च' इत्यादिनाऽनुस्वारः, 'अनुस्वारस्य ययि परसवर्णः' इति ङकारः।

स्वराद्यन्तोपसृष्टादिति वक्तव्यमिति। स्वरोऽज् आदिरन्तो वा यस्य स स्वराद्यन्तः, तदुपसृष्टात्=तत्सम्बन्धाद् युजेरात्मनेपदं भवति—इत्येतदर्थरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्—इह सूत्रे प्रशब्दोऽजन्तोपसर्गलक्षणार्थः, उपशब्दोऽजाद्युपलक्षणार्थः, तेन सर्वेणाजान्तेनाजादिना चोपसर्गेण च युक्ताद् युजेरात्मनेपदं भवतीति। स्वराद्यन्तोपसृष्टादिति किम्? निर्युनक्ति ॥

समः क्ष्णुवः ॥ अकर्मकादिति सम्प्राप्तमसंत इति। सकर्मकादपि क्ष्णुव आत्मनेपद-

गम्यृच्छि' इत्यत्रैव कस्मान्न पठितः ? अकर्मकादिषु तत्र वर्तते । संक्ष्णुते शस्त्रम्, संक्ष्णुवाते, संक्ष्णुवते ।

भुजोऽनवने ॥ ६६ ॥

'भुज पालनाभ्यवहारयोः' इति रुधादौ पठ्यते । तस्मादनवने = अपालने वर्त्तमानादात्मनेपदं भवति । भुङ्क्ते, भुञ्जाते ।

अनवन इति किम् ? भुनक्त्येनमग्निराहितः । अनवनप्रतिषेधेन रौधादिकस्यैव ग्रहणं विज्ञायते, न तौदादिकस्य–'भुजो कौटिल्ये' इत्यस्य । तेनेह न भवति—विभुजति पाणिम् ॥

णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने ॥ ६७ ॥

पदमञ्जरी

भावादुत्तरस्येति 'शर्परे विसर्जनीयः' इति नित्यं विसर्जनीय एव भवति । तेन 'समः क्ष्णुवः' इति सूत्रे विसर्जनीयस्यैव पाठः 'समो गम्यृच्छि' इत्यत्रेवेति । एवं हि द्विः समो ग्रहणं न कर्तव्यमिति भावः । *संक्ष्णुवत इति* । अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, 'अचि श्नुधातु' इत्यादिनोवङ् ॥

*भुजोऽनवने* ॥ *अनवनप्रतिषेधेनेत्यादि* । संसर्गवद्विप्रयोगोऽपि विशेषस्मृति-हेतुः । यथा दोग्ध्रीपर्यायो धेनुशब्दः संसर्गिभिः विशेषेऽवस्थाप्यते—सवत्सा धेनुरानीयतां सकिशोरा सवर्करेति, तथाऽवत्साऽकिशोराऽवर्करेति । यस्या आनयने दृष्टः संसर्गः सैव तत्र गृहीता आनीयते; तद्वदिहापीत्यर्थः ॥

*णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने* ॥ अत्र 'णेः' इति यद्यपि सामान्यनिर्देशः,

न्यासः

मिष्यत इति मन्यते । अत एव सकर्मकस्योदाहरणमुपन्यस्तम् । संक्ष्णुते शस्त्रमिति । अदादित्वाच्छपो लुक् । संक्ष्णुवाते इति । 'अचि श्नुधातु' इत्यादिनोवङ् । संक्ष्णुवत इति । पूर्ववददादेशः ॥

भुजोऽनवने ॥ अवनप्रतिषेधेनेत्यादि । अवनं पालनम् । तत्प्रतिषेधेन रौधादि-कस्य भुजेर्ग्रहणं विज्ञायते, न तौदादिकस्य—'भुज कौटिल्ये' इत्यस्य । यथैव हि सवत्सा धेनुरानीयतामित्युक्ते यस्या हि वत्सेन सह सम्बन्धः सम्भवति सैव गोधेनुरानीयते, न महिष्यादिधेनुः; तथेहाप्यवनप्रतिषेधेन यस्य भुजोऽनवने वृत्तिः सम्भवति, स एव रौधादिकः प्रतीयते ; तस्मात् तस्यैव ग्रहणं विज्ञायते । तेन निर्भुजति, विभुजतीति तौदादिकस्यात्मनेपदं न भवति ।

णेरणौ यद् कर्म णौ चेद् स कर्ताऽनाध्याने ॥ आरोहन्ति हस्तिनं हस्तिपकाः

'णिचश्च' इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । ण्यन्तादात्मनेपदं भवति, कथम् ? अणौ यत्कर्मणौ चेत्तदेव कर्म, स एव कर्त्ता भवति, अनाध्याने = आध्यानं वर्जयित्वा । आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयते हस्ती स्वयमेव । उपसिञ्चन्ति हस्तिनं हस्तिपकाः । उपसेचयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम् । दर्शयते राजा स्वयमेव ।

### पदमञ्जरी

तथापि पुच्छभाण्डादिणिङ् न गृह्यते; अणौ कर्मणो णावसम्भवात्, कर्मणि ङस्तु 'आयादय आर्द्धधातुके वा' इति वचनादण्यन्तावस्था सम्भवति । कर्मणश्च कर्तृत्वम्—कमिष्यते योषितं देवदत्तः कामयिष्यते योषित्स्वयमेवेति, तथापि ङित्त्वादेव सिद्धे सोऽपि न गृह्यत इति णिच एव ग्रहणमित्याह—*णिचश्चेति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदमिति* । *अकर्त्रभिप्रायार्थ इति* । उपलक्षणमेतत्, कर्त्रभिप्राये पदान्तरेण द्योतिते 'विभाषोपपदेन प्रतीयमाने' इति विकल्पं बाधित्वा नित्यो विधिर्यथा स्यादित्यपि द्रष्टव्यम् । अत्रैकवाक्यतायामयमर्थो भवति—ण्यन्तादात्मनेपदं भवत्यण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां यदि स कर्त्ता भवति आध्यानादन्यत्रेति । तत्र कर्मान्तरनिवृत्तिर्न कृता स्यात्, ततश्चेहापि प्रसज्येत—आरोहन्ति हस्तिनं हस्तिपकास्तानारोहयति हस्तीति । किं च उक्तेऽर्थे 'णेरणौ कर्मणि' इत्येतावदेव वाच्यम्; कर्त्तरीत्येव ण्यन्तादात्मनेपदं भवति, 'अणौ कर्मणि कर्तरि' इत्युक्ते को नाम विवक्षितोऽर्थो न सिद्ध्यति ! 'सः' इत्येतच्चानर्थकम्; यत्तदोर्नित्यसम्बन्धादेवाध्याहारतः सिद्धेः। तस्माद्यथाश्रुतमात्रं न विवक्षितमिति मत्वा पृच्छति—*कथमिति* ।

इतरोऽपि वाक्यभेदाश्रयणेन परिहरति—*अणौ यत्कर्मेत्यादि* । णेरात्मनेपदं भवति आध्यानादन्यत्रेत्येकं वाक्यम्, ततोऽणौ यत्कर्मेति द्वितीयम् । अत्र वाक्ये

### न्यासः

इति । अणौ कर्मप्रदर्शनार्थमेतदुक्तम् । इदं त्वनोदाहरणम्—आरोहयते हस्ती स्वयमेवेति । आरोहन्ति हस्तिनं हस्तिपका इत्यत्राङ्पूर्वस्य तु 'रुह बीजजन्मनि प्रादुर्भावे' इत्यस्य द्वे क्रिये वाच्ये—न्यग्भवनम्, न्यग्भावनञ्च । तत्र न्यग्भवनस्य हस्ती कर्त्ता, न्यग्भावनस्य हस्तिपका इति । न्यग्भवन्तं हस्तिनं न्यग्भावयन्तीत्यर्थः । स यदा तु सुशिक्षितत्वात् सुविधेयत्वाच्च न्यग्भावनक्रियायामत्यन्तमानुकूल्यं प्रतिपद्यते हस्ती स्वयमेव, तदासौ हस्ती हस्तिपकान् प्रति प्रयोजकत्वेन विवक्ष्यते, हस्तिपकास्तु प्रयोज्यत्वेन ।

पदमञ्जरी

यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते। कर्मान्तरस्य चानिर्देशाद् उद्देश्यतयापि श्रुतं कर्मत्वमेव विधीयते। तच्च विधीयमानं सामर्थ्याण्णेरिति सन्निहितत्वाण्ण्यन्तावस्थायामेव विधीयते। किं तत्सामर्थ्यम् ? अणौ यत्कर्मेत्यनुवादसामर्थ्यादेवाणौ कर्मत्वसिद्धेस्तत्रैव तद्विधानस्यासम्भवः। तदेवमणौ यत्कर्मेत्येतावत एवाणौ यत्कर्म णौ चेत्तत्कर्मेत्यर्थो भवति। अनेन च कर्मान्तरनिवृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मभावः प्रतिपाद्यते। स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकस्यां क्रियायां कर्मत्वकर्तृत्वयोरुभयोरसम्भवात्। ततो णौ चेदिति तृतीयं वाक्यम्—अणौ यदित्येव, अणौ यत्प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः। ततः स कर्तेति चतुर्थम्। अत्राणौ यत्कर्म णौ चेदिति सर्वमनुवर्त्तते। 'अनाध्याने'इत्येतदपि प्रसज्यप्रतिषेधे पञ्चमं वाक्यम्।

तत्र वृत्तिकारेण त्रीणि वाक्यानि स्ववाचा दर्शितानि—ण्यन्तादात्मनेपदं भवतीत्येकं वाक्यम्, अणौ यत्कर्म णौ चेत्तदेव कर्मेति द्वितीयम्, स एव कर्ता भवतीति तृतीयम्। 'णौ चेद्' ग्रहणं समानक्रियार्थमिति तु वक्ष्यति, अतस्तदपि वाक्यमभ्युपगतमेव।

*आरोहन्तीत्यादि*। अणौ कर्मप्रदर्शनार्थमिदमुक्तम्, इदं तत्रोदाहरणम्—

न्यासः

हस्ती हस्तिपकान् प्रयुङ्क्ते—मामारोहतेति, ततश्च प्रयोज्यप्रयोजकभावे विवक्षिते हेतुमण्णिच्। एवमुत्तरत्रापि कर्मणः कर्तृत्वस्य विवक्षितत्यात् प्रयोजकभावविवक्षायां णिज् विधेयः। ततस्तस्मिन्नुत्पन्ने यदा निर्ज्ञातस्वरूपत्वाच्चरितार्थत्वात् प्रयोज्या न विवक्ष्यन्ते, तदा निवृत्तत्वात् प्रयोज्यप्रयोजकभावस्य न्यग्भवनमात्रे रुहिर्वर्तते। अत्रेदमुदाहरणम्—आरोहयते हस्ती स्वयमेवेति। तथा हि, यदेवाण्यन्ते कर्मासीत् स एव ण्यन्ते हस्ती कर्त्ता भवति। न च प्रयोज्यप्रयोजकभावे निवृत्तेऽपि णिचो निवृत्तिर्भवति, निवृत्तिकारणाभावात्। यथैव हि देवदत्तस्य व्यापारे निवृत्तेऽपि पचिः पाकान्न निवर्त्तते—पच्यत ओदनः स्वयमेवेति, तथेहापि निवृत्ते प्रयोज्यप्रयोजकव्यापारे णिचो निवृत्तिर्न भवतीति वेदितव्यम्।

सिञ्चन्तीत्यादि। अत्रापि सिच्यमानो हस्ती कर्म यदा सुशिक्षितत्वात् सुविधेयत्वाच्च सेचनक्रियां प्रति प्रकृष्टमनुकूल्यं भजते, तदा तस्य प्रयोजकत्वे विवक्षिते हस्तिपकानाञ्च प्रयोज्यत्वे णिच्। तत्र कृते पूर्ववत् प्रयोज्येष्वविवक्षितेषु यदेवाण्यन्ते कर्म स एव ण्यन्ते कर्त्ता भवति। पश्यन्तीत्यादि। अत्रापि दृश्यमानस्य राज्ञः दर्शनक्रियायामतिशयेनानुकूल्यभावोपगमनात् प्रयोजकत्वे विवक्षिते भृत्यानाञ्च

पदमञ्जरी

आरोहयते हस्ती स्वयमेवेति । आङ्पूर्वो रुहिः न्यग्भवनोपसर्जने न्यग्भावने वर्तते, न्यग्भवन्तं हस्तिनं न्यग्भावयतीत्यर्थः । यदा तु हस्तिनः सौकर्यातिशयप्रतिपादनाय हस्तिपकव्यापारो न विवक्ष्यते, तदा न्यग्भावमात्रे रुहिर्वर्तते, तत्र च हस्तिनः कर्तृत्वम् । उक्तं च—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वकर्तृत्वेऽवतिष्ठते ॥ इति

अस्य च कर्तुः कर्मस्थक्रियेषु कर्मकार्याण्यतिदिश्यन्ते—'कर्मवत्कर्मणा तुल्यक्रियः' इति, तद्यथा—लूयते केदारः स्वयमेवेति । लुनातिर्हि द्विधाभवनोपसर्जने द्विधाभावने वृत्तः कर्तृव्यापाराविवक्षायां द्विधा भवनमात्रे वर्तते । दुर्हिस्तु कर्तृस्थक्रियत्वात् कर्मकार्याणि न लभत इत्येतावत् । ततो न्यग्भवनवृत्ते रुहेर्हस्तिपकव्यापारे णिजुत्पद्यते, तदा च य एवार्थ आरोहयन्ति हस्तिनं हस्तिपकाः, स एवार्थ आरोहयन्ति हस्तिपका इति । पुनः सौकर्यातिशयविवक्षायामविवक्षिते हस्तिपकव्यापारे न्यग्भवनमात्रे रोहिर्वर्तते—आरोहयते हस्ती स्वयमेवेति । सुष्ठु न्यग्भवतीत्यर्थः । उक्तं च—

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते ।
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥
अवस्थां पञ्चमीमाहुर्ण्यन्तानां कर्मकर्तरि ।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥ इति ।

एवं सिञ्चतेरप्यार्द्रीभवनोपसर्जनमार्द्रीभावनमर्थः । ततो निवृत्तप्रेषणमित्यादि पूर्ववत् । सेचयते हस्ती स्वयमेव, सेचनेऽत्यन्तमनुकूलो भवतीत्यर्थः । एवं दृशिरपि कर्मव्यापारमात्रवृत्तिः, णिजुत्पन्ने पुनस्तत्रापरोऽपि, तदुदाहरणम्—दर्शयते राजा स्वयमेव, दर्शनेनानुकूलो भवतीत्यर्थः । सोऽयं निवृत्तप्रेषणपक्ष उच्यते ।

अपरः प्रकारः—आरोहन्ति हस्तिनं हस्तिपकाः, तान् सौकर्यातिशयाद्धस्ती प्रयुङ्क्ते इति; हस्तिव्यापारे णिजुत्पद्यते—आरोहयति हस्ती हस्तिपकानिति । तत्र सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्म न विवक्ष्यते, ततोऽकर्मको भवति; यथा—नेह पच्यते, नेह भुज्यते इति पाकमात्रप्रतिषेधे तात्पर्यमिति कर्माविवक्षायां भावे लो भवति—आरोहयते हस्ती स्वयमेव, सुष्ठु न्यग्भवतीत्यर्थः । एष एव हि हस्तिनः प्रयोजकव्यापारः । एवमितरयोरपि द्रष्टव्यम् । सोऽयमध्यारोपितप्रेषणपक्ष इति गीयते ।

तदेवमुभयोरपि पक्षयोः सैव क्रिया, याऽण्यन्तावस्थायाम् । न च कर्मान्तरमस्ति, कर्तापि स एवेत्युदाहरणोपपत्तिः । स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम् ।

णेरिति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति ।

अणाविति किम् ? गणयति गणं गोपालकः, गणयति गणः

पदमञ्जरी

*णेरिति किमिति* । अणौ कर्मत्वानुवादेन णौ कर्तृत्वविधानात् प्राधान्याण्ण्यन्तादेव भविष्यतीति प्रश्नः । *साध्वारोहतीति* । साधु न्यग्भवतीत्यर्थः । अत्र कर्मव्यापारमात्रे रुहिर्वर्तते, कर्तृस्थक्रियत्वात्तु कर्मवद्भावाभावाद्यगात्मनेपदे न भवतः, शप्परस्मैपदे भवतः, अणौ यत्कर्मेत्यण्यन्तावस्थायामपि श्रुतत्वात्ततोऽपि स्यादिति भावः । ननु प्राधान्याण्ण्यन्तादेव भविष्यतीत्युक्तम्, किमर्थमणौ यत्कर्म णौ चेत्स कर्तेति ? अयमुपाधिर्यस्मिन्नेव प्रयोगे संभवति, तत्रैवात्मनेपदं युक्तम् , साध्वारोहतीत्यत्र च नायं प्रकारः सम्भवति । आरोहयते हस्तीत्यत्र तु णिचः प्रकृतिभूते रुहावण्यन्ते यत्कर्म ण्यन्ते स एव कर्त्तेति तत्रैव भविष्यति, सत्यम् ; तदेवमुत्तरार्थमवश्यं णेरिति वक्तव्यमिहापि विस्पष्टार्थं भविष्यतीति मन्यते ।

*अणाविति किमिति* । कर्मत्वकर्तृत्वयोर्यौगपद्यासम्भवात् णौ च कर्तृत्वस्य श्रुतत्वादवस्थान्तरे णावेव कर्मत्वं विज्ञास्यत इति प्रश्नः । *गणयतीति* । 'गण संख्याने' चुरादावदन्तः पठ्यते, अतो लोपस्य स्थानिवद्भावाद् उपधावृद्ध्यभावः । गण्यमानो गणो यदा गणनक्रियायामानुकूल्यं प्रतिपद्यते, तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिचि पुनः कर्मव्यापारमात्रे आरोपितस्यैवायं प्रयोगः । *गणयति गणः स्वयमेवेति* । अत्र णावेव गणेः कर्म, णावेव कर्ता इत्यात्मनेपदं न भवति ।

न्यासः

प्रयोज्यत्वे णिच् । तत्र विहिते पूर्ववत् प्रयोज्याविवक्षायां यदेव दृशेरण्यन्ते कर्म राजा, स एव ण्यन्ते कर्त्ता । क्रियापि च सर्वेष्वेतेषूदाहरणेषु यैवाण्यन्तावस्थायाम्, सैव ण्यन्तेऽपि । सत्यपि च णिचि प्रयोज्यप्रयोजकभावस्य निवर्त्तितत्वात् क्रियान्तरस्य चानुत्पत्तेः ।

गणयतीत्यादि । 'गण संख्याने' चुरादावदन्तः पठ्यते । ततो णिच्, 'अतो लोपः' इत्यकारलोपः । तस्य पूर्वविधौ कर्तव्ये स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति । गणयति गोगणं गोपालकः । गणयति गणः स्वयमेवेति । अत्र स गण्यमानो यदा गणनं प्रत्यानुकूल्यं भजमानः प्रयोजकत्वेन विवक्ष्यते, गोपालकस्तु प्रयोज्यत्वेन; तदा हेतुमण्णिच् । तस्मिन् कृते पूर्ववत् प्रयोज्याविवक्षायां यदेव कर्म स एव कर्ता भवति । तथाप्यणाविति वचनादात्मनेपदं न भवति, न हि गणः प्रागणौ कर्मासीत्, किं तर्हि ? ण्यन्त एव । ननु च '"अणावकर्मकाच्चित्तवत् कर्तृकात्' इत्यत्र

स्वयमेव । कर्मग्रहणं किम् ? लुनाति दात्रेण, लावयति दात्रं स्वयमेव ।

पदमञ्जरी

कर्मवद्भावेनापि न भवति; कर्तृस्थक्रियत्वात् । गणनं हि संख्यानिमित्तः परिच्छेदो ज्ञानविशेषः । *भाष्ये* तु भागशोऽवस्थापने गणिर्वर्तते । भागशोऽवतिष्ठमानं गणं गोपालकोऽवस्थापयतीत्यर्थमङ्गीकृत्य तत्रानुकूलत्वाद् गणस्यैव कर्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वमिति कर्मवद्भावादात्मनेपदमुदाहृतम् । ननु चाणावकर्मकादित्यत्र वक्ष्यति—'हेतुमण्णिचो विधिः' इति, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति, तच्चेत्, सत्यम्; इदमपि प्रत्युदाहरणमयुक्तमेव, उच्यते—युक्तं तत्र हेतुमण्णिचो विधिरिति; तत्र बुधादिसूत्रे 'णेः' इति वर्तते, बुधादिभ्यश्च हेतुमण्णिजेव सम्भवति । इह तु सामान्येन ग्रहणं विशेषहेत्वभावात् । ननु चाणौ यत्कर्मेत्युच्यते चुरादीनां च नित्यण्यन्तत्वात्केवलानां प्रयोगाभवाद् अणौ कर्मणोऽसम्भवाद् अत्रापि हेतुमण्णिच एव विधिः, नेत्याह; 'आ धृषाद्वा' इति विभाषितणिचामपि केषाञ्चित्सम्भवात् । *भाष्ये* तु हेतुमण्णिचो विधिरिति स्थितम् । *लावयति दात्रं स्वयमेवेति* । करणस्य दात्रस्यापि तैक्ष्ण्यातिशयेन लवने यदानुकूल्यं तत्प्रतिपादनाय लावकान्प्रति प्रयोजकत्वविवक्षायां णिच् ।

न्यासः

'अणौ' इति किम् ? चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति" इत्युक्त्वा वृत्तिकारो वक्ष्यति, तदयुक्तम्, 'हेतुमण्णिचो विधिः । प्रतिषेधोऽपि प्रत्यासत्त्या तस्यैव न्याय्यः' इति, तच्चेत्, सत्यम्; गणयति गोगणं गोपालकः, गणयति गोगणः स्वयमेवेत्येतदपि प्रत्युदाहरणमयुक्तमेव स्यात्, नैतदस्ति; भेदस्याविवक्षितत्वात् । यदि हि भेदो विवक्ष्यते, तदा हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव स्यात्, न हि विप्रकृष्टस्य चुरादिणिचः । न चेह भेदो विवक्षितः; 'णेः' इति जातिनिर्देशात् । तस्माण्णिज्मात्राद्विधिः, अतः प्रतिषेधोऽपि णिज्मात्रस्यैव स्यादिति युक्तमेतत् प्रत्युदाहरणम् । 'अणावकर्मकात्' इत्यादौ सूत्रेऽणाविति हेतुमण्णिच एव ग्रहणम् । अत एव हेतुमण्णिच एव विधिरिति प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः । यथा तत्र हेतुमण्णिचो ग्रहणं तथा तत्रैव प्रतिपादयिष्यामः । न चात्र तथाविधं किञ्चिन्निबन्धनमस्ति, यतो णेरिति हेतुमण्णिच एव ग्रहणमवसीयते, चौरादिकानामप्यनित्यण्यन्तत्वात्, विभाषितणिचां च केषाञ्चिद् विद्यमानत्वात् येषामण्यन्तानामेव यत् कर्म, तेषामेव चुरादिणिजन्तानां तस्यैव कर्तृत्वसम्भवात् । तस्मादिह णेरिति णिज्मात्रस्य ग्रहणं सूत्रकारस्याभिमतमिति लक्ष्यते ।

अथ गणयतिः गोगणः स्वयमेवेत्यत्र 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशात् कस्मादात्मनेपदं न भवति ? कर्तृस्थभावकत्वात् । अत्र हि गणयतिरयं

'णौ चेद्' ग्रहणं समानक्रियार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेण।

यत्सग्रहणमनन्यकर्मार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः।

पदमञ्जरी

इह ण्यन्तादात्मनेपदं भवत्यणौ यत्कर्म स चेत्कर्तेत्युक्ते गम्यत एतद्—यस्माद् ण्यन्ताद्विधिः तत्रैवाण्यन्ते यत्कर्म स चेत्कर्त्तेति, अतो णौ चेद्ग्रहणमनर्थकम्, तत्राह—*णौ चेद्ग्रहणं समानक्रियार्थमिति*। प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे मा भूत्, णिच्प्रकृत्यर्थभूतायामेव क्रियायां यथा स्यादित्यर्थः। यथा पुनरयं शब्दार्थस्तथोक्तं पुरस्तात्। *आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेणेति*। येन प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे आत्मनेपदं वार्यत एवानेन धातुभेदादत्यन्तभेद इति मत्वेतत्प्रत्युदाहृतम्, भीताश्चात्रारोहयतेः कर्म। *आरोहयमाण इति*। 'णिचश्च' इत्यात्मनेपदं शानच्, भीता ह्यारोह्यमाणा भीत्या मूत्रयन्ति, तेन हस्ती सिच्यते। कर्माविवक्षायां तु सेचयतेरकर्मकत्वम्।

उद्देशप्रतिनिर्देशात् लब्धे यत्सग्रहे पुनस्तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये इत्याह—*यत्सग्रहणमनन्यकर्मार्थमिति*। स्थलमारोहयति मनुष्यानित्यत्र

न्यासः

संख्यानिमित्ते परिच्छेदे ज्ञानविशेषे वर्त्तते, यस्य हि संख्यानमित्याख्या। स च ज्ञानविशेषः कर्त्तरि वर्त्तते; तत्र तस्य समवेतत्वात्, न कर्मणि। तस्मात् कर्तृस्थभावकत्वादिहात्मनेपदं न भवति। कर्मस्थक्रियाणां कर्मस्थभावकानाञ्च कर्मवद्भावातिदेशेनात्मनेपदमिष्यते, नेतरेषाम्।

लुनाति दात्रेणेत्यादि। दात्रस्य तीक्ष्णतया करणस्यापि सतो विशिष्टव्यापारभूतत्वाल्लावकपुरुषान् प्रति प्रयोजकत्वविवक्षायां णिच्।

णौ चेद् ग्रहणमित्यादि। इह णौ चेदिति न वक्तव्यम्। णेरणौ यत् कर्म स कर्त्तेत्येतावत्युच्यमानेऽणौ यत् कर्म तस्य सामर्थ्याण्णावेव कर्तृत्वं विज्ञायत इति किं णौ चेदित्यनेन ? तदेतण्णौ चेद्ग्रहणं क्रियमाणं समानक्रियार्थं विज्ञायते—यदि यैव कर्मावस्थायां क्रिया, सैव कर्त्रवस्थायां भवतीति। एतदुक्तं भवति—यस्यैव धात्वर्थस्य यत् कर्म तस्यैव यदि तत् कर्तृत्वेन विवक्ष्यत एवमात्मनेपदं भवति, नान्यथेति। तेन आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती भीतान् सेचयति मूत्रेणेत्यत्र सेचयतेरात्मनेपदं न भवति; भिन्नत्वात् क्रियायाः। तथा हि, न्यग्भावनक्रियायां प्राक् हस्ती कर्मत्वेन विवक्षितः, सेचनक्रियायां तूत्तरकालं कर्तृत्वेन। यत्सग्रहणमनन्यकर्मार्थमिति। अण्यन्ते यत् कर्म ण्यन्तेऽपि यदि तदेव कर्म कर्त्ता भवति न कर्मान्तरम्, एवमात्मनेपदं भवति; नान्यथा। ननु विप्रतिषिद्धमेतत्—

आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान् ।

कर्त्तेति किम् ? आरोहन्ति हस्तिनं हस्तिकाः, तानारोहयति

पदमञ्जरी

कर्मान्तरमप्यस्ति मनुष्याः, रुहेर्गत्यर्थत्वान्मनुष्याणां कर्मसंज्ञा । कथं पुनरत्राणौ कर्मणो णौ कर्तृत्वम्, यावता स्थलमणौ कर्म हस्ती तु णौ कर्त्ता ? स्यादेतत्—आरोहयमाण इत्यत्राणौ कर्मणो हस्तिन एव कर्तृत्वम्, स एव च स्थलमारोहयतीत्यत्रापि कर्त्तेति । एवमपि प्रत्यासत्तेरेवात्र न भविष्यति, तथा हि ण्यन्तादात्मनेपदं भवति । अणौ यत्कर्म णौ चेत् स कर्त्तेत्युक्ते प्रत्यासत्तेरेतद् गम्यते—येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तेनैव णिचाऽण्यन्ते तत्प्रकृतिभूते धातौ यत्कर्म स एव चेत्कर्ता तस्मिन्नेव ण्यन्त इति । अत्र च यत्रायमुपाधिः, कृतमेव तत्रात्मनेपदम्—आरोहयमाण इति । यत्र तु न कृतम्-स्थलमारोहयतीति, न तत्रायमुपाधिरिति नैवात्मनेपदप्रसङ्गः । इह तर्हि—आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति हस्तीति ? किं पुनरत्र नेष्यते ? *वृत्तिकृता* नेष्यते, *भागवृत्तिकारेण* त्विष्यते । तथा *माघः* प्रयुङ्क्ते—'करेणुरारोहयते निषादिनम्' इति ।

*कर्त्तेति किमिति* । भावकर्मणोः सिद्धत्वात् कर्त्तर्येव भविष्यतीति मन्यते । अणौ यत्कर्म तस्मिन्नेव कर्त्तरि यथा स्यात्, कर्त्रन्तरे मा भूदित्येवमर्थं कर्तृग्रहणमिति दर्शयन्नाह—*तानारोहयति महामात्र इति* । गत्यर्थत्वाच्च रुहेः हस्ति-

न्यासः

एकस्यैवैकदा कर्मत्वं कर्तृत्वञ्च ? नैतद् विप्रतिषिद्धम्; एको हि वस्तुधर्मः, अपरश्च विवक्षाधर्मः, स्वातन्त्र्याविवक्षायां कर्तृत्वस्य विवक्षाधर्मत्वात् वस्तुधर्मत्वाच्चारुह्यमाणतया कर्मत्वम् । स्थलमारोहयति मनुष्यानिति । अत्र कर्मान्तरमप्यस्ति । मनुष्यानिति न केवलं हस्त्येवेति न भवत्यात्मनेपदम् । यद्येवम्, भीतान् सेचयति मूत्रेणेत्यत्र कर्मान्तरसद्भावादात्मनेपदं न भविष्यति, अस्ति ह्यत्रापि कर्मान्तरम्—भीतानिति, अतो न वक्तव्यम्—समानक्रियार्थं णौ चेदित्येतत् ? नैतदस्ति, न हि भीतानिति सेचयतेः कर्म, किं तर्हि ? आरोहयतेः भीतानारोहयमाणः सन् मूत्रेणात्मानं सेचयतीत्यर्थः, अयुक्तमेतत्, एवं ह्यारोहयमाण इत्यत्रात्मनेपदं शानच्च न स्यात्, कर्मान्तरसद्भावात् । नैवं तर्हि शानजेवात्र विहितः, किं तर्हि ? 'ताच्छील्यवयोवचनशक्तिषु' चानश्प्रत्ययः । तत्र यदि समानक्रियार्थं णौचेद्ग्रहणं न क्रियेत, तदा यदेवारोहयतेरण्यन्ते कर्म, स एव हस्ती सेचयतेर्ण्यन्ते कर्त्ता भवतीति तदेव कर्म, स एव कर्त्तेति स्यादेवात्मनेपदम् । तस्माण्णौ चेद् ग्रहणं समानक्रियार्थं कर्त्तव्यम् ।

कर्त्तेति किमिति ? कर्त्तर्येवात्मनेपदमनेन विधीयते; भावकर्मणोस्तु 'भावकर्मणोः' इत्यनेनैव सिद्धत्वात् । तस्मात् सामर्थ्यलब्धः कर्त्तेत्यभिप्रायः । कर्तृग्रहणं यदेवाण्यन्ते

महामात्रः । अनाध्यान इति किम् ? स्मरति वनगुल्मस्य कोकिलः, स्मरयत्येनं वनगुल्मः स्वयमेव ।

पदमञ्जरी

पकानां कर्मसंज्ञा । यद्येवम्, कर्मान्तरसम्भवादेवात्र न भविष्यति ? नैतदेवम् ? अस्तीत्यत्राणौ कर्मणो हस्तिनो णावपि कर्मत्वेनान्वयः । न वा सति कर्तृत्वविधौ कर्मान्तरव्यावृत्तिर्लभ्यते । यद्वा—प्रयोजकव्यापारमात्रे तात्पर्याद्यदा हस्तिपकाः कर्मत्वेनाविवक्षिताः, तदेदं प्रत्युदाहणं द्रष्टव्यम् । *वनगुल्मस्येति* । कर्मोपलक्षणमेतत्, न त्वत्र वनगुल्मस्य कर्मत्वमस्ति; शेषत्वेन विवक्षित्वात् । तस्माद्वनगुल्ममिति प्रदर्शनीयम् । *स्मरयत्येनमिति* । 'स्मृ आध्याने' घटादिः, वनगुल्मस्य रमणीयत्वप्रतिपादनाथ प्रयोजकत्वे विवक्षिते णिच् । *एनमिति* । बुद्ध्यर्थत्वात्कोकिलस्य कर्मसंज्ञा । एतदप्युपलक्षणम्, अत्र हि कर्मान्तरसद्भावादेव प्राप्तिर्नास्ति कर्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यम् ।

न्यासः

कर्म तस्मिन्नेव ण्यन्ते कर्तृत्वेन विवक्षिते सत्येवात्मनेपदं भवति, नान्यथेत्येवमर्थं क्रियत इति दर्शयितुमाह—आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्र इति । अत्र यदेवाण्यन्ते हस्ती कर्म न तदेव ण्यन्ते कर्तृत्वेन विवक्षितम्, किं तर्हि ? महामात्रः, तेनात्मनेपदं न भवति । एतच्च कर्तृग्रहणाल्लभ्यते; तस्यानन्यार्थत्वात् । ननु च यत्सग्रहणमनन्यकर्मार्थमित्युक्तम्, इह च कर्मान्तरं हस्तिपकाख्यमस्ति, अतो यत्सग्रहणादेव न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन कर्तृग्रहणेन ? नैतदस्ति; एवं सति हि कर्तृग्रहणेऽणौ यत् कर्म णौ चेत् स कर्ता तदेव कर्म कर्ता भवतीत्यस्यार्थस्य च प्रतिपादनाय क्रियमाणं यत्सग्रहणमर्थवद् भवतीति । असति तु कर्तृग्रहणे तन्न कर्त्तव्यमेव स्यादिति कुतः समानकर्मता प्रतीयते !

स्मरति वनगुल्मस्येति । अणौ कर्मप्रदर्शनार्थमेतत् । कर्मविषयेण शेषत्वेन विषयिणा विषयं दर्शयितुमुक्तम् । नन्यत्र न कर्मास्ति; तस्य शेषत्वेन विवक्षितत्वात् । तथा हि 'शेष' इत्यनुवर्तमाने 'अधीगर्थ' इत्यादिना कर्मणि शेषत्वेन विवक्षिते षष्ठीयं विहिता । तस्मादेवं दर्शयितव्यम्, - स्मरति वनगुल्ममिति । अथ वा—यद्यपि तच्छेषत्वेन विवक्षितम्, तथापि स्मर्यमाणत्वात् तस्य कर्मत्वं वस्तुतोऽस्त्येवेति । स्मरयतीति । 'स्मृ आध्याने', वनगुल्मस्य प्रयोजकत्वे विवक्षिते णिच्, घटादित्वान् मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वत्वम् । एनमिति । 'गतिबुद्धिप्रत्यवसानार्थ' इत्यादिना कर्मसंज्ञायां सत्याम् 'द्वितीया टौस्स्वेनः' इत्येनादेशः । ननु च यत्सग्रहणमनन्यकर्मार्थम्, इह च कर्मान्तरमस्ति कोकिलः, ततश्च कर्मान्तरसद्भावादात्मनेपदं न भविष्यतीति किमेतन्निवृत्त्यर्थेनानाध्यानग्रहणेन ? नैतदस्ति; आध्यानमात्रं विवक्षित्वेदं प्रत्युदाहरण-

ननु चात्र कर्मकर्त्तरि मूलोदाहरणानि, तत्र कर्मवद्भावेनैव सिद्धमात्मनेपदम्, किमर्थमिदमुच्यते ? कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवदतिदेशो विज्ञायते । कर्तृस्थार्थोऽयमारम्भः ।

पदमञ्जरी

*ननु चात्र कर्मकर्तरि मूलोदाहरणानीति* । ननु चाध्यारोपितप्रेषणपक्षे आरोहयतो हस्तिनः कर्मत्वाभावात्कर्मणा समानधातौ तुल्यक्रियत्वाभावात् पचत्योदनं देवदत्तो राध्यत्योदनं स्वयमेवेतिवत्कर्मवद्भावो न प्राप्नोति, सत्यम् ; आरब्ध एवास्मिन् सूत्रे सोऽपि पक्षः सम्भवात् प्रदर्शितः, अनारब्धे तु निवृत्तप्रेषणपक्षप्रक्रियैवाश्रयिष्यते । ननु तत्रापि व्यापारद्वयाभिधायिषु रुहादिषु भवत्येवम्, ये तु केवलकर्तृव्यापारवाचिनो दृश्यादयः तेषु कथम्, न हि दृशिः कर्मव्यापारं कञ्चिदाचष्टे ? स्यादेतत्—विषयभावापत्तिः कर्मव्यापारस्तदापादनं कर्तृव्यापार इति । यद्येवम्, इच्छापि दृश्यर्थः स्यात् । नन्वत्रापि विषयभावापत्तिः, तदापादनं च विद्यते, अथ दर्शनविषयभावापादनं दृश्यर्थः, ननु तदेव निरूप्यते किं नाम तद्दर्शनम् इति, अत्रोच्यते; मा नामाख्यातकर्मव्यापारः, अस्ति तावत्कर्मणोऽपि व्यापारः, कारकत्वात्, तत्र णिजुत्पत्तिदशायां तावत्येव वर्त्तिष्यते, उदाहरणदशायां ण्यन्तोऽपीति मन्यते । तथा च रुहिः कर्तृयुक् कर्मणाभिधेय इति युक्तं केवलकर्तृव्यापारवाचिनां गमिदृशिप्रभृतीनां कर्तृस्थक्रियत्वम् ; कथं तु विक्लित्युपसर्जनविक्लेदवचनः पचिः, द्विधाभवनोपसर्जनद्विधाभावनवचनश्च लुनातिः कर्मस्थक्रियः, न्यग्भवनोपसर्जनन्यग्भावनवचनस्तु रुहिः कर्तृस्थक्रियः ? उच्यते; रुहिरपि गत्यर्थः, तथा च 'यद्धितुपरं छन्दसि' इत्यत्र *भाष्यकारो* वक्ष्यति—हस्तिनमारोहतीत्यत्र हि उपरिगमनलक्षण एव रुहेरर्थः, तत्पुनर्न्यग्भवनहेतुत्वाद् न्यग्भावनमित्युच्यते, उपरिगमनरहितं तु न्यग्भावनमात्रं रुहेरर्थो न भवति, यदा खलु कश्चिद् भूमावेव तिष्ठन् वृक्षस्य शाखां हस्ताभ्यामवनमयति, तदा नासावारोहतीत्युच्यते । तस्माद् गतिविशेष एव रुहेरर्थः । कस्तर्हि क्रियाणां कर्मकर्तृस्थतायां हेतुः ? उक्तमत्र—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ इति ।

विशेषदर्शनेन शब्दानुसारेण वा क्रियायास्तात्स्थ्यं कथ्यते । एतच्च कारणगतमारोहस्य कर्तृस्थत्वं प्रतिपादयति, न तु कर्मस्थताम् । न हि हस्तिनमारोहति, वृक्षमारोहति, पर्वतमारोहतीत्यादौ कर्मभेदेऽप्यारोहणे रूपभेदः प्रतीयते, यथा—घृतमांसतण्डुलादिषु पाकः । न च हस्ती न्यग्भवत्वित्येवं कारकव्यापारः, किं तर्हि ? हस्तिपका उपर्यासीरन्निति । पाके तु तण्डुलादिगतो विक्लित्यादिरूपो

तथा च रुहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावक उदाहृतः।

पदमञ्जरी

विशेषो यथा स्यादित्येव कारकव्यापारः। तस्मात्कर्मभेदे रूपभेदादुद्देशस्य च कर्मगतत्वात् पचिः कर्मस्थक्रियः, विपर्ययाद्रुहिः कर्तृस्थक्रिय इति सिद्धम्। एवं चारुह्यते हस्ती स्वयमेवेति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्याः। *दृशिकर्तृस्थभावक इति*। अथ सिचिः कस्मादुपेक्षितः ? कर्मस्थक्रियत्वाद्। आर्द्रीभवनं ह्यत्र प्रधानम्, तदर्थत्वात्कारकव्यापारस्य। किमर्थं तर्ह्युदाहृतः ? विशेषाभावात्। न ह्यत्रानेन 'कर्मवत्कर्मणा' इत्यनेन वा आत्मनेपदे सति कश्चिद्विशेषः, तेनापि सति यक्चिणौ न भवतः, 'णिश्रन्थिग्रन्थि' इति प्रतिषेधात्। भाष्येऽपि कर्मवद्भावात् सिद्धिमाशङ्क्याध्यानप्रतिषेधार्थमित्युक्त्वा स्मरतेः कर्तृस्थभावकत्वात् कर्मवद्भावस्य प्राप्तिर्नास्तीत्यभिधायोक्तम्। एवं तर्हि सिद्धे सति यदाध्यानप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—भवत्येवञ्जातीयकानामात्मनेपदमिति। किमेतस्य ज्ञापने प्रयोजनम् ? पश्यन्ति भृत्या राजानम्; दर्शयते भृत्यान् राजा स्वयमेव—अत्रात्मनेपदं सिद्धं भवतीति। एवञ्जातीयकानामिति कर्तृस्थक्रियाणामित्यर्थः। एवं च ब्रुवता विध्यर्थमेतदित्युक्तं भवति, विशेषप्रतिषेधेन सामान्यविधेरनुमानात्। अत्र दर्शयते भृत्यान् राजेत्येतदेकमुदाहरणमनुपपन्नम्; कर्मान्तरसद्भावात्। तत्र वृत्तिकारः 'त्यजेदेकं कुलस्यार्थे' इति न्यायाद् उदाहरणमेतद्गमयितव्यं मन्यते। अस्मिन्नुदाहरणे कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्यर्थः।

अन्ये त्वाहुः—अस्मादेवोदाहरणादणौ ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भाव एवात्मनेपदं न भवति, यथा—स्थलमारोहयति मनुष्यानिति, इह त्वणौ कर्तृणां भृत्यानां णौ कर्मत्वमिति। एवं स्मारयत्येनमिति कोकिलस्य कर्मत्वेऽपि

न्यासः

मुपन्यस्तम्। एनमिति तु वचनं वनगुल्मः कर्त्ता न कोकिल इत्यर्थोपदर्शनपरं वेदितव्यम्। अथ वनमित्यनेन स एव वनगुल्मः परामृश्यते। यदेव कर्म स एव कर्त्तेत्यर्थस्य प्रदर्शनार्थमेनमित्युक्तम्। एवं वनगुल्मं वनगुल्मो स्मरयति। आत्मानमात्मना स्मरयतीत्यर्थः। णिच्युत्पन्ने कोकिलस्य प्रयोज्यस्य विवक्षितत्वान्निवृत्ते प्रयोज्यप्रयोजकभावे स्मरयतेर्ण्यन्तस्य प्रकृत एवार्थो भवति। ननु च स्मरणं चेतनावतां धर्मः, वनगुल्मश्चाचेतनः, तत् कथमसौ स्मरेत्? नैतदस्ति; अचेतनेष्वपि चेतनावद्धर्मोपचारः—यथा नदीकूलं पिपतिषतीति। *रुहिः कर्तृस्थक्रिय इति*। तदर्थस्य न्वम्भावनात्मनो हस्तिपकेषु समवेतत्वात्। *दृशिश्च कर्तृस्थभावक इति*। तदर्थस्य दर्शनस्य कर्तृषु भृत्येषु व्यवस्थितत्वात्।

## भीस्म्योर्हेतुभये ॥ ६८ ॥

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये। हेतुः प्रयोजकः कर्त्ता लकारवाच्यः, ततश्चेद्भयं भवति। भयग्रहणमुपलक्षणार्थम्, विस्मयोऽपि तत एव। जटिलो भीषयते। मुण्डो भीषयते। जटिलो विस्मापयते।

पदमञ्जरी

प्रत्युदाहरणमुपपन्नम्, 'करेणुरारोहयते निषादिनम्' इति प्रयोगश्चोपपन्न इति तेषां सूत्राक्षराण्येव तावदधिकानि, भाष्यं च सर्वमुदाहरणवर्जमनुपपन्नम् ॥

प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मनेपदात्।
*जयादित्यस्य* हृदयं गूढमेतत्प्रकाशितम् ॥

*भीस्म्योर्हेतुभये* ॥ भयमनिष्टापातशङ्कासाधनमात्रं लौकिको हेतुः, न वान्तरेण साधनं क्रिया सम्भवतीति विशेषणसामर्थ्यात् कृत्रिमत्वाच्च पारिभाषिकस्य हेतोर्ग्रहणमित्याह—*हेतुः प्रयोजक इत्यादि* । *ततश्चेद्भयं भवतीति*। यद्येवम्, स्मयत्यर्थो न विशेषितः स्यात्, न हि स्मयतेर्भयमर्थः, अत आह – *भयग्रहणमिति*। चित्तविकारस्योपलक्षणमित्यर्थः। *विस्मयोऽपि तत एवेति*। अत्र चेद्भवतीत्यनुषङ्गः। *भीषयत इति*। 'भियो हेतुभये षुक्'। *भाययत इति*। 'बिभेतेर्हेतुभये' इति वैकल्पिकमात्वम्। एवं च अत्र षुक् न भवति; तद्विधावाकारप्रश्लेषात्। *विस्मापयत इति*। 'नित्यं स्मयतेः' इत्यात्वम्। 'अर्तिह्री' इत्यादिना पुक्। *कुञ्चिकयेति*। कारणादत्र भयम्, न हेतोः। यद्यपि तद्व्यापारे णिज्विधानात् प्रयोजक-

न्यासः

भीस्म्योर्हेतुभये ॥ हेतुभय इति। हेतोर्भयं हेतुभयमिति। 'पञ्चमी भयेन' इति समासः। भीतिर्भयम् = त्रासः, अनिष्टापाताशङ्का। ततश्चेद् भयं भवति। यदि ततो हेतुसंज्ञकात् प्रयोजकाद् भयं भवत्येवमात्मनेपदं भवति, नान्यथेति। यद्येवम्, स्मयत्यर्थो न विशेषितः स्यात्; यस्माद् भयं बिभेतेरेवार्थो न स्मयतेः, ततश्च रूपेण विस्माययतीत्येवमादावप्यात्मनेपदं स्यात्। मुण्डो विस्मापयत इत्यादौ न स्यादित्यत आह—भयग्रहणमित्यादि। भयग्रहणं हि धात्वर्थोपलक्षणार्थम्। धात्वर्थश्चेत् प्रयोजकाद्भवतीत्ययमर्थो विवक्षितः। तेन विस्मयोऽपि यदि तत एव हेतोर्भवति यद्येषोऽर्थो लभ्यत इति स्मयत्यर्थोऽपि विशेषित एव। विस्मयः = आश्चर्यम्। मुण्ड इति। मुण्डगुणोपेतत्वान् मुण्डः। भीषयते इति। 'ञिभी भये', 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणानुवृत्तेः 'बिभेतेर्हेतुभये' इति पक्ष आत्वम्। 'भियो हेतुभये षुक्' इति षुक्। विस्मापयत इति। 'स्मिङ् ईषद्धसने'। नित्यं स्मयतेः' इत्यात्वम्, 'अर्तिह्री' इत्यादिना पुक्।

हेतुभय इति किम्? कुञ्चिकयैनं भाययति। रूपेण विस्माययति। अत्र कुञ्चिका भयस्य करणम्, न हेतुः॥

**गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥**

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'गृधु अभिकाङ्क्षायाम्' 'वञ्चु गतौ' इत्येतयोर्ण्यन्तयोः प्रलम्भने वर्त्तमानयोरात्मनेपदं भवति। प्रलम्भनम् = विसंवादनम्, मिथ्याफलाख्यानम्। माणवकं गर्धयते। माणवकं वञ्चयते।

प्रलम्भन इति किम्? श्वानं गर्धयति। गर्धनमस्योत्पादयतीत्यर्थः। अहिं वञ्चयति। परिहरतीत्यर्थः।

**लियः सम्माननशालीनीकरणयोश्च ॥ ७० ॥**

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'लीङ् श्लेषणे' इति दिवादौ पठ्यते, 'ली श्लेषणे' इति च क्र्यादौ; विशेषाभावाद्

पदमञ्जरी

साध्यमेव भयम्, तथापि विशेषणोपादानसामर्थ्यादेवं विज्ञायते—अन्यनिरपेक्षाद्धेतोरेव यद्भयमिति। एवं च मौण्ड्येनं भाययतीत्यत्रापि गुणगुणिनोर्भेदविवक्षायां न भवति। उदाहरणे तु तादात्म्यस्य विवक्षितत्वाद्धेतोरेव भयम्॥

*गृधिवञ्च्योः प्रलम्भने। परिहरतीत्यर्थ इति।* वर्जयतीति यावत्॥

*लियः सम्माननशालीनीकरणयोश्च॥ विशेषाभावादिति।* निरनुबन्धकपरिभाषा तु 'वामदेवाद् ड्यड्ड्यौ' इत्यत्र ज्ञापिता प्रत्ययग्रहणविषयेवेति मन्यते।

न्यासः

कुञ्चिकयैनं भाययतीति। करणादत्र भयम्, न हेतोः प्रयोजकात्। तेनात्मनेपदं न भवति। षुगप्यत्र न भवति, स हीकारान्तस्यैवेष्यते, 'भियो हेतुभये षुक्' इत्यत्र भी ई—इतीकारप्रश्लेषनिर्देशात्। रूपेण विस्माययतीति। अत्र करणादेव विस्मयः; न हेतोः।

गृधिवञ्च्योः प्रलम्भने॥ लियः सम्माननशालीनीकरणयोश्च॥ विशेषाभावादिति। कथं पुनर्विशेषाभावः, यावता निरनुबन्धकत्वं सानुबन्धकत्वञ्चानयोर्विशेषोऽस्त्येव, ततश्च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इत्यनया परिभाषया न लीङो ग्रहणेन भवितव्यम्, तद्युक्तमुक्तं विशेषाभावाद् द्वयोरपि ग्रहणमिति? नैष दोषः, उत्सृष्टानुबन्धको हि लीङ् श्यन्तो भवति। उत्सृष्टे चानुबन्धे द्वयमेवाभेदकं भवति—अर्थः, शब्दान्तरत्वञ्च। तत्रार्थस्तावदनयोरेक एव, शब्दान्तरत्वमपि नास्ति। शब्दा-

द्वयोरपि ग्रहणम्। लियो ण्यन्तात्सम्मानने शालीनीकरणे च वर्त्तमानादात्मनेपदं भवति, 'च' शब्दात् प्रलम्भने च। संमाननम् = पूजनम्। शालीनीकरणम् = न्यग्भावनम्। जटाभिरालापयते। पूजां समधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते। न्यक्करोतीत्यर्थः। प्रलम्भने—कस्त्वामुल्लापयते। विसंवादयतीत्यर्थः। 'विभाषा लीयतेः' इति वाऽऽत्वं विधीयते। तदस्मिन्विषये नित्यमन्यत्र विकल्पः। व्यवस्थितविभाषा हि स।।

सम्माननादिष्विति किम्? बालकमुल्लापयति।

**मिथ्योपपदात्कृञोऽभ्यासे ।। ७१ ।।**

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। ण्यन्तात्करोतेर्मिथ्योपपदादात्मनेपदं भवति अभ्यासे। अभ्यासः = पुनः पुनः करणम्, आवृत्तिः। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

### पदमञ्जरी

*संमानने शालीनीकरणे च वर्तमानादिति*। संमाननं विषयः, न धात्वर्थः। यदाह—*पूजामधिगच्छतीत्यर्थ इति*। धात्वर्थे तु पूजयतीति वाच्यं स्यात्, यथा न्यक्करोतीत्यर्थ इति। अकर्मकश्चायमस्मिन् प्रयोगे पूजाख्यस्य कर्मण आत्मनेपदसहितेन धातुनेवोपात्तत्वात् पुत्रीयतीतिवदित्याहुः। *जटाभिरिति*। हेतौ तृतीया, यस्य हि जटाः सन्ति लोके स पूज्यते॥

*मिथ्योपपदात् कृञोऽभ्यासे*॥ उपोच्चारितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः। *मिथ्या कारयते इति* आत्मनेपदेनैवाभ्यासस्य द्योतितत्वात्

### न्यासः

न्तरत्वञ्च प्रकृतिभेदविकरणभेदाभ्यां भवति। न चानयोर्ण्यन्तयोः प्रकृतिभेदः, नापि विकरणभेदोऽस्ति; शब्विकरणत्वात्। यदपि 'विभाषा लीयतेः' इत्यात्त्वं तदप्युभयोर्भवति। तथा च वक्ष्यति—'किमिदं लीयतेरिति? लीनातिलीयत्योरःगन्तुकेन यका निर्देशः' इति। न्यग्भावनमिति। अभिभवनमित्यर्थः। जटाभिरिति। हेतौ तृतीया। जटा हि पूजाद्यधिगमहेतुभूताः। तथा हि—यस्य जटाः सन्ति लोके महानयं तपस्वीत्युपजातसंप्रत्ययैः पूज्यते॥

मिथ्योपपदात् कृञोऽभ्यासे॥ मिथ्योपपदादिति। उपोच्चरितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः। पदं मिथ्या कारयत इति। अत्रात्मनेपदेना-

मिथ्योपपदादिति किम् ? पदं सुष्ठु कारयति । कृञ इति किम् ? पदं मिथ्या वाचयति । अभ्यास इति किम् ? पदं मिथ्या कारयति । सकृदुच्चारयति ॥

स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥

'णेः' इति निवृत्तम् । शेषात्कर्त्तरि परस्मैपदे प्राप्ते स्वरितेतो ये धातवो ञितश्च तेभ्य आत्मनेपदं भवति, कर्त्तारं चेत्क्रियाफलमभिप्रैति । क्रियायाः फलं क्रियाफलं प्रधानभूतं यदर्थमसौ क्रिया आरभ्यते तच्चेत्

पदमञ्जरी

'नित्यवीप्सयोः' इति द्विर्वचनं न भवति । *सदोषमिति* । एतेन मिथ्याशब्दस्यार्थमाचष्टे । अस्यैव विवरणम्—*स्वरादिदुष्टमिति* । आदिशब्देन रूपं गृह्यते । *असकृदिति* अभ्यासं दर्शयति । *उच्चारयतीत्यर्थ इति* ण्यन्तस्य करोतेरुच्चारणे वृत्तिरनेकार्थत्वाद्धातूनाम् । एवं च प्रकृतिभूतः करोतिरुच्चारणे वर्त्तते, अकर्मकश्च ॥

*स्वरितञितः कर्त्रभिप्राये क्रियाफले* ॥ कर्तारमभिप्रेतीति कर्त्रभिप्रायम्, 'कर्मण्यण्', क्रियाफलं चेह कर्मैवेति नास्ति नियमः तेनाकर्मकेभ्योऽपि यजिप्रभृतिभ्यः स्वर्गादिके फले कर्तृगामिन्ययं विधिर्भवत्येव । *कर्तारं चेदिति* । क्रियाफलस्य कर्तृगामित्वद्योतनायात्मनेपदं भवतीत्यर्थः । यदि यच्च यावच्च क्रियानन्तरभावि फलं तत्र कर्तृगामिन्ययं विधिर्भवति, इहापि स्याद्—यजन्ति याजकाः, पचन्ति पाचका इति; दक्षिणादेः कर्तृगामित्वादित्यत्र आह—*प्रधानभूतमिति* । किं पुनस्तदित्यत आह—*यदर्थमिति* । यदुद्दिश्येत्यर्थः । *क्रिया आरभत*

न्यासः

भ्यासस्य द्योतितत्वात् 'नित्यवीप्सयोः' इति द्विर्वचनं न भवति । सापचारमिति । सदोषम् । अनेन मिथ्याशब्दस्यार्थमाचष्टे । स्वरादिदुष्टमिति । पूर्वस्यैवार्थं व्यक्तीकरोति । आदिशब्देन रूपस्य परिग्रहः । असकृदिति । अभ्यासशब्दार्थमुदाहरणेन दर्शयति ॥

स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ कर्त्रभिप्राय इति । कर्त्तारमभिप्रैतीति 'कर्मण्यण्' । यदि सामान्येन यत्र क्रियाफलं कर्त्तारमभिप्रैति तत्रात्मनेपदम्, तदेहापि स्यात्—पचन्ति पाचकाः, यजन्ति याजका इति । तथा ह्यत्र क्रियाफलं दक्षिणा याजकान् कर्तृनभिप्रैति, भृतिश्च पाचकानित्यत आह—क्रियायाः फलमित्यादि । प्रधानभूतं यत् फलं क्रियायास्तदिह गृह्यते । न च दक्षिणादिकं क्रियाफलं प्रधानभूतम्, ततो न भवत्यतिप्रसङ्गः । किं पुनस्तत्प्रधानभूतमित्यत आह—यदर्थमित्यादि । एतेन यदुद्दि-

कर्तुर्लकारवाच्यस्य भवति। यजते। पचते। ञितः खल्वपि—सुनुते। कुरुते। स्वर्गादि प्रधानफलमिह कर्त्तारमभिप्रैति।

'कर्त्रभिप्राये' इति किम्? यजन्ति याजकाः। पचन्ति पाचकाः।

### पदमञ्जरी

इति। सामग्रीसमवधानात्मिका आद्या प्रवृत्तिः=आरम्भः, यामन्तरेण याजकादीनामप्रवृत्तिः, स्वर्गादिकं हि फलं प्रेक्षुः सामग्रीं समवधाप्य प्रवर्तयति, सा प्रवर्तिता यथायथं प्रवर्त्तते। कथं पुनरेतल्लभ्यते—प्रधाने फले कर्त्रभिप्राय इति? प्रधानत्वादेव। किञ्च—यत् किंचन फलं सर्वत्र कर्त्रभिप्रायं भवति। ननु यत्र क्रियाभ्यासमात्रे तात्पर्यम्, तत्र न किञ्चित्फलं कर्तृगामि, तत्रापि किञ्चित्फलं कर्तृगामि, किं कौशलम्? पुनः पुनरभ्यासे हि क्रियासु कौशलं भवति, तस्मात्प्रधाने फले कर्त्रभिप्राय इति सिद्धम्। यजत इति। केचिदाहुः—'देवतायै इदं न मम' इत्येवंविधो मानसः सङ्कल्पो याग इति, तेषां यजन्ति याजका इति ऋत्विग्व्यापारे प्रयोगो नोपपद्यते। अन्ये त्वाहुः—'होमादिष्वभिष्टादिऋत्विग्व्यापारो यागः' इति, तेषां यजतिव्यापारप्रयोगो नोपपद्यते। एवं तर्ह्युभयं यजेरर्थः—ऋत्विग्व्यापारश्च, यजमानव्यापारश्च। तदुक्तम्—यजादिषु चाविपर्यासो नाना-क्रियाणां यज्यर्थत्वादिति।

### न्यासः

इयासौ यागादिक्रियारभ्यते तत् प्रधानभूतमिति दर्शयति। तत् पुनः स्वर्गादि, न तु दक्षिणादि। तथा हि—स्वर्गाद्यर्थं यागादिक्रियारभ्यते, न तु दक्षिणाद्यर्थम्। यदर्थमिति। क्रियाविशेषणमेतत्। यच्छब्देन क्रियायाः प्रधानभूतं फलं निर्दिश्यते। यदर्थः प्रयोजनं यस्य क्रियारम्भस्य तत् तथोक्तम्। कथं पुनः सामान्योक्तौ प्रधानस्य क्रियाफलस्य ग्रहणं शक्यते विज्ञातुम्? फलग्रहणात्। यदीह फलमात्रस्य ग्रहणमभिप्रेतं स्यात्, तदा फलग्रहणमनर्थकं स्यात्; व्यवच्छेद्याभावात्। नास्त्येव हि स विषयो यत्र क्रियाफलं कर्त्तारं नाभिप्रैति; ततश्च कर्त्रभिप्राये क्रियाया इत्येवं ब्रूयात्। एवमप्युक्ते षष्ठ्या क्रियायाः सम्बन्धिनि कर्त्रभिप्राये प्रत्यायिते सामर्थ्यात् फलमेव क्रियायाः कर्त्रभिप्रायं गम्यते। न हि फलादन्यत् क्रियासम्बन्धि कर्त्तारमभिप्रैति। तस्मात् फलग्रहणसामर्थ्यात् प्रधानं फलं गृह्यते। अथ वा—प्रधानत्वादेव प्रधानं फलं गृह्यते। तथा चोक्तम्—प्रधाने कार्यसंप्रत्ययात् सिद्धमिति। अस्मिन् व्याख्याने फलग्रहणं स्पष्टार्थम्, कर्तर्यात्मनेपदविधानात्। प्रत्यासत्तेर्यस्तस्य वाच्यः कर्त्ता यदि तस्यैव तत् फलं भवतीति विज्ञायत इत्याह—तस्येत्यादि। गतार्थम्। स्वर्गादीति। आदिशब्देनौदनादिकमपि गृह्यते।

कुर्वन्ति कर्मकराः। यद्यपि दक्षिणा भृतिश्च कर्तुः फलमिहास्ति, तथापि न तदर्थः क्रियारम्भः ॥

पदमञ्जरी

*न तदर्थः क्रियारम्भ इति*। ननु ऋत्विजामारम्भस्तदर्थ एव, नैतदेवम्; 'आद्या प्रवृत्तिरारम्भः' इत्युक्तम्, सा च यजमानस्य—स्वर्गमहं लभेयेति, न पुनरिमे दक्षिणां लभेरन्निति। यथा—अवघाते क्रियमाणे स्वेदश्च भवति वैतुष्यं च भवति, भृतिश्च लभ्यते, अथ च वैतुष्यार्थ एवावघातः; तद्वदत्रापि। तदुक्तं हरिणा—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥ इति।

*इह स्वामिदासौ पचत इति*। क्रियामात्रविवक्षायां परस्मैपदं भवति। स्वामिगते तु धर्मे दास आरोपिते स्वामिदासौ पचेते इत्यात्मनेपदं भवति।

अथाभिप्रग्रहणं किमर्थम्? विप्रकृष्टेऽपि फले यथा स्याद्। द्विविधं क्रियाफलम्, दृष्टम्—अन्नपुत्रवृष्टिशत्रुवधादिकम्, अदृष्टं च स्वर्गादि। तत्र पूर्वं प्रत्यासन्नमवश्यंभावीति प्रधानम्, इतरत्तु विधुरप्रत्ययोपनिपाते सति व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानम्। संभवति ह्यविकलमनुष्ठातुं यागस्यापि मध्ये वैराग्योत्पत्तौ

न्यासः

तथाप्रीत्यादिना दक्षिणादेः फलस्याप्राधान्यं दर्शयति। यदर्थं सा क्रियारभ्यते तत्प्रधानमिहोपात्तं फलम्। स्वर्गाद्यर्थञ्च यागादिक्रियारभ्यते, न दक्षिणाद्यर्थम्। अतोऽप्रयोजकत्वात् तदप्रधानम्। तेन यद्यपि तत् कर्त्तारमभिप्रैति तथाप्यात्मनेपदं न भवति।

अथाभिप्रग्रहणं किमर्थम्? विप्रकृष्टेऽपि फले यथा स्यात्। द्विविधं हि क्रियाफलम्—आसन्नम्, विप्रकृष्टञ्च। तत्रासन्नम्—यस्य व्यापारानन्तरमेव निष्पत्तिः। विप्रकृष्टन्तु—उपरतेषु व्यापारेषु यन्निमित्तान्तरमपेक्ष्य कालविप्रकर्षकृतं संस्कारपरिपाकाच्चिराद् भवति। तत्राद्यमासन्नत्वाद् दृष्टत्वादुत्पत्ति प्रत्यव्यभिचाराच्च प्रधानम्। इतरत् पुनर्विप्रकृष्टत्वादनुमेयत्वात् सम्भवव्यभिचाराच्चाप्रधानम्। सम्भवति हि विप्रकृष्टस्य कालान्तरसम्बन्धिनः फलस्य सहकारिवैकल्याद् विरुद्धप्रत्ययोपनिपाताच्चोत्पत्तिं प्रति व्यभिचारः; यद्यपि तदुद्दिश्य क्रियारम्भात् तदपि प्रधानम्, तथाप्यविप्रकृष्टफलापेक्षया तस्याप्राधान्यमस्त्येव। तत्र यद्यभिप्रग्रहणं न क्रियेत, तदा लुनीत पुनीत इत्यादावेव स्याद्—यत्राविप्रकृष्टं क्रियाफलम्। यजते इत्यादौ तु न स्याद्—यत्र विप्रकृष्टं स्वर्गादिकं क्रियाफलम्, प्रधाने कार्यसंप्रत्ययात्। अभिप्रग्रहणे तु न दोषः; यस्मादभिराभिमुख्ये वर्त्तते, प्रशब्दस्त्वारम्भे। तेन प्रारम्भमात्रस्याभिमुख्ये फलनिष्पत्तौ बुद्धा-

अपाद्वदः ॥ ७३ ॥

'कर्त्रभिप्राये' इति वर्त्तते । अपपूर्वाद्वदतेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति । धनकामो न्यायमपवदते । 'न्यायापवादेन धनमर्जयिष्यामि' इति मन्यते ।

'कर्त्रभिप्राये क्रियाफले' इत्येव—अपवदति ॥

णिचश्च ॥ ७४ ॥

'कर्त्रभिप्राये क्रियाफले' इति वर्त्तते । णिजन्तादात्मनेपदं भवति, कर्त्रभिप्राये क्रियाफले । कटं कारयते । ओदनं पाचयते ।

कर्त्रभिप्राय इत्येव—कटं कारयति परस्य ॥

समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥

पदमञ्जरी

मोक्षार्थप्रवृत्तौ सत्यामनुत्पत्तिः स्वर्गस्य । ततश्चेह तस्य ग्रहणं न स्याद् । अभिप्रग्रहणे तु सति अभिराभिमुख्ये वर्तते, प्रशब्दस्त्वारम्भ इति कर्त्तारं प्रत्याभिमुख्येन क्रियाफलं चेत्तत्प्रैति एतुम् आरभते एवमात्मनेदं भवतीत्यर्थो भवति । तथा च यद्यपि स्वर्गादिकं स्वरूपेणान्नादिवत् तदानीं नैति तस्य त्वङ्कुरावस्था कर्त्तारमेतीति तद्द्वारेण फलमेवैतुमारभत इति सर्वत्र सिद्ध्यति । फलस्यैव ह्यङ्कुरावस्था पूर्वशब्दवाच्या ॥

*णिचश्च* ॥ अत्र कश्चिदाह—इदमात्मनेपदं चुरादिणिचो न भवति, कुतः? ज्ञापकात् । किं ज्ञापकम्? लक्षयतेः स्वरितेत्त्वमिति । नात्राप्राप्तभाषितमस्ति । *पारायणेऽपि* चुरादिणिच आत्मनेपदमुदाहृतम्—एष विधिश्चुरादिणिजन्तात्स्यादिति । कश्चन निश्चुनुते स्म— अप्राप्तवचनेऽत्र न किंचन दृष्टम्, लक्षयतेः स्वरितेत्त्वमनार्षम् ॥

न्यासः

वाश्रीयमाणायां सर्वत्र सिद्धं भवति । ननु चासत्यभिप्रग्रहणे प्रकृतीनां यजिप्रभृतीनामनुबन्धविशेषासञ्जनादेव विप्रकृष्टेऽपि फले भविष्यति; अन्यथा हि तस्य वैयर्थ्यं स्यात्, न; अभिचारादौ यत्राविप्रकृष्टं फलं दृष्टमस्ति तत्र तस्य सार्थकत्वात् । तस्माद् विप्रकृष्टेऽप्यप्रधाने फले यथा स्यादित्येवमर्थमभिप्रग्रहणं कर्तव्यमेव ॥

अपाद्वदः ॥ न्यायापवादेनेत्यादिना येनाभिप्रायेण धनकामो न्यायमपवदते तं दर्शयति ॥

'कर्त्रभिप्राये' इति वर्त्तते। सम्, उद्, आङ्—इत्येवम्पूर्वाद्यमेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति, ग्रन्थविषयश्चेत्प्रयोगो न भवति। व्रीहीन् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। आङ्पूर्वादकर्मकाद् 'आङो यमहन' इति सिद्धमेवात्मनेपदम्, सकर्मकार्थमिदं पुनर्ग्रहणम्।

अग्रन्थ इति किम्? उद्यच्छति चिकित्सां वैद्यः।

कर्त्रभिप्राय इत्येव—संयच्छति, उद्यच्छति, आयच्छति ॥

**अनुपसर्गाज्ज्ञः ॥ ७६ ॥**

'कर्त्रभिप्राय' इति वर्त्तते। अनुपसर्गाज्जानातेः। कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। गां जानीते, अश्वं जानीते।

अनुपसर्गादिति किम्? स्वर्गं लोकं न प्रजानाति मूढः।

'कर्त्रभिप्रायः' इत्येव—देवदत्तस्य गां जानाति ॥

**विभाषोपपदेन प्रतीयमाने ॥ ७७ ॥**

'स्वरितञितः' इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले द्योतिते विहितम्, तदुपपदेन द्योतिते न प्राप्नोतीति वचनमारभ्यते।

**पदमञ्जरी**

*समुदाङ्भ्यो यमोऽग्रन्थे* ॥ *उद्यच्छति चिकित्सामित्यत्र* अधिगमपूर्वके उद्यमे यमिर्वर्त्तते, चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः।

*अनुपसर्गाज्ज्ञः* ॥ सकर्मकार्थमिदम्, अन्यत्र 'अकर्मकाच्च' इति सिद्धत्वात्। *गां जानीत इति*। *स्वर्गं लोकं न प्रतिजानातीति*। 'संप्रतिभ्यामनाध्याने' इत्यनेनापि न भवति; आध्यानविषयत्वात्। *प्रजानातीति* वा पाठः ॥

*विभाषोपपदेन प्रतीयमाने* ॥ अप्राप्तविभाषेयमित्याह—*तदुपपदेनेति*। अत्र च

**न्यासः**

णिचश्च ॥ समुदाङ्भ्यो यमोऽग्रन्थे ॥ उद्यच्छतीति। चिकित्सां वैद्य इति। चिकित्साशास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः ॥

अनुपसर्गाज् ज्ञः ॥ नास्योपसर्गाः सन्तीति बहुव्रीहिः। सकर्मकार्थञ्चेदम्। अन्यत्र 'अकर्मकाच्च' इत्येवं सिद्धत्वात् ॥

विभाषोपपदेन प्रतीयमाने ॥ तत्र 'स्वरितञितः' इत्यादीनि पञ्च सूत्राण्यनुवर्त्तन्ते। कर्त्रभिप्राये क्रियाफले द्योत्य इति। केन द्योत्ये? प्रकृतत्वादात्मनेपदेनेति विज्ञेयम्।

समीपे श्रूयमाणं शब्दान्तरम् = उपपदम्, तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषाऽऽत्मनेपदं भवति। स्वं यज्ञं यजति, स्वं यज्ञं यजते। स्वं कटं करोति, स्वं कटं कुरुते। स्वं पुत्रमपवदति, स्वं पुत्रमपवदते। एवं पञ्चसूत्र्यामुदाहार्यम्॥

**शेषात्कर्तरि परस्मैपदम्॥ ७८॥**

पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न परस्मैपदनियमः, तत्सर्वतः प्राप्नोति, तदर्थमिदमुच्यते। येभ्यो धातुभ्यो येन विशेषणे-

**पदमञ्जरी**

'स्वरितञितः' इत्यारभ्य पञ्च सूत्राण्यनुवर्तन्ते। *समीपे श्रूयमाणमिति*। न तु पारिभाषिकम्; असंभवात्। *एवं पञ्चसूत्र्यामुदाहार्यमिति*। न केवलमुदाहृतयोर्द्वयोः; अपि तु पञ्चस्वपि सूत्रेष्वित्यर्थः। स्वं यत्नं कारयते कारयति वा। स्वं व्रीहिं संयच्छते संयच्छतीति वा। स्वं गां जानीते जानातीति वा॥

*शेषात्कर्त्तरि परस्मैपदम्*। *आत्मनेपदनियमः कृत इति*। प्रकृत्याश्रयोऽर्थाश्रयश्च, अनुदात्तङितोरेवात्मनेपदं भावकर्मणोरेवेति। *सर्वत इति*। सर्वाभ्यः प्रकृतिभ्यः सर्वेषु चार्थेष्वित्यर्थः। *तदर्थमिति*। सर्वतः प्राप्तिनिवृत्त्यर्थमित्यर्थः। *येन विशेषणेनेति*।

**न्यासः**

तदुपपदेन द्योतिते न प्राप्नोतीति। उक्तार्थानामप्रयोगात्। एतेनाप्राप्तविभाषेयमिति दर्शयति। ननु च स्वं यज्ञं यजते इत्यत्र स्वशब्दस्योपपदत्वन्नोपपद्यते ? यतः 'तत्रोपपदं सप्तमीस्थम्' इति द्वितीयधात्वधिकारे यत् सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति, न च स्वशब्द एवंविध इत्याह —समीपे श्रूयमाणमित्यादि। एतेनोपोच्चारितं पदमुपपदमित्य-न्वर्थस्योपपदस्य ग्रहणम्, न पारिभाषिकस्येति दर्शयति। एतच्च पारिभाषिकस्यासम्भ-वाल्लभ्यते। स्वं यज्ञमित्यादिना पञ्चसूत्र्यां यदाद्यं सूत्रं तत्रोदाहरति। स्वं पुत्रमित्या-दिना यद् द्वितीयं तत्र। एवं पञ्चसूत्र्यामुदाहार्यमिति। अन्यत्रापीति शेषः। पञ्चसूत्र्य-न्तर्गते सूत्रे यदुदाहृतं ततोऽन्यत्राप्युदाहार्यमित्यर्थः। स्वं कटं कारयते, कारयति वा। स्वं व्रीहिं संयच्छते, संयच्छति वा। स्वं भारमुद्यच्छते, उद्यच्छति वा। स्वं वस्त्रमाय-च्छते, आयच्छति वा। स्वं गां जानीते, जानाति वेति। एतानि 'णिचश्च' इत्यादिषु सूत्रेषु यथायोगमुदाहरणानि॥

**शेषात् कर्त्तरि परस्मैपदम्॥** पूर्वेणेति। 'अनुदात्तङितः' इत्यादिना। सर्वत्र प्राप्नोतीति। अशेषेभ्योऽपि। तदर्थमिदमुच्यत इति। सर्वत्र परस्मैपदे प्रसक्ते तन्निवृ-त्त्यर्थम्; अर्थशब्दस्य निवृत्तिवचनत्वात्, यथा—मशकार्थो धूम इति। तदेतेनैतत् नियमार्थमित्युक्तं भवति। येभ्यो धातुभ्य इत्यादिना शेषत्वं दर्शयति। येन विशेषणे-

नात्मनेपदमुक्तं ततो यदन्यत्स शेषः। शेषात्कर्तरि परस्मैपदं भवति शेषादेव नान्यस्मात्। 'अनुदात्तङित आत्मनेपदम्' उक्तम्—आस्ते, शेते। ततोऽन्यत्र परस्मैपदं भवति—याति, वाति। 'नेर्विशः' आत्मनेपदमुक्तम्—निविशते। ततोऽन्यत्र परस्मैपदम्—आविशति, प्रविशति।

कर्तरीति किम्? पच्यते, गम्यते।

कर्मकर्तरि कस्मात्परस्मैपदं न भवति—पच्यते ओदनः स्वयमेव? 'कर्त्तरि कर्मव्यतिहारे' इति द्वितीयं कर्तृग्रहणमनुवर्त्तते; तेन कर्त्तैव यः कर्त्ता, तत्र परस्मैपदं कर्मकर्त्तरि न भवति॥

पदमञ्जरी

अनुबन्धादिना। याति वातीत्यनुबन्धशेषः, आविशति प्रविशतीत्युपसर्गशेषः, गन्धनादेरन्यत्र करोतीत्यादिरर्थशेषः। गन्धनादिविशिष्टो हि कृञादिः शेषग्रहणेन पञ्चम्यन्तेन निवर्त्यमानो नागृहीतविशेषणन्यायेन विशेषणं गन्धनाद्यपि व्यावर्त्तयति। *शेषादेव नान्यस्मादिति*। उपलक्षणमेतत्, कर्तर्येव नान्यत्रेत्यपि द्रष्टव्यम्।

*पच्यते, गम्यत इति*। ननु क्रियमाणेऽपि कर्तरिग्रहणे यदि तावदेवं नियमः—कर्तरि यदि भवति शेषादेवेति; ततोऽशेषात्कर्तरि मा भूत्, शेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति। अथाप्येवं नियमः—शेषाद्यदि भवति कर्तर्येवेति, ततः शेषाद्भावकर्मणोर्मा भूद्, अशेषात्तु त्रिष्वपि प्राप्नोति। उक्तोऽत्र परिहारः—

न्यासः

नेति। अनुबन्धादिना। याति, वातीत्यनुबन्धशेषस्योदाहरणम्। आविशति, प्रविशतीत्युपसर्गशेषस्यार्थशेषस्यापि। एवं गन्धनादिभ्योऽन्यत्र करोतीत्येवमादिकमुदाहरणं वेदितव्यम्। ननु शेषादित्यनेन पञ्चम्यन्तेन धातुसमानाधिकरणेन धातुरेव विशिष्यते, नार्थः, ततश्चाशेषेषु गन्धनादिष्वर्थेषु परस्मैपदं प्राप्नोति, नैतदस्ति; गन्धनादयो हि प्रकृतेरेवार्थाः, तत्रासौ शेषग्रहणान्निवर्त्तमानस्तानपि निवर्त्तयति।

**पच्यते, गम्यते इति**। ननु च यद्यत्र परस्मैपदं स्यात्, तदा 'भावकर्मणोः' इति वचनमनर्थकं स्यात्; अनवकाशत्वात्, नैतदस्ति; अस्ति हि तस्यावकाशः। कः पुनरसौ? यो न शेषः—आस्यते, शय्यते, क्रियत इति। अनुदात्तेत्त्वं ङित्त्वञ्चाशेषः। 'शेषात् कर्तरि' इत्यत्र कर्तृग्रहणं सामान्यमुपात्तमिति यो देशयेत् तं प्रत्याह—**कर्मकर्त्तरीत्यादि**। 'कर्तरि कर्मव्यतीहारे' इत्यादिना परिहरति। **कर्तैव यः कर्तेति**। शुद्धो यः कर्त्ता, कर्तृवद्भावरहितो यः कर्तेत्यर्थः॥

## अनुपराभ्यां कृञः ॥ ७९ ॥

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम्, तदपवादः परस्मैपदं विधीयते । अनु, परा—इत्येवम्पूर्वात्करोतेः परस्मैपदं भवति । अनुकरोति, पराकरोति ॥

## अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥

'क्षिप प्रेरणे' स्वरितेत्, ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । अभि, प्रति, अति—इत्येवम्पूर्वात् क्षिपः परस्मैपदं भवति । अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति ।

अभिप्रत्यतिभ्य इति किम् ? आक्षिपते ।

द्वितीयमपि कर्तृग्रहणमनुवर्त्तते, तेनेह न भवति—अभिक्षिप्यते स्वयमेव ॥

## प्राद्वहः ॥ ८१ ॥

'वह प्रापणे' स्वरितेत्, तत्र कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते । प्रपूर्वाद्वहतेः परस्मैपदं भवति । प्रवहति, प्रवहतः, प्रवहन्ति ।

प्रादिति किम् ? आवहते ॥

## परेर्मृषः ॥ ८२ ॥

'मृष तितिक्षायाम्' स्वरितेत्, ततस्तथैवात्मनेपदे प्राप्ते परस्मै-

### पदमञ्जरी

'योगविभागोऽत्राभिप्रेतः' इति । तत्र प्रथमे योगे शेषादेवेति नियमः, द्वितीये तु कर्तर्येवेति । कर्मकर्तरीत्यपि भावकर्मणोरित्यत्रोक्त एवार्थो विस्मरणशीलाननुग्रहीतुं पुनरपि स्मारितः ॥

*अनुपराभ्यां कृञः* ॥ अत्रापि द्वितीयं कर्तृग्रहणमनुवर्तते । अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव ॥

### न्यासः

अनुपराभ्यां कृञः ॥ अभिप्रत्यतिभ्यः क्षिपः ॥ अभिक्षिपतीति । तुदादित्वाच्छः ॥ प्राद्वहः ॥ परेर्मृषः ॥ परिमृष्यतीति । दिवादित्वाच्छ्यन् ॥

पदं विधीयते । परिपूर्वाद् मृष्यतेः परस्मैपदं भवति । परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति ।

परेरिति किम् ? आमृष्यते ।

वहतिमपि केचिदत्रानुवर्त्तयन्ति—परिवहति ॥

व्याङ्परिभ्यो रमः ॥ ८३ ॥

'रमु क्रीडायाम्', अनुदात्तेत्त्वादात्मनेपदे प्राप्ते परस्मैपदं विधीयते । वि, आङ् , परि—इत्येवम्पूर्वाद्रमतेः परस्मैपदं भवति । विरमति, आरमति, परिरमति ।

एतेभ्य इति किम् ? अभिरमते ॥

उपाच्च ॥ ८४ ॥

'रमः' इत्येव उपपूर्वाद्रमतेः परस्मैपदं भवति । देवदत्तमुपरमति । यज्ञदत्तमुपरमति । उपरमयतीति यावत् । अन्तर्भावितण्यर्थोऽत्र रमिः ।

पदमञ्जरी

*उपाच्च* ॥ उपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्तते, उपरतोऽध्ययनाद्, उपरतो निधनादिति । न चानयोरुभयोरप्यर्थयोः सकर्मकत्वमुपपद्यते, तत्कथं सकर्मकस्योदाहरणम् ? अत आह—*उपरमयति यावदिति* । कथं पुनरण्यन्तो ण्यर्थे वर्तते ? अत आह—*अन्तर्भावितण्यर्थ इति* ॥

न्यासः

व्याङ्परिभ्यो रमः ॥ उपाच्च ॥ उपाच्चेति चकारः पूर्वापेक्षया समुच्चयार्थः । उपरमति देवदत्तमिति । ननु चोपपूर्वो रमिरकर्मक एव भवति । तथा ह्युपपूर्वस्यास्य विनाशोऽर्थो भवति, यथा—उपरतानि, नष्टानीति गम्यते । निवृत्तिर्वा भवति, स्वाध्यायादुपरमते, निवर्तत इति गम्यते । न चास्मिन्नर्थे वर्तमानस्य सकर्मकत्वमुपपद्यते, तत् कथं सकर्मकस्योदाहरणं युज्यत इत्याह—उपरमयतीति यावदिति । एतेन ण्यर्थवृत्तितामुपरमतेर्दर्शयन् सकर्मकतामुपपादयतीति । अकर्मको हि धातुर्ण्यर्थे वर्तमानः सकर्मको भवति, अथ पुनरण्यन्तस्य ण्यर्थवृत्तितोपपद्यते कथम् ? अत आह—अन्तर्भावितण्यर्थो रमिरित्यादि । अन्तर्भावितो बुद्ध्यानुवेशितो ण्यर्थः प्रयोज्यप्रयोजकभावो यस्य स तथोक्तः । एवंविधस्य तस्य प्रयोज्येन कर्मणा सकर्मकत्वमुपपद्यत एव ।

पृथग्योगकरणमुत्तरार्थम्। अकर्मकाद्विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात् ॥

**विभाषाऽकर्मकात् ॥ ८५ ॥**

'रम' 'उपात्' इति च वर्त्तते। पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते। उपपूर्वाद्रमतेरकर्मकाद्विभाषा परस्मैपदं भवति। यावद्भुक्तमुपरमति, यावद्भुक्तमुपरमते। निवर्तत इत्यर्थः ॥

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥**

'णिचश्च' इति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। बुध, युध, नश, जन, इङ्, प्रु, द्रु, स्रु— इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। बोधयति। योधयति। नाशयति। जनयति। अध्यापयति। प्रावयति। द्रावयति। स्रावयति।

येऽत्राकर्मकास्तेषाम् 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्येवं सिद्धे वचनमिदमचित्तवत्कर्तृकार्थम्। बोधयति पद्मम्। योधयन्ति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्।

**पदमञ्जरी**

*बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ प्राप्नोतीति*। गम्यत इति वचनं तु प्राप्तिहेतुर्व्यापारः।

**न्यासः**

अथ किमर्थं पृथग् योगः क्रियते, 'न व्याङ्पर्युपेभ्यो रमः' इत्येक एव योगः क्रियतामित्याह—पृथग्योगकरणमित्यादि। गतार्थम् ॥

**विभाषाऽकर्मकात् ॥** यावद्भुक्तमिति। 'यावदवधारणे' इत्यव्ययीभावः। भुक्तमिति। 'नपुंसके भावे क्तः' इति क्तप्रत्ययः। यावन्ति भोजनानि तावद्भ्यो निवर्त्तत इत्यर्थः। अथ वा—यावद्भुक्तमिति यथार्थे वीप्सायामव्ययीभावः। भोजनाद् भोजनाद् निवर्त्तत इत्यर्थः ॥

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥** 'बुध अवगमने', 'युध संप्रहारे', 'णश अदर्शने', 'जनी प्रादुर्भावे', 'इङ् अध्ययने', च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ', 'द्रु द्रु गतौ', 'स्रु स्रु गतौ', जनयतीति। 'जनीजॄष्' इत्यादिना मित्संज्ञा। मितां ह्रस्वत्वम्। अध्यापयतीति। 'क्रीङ्जीनां णौ' इत्यात्त्वम्। पूर्ववत् पुक्। एतद्विषयाण्युदाहरणानीति। प्राप्तिविलयनस्यन्दनविषयाण्येतानि प्रावयतीत्याद्युदाहरणानि यथाक्रममि-

येऽत्र चलनार्था अपि तेषां 'निगरणचलनार्थेभ्यश्च' इति सिद्धे यदा न चलनार्थास्तदर्थं वचनम्—प्रवते । प्राप्नोतीति गम्यते । अयो द्रवति । विलीयत इत्यर्थः । कुण्डिका स्रवति । स्यन्दत इत्यर्थः । तद्विषयाण्युदाहरणानि ॥

## निगरणचलनार्थेभ्यश्च ॥ ८७ ॥

'णेः' इति वर्त्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते । निगरणम् = अभ्यवहारः । चलनम् = कम्पनम् । निगरणार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति । निगारयति । आशयति । भोजयति । चलनार्थेभ्यः—चलयति, चोपयति, कम्पयति ।

अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्च ।

### पदमञ्जरी

*कुण्डिका स्रवतीति* । कुण्डिकायामुदकं कुण्डिकोदकव्यापारो वा कुण्डिकायां छिद्रवत्यामुपचर्यते । ननु स्यन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव; तथा प्रसिद्ध्यभावात् ॥

*निगरणचलनार्थेभ्यश्च* ॥ *चलयतीति* । 'चल कम्पने' घटादिः । *आदयते देवदत्तेनेति* । 'गतिबुद्धि' इत्यादिनाऽणौ कर्तुः कर्मसंज्ञा प्राप्ता, 'अत्तिखाद्योः प्रतिषेधः' इति वचनान्न भवति ॥

### न्यासः

त्यर्थः । स्यन्दनं चलनमिति लोके प्रसिद्धम् । ततोऽन्यत्र स्यन्दयतीति बोद्धव्यम् । प्रावयति = प्रापयति । द्रावयति = विलापयति । स्रावयति = स्यन्दयतीत्यर्थः ॥

निगरणचलनार्थेभ्यश्च ॥ निगारयतीति । 'गॄ निगरणे' । आशयतीति । 'अश भोजने' । भोजयतीति । 'भुज पालनाभ्यवहारयोः' । चलतीति । 'चल कम्पने' । घटादित्वान्मित्त्वम्, पूर्ववद्ध्रस्वः । चोपयतीति । 'चुप मन्दायां गतौ' । कम्पयतीति । 'कपि चलने' । अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्चेति । तद्विपरीतेभ्यः 'अणावकर्मकाच्चित्तवत् कर्तृकात्' इत्यनेनैव सिद्धत्वात् । तत्र येषामुदाहरणान्युपन्यस्तानि, तेषु चलिकम्पी अकर्मकौ द्वौ; तयोरचित्तवत्कर्तृकार्थोऽयं योगः । शेषाणान्तु सकर्मकार्थः ।

*अदेः प्रतिषेधो वक्तव्यः *। अत्ति देवदत्तः। आदयते देवदत्तेन॥

## अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥

'णेः' इति वर्तते। कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते। अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात्परस्मैपदं भवति। आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः शाययति देवदत्तम्।

अणाविति किम्? चेतयमानं प्रयोजयति चेतयते इति केचित्प्रत्युदाहरन्ति, तदयुक्तम्; हेतुमण्णिचो विधिः, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः। तस्मादिह चेतयतीति परस्मैपदेनैव भवि-

### पदमञ्जरी

*अणावकर्मकचित्तवत्कर्तृकात्*॥ *अणाविति किमिति*। ण्यन्तस्य प्रयोज्येन कर्मणा सकर्मकत्वमवश्यम्भावीति मन्यमानस्य प्रश्नः। *चेतयमानमिति*। 'चिती संज्ञाने' चुरादिः। *हेतुमण्णिचो विधिरिति*। बुधादिसूत्रादिह णिज्ग्रहणमनुवर्तते, बुधादिभ्यश्च हेतुमत्येव णिच् सम्भवति, तस्मादिहापि तस्यैव ग्रहणमिति भावः। तत्र यथा—'ब्राह्मणा आनीयन्तामन्यत्रानधीयानेभ्यः' इत्युक्ते प्रत्यासत्तेर्यदध्ययनं ब्राह्मणानां सम्भवति तदधीयानेभ्य इति गम्यते, न त्वध्येतव्यमात्रमधीयानेभ्य इति, तद्वदिहापि प्रतिषेधोऽपि तस्यैव गम्यते यज्जातीयस्य विधौ ग्रहणमिति।

### न्यासः

वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'विभाषाऽकर्मकात्' इत्यतो विभाषाग्रहणं मण्डूकप्लुत्यानुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनादेरन्येभ्यो नित्यं परस्मैपदम्, अदेस्तु न भवत्येव। आदयते देवदत्तेनेति। अत्र 'गतिबुद्धि' इत्यादिना कर्मसंज्ञा न भवति; 'आदिखादिनीवहीनां प्रतिषेधः' इति वचनात्॥

**अणावकर्मकाच्चित्तवत्कर्तृकात्** ॥ चेतयमानमिति। 'चिती संज्ञाने', चौरादिकः। अयञ्चाकर्मकश्चित्तवत्कर्तृकश्च। हेतुमण्णिचो विधिरिति। बुधादेः सूत्रादिह णिज्ग्रहणमनुवर्तते, स च हेतुमण्णिजेव; बुधादिभ्योऽन्यस्य णिचोऽसम्भवात्। यतश्च हेतुमण्णिचो विधिः, प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथाभूत एव विधिभाक्, तथाभूतेनैव प्रतिषेधभाजा भवितव्यम्; प्रत्यासत्तेः। तथा हि—ब्राह्मणाः प्रवेश्यन्तामन्यत्रानधीयानेभ्य इत्युक्ते यथाजातीयकानां प्रवेशो विहितस्तथाजातीयकानामेव

तव्यम्। इदं तु प्रत्युदाहरणम्—आरोहयमाणं प्रयुङ्क्ते, आरोहयते।

अकर्मकादिति किम्? कटं कुर्वाणं प्रयोजयति, कारयते। चित्तवत्कर्तृकादिति किम्? शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः ॥ ८९ ॥**

पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विहितम्, तस्य प्रतिषेधोऽयमुच्यते। यत्कर्त्रभिप्रायविषयमात्मनेपदं तदवस्थितमेव न प्रतिषिध्यते। पा, दमि, आङ्यम, आङ्यस, परिमुह, रुचि, नृति, वद, वस—इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति। 'णिचश्च' इत्यात्मनेपदं भवति। तत्र पिबतिर्निगरणार्थः। दमिप्रभृतयश्चित्तवत्कर्तृकाः। नृतिश्चलनार्थोऽपि।

**पदमञ्जरी**

*आरोहयमाणमिति*। 'णेरणौ' इत्यात्मनेपदं शानच् तत्रैवास्याकर्मकत्वमुपपादितम्। *प्रयुङ्क्त इति* पाठः। *प्रयोजयतीति* पाठे णेरर्थो मृग्यः॥

*न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः*॥ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति पिबतिवसत्योर्ग्रहणम्, न पातिवस्त्योः; तेनाणावकर्मकत्व-

**न्यासः**

प्रत्यासत्तेः पर्युदासो विज्ञायते। आरोहयमाण इति। णेरणावादिसूत्रेणात्मनेपदम्। यद्यप्यत्र हस्तिपकान् प्रति हस्तिनः प्रयोजकत्वे विवक्षिते णिज् विहितः, तथापि ण्यन्तावस्थायां हस्तिपकाः प्रयोज्यत्वेन न विवक्ष्यन्ते; अन्यथा ह्यणौ यत् कर्म तदेव णौ कर्त्ता न स्यात्। तत्र प्रयोज्यत्वाविवक्षायामारोहयमाण इत्यस्य स्वयमेवारोहयतीत्येषोऽर्थो भवति। तमारोहयमाणं यदान्यः प्रयुङ्क्ते, तदा द्वितीयो हेतुमण्णिच्। तदन्तात् 'णिचश्च' इत्यात्मनेपदं भवति। तेनारोहयत इति युक्तमेव प्रत्युदाहरणम्॥

न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः॥ 'पा' इति 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इत्यनेन 'पा पाने' इत्यस्यैव ग्रहणम्, न 'पा रक्षणे' इत्येतस्य। 'दमु उपशमे', 'यम उपरमे', 'यसु प्रयत्ने' आङ्पूर्वावेतौ। 'मुह वैचित्त्ये', परिपूर्वः, 'रुच दीप्तौ', 'नृती गात्रविक्षेपे', 'वद व्यक्तायां वाचि', 'वस निवासे', आच्छादनार्थस्य वसेर्ग्रहणं पूर्वोक्तादेव हेतोर्न भवति। पूर्वेण योगद्वयेनेति। अनन्तरेणेत्यर्थः। नृतिश्चलनार्थोऽपीति। अपिशब्दाच्चित्तवत्कर्तृ-

एषां परस्मैपदं न भवति। पा—पाययते। दमि—दमयते। आङ्यम—आयामयते। 'यमोऽपरिवेषणे' इति मित्संज्ञा प्रतिषिध्यते। आङ्यस—आयासयते। परिमुह—परिमोहयते। रुचि-रोचयते। नृति—नर्त्तयते। वद—वादयते। वस—वासयते।

* पादिषु धेट उपसंख्यानम् *। धापयेते शिशुमेकं समीची॥

## वा क्यषः॥ ९०॥

'लोहितादिडाज्भ्यः क्यष्' इति वक्ष्यति, तदन्ताद्धातोर्वा परस्मैपदं भवति। लोहितायति, लोहितायते। पटपटायति, पटपटायते।

### पदमञ्जरी

विवक्षायां परस्मैपदं भवत्येव। *पाययते इति*। 'शाच्छासाह्वाव्यावेपां युक्'।

*पादिष्विति*॥ धेडप्यस्मिन् सूत्रे पठितव्य इत्यर्थः। *समीची इति*। प्रथमाद्विवचने 'वा छन्दसि' इति पूर्वसवर्णदीर्घः॥

*वा क्यषः*॥ *लोहितायते इति*। अलोहितो लोहितो भवतीत्यत्रार्थे क्यष्, 'अकृत्सार्वधातुकयोः' इति दीर्घः। *पटपटायतीति*। पटच्छब्दस्य डाज्विषये

### न्यासः

कार्यश्च। पाययत इति। 'शाच्छासाह्वाव्यावेपां युक्'। पातेरत्वकर्मकत्वविवक्षायां परस्मैपदं भवति। पालयतीति। 'पातेर्लुग् वक्तव्यः' इत्युपसंख्यानाल्लुगागमः। दमयत इति। पूर्ववत् 'मितां ह्रस्वः'। आयामयत इति। ननु चात्रापि मित्त्वे सति ह्रस्वेन भवितव्यमित्यत आह—यमोऽपरिवेषण इति। तत्र हि 'न कम्यमिचमाम्' इत्यतो नेत्यनुवर्तते। आङिति। ङिद्विशिष्टस्याकारस्योपादानमुपसर्गप्रतिपत्त्यर्थम्। तेनोपसर्गप्रतिरूपको य आकारस्तस्य ग्रहणं न भवति।

पादिषु धेट उपसंख्यानमिति। पादिष्विति विषयसप्तमी। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। धेटः पादिविषयस्य परस्मैपदप्रतिषेधस्य प्रतिपादनं कर्तव्यम्। योऽयं पादिविषयः परस्मैपदप्रतिषेधः, स धेटोऽपि भवतीत्यर्थः। तत्रेदं प्रतिपादनम्—नेति योगविभागः क्रियते, तेन धेटोऽपि प्रतिषेधो भविष्यति। यद्येवम्, नेत्यनेनैव सिद्धत्वात् पादीनां ग्रहणमनर्थकम्? नानर्थकम्; पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थत्वात्। धापयेते इति। 'धेट् पाने'। 'आदेचः' इत्यादिनात्त्वम्, पूर्ववत् पुक्। शिशुमिति। 'गतिबुद्धि' इत्यादिना कर्मसंज्ञायां द्वितीया॥

वा क्यषः॥ लोहितायतेति। अलोहितो लोहितो भवतीत्यत्रार्थे 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्। 'अकृत्सार्वधातुकयोः' इति दीर्घः। पटपटायतीति।

अथात्र परस्मैपदेन मुक्ते कथमात्मनेपदं लक्ष्यते, यावता 'अनुदात्तङितः' इत्येवमादिना प्रकरणेन तन्नियतम् ? एवं तर्हि आत्मनेपदमेवात्र विकल्पितं विधीयते, तच्चानन्तरं परस्मैपदप्रतिषेधेन सन्निधापितमिह संबध्यते । तेन मुक्ते शेषात्कर्त्तरि परस्मैपदं भवति ॥

पदमञ्जरी

द्विर्वचनम्, 'अव्यक्तानुकरणात्' इति डाच्, टिलोपः, 'नित्यमाम्रेडिते डाचि' । *कथमिति* । न कथञ्चिदित्यर्थः । किं कारणमित्याह—*यावतेति* । न नियमेन व्यावर्त्तितमात्मनेपदमनेन शक्यं प्रापयितुम्, न ह्यशक्यार्थे वचनस्य व्यापारः, वा-वचनं तु केवलस्य लस्य प्रयोगार्थं स्यादिति भावः । *एवं तर्हीत्यादि* परिहारः । विकल्पितं विभाषितम्, पाक्षिकमित्यर्थः । कथं पुनः परस्मैपदप्रकरणेन विच्छिन्नमात्मनेपदं शक्यं विधातुम्, अत आह—*तच्चेति* । ननु शाब्दः सन्निधिः सम्बन्धकारणम्, प्रतिषेधेन चापवादभूतस्य भावमात्रं प्रतिपाद्यते, आत्मनेपदं तु स्वेन शास्त्रेण भवति, न भावना तस्य सन्निधिर्भवति, उच्यते; तात्पर्यतोऽपि सन्निधिः, सन्निधिरेवापवादापनयनस्य चोत्सर्गप्रवृत्तौ तात्पर्यम्, तेन परस्मैपदं भवतीत्यस्यात्मनेपदं भवतीति तात्पर्यार्थः । यद्वा—इहापि प्रतिषेध एव विधेयः, स च पूर्वसूत्रवदिहात्मनेपदं प्रवर्त्तयिष्यति । किं तर्हि उच्यते–अनन्तरं सन्निधापितमिति, नन्वेवमिहैव संन्निधापितं भवति ? स्यादेवम्, यदि परस्मैपदेन क्यषन्तादात्मनेपदं बाधितं स्याद्, नियमेन तद्व्यावृत्तिः, तत्र स्वविषये परस्मैपदप्रतिषेधो विकल्प्यमानः किं कारणमात्मनेपदं प्रवर्त्तयेत् ? पूर्वत्र त्वपवादमपनयता प्रतिषेधेनात्मनेपदं प्रवर्त्यते, तस्मादिहापि तदनुवृत्तिसामर्थ्यात् यादृशः प्रतिषेध आत्मनेपदप्रवृत्त्यविनाभावी प्रकृतः, तादृश एव विधीयत इति मत्वोक्तम्—'अनन्तरं सन्निधापितम्' इति । यद्यात्मनेपदं विधीयते, केनेदानीं परस्मैपदं पक्षे भवतीत्यत आह—*तेन मुक्त इति* । इह 'प्रोपाभ्यां समर्थाभ्याम्' 'अनुपसर्गाद्वा' इत्य-

न्यासः

पटच्छब्दस्य डाचि विषयभूते 'डाचि बहुलं द्वे' इत्युपसंख्यानाद् द्विर्वचनम्, 'अव्यक्तानुकरणाद्' इत्यादिना डाच्, 'नित्यमाम्रेडिते डाचि' इति पटच्छब्दस्य योऽन्त्यस्तकारः, यश्च तस्माद् परः पकारः—तयोः पररूपत्वमेकादेशः ।

कथमिति । न कथञ्चिदित्यर्थः । किं कारणं न लभ्यत इत्यत आह—यावतेत्यादि । आत्मनेपदं हि 'अनुदात्तङितः' इत्यादि नियतम्, अतो न शक्यते क्यषन्ताद् विधातुमिति । एवं तर्हीत्यादिना परिहरति । विकल्पितमिति विभाषितम्, पाक्षिकमित्यर्थः । ननु चात्मनेपदं परस्मैपदेन व्यवच्छिन्नम्, अतोऽसन्निहितत्वान्न शक्यते विधातुमित्याह—तच्चेत्यादि । कर्त्रभिप्राये क्रियाफले विवक्षित आत्मनेपदे प्राप्ते

## द्युद्भ्यो लुङि ॥ ९१ ॥

वेत्येव । 'द्युत दीप्तौ', तत्साहचर्याद् लुठादयोऽपि कृपूपर्यन्तास्तथैव व्यपदिश्यन्ते । बहुवचननिर्देशादाद्यर्थो भवति । अनुदात्तेत्त्वान्नित्यमेवात्मनेपदे प्राप्ते द्युतादिभ्यो लुङि वा परस्मैपदं भवति ।

### पदमञ्जरी

नन्तरं 'क्यषः' इति सूत्रं कर्त्तव्यम्—क्यषन्तादात्मनेपदं भवतीति, नेदं दुःखमनुभवितव्यं भवति, 'वा' ग्रहणञ्च न कर्तव्यं भवति, उत्तरमपि योगद्वयं तत्रैव कार्यम् ? तथा तु न कृतमित्येव ॥

द्युद्भ्यो लुङि॥ द्युतेरेकत्वाद्बहुवचनमनुपपन्नमित्याशङ्क्याह-*तत्साहचर्यादिति*। छत्रिन्यायेनेति भावः । *लुठादयोऽपीति* । प्रत्यासन्नानामेव साहचर्यात् प्रतीतिः स्यादित्याशङ्कामपनेतुं दूरवर्तिनामुपादानम् । क्वचित् श्वित्यादय इत्यनन्तराणामेव पाठः । *कृपूपर्यन्ता इति* । तदनन्तरं वृत्करणाद् एतदुक्तं भवतीत्याह—बहुवचन-

### न्यासः

तदपवादेन 'अणावकर्मकात्' इत्यादिना योगद्वयेन परस्मैपदं विहितम् । तस्यापवादस्यानन्तरसूत्रेण यः प्रतिषेधो विहितः, तेनापवादेन परस्मैपदमपनयतात्मनेपदं सन्निधापितम् । अपवादे ह्यपनीते नियोगत एवोत्सर्गेण भवितव्यम् । तदेवं प्रतिषेधेन सन्निधापितमिहात्मनेपदं सम्बध्यते । यदि तर्ह्यनेन कर्तर्यात्मनेपदमेव विकल्पेन विधीयते, पक्षे परस्मैपदं कथं लभ्यत इत्याह—तेनेत्यादि ॥

द्युद्भ्यो लुङि ॥ ननु च द्युतेरेकत्वाद् बहुवचननिर्देशो नोपपद्यत इत्याह—तत्साहचर्यादित्यादि । यथैकेन छत्रिणा साहचर्यादन्येऽपि तत्सहचारिणश्छत्रिण इत्युच्यन्ते—छत्रिणो गच्छन्तीति, तथेहापि द्युतिना साहचर्यात् श्वितादयोऽपि 'द्युत' इति व्यपदिश्यन्ते । कथं पुनरेकस्य व्यपदेशे सत्ययमभिप्रेतोऽर्थः सम्पद्यत इत्याह—बहुवचननिर्देशादित्यादि । एवं हि विनाप्यादिशब्देन तदर्थो लभ्यत इत्येषोऽर्थः सम्पद्यत इति दर्शयति । कृपूपर्यन्ता इति । अनेन कृपेः परे ये पठ्यन्ते ते द्युतादयो न भवन्तीत्याचष्टे । एतच्च तदनन्तरं वृत्करणाद् गणपरिसमाप्तेर्लिङ्गाद् विज्ञायते । व्यद्युतदिति । पुषादित्वादङ् । यद्येवम्, तत एवाङ्विधानात् परस्मैपदं तेभ्यो भविष्यति, किमनेन योगेन ? नैतदस्ति; ज्ञापकाद्धि नित्यं लुङि परस्मैपदं विज्ञायते । किञ्च—लुङोऽन्यत्रात्मनेपदं न भवतीति सम्भाव्येत । ननु चानुदात्तेत्करणसामर्थ्यादन्यत्र न भविष्यति, नैतत्; अनुदात्तेत्करणम् 'अनुदात्तेतश्च हलादेः' इति युजर्थं स्यात् । तस्मात् कर्त्तव्योऽयं योगः । अलुठत् । 'रुठ लुठ प्रतीघाते' ॥

व्यद्युतत्, व्यद्योतिष्ट। अलुठत्, अलोठिष्ट।

लुङीति किम्? द्योतते॥

**वृद्भ्यः स्यसनोः॥ ९२॥**

द्युतादिष्वेव वृतादयः पठ्यन्ते। 'वृतु वर्तने', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', 'स्यन्दू प्रस्रवणे', 'कृपू सामर्थ्ये'—एतेभ्यो धातुभ्यः स्ये सनि च परतो वा परस्मैपदं भवति। वृत्—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति; वर्तिष्यते, अवर्तिष्यत, विवर्तिषते। वृध्—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति; वर्द्धिष्यते, अवर्द्धिष्यत, विवर्द्धिषते।

स्यसनोरिति किम्? वर्तते॥

**लुटि च क्लृपः॥ ९३॥**

वृतादित्वादेव स्यसनोर्विकल्पः सिद्धः, लुटि विधीयते। चकारस्तर्हि स्यसनोरनुकर्षणार्थो न वक्तव्यः। एवं तर्हीयं प्राप्तिः पूर्वां

पदमञ्जरी

*निर्देशादिति*। *व्यद्युतदिति*। 'पुषादि' इति सूत्रेणाङ्। न च तत एवाङ्विधानात् परस्मैपदं शक्यं विज्ञातुम्; नित्यत्वप्रसङ्गात्, लुङोऽन्यत्रापि प्रसङ्गाच्च। अनुदात्तेत्त्वं तु युजर्थं स्यात्॥

*वृद्भ्यः स्यसनोः*॥ 'स्यसनोः' इति सत्सप्तमी। *द्युतादिष्वेव वृतादयः पठ्यन्त इति*। यद्येवमियं प्राप्तिर्वृद्भ्यः पूर्वां प्राप्तिं बाधेत, ततश्च अवृतत्, अवर्त्तिष्टेति लुङि विकल्पो न स्यात्, तथा चोत्तरत्र चकारः क्रियते—इमां प्राप्तिं पक्षे इतरा प्राप्तिर्न बाधेतेति, द्युतादिपाठसामर्थ्यात्सोऽपि भविष्यति। यद्वा—लुङीत्यत्र स्वरयिष्यते, वर्त्स्यतीत्यादौ 'न वृद्भ्यश्चतुर्भ्यः' इति इट्प्रतिषेधः॥

न्यासः

वृद्भ्यः स्यसनोः॥ स्यसनोरिति सती सप्तमीयम्। वर्त्स्यतीत्यादौ 'सेऽसिचि' इत्यादेः सूत्रादसिचि स इत्यनुवर्त्तमाने 'गमेरिट् परस्मैपदेषु' इत्यतः परस्मैपदे च 'न वृद्भ्यश्चतुर्भ्यः' इतीट्प्रतिषेधः। आत्मनेपदे त्विड् भवत्येव। विवृत्सतीति। 'हलन्ताच्च' इति कित्त्वाद् गुणाभावः॥

लुटि च क्लृपः॥ चकारस्तर्हीत्यादि। स्यसनोर्वृतादित्वादेव सिद्धे विकल्प इत्यभिप्रायः। एवं तर्हीत्यादिना विशेषविधानं सामान्यविधानस्य बाधकं भवतीति विज्ञायते। ननु च यदीयं प्राप्तिः क्लृपेः पूर्वां प्राप्तिं बाधते, द्युतादिषु पाठस्य तस्या-

प्राप्तिं बाधेत, तस्माच्चकारः स्यसनोरनुकर्षणार्थः क्रियते। लुटि च स्यसनोश्च कृपेः परस्मैपदं वा भवति। कल्प्ता, कल्प्तारौ, कल्प्तारः। कल्प्स्यति, अकल्प्स्यत्, चिक्लृप्सति। कल्पिता, कल्पिष्यते, अकल्पिष्यत, चिकल्पिषते॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमस्याध्यायस्य तृतीयः पादः॥

पदमञ्जरी

*लुटि च क्लृपः॥ एवं तर्हीति*। सामान्यस्य विशेषो बाधक इति भावः। कल्प्तेत्यादौ 'तासि च क्लृपः' इतीट्प्रतिषेधः॥

*इति हरदत्तविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य तृतीयः पादः॥*

न्यासः

नर्थक्यं प्रसज्येत? नैतदस्ति; अनर्थत्वात्। ननु च स्यसनोरिति स्वरितत्वमिष्यते, तेन तस्य बाधा न भविष्यतीति, सत्यमेतत्; सूत्रकारस्तु चकारं वैचित्र्यार्थं चकार, न स्वरितत्वार्थम्। कल्प्तेति। पूर्ववदधिकारद्वयानुवृत्तौ सत्याम् 'तासि च क्लृपः' इतीट्प्रतिषेधः। 'लुटः प्रथमस्य डारौरसः' इति डादेशः। 'कृपो रो लः' इति लत्वम्। चिक्लृप्सतीति। पूर्ववत् कित्वाद् गुणाभावः॥

इति श्रीबोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिका-
विवरणपञ्जिकायां प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः॥

# अथ प्रथमाध्याये चतुर्थः पादः

## आ कडारादेका संज्ञा ॥ १ ॥

'कडाराः कर्मधारये' इति वक्ष्यति। आ एतस्मात्सूत्रावधेर्यदित ऊर्ध्वमनुक्रमिष्यामः, तत्र एका संज्ञा भवतीति वेदितव्यम्। का पुनरसौ ? या पराऽनवकाशा च। अन्यत्र संज्ञासमावेशान्नियमार्थं

पदमञ्जरी

*आ कडारादेका संज्ञा* ॥ *आङ्मर्यादाभिविध्योरिति*। समासस्य विकल्पितत्वाद्। 'आकडारात्' इति निर्देशः, समासे त्वाकडारमिति स्यात्। इह द्वौ कडारशब्दौ भवतः—'प्राक्कडारात् समासः', 'कडाराः कर्मधारये' इति च, तत्र कोऽवधि-रित्यत आह–*'कडाराः कर्मधारये' इति वक्ष्यतीति*। कुतः पुनरेतत्? स्वातन्त्र्यात्। स्वतन्त्रो ह्यसौ प्रथमानिर्देशेन स्वयं कार्ययोगित्वात्। प्राक्कडारादित्ययं तु परतन्त्रोऽवधित्वेन स्वयं कार्ययोगित्वाभावाद्, व्याप्तेश्च न्यायाद्। एवं हि भूयसामनुग्रहो भवति। लिङ्गाच्च, यदयं 'तत्पुरुषः' 'द्विगुश्च' इति द्विगोस्तत्पुरुष-संज्ञां शास्ति, तज् ज्ञापयति—अनुवर्त्तते द्वितीयेऽप्येकसंज्ञाधिकार इति; अन्यथा 'दिक्सङ्ख्ये संज्ञायाम्' इत्यत्र तत्पुरुषाधिकारादेव समावेशसिद्धेस्तदर्थो यत्नो-ऽपार्थकः स्यात्। किमर्थं पुनरियानवधिरुपादीयते, न आ द्वन्द्वात् इत्येवोच्येत, न हि 'चार्थे द्वन्द्वः' इत्यतः परत्रास्योपयोगः? उच्यते; 'द्वन्द्वश्च प्राणितूर्य' इत्ययम-प्यवधिः सम्भाव्यते, ततश्च सम्बुद्धिसंज्ञामन्त्रितसंज्ञयोः समावेशो न स्यात्।

*का पुनरसाविति*। एका संज्ञा भवतीत्येतावत् सूत्रव्यापारः, तत्र विशेषादर्शनात्

न्यासः

आ कडारादेका संज्ञा ॥ या परेति। यत्र विप्रतिषेधस्तत्र 'विप्रतिषेधे परम्' इति वचनात् परा भवति। अनवकाशा च येति। यस्याः संज्ञायाः क्वचिदवकाशो नास्ति, साप्यपवादभूतत्वात् संज्ञान्तरं बाधित्वा प्रवर्त्तते। यद्येवम्, अत एव संज्ञासमावेशो न भविष्यति, तत् किमेकसंज्ञाधिकारेण ? नैतदस्ति, विरोधे हि सत्यपवादभूतत्वं भवति। विप्रतिषेधस्तु विरोध एव, स च विरोध एकसंज्ञाधिकारे सति भवति, नासति; तथा हि यत्रैकसंज्ञाधिकारो नास्ति, तत्र विप्रतिषेधो नास्त्येव, यथा— प्रत्ययादीनां संज्ञानाम्; तस्मादस्मिन्नधिकारे सति विरोधो भवति। तस्मिंश्च सति 'विरोधे परम्' इति वचनात् परा भवति, अपवादभूतत्वादनवकाशा च। तस्मात् कर्त्तव्योऽयमधिकारः।

वचनमेकैव संज्ञा भवतीति । वक्ष्यति—'ह्रस्वं लघु', भिदि, छिदि—भेत्ता, छेत्ता । 'संयोगे गुरु', शिक्षा, भिक्षा—संयोगे परस्य ह्रस्वस्य लघुसंज्ञा प्राप्नोति, गुरुसंज्ञा च; 'एका संज्ञा' इति वचनाद् गुरु-

पदमञ्जरी

प्रश्नः । 'या परानवकाशा च' इति वचनाद् न्यायाच्च व्यवस्थेति भावः । ननु यद्यारब्धेऽप्यस्मिन् परत्वानवकाशत्वाभ्यामेव व्यवस्था वाच्या, अनारब्धेऽप्यस्मिन् आभ्यामेव व्यवस्था भविष्यति, नार्थ एतेन ? तत्राह—*अन्यत्रेति*। अयम्भावः—यत्र प्रयोजनमेकं भवति, सहानवस्थानलक्षणो वा विरोधः, तत्रैवानवकाशः सावकाशं बाधते, यथा—नैवारश्चरुर्नखावपूतानामिति, नखावपनेन वैतुष्यफलकेन तत्फलकोऽघातो बाध्यते । अष्टाश्रियूपः कर्त्तव्यः, वाजपेयस्य तु चतुरश्र इति, अष्टाश्रित्वचतुरश्रत्वयोर्विरोधात् बाध्यबाधकभावः । विप्रतिषेधोऽपि विरोधात्मकत्वात्तत्रैव भवति । न चासत्यस्मिन् सूत्रे संज्ञानामेतदुभयं भवति, अत एवान्यत्र समावेशो भवति, तद्यथा—कृत्कृत्यप्रत्ययसंज्ञानां तद्धिततद्राजप्रत्ययसंज्ञानां च । सति त्वस्मिन् सूत्रे एकस्यैकैवेति नियमाद्विरोधो जायते, विरोधे च सति परत्वानवकाशत्वाभ्यां व्यवस्था शक्यते वक्तुमिति, तत्रानवकाशाया उदाहरणमाह—*वक्ष्यतीति* । *शिक्षा, भिक्षेति* । 'गुरोश्च हलः' इत्यकारप्रत्ययः । यद्यप्यत्र समावेशेऽपि न कश्चिद्दोषः, तथापि वस्तुतः समावेशो नास्तीत्येतावता इदमुदाहरणम् । सम्प्रति यत्र समावेशे सति दोषः, तद्दर्शयति—*अततक्षदिति* । परस्यास्तूदाहरणम्—धनुषा विध्यतीति, शराणामपायं प्रत्यवधिभूतस्यैव धनुषो

न्यासः

यद्येवम्, अङ्गसंज्ञायां भपदसंज्ञयोः समावेशो वक्तव्यः—बाभ्रव्यः, धानुष्क इति । बभ्रुशब्दात् 'मधुबभ्र्वोर्ब्राह्मणकौशिकयोः' इति यञ् । तत्र भत्वाद् 'ओर्गुणः' अङ्गत्वादादिवृद्धिः, तत्र 'वान्तो यि प्रत्यये' इत्यवादेशः; धनुःशब्दाच्च धनुः प्रहरणमस्य 'तदस्य प्रहरणम्' इति ठक्, 'इसुसुक्तान्तात्कः' इति कादेशः, अत्र पदत्वात् 'इणः षः' इति षत्वम् । अङ्गत्वादादिवृद्धिर्न वक्तव्या । 'वा क्यषः' इत्यतो वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेन क्वचित् संज्ञासमावेशो भविष्यतीति । अन्यत्रेति । लोके च, शास्त्रे च । लोके तावत्—इन्द्रः, शक्रः, पुरन्दर इति संज्ञायाः समावेशो दृष्टः । शास्त्रेऽपि प्रत्ययः, कृत्, कृत्यप्रत्ययः । एवमन्यत्र संज्ञासमावेशादिहापि स्यात्, अत एवैका संज्ञा यथा स्यादिति नियमार्थमेतत् । भिदिरिछदिरिति । लघुसंज्ञाया अवकाशः । प्रयोजनं तु—भेत्ता, छेत्तेति । 'पुगन्तलघूपधस्य' इति गुणः । शिक्षिभिक्षिरिति । गुरुसंज्ञाया अवकाशः । प्रयोजनं तु—शिक्षा, भिक्षेति । 'गुरोश्च हलः' इत्यकारप्रत्ययः । लघुसंज्ञा त्वत्र प्रयोजनाभावान्

संज्ञैव भवति—अततक्षत्, अररक्षत्। 'सन्वल्लघुनि' इत्येष विधिर्न भवति ॥

पदमञ्जरी

व्यधनं प्रति साधकतमत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञापादानसञ्ज्ञां बाधते। तथा 'कांस्यपात्र्यां भुङ्क्ते' इत्यधिकरणसञ्ज्ञा, धनुर्विध्यतीति कर्तृसंज्ञा। उक्तं च—अपादानमुत्तराणीति। इह गार्ग्यो धानुष्क इति अनवकाशाभ्यां भपदसंज्ञाभ्यामङ्गसंज्ञाया धातुप्रत्ययेषु सावकाशाया बाधः प्राप्नोति? ज्ञापकात्सिद्धम्, यदयम् 'सुपि च', बहुवचने झल्येत्', 'तद्धितेष्वचामादेः' इति स्वादिषु तद्धितेषु चाङ्गस्य सतः कार्यं शास्ति, तज् ज्ञापयति—समाविशत्यसंज्ञा भपद संज्ञाभ्यामिति। द्वये हि स्वादयः—यजादयो हलादयश्च; तत्र यजादिषु भसंज्ञा, हलादिषु पदसंज्ञेति अङ्गस्य यतः कार्यविधानमनुपपन्नं स्यात्। गुरुलघुसंज्ञे वर्णमात्रस्य विधीयेते, नदीघिसंज्ञे तु तदन्तस्येति ताभ्यां समाविशतः, तद्यथा—वात्सीबन्धुरिति। 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वं वात्सीबन्धो इति 'गुरोरनृतः' इति प्लुतश्च भवति। विश्च ना च विनरौ, 'द्वन्द्वे घि' इति पूर्वनिपातः, विनरोर्भावो वैनरम् 'इगन्ताच्च लघुपूर्वात्' इत्यण्, विनरावचष्टे इति विनयति, प्रविनय्य गतः 'ल्यपि लघुपूर्वात्' इत्ययादेशो भवति।

*भाष्ये* त्विष्टविषये समावेशो न्यासान्तरेण साधितः—प्राक्कडारात् परं कार्यमिति। तत्रायमर्थः—प्राक्कडारात् संज्ञाख्यं कार्यं परं भवतीति संज्ञाप्रकरणात् संज्ञैवात्र कार्यमित्युच्यते, परा संज्ञेत्येव तु नोक्तम्, 'विप्रतिषेधे वा' इति वक्ष्यति, तत्र परं कार्यमित्यनुवृत्तिर्यथा स्यादिति तत्र यस्याः संज्ञायाः परस्याः पूर्वयाऽनकाशया बाधः प्राप्तः, सा परा भवतीति विधिरूपेणास्य प्रवृत्तिः। नन्वनकाशयापि

न्यासः

भवति। इहोभयं प्राप्नोति—अततक्षत्, अररक्षदिति। परत्वाद् गुरुसंज्ञैव भवति। 'तक्षू त्वक्षू तनूकरणे', 'रक्ष पालने', हेतुमण्णिच्, लुङ्, च्लेश्चङ्, णिलोपः, 'चङि' इति द्विर्वचनम्। यद्यत्र लघुसंज्ञा स्यात्, 'सन्वल्लघुनि' इत्यादिना सन्वद्भावादित्वं स्यात्। तदभावान्न भवतीत्याह—सन्वल्लघुनीत्यादि। एष विधिरिति। सन्वद्भावविधिः। परस्या इदमुदाहरणमुक्तम्। अनवकाशायास्तूच्यते—अयन्ते योनिर्ऋत्विय इति। ऋतुः प्राप्तोऽस्येति 'ऋतोरण्' 'छन्दसि घस्' इति घस्, तस्येयादेशे कृते 'सिति च' इति पदसंज्ञा प्राप्नोति, 'यचि भम्' इति भसंज्ञा च, अनवकाशत्वात् पदसंज्ञैव भवति। यदि भसंज्ञा स्यात् तदा 'ओर्गुणः' इति गुणः स्यात्। भसंज्ञायास्त्वौपगवादिष्ववकाशः। आ कडारादितीयतोऽवधेर्ग्रहणं वैचित्र्यार्थम्; अन्यथा हि 'आ द्वन्द्वात्' इत्येवं ब्रूयात्। न हि द्वन्द्वसंशब्दनात् परेणाकडारादेकसंज्ञाविधानस्य प्रयोजनमस्ति; यत एतावतोऽवधेर्ग्रहणमर्थवद् भवति।

## विप्रतिषेधे परं कार्यम् ॥ २ ॥

(तुल्यबल) विरोधः = विप्रतिषेधः । यत्र द्वौ प्रसङ्गावन्यार्थावेक-

पदमञ्जरी

पूर्वया नैव परस्या बाधः प्राप्नोति; विरोधाभावात्, फलैक्याभावाच्च, संज्ञानामन्यत्र समावेशस्य दृष्टत्वात्, सत्यम्; एतदेव ज्ञापयति— भवत्यत्र प्रकरणे संज्ञानां बाध्यबाधकभाव इति । तेन परयानवकाशया पूर्वा बाध्यते, द्वयोश्च सावकाशयोर्विप्रतिषेधे परमिति परैव भवतीति । नियमफलस्यापि सिद्धिरस्ति न्यासेऽङ्गसंज्ञा परा कार्या, पूर्वे न भपदसंज्ञे । एवं सर्वत्र यत्र समावेश इष्टोऽस्मिन्पक्षे— 'ऋतोरण्', 'छन्दसि घस्', ऋत्विय इति, अत्र 'सिति च' इति —पदसंज्ञाविषये परं कार्यमिति वचनाद् भसंज्ञापि स्यात् । ततश्च 'ओर्गुणः' प्राप्नोति, सित्करणं पदत्वे सति अवग्रहार्थं स्यात् । 'शेषो बहुव्रीहिः' इत्यत्र च शेषग्रहणं कर्त्तव्यम्, अन्यथा 'अन्यपदार्थे च संज्ञायाम्' इति अव्ययीभावविषये परं कार्यमिति वचनाद् बहुव्रीहिसंज्ञापि स्याद् । एकसंज्ञाधिकारे त्वव्ययीभावसंज्ञैव बाधिकेति शेषग्रहणमनर्थकम् । तदेवं शेषग्रहणमेव प्रमाणम्—न्यासान्तरमपि सूत्रकारस्याभिमतमिति ॥

*विप्रतिषेधे परं कार्यम्* ॥ *विप्रतिषेध इति* । 'षिधु शास्त्रे', 'षिधु गत्याम्' इति भौवादिकयोरन्यतरस्य रूपम्, तस्य हि 'सेधसिचसञ्जस्वञ्जाम्' इति षत्वमिति । उपसर्गवशाच्च विरोधार्थत्वम् । धातूनां ह्युपसर्गवशादन्यश्चार्थ उपजायते, तद्यथा—प्रहारः, उपहारः, अनुहारः, संहार इति । 'षिधू संराद्धौ' इत्यस्य तु दैवादिकस्य षत्वं नास्ति, 'सेधषिच' इति शपा निर्देशात् । 'आदेशप्रत्यययोः' इति विहितस्य तु 'सात्पदाद्योः' इति निषेधः । ननु 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति वचनान्नायं सकारः पदादिः । षत्वविषये परिभाषेयं न भवति, यदि स्याद्, गोष्ठः, भूमिष्ठ इत्यादौ सकारस्यापदादित्वात् 'आदेशप्रत्यययोः' इत्येव षत्वसिद्धेरम्बादौ गवादिग्रहणमनर्थकं स्यात् ।

परशब्दोऽयं त्रिलिङ्गः—परो देशः, परा सेना, परं कार्यमिति । अतोऽयमव्युत्पन्नः, पचाद्यजन्तो वा, न तु 'ऋदोरप्' इत्यबन्तः, तथा हि सति त्रिलिङ्गता न स्यात् ॥

कृल्ल्युट् नपुंसके भावे स्त्रियां क्तिन्नादयो यतः ।
अतो घञाद्याः पुंस्येव यथा पाकश्चयो लवः ॥

न्यासः

**विप्रतिषेधे परं कार्यम्** ॥ विरोधो विप्रतिषेध इति । विप्रतिषेधशब्दस्य लोके विरोधवाचित्वेन प्रसिद्धत्वात् । तथा हि—विरुद्धेऽभिहिते वक्तारो वदन्ति—'विप्रतिषिद्धमिदमुच्यते' इति, विरुद्धमिति गम्यते । तस्य विप्रतिषेधस्य विषयं दर्शयितुमाह—

स्मिन्युगपत्प्राप्नुतः, स तुल्यबलविरोधो विप्रतिषेधः। तस्मिन्विप्रतिषेधे परं कार्यं भवति।

उत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गेषु तुल्यबलता नास्तीति

पदमञ्जरी

वासरूपविधिर्नास्ति, कृल्ल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्तीति वचनात्। स्त्रियामपि नास्ति, 'अस्त्रियाम्' इति प्रतिषेधात्। अतो भावघञादयः पुंस्येव। कर्तृवर्जिते तु कारके पुंनपुंसकयोः, न कथञ्चित् स्त्रियाम्। *परं कार्यमिति*। परं यत्कार्यमेत्त्वादि तद्भवतीत्यर्थः, अथ वा—यत्परं तत्कार्यं भवति, कर्तव्यं भवतीत्यर्थः।

अन्ये त्वाहुः—न क्रियापदत्वेन कार्यशब्दस्यान्वयः, नापि परं कार्यं भवति, न तु शास्त्रमित्येवं शास्त्रादिव्यावृत्तये कार्यशब्दः, किं तर्हि? यत्कार्यं कृत्यर्हं परं तद्भवतीति वचनव्यक्तिः। अर्हे कृत्यप्रत्ययः, किं सिद्धं भवति? तुल्यबलविरोध इति सिद्धं भवति। न ह्यपवादादीनां सन्निधावुत्सर्गादीनां कृत्यर्हत्वम्, तैर्बाधितत्वादिति। *विरोधो विप्रतिषेध इति*। तद्वाचित्वेनैव लोके प्रसिद्धत्वाद् विप्रतिषिद्धमित्युक्ते विरुद्धमिति गम्यते, तस्य विषयं दर्शयति—*यत्रेत्यादि*। यत्र विषये, वृक्षेभ्य इत्यादौ। *अन्यार्थौ*। जातिपदार्थपक्षे—अन्यत्र वृक्षाभ्याम्, वृक्षेष्वित्यादौ चरितार्थावित्यर्थः। व्यक्तिपक्षे तु तद्विषययोः = विध्योरन्यत्र चरितार्थत्वासम्भवाद् अन्योऽर्थः प्रयोजनमनयोस्तावन्यार्थौ। *द्वौ प्रसङ्गौ* = द्वे कार्ये दीर्घत्वेत्त्वादिके *युगपत्प्राप्नुतः*। *स विप्रतिषेधः*, विप्रतिषेधस्य विषय इत्यर्थः, तुल्यबलयोर्विरोधो यस्मिन् स तथोक्तः। *परं कार्यं भवतीति*। यत्कार्यं कृत्यर्हं परं तद्भवतीत्यर्थः।

तुल्यबलविरोध इत्यस्य व्यावर्त्यं दर्शयति—*उत्सर्गापवादेत्यादि*। तत्र 'श्याद्व्यध'

न्यासः

यत्रेत्यादि। प्रसज्येते विधीयेते इति प्रसङ्गौ=विधी। अन्यार्थावित्ति। अन्यत्र विषयेऽर्थः=प्रयोजनं ययोस्तौ तथोक्तौ। अन्यत्र विषयान्तरे कृतार्थावित्यर्थः। एकस्मिन्निति अभिन्ने। युगपद् = एककालम्। स इत्यस्य विप्रतिषेध इत्यनेन सम्बन्धः। स विप्रतिषेधो विप्रतिषिद्धः, विप्रतिषेधस्य विषय इत्यर्थः। विप्रतिषेधविषयत्वाद्विप्रतिषेधविषयो ह्यत्र विप्रतिषेधशब्देनोक्तो विषयिणा विषयं दर्शयितुम्। यस्मान्न प्रसङ्गो विप्रतिषेध उपपद्यते, नापि तदाधारः। तुल्यबलविरोध इति। तुल्यबलयोर्विरोधोऽस्मिन्निति बहुव्रीहिः। इदं जातिपक्षमाश्रित्य विवरणं कृतम्। द्रव्यपदार्थपक्षे त्वयं विशेषः—अन्यः = भिन्नोऽर्थः = प्रयोजनं ययोस्तावन्यार्थाविति। शेषं समानम्। 'विप्रतिषेधे' इति च सती सप्तमीयम्।

उत्सर्गापवाद इत्यादि। विप्रतिषेधो यत्रास्ति, सोऽस्य योगस्यावकाशः। विप्र-

पदमञ्जरी

इत्याकारान्तलक्षणो णप्रत्यय उत्सर्गः, तं परमप्यनुपसर्गे सावकाशं बाधित्वा-ऽनवकाशत्वात् 'आतश्चोपसर्गे' इति क एव भवति—सुग्लः, सुम्लः। रधेर्णिचि 'रधिजभोरचि' इति नुम् कृताकृतप्रसङ्गित्वान्नित्यः, 'अत उपधायाः' इति वृद्धिरनित्या, नुमि कृतेऽकारस्यानुपधात्वादप्राप्तेः। तत्र पूर्वोऽपि नुमेव भवति—रन्धयतीति। अशिश्रियद्, अदुद्रुवद् इत्यात्रान्तर्भूतचङपेक्षत्वाद् इयङुवङावन्तरङ्गौ बहिरङ्गं लघूपधगुणं परमपि बाधेते, अपवादादीनां तु परस्परसंप्रधारणायां नित्यादप्यन्तरङ्गम्, तस्मादपवादः। उक्तं च—

परं विदुः पूर्वपरोपपत्तौ परस्य नित्यस्य च नित्यमेव।
नित्यान्तरङ्गोपगमेऽन्तरङ्गं तस्माद्विधिः प्रातिपदो बलीयान्॥ इति।

द्वयोरेकत्रोपनिपातः=उपपत्तिः, परस्य नित्यस्य चेति। अत्र उप-समस्त-मप्युपपत्तावित्येतदनुषज्यते। प्रतिपदं भवः प्रातिपदः=अपवादः, अप्रवृत्तावित्या-द्याकृतौ पदार्थे द्वयोरप्यन्यत्र कृतार्थत्वाद्विप्रतिषेधे सति परस्परप्रतिबन्धाद-प्रवृत्तिरेव प्राप्नोति, तद्यथा—यो हि द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति; यदा तमुभौ युगपत्प्रेषयतो नाना दिक्षु च कार्ये भवतस्तदा यद्यसावविरोधार्थो भवति उभयोर्न करोति, तत्र विध्यर्थ-मिदं परं भवतीति तस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तदपि भवत्येव।

न्यासः

तिषेधश्च तुल्यबलयोरेव भवतीति नातुल्यबलयोः। एतत् तु 'यत्र हि प्रसङ्गावन्यार्थौ' इत्यादेग्रन्थेन तस्य विषयं दर्शयता व्याख्यातम्। न चोत्सर्गापवादादिषु तुल्यबल-तास्तीति, नतो नासावुत्सर्गापवादादिरस्य योगस्य विषयः। तेन बलवानेव तत्र भवति; तत्र सामान्येनोत्सर्गः प्रवर्त्तते, यथा—'आर्धधातुकस्येड् वलादेः' इति, वलादिसामान्यस्येड्विधानात्। विशेषोऽपवादः, यथा—'नेड् वशि कृति' इती-ट्प्रतिषेधस्य बलादिविशेषे वशादौ कृति विधानात्। यस्य च विशेषे विधिः, स बलवान् भवति; तथा हि—ब्राह्मणेभ्यो दधि दीयताम्, तक्रं कौण्डिन्यायेति विशेष-विहितं तक्रदानं सामान्यविहितस्य,दधिदानस्यैव बाधकं भविष्यति। तस्माद् वशादौ कृति परेऽपीडागमो न भवति, प्रतिषेध एव भवति—'स्थेशभासपिसकसो वरच्', ईश्वर इति।

नित्यानित्ययोर्नित्यं बलवत्, यथा—भिस ऐसित्यैस्त्वम्। तद्धि 'बहुवचने झल्येत्' इत्येत्त्वे कृते प्राप्नोति, अकृतेऽपि—भूतपूर्वगत्याश्रयणादकारान्तादङ्गाद्भिस एस् विहित इति कृत्वा। यश्च कृताकृतप्रसङ्गी विधिः, स नित्य इति। तथा च तत्र वक्ष्यति—

नायमस्य योगस्य विषयः, बलवतैव तत्र भवितव्यम्। अप्रवृत्तौ, पर्यायेण वा प्रवृत्तौ प्राप्तायां वचनमारभ्यते। 'अतो दीर्घो यञि' 'सुपि च' इत्यस्यावकाशः—वृक्षाभ्याम्, प्लक्षाभ्याम्; 'बहुवचने झल्येत्' इत्यस्यावकाशः—वृक्षेषु, प्लक्षेषु; इहोभयं प्राप्नोति—वृक्षेभ्यः, प्लक्षेभ्यः इति। परं भवति विप्रतिषेधेन ॥

पदमञ्जरी

यथा—भिन्धकीति, भिन्द् हि इति स्थिते परत्वाद्धिभावे पुनः प्रसङ्गविज्ञानादकज् भवति। व्यक्तौ तु पदार्थे सर्वव्यक्त्युद्देशेन शास्त्रस्य प्रवृत्तेस्तद्विषयोपनिपातिनोऽन्यत्र चरितार्थत्वाभावात्पर्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदम्—विप्रतिषेधे परमेव भवति, न पूर्वमिति। एतत्सूत्रारम्भाच्च पूर्वस्य लक्षणस्य तत्रानारम्भोऽनुमीयते, तदुच्यते—'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति। तद्यथा—जुहुतात् त्वमिति परत्वात्तातङादेशे कृते स्थानिवद्भावेन प्राप्तं धित्वं न भवति। लक्ष्यानुरोधेन व्यक्त्याकृतिपदार्थाश्रयणादनयोः परिभाषयोर्विषयविभागोऽवसेयः ॥

न्यासः

एत्त्वं भिसि परत्वाच्चेदत ऐस् क्व भविष्यति।
कृतेऽप्येत्त्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

इति स नित्यः। ऐस्त्वे कृत एत्त्वं न प्राप्नोति; निमित्तस्य झलादेर्विहतत्वात्। वृक्षेष्वित्यादावेत्त्वस्यावकाशः, अस्मिंश्च सति भूतपूर्वगत्याश्रयणस्यायुक्तत्वात्। तस्मात् तदनित्यम्। यच्चानित्यं तत् परस्य भावाभावमपेक्षत इति दुर्बलम्। विपर्ययात् तु नित्यं बलवत्। तेन वृक्षैरिति परमप्येत्त्वं न भवति, ऐस्भाव एव तु भवति।

अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति लोकत एव दृष्टत्वात्। लोको हि प्रातरुत्थायान्तरङ्गाणि—मुखप्रक्षालनादीनि कार्याणि करोति, पश्चाद्बहिरङ्गाणि—राजगृहगमनादीनि कार्याणि कर्तुमारभते। शास्त्रेऽप्येवं वेदितव्यम्। दिवि कामोऽस्य द्युकामः, तस्यापत्यम् 'अत इञ्' द्यौकामिः। यद्यपि द्युकामशब्दादिञ् विहितः, तथापि 'अकृतव्यूहाः पाणिनीयाः' कृतमपि शास्त्रं निवर्त्तयन्तीति प्रविभज्यान्वाख्याने दिव् काम इञिति स्थिते 'दिव उद्' इत्युत्त्वे कृते यणादेशः प्राप्नोति, 'तद्धितेष्वचामादेः' इति परत्वाद् वृद्धिः प्राप्नोतु? अन्तरङ्गत्वाद् यणादेशः पूर्वो विधिः क्रियते, पश्चाद् वृद्धिरुकारस्य। अन्तरङ्गत्वन्तु यणादेशस्य, वर्णाश्रयत्वात्। वृद्धेस्तु बाह्यतद्धिताश्रयाद् बहिरङ्गत्वम्। 'वार्णादाङ्गं बलीयः' इत्येतदिह न प्रवर्तते, व्याश्रयत्वात्।

अप्रवृत्तावित्यादि। यदा 'आकृतिः पदार्थः' इत्येष पक्षः, तदान्यत्र कृतार्थत्वा-

## यू स्त्र्याख्यौ नदी ॥ ३ ॥

ई च ऊ च = यू । अविभक्तिको निर्देशः । स्त्रियमाचक्षाते

### पदमञ्जरी

यू स्त्र्याख्यौ नदी ॥ अत्र ह्रस्वयोरिदुतोर्ग्रहणे यद्यपि सवर्णग्रहणाद्दीर्घयोरपि संज्ञा लभ्यते, ह्रस्वयोरपि तु स्यात्; ततश्च हे शकटे, हे धेनो अत्रापि प्राप्नोति; इह च शकटिबन्धुः—'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वं प्रसज्यते; इह च बहुशकटिः बहुधेनुरिति—नद्यृतश्च' इति नित्यः कप्स्यात्, नैष दोषः, 'ङिति ह्रस्वश्च' इत्येतन्नियमार्थं भविष्यति—ङित्येव ह्रस्वौ नदीसंज्ञौ भवतः, नान्यत्रेति । कैमर्थ्यान्नियमो भवति विधेयं नास्तीति कृत्वा, इह चास्ति विधेयम्, किम् ? नित्या नदीसंज्ञा प्राप्नोति, सा विभाषा विधेया, अतो ह्रस्वयोरपि स्यादेवेति दोषं दृष्ट्वा दीर्घयोर्ग्रहणमिति दर्शयति—ई च ऊ च यू इति । समासविधौ सुबधिकारान्नेतद् द्वन्द्वस्य विग्रहवाक्यम्, किं तर्हि ? अर्थप्रदर्शनम् । अत्र चानुकार्यानुकरणयोरभेदविवक्षया विभक्तिर्न कृता । क्वचित्तु विभक्त्यन्तमेव पठ्यते । ननु दीर्घयोर्ग्रहणे 'यू' इति निर्देशो नोपपद्यते, 'दीर्घाज्जसि च' इति पूर्वसवर्णप्रतिषेधाद्, अत आह—*अविभक्तिकोऽयं निर्देश इति* । 'सुपां सुलुक्' इति लुप्तत्वाद् 'वा छन्दसि' इति पूर्वसवर्णेनापहृतत्वाद्वा नास्मिन् विभक्तिः श्रूयते इत्यविभक्तिकः ।

अन्ये तु नेवायं द्वन्द्वः, किन्तु पृथक् पदे इत्युक्तमित्याहुः । अविभक्तिकत्वं चानुकार्यानुकरणयोरभेदविवक्षया । *स्त्रियमाचक्षाते स्त्र्याख्याविति* । ननु स्त्र्याख्या

### न्यासः

च्छास्त्रयोर्विप्रतिषेधे इति परस्परप्रतिबन्धादप्रवृत्तिरेव प्राप्नोति, यथा—यदिह द्वयोस्तुल्यबलयोरेकः प्रेष्यो भवति, तौ च युगपत् प्रेषयतः, नाना दिक्षु च तयोः कार्ये भवतः । ततो यद्यसावविरोधार्थी भवति तदोभयोरपि कार्ये न प्रवर्त्तते । द्रव्ये पदार्थे तु प्रतिव्यक्ति लक्षणं प्रवर्त्तत इत्यकृतार्थत्वाल्लक्षणयोः पर्यायेण प्रवृत्तिः प्राप्नोति, यथा—ब्राह्मणक्षत्रियादीनामसहभुजामेकस्मिन् भाजने भुजक्रियायां पर्यायः स्यात् । तत्र जातौ पदार्थे कृतार्थत्वाद् वृत्तौ प्राप्तायां विध्यर्थमिदमारभ्यते—विप्रतिषेधे सति परं कार्यं भवतीति । तत्र कृते यदि पूर्वमपि प्राप्नोति, तदपि भवत्येव । तत्रेदमुच्यते—पुनः प्रसङ्गविज्ञानात् सिद्धमिति । व्यक्तौ तु पदार्थेऽकृतार्थत्वात् शास्त्रयोः पर्यायेण प्रवृत्तौ प्राप्तायां नियमार्थमिदम्—विप्रतिषेधे परमेव भवति, न पूर्वमिति । तत्रेदमुच्यते—सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेवेति ।

यू स्त्र्याख्यौ नदी ॥ ई च ऊ यू इति । ननु च 'दीर्घाज्जसि च' इति प्रथमयोः पूर्वसवर्णदीर्घत्वे प्रतिषिद्धे यणादेशे सति य्वाविति भवितव्यम्, तत् कथं 'यू' इति

स्त्र्याख्यौ । मूलविभुजादिदर्शनात्कप्रत्ययः । ईकारान्तमूकारान्तं च

पदमञ्जरी

इति प्राप्नोति, 'अनुपसर्गे' इति को विधीयते, यस्तु 'आतश्चोपसर्गे' इति कः, अयमकर्मोपपदे चरितार्थः, कर्मणि त्वणा बाध्यते, यथा वक्ष्यति—अकारादनुपपदात् कर्मोपपदे विप्रतिषेधेनेति तत्राह—*मूलविभुजादिषु दर्शनादिति* । एवं च कृत्वा इदमपि सिद्धं भवति—

यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ।
ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति ॥ इति ।

इह ईदूतोरेवेयं संज्ञा विधीयेत ? तदन्तस्य वा ? आद्ये पक्षे कृत् स्त्रियां न स्याद्—आंध्यै, ब्राह्मण्यै, हे लक्ष्मि, हे यवाग्विति; समुदायो ह्यत्र स्त्र्याख्यः, न त्वीदून्मात्रम्; ङ्यूङोरेव तु स्यात्, स्त्रियां विधानादन्वयव्यतिरेकाभ्यां च स्त्र्याख्यत्वादिति द्वितीयं पक्षमाश्रित्याह—*ईकारान्तमित्यादि* । वर्णग्रहणे सर्वत्र तदन्तविधिरिति तदन्तविधिलाभः, 'सुप्तिङन्तम्' इत्यत्र सुप्तिङोः प्रत्ययत्वादन्यत्रापि प्रत्ययग्रहणेषु तदन्तविधिर्निवारितः । कथं पुनर्ज्ञायते-वर्णयोरेवेदं ग्रहणं न प्रत्ययोरिति, इयङुवङ्स्थानप्रतिषेधात् । यदि तदन्तस्य संज्ञा, कथं वक्ष्यति – शीनद्योः परतः नद्यन्तादङ्गादुत्तरस्य' इति ? समुदायस्य नदीत्वात्तदवयवभूतावीदूतावपि तथोक्तौ ।

अन्ये त्वाहुः—वर्णयोरेव संज्ञा, समुदायधर्मस्य स्त्रीत्वस्यावयव आरोपात् । कृत् स्त्रियामपि भवति, अत्र च लिङ्गम्—इयङुवङ्स्थानप्रतिषेध इति; तेषां गुरुनदीसंज्ञयोः समावेशो न स्याद्, एकविषयत्वात् ।

न्यासः

निर्देश इत्यत आह—अविभक्तिकोऽयं निर्देश इति । 'सुपां सुलुक्' इति विभक्तेर्लुप्तत्वात् । नास्माद्विभक्तिर्विद्यत इत्यविभक्तिकः । स्त्रियमाचक्षाते स्त्र्याख्याविति । ननु च 'कर्मण्यण्' इत्यणि कृते 'आतो युक् चिण्कृतोः' इति युकि च स्त्र्याख्यायाविति भवितव्यम्, तत् कथं स्त्र्याख्याविति ? 'आतोऽनुपसर्गे कः' इति कप्रत्यये कृत एतद्रूपमिति चेत्, न; चक्षिङोऽत्र सोपसर्गत्वादित्यत आह—मूलविभुजादिदर्शनादिति । मूलविभुजादिष्वपि कप्रत्यय इष्यते । तथा च वक्ष्यति तृतीयेऽध्याये ३।२।५ गे—'मूलविभुजादिभ्य उपसंख्यानम्' इति । तेन 'स्त्र्याख्यौ' इति शब्दस्य मूलविभुजादिषु दर्शनात् कप्रत्ययः ।

इहेदूतोरेवेयं संज्ञा विधीयते ? तदन्तयोर्वा ? तत्र यद्याद्यः पक्ष आश्रीयेत, कृत्स्त्रियां न स्यात्—हे लक्ष्मि, हे यवाग्विति; समुदायौ ह्यत्र स्त्र्याख्यौ, न त्वीदूताविति । इममाद्ये पक्षे दोषं दृष्ट्वा द्वितीयं पक्षमाश्रित्याह—ईकारान्तमूकारान्तमित्यादि । ननु न 'सुप्तिङन्तं पदम्' इत्यत्रान्तग्रहणादन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्न लभ्यते,

स्त्र्याख्यं शब्दरूपं नदीसंज्ञं भवति। ईकारान्तम्—कुमारी, गौरी, लक्ष्मीः, शार्ङ्गरवी। ऊकारान्तम्—ब्रह्मबन्धूः, यवागूः।

यू इति किम्? मात्रे, दुहित्रे। स्त्र्याख्याविति किम्? ग्रामणीः, सेनानीः, खलपूः। आख्याग्रहणं किम्? शब्दार्थे स्त्रीत्व एव यथा स्यात्, पदान्तराख्ये मा भूत्—ग्रामण्ये स्त्रियै, खलप्वे स्त्रियै।

नदीप्रदेशाः—'आण्नद्याः' इत्येवमादयः॥

पदमञ्जरी

यू *इति किमिति*। 'ङेराम्नद्याम्नीभ्यः' इत्यत्र पृथगाब्ग्रहणाद् आपो न भविष्यतीति मन्यते। *मात्रे दुहित्रे इति* 'नद्यृतश्च' इति ऋकारग्रहणमस्त्र्यर्थं स्याद्। बहुपितृक इत्यत्रेत्यज्ञापकम् ऋकारान्तानां संज्ञाभावस्य। *ग्रामणीः खलपूरिति*। रूपोदाहरणमेतत्सम्बुद्ध्यन्तं वा द्रष्टव्यम्। अथाख्यग्रहणं किमर्थम्, यावता यू स्त्रियामित्येतावता स्त्र्यर्थवृत्तित्वं लभ्यते, तत्राह—*आख्याग्रहणमिति*। आङ्पूर्वस्य 'ख्या' इत्यस्य धातोर्ग्रहणमित्यर्थः। क्वचित्तु आख्यग्रहणं किमिति प्रश्नः। *शब्दार्थस्त्रीत्व इति* आख्याग्रहणसामर्थ्यात्पदान्तरमनपेक्ष्य यौ स्वयमेव

न्यासः

नैष दोषः; यदयम् 'नेयङुवङ्स्थानौ' इति प्रतिषेधं शास्ति, तज्ज्ञापयति—भवतीह प्रकरणे तदन्तविधिरिति; अन्यथा प्रतिषेधोऽनर्थकः स्यात्। न हीकारोकारमात्रं स्त्र्या-ख्यमियङुवङ्स्थानमस्ति, किं तर्हि? तदन्तम्। कुमारीति। 'वयसि प्रथमे' इति ङीप्। गौरीति। 'षिद्गौरादिभ्यश्च' इति ङीष्। शार्ङ्गरवीति। 'शार्ङ्गरवाद्यञो ङीन्'। लक्ष्मीरिति। 'लक्ष दर्शनाङ्कयोः', 'अवितॄस्तृतन्त्रिभ्य ईः' इत्यनुवर्त्तमाने 'लक्षेर्मुट् च', मकारादीकारश्च। ब्रह्मबन्धूरिति। 'ऊङुतः' इत्यूङ्प्रत्ययः। ङकारः 'नोङ्धात्वोः' इति विशेषणार्थः। यवागूरिति। 'यु मिश्रणे', 'स्यूवचिभ्योऽन्युजागूजक्नुच्' इत्यागूच् प्रत्ययः। रूपोदाहरणान्येतानि। कार्यं तु 'अम्बार्थनद्योर्ह्रस्वः' इत्येवमादिः।

मात्रे, दुहित्रे इत्यत्र नदीसंज्ञाया अभावाद् 'आण् नद्याः' इत्याण् न भवति। ग्रामणीः, खलपूरिति। पुंस्येतौ वर्तेते; तेन नदीसंज्ञाया अभावाद् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो न भवति। ग्रामं नयतीति 'सत्सूद्विष' इत्यादिना क्विप्। 'अग्रग्रामाभ्यां च' इति णत्वम्। खलं पुनातीति 'अन्येभ्योऽपि दृश्यते' इति क्विप्। ग्रामण्ये, स्त्रियै इति। 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः। खलप्वे स्त्रियै। अत्रापि 'ओः सुपि' इति। अत्र स्त्रीशब्देन पदान्तरेण स्त्रीत्वं द्योत्यत इति नदीसंज्ञा न भवति, तेनाण्न भवति। इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति भवत्येव नदीसंज्ञा—इष्वै, अशन्या इति। यदि पदान्तरद्योत्ये स्त्रीत्वे नदीसंज्ञा न भवति, इह पट्वै स्त्रिया इति

पदमञ्जरी

स्त्रियमाचक्षाते इत्याश्रीयते। इष्वशनिप्रभृतीनां तूभयलिङ्गानां शब्दार्थ एव स्त्रीत्वमिति 'ङिति ह्रस्वश्च' इति नदीसंज्ञा भवत्येव। एवं पटुप्रभृतीनां गुणशब्दानामपि शब्दार्थ एव स्त्रीत्वम्। तथा च पटुरानीयतामित्युक्ते स्त्रियमप्यानीय कृतीभवति।

अन्ये त्वाहुः—आख्याग्रहणसामर्थ्यान्नियम आश्रीयते—स्त्रियमेव यावाचक्षाते न तु लिङ्गान्तरयुक्तम् इति। ग्रामणीखलपूशब्दयोस्तु क्रियाशब्दत्वेन त्रिलिङ्गत्वान्न भवति। इष्विशनिप्रभृतीनां तु स्त्रीविषयत्वाभावेऽपि 'ङिति ह्रस्वश्च' इत्यत्र केवलस्य स्त्रीशब्दस्यैवानुवृत्तिर्नाख्याग्रहणस्येति भवतीति तेषामाङ्पूर्वस्य ध्यायतेः क्विपि सम्प्रसारणे—आध्यै ब्राह्मण्यै इत्यत्रापि न स्यात्। तस्मात्पूर्व एव प्रकार आश्रयणीयः।

कथं तर्हि प्रत्युदाहरणम्—ग्रामण्ये स्त्रियै इति, खलप्वे स्त्रियै इति ? उच्यते; क्रियाशब्दत्वेऽप्येतयोः पुंसि मुख्या वृत्तिः, पुंसामेव ह्ययमुचितो धर्मो यदुत ग्रामनयनं नाम। एवं खलपवनमपि। आध्यानं तु स्त्रीपुंससाधारणमिति विशेषः।

'प्रथमलिङ्गग्रहणं च प्रयोजनं क्विब्लुप्समासाः,' यः शब्दः प्रथमस्त्रीत्वयुक्तद्रव्यमभिधाय पश्चात्तेन केनचित्प्रकारान्तरेण लिङ्गान्तरसंयुक्तं द्रव्यान्तरमाह, तस्य तदानीमस्त्र्याख्यत्वादप्राप्ता संज्ञा विधीयते। क्विप्—कुमारीमिच्छति कुमारीयति, कुमारीयतेः क्विप्, कुमारी ब्राह्मणः, तस्मै कुमार्यै ब्राह्मणाय। लुप्—'लुम्मनुष्ये' इति लुप्, खरकुट्यै ब्राह्मणाय। यद्यप्यत्र युक्तवद्भावात् स्त्रीत्वमप्यस्ति, तथापि स्वाश्रयस्य पुंस्त्वस्यानिवृत्तेर्नायं स्त्रियामेव वर्तत इत्याख्याग्रहणादप्राप्तिः। समासः—अतितन्त्र्यै ब्राह्मणाय। अवयवस्त्रीविषयत्वात् सिद्धम्, समासे तावदवयवस्तन्त्रीशब्दः स्त्रियामेव वर्तत इति तदानीमेव संज्ञा, ततश्च वर्णसंज्ञापक्षे समुदायस्य नद्यन्तत्वात् कार्यसिद्धिः; तदन्तपक्षे तु 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनाद् अतितन्त्रीबन्धुरित्यत्रापि 'नदी बन्धुनि' इति स्वरः सिद्धः; नद्या पूर्वपदस्य विशेषणात्, क्विब्लुपोरपि पूर्वं स्त्रियामेव वर्तित्वात्, पश्चादपि तदपरित्यागेनार्थान्तरे वृत्तिः। तत्रार्थान्तरसंसर्गात्प्रागेवान्तरङ्गत्वात्प्रवृत्ता संज्ञा सत्यपि पश्चाल्लिङ्गान्तरयोगे तस्य च बहिरङ्गत्वान्न निवर्तिष्यते। यद्येवम्, इयङुवङ्स्थानप्रतिषेधे यण्स्थानप्रतिषेधप्रसङ्गः; अवयवयोरियङुवङ्स्थानत्वाद्। यथा ह्यवयवस्य स्त्रीविषयत्वात्समुदायस्य संज्ञा भवति, तथावयवस्येयुवस्थानत्वात् समुदायस्य यण्स्थानस्यापि प्रतिषेधप्रसङ्गः, यथा—धियौ, आध्याविति ? सिद्धं त्वङ्गरूपग्रहणाद्, यस्याङ्गस्येयुवौ तत्प्रतिषेधादङ्गस्येयङुवङ्विधानसमर्थ्यादङ्गस्याक्षेपः, तेन यस्याङ्गस्येयङुवङौ निर्वर्त्तेते तस्य नदीसंज्ञा निषेधः। आध्यै इत्यत्र त्ववयवस्याङ्गत्वं नास्ति, अङ्गस्य 'एरनेकाच' इति यण्विधानाद् इयङुवङ्स्थानता नास्तीति निषेधाभावः। एतदर्थमेव

## नेयङुवङ्स्थानावस्त्री ॥ ४ ॥

पूर्वेणातिप्रसक्ता नदीसंज्ञा प्रतिषिध्यते । स्थितिः = स्थानम् । इयङुवङोः स्थानमनयोरितीयङुवङ्स्थानौ यौ यू, तौ नदीसंज्ञौ न भवतः, स्त्रीशब्दं वर्जयित्वा । हे श्रीः । हे भ्रूः ।

अस्त्रीति किम् ? हे स्त्रि ॥

पदमञ्जरी

तत्र स्थानग्रहणम्—इयङुवङोर्यदा स्थितिस्तदा प्रतिषेधो यथा स्याद्, यदा त्वपवादेन बाधस्तदा मा भूदिति । एवं 'ङिति ह्रस्वश्च' इत्यत्राप्यङ्गस्याक्षेपात् सोऽपि विधिरङ्गस्यैव स्त्रीत्वे भवति, नावयवस्य—शकट्यै, अतिशकटये ब्राह्मणाय; श्रियै, अतिश्रिये ब्राह्मणाय ॥

नेयङुवङ्स्थानावस्त्री ॥ *इयङुवङोः स्थानमनयोरिति* । वैयधिकरण्येऽपि गमकत्वाद्बहुव्रीहिः । अन्ये त्वधिकरणे ल्युटं विधाय कर्तरि षष्ठ्याः समासं कुर्वन्ति । अथ कथम् 'विमानना सुभ्रु कुतः पितुर्गृहे' इति ? प्रमाद एवायम् । अन्ये त्वाहुः—अनित्योऽयं प्रतिषेधः, सकृद्बद्धत्वात् । तथा च परिभाषा—'सकृद्बद्धमनित्यं द्विर्बद्धञ्च सुबद्धम्' इति । अत्र च ज्ञापकं तदो दावचनमित्याहुः ॥

न्यासः

पटुशब्दस्य पुरुषेऽपि दृष्टत्वात् पदान्तरद्योत्यमत्र स्त्रीत्वमिति नदीसंज्ञा न स्यात्, नैतदस्ति; पदान्तरं हि द्विविधम्-क्वचित् सामान्येन प्रवृत्तिमाशङ्कमानस्य शब्दस्य सामान्यस्याभिधेयान्तरं व्यवच्छिनत्ति, यथा—गोशब्दस्य गवादिषु गौर्वागिति; क्वचित् प्रवृत्तिमेव करोति, यथा—वाहीकादौ गौर्वाहीक इति । अत्र यत् सामान्यस्य शब्दस्य पट्वादेः पदान्तरसम्बन्धेन विशेषेऽवस्थानं तत् पदेऽन्तर्भूतमेवेत्याख्याग्रहणेन नापनीयते । ग्रामणीशब्दस्य तु स्त्रीत्वप्रवृत्तिः पदान्तरेण क्रियते, न तु व्यच्छिद्यते । तेनासावाख्याग्रहणेनापसार्यते । एतयोस्तु क्रियाशब्दत्वेन रूढा पुंसि मुख्या वृत्तिः । पटुशब्दस्य पाटवोपादायिनः परत्र मुख्येऽपीत्यस्ति भेदः ॥

नेयङुवङ्स्थानावस्त्री ॥ इयङुवङ्स्थानौ यौ यू तयौ नदीसंज्ञकौ न भवत इति यूद्वारेण य्वन्तस्यायं प्रतिषेधो विज्ञायते, न केवलयोः; प्राप्त्यभावात् । न हि यू केवलावियङुवङ्स्थानौ क्वचाख्यौ विद्येते । हे श्रीः । हे भ्रूरिति । अत्र नदीसंज्ञाया अभावात् तन्निबन्धनः 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो न भवति । 'श्रिञ् सेवायाम्', 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणञ्च' इति क्विपि दीर्घत्वे कृते श्रीरिति भवति । 'भ्रमु अनवस्थाने' इत्यस्माद् 'भ्रमेर्डूः' इति डूप्रत्यये टिलोपे भ्रूरिति भवति । उभयोः 'अचि श्नुधातु' इत्यादिनेयङुवङोर्विधानादियङुवङ्स्थानौ यू भवतः ।

हे स्त्रि इति । 'ष्ट्यै स्त्यै शब्दसंघातयोः' । 'आदेच उपदेशेऽशिति' इत्यात्त्वम्, 'स्त्यायतेर्ड्रट्', 'टेः' इति टिभागलोपः, 'लोपो व्योर्वलि' इति यकारस्य लोपः, 'टिड्ढा'

## वाऽऽमि ॥ ५ ॥

पूर्वेण नित्ये प्रतिषेधे प्राप्ते आमि विकल्पः क्रियते। इयङुवङ्स्थानौ यू आमि परतो वा नदीसंज्ञौ न भवतः। श्रियाम्, श्रीणाम्। भ्रुवाम्, भ्रूणाम्।

अस्त्रीत्येव—स्त्रीणाम्॥

### पदमञ्जरी

*वाऽऽमि*॥ संहितासाम्येऽपि षष्ठीबहुवचनस्य ग्रहणम्, न तु द्वितीयैकवचनस्य; नदीकार्याभावात्। नापि सप्तम्येकवचनस्य; तस्य नदीसंज्ञोत्तरकालम् 'ङेराम्नद्याम्नीभ्यः' इति विधानात्। न च 'आमि इति विषयसप्तमी युज्यते; 'तस्मिन्निति निर्दिष्टे' इति वचनात्, तदाह—*आमि परतो वा नदीसंज्ञौ न भवत इति*। *श्रीणामिति*। नदीसञ्ज्ञापक्षे 'ह्रस्वनद्यापो नुट्' ॥

### न्यासः

इत्यादिना ङीप्। अत्र नदीसंज्ञायाः प्रतिषेधाभावाद् ह्रस्वत्वं भवत्येव। स्त्रीशब्दस्य 'स्त्रियाः' इतीयङ्विधानादियङ्स्थान ईकारः।

अथ स्थानग्रहणं किमर्थम्? इयङुवङ्स्थानयोः प्रतिषेधो यथा स्यादिति चेत्? न; यद्येतत् प्रयोजनमभिमतं स्यात् 'इयङुवङोः' इत्येवं वाच्यम्। एवमप्ययमेवार्थः—इयङुवङोः सम्बन्धिनौ यौ यू तयोर्नदीसंज्ञा न भवतीति। कौ च तयोः सम्बन्धिनौ यू? यौ तयोः प्रकृतिभूतावियङुवङ्स्थानाविति, अन्तरेणापि स्थानग्रहणमियङुवङ्स्थानयोः प्रतिषेधो विज्ञास्यते। इदं तर्हि स्थानग्रहणस्य प्रयोजनम्—यत्रेयङुवङोः स्थितिरभिनिवृत्तिस्तत्र प्रतिषेधो यथा स्यात्। यत्र त्वपवादेन तयोर्बाधस्तत्र मा भूदिति—आध्यै, वर्षाभ्वै इति। 'ध्यै चिन्तायाम्' 'अन्येभ्योऽपि दृश्यते' इति क्विप्, सम्प्रसारणञ्च। सम्प्रसारणन्तु दृशिग्रहणाल्लभ्यते। तथा हि तत्रैव दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः, क्वचिद् द्विर्वचनमित्युक्त्वा 'ध्यायतेः संप्रसारणञ्च' इति वक्ष्यति। कृतसम्प्रसारणस्यैव चतुर्थ्येकवचने 'एरनेकाचः' इत्यादिना यणादेशः। वर्षाभूशब्दस्यापि 'वर्षाभ्वश्च' इति॥

वाऽऽमि॥ संहितासाम्येऽपि षष्ठीबहुवचनस्यामो ग्रहणम्, न तु द्वितीयैकवचनस्य; तत्र नदीसंज्ञाकार्याभावात्। नापि सप्तम्यादेशस्यामो ग्रहणम्; तस्य नदीसंज्ञोत्तरकाले 'ङेराम्नद्याम्नीभ्यः' इत्याम्विधानात्। श्रीणामिति। नदीसंज्ञापक्षे 'ह्रस्वनद्यापो नुट्' इति नुट्। इह स्त्र्याख्याविति वर्त्तते, विभक्तिसम्बन्धेन चेयं नदीसंज्ञा विधीयत इति विभक्तिसम्बन्धिन एव शब्दरूपस्य स्त्र्याख्यस्य नदीसंज्ञा युक्ता, तेन यत्रावयवस्त्र्याख्यः, तत्र नदीसंज्ञा न भवति—अतिश्रियां ब्राह्मणानाम्, अतिभ्रुवां ब्राह्मणानामिति।

## ङिति ह्रस्वश्च ॥ ६ ॥

दीर्घस्य नदीसंज्ञा विहिता ह्रस्वस्य न प्राप्नोति इयङुवङ्स्थानयोश्च प्रतिषिद्धा । तस्माण्ङिति वा विधीयते । ङिति परतो ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्यः । स्त्र्याख्यौ इयङुवङ्स्थानौ च यू वा नदीसंज्ञौ भवतः । कृत्यै, कृतये । धेन्वै, धेनवे । श्रियै, श्रिये । भ्रुवै, भ्रुवे । अस्त्रीत्येव—स्त्रियै । स्त्र्याख्यावित्येव—अग्नये, वायवे, भानवे ॥

## शेषो घ्यसखि ॥ ७ ॥

### पदमञ्जरी

*ङिति ह्रस्वश्च* ॥ यद्यत्र ह्रस्वविशेषणार्थम् 'यू' इति नानुवर्त्यत, तदेहापि स्याद्—मात्रे दुहित्रे इति, तस्मात्तदिहानुवर्तते । नन्वेवमपि विशेषणं न प्रकल्पते—यू ह्रस्वाविति; यदि यू, न ह्रस्वौ; अथ ह्रस्वौ, न यू; यू ह्रस्वौ चेति विप्रतिषिद्धम्; आहायं यू ह्रस्वाविति, तत एवं विज्ञास्यामः—य्वोः ह्रस्वाविति, कौ च य्वोः ह्रस्वौ सवर्णौ ? तदाह—*ह्रस्वश्च य्वोः सम्बन्धी यः स्त्र्याख्य इति* । अत्रापि समुदायधर्मस्यावयव आरोपाद् ह्रस्वयोः स्त्र्याख्यत्वम्, तदन्तविशेषणं वा । *इयङुवङ्स्थानौ च यू इति* । नन्वेकं 'यू' ग्रहणमनुवर्तते, तच्च ह्रस्वविशेषण एवोपक्षीणम्, तत्कथं पुनः 'यू' इति लभ्यते ? उच्यते; चकारोऽत्र क्रियते, स संज्ञिनः समुच्चयार्थः, इयङुवङ्स्थानाविति प्रकृतं य्वोरेव च तत्स्थानत्वमित्यर्थाद् 'यू' इति लभ्यते । स्वरितत्वादनुवृत्तं तु 'यू' इत्येतद् ह्रस्वविशेषणमिति न कश्चिद्दोषः ॥

*शेषो घ्यसखि* ॥ 'आ कृषाद्वा' इत्यस्मिन्नधिकारे 'शिष असर्वोपयोगे, विपू-

### न्यासः

**ङिति ह्रस्वश्च** ॥ यद्यत्र ह्रस्वविशेषणार्थं 'यू' इति नानुवर्त्तते, तदेहापि स्यात्—मात्रे दुहित्र इति; तस्मात् तदिहानुवर्त्तते । अनुवर्त्तमानमपि यदि प्रथमान्तमनुवर्त्तते, तदा प्रथमान्तयोर्ह्रस्वत्वं प्रति विशेषणविशेष्यभावो नोपपद्यते । तस्मात् तदिहार्थात् षष्ठ्यन्तमुपजायत इत्यत आह—**ह्रस्वश्च य्वोः सम्बन्धीति** । कः पुनस्तयोः सम्बन्धी ह्रस्वः ? यस्तयोर्ह्रस्वः सवर्णः; तेन सामर्थ्यादिकारोकारयोर्ग्रहणम्, न हि ताभ्यामन्यो ह्रस्व ईदूतोः सवर्णः सम्भवति । कृत्यै, कृतय इति । यदा नदीसंज्ञा तदा पूर्ववदाट्, अन्यदा तु 'शेषो घ्यसखि' इति घिसंज्ञकत्वाद् 'घेर्ङिति' गुणः । अत्रापि यत्र विभक्तिसंबन्धिनः शब्दरूपस्यावयवः स्त्र्याख्यस्तत्र पूर्वोक्तया रीत्या नदीसंज्ञा न प्राप्नोति—अतिकृतये ब्राह्मणाय, अतिश्रिये ब्राह्मणायेति ॥

**शेषो घ्यसखि** ॥ सख्येति । घिसंज्ञाया अभावाद् 'आङो नाऽस्त्रियाम्' इति नाभावो

'ह्रस्वः' इति वर्तते। शेषोऽत्र घिसंज्ञो भवति, सखिशब्दं वर्जयित्वा। कश्च शेषः? ह्रस्वमिवर्णोवर्णान्तं यन्न स्त्र्याख्यम्, स्त्र्याख्यं च यन्न नदीसंज्ञकम्, स शेषः। अग्नये, वायवे, कृतये, धेनवे।

असखीति किम्? सख्या। सख्ये। सख्युः। सख्यौ।

घिप्रदेशाः—'द्वन्द्वे घि' इत्येवमादयः॥

पदमञ्जरी

र्णोऽतिशये' इति पठ्यते, तत्र णिच्पक्षे कर्मणि 'एरच्', अन्यथा घञ्। *ह्रस्व इति वर्त्तत इति*। अन्यथा ग्रामण्यादेरपि स्याद् अस्त्र्याख्यत्वेन शेषत्वाद्, यस्य नदीसंज्ञा न विहिता तस्य शेषत्वे मात्रे इत्यत्रापि स्यादिति मत्वा पृच्छति—*कश्चेति*। इतरस्तु—ह्रस्वविशेषणार्थं 'यू' इत्यस्याननुवृत्तिमाश्रित्याह—*ह्रस्वमिति*। ह्रस्वान्तमित्यर्थः। यदाह—*इवर्णोवर्णान्तादिति*। क्वचित्तु *ह्रस्वेवर्णोवर्णान्तमिति* पाठः, ह्रस्वात्मको य इवर्ण उवर्णश्च तदन्तमित्यर्थः। ह्रस्वेन शेषस्य विशेषणत्वात् तदन्तविधिः। एवं च 'असखि' इति सखिशब्दस्य प्रतिषेधो न तत्सम्बन्धिन इकारस्य, किं सिद्धं भवति? इह शोभनस्सखा अस्य सुसखिः, सुसखेरागच्छतीति घिसंज्ञा सिद्धा भवति। न ह्ययं समुदायः सखिशब्दः, तदन्तविधिश्च ग्रहणवता प्रातिपदिकेन प्रतिषिद्धः, ह्रस्वमात्रस्य तु संज्ञाविधौ सखिशब्दसम्बन्धिनः प्रतिषेधादिहापि न स्यात्। यदि तदन्ते निषेधो न भवति 'यस्येति च' इत्यत्र इवर्णस्य ई इति यदुदाहरणं सखिशब्दात् 'सख्यशिश्वीति भाषायाम्' इति ङीषि सखि ई इति स्थिते इकारस्य लोपः। असति तु लोपे सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावात् सखीमतिक्रान्तोऽतिसखिः, अतिसखेरागच्छतीत्यत्रासखीति घिसंज्ञाप्रतिषेधः स्यादिति तन्नोपपद्यते। सत्यप्यन्तवद्भावेन सखिग्रहणेन ग्रहणे समुदायस्य सखिशब्दादन्यत्वात्। यदा खलु पुंल्लिङ्गेऽप्यतिसखिरिति भवति, तदा कः प्रसङ्गो यदन्तवद्भावेन स्यात्? एवं तर्हि तत्र सूत्रे इकारलोपस्य तद्धित एवोदाहरणम्, न त्वीति परतः। यत्तु तत्रोदाहरिष्यते सोऽनास्थावादो द्रष्टव्यः। शेषग्रहणं चिन्त्यप्रयोजनम्। एकसंज्ञाधिकारादेव हि स्त्र्याख्यस्य ङिति नदीसंज्ञापक्षे घिसंज्ञा न भविष्यति॥

न्यासः

न भवति। सख्ये, सख्युरित्यत्रापि 'घेर्ङिति' न गुणः। सख्यावित्यत्र 'अच्च घेः' इत्यत्त्वं न भवति। 'इदुद्भ्याम्' 'औत्' इत्यौत्त्वं भवति। सख्युरित्यत्रापि 'ख्यत्यात् परस्य' इत्युत्त्वम्। इह शोभनः सखाऽस्येति सुसखिरिति, सुसखेरागच्छतीत्यत्र तदन्तविधिना प्रतिषेधः प्राप्नोति, स च 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति प्रतिषेधाच्च

## पतिः समास एव ॥ ८ ॥

पतिशब्दस्य घिसंज्ञायां सिद्धायामयं नियमः क्रियते—पतिशब्दः समास एव घिसंज्ञो भवति । प्रजापतिना । प्रजापतये ।

समास इति किम् ? पत्या । पत्ये ।

एवकार इष्टतोऽवधारणार्थः । दृढमुष्टिना । दृढमुष्टये ॥

### पदमञ्जरी

*पतिः समास एव* ॥ *सिद्धायामिति* । प्राप्तायामित्यर्थः, न पुनर्निष्पन्नायाम्, न हि निष्पन्नायां नियमेन निवृत्तिः शक्या वक्तुम् । *पतिशब्दः समास एव घिसंज्ञो भवतीति* । किं पुनरिदं समासावयवस्य पतिशब्दस्य संज्ञा विधीयते ? आहोस्वित्तदन्तसमासस्य ?, यदि समासस्य ? पतिश्च गृहं च पतिगृहे—अत्र 'द्वन्द्वे घिः' इति पूर्वनिपातो न प्राप्नोति; अथ पतिशब्दस्य ? प्रजापतिनेत्यादिकस्य घिसंज्ञाकार्यं न प्राप्नोति । अथ वा 'पतिः समासएव' इति नियमेन किं व्यावर्त्यते ? असमस्तः पतिशब्दः । पतिशब्दस्य व्यावर्त्यमाना केन तदन्तस्य व्यावर्त्यते ? पतिशब्दसम्बन्धी य ईकारस्तदाश्रया सा घिसञ्ज्ञा भवति, यदि समास एवेत्यर्थो विवक्षितः ! तेन समासे पतिशब्दस्यानन्त्यस्यापि भवति—पतिश्च गृहश्च पतिगृहे, 'द्वन्द्वे घिः' इति पूर्वनिपातः । पतिशब्दान्तस्य समासस्यापि भवति—प्रजापतिनेति, अत एव *वृत्तिकृता* पतिशब्दानुरूपसूत्रार्थो दर्शितः । उदाहरणन्तु तदन्तानुरूपं दर्शितम् । अथ कथम्

नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ इति ?

छन्दोवदृषयः कुर्वन्ति। अथ पूर्वत्रैव 'असखिपती' इति कस्मान्नोक्तम् ? उत्तरत्र पत्युरेव विकल्पो यथा स्यात् । किञ्च 'असखिपती' इत्युच्यमाने पतिशब्दस्य समासेऽपि न स्यात्—पतिगृहे इति । तथा च सखिशब्दस्य समासावयवस्यापि घिसञ्ज्ञाया अभावात्—सखिगृहे, गृहसखायाविति चानियमः पूर्वनिपातस्य ॥

### न्यासः

भवति । इह द्विविधा घिसंज्ञा—अवयवाश्रया, समुदायाश्रया च । तत्र याऽवयवाश्रया सा प्रतिषिध्यते, या पुनः समुदायाश्रया सा च भवत्येव; तस्या अप्रतिषेधात् ॥

पतिः समास एव ॥ पतिशब्दस्य सिद्धायां घिसंज्ञायामिति । अनन्तरसूत्रेणैवेति शेषः । प्रजापतिनेति षष्ठीसमासः ।

यदि सिद्धायां घिसंज्ञायामिदमारभ्यते तदा 'सिद्धे सत्यारम्भो नियमार्थः' इति विनाप्येवकारेण लभ्यत एव नियमः, तत् किमर्थमेवकारकरणमित्यत आह—एवकारकरणमित्यादि । विना ह्येवकारेण विपरीतमप्याशङ्क्येत—पतिरेव समास इति ।

**षष्ठीयुक्तश्छन्दसि वा ॥ ९ ॥**

'पतिः' इति वर्तते। पूर्वेण नियमेनासमासे न प्राप्नोतीति वचनमारभ्यते। षष्ठ्यन्तेन शब्देन युक्तः पतिशब्दः छन्दसि विषये वा घिसंज्ञो भवति। कुलुञ्चानां पतये नमः, कुलुञ्चानां पत्ये नमः।

षष्ठीग्रहणं किम्? मया पत्या जरदष्टिर्यथासः। छन्दसीति किम्? ग्रामस्य पत्ये॥

**ह्रस्वं लघु ॥ १० ॥**

मात्रिकस्य ह्रस्वसंज्ञा कृता, तस्यानेन लघुसंज्ञा विधीयते। ह्रस्वमक्षरं लघुसंज्ञं भवति। भेत्ता, छेत्ता, अचीकरत्, अजीहरत्।

**पदमञ्जरी**

*षष्ठीयुक्तश्छन्दसि वा* ॥ *षष्ठ्यन्तेन शब्देनेति*। षष्ठ्या विभक्त्या युक्त इति तु न भवति। तथा हि—षष्ठ्यामित्येव ब्रूयाद्, युक्तग्रहणमनर्थकं स्यात्। *षष्ठीग्रहणं किमिति*। अत्र केचिद् योगस्यावर्जनीयत्वाद्युक्त इत्येव विशिष्टो योगः प्रत्येष्यत इति मन्यन्ते, वचनमन्तरेण विशेषो दुर्ज्ञान इत्युत्तरम्। अयमत्र योगविभागः कर्त्तव्यः—'षष्ठीयुक्तः छन्दसि', षष्ठीयुक्तः पतिशब्दः छन्दसि घिसञ्ज्ञो भवति; ततो 'वा', छन्दसीत्येव, यच्च यावच्च शास्त्रे कार्यं तत्सर्वं छन्दसि विकल्पेन भवति। सर्वे विधयश्छन्दसि विकल्प्यन्त इत्यर्थः। उभयत्रविभाषा चेयम्, 'बहुलं छन्दसि' इत्यादिकस्त्वस्या एव प्रपञ्चः॥

*ह्रस्वं लघु* ॥ इह सर्पिष्टमित्यत्र 'ह्रस्वात्तादौ तद्धिते' इति षत्वार्थं ह्रस्व-

**न्यासः**

ततश्च दृढमुष्टिनेत्यादौ न स्यात्, एवकारे तु सति भवतीति। तथा ह्यत्र समासशब्दादनन्तरं प्रयुज्यमानं यत एवकारकरणं ततोऽन्यत्रावधारणमिति पतिशब्द एव नियम्यते, न समासः॥

षष्ठीयुक्तश्छन्दसि वा ॥ अत्र यदि पतिशब्दः षष्ठीविभक्त्यन्तो घिसंज्ञो भवतीत्येषोऽर्थोऽभिमतः स्यात्, तदा युक्तग्रहणमनर्थकं स्यात्; षष्ठीत्येवं ब्रूयात्। तस्माद् युक्तग्रहणे सति षष्ठ्यन्तशब्दान्तरेण युक्त इत्येषोऽर्थो विज्ञायत इत्यत आह—षष्ठ्यन्तेनेत्यादि। यदि पुनः पतिशब्दस्य षष्ठ्यन्तस्य घिसंज्ञा स्यात्, तदा किं स्यात्? पत्युरित्यत्रैव स्यात्, इह तु न स्यात्—कुञ्चानाम्पतये नम इति।

मया पत्येति। तृतीयायुक्तोऽत्र पतिशब्दः। अस्मदः 'मपर्यन्तस्य' 'त्वमावेकवचने' इति मादेशः। 'योऽचि' इति यकारः॥

ह्रस्वं लघु ॥ भेत्तेति। 'पुगन्तलघूपधस्य च' इति गुणः। अचीकरदिति। कृञो

लघुप्रदेशाः--'पुगन्तलघूपधस्य च' इत्येवमादयः ॥

संयोगे गुरु ॥ ११ ॥

'ह्रस्वम्' इति वर्तते। पूर्वेण लघुसंज्ञायां प्राप्तायां गुरुसंज्ञा विधीयते। संयोगे परतो ह्रस्वमक्षरं गुरुसंज्ञं भवति। कुण्डा। हुण्डा। शिक्षा। भिक्षा।

गुरुप्रदेशाः–'गुरोश्च हलः' इत्येवमादयः ॥

दीर्घं च ॥ १२ ॥

'संयोगे' इति नानुवर्त्तते। सामान्येन संज्ञाविधानम्। दीर्घं चाक्षरं गुरुसंज्ञं भवति। ईहाञ्चक्रे। ईक्षाञ्चक्रे ॥

यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् ॥ १३ ॥

यस्मात्प्रत्ययो विधीयते धातोर्वा प्रातिपदिकाद्वा तदादि शब्दरूपं प्रत्यये परतोऽङ्गसंज्ञं भवति। कर्त्ता, हर्त्ता। करिष्यति, हरिष्यति।

पदमञ्जरी

संज्ञया गुरुसंज्ञाया समावेश इष्यते। अततक्षदित्यत्र तु सन्वद्भावनिवृत्त्यर्थं लघुसंज्ञाया गुरुसंज्ञया बाध इष्यते। अतो ह्रस्वप्रदेशेषु संयोगपरस्यापि मात्रिकस्य ग्रहणं यथा स्यात्, लघुप्रदेशेषु मा भूदिति यथाप्रदेशं संज्ञाद्वयं कर्त्तव्यम् ॥

*यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्* ॥ *कर्तेति*। *लुट्*। *करिष्यतीति*।

न्यासः

णिच्, चुङ्, अडागमः, च्लेश्चङ्, णिलोपः, 'णौ चङ्युपधायाः' इति ह्रस्वः। 'ओः पुयण्ज्यपरे' इति वचनं ज्ञापकम्–णौ कृतं स्थानिवद् भवतीति। 'चङि' इति कृशब्दो द्विरुच्यते। 'उरत्' इत्यत्त्वम्, रपरत्वम्, 'सन्वल्लघुनि' इति लघुसंज्ञायां सत्यां सन्वद्भावादित्त्वम्, 'दीर्घो लघोः' इति दीर्घत्वम् ॥

**संयोगे गुरु** ॥ **कुण्डा, हुण्डा**। 'कुडि दाहे', 'हुडि सङ्घाते', नुम्विधावुपदेशिवद्वचनादुपदेशावस्थायामेव नुम्। **शिक्षा, भिक्षेति**। 'शिक्ष विद्योपादाने', 'भिक्ष याच्ञायाम्', तयोर्गुरुसंज्ञायां सत्याम् 'गुरोश्च हलः' इत्यकारप्रत्ययः, 'अजाद्यतष्टाप्' ॥

**दीर्घञ्च** ॥ **ईहाञ्चक्रे, ऊहाञ्चक्र इति**। 'आम्प्रत्ययवद्' इत्यादौ सूत्र एते व्युत्पादिते। गुरुसंज्ञायां त्वत्र कार्यम्—'इजादेश्च गुरुमतोऽनृच्छः' इत्याम्प्रत्ययः ॥

**यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्** ॥ **कर्तेति लुट्**। **करिष्यति, अकरिष्यदिति** लृट्लृङौ। अङ्गसंज्ञायाः कार्यमत्र 'सार्वधातुकार्द्धधातुकयोः' इति गुणः, 'ऋद्धनोः

अकरिष्यत् । औपगवः, कापटवः । यस्मादिति संज्ञिनिर्देशार्थम्, तदादीतिसंबन्धात् ।

प्रत्ययग्रहणं किम्? न्यविशत, व्यक्रीणीत । 'नेर्विशः' इत्युपसर्गाद्विधिरस्ति तदादेरङ्गसंज्ञा स्यात् ।

विधिग्रहणं किम्? प्रत्ययपरत्वमात्रे मा भूत् । स्त्री इयती ।

पदमञ्जरी

लृट् । *अकरिष्यदिति* । लृङ्, 'ऋद्धनोः स्ये' इतीट् । *यस्मादिति संज्ञिनिर्देशार्थमिति* । ननु तदादीत्यनेन संज्ञी निर्दिश्यते, न यस्मादित्यनेन तत्राह—*तदादीतिसंबन्धादिति* । सति हि यस्मादित्यस्मिन् तदादीत्यनेन संज्ञा निर्देष्टुं शक्यते, नान्यथा । सति हि परामर्शनीये तदित्यनेन परामर्शो भवति, अन्यथा तदादीत्यसंबद्धमेव स्यात् । *'नेर्विशः' इत्युपसर्गाद्विधिरस्तीति* । यद्यपि निरत्र धातुविशेषणम्—नेः परो यो विशिरिति, धातोस्तङ्विधानाद् नियमविधिरपि धातोरिव नोपसर्गात्, तथाप्युपसर्गस्यापि तत्रान्वयोऽस्तीति मत्वा एवमुक्तम् ।

*विधिग्रहणं किमिति* । 'यस्मात्प्रत्यय' इत्युक्ते साकाङ्क्षत्वाद् यस्माद्विधीयत इत्यध्याहरिष्यत इति प्रश्नः । परशब्दस्याप्यध्याहारः स्यादित्युत्तरम् । *स्त्री इयतीति* ।

न्यासः

स्ये' इतीडागमो यथायोगम् । यस्मादिति संज्ञिनिर्देशार्थमिति । संज्ञिनो निर्देशः संज्ञिनिर्देशः, सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । ननु च तदादीत्यनेनात्र संज्ञी निर्दिष्टः, तत् कथं संज्ञिनिर्देशार्थमिति पर्यनुयोगमाशङ्क्य येन हेतुना यस्मादित्यस्य संज्ञिनिर्देशार्थत्वं भवति, तं दर्शयितुमाह—तदादिसम्बन्धादिति । यस्मादित्येतस्मिन् सत्यनेन प्रकृतेन तदादीत्यस्य सम्बन्धो भवति । यस्मात् प्रत्ययो विधीयते स आदिर्यस्य तत् तदादीति । अनुच्यमाने ह्येतस्मिंस्तदित्यनेन सर्वनाम्ना प्रकृतप्रत्यवमर्शिना किं सम्बध्येत? न ह्यत्र किञ्चित् प्रकृतमस्तीत्यसम्बन्धमेव तदादीति । असम्बन्धे कथं शक्यते संज्ञी निर्देष्टुम्? स्यादेतत्—स प्रत्ययविधिरेव तदादीत्यनेन सम्बध्येतेति, असदेतत्; एवं हि सति प्रत्ययादेः प्रत्यये परतोऽङ्गसंज्ञा स्यात्, ततश्च करिष्यावः, करिष्याम इत्यत्र धातोर्गुणो न स्यात् । तस्माद्विशिष्टस्य संज्ञिनो निर्देशार्थं यस्मादिति वक्तव्यम् । अनेन हि सम्बन्धे सति तदादीत्यनेन योऽत्र विशिष्टः संज्ञी विवक्षितः स शक्यते निर्देष्टुम्; नान्यथा । 'नेर्विशः' इत्युपसर्गाद्विधिरस्तीति नियमस्य, न तु प्रत्ययस्य; तस्य लक्षणान्तरेण विहितत्वात् । 'नेर्विशः' इत्युपलक्षणमात्रम् । 'परिव्यवेभ्यः क्रियः' इत्येतदपीहोपात्तं द्रष्टव्यम् । तदादेरङ्गसंज्ञा स्यात्, ततश्चोपसर्गात् प्रागडागमः स्यादिति भावः ।

स्त्री इयतीति । इदं परिमाणमस्या इति 'किमिदम्भ्यां वो घः' इति वतुप् ।

पदमञ्जरी

इदं परिमाणमस्याः 'किमिदम्भ्यां वो घः' इयादेशः, 'इदंकिमोरीश्की', 'यस्येति च' इति लोपः, 'उगितश्च' इति ङीप्, स्त्रीशब्दात् सोर्हल्ङ्यादिलोपः। अत्र इयच्छब्दे परतोऽङ्गसंज्ञा स्याद् भसंज्ञा चेति तन्निमित्तो यस्येति लोपः प्रसज्येत। इशादेशस्य यस्येति लोपः, तस्याभीयस्याप्यसिद्धत्वं न भवति, प्राग्भादसिद्धत्वमिति केषाञ्चिदभ्युपगमाद्। स्थानिवद्भावोऽपि नास्ति, पदान्तरनिरपेक्षे हीयतीशब्दे व्युत्पाद्यमाने स्त्रीशब्दोऽनादिष्टादचः पूर्वः।

ननु क्रियमाणे विधिग्रहणे स्यादेव संज्ञा, अस्त्येव ह्यत्र स्त्रीशब्दाद् विभक्तेः प्रत्ययस्य विधिरियत्प्रत्ययश्च परः, नैष दोषः; सति विधिग्रहणे प्रत्यासत्तेर्यस्माद्यः प्रत्ययो विहितस्तस्मिन्नेव प्रत्यये परतस्तदाद्यङ्गमित्यर्थो भवति। इह च स्त्रीशब्दाद्विहितो लुप्तः, श्रूयमाणश्च न ततो विहितः, तदादिग्रहणमनर्थकम्, यत्तदो-

न्यासः

वस्य च घत्वम्, इयादेशः, 'इदम्किमोरीश्की' इतीदम ईश्, 'यस्येति च' इतीकारलोपः। 'उगितश्च' इति ङीप्—इयती। स्त्रीशब्दात् सुः, तस्य हल्ङ्यादिना लोपः, स्त्री इयती इति स्थिते यदि विधिग्रहणं न क्रियेत, तदेयच्छब्दे प्रत्यये परतः स्त्रीशब्दस्याङ्गसंज्ञा स्यात्, ततश्च 'यस्येति च' इतीकारलोपः प्रसज्येत। ननु च 'असिद्धवदत्राभात्' इत्यसिद्धत्वादीकारलोप एवासिद्धः, तत् कुतोऽयं लोपप्रसङ्गः ? प्राग् भाधिकारादसिद्धत्वमित्यभिप्रायः, नैषोऽस्त्यभिप्रायः; वक्ष्यति हि तत्र वृत्तिकारः—'असिद्धवदित्यधिकारोऽयम्, यदित ऊर्ध्वमनुक्रमिष्याम आ अध्यायपरिसमाप्तेस्तदसिद्धवद्भवति' इति, तथा ह्या भादित्यभिविधावाङ्, तेन भाधिकारेऽप्यसिद्धत्वं भवतीति ? एवं तर्हि विधिग्रहणेनैतज्ज्ञाप्यते—भाधिकारीयमसिद्धत्वमनित्यमिति; तेन 'वुग्युटावुवङ्यणोः सिद्धौ वाच्यौ' इत्येतन्न वक्तव्यं भवतीति। वुक्—बभूव, युट्—उपदिदीय इति।

नन्वेवम् 'अचः परस्मिन् पूर्वविधौ' इतीकारलोपस्य स्थानिवत्त्वात् स्त्रीशब्देकारलोपाप्रसङ्ग एव, नैतदस्ति; यो ह्यनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद् भवतीत्यादिष्टादचः पूर्वः स्त्रीशब्देकारः प्राक् संस्कृतस्य सत इयतीशब्दस्योत्तरकालं स्त्रीशब्देन सम्बध्यते। अथ क्रियमाणेऽपि विधिग्रहणे कस्मादेवाङ्गसंज्ञा न भवति, यावता स्त्रीशब्दाद् विभक्तेः प्रत्ययस्य विधिरस्त्येव, प्रत्ययोऽपि चास्मात् पर इयच्छब्दो विद्यत एव ? नैष दोषः; विधिग्रहणे सति यस्मात् प्रत्ययो विधीयते प्रत्यासत्तेस्तस्मिन् परतोऽङ्गसंज्ञा विधीयते। इह तु यः स्त्रीशब्दाद्विहितः प्रत्ययो नासौ परः, लुप्तत्वात्; यश्च पर इयच्छब्दो विहितः, नासौ ततो विहितः।

अथ तदादिग्रहणं किमर्थम्, यावता विनापि तेन 'यस्मात् प्रत्ययविधिः प्रत्ययेऽङ्गम्' इत्येतावत्युच्यमाने यत्तदोर्नित्याभिसम्बन्धाद् यस्मात् प्रत्ययो विधीयते तत-

* तदादिवचनं स्यादिनुमर्थम् *। करिष्यावः, करिष्यामः। कुण्डानि।

### पदमञ्जरी

नित्यसम्बन्धादेव यस्मात्प्रत्ययो विधीयते तदङ्गमित्यर्थलाभाद् अत आह— *तदादिवचनमिति*। स्यादयो विकरणाः। आदिशब्देन शबादेर्ग्रहणम्। असति तदादिग्रहणे यच्छब्दवत्तच्छब्दस्याध्याहाराद् यस्मात्प्रत्ययविधिस्तस्यैव संज्ञा स्याद्, न तु तत आरभ्य आ तस्मात्प्रत्ययाद्यः संघातः तस्य। ततश्च करिष्यावः, पचावः, दीव्यावः, तुदाव इत्यादौ 'अतो दीर्घो यञि' इति दीर्घो न स्यात्; स्याद्यन्तस्य समुदायस्यानङ्गत्वात्। ततश्च पापाव इत्यादावेव स्यात्, 'पय गतौ' यङ्लुगन्तस्य 'लोपो व्योर्वलि' इति लोपे रूपम्। *कुण्डानीति*। यदा नुम् परादिः, तदा 'सुपि च' इति दीर्घः सिध्यति। दधीनीत्यादावनकारान्तत्वान्न सिध्यति, पूर्वान्तपक्षे सामानीत्यादिवत्सिध्यति। यदा त्वभक्तपक्षः तदैतत्प्रयोजनं तदादिग्रहणस्य, पूर्वान्तपक्षस्तु तत्र स्थित इत्यप्रयोजनमेतत्।

ननु च 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति नुम्ग्रहणं कुर्वतः सूत्रकारस्याभक्तो नुमित्यभिप्रायो लक्ष्यते, अन्यथा माषवापाणीत्यत्र प्रातिपदिकान्तत्वाद्विभक्तिनकारत्वाद्वा णत्वसिद्धेरनर्थकं तत्स्यात्? नैतत्सूष्ठूच्यते; तत्र हि समासप्रातिपदिकान्तो न गृह्यते, किं तर्हि? पूर्वपदादित्यनुवृत्तेस्तदाक्षिप्तस्योत्तरपदप्राति-

### न्यासः

प्रत्यये परतोऽङ्गसंज्ञा भवतीत्येषोऽर्थो लभ्यत इत्यत आह—तदादिवचनमित्यादि। असति तदादीत्येतस्मिन् यस्मादेव प्रत्ययो विधीयते तस्यैवाङ्गत्वं स्यात्, न तु सर्वस्य सहस्यादेः, नापि सनुम्कस्य समुदायस्य; ततः प्रत्ययस्याविहितत्वात्। तदादिग्रहणे सति यस्मात् प्रत्ययो विधीयते स आदिर्यस्य शब्दरूपस्य तत् तदादीति बहुव्रीहिराश्रितो भवति, तेन सर्वस्य सहस्यादेः सनुम्कस्य समुदायस्याङ्गसंज्ञा सिद्ध्यति— इति तदादिवचनं स्यादिनुमर्थम्। आदिग्रहणेन प्रकृतिप्रत्ययस्य मध्यवर्तिनां प्रत्ययागमानां ग्रहणम्; नुम आगमोपलक्षणत्वात्। करिष्याव इत्यत्र यस्मात् प्रत्ययो विहितस्तदादेः सहस्यप्रत्ययस्य समुदायस्याङ्गसंज्ञायां सत्याम् 'अतो दीर्घो यञि' इति दीर्घत्वं भवति; अन्यथा क्व तर्हि स्यात्? वावावः, वावाम इत्यादौ। 'अय वय मय पय तय चय णय गतौ', यङ्लुक्, अभ्यासस्य 'दीर्घोऽकितः' इति दीर्घत्वम्; वस्मसोः 'लोपो व्योर्वलि' इति यलोपः—इह विना विकरणेन धातोर्दीर्घत्वम्; विकरणस्य शपः 'अदिप्रभृतिभ्यः शपः' इति लुप्तत्वात्। अदादित्वम् 'चर्करीतञ्च' इत्यदादिषु पाठात्। 'चर्करीतम्' इति यङ्लुकः पूर्वाचार्यसंज्ञा। कुण्डानीति।

### पदमञ्जरी

पदिकस्यान्तो गृह्यते, समुदायभक्तश्च नुम् उत्तरपदप्रातिपदिकान्तो न भवति। ततश्च यथा गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं न भवति, तथा नुमोऽपि न स्यात्। न तर्हीदानीमिदं भवति—गर्गभगिणीति ? भवति, यदैतद्वाक्यं भवति—गर्गाणां भगो गर्गभगः सोऽस्या अस्तीति। तदा ह्यनुत्तरपदस्थत्वात् पूर्वपदात् सञ्ज्ञायामेवेति नियमाभावः, तद्यथा—मातृभोगाय हितो मातृभोगीण इति। एवमपि माषान् वप्तुं शीलमस्याः माषवापिणी—अत्र न प्राप्नोति, ङीबत्रोत्तरपदस्यान्तो न तु नकारः। नकार एवात्रान्तः, कथम् ? गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः, अतः स्याद्यर्थं क्रियमाणं तदादिग्रहणं नुम्यपीष्टं साधयतीति मत्वा नुम्ग्रहणं कृतम्। यदि तदादीत्युच्यते कर्तेत्यादौ न प्राप्नोति, न ह्यत्र तदादि किञ्चिदस्ति, किं तर्हि ? तदेव, व्यपदेशिवद्भावाद्भविष्यति, वाक्यभेदाद्वा, यस्मात्प्रत्ययविधिस्तदङ्गम्, तदादि च। इह 'प्रकृत्यादि प्रत्ययेऽङ्गम्' इति इयता सिद्धे गुरुनिर्देश एव लिङ्गं वाक्यभेदस्य।

अथ कथं भिनत्ति, संचस्करतुरित्यत्र सनुम्कस्य ससुट्कस्य च समुदायस्याङ्गसंज्ञा ? कथं च न स्याद् ? इह तस्य वा ग्रहणं भवति ? तदादेर्वा ? न चेदं तन्नापि तदादि। इदमपि तदादि, कथम् ? नैवं विज्ञायते—स आदिरस्य तत्तदादीति। कथं तर्हि तस्यादिस्तदादिस्तदादिरस्येति ? तथापि उष्ट्रमुखवदेकस्यादिशब्दस्य लोपः। एवं हि विज्ञायमाने भिनत्तीत्यत्र यस्मात्प्रत्ययविधिभिदेस्तस्य आदिर्भकारः, स आदिः सन्नन्तस्य समुदायस्येति सिध्यति। एवं संचस्करतुरित्यत्रापि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति चात्रोभयत्र संज्ञासिद्धिः। अथात्र श्नमः पूर्वस्य भिशब्दस्याङ्गसञ्ज्ञा कस्मान्न भवति ? भवतु, को दोषः ? गुणस्तावत् 'सार्वधातुकमपिद्' इति ङित्त्वादेव न भविष्यति। इह अनक्ति, भनक्ति—'अतो दीर्घो यञि' इति दीर्घः प्राप्नोति, तिङीति तत्र वर्त्तते। अथ वा—'यस्मात्प्रत्ययविधिः' इति वचनाद्यस्मिन् प्रत्यये विधीयमाने यत्पञ्चम्या निर्दिष्टं तत्र तदेवाङ्गम्, श्नमि च विधीयमाने ये पञ्चम्या निर्दिष्टा रुधिरादयो न ते तत्र परतः, येऽत्र श्नमि परतोतिऽप्रभृतयो न ते पञ्चम्या निर्दिष्टा इति सञ्ज्ञाभावः।

### न्यासः

जसि 'जश्शसोः शिः' इति शिभावः। 'नपुंसकस्य झलचः' इति नुम्। यदायं नुम् परादिरिति पक्षः, तदा 'सुपि च' इति दीर्घत्वं विनापि सनुम्कस्याङ्गसंज्ञाया सिद्धम्। यदापि पूर्वान्तः, तदाप्यङ्गैकदेशत्वात् 'नोपधायाः' इत्यनुवर्तमाने 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घत्वं सिद्धम्। "यदा त्वभक्तः," तदाङ्गस्यानेकदेशत्वान्न सिद्ध्यति।

पुनः प्रत्ययग्रहणं किमर्थम् ? लुप्तप्रत्यये मा भूत्। श्र्यर्थम्। भ्र्व्यर्थम् ।

अङ्गप्रदेशाः—'अङ्गस्य' इत्येवमादयः ॥

पदमञ्जरी

*श्र्यर्थमिति* । 'चतुर्थी तदर्थे' इति समासः । अस्ति ह्यत्र चतुर्थ्येकवचनस्य विधिरित्यसति पुनः प्रत्ययग्रहणेऽङ्गशब्दस्य सम्बन्धिशब्दत्वाभावात् वस्तुतोऽङ्गमात्राश्रय इयङ् स्यात् । सति तु सप्तमीनिर्दिष्टप्रत्ययग्रहणेऽङ्गशब्दः सम्बन्धिशब्दो भवति, ततश्चाङ्गस्येयङ् भवति । अचीत्युक्ते यदपेक्षं यदङ्गम्, तत्र तस्याजादाविति विज्ञानादर्थशब्दे परत इयङुवङौ न भविष्यतः ।

किं पुनरङ्गसंज्ञायाः प्रयोजनम् ? अङ्गस्येत्यधिकारः । नैतदस्ति; यदेतदङ्गस्येत्येतत् प्रत्यय इति वक्ष्यामीति । एवमपि प्राकरोत्, प्रेहिष्ट—सोपसर्गस्याडाटौ प्राप्नुतः, नैष दोषः; प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति । क्व पुनरेषा परिभाषा ? नन्वेषाप्यत्रैव योगविभागेन सिद्धा, 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इत्येतावानेको योगः । प्रत्यये गृह्यमाणे यस्मात् तस्य विधिस्तदादि गृह्यत इत्यर्थः, तेन 'ञ्नित्यादिः' इत्यादौ यत्र प्रत्ययः सप्तम्या निर्दिश्यते तत्र तदादेर्ग्रहणम्, तेन देवदत्तो गार्ग्य इति संघातस्य ञित्स्वरो न भवति । 'सुप आत्मनः क्यच्' इत्यत्र तु सुपा कर्मणो विशेषणात्तदन्तविधौ सिद्धे महान्तं पुत्रमित्यादावतिप्रसङ्गे तदादिनियमेन व्युदासः । यदि तदादिनियमः क्रियते स्त्रीप्रत्ययेऽपि स्यात्, ततः ष्यङन्तस्य पूर्वपदस्योच्यमानं संप्रसारणं परमकारीषगन्धीपुत्र इत्यत्र न स्याद्—यत्पूर्वपदं न तत्ष्यङन्तम्, यत्ष्यङन्तं न तत्पूर्वपदम्, नैष दोषः; 'नेयङुवङ्स्थानावस्त्री' इत्यतः 'अस्त्री' इत्यनुवर्त्तते, तच्च स्वरूपपदार्थकत्वेन प्रकृतमपीहार्थपदार्थकं संपद्यते, तदयमर्थो भवति—प्रत्ययग्रहणे तदादि गृह्यते स्त्री चेन्नाभिधीयते । स्त्रीप्रत्यये तदादिनियमो नास्तीत्यर्थः । यद्येवम्, अतिकारीषगन्ध्यापुत्रः—अत्रापि प्राप्नोति, प्रधानं या स्त्री तस्यामेव

न्यासः

अभक्तश्चायं नुमिति सूत्रकारस्य पक्षः । तेन नुमर्थमपि तदादिवचनं कृतम् । श्र्यर्थम्, भ्र्व्यर्थमिति । श्रिय इदं भ्रुव इदमिति—'चतुर्थी तदर्थार्थ' इत्यादिना समासः, अस्त्यत्र चतुर्थ्येकवचनस्य विधिरिति । असति हि पुनः प्रत्ययग्रहणे श्रीभ्रूशब्दयोरर्थशब्दे परतोऽङ्गसंज्ञा स्यात्, ततश्चेयङुवङौ स्याताम् । सप्तमीनिर्दिष्टे तु पुनः प्रत्ययग्रहणे सति न दोष इति । तथा हि—ततो विहिते प्रत्यये परत इत्येवं विज्ञायते । यश्चातो विहितः प्रत्ययः स लुप्तः । यद्यपि लुप्तेऽपि तस्मिन् प्रत्ययलक्षणेनाङ्गसंज्ञा लभ्यते, कार्यं तु न लभ्यते; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात् ॥

## सुप्तिङन्तं पदम् ॥ १४ ॥

'सुप्तिङ्' इति प्रत्याहारग्रहणम्। सुबन्तं तिङन्तं च शब्दरूपं पदसंज्ञं भवति। ब्राह्मणाः पचन्ति।

पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेः प्रतिषेधार्थम्। गौरीब्राह्मणितरा।

### पदमञ्जरी

तदादिनियमप्रतिषेधः, अप्रधानस्त्रियां तु तदादिनियमो भवत्येव। तेन यावानंशः स्त्रियं प्राधान्येन प्रतिपादयति, तावतः स्त्रीप्रत्ययान्तस्य ग्रहणं भवति। तद्ग्रहणे तु गतिकारकपूर्वस्यापि ग्रहणं भवतीति 'गतिरनन्तरः' इत्यनन्तरग्रहणं ज्ञापयिष्यते।

*सुप्तिङन्तं पदम्* ॥ *सुप्तिङिति प्रत्याहारग्रहणमिति*। सुबिति सप्तमीबहुवचनस्य ग्रहणं न भवति; यदि स्यात्, ङिसंबुद्ध्योः पदत्वाभावादेव नलोपस्याप्रसङ्गात् 'न ङिसंबुद्ध्योः' इति प्रतिषेधोऽनर्थकः स्यादिति भावः। सप्तमीबहुवचनस्य च पकारेण प्रत्याहारो न कपः पकारेण; तस्यानन्यार्थत्वात्। न च स्वरार्थः पकारः, यदा ह्यत्र कपः पकारेण प्रत्याहारस्तदा स्वरविधावपि तथैवेति सुप्त्वादेव स्वरसिद्धेः पित्त्वमनर्थकमेव स्यात्। यदि च सुब्ग्रहणेषु कपः पकारेण प्रत्याहारोऽभिमतः स्यात् 'सुप्यसर्वनामस्थाने' इत्येव ब्रूयात्, 'स्वादिषु' इति गुरुनिर्देशोऽनर्थकः स्यात्। *ब्राह्मणा इति*। पदत्वाद्रुत्वविसर्जनीयौ।

ननु यस्मात्प्रत्ययविधिस्तदादीत्यनुवृत्तस्य सुप्तिङ्भ्यां विशेषणादेव तदन्तस्य ग्रहणं सिद्धम्, नार्थोऽन्तग्रहणेन, तत्राह—*पदसंज्ञायामिति*। इहासत्यन्तग्रहणे सुप्तिङामेव संज्ञा स्यात्, ततश्चाग्निष्वित्यादौ 'सात्पदाद्योः' इति षत्वनिषेधः स्यादित्याशङ्क्य क्रियमाणमन्तग्रहणमुक्तस्यार्थस्य ज्ञापकं संपद्यते। *गौरीब्राह्मणितरेति*।

### न्यासः

सुप्तिङन्तं पदम्॥ सुप् तिङिति प्रत्याहारग्रहणमिति। युक्तं हि तिङिति प्रत्याहारग्रहणम्, अन्यस्य तिङ्शब्दस्याभावात्; कथं सुबिति प्रत्याहारग्रहणम्, सप्तमीबहुवचनस्य विद्यमानत्वात् तस्य ग्रहणं कस्मान्न भवतीति? नैष दोषः; 'न ङिसम्बुद्ध्योः' इति प्रतिषेधात्। सप्तमीबहुवचनस्य सुपो ग्रहणे ङिसम्बुद्ध्योः पदत्वाभावान्नलोपस्य प्राप्तिरेव नास्तीति प्रतिषेधोऽनर्थकः स्यात्। ब्राह्मणा इति। पदत्वे च सति 'ससजुषो रुः', 'खरवसानयोर्विसर्जनीयः'। पठन्तीति। अत्र पदत्वे सति 'तिङ्ङतिङः' इति निघातः।

ननु च 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य' इत्यनेन 'येन विधिस्तदन्तस्य' इत्यनेन वाऽन्तरेणाप्यन्तग्रहणं तदन्तस्यैव संज्ञा भविष्यति, तत् किमर्थमन्तग्रहणमित्यत आह—पदसंज्ञायामित्यादि। यदीहान्तग्रहणेनाप्यन्यत्र संज्ञाविधौ

पदप्रदेशाः—'पदस्य', 'पदात्' इत्येवमादयः ॥

## नः क्ये ॥ १५ ॥

'क्ये' इति क्यच्क्यङ्क्यषां सामान्यग्रहणम्। नान्तं शब्दरूपं क्ये परतः पदसंज्ञं भवति। क्यच्—राजीयति। क्यङ्—राजायते। क्यष्—वर्मायति, वर्मायते।

सिद्धे सत्यारम्भो नियमार्थः—नान्तमेव क्ये परतः पदसंज्ञं भवति, नान्यत्। वाच्यति। स्रुच्यति ॥

पदमञ्जरी

तरबन्तस्य घसंज्ञायां सत्यां तत्रोत्तरपदे परतो गौरीशब्दस्य पुंवद्भावं बाधित्वा परत्वाद् ह्रस्वत्वं स्यात्। तरपि तु परतो ब्राह्मणीशब्दस्य न स्यात्; ततश्च गौरीब्राह्मणतरेति स्याद्, गौरब्राह्मणितरेति चेष्यते। वृत्तौ तु समासप्रदर्शनपरं वाक्यमुपात्तम्, न त्वेतत्कार्योदाहरणम्। गौरब्राह्मणितरेति समासे रूपम् ॥

*नः क्ये ॥ क्य इति क्यच्क्यष्क्यङामिति।* 'संज्ञायां समज' इत्यस्य तु क्यपो ग्रहणं न भवति; प्रयोजनभावात्। न तावन्मन्येत्यत्र नलोपः प्रयोजनम्, सत्यपि पदत्वेऽप्रातिपदिकत्वात्; सुबन्तमित्यनुवृत्तेर्वा क्यपि विध्यर्थमेतन्न भवति।

ननु क्यजादयः सर्वे सुबन्ताद्विधीयन्त इति प्रत्ययलक्षणेन सिद्धं पदत्वम्, नार्थ एतेन तत्राह—*सिद्धे सतीति। नान्तमेवेति।* क्य एव नान्तमित्येवं तु विपरीतनियमो न भवति; 'न ङिसम्बुद्ध्योः' इति निषेधात्। *वाच्यतीति।* अत्र पदत्वा-

न्यासः

तदन्तविधिर्नास्तीत्येषोऽर्थो न ज्ञाप्यते, तदा 'तरप्तमपौ घः' इत्यत्र तरबन्तस्य घसंज्ञा स्यात्, न प्रत्ययमात्रस्य। तस्मादत्रास्मिन्नर्थेऽन्तग्रहणेन ज्ञाप्यते—अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधो यथा स्यादित्येवमर्थमन्तग्रहणम्। तेन तरप्तमपोरेव घसंज्ञा भवति, न तु तदन्तस्य। गौरीब्राह्मणितरेति। अत्र गौरीशब्दस्य तरबन्ते ब्राह्मणितराशब्दे परतः 'घरूपकल्प' इत्यादिना ह्रस्वो न भवति; तरबन्तस्याघसंज्ञकत्वात्। प्रत्ययमात्रस्य घसंज्ञायां तत्र परतो ब्राह्मणीशब्दस्य ह्रस्वो भवत्येव ॥

नः क्ये ॥ राजीयतीति। आत्मनो राजानमिच्छतीति 'सुप आत्मनः क्यच्'। 'क्यचि च' इतीत्त्वम्। राजायते इति। राजेवाचरतीति 'कर्त्तुः क्यङ् सलोपश्च' इति क्यङ्। 'अकृत्सार्वधातुकयोः' इति दीर्घः। वर्मायते इति। अवर्म वर्म भवतीति 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः। 'वा क्यषः' इत्यात्मनेपदम्। पदसंज्ञायामिह नलोपः कार्यः।

ननु चैते क्यजादयः सुबन्तादेव विधीयन्ते प्रत्ययलक्षणेन, ततश्च सुप्तिङन्तं पदम्' इत्यनेनैवात्र पदसंज्ञा सिद्धा, तत् किमर्थोऽयमारम्भ इत्यत आह—सिद्धे

## सिति च ॥ १६ ॥

'यचि भम्' इति वक्ष्यति, तस्यायं पुरस्तादपवादः । सिति प्रत्यये परतः पूर्वं पदसंज्ञं भवति । 'भवतष्ठक्छसौ'—भवदीयः । 'ऊर्णाया युस्'—ऊर्णायुः । 'ऋतोरण्', 'छन्दसि घस्'—ऋत्वियः ॥

## स्वादिष्वसर्वनामस्थाने ॥ १७ ॥

### पदमञ्जरी

भावात्कुत्वजश्त्वे न भवतः । ये तु गोसमानाक्षरनान्तादेव क्यज् भवति, नान्येभ्य इत्याहुः, तेषां क्यङ्क्यषोरेव नियमस्य व्यावर्त्यं प्रदर्शनीयम्—तपस्यतीत्यादौ ॥

*सिति च* ॥ *भवदीय इति* । पदत्वाज्जत्वम् । *ऊर्णायुरिति* पदसंज्ञाया निरस्तत्वाद् यस्येति लोपाभावः । एवम् *ऋत्विय* इति 'ओर्गुणः' न भवति, चकारोऽनुक्तसमुच्चयार्थः, तेन भुवद्धारयतोर्मतोश्छन्दसि 'तसौ मत्वर्थे' इति भसंज्ञां बाधित्वा पदसंज्ञा भवति, तेन भुवद्वद्भ्यः, धारयद्वद्भ्यः ॥

*स्वादिष्वसर्वनामस्थाने* ॥ *स्वादिष्विति सुशब्दादेकवचनादिति* । सप्तमीबहुवचनादारभ्य ग्रहणं न भवति; 'असर्वनामस्थाने' इति निषेधात्, यदि हि राजश्रित इत्यादौ सर्वनामस्थाने 'सुबन्तम्' इति प्राप्तायाः संज्ञायाः निषेधोऽभीष्टः स्यात्, तत्रैव 'असर्वनामस्थाने' इति ब्रूयात् । अथ राजवानित्यादावन्तर्वर्तिनिषेध

### न्यासः

स्त्यारम्भो नियमार्थः । सिद्ध इति सिद्धावित्यर्थः । 'नपुंसके भावे क्तः' । सिद्धत्वन्तु प्रकृतत्वात् पदसंज्ञायां एव विज्ञायते । अथ वा सिद्ध इत्यकर्मकत्वात् कर्त्तरि क्तप्रत्ययः । सिद्धे = निष्पन्ने पदसंज्ञाकार्य इत्यर्थः । नान्तमेवेति । नियमस्य स्वरूपं दर्शयति । नान्तं क्य एव-इत्येष विपरीतनियमो नाशङ्कनीयः; 'न ङिसम्बुद्ध्योः' इति प्रतिषेधात् । विपरीतनियमे हि सति ङिसम्बुद्ध्योः पदसंज्ञाया अभावान्नलोपो न भविष्यतीति किं तत्प्रतिषेधेन ? वाच्यतीति । 'सुप आत्मनः क्यच्' । क्यचि पदत्वाभावात् 'चोः कुः' इति कुत्वं न भवति ॥

सिति च ॥ भवदीय इत्यादि । 'तत्र जातः' इत्यादौ शैषिकेऽर्थे तद्धितः, पदत्वात् 'झलाञ्जशोऽन्ते' इति जश्त्वम् । ऊर्णायुरिति । 'ऊर्णाया युस्' इति युसि कृते पदसंज्ञया भसंज्ञायां निरस्तायाम् 'यस्येति च' इत्याकारलोपो न भवति । ऋत्विय इति । ऋतुः प्राप्तोऽस्येति 'ऋतोरण्' 'छन्दसि घस्' ऋत्वियः, पदत्वाद् भत्वाभावे तदाश्रयः 'ओर्गुणः' न भवति ॥

स्वादिष्वसर्वनामस्थाने ॥ अत्र यदि सप्तमीबहुवचनादारभ्य आ कपः प्रत्यया गृह्येरन्, तदा 'असर्वनामस्थाने' इति प्रतिषेधं न कुर्यात्; प्राप्त्यभावात् । कृतश्चासान-

'स्वादिषु' इति सुशब्दादेकवचनादारभ्य आ कपः प्रत्यया गृह्यन्ते। स्वादिषु प्रत्ययेषु परतः सर्वनामस्थानवर्जितेषु पूर्वं पदसंज्ञं भवति। राजभ्याम्, राजभिः। राजत्वम्, राजता। राजतरः, राजतमः।

असर्वनामस्थाने इति किम्? राजानौ, राजानः॥

पदमञ्जरी

इति चेद्, न; लुमता लुप्ते प्रत्ययलक्षणाभावात्, 'तसौ मत्वर्थे' इति पदसंज्ञाबाधनाय भसंज्ञाविधानाच्च। *आ कप इति*। यदि पुनः सप्तमीबहुवचनपर्यन्ता एकविंशतिः प्रत्यया गृह्येरन्, तदा सुब्ग्रहणमेव कुर्याद्, अनुवर्त्तयेद्वा; 'असर्वनामस्थाने' इत्यनेन सम्बन्धात्सप्तम्या विपरिणामात् सिद्धम्। किमर्थं पुनरा कपः प्रत्यया गृह्यन्ते, यावता सुबन्तात्तद्धितोत्पत्तिः समर्थाधिकारात्, स्वार्थिका अपि सुबन्तादेव, 'घकालतनेषु' इति लिङ्गात्, ततश्च राजत्वं राजतेत्यादावन्तर्वर्तिन्या विभक्त्या सुबन्तं पदमित्येव सिद्धम्? सत्यम्; भसंज्ञार्थं त्वा कपः प्रत्यया गृहीताः। *राजत्वमित्यादि*। सुबन्तत्वेऽपि परत्वादनेन पदत्वं युक्तमित्येषामुपन्यासः।

*राजानौ, राजान इति*। अत्रापदत्वान्नलोपाभावः, राजेत्यत्र तु प्रत्ययलक्षणेन निषेधो न भवति 'न ङिसम्बुद्ध्योः' इति लिङ्गान्नैतल्लिङ्गमुपपद्यते। हे वर्मन्निति नपुंसके लुमता लुप्ते सर्वनामस्थाने निषेधाभावादस्त्येव पदत्वमिति तत्रार्थवान् प्रतिषेधः। एवं तर्हि नायं प्रसज्यप्रतिषेधः—सर्वनामस्थाने नेति, किं तर्हि? पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति। सर्वनामस्थाने न विधिर्न प्रतिषेधः; यदि केनचित्प्राप्नोति, भवत्येव, पूर्वेण प्राप्नोति, अथ वा—अनन्तरा या प्राप्तिः सा

न्यासः

तोऽवसीयते प्रथमैकवचनादारभ्या कपः प्रत्ययाः स्वादयो गृह्यन्त इत्यत आह—स्वादिष्विति सुशब्दादेवचनादारभ्य इति। राजत्वम्, राजता इति। 'तस्य भावस्त्वतलौ'। राजतर इति। 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति तरप्। राजतम इति। 'अतिशायने' इत्यादिना तमप्।

राजानौ, राजान इति। अत्र पदसंज्ञाया अभावान्नलोपो न भवति। यद्येवम्, राजेत्यत्रापि न स्यात्, प्रत्ययलक्षणेनासर्वनामस्थान इति पदसंज्ञाया अभावात्, नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—भवति सौ परतः पदसंज्ञेति, यदयम् 'न ङिसम्बुद्ध्योः' इति प्रतिषेधं शास्ति। अत्र सम्बुद्धिशब्दोऽनर्थकः स्यात्, तत्र पदत्वाभावादेव नलोपस्याप्राप्तेः। अथ वा—'असर्वनामस्थाने' इति पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः, तेन सर्वनामस्थानादन्यत्र पदसंज्ञा विधीयते; न तु सर्वनामस्थानं प्रतिषिध्यते। तेन

## यचि भम् ॥ १८ ॥

'स्वादिष्वसर्वनामस्थाने' इति वर्तते। पूर्वेण पदसंज्ञायां प्राप्तायां तदपवादो भसंज्ञा विधीयते। यकारादावजादौ च स्वादौ सर्वनामस्थानवर्जिते प्रत्यये परतः पूर्वं भसंज्ञं भवति। यकारादौ—गार्ग्यः, वात्स्यः। अजादौ—दाक्षिः, प्लाक्षिः ॥

### पदमञ्जरी

प्रतिषिध्यते। कुतः पुनरेतद् ? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'। अथ वा—'सर्वनामस्थाने' इत्यत्र यचीत्यपकृष्य सम्बध्यते, तेन यजादौ पदसंज्ञा निषिध्यते, न हलादाविति राजेत्यादौ स्वादौ स्वादिष्विति वा सुबन्तमिति वा भवत्येव। अथ कस्माच्छसादिष्विति नोच्यते, एवं हि 'असर्वनामस्थाने' इति न वक्तव्यं भवति ? उत्तरार्थं सुट्यपि नपुंसके भसंज्ञा यथा स्यात्, साम्नी इत्यत्र मा भूद्। भसञ्ज्ञा 'विभाषा ङिश्योः' इति वचनसामर्थ्यादेवाभस्याप्यल्लोपो भविष्यति। तत्रायमप्यर्थो यस्येत्यादौ 'श्यां प्रतिषेधः' इति न वक्तव्यं भवति; अभत्वादेव सिद्धम्। इह तर्हि सुपदी ब्राह्मणकुले इति पद्भावो न स्यादभत्वात्, इह च सामानि पश्येति भत्वादल्लोपः स्यादिति यथान्यासमेवास्तु ॥

*यचि भम्* ॥ *यकारादावित्यादि* । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति तदादिविधिः। *गार्ग्य इत्यादौ* भत्वाद्यस्येति लोपः। *नभोऽङ्गिरोमनुषां वत्युपसंख्यानमिति*। द्वे अप्येते उपसंख्याने छन्दोविषये इत्याहुः। *नभ इवेति*। तृतीयासमर्थाद्वतेर्विधानात् तुल्यार्थोपदर्शनमेतत्, नभसा तुल्यं वर्त्तत इति विग्रहः। पदनिबन्धनकार्यनिवृत्त्यर्थमेव चैषां भसञ्ज्ञा विधीयते, न तु भत्वनिमित्तं कार्यं यथा स्यादिति; असम्भवात्।

### न्यासः

तत्र पूर्वसूत्रेण सौ परे पदसंज्ञा भविष्यति। अथ वा—प्रसज्यप्रतिषेधेऽपि न दोषः, यस्माद् 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इत्यनन्तरा या प्राप्तिः सा प्रतिषिध्यते, न व्यवहिता। तेन 'सुप्तिङन्तं पदम्' इत्यनेन सौ भवत्येव पदसंज्ञेति।

यचि भम् ॥ यचीति वर्णग्रहणं सप्तमीनिर्दिष्टम्। अतः 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिनात्र भवितव्यमित्यत आह—यकारादावित्यादि। गार्ग्य इत्यादौ भसंज्ञायां सत्याम् 'यस्येति च' इत्यकारलोपः।

'नभोऽङ्गिरोमनुषां वत्युपसंख्यानं कर्तव्यम्' इति। भसंज्ञायास्त्वत्र पदसंज्ञाबाधः फलम्। नभ इवेति तुल्यार्थतोपदर्शनमेतत्, न तु प्रथमासमर्थाद्वतिः। स तु नभसा

※ नभोऽङ्गिरोमनुषां वत्युपसंख्यानम् ※। नभ इव नभस्वत्। अङ्गिरा इव अङ्गिरस्वत्। मनुरिव मनुष्वत्।

※ वृषण्वस्वश्वयोः ※। वृषन्नित्येतत् वस्वश्वयोः परतो भसंज्ञं भवति छन्दसि विषये। वृषण्वसुः। वृषणश्वस्य मेने।

भप्रदेशाः—'भस्य' इत्येवमादयः॥

## तसौ मत्वर्थे॥ १९॥

'भम्' इति वर्त्तते। तकारान्तं सकारान्तं शब्दरूपं मत्वर्थे प्रत्यये

### पदमञ्जरी

*नभस्वद्, अङ्गिरस्वदिति*। अत्रापदत्वाद्रुत्वाभावो मनुष्वदित्यत्र पदत्वे रुत्वं स्याद्, न तु षत्वम्; अपदान्तस्येति वचनात्।

*वृषण्वसुः, वृषणश्व इति*। पदत्वे सति 'पदान्तस्य' इति प्रतिषेधाण्णत्वं न स्यात्, नलोपश्चं स्याद्। भत्वेऽप्यल्लोपो न भवति; अनङ्गत्वात्॥

*तसौ मत्वर्थे*॥ मत्वर्थीयेनाक्षिप्तायाः प्रकृतेस्तकारसकाराभ्यां विशेषणात्त-दन्तविधिरित्याह—*तकारसकारान्तमिति*। *मत्वर्थे प्रत्यये इति*। व्यधिकरणे सप्तम्यौ, मतोरर्थो मत्वर्थस्तत्र यः प्रत्ययो वर्त्तते तस्मिन्नित्यर्थः। अथ वा समा-नाधिकरणे मतुशब्देन साहचर्यात्तदर्थो लक्ष्यते—मतुरर्थो यस्य तस्मिन्नित्यर्थः।

### न्यासः

तुल्यं वर्त्तत इति 'तेन तुल्यम्' इत्यादिना तृतीयासमर्थाद्वतिः। नभस्वदिति। भसं-ज्ञया पदसंज्ञायां निरस्तायां तन्निबन्धनं रुत्वं न भवति। अङ्गिरस्वदिति। पूर्वेण तुल्यम्। मनुष्वदिति। 'जनेरुसिः' इत्यत्र बहुलग्रहणानुवृत्तेः 'मन ज्ञाने' इत्ये-तस्मादुसिप्रत्ययः। 'आदेशप्रत्यययोः' इति षत्वम्। मनुष् इति स्थिते पूर्ववद्वतिः—मनुष्वदिति। यद्यत्र पदसंज्ञा स्यात् तदा षत्वस्यासिद्धत्वादिह रुत्वं स्यात्, ततश्च मनुर्वदित्यनिष्टं रूपं स्यात्। उपसंख्यानशब्दस्य चेह प्रतिपादनमर्थः। तत्रेदं प्रति-पादनम्—'सिति च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन नभोऽङ्गि-रोमनुषां वतौ भसंज्ञा भविष्यति।

वृषण्वस्वश्वयोरिति। अन्तवर्त्तिनीं विभक्तिमाश्रित्य पदसंज्ञायां प्राप्तायां भसंज्ञा विधीयते, तस्याश्च विधिश्चकारानुवृत्तेरेव लभ्यते। वृष्णो वसुः वृषण्वसुः। वृष्णोऽश्वः वृषणश्वः अत्र भत्वे सति यद्यपि णत्वस्यासिद्धत्वम्, तथापि नलोपः पदनिबन्धनो न भवति, 'पदान्तस्य' इति णत्वप्रतिषेधश्च॥

तसौ मत्वर्थे॥ तसाविति वर्णग्रहणम्। न च वर्णमात्रान्मत्वर्थीयः सम्भवति, अतः सामर्थ्यात् तदन्तविधिर्विज्ञायत इत्याह—तकारान्तमित्यादि। मत्वर्थे प्रत्यय इति

परतो भसंज्ञं भवति। उदश्वित्वान् घोषः। विद्युत्वान् बलाहकः। सकारान्तम्—पयस्वी, यशस्वी।

तसाविति किम्? तक्षवान् ग्रामः॥

पदमञ्जरी

*उदश्वित्वानिति*। भत्वात् पदत्वाभावे जश्त्वं न भवति, 'झयः' इति वत्वम्। उदकेन श्वयति वर्द्धते उदश्वित्, क्विपि 'उदश्वितोऽन्यतरस्याम्' इति निपातनात् संप्रसारणाभावः, संज्ञायामुद्भावः। *पयस्वीति*। 'अस्मायामेधास्रजो विनिः' भत्वाद्रुत्वाभावः।

मत्वर्थग्रहणं किमर्थम्, न 'मतौ' इत्युच्यते, स्वादिष्विति वर्त्तते, व्यधिकरणे सप्तम्यौ, मतौ ये स्वादयः। कथं पुनः शब्दे नाम शब्दो वर्त्ततेऽसम्भवात्, अर्थे वृत्तिर्विज्ञास्यते? यद्येवं लभ्येत, कृतं स्यात्; तत्तु न लभ्यम्, न हि सामानाधिकरण्ये सम्भवति वैयधिकरण्यं शक्यं विज्ञातुम्, ततश्च मतावेव स्यात्—पयस्वान् यशस्वानिति, इह तु न स्यात्—पयस्वी, यशस्वीति, अतोऽर्थग्रहणं कर्तव्यम्। यद्यर्थग्रहणं क्रियते, मतुपि न प्राप्नोति; तस्यार्थविशेषणत्वात्, सत्यम्; अर्थविशेषणं मतुब्, विशेष्याकारोऽपि तत्रास्ति। अस्यास्त्यस्मिन्निति च मतुपोऽर्थः, स च विन्यादीनामिव मतुपोऽप्यविशिष्टः, यथा—देवदत्तशालायामासीना ब्राह्मणा आनीयन्तामित्युक्ते विशेषणभूतोऽपि देवदत्तः सति ब्राह्मण्ये आनीयते। यत्र उपलक्ष्याकारस्यासम्भवः तत्रैवोपलक्षणस्य कार्यायोगः, तद्यथा–चित्रगुरानीयतामिति, न हि चित्रगवीणां चित्रा गावः सन्ति॥

न्यासः

व्यधिकरणे पदे षष्ठीसमासः। मतोरर्थो मत्वर्थ इति, तत्र यो वर्त्तते प्रत्ययस्तस्मिन्नित्यर्थः। अथ वा—समानाधिकरणे पदे, मतुशब्देन साहचर्यान्मतुप्सहचरितार्थं उच्यते—मतुबर्थो यस्य तस्मिन्, न तु मतोरर्थो यस्मिन्निति मत्वर्थे प्रत्यय इति।

अर्थग्रहणं मतुपोऽन्यत्रापि यथा स्यात्; इतरथा हि मतावित्युच्यमाने मतावेव स्यात्; नान्येषु। मत्वर्थग्रहणे क्रियमाणे मतुपि न स्यात्; तस्यार्थविशेषणत्वात्। विशेषणस्य च कार्येण सम्बन्धानुपपत्तेः। न हि चित्रगुरानीयतामित्युक्ते विशेषणभूता गावोऽप्यानीयन्ते, नैष दोषः; विशेषणमपि क्वचित् कार्ये विशिष्यते, यथा हि—देवदत्तशालाया ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तः शालायां विशेषणभूतो यदि ब्राह्मणो भवति तदा सोऽप्यानीयत एव। उदश्वित्वानिति। भत्वात् पदसंज्ञाऽभावे जश्त्वं न भवति। 'झयः' इति वत्वम्, 'उगिदचाम्' इति नुम्, 'अत्वसन्तस्य चाधातोः' इति दीर्घः। पयस्वी, यशस्वीति। 'अस्मायामेधास्रजो विनिः', भत्वाद्रुत्वं न भवति। 'इन्हन्पूषार्यम्णां सौ' इत्यनुवर्त्तमाने 'सौ च' इत्यनेन दीर्घः॥

## अयस्मयादीनिच्छन्दसि ॥ २० ॥

अयस्मयादीनि शब्दरूपाणि छन्दसि विषये साधूनि भवन्ति । भपदसंज्ञाधिकारे विधानात्तेन मुखेन साधुत्वमयस्मयादीनां विधीयते । अयस्मयं वर्म । अयस्मयानि पात्राणि । क्वचिदुभयमपि भवति—स सुष्टुभा सऋक्वता गणेन । पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति ।

छन्दसीति किम् ? अयोमयं वर्म । आकृतिगणोऽयम् ॥

## बहुषु बहुवचनम् ॥ २१ ॥

ङ्याप्प्रातिपदिकात्स्वादयः, लस्य तिबादय इति सामान्येन बहु-

### पदमञ्जरी

*अयस्मयादीनिच्छन्दसि* ॥ यदि संज्ञा विधीयेत आनन्तर्याद्भसंज्ञाविधान-द्वारेणैव निपातनं स्यात्, पदसंज्ञा न स्याद्, भपदसंज्ञयोः समावेशो न स्यात्, तस्मात्साधुत्वमेव युक्तं विधातुमिति मत्वाह—*अयस्मयादीनीत्यादि* । साधुत्वे प्रकारविशेषं दर्शयति । *भपदसंज्ञाधिकार इत्यादि* । द्वारम्=उपायः । *अयस्मयमिति* । अयसो विकारः 'द्व्यचश्छन्दसि' इति मयट् ॥

*बहुषु बहुवचनम्* ॥ *बहुवचनं विहितमिति* । ततश्च तस्य विधेयविभक्तिनि-र्दिष्टस्यापि प्राप्तत्वादनुवाद्यत्वम्, न तु विधेयत्वमिति भावः । बहुत्वसंख्यानुभूत-

### न्यासः

अयस्मयादीनि च्छन्दसि ॥ यद्यत्र भसंज्ञा विधीयेत तदा पदसंज्ञा न स्यात्, अथ यदि पदसंज्ञा विधीयेत तदात्र भसंज्ञा न स्यात्, तदा भपदसंज्ञयोः समावेशो न स्यात् ; एकसंज्ञाधिकारात् । साधुत्वविधाने त्वेष दोषो न भवति, तद्धि केषाञ्चिद्भ-संज्ञा विधीयते पदसंज्ञकानाम्, केषाञ्चिदुभयसंज्ञकानाम् ; तस्मात् साधुत्वमेव विधातुं युक्तमित्यत आह— अयस्मयादीनीत्यादि । कथं पुनरेषां साधुत्वं विधीयत इत्याह— भपदसंज्ञाधिकार इत्यादि । द्वारम्, मुखम्, उपाय इत्यनर्थान्तरम् । अयस्मयमिति । अयसो विकारः 'मयड्वैतयोर्भाषायाम्' इति मयट् । यद्यपि तत्र भाषाग्रहणमस्ति, तथाप्य-यस्मयशब्दस्यास्मादेव साधुत्वविधानाच्छन्दस्यपि मयड् भवतीति मत्वाद्रुत्वं न भवति । सऋक्वतेति । ऋचोऽस्य सन्तीति मतुप् । पदत्वात् 'चोः कुः' इति कुत्वम् । भत्वात् 'झलां जशोऽन्ते' इति जश्त्वं न भवति । आकृतिगणोऽयमिति । आदिशब्दस्य प्रकारवाचित्वात् ॥

बहुषु बहुवचनम् ॥ तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयत इति । एतेन विध्यर्थतामस्य योगस्य दर्शयति ।

वचनं विहितम्, तस्यानेन बहुत्वसंख्या वाच्यत्वेन विधीयते। बहुषु बहुवचनं भवति। बहुत्वमस्य वाच्यं भवतीति यावत्।

### पदमञ्जरी

विभक्तिर्निर्दिष्टाप्यप्राप्तत्वाद्विधीयत इत्याह—*तस्यानेनेति*। इदं चापरमनेन ग्रन्थेन दर्शितम्-स्वादिविधिवाक्येन हि भिन्नमेतद् वाक्यम्। तत्रापि विध्यर्थं न तु नियमार्थमिति। यदाह—*बहुवचनं विहितमिति*। *बहुत्वसंख्यावाच्यत्वेन विधीयत इति* च। यदि पुनरेकवाक्यतया विशिष्टविधिः स्याद्, इतरेतराश्रयं प्राप्नोति—विहितानां जसादीनां बहुवचनसंज्ञा, संज्ञया च विधानमिति। किं चाव्ययेभ्यो निःसंख्येभ्यः स्वादयो न स्युरतो भिन्नवाक्यत्वमेव युक्तम्, तत्रापि विध्यर्थत्वमेव।

इह केचिन्मन्यन्ते—स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थं इति। आदितस्त्रिक इत्यन्ये। तत्र शब्दप्रवृत्तिनिमित्तं *स्वार्थः*, स चानेक प्रकारः—

### न्यासः

इह केषाञ्चित् 'स्वार्थद्रव्यलिङ्गसंख्याकर्माद्यात्मकः पञ्चकः प्रातिपदिकार्थः' इति दर्शनम्। केषाञ्चित् 'स्वार्थद्रव्यलिङ्गात्मकस्त्रिकः प्रातिपदिकार्थः' इति। तत्र स्वार्थो विशेषणम्, स्वरूपजातिगुणद्रव्याणि। द्रव्यन्तु विशेष्यम्, तत् पुनर्जातिगुणद्रव्याणि। तत्र यदा शब्दस्वरूपेण विशिष्टा जातिरभिधीयते—गौरिति, तदा शब्दस्वरूपं विशेषणत्वात् स्वार्थो भवति; जातिस्तु विशेष्यत्वाद् द्रव्यम्। यदा तु जात्या विशिष्टो गुणोऽभिधीयते—पटस्य शुक्लो गुण इति, तदा जातिर्विशेषणत्वात् स्वार्थो भवति; गुणस्तु विशेष्यत्वाद् द्रव्यम्। यदा तु गुणैर्विशिष्टं पटादिकं द्रव्यमुच्यते—शुक्लः पट इति, तदा विशेषणभूतो गुणः स्वार्थो भवति; विशेष्यभूतं पटादिकं द्रव्यमेव। यदा पुनर्द्रव्यमपि द्रव्यान्तरस्य विशेषणभूतं भवति—यष्टीः प्रवेशय, कुन्तान् प्रवेशयेत्यादौ, तदा यष्ट्यादिकं द्रव्यं विशेषणभावापन्नं स्वार्थः; द्रव्यान्तरं विशेष्यभावापन्नं पुरुषादिकं द्रव्यमेव। क्वचित् सम्बन्धोऽपि स्वार्थो भवति—यत्र सम्बन्धनिमित्तकः प्रत्यय उत्पद्यते, यथा—दण्डी, विषाणीति। अत्र दण्डपुरुषसम्बन्धो विशेषणम्, दण्डीति द्रव्यम्। क्वचित् क्रियापि स्वार्थो भवति, यत्र क्रियानिमित्तकः प्रत्यय उत्पद्यते, यथा—पाचकः पाठक इति। क्रियाकारकसम्बन्धोऽत्र स्वार्थ इत्यपरे। लिङ्गं स्त्रीत्वादि, संख्यैकत्वादि, कर्मादयो वक्ष्यमाणाः कारकविशेषाः। तत्र पूर्वोक्तयोर्दर्शनयोर्द्वितीयं यद्दर्शनं तदिह वृत्तिकारेणाश्रितम्।

धातोस्तु क्रियैव वाच्येत्यत्राचार्याणामविवाद एव। तत्र प्रातिपदिकस्य पूर्वोक्ते त्रिकेऽर्थे सति धातोश्च क्रियात्मकत्वे यदीदं सूत्रं नोच्येत, ततोऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति प्रातिपदिकाज्जसादिबहुवचनं विधीयमानं त्रिक एवार्थे स्यात्, न बहुत्वसंख्यायाम्। धातोरपि झिप्रभृति बहुवचनं विधीयमानं क्रियायामेव स्यात्, न तु

पदमञ्जरी

स्वरूपं जातिर्गुणः क्रिया द्रव्यं सम्बन्धश्चेति, डित्थो गौः शुक्लः पाचकः यष्टिः पुरुषः दण्डीति। जात्यादिशब्देष्वपि जात्यादिमात्रनिष्ठेषु स्वरूपमेव प्रवृत्तिनिमित्तम्। अभिधानाभिधेययोरभेदाध्यासात् शब्दरूपानुरक्तोऽर्थोऽभिधीयते। अस्य गौरिति नाम, अयं गौरिति च प्रतीतिवेषो भिद्यते। अत्र हेतुर्वैयधिकरण्यम्, सामानाधिकरण्यं च। तत्र जात्यादिवत् स्वरूपमपि शब्दत एव प्रतिपन्नमप्यर्थस्य विशेषणं मन्यन्ते। उक्तं च—

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा।
तथैव सर्वशब्दानामेते पृथगवस्थिते॥ इति।

तेन स्वरूपमपि स्वार्थो युज्यते।

स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदिष्यते॥

पर्यवसानभूमिरित्यर्थः। तच्चानेकप्रकारम्—जातिर्गुणः क्रिया द्रव्यं स्वरूपमिति; गौः, शुक्लः, पाकः, डित्थः, 'तूष्णीमि भूवः' इति। *लिङ्गं* स्त्रीत्वादि। *संख्या* एकत्वादि, *कर्मादयो* वक्ष्यमाणाः कारकविशेषाः।

न्यासः

बहुत्वसंख्यायाम्। तस्मादनेनैव तस्य बहुत्वसंख्या वाच्यत्वेन विधीयत इति विध्यर्थमेतद् भवति। यथा चानेन योगेन बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते, तथा 'कर्मणि द्वितीया' इत्येवमादिभिर्योगैर्द्वितीयादीनां कर्मादि च। 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यनेनापि लकाराणां कर्माद्येव। तस्मादेतेऽपि योगा विध्यर्था एव वेदितव्याः।

येषाञ्च पञ्चकं प्रातिपदिकार्थ इति मतम्, तेषां प्रातिपदिकस्यैव पञ्चाप्यर्था वाच्याः। विभक्तयश्च तद्द्योतिका भवन्ति। तत्रानिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति विनापि वचनेनानेन प्रातिपदिकाद् बहुवचनं जसादि बहुत्वे सिद्धमेव। तत्र त्वनियमेनान्यत्राप्येकत्वादौ प्राप्तमनेन नियम्यत इति नियमार्थमेतद् भवति।

कस्मात् पुनर्वृत्तिकारेण त्रिकं प्रातिपदिकार्थ इति दर्शनमाश्रितम्? युक्तत्वात्। तथा हि—वृक्षं पश्येत्यादौ न हि विना विभक्तिभिः संख्याकर्मादयश्चार्थाः प्रतीयन्ते। यद्यपि पयः पयो जरयतीत्यादौ विनापि विभक्त्या संख्याकर्मादेरर्थस्य प्रतीतिर्भवतीति, तथापि पयसी पयांसि पयसेत्येवमादौ संख्याकर्मादिप्रतीत्यर्थं नियोगतो विभक्तिरपेक्ष्यत एव। न हि यथा गर्गा इत्यत्र बहुवचनेन यञ्प्रत्ययमन्तरेणापत्यार्थः प्रतीयते, तथा गार्ग्य इत्यत्र प्रकृतिरेवापत्यार्थमभिधत्त इति शक्यते वक्तुम्। अपि च—पयः पयो जरयतीत्येवमादौ विभक्तिविशेषोत्पत्तिसामर्थ्यादेव संख्याकर्माद्यर्थस्य प्रतीतिर्भवति। तथा हि, यतः स विभक्तिविशेष उत्पन्नस्तत एवासावर्थविशेषः प्रतीयते, नान्यस्मादिति त्रिक एव प्रातिपदिकार्थो युक्तः।

कर्मादयोऽप्यपरे विभक्तीनामर्था वाच्याः, तदीये बहुत्वे बहुवचनम्, कर्मादिषु बहुषु बहुवचनमित्यर्थः । ब्राह्मणाः पठन्ति ।

पदमञ्जरी

तदिह द्वितीयं दर्शनं *वृत्तिकारेणाश्रितम्* । अन्वयव्यतिरेकाभ्यां हि शब्दार्थनिश्चयः, यस्य शब्दस्यान्वये योऽर्थः प्रतीयते, व्यतिरेके च व्यतिरिच्यते स तस्यार्थः । वृक्षः वृक्षौ वृक्षा इत्यादौ च तत्तद्वचनान्वये सा सा संख्या प्रतीयते व्यतिरेके च व्यतिरिच्यते सत्यपि प्रकृत्यन्वये, तेन मन्यामहे—वचनार्थः संख्येति । तथा वृक्षं वृक्षेण वृक्षायेत्यादौ तत्तत्त्रिकान्वये स स कर्मादिः प्रतीयते, व्यतिरेके च व्यतिरिच्यते, तेन मन्यामहे—त्रिकार्थः कर्मादिरिति । यद्यपि पयो दधि मध्वित्यादावन्तरेण वचनमन्तरेण च त्रिकं स सोऽर्थः प्रतीयते, नैतावता विभक्त्यर्थत्वं हीयते, न हि गर्गा इत्यत्रान्तरेणापि यञमपत्यार्थः प्रतीयते इति गार्ग्य इत्यत्रापि प्रकृतेरेवापत्यमर्थ इति युक्तं वक्तुम्, पचति पचतः पचन्तीत्यादौ वचनान्वये संख्यान्वयाद्व्यतिरेके च व्यतिरेकाद् वचनार्थ एव संख्या, न धात्वर्थः । अबिभर्भवानित्यादौ यद्यप्यन्तरेणापि तिङं कर्त्ता संख्या च प्रतीयते, तथापि नैतावता सर्वत्र प्रकृत्यर्थत्वं युक्तम् । न हि भित्, छिदित्यादौ अन्तरेणापि प्रत्ययं कर्त्ता प्रतीयते इति भेत्तेत्यादावपि कर्त्ता प्रकृत्यर्थो भवति । तदेवं त्रिक एव प्रातिपदिकार्थः ।

धातोश्च क्रियेव वाच्येत्यसत्यस्मिन्ननिर्दिष्टार्थत्वात्स्वार्थे त्रिक एव जसादिबहुवचनं स्याद्, न बहुत्व इति बहुत्वसंख्यावाच्यत्वेन विधीयते। सूत्रेऽप्यन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशः, बहुत्व इत्यर्थः । आश्रयगतस्य बहुत्वस्य गुणे आरोपाद् बहुष्विति बहुवचनम्। आरोपस्य प्रयोजनं नानाऽऽधारस्य संख्यारूपस्य बहुत्वस्य ग्रहणं यथा स्यात् । तेनैकाश्रयं वैपुल्यं बहुवचनस्य वाच्यं न भवति—बहुरोदन इति ।

केचिन्मन्यन्ते—संख्याकर्मादयश्च परस्परमनन्विताः, प्रकृत्यर्थेन चान्विता विभक्तिभिरभिधीयन्ते-वृक्षान्पश्य, कोऽर्थः ? बहवो वृक्षाः कर्मेति, न तु कर्मीभूता वृक्षा बहव इति; नापि बहवः कर्मेति। एवमेकवचनेऽपि 'पशुना यजेत' इति पशुरेकः पशुः करणमित्यर्थः, न तु करणीभूतः पशुरेक इति, नाप्येकः पशुः करणमिति करणत्वैकत्वयोर्युगपदभिधानादिति तान्निराकरोति—*कर्मादयोऽप्यपर इत्यादि* । *तदीये बहुत्वे इति* । कर्मादिगतमेव बहुत्वं बहुवचनस्य वाच्यम्, न तु केवलप्राति-

न्यासः

यदि तर्हि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते तदा सूत्रे भावप्रत्ययेन बहुत्वनिर्देशः कर्त्तव्यः, अन्यथा बहुत्वसंख्या न प्रतीयेत ? न कर्त्तव्यः; अन्तरेणापि भावप्रत्ययं भावप्रधानो निर्देशो भविष्यतीति, यथा—पटस्य शुक्ल इति । नन्वेवमपि

यत्र च संख्या सम्भवति, तत्रायमुपदेशः। अव्ययेभ्यस्तु निः-संख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एव ॥

पदमञ्जरी

पदिकार्थगतमित्यर्थः। प्रकृत्यर्थगतमेव बहुत्वं वाच्यम्, वृक्षशब्दस्यावयवी वाच्यः, न त्ववयवा इति द्रव्यपदार्थपक्षे तावद् वृक्षं पश्येति मूलस्कन्धफलपलाशादीनां बहुत्वेऽपि तेषामनभिधेयत्वाद्बहुवचनाभावः। आकृतिपक्षेऽपि प्रत्यासत्तेस्तदाधारगतं बहुत्वमाश्रीयते न त्ववयवगतम्, भिन्नवाक्यतया विधिरित्युक्तं तत्प्रयोजनमाह—यत्र चेत्यादि। भाष्ये तु पञ्चकपक्षाङ्गीकारेण नियमपक्षः स्थापितः। तत्र ह्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे इति स्वार्थेऽपि जसादि बहुवचनं बहुत्वेऽपि सिद्धम्, तस्यापि स्वार्थत्वात्तत्राप्यर्थनियमाद्—बहुषु बहुवचनमेव, द्व्येकयोर्द्विवचनैकवचने एवेति। एवं 'कर्मणि द्वितीया' इत्यादावपि कर्मणि द्वितीयैवेत्येवमादिकोऽर्थनियमो वेदितव्यः। एवं हि प्रत्ययानामनियतत्वादव्ययेभ्यो निःसंख्येभ्यो निष्कारकेभ्यश्च स्वादयः सिद्ध्यन्ति। अथ वा, प्रत्ययनियमः—बहुष्वेव बहुवचनं द्व्येकयोरेव द्विवचनैकवचने। तुल्यजातीयस्य च नियमेन व्यावृत्तिः—बहुष्वेव बहुवचनं न द्व्येकयोः, एकस्मिन्नेवैकवचनं न संख्यान्तरे, द्वयोरेव द्विवचनं न संख्यान्तर इति। 'कर्मणि द्वितीया' इत्यादावप्येवम्—कर्मण्येव द्वितीया, न कारकान्तर इति। एवमपि ह्यव्ययेभ्यः स्वादयः सिद्ध्यन्ति ॥

न्यासः

भावस्यैकत्वाद् बहुष्विति बहुवचनं नोपपद्यते, नैष दोषः; यस्माद् बहुत्वसंख्याधारस्य द्रव्यस्य यो भेदस्तं बहुत्वे गुणेऽध्यारोप्य बहुष्विति बहुवचनेन निर्देशः कृतः, संख्यावाच्ययं बहुशब्दो न वैपुल्यवाचीति ज्ञापनार्थश्च। तेन वैपुल्यं बहुवचनस्य वाच्यं न भवतीति बहुरोदनः, बहुः सूप इति वैपुल्यवाचिनो बहुशब्दादेकवचनमेव भवति, न बहुवचनम्।

यदि बहुत्वसंख्या बहुवचनस्य वाच्यत्वेन विधीयते, इह वृक्षं पश्येत्यत्र बहुवचनं प्राप्नोति, द्वे ह्यत्र संख्ये—समुदायसंख्या चैकत्वम्, अवयवसंख्या च फलमूलशाखाद्यवयवसमवेता बहुत्वम्, अस्यापि प्रातिपदिकार्थेनैकार्थसमवायलक्षणः सम्बन्धोऽस्त्येव। तथा हि—येष्ववयवेषु समवेता बहुत्वसंख्या प्रातिपदिकार्थोऽपि समुदायस्तत्रैव समवेतः, ततश्च तस्माद्बहुवचनं प्राप्नोतीत्यत आह—कर्मादय इत्यादि। कर्मादयो ह्येकविभक्तिशब्दवाच्यत्वात् प्रत्यासन्ना बहुत्वसंख्यायाः; ततः प्रत्यासत्तेस्तदीय एव बहुत्वे बहुवचनं भवति। समुदाय एव हि वृक्षं पश्येत्यत्र दृशिक्रियया व्याप्तुमिष्टतम इति स एव कर्मभावमापद्यते, नावयवाः, तत् कुतो बहुवचनस्य प्रसङ्गः! कर्मादिष्वित्यादि। कर्मादयो बहुवचनस्य वाच्याः। तदीयं बहुत्वं बहुष्वेव कर्मादिषु सम्भवति, अतः सामर्थ्यात् कर्मादिषु बहुष्वित्येषोऽर्थः सम्पद्यते।

## द्व्येकयोर्द्विवचनैकवचने ॥ २२ ॥

द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचने भवतः। एतदपि सामान्यविहितयोर्द्विवचनैकवचनयोरर्थाभिधानम्। द्वित्वे द्विवचनं भवति, एकत्वे एकवचनं भवति। ब्राह्मणौ पचतः। ब्राह्मणः पचति ॥

## कारके ॥ २३ ॥

'कारके' इति विशेषणमपादानादिसंज्ञाविषयमधिक्रियते। 'कारके'

### पदमञ्जरी

द्व्येकयोर्द्विवचनैकवचने ॥ द्विशब्देन साहचर्यादेकशब्दः संख्यावाची। अयमपि भावप्रधानो निर्देशः, अत एव 'द्व्येकयोः' इति द्विवचनम्, तदाह—*द्वित्वैकत्वयोरिति*। एतदपीत्यादि। अनेनास्यापि विध्यर्थत्वं दर्शयति। कथं तर्हि सामान्यविहितयोरिति, यावता नियमार्थत्वे एतद् घटते? उच्यते; साधारणपर्यायः सामान्यशब्दः ससंख्यनिःसंख्यसाधारण्येन विहितयोरित्यर्थः। *अर्थाभिधानमिति*। अर्थः = वाच्योऽभिधीयते = कथ्यते येन तदर्थाभिधानम्। द्व्येकयोरित्यत्र 'संख्यायां अल्पीयस्याः' इत्येकशब्दस्य पूर्वनिपातोऽस्मादेव निपातनान्न भवति। संख्येयवचनेष्वेवार्थद्वारकमल्पीयस्त्वमित्यन्ये ॥

कारके ॥ अधिकारोऽनेकप्रकारः। संज्ञा, विशेषणम्, स्थानी, प्रकृतिः, निमित्तम्, आदेश इति। 'प्रत्ययः', 'शेषे', 'पूर्वपरयोः 'ङ्याप्प्रातिपदिकात्' 'धातोः'

### न्यासः

यदि तर्हि विभक्तीनां बहुवचनस्य बहुत्वसंख्या वाच्यत्वेन विधीयते, तदा निःसंख्येभ्योऽव्ययेभ्यः स्वादयो न स्युः; ततश्च पदसंज्ञा तेषां न स्यादित्याह—यत्र चेत्यादि। ननु स्वादिविधानसूत्रे संख्याकर्मादयः स्वादीनामर्थाः शास्त्रान्तरेण विहिताः, तेन सहास्यैकवाक्यतेति वक्ष्यति। तत् कुतः स्वादीनां सामान्यविहितत्वम्? न हि 'बहुषु बहुवचनम्', 'कर्मणि द्वितीया' इत्यादिना शास्त्रान्तरेण स्वौजसादेः सूत्रस्यैकवाक्यतायां स्वादीनां सामान्यविहितत्वमुपपद्यते। एवं तर्हि ज्ञापकेन अव्ययेभ्यः सामान्येन स्वाद्युत्पत्तेर्ज्ञापितत्वात् सामान्यविहिता इत्युक्तमित्यदोषः, किं पुनस्तज्ज्ञापकम्? 'अव्ययादाप्सुपः' इत्यव्ययादुत्पन्नानां सुपां लुग्वचनम्, न ह्यनुत्पन्नानां लुगुपपद्यते ॥

द्व्येकयोर्द्विवचनैकवचने ॥ द्व्येकयोरिति। अयमपि भावप्रधानो निर्देशः, अन्यथा हि बहुत्वाद् बहुवचनं स्यात्। भावप्रधाने तु निर्देशे, द्वित्वमेकत्वञ्च द्वावेतावर्थाविति युक्तं द्विवचनम्। एतदपीत्यादिनाऽस्यापि योगस्य विध्यर्थतां दर्शयति। अर्थाभिधानमिति। अर्थो वाच्योऽभिधीयते येन तदर्थाभिधानम् ॥

कारके ॥ कारक इति विशेषणमपादानादिसंज्ञाविषयमिति। अपादानादयः संज्ञा-

इत्यधिकारो वेदितव्यः—यदित ऊर्ध्वमनुक्रमिष्यामः 'कारके' इत्येवं तद्वेदितव्यम् ।

पदमञ्जरी

'आर्द्धधातुके मूर्द्धन्यः' इति तदिह विधेयानिर्देशात् स्वरितत्वाच्चाधिकारत्वे स्थिते प्रकारमाह—*कारक इति विशेषण'''मधिक्रियत इति* । न तावत्सञ्ज्ञात्वेनाधिकारः; सञ्ज्ञाया भाव्यमानत्वात्सप्तम्यनुपपत्तेः । अथ सञ्ज्ञानुरूपः प्रथमानिर्देश एव कस्मान्न कृतः, युक्तं चैतद् कारकसंशब्दनेषु वक्ष्यमाणानामपादानादीनामेव षण्णां ग्रहणस्येष्टत्वाद्; अन्यथा नटस्य शृणोतीति कारकशेषस्यापि प्रसङ्गात् ? उच्यते; सञ्ज्ञापक्षे—अपाये यद् ध्रुवं तत् कारकसञ्ज्ञं भवति, अपादानसञ्ज्ञं चेत्ययमर्थो भवति, एवमन्यत्रापि; ततश्च कारकापादानसञ्ज्ञयोर्युगपद्विधानात् परस्परं निमित्तनिर्मित्तिभावाभावादकारकस्यापि व्यापारशून्यस्यापादानसञ्ज्ञा प्राप्नोति । विशेषणाधिकारे तु—कारकेषु मध्ये यदपाये ध्रुवं कारकमित्यर्थो लभ्यते, निर्द्धारणस्य सजातीयविषयत्वादिति व्यापारशून्यस्य सा न प्राप्नोति । अतो विशेषणानुरूप एव निर्देशः कृतः, न तु सञ्ज्ञानुरूपः ।

न्यासः

विषयो यस्य तत् तथोक्तम् । आदिशब्देन सम्प्रदानादीनां ग्रहणम् । अथ वक्ष्यमाणानां ध्रुवादीनामियं संज्ञा कस्मान्न भवति ? एवं मन्यते—यदीयं ध्रुवादीनां संज्ञा स्यात् तदा कारकशब्दः प्रथमान्त एव निर्दिश्येत, यथान्ये 'प्रत्ययः' इत्येवमादयः संज्ञाशब्दा निर्दिश्यन्ते; अयं तु सप्तम्या निर्दिष्टः, तस्मान्नेयं ध्रुवादीनां संज्ञेति । 'कारके' इति निर्धारणे सप्तमी, निर्धारणं तु बहूनां सम्भवति, तत् कथमेकवचनेन निर्देशः ? सामान्यापेक्षया त्वेकवचनम् । अथ वा—छन्दोवत् सूत्राणि भवन्ति, ततो 'व्यत्ययो बहुलम्' इति बहुवचने प्राप्त एकवचनम्—कारकेषु मध्ये यद् ध्रुवं कारकं तदपादानसंज्ञं भवति । एवमन्यत्रापि वेदितव्यमिति ।

कारकशब्दोऽयमस्त्येव व्युत्पन्नः—ण्वुलन्तः कर्तृपर्य्याय इति, अस्ति च संज्ञाशब्दः—अव्युत्पन्नो निमित्तपर्य्याय इति । तत्रेह यदि पूर्वोक्तस्य ग्रहणं स्यात् तदापादानादिषु कारकशब्दो न वर्तते, यथा—कर्तृशब्दः 'ण्वुल्तृचौ' इति कर्त्तरि व्युत्पादितः, तथा कारकशब्दोऽपि; कर्त्ता च स्वतन्त्रः, अपादानादयश्चास्वतन्त्राः, तत् कथं तेषु कारकव्यपदेशः स्यात् ? असति हि कारकव्यपदेशे कारकसंशब्दनेषु तेषां ग्रहणं न स्यात् । अथ तेषामपि कथञ्चित् स्वतन्त्रताम्युपेयेत, एवञ्च तत्र कर्तृसंज्ञा प्रसज्येत, ततश्च ग्रामादागच्छति, उपाध्यायाय गां ददातीत्यादौ ग्रामादिभ्यस्तृतीया प्रसज्येत, इतरेत-

पदमञ्जरी

कारकसञ्ज्ञा त्वन्वर्थत्वाद् व्यापारशून्यस्य न भवति। किं च कारकसंज्ञाया अपादानादिसञ्ज्ञाभिः समावेशो न प्राप्नोति, ततश्च 'स्तम्बेरमः' इत्यत्र सप्तम्यां श्रूयमाणायां गतिकारकोपपदादिति स्वरो न स्यात्, 'कारके' इति निर्धारणे सप्तमी, सामान्यापेक्षं चैकवचनम्। कारकशब्दोऽयमस्ति ण्वुलन्तः—करोतीति कारकमिति, अस्त्यव्युत्पन्नः सञ्ज्ञाशब्दो निमित्तपर्यायः; तत्र पूर्वस्य ग्रहणेऽपादानादिषु कारकशब्दो न प्रवर्त्तेत, यथा कर्तृशब्दः, तेषामस्वतन्त्रत्वात्; स्वातंन्त्र्ये वा पक्षे कर्तृसञ्ज्ञा प्रसज्येत, नैष दोषः; सर्वमेव खलु कारकं यथायथमवान्तरव्यापारं निर्वर्तयत् प्रधानक्रियायामुपयुज्यते, सा च सकलकारकजन्या फलभूता विक्लित्यादिरूपा क्रिया प्रधानक्रिया। यद्वा—सामान्यभूता क्रिया प्रधानक्रिया फलजनना नाम, सर्वाणि हि कारकाणि फलजननाय प्रवर्तन्ते, अतो यद्यत्फलजननारूपं तत्सर्वेष्वेव कारकेष्वविशिष्टम्। किञ्चित्खलु कारकं केनचिदेव रूपेण फलं जनयतीति फलजनना सर्वेषामभिन्नरूपा। अवान्तरभेदविवक्षायां तु करणादिरूपोन्मेषः।

न च वैशेषिकाणामिवास्माकमेका क्रिया नानेकत्र समवेता, धात्वर्थो हि क्रिया, न परिस्पन्द एव। धातुना च सकलकारकानुयाय्योदनादिफलावच्छेदेन एकीकृतो व्यापारोऽभिधीयते। तस्यामेकस्यां प्रधानक्रियायामुपयोगो यथायथमवान्तरव्यापारमुखेन, तद्यथा—अपादानस्यावधिभावोपगमनं व्यापारः, सम्प्रदानस्य तु प्रेरणानुमत्यनिराकरणादिः, करणस्य काष्ठादेर्ज्वलनादिः, अधिकरणस्य सम्भवनधारणादिः, कर्मणो निर्वृत्त्यादिः, कर्तुः प्रसिद्ध एव, प्रयोजकस्य प्रेषणादिः। न चैवं सति करणादीनामपि कर्तृसञ्ज्ञाप्रसङ्गः, परतन्त्रत्वात्। प्रधानेन हि कर्त्रा समवाये करणादीनि परतन्त्राणि, व्यवाये स्वतन्त्राणि; तद्यथा—अमात्यानां राज्ञा सह समवाये पारतन्त्र्यम्, व्यवाये स्वातन्त्र्यम्। यद्येवम्, कारकव्यपदेशोऽपि करणाद्यवस्थायां न स्यात्? करणम् कारकमिति अधिकारसामर्थ्यात्। कारकशब्दोपनीतस्वातन्त्र्यमवस्थान्तरगतं विज्ञास्यते। अवस्थान्तरे यत् स्वतन्त्रं तत्साधकतमं करणमिति कर्तुरेव त्वेकस्य सांप्रतिकं स्वातन्त्र्यम्, तच्च कर्तृसञ्ज्ञाङ्गतया चोदितम्। यदि तर्हि व्युत्पत्तिपक्षेऽप्यवस्थान्तरगतमेव स्वातन्त्र्यम्, एवं तर्हि करणाद्यवस्थायां निमित्तभाव एवाभ्युपगतो भवति? यद्येवम्, किं

न्यासः

राश्रयश्चापि दोषः स्यात्। तथा हि—कर्तृसंज्ञोत्तरकालं कारकशब्दस्य व्युत्पत्तिः, तस्यां सत्यां कारकशब्दोपक्रमेण कर्तृसंज्ञा स्यात्, बह्वेवं प्रतिविधेयं स्यात्, प्रतिविधाने च प्रतिपत्तिगौरवं स्यात्। निमित्तपर्यायस्य तु कारकशब्दस्य ग्रहणे न दोषः स्यात्, ततः

कारकशब्दश्च निमित्तपर्यायः। कारकम्, हेतुरित्यनर्थान्तरम्। कस्य हेतुः ? क्रियायाः। वक्ष्यति–'ध्रुवमपायेऽपादानम्', ग्रामादागच्छति। पर्वतादवरोहति।

कारक इति किम् ? वृक्षस्य पर्णं पतति। कुड्यस्य पिण्डः पतति।

पदमञ्जरी

दोषप्रतिविधानव्यसनेन ! निमित्तपर्यायस्यैव ग्रहणमस्त्विति मन्यमान आह—*कारकशब्दश्चेति*। *कस्य हेतुरिति*। द्रव्यगुणविषयोऽपि हेतुः कारकं प्राप्तमित्यभिप्रायः। कारकशब्दोऽयं क्रियाहेतावेव प्रसिद्ध इत्याह–*क्रियाया इति*। अनाश्रितव्यापारं निमित्तं हेतुः, आश्रितव्यापारं कारकम्, उक्तं च––

द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। इति।
अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते॥ इति च।

कथं तर्हि पूर्वमुक्तम्–अनर्थान्तरमिति, न हि सामान्यविशेषवचनानामनर्थान्तरवाचित्वम् ? सत्यम्; सामान्यशब्दयोरपि अर्थप्रकरणादिना विशेषवृत्तिमभिप्रेत्य तु तथोक्तम्। *वृक्षस्य पर्णं पततीति*। पर्णविशेषणत्वेनात्र वृक्षो विवक्षितः, न त्वपायस्य निमित्तत्वेनेत्यपादानसंज्ञा न भवति, न वापायस्याविवक्षितत्वात्।

न्यासः

स एव गृह्यत इति मत्वाह—कारकशब्दोऽयं निमित्तपर्याय इति। ग्रामादागच्छतीति। ग्रामस्य ध्रुवस्यागमनक्रियां प्रति निमित्तभावोऽस्ति। यदीह ग्रामोऽवधिभावेन नावतिष्ठेत तत आगमनं न निष्पद्येत, तस्माद् ग्रामः कारकम्।

वृक्षस्य पर्णं पततीति। वृक्षः सम्बन्धित्वेनात्र विवक्षितः, न तु निमित्तत्वेन। अपायस्य कारकग्रहणान्निमित्तत्वेनाविवक्षितस्यापादानसंज्ञा न भवति। नैतत् कारकग्रहणस्य प्रत्युदाहरणं युक्तम्; ध्रुवग्रहणेनैवात्रापादानसंज्ञाया निवर्तितत्वात्, ध्रुवं हि तद् यदवधिभूतमपाये साध्ये। तथा हि वृत्तिकारो वक्ष्यति—'अपाये साध्ये यदवधिभूतम्' इति। न चेह वृक्षोऽवधित्वेन विवक्षितः, किं तर्हि ? सम्बन्धित्वेन, नैतदस्ति; विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धिभावेन विवक्षितत्वात्। अवधिभूतस्य वृक्षस्य सम्बन्धिनः पर्णं पततीत्यर्थः। न हि सम्बन्धित्वेन विवक्षाऽवधिभावविवक्षया विरुध्यते। तस्माद्विवक्षितावधिभावस्यैव वृक्षस्य सम्बन्धित्वमात्रं विवक्षितम्, न तु विद्यमानमप्यपायं प्रति निमित्तत्वमिति कात्रायुक्तता!

'अकथितं च' । अकथितं च कारकं कर्मसंज्ञं भवति । माणवकं पन्थानं पृच्छति ।

कारक इति किम् ? माणवकस्य पितरं पन्थानं पृच्छति ।

कारकसंशब्दनेषु चानेनैव विशेषणेन व्यवहारो विज्ञायते ॥

पदमञ्जरी

सति ह्यवधौ गतिरपायो भवति, नान्यथा । न चात्र वृक्षोऽवधित्वेन विवक्षितः । तथा हि—वृक्षमजहत्यपि पर्णे वृक्षस्य पर्णं पततीति भवति प्रयोगो यदा वृक्षः छिन्नः पततीति, सत्यम्; अत एवास्मिन्नतृप्तः सन्नाह—*माणवकस्य पितरमिति* । अत्र पितुः सम्बन्धित्वेन माणवको विवक्षितः, न तु प्रश्नक्रियां प्रति निमित्तत्वेनेति कर्मसंज्ञा न भवति ; असति तु कारकाधिकारे तस्यापि स्यात् । शेषलक्षणा तु षष्ठी अकथिते दुह्यादिपरिगणनाद्राज्ञः पुरुष इत्यादौ सावकाशा । यदि तर्हि विशेषणमिदम्, ध्रुवादीनां न संज्ञा, 'कारकाद्दत्तश्रुतयोरेवाशिषि'—इत्यादौ यत्र कारकशब्दः संशब्द्यते तत्रापादानादीनां वक्ष्यमाणानां षण्णामेव ग्रहणमिष्यते, तन्न सिद्ध्यति । संज्ञापक्षे तु न दोषः, संज्ञा ह्यावर्तमाना संज्ञिनं प्रत्याययति । स्यादेतत्—प्रदेशेष्वपि क्रियानिमित्तपर्यायस्य कारकशब्दस्योपादानम्, तच्च निमित्तमपादानाद्येवेति, तदसत्; नटस्य शृणोतीत्यादौ कारकशेषस्य सम्भवादित्यत आह—*कारकसंशब्दनेषु चेति* । कारकग्रहणं प्रदेशेषु स्वर्यते, स्वरितेनाधिकारावगतिर्भवतीति भावः ॥

न्यासः

माणवकस्य पितरं पन्थानं पृच्छतीति । 'अकथितञ्च' इत्यकथितस्य कर्मसंज्ञा विधीयमाना 'कारके' इत्येतस्मिन्नसति माणवकस्यापि स्यात् , कथम् ? अकथितशब्दोऽयमकीर्त्तितपर्यायः । स च कस्यचिद् विशेषस्याप्रकृतत्वाद् विशेषानुपादाने सति प्रयुज्यमानः सर्वत्राविशेषेणाकीर्तितमात्रे स्यात् । ततश्च 'अकथितम्' इत्युच्यमाने कारकञ्चाकारकञ्च सर्वमकथितमिति गम्यते । यथा पिताऽपादानादिभिर्विशेषकथाभिर्न कथितः, तथा माणवकोऽपि, अतस्तस्यापि कर्मसंज्ञा स्यात् । 'कारके' इत्यस्मिंस्तु सति प्रश्नक्रियानिमित्तस्य पितुरेव भवति, न तु माणवकस्य । न ह्यसौ प्रश्नक्रियां प्रति निमित्तभावेन विवक्षितः, किं तर्हि ? पितुः सम्बन्धित्वेन ।

यदि विशेषणमिदं ध्रुवादीनाम्; न संज्ञा, ततश्च 'कारकाद्दत्तश्रुतयोरेवाशिषि' इत्येवमादिषु प्रदेशेषु यत्र कारकशब्दः संशब्द्यते तदा तत्रापादानादीनां कारकग्रहणेन ग्रहणं न स्यात् । संज्ञापक्षे तु न दोषः, संज्ञा ह्यावर्त्तमाना संज्ञिनं प्रत्याययतीत्यत आह—**कारकसंशब्दनेत्यादि** । यत्र कारकशब्दस्य संशब्दनं तत्राप्यनेनैव विशेषणेन विवक्षितार्थप्रत्यायनलक्षणो व्यवहारोऽयं विज्ञायते; प्रदेशान्तरेऽपि कारकशब्दस्य निमित्तपर्यायस्यैवोपादानात् । तच्च निमित्तमपादानाद्येव, न हि ततोऽन्यत्क्रियानिमित्तं भवति ।

## ध्रुवमपायेऽपादानम् ॥ २४ ॥

ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं भवति । ग्रामादागच्छति । पर्वतादवरोहति । सार्थाद्धीनः । रथात्पतितः ।

पदमञ्जरी

*ध्रुवमपायेऽपादानम्* ॥ *ध्रुवमिति* । ध्रु गतिस्थैर्ययोः' इत्यस्मात्कुटादेः पचाद्यचि रूपम् । ये तु 'ध्रुव गतिस्थैर्ययोः' इति पठन्ति, तेषामिगुपधलक्षणः कः प्रत्ययः । अपायः = विश्लेषः, विभागस्तद्धेतुभूतश्च गतिविशेषोऽवधिसापेक्षः, तत्र विभागस्य द्विष्ठत्वात् न केवलमपयन्नेव तेन युक्तः, किं तर्हि ? यतोऽपैति सोऽपि युक्त एवेत्याह—*ध्रुवं यदपाययुक्तमिति* । कथं पुनः सप्तमीनिर्देशेऽप्यपाययुक्तमिति प्रतिपद्येमहीत्यत्राह—*अपाये साध्य इति* । साध्यत्वेन विषयत्वात् सामर्थ्यलभ्यो योग इति भावः । ध्रुवमित्येकरूपमुच्यते—ध्रुवमस्य शीलम्, ध्रुवमस्य रूपमिति, इह तदपायेन विशेष्यते—उपाये यद् ध्रुवमिति, न तु सार्वत्रिकम्, तच्चापाये ध्रुवमुच्यते—यदपायेनानाविश्यते उपयुज्यते चापाये, तच्चार्थादवधिभूतमित्याह—*यदवधिभूतमिति* । एवं च सार्थाद् हीनः, रथात्पतितः, धावतः पतित इत्यादौ सत्यपि क्रियान्तरावेशाच्चलत्वे तराद्धावनादिक्रियानावेशात्तन्निमित्तमपायं प्रत्यौदासीन्यादस्त्येव ध्रुवत्वमिति भवत्येव संज्ञा । उक्तं च—

न्यासः

तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भवति । अन्ये त्वाहुः—साहचर्यात् कारकविशेषणसहचरिता अपादानादयः कारकशब्देनोच्यन्त इति तद्ग्रहणेनैव तेषां ग्रहणम् । कारकग्रहणं वा स्वरयितव्यम् । तेन 'स्वरितेनाधिकारः' इत्येष विधिर्भवति । तस्मात् कारकग्रहणेनापादानादीनां ग्रहणं भविष्यति ॥

ध्रुवमपायेऽपादानम् ॥ अपायः = विश्लेषः, विभाग इत्यर्थः । तस्य च द्विष्ठत्वाद् यथा तेन विभागेन योऽपैति सोऽपाययुक्तः, तथा यतोऽपैति सोऽप्यपाययुक्तः; तस्मादुभयत्र पञ्चम्या भवितव्यमित्यत एवाह—ध्रुवं यदपाययुक्तमिति । अपाये साध्य इति । विषयसप्तमीयम् । अपायस्य साध्यत्वेन विषयभूत इत्यर्थः । यद्यपि ध्रुवशब्दो लोक एकरूपतामाचष्टे—ध्रुवमस्य शीलम्, ध्रुवमस्य रूपमिति; तथाप्यपाये साध्येऽभिहितया तया न कश्चिदर्थः सम्पद्यत इति नात्र ध्रुवताऽपायं प्रत्युपयुज्यते ? सैवोपादीयते, सा चावधिभाव एव । तस्मादपायशब्दस्य सन्निधौ ध्रुवशब्दः सम्बन्धात् संश्लेषलक्षणात् प्रच्यवमानस्यावधिभावमाचष्टे, इत्यत आह—अवधिभूतमिति । अत एवापाये साध्येऽवधिभूतं यत् तदिह ध्रुवशब्देनोच्यते । तेन धावतोऽश्वात् पतित इत्येवमादावप्यपादानसंज्ञा अश्वादेः सिद्धा भवति । अस्ति ह्यत्रापि सत्यपि चलत्वेऽश्वादेरप्यपाये ऽवधिभावः ।

* जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् * । अधर्माज्जुगुप्सते । अधर्माद्विरमति । धर्मात्प्रमाद्यति ।

अपादानप्रदेशाः—'अपादाने पञ्चमी' इत्येवमादयः ॥

**पदमञ्जरी**

अपाये यदुदासीनं चलं वा यदि वा चलम् ।
ध्रुवमेवातदावेशात् तदपादानमुच्यते ॥ इति ।

पततः पतित इत्यत्रापि परगतपातापेक्षया ध्रौव्यमेव । तथा हि—

पततो ध्रुव एवाश्वो यस्मादश्वात्पतत्यसौ ।
तस्य त्वश्वस्य पतने कुड्यादिर्ध्रुव उच्यते ॥

इह तु परस्परस्मान्मेषावपसर्पत इति

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक्पृथक् ॥
गतिर्विना त्ववधिना नापाय इति कथ्यते ॥

*जुगुप्सेति* । प्रश्लेषपूर्वको विश्लेषोऽपायः, स चात्र नास्ति; बुद्धिपरिकल्पितस्तु गौणः, न च मुख्ये संभवति गौणस्य ग्रहणं युक्तम् । अत एव 'भीत्रार्थानाम्' इत्यादेरारम्भ इति *वाक्यकारस्याभिप्रायः* । अत्र च कारकशेषत्वात् षष्ठी प्राप्नोति—नटस्य शृणोतीति यथा । प्रत्याख्यानं तु साधकतममिति तमब्ग्रहणं लिङ्गम्, कारकप्रकरणे यथासम्भवमेव साधकत्वमिति । तदिह—अधर्माज्जुगुप्सते इत्यादौ जुगुप्सादिपूर्विकायां निवृत्तौ जुगुप्सादीनां वृत्तिरिति स्थिते य एष मनुष्यः प्रेक्षापूर्वकारी भवति, स पश्यति—दुःखहेतुरधर्मो नैनं करिष्यामीति; स बुद्ध्या तं प्राप्नोति, प्राप्य च ततो निवर्त्तते । *धर्मात्प्रमाद्यति* धर्मान्मुह्यतीति । य एष नास्तिकः पुरुषः, स पश्यति—नानेन धर्मेण किंचिदाप्यते, नैनं

**न्यासः**

अथेह कथमपादानसंज्ञा—अधर्माज्जुगुप्सते, अधर्माद्विरमति, धर्मात् प्रमाद्यतीति, न ह्यत्रापायोऽस्ति ?, कथम् ? कायसम्प्राप्तिपूर्वको ह्यपायो भवति, न चेह कायसम्प्राप्तिरस्तीत्यत आह—जुगुप्सेत्यादि । जुगुप्साद्यर्थानां धातूनां प्रयोगेऽपादानसंज्ञाया उपसंख्यानम् = प्रतिपादनं कर्त्तव्यमित्यर्थः । तत्रेदं प्रतिपादनम्—'अपादानम्' इति महती संज्ञा क्रियते, महाविषयेयं संज्ञेति सूचनार्थम् । एवञ्च महाविषया भवतीयम्—यदि सूत्रोपात्तात् संज्ञिनोऽन्योऽप्यस्या विषयो भवति, नान्यथा; तेन जुगुप्सादीनां प्रयोगेऽसत्यप्यपायेऽपादानसंज्ञा भविष्यतीति । अथ वा—अस्त्येवात्रापायः, न हि कायसंप्राप्तिपूर्वक एवापायो भवतीति, किं तर्हि ? चित्तसंप्राप्तिपूर्वकोऽपि भवति । इह तावदधर्माज्जुगुप्सते, अधर्माद्विरमतीति, य एव मनुष्यः प्रेक्षापूर्वकारी भवति स एवं

पदमञ्जरी

करिष्यामीति स बुद्धया तं प्राप्नोति, प्राप्य च ततो निवर्त्तते, तत्र ध्रुवमपाय-इत्येव सिद्धमिति। तच्चैतत्—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधाऽपादानमुच्यते॥

यत्र धातुनापायलक्षणः संज्ञाविषयो निर्दिश्यते, यथा—ग्रामादागच्छतीति, तन्निर्दिष्टविषयम्। यत्र धातुर्धात्वन्तरार्थाङ्गं स्वार्थमाह, यथा—बलाहकाद् विद्योतते विद्युद् इति, अत्र हि निःसरणाङ्गविद्योतने विद्युतिर्वर्त्तते—बलाहकान्निः-सृत्य विद्योतत इत्येव; कुसूलात्पचतीत्यत्राऽऽदानाङ्गे पाके पचिर्वर्त्तते—कुसूला-दादाय पचतीति, तदुपात्तविषयम्। अपेक्षितक्रियं तु—यत्र क्रिया न श्रूयते, प्रमा-णान्तरेण तु प्रतीयते, यथा—आगच्छन्तं पुरुषं प्रत्यक्षेण पश्यन्नाह—कुतो भवा-निति, सोऽपि तदेव प्रत्यक्षसिद्धमागमनमुपजीवन्नाह—पाटलिपुत्रादिति।

ध्रुवग्रहणं किम्? ग्रामादागच्छति शकटेन—अत्र शकटस्य मा भूत्। अथ क्रियमाणेऽपि ध्रुवग्रहण इह कस्मान्न भवति—धनुषा विध्यतीति, अत्र हि शराणामपायं प्रति अवधिभावेनैव धनुषः साधकतमत्वम्? सत्यम्; उभयप्रसङ्गे परत्वात्करणसंज्ञा भविष्यति। नन्वेवमक्रियमाणेऽपि शकटस्य नैव भविष्यति, एवं संज्ञान्तरविषये सर्वत्र। वृक्षस्य पत्रं पततीत्यत्र त्वपायस्याविवक्षितत्वादका-रकत्वाच्च न भविष्यति। संज्ञिनिर्देशार्थं तु न हि 'कारके' इति सप्तम्यन्तेन शक्यः संज्ञी निर्देष्टुम्, सिद्धं तु निर्धार्यमाणस्य संज्ञित्वादपायविषयेषु कारकेषु मध्ये यत्कारकं संज्ञान्तरस्याविषयस्तदपादानमिति, तदेवं ध्रुवग्रहणं चिन्त्यप्रयोजनम्॥

न्यासः

पश्यति—दुःखहेतुरयमधर्मो नाम, अतो नार्हत्येनं सचेताः कर्तुमिति; एवं विचारयं-स्तं बुद्धया प्राप्नोति, प्राप्य च ततो निवर्तते। तत्र 'ध्रुवमपायेऽपादानम्' इत्येवमपादानमिति संज्ञा सिद्धा भवति। धर्मात् प्रमाद्यतीत्यत्रापि यो नास्तिकः पुरुषो भवति, स एवं पश्यति—'नास्माद्धर्मात् किञ्चिदिष्टं सम्पद्यते, दुःखमेव केवलं तदारम्भनिमित्तकं भवति', स एवं विचारयंस्तं बुद्धया प्राप्नोति, प्राप्य च ततो निवर्तते। तथा च ध्रुवमपायेऽपादानमित्येवं सिद्धम्। प्रमाद्यतीति। 'मदी हर्षे', 'शमामष्टानां दीर्घः श्यनि' इति दीर्घः। अथेह कथमपादानसंज्ञा—ग्रामान्नागच्छतीति? कथञ्च न स्यात्? ग्रामस्यापायेनायुक्तत्वात्। यस्यां सत्यामपायो भवति, सा प्रति-षिध्यते चापादानसाधनागमनक्रिया, तदसत्यां तस्यां कुतोऽपायः? नैष दोषः; अत्र ह्यपादानसंज्ञायां समुपजातायां पश्चात् प्रतिषेधेन सम्बन्धः क्रियते, अन्यथा हि प्रतिषेधस्य विषयो न दर्शितः स्यात्। तथा ह्यपादानसाधनागमनक्रिया प्रतिषेद्धु-

## भीत्रार्थानां भयहेतुः ॥ २५ ॥

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादानसंज्ञं भवति । चौरेभ्यो बिभेति । चौरेभ्य उद्विजते । त्रायत्यर्थानाम्—चौरेभ्यस्त्रायते । चौरेभ्यो रक्षति ।

भयहेतुरिति किम् ? अरण्ये बिभेति । अरण्ये त्रायते ॥

### पदमञ्जरी

*भीत्रार्थानां भयहेतुः* ॥ भयं भीः, त्राणं त्राः, सम्पदादित्वाद्भावे क्विप् । भीत्रौ अर्थौ येषां ते भीत्रार्थाः, षष्ठीप्रयोगापेक्षया कारकापेक्षया चेत्याह—*बिभेत्यर्थानामित्यादि* । अत्र बिभेतित्रायतिशब्दौ तदर्थयोर्वर्तेते, तदर्थोऽर्थो येषामित्यर्थः । त्राणं बाधकेभ्यो रक्षणम्, बाधकाश्च भयहेतव इति त्रार्थानामपि भयहेतुः कारकं भवत्येव । *चौरेभ्य इति* । चोरयतेः पचाद्यचि चोरः । क्वचित् चौरेभ्य इति पाठः । तत्र स्वार्थिकः प्रज्ञाद्यण् । छत्रादिषु वा चुराशब्दः पठ्यते, स चाऽप्रत्ययादित्यस्य 'ण्यासश्रन्थो युच्' इति युचि बाधके प्राप्ते तस्मादेव निपातनादकारप्रत्यये णिलुकि च व्युत्पाद्यते, ततश्चुरा स्तेयं शीलमस्येति णे कृते स एवार्थो भवति । *बिभेतीति* । 'ञिभी भये' जुहोत्यादिः । *उद्विजते इति* । 'ओविजी भयचलनयोः' तौदादिकोऽनुदात्तेत् । *अरण्ये इति* । अत्र तत्स्थेभ्यो वृक्षादिभ्यो भयम्, नारण्यात् । ननु च ध्रुवमित्यनुवर्त्तिष्यते, न चारण्यमवधित्वेन विवक्षितम्, परत्वाच्चाधिकरणसञ्ज्ञैव भविष्यति, सत्यम्; पूर्वस्यैवायं प्रपञ्चः, कथम् ? भयादिपूर्विकायां निवृत्तौ भ्यादयो वर्तन्ते—बिभेतीति कोऽर्थः ? भीत्या निव-

### न्यासः

मिष्टा । तत्र यदि चादावेव निषेधः स्याद्, अपायाभावात् तदसम्बद्धस्य ग्रामस्यापादानसंज्ञा सिद्धा न स्यात् । ततश्च या प्रतिषेध्यापादानसाधनागमनक्रिया प्रतिषेधस्य विषयभूता, सा न शक्यते प्रदर्शयितुम् ; न चात्राप्रदर्शितविषये प्रतिषेधः शक्यते वक्तुम् । तस्मात् पूर्वमपादानसंज्ञा भवति, पश्चात् प्रतिषेधेन योग इत्येष क्रमः ॥

**भीत्रार्थानां भयहेतुः** ॥ भीतिर्भीः, त्राणं त्राः; सम्पदादित्वात् क्विप् । भीश्च त्राश्च भीत्रौ । भीत्रावर्थौ येषां ते भीत्रार्थाः । बिभेत्यर्थानामित्यादि । बिभेतित्रायतिशब्दाविह साहचर्याद् बिभेतित्रायत्यर्थयोर्वर्त्तेते । बिभेतिरर्थो येषां ते बिभेत्यर्थाः । त्रायतिरर्थो येषां ते त्रायत्यर्थाः । बिभेतीति । 'ञिभी भये', जौहोत्यादिकः । उद्विजते इति । 'ओविजी भयचलनयोः', तौदादिकोऽनुदात्तेत् । त्रायत इति । 'त्रैङ् पालने' भौवादिकः ।

**अरण्ये बिभेतीति** । नात्रारण्याद्भयम्, किं तर्हि ? तत्रस्थेभ्यश्चौरादिभ्यः । ननु चात्राधिकरणसंज्ञा परत्वाद् बाधिका भविष्यति । अपि च—ध्रुवमित्यनुवर्तते,

## पराजेरसोढः ॥ २६ ॥

परापूर्वस्य जयतेः प्रयोगेऽसोढो योऽर्थः—सोढुं न शक्यते, तत्कारकमपादानसंज्ञं भवति । अध्ययनात्पराजयते ।

असोढ इति किम् ? शत्रून्पराजयते ॥

पदमञ्जरी

तंत इत्यर्थः, त्रायत इति कोऽर्थः ? चोरकृताद्वधादेस्त्राणेन निवर्त्तयतीत्यर्थः । कथं तर्हि चोरमध्यवर्त्तिनि चोरेभ्यो बिभेतीति प्रयोगः, न ह्यत्र निवृत्तिरस्ति ? अत्रापि भीत्या निवर्त्तितुमिच्छतीत्यर्थो द्रष्टव्यः । तदेवं बुद्धिपरिकल्पितोऽपायोऽस्तीत्युपात्तविषयमिदमपादानमिति । कृत्स्न एव प्रयोगप्रपञ्चे किमवयवपर्यनुयोगेन ! ॥

पराजेरसोढः ॥ अत्र धातुपाठगतस्य जीत्येतावन्मात्रस्यानुकरणम् । ततः परापूर्वो जिः पराजिरित्युत्तरपदलोपी समासो द्रष्टव्यः । ननु 'प्रकृतिवदनुकरणं भवति' इत्यधातुरिति प्रातिपदिकसञ्ज्ञायाः प्रतिषेधादसुबन्तत्वात्समासो न प्राप्नोति, न; अप्रतिषेधात्, नायं प्रसज्यप्रतिषेधः—धातोर्नेति, किं तर्हि ? पर्युदासोऽयम्—यदन्यद् धातोरिति, धातोर्न विधिर्न प्रतिषेधः । एवमपीयङादेशः प्राप्नोति, परत्वाद् घेर्ङितीति गुणो भविष्यतीति, समुदायस्य वा, समुदायोऽनुकरणम्, कस्यस्य समुदायस्य ? प्रयोगस्य । यद्येवम्, अध्ययनात्पराजयते-अत्र प्राप्नोति, न ह्यत्र पराजीति रूपमस्ति, क तर्हि स्याद् ? यत्र पराजीति रूपमस्ति-अध्ययनात्पराजित इति ।

न्यासः

'ध्रुवञ्चावधिभूतम्' इत्युक्तम् , न चारण्यमवधिभावेन विवक्षितम्, तत् किमेतन्निवृत्त्यर्थेन भयहेतुग्रहणेन ? एवं तर्हि पूर्वस्यायं प्रपञ्चः । न हि कायसम्प्राप्तिपूर्वक एवापायो भवति, किं तर्हि ? बुद्धिसम्प्राप्तिपूर्वकोऽपि । अस्ति चेह बुद्धिसंप्राप्तिपूर्वकोऽप्यपायः, तथा हि—चौरेभ्यो बिभेतीत्यत्र. यस्तावत् पुरुषः प्रेक्षावान् भवति स एवं पश्यति—'यदि मां चौराः पश्येयुर्ध्रुवं मे मृत्युः' इति, विचारयंस्तान् बुद्ध्या प्राप्नोति, प्राप्य च ततो निवर्तते । तत्र ध्रुवमित्यादिनैव सिद्धम् । तस्मात् पूर्वस्यायं प्रपञ्चः । न च प्रपञ्चे गुरुलाघवं चिन्त्यते । एवमुत्तरेऽपि योगाः पूर्वस्यैव प्रपञ्चा वेदितव्याः; तदुदाहरणानाम् 'अध्ययनात् पराजयते' इत्येवमादीनां पूर्वेणैव सिद्धत्वात् । यथा च तेषां सिद्धत्वं तथा भाष्ये एव प्रतिपादितम् । तस्मात् तत्रापि गुरुलाघवं न चिन्तनीयम् ॥

पराजेरसोढः ॥ सोढुं न शक्यत इति । अभिभवितुं न शक्यत इत्यर्थः । अध्ययनाद् पराजयते इत्यध्ययनमभिभवितुं न शक्नोति, न पारयतीत्यर्थः । 'विपराभ्यां जेः' इत्यात्मनेपदम् ।

## वारणार्थानामीप्सितः ॥ २७ ॥

वारणार्थानां धातूनां प्रयोगे य ईप्सितोऽर्थः तत्कारकमपादानसंज्ञं भवति। प्रवृत्तिविघातः = वारणम्। यवेभ्यो गा वारयति। यवेभ्यो गा निवर्त्तयति।

ईप्सित इति किम्? यवेभ्यो गा वारयति क्षेत्रे ॥

### पदमञ्जरी

उदाहरणे पराजिर्न्यूनीभावे वर्तते—अध्येतुं ह्रसति ग्लायतीत्यर्थः। अकर्मकश्चायमत्रार्थे, तत्र षष्ठ्यां प्राप्तायां वचनम्, प्रत्युदाहरणे त्वभिभवे वर्तते। 'विपराभ्यां जेः' इत्यत्रार्थद्वयेऽपि वर्तमानस्य ग्रहणम्। अयमपि प्रपञ्चो न्यूनीभावपूर्विकायां निवृत्तौ वृत्तेः सिद्धम्। अध्ययनात्पराजयते—कोऽर्थः? न्यूनीभावेन ग्लान्या ततो निवर्त्तते इत्यर्थः। तेन प्रत्युदाहरणे परत्वात्कर्मसञ्ज्ञा भविष्यतीति न चोदनीयम् ॥

*वारणार्थानामीप्सितः* ॥ ईप्सितशब्दोऽयमस्त्यभिप्रेतपर्यायः, तस्य ग्रहणे यवानामात्मीयत्वे गवां च परकीयत्व एव स्याद्, न विपर्यये? न खल्वस्यैतदभिप्रेतं यदुतात्मीया गावः परकीयान्यवान्मा घसन्निति, मा भूवन्यवा वारयितुमीप्सिताः; वार्यमाणानां तु गवामीप्सिताः, न वात्र विशेषः श्रुतः कर्तुरीप्सित इति। इह तर्हि न स्याद्—अग्नेर्माणवकं वारयति कूपादन्धमिति, न ह्यग्निकूपौ वारयितुर्वार्यमाणस्य वाभिप्रेतौ? क्रियाशब्दस्य तु ग्रहणे वार्यमाणस्यान्धादेर्गमनादिक्रियया कूपादेराप्यमानत्वात् सिद्ध्यति, अन्धश्चापश्यन्नपि गन्तव्यं

### न्यासः

शत्रून् पराजयते इति अभिभवतीत्यर्थः। ननु च परत्वात् कर्मसंज्ञयैवात्र बाधितत्वादपादानसंज्ञा न भविष्यति, तत् किमेतन्निवृत्त्यर्थेनासोढग्रहणेन? सत्यमेतत्; प्रपञ्चे गुरुलाघवं न हि चिन्त्यते, प्रपञ्चश्चायम्। अस्ति ह्यत्राध्ययनाद् बुद्धिसंसर्गपूर्वकोऽपायः। तथा हि—य एव पुरुषोऽलसो भवति, स एवं मन्यते—दुःखायैवैतदध्ययनमिति, पश्यन् बुद्ध्या तत् प्राप्नोति, प्राप्य च ततो निवर्तते; तस्मात् पूर्वेणैव सिद्धम् ॥

वारणार्थानामीप्सितः ॥ वारणमर्थो येषां ते वारणार्थाः। यवेभ्यो गा वारयतीति। 'गाः' इति गवामीप्सिततमत्वेन विवक्षितत्वात् कर्मसंज्ञा, गोशब्दाच्छस्, 'औतोऽम्शसोः' इत्यात्त्वम्, रुत्वे कृते 'भोभगोअघोअपूर्वस्य' इति यत्वम्, 'हलि सर्वेषाम्' इति यलोपः। वारयतीति। 'वृञ् आवरणे', चुरादिणिच्। निवर्तयतीति। 'वृतु वर्तने', हेतुमण्णिच्।

यवेभ्यो गा वारयति क्षेत्रे। अत्र क्षेत्रस्यानीप्सितस्य न भवति संज्ञा; ईप्सित-

## अन्तर्द्धौ येनादर्शनमिच्छति ॥ २८ ॥

व्यवधानम् = अन्तर्द्धिः । अन्तर्द्धिनिमित्तं येनादर्शनमात्मन

पदमञ्जरी

जिगमिषति, अन्यथा न क्वचित्तस्य प्रवृत्तिः स्यात् । *यवेभ्यो गा वारयतीति* । 'वृञ् आवरणे' चुरादिः । अथात्र गवामपादानसंज्ञा कस्मान्न भवति, ईप्सिततमोऽपीप्सितो भवत्येव, यथा शुक्लतमोऽपि शुक्लः ? परत्वात्कर्मसंज्ञा भविष्यति । कर्मसंज्ञाया अवकाशः—वारणार्थेभ्योऽन्यत्र, अपादानसंज्ञायास्तु प्रकर्षरहितमीप्सितम्, इप्सिततमस्य तूभयप्रसङ्गे परत्वात्कर्मसंज्ञा । अयमपि प्रपञ्चः, अस्ति ह्यत्रापि बुद्धिव्यवस्थितोऽपायः, कथम् ? पश्यत्ययम्—यदि गावः क्षेत्रे गच्छेयुर्ध्रुवं सस्यविनाशः, सस्यविनाशेऽधर्मश्च राजभयं च; स बुद्ध्या संप्राप्य निवर्तयतीत्यतो न चोदनीयम्—प्रत्युदाहरणे क्षेत्रस्याधिकरणसंज्ञा भविष्यतीति ॥

*अन्तर्द्धौ येनादर्शनमिच्छति* ॥ *अन्तर्द्धौ इति* नेयं 'निमित्तात्कर्मयोगे' इति सप्तमी, यथा हि – वेतनेन धान्यं लुनातीत्यत्र वेतनस्य धान्येन योगोऽस्ति, तथेहाप्यदर्शनमिच्छतीतीच्छाकर्मणाऽदर्शनेनान्तर्द्धेर्योगो नास्ति । अथादर्शनस्य यत्कर्म आत्माख्यमात्मनोऽदर्शनमिच्छतीति तेनान्तर्द्धेर्योगोऽस्ति ? यस्यैवादर्शनं–तस्यैवान्तर्द्धानमित्युच्येत । एवमपि 'निमित्तात्कर्मयोगे' इति किं निमित्तं गृह्यते, कारणम् ? प्रयोजनं वा ? कारणं चेज्जाड्येन बद्धः—अत्रापि प्राप्नोति, य एव बद्ध्यते तत्रैव जाड्यमिति; तस्मात् प्रयोजनस्य तत्र ग्रहणम् । यथा—चर्मणि द्वीपिनं हन्तीति चर्म द्वीपिहननस्य प्रयोजनम् । इह त्वन्तर्द्धानमदर्शनस्य कारणम्, अन्तर्हितः खल्वसौ न दृश्यते । तस्माद्विषयसप्तम्येषा, सत्सप्तमी वा । *येनेति* कर्त्तरि तृतीया । ननु च दर्शनेन योगात् 'कर्तृकर्मणोः कृति' इति षष्ठ्या भाव्यम् । उभयप्राप्तौ कर्मण्येवेति नियमात् तृतीया भविष्यति । कर्म त्वत्रादर्शनस्यात्मा । नन्वात्मने इति न श्रूयते, मा श्रावि; येनादर्शनमिच्छतीत्युक्ते कस्येत्यपेक्षायामात्मन इति गम्यते । *अन्तर्द्धिनिमित्तमिति* । अन्तर्द्धिना कारणेनेत्यर्थः ।

न्यासः

ग्रहणात् । ननु चात्र परत्वादधिकरणसंज्ञयैव बाधितत्वादपादानसंज्ञायाः, क्षेत्रस्यापादानसंज्ञा न भविष्यतीत्यतो न कर्तव्यमीप्सितग्रहणमिति, एतन्नाशङ्कनीयम्; उक्तोत्तरत्वात् ॥

अन्तर्द्धौ येनादर्शनमिच्छति ॥ अन्तर्द्धाविति निमित्तसप्तमीयम् । 'निमित्तात् कर्मयोगे' इति सप्तमी, यथा—चर्मणि द्वीपिनं हन्तीति । एतदेव ज्ञापकम्—निमित्तात् कर्मसंयोगेऽस्ति सप्तमीति । अस्ति ह्यत्रादर्शनेन कर्मणा संयोगः । येनेति । कर्त्तरि तृतीया । ननु च 'कर्तृकर्मणोः कृति' इति षष्ठ्या भवितव्यमिति ? नैतदस्ति;

इच्छति तत्कारकमपादानसंज्ञं भवति । उपाध्यायादन्तर्द्धत्ते । उपाध्यायान्निलीयते । मा मामुपाध्यायो द्राक्षीदिति निलीयते ।

अन्तर्द्धाविति किम् ? चौरान्न दिदृक्षते । इच्छतिग्रहणं किम् ? अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात् ॥

पदमञ्जरी

'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति प्रथमा । अथ वा—बहुव्रीहिरदर्शनस्य समानाधिकरणं विशेषणम् । सूत्रेऽनुपात्तोऽपि तच्छब्दो यत्तदोर्नित्यसम्बन्धाल्लभ्यत एवेत्याह—*तत्कारकमिति* । *अन्तर्द्धत्ते इति* । तिरोभवतीत्यर्थः । *निलीयते इति* । 'लीङ् श्लेषणे' दैवादिकः ।

*चौरान्न दिदृक्षते इति* । आत्मानं ते मा द्राक्षुरित्येवमर्थम् । ननु परत्वात्कर्मसंज्ञा भविष्यति, सत्यम्; अयमपि प्रपञ्चः, कथम् ? पश्यत्येवम्—यद्युपाध्यायः पश्येद् ध्रुवं मे प्रेषणमुपालम्भो वा भवेदिति, स बुद्धया संप्राप्य निवर्तते । येनेत्यस्मिन्नसत्यदर्शनमिच्छतः शिष्यस्यैव स्यात्, ध्रुवमित्यनुवर्तिष्यते । एवं तर्हि सूत्रस्यावाचकत्वं मा भूत् । असति हि तस्मिन्नन्तर्द्धौ ध्रुवमपादानसंज्ञं भवति तच्चेद् ध्रुवमदर्शनमिच्छतीत्यर्थः स्यात् । न च ध्रुवमिच्छति, यच्चेच्छति न तद् ध्रुवमित्यवाचकं स्यात् ॥

न्यासः

'उभयप्राप्तौ कर्मणि' इति नियमात् कर्मण्येव, न कर्तरि । कर्म त्वत्रादर्शनस्यात्मा, तस्यान्तरङ्गत्वात् स एव कर्म विज्ञायते । तत् कारकमिति । यद्यप्यत्र सूत्रे तच्छब्दो नोपात्तः, तथापि स यत्तदोर्नित्याभिसम्बन्धाल्लभ्यते । उपाध्यायादन्तर्धत्ते इत्यत्रोपाध्यायेन कर्ता शिष्य आत्मनः कर्मभूतस्यादर्शनमिच्छति । अन्तर्द्धिनिमित्तम् । अन्तर्द्धत्ते इति दधातेर्लट्, 'स्वरितञितः' इत्यात्मनेपदम्, शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, अभ्यासस्य जश्त्वम्, 'दधस्तथोश्च' इति दकारस्य धकारः, परस्य धकारस्य 'खरि च' इति चर्त्वम् = तकारः । निलीयत इति । 'लीङ् श्लेषणे', दैवादिकः ।

चौरान्न दिदृक्षत इति । अत्र यश्चौरान् न दिदृक्षत इति स तैरात्मनोऽदर्शनमिच्छति, न त्वन्तर्द्धिनिमित्तम्; किन्तूपघातनिवृत्त्यर्थम् । विस्पष्टार्थश्चान्तर्द्धिग्रहणम् । परत्वात् कर्मसंज्ञयैव बाधितत्वाच्चौराणामिहापादानसंज्ञा न भविष्यति । प्रपञ्चार्थोऽयं योगः, न च प्रपञ्चे गुरुलाघवं चिन्त्यत इत्युक्तम् । दिदृक्षत इति । 'ज्ञाश्रुस्मृदृशां सनः' इत्यत्र व्युत्पादितम् । अथ येनेति किमर्थम् ? उपाध्यायादन्तर्धत्ते शिष्य इति शिष्यस्यान्तर्द्धावुर्मा भूत्, नैतदस्ति; ध्रुवमित्यनुवर्त्तते, ध्रुवञ्चावधिभूतमित्युक्तम्; न चान्तर्द्धावधिभूतः । एवं तर्ह्यसति येनेत्येतस्मिन् वचने, सत्यामपि ध्रुवमित्यस्यानुवृत्तौ सूत्रस्यावाचकत्वं स्यात् । अतस्तन्मा भूदिति येनेत्युक्तम् ॥

## आख्यातोपयोगे ॥ २९ ॥

आख्याता = प्रतिपादयिता । उपयोगः = नियमपूर्वकं विद्याग्रहणम् । उपयोगे साध्ये य आख्याता तत्कारकमपादानसंज्ञं भवति । उपाध्यायादधीते । उपाध्यायादागमयति ।

उपयोग इति किम् ? नटस्य गाथां शृणोति ॥

## जनिकर्तुः प्रकृतिः ॥ ३० ॥

जनेः कर्त्ता जनिकर्त्ता । जन्यर्थस्य जन्मनः कर्त्ता जायमानः, तस्य

### पदमञ्जरी

*आख्यातोपयोगे* ॥ *नियमपूर्वकं विद्याग्रहणमिति* । तत्रैवोपयोगशब्दस्य रूढत्वात् । यथा तेषां मन्त्राणामुपयोगे द्वादशाहमधः शय्येति नियमो भिक्षाचरणादिः । *नटस्य शृणोतीति* । किं पुनर्नटः कारकम् ? उताहो न ?, यदि कारकम् ? कर्मसंज्ञा प्राप्नोति—'अकथितं च' इति । अथाकारकम् ? उपयोगग्रहणमनर्थकं स्यात् । अस्तु कारकम्, न ह्युपाध्यायान्नटस्य व्यापारे कश्चिदन्यो विशेषः; अन्यदतो नियमात् । दुह्यादिपरिगणनात्तु कर्मसंज्ञा न भवति । क्वचित्तु *नटस्य गाथां शृणोति, ग्रन्थिकस्य कथां शृणोतीति* पाठः, तत्रापि नटादिनिमित्तं गाथादेः श्रवणं करोतीत्यर्थः, न तु गाथादिविशेषणं नटादिः; अकारकत्वप्रसङ्गात् । ग्रन्थिकः=कथाया वाचयिता । अयमपि प्रपञ्चः, कथम् ? उपाध्यायान्निस्सरन्तं शब्दं गृह्णातीति स्फुट एवात्रापायः । इदं तर्हि प्रयोजनम्—'उपयोग इति वक्ष्यामि, नटस्य मा भूत्' इति ? ननु नटस्य सत्यप्यवधित्वे शेषरूपेण विवक्षणात् षष्ठी भविष्यति, यथा न माषाणामश्नीयादिति वस्तुतः कर्मत्वं माषाणाम्, सत्यम्; स एव विवक्षानियमः सूत्रकारेण प्रदर्श्यते—उपयोगेऽवधित्वं विवक्षितम्, अन्यत्र शेषत्वमिति ॥

*जनिकर्तुः प्रकृतिः* ॥ जनेः कर्ता जनिकर्तेति कर्मणि षष्ठ्याः समासः । अयमेव च निर्देशो ज्ञापयति—'कर्त्तरि च' इति प्रतिषेधोऽनित्य इति । कः पुनरसावित्यत आह—*जन्यर्थस्येति* । एतदुक्तं भवति—जनिशब्दोऽयम् 'इक्श्तिपौ धातुनिर्देशे' ...

### न्यासः

आख्यातोपयोगे ॥ नियमपूर्वकं विद्याग्रहणमिति । विद्याग्रहणार्थं शिष्यप्रवृत्तिः = नियमः । स पूर्वो यस्य तत् तथोक्तम् । 'शेषाद्विभाषा' इति कप् । नटस्य गाथां शृणोतीति । सम्बन्धलक्षणा षष्ठी । नियमपूर्वकमिह विद्याग्रहणं नास्ति ॥

जनिकर्तुः प्रकृतिः ॥ जनिशब्दोऽत्र साहचर्याज्जन्यर्थे वर्तते । अत एवाह—

या प्रकृतिः कारणम्, हेतुः, तत् कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते। गोमयाद् वृश्चिको जायते ॥

पदमञ्जरी

इति जनेर्भाव इञमुत्पाद्य व्युत्पादितः। 'जनिवध्योश्च' इति वृद्धिप्रतिषेधो जन्यार्थवाची, न तु 'इक्श्तिपौ धातुनिर्देशे' इति इक्प्रत्ययान्तः, 'गमहन' इत्युपधाया लोपप्रसङ्गात्। नाप्यागन्तुकेनेकारेण धातोर्निर्देशः; शब्दात्मकस्य धातोः कर्त्रा सम्बन्धायोगात्। अथाप्यर्थद्वारको योगः स्याद्? एवमपि धातुनिर्देशे तस्यैव प्रयोगे स्याद्, न पर्यायस्य; अङ्गादङ्गात्सम्भवोऽस्तीति। अर्थग्रहणे त्वत्रापि भवतीति। प्रकृतिरित्यस्य विवरणम्—*कारणमिति*। उपादानकारणमित्यर्थः।

अन्ये तु ध्रुवग्रहणानुवृत्तेरेव प्रकृतिपरिग्रहे सिद्धे प्रकृतिग्रहणं कारणमात्रपरिग्रहार्थं वर्णयन्ति। अत एव वृत्तावुक्तम्—कारणमिति, न पुनरुपादानकारणमिति। तेन च पुत्रात्प्रमोदो जायत इत्यादावपि भवतीति। किं पुनः सत् जायते? उतासत्? न तावत्सत्; जन्मवैयर्थ्यात्। यदि जन्मनः प्रागेव सत्, किं जन्मना? अथैवमपि जन्म, जायस्व जायस्वेत्येव घटो जायते। नाप्यसत्; असतः कर्तृत्वायोगात्, शशविषाणादेरपि जन्मप्रसङ्गाच्च। उक्तमत्र—

पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम्।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते॥ इति।

एतच्च 'आन्महतः' इत्यत्रोपपादयिष्यामः। किञ्चास्माकमनेन दुस्तर्केण, अस्ति तावत् 'शृङ्गाच्छरो जायते' इति प्रयोगः, स उपपादनीय इत्येतावत्! अयमपि प्रपञ्चः। लोके हि यद्यस्माज्जायते तत्ततो निर्गच्छतीत्युच्यते, लोकप्रसिद्ध्यनुसारेण शब्दप्रयोगः, अर्थतत्त्वं तु तथा भवत्वन्यथा वा॥

न्यासः

**जन्यर्थस्येति**। जन्मन इति। एतेन जन्यर्थं दर्शयति। तथा हि—'जनी प्रादुर्भावे' इति पठ्यते। प्रादुर्भावो जन्म एव। कः पुनस्तस्य कर्त्तेत्यत आह—जायमान इति। 'ज्ञाजनोर्जा' इति जादेशः। अथ प्रकृतिग्रहणं किमर्थम्? यावता ध्रुवमित्यनुवर्त्तते, ध्रुवश्चावधिभूतमित्युक्तम्, जनिकर्तुश्चावधिः कारणमेव भवति; तत्रान्तरेणापि प्रकृतिग्रहणं प्रकृतेरेव भविष्यति, नैतदस्ति; पुत्रात् प्रमोदो जायत इत्यादौ पुत्रादेरप्यपादानसंज्ञा यथा स्यादित्येवमर्थं प्रकृतिग्रहणम्। द्विविधं हि कारणम्—उपादानकारणम्, सहकारिकारणञ्च। तत्र यत् कार्येणाभिन्नदेशं तदुपादानकारणम्, यथा—घटस्य मृत्पिण्डः। सहकारिकारणं यत् कार्येण भिन्नदेशम्, यथा—तस्यैव दण्डचक्रादि। तत्रासति प्रकृतिग्रहणे प्रत्यासत्तेरुपादानकारणस्यैव स्यात्, नेतरस्य। प्रकृतिग्रहणे तु सति सर्वस्यैव कारणमात्रस्य भवति॥

भुवः प्रभवः ॥ ३१ ॥

'कर्तुः' इति वर्तते। भवनं भूः। भवत्यस्मादिति प्रभवः। भूकर्तुः प्रभवो यस्तत्कारकमपादानसंज्ञं भवति। हिमवतो गङ्गा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। प्रथमत उपलभ्यत इत्यर्थः॥

कर्मणा यमभिप्रैति स संप्रदानम् ॥ ३२ ॥

कर्मणा करणभूतेन कर्त्ता यमभिप्रैति तत्कारकं सम्प्रदानसंज्ञं

पदमञ्जरी

*भुवः प्रभवः* ॥ भवनं भूः, सम्पदादित्वात्क्विप्। अत्रापि प्रशब्दो द्रष्टव्यः। न हि केवलस्य भवत्यर्थस्य प्रभवनेन योगः, किं तर्हि ? सोपसर्गस्य भुवः। *कर्तेति*। भवत्यर्थस्य कर्तेत्यर्थः, भुवो वा धातोः। कथं पुनर्धातोर्नाम कर्त्ता स्याद्, धातुर्वै शब्दः, शब्देऽसम्भवेऽर्थे कार्यं विज्ञास्यते। 'तसु उपक्षये' भावे क्तः, 'वि गतौ' तस्ता, वितस्तेति, अशोष्येत्यर्थः। *प्रथमत उपलभ्यते इति*। उपलभतेः कर्मव्यापारे प्रभवतिः, प्रवर्तत इत्यर्थः। प्रकाशत इति यावत्। एतेन जन्यर्थाभावात्पूर्वेणासिद्धं दर्शयति। अनेकार्थत्वाद्धातूनामस्मिन्नर्थे वृत्तिः। अयमपि प्रपञ्चः। कथम् ? भवनपूर्वके निःसरणे प्रभवतिर्वर्त्तते॥

*कर्मणा यमभिप्रैति स सम्प्रदानम्* ॥ *कर्मणा करणभूतेनेति*। कथं पुनरेकमेव वस्तु युगपत्कर्म च करणं च भवति ? क्रियाभेदाद्दानक्रियायां कर्माभिप्रायेण क्रियायां करणम्, दीयमानया हि गवा शिष्य उपाध्यायमभिप्रेति संबध्नाति ईप्सति वा, अभिप्रपूर्वो हीण् ईप्सतिना समानार्थः। अभिप्रेतमित्युक्ते ईप्सितमिति गम्यते। उक्तं च—

न्यासः

भुवः प्रभवः ॥ भवनं भूरिति। सम्पदादित्वात् क्विप्। प्रभवत्यस्मादिति प्रभव इत्यपादाने 'ऋदोरप्' इत्यप्। ननु च 'हिमवतो गङ्गा प्रभवति' इत्येतत् पूर्वेणैव सिद्धम्, तथा ह्ययमत्रार्थः—हिमवतो गङ्गा जायत इति, तत् किमर्थमिदमारभ्यत इत्याह—प्रथमत उपलभ्यत इति। एष चार्थोऽनेकार्थत्वाद्धातूनां वेदितव्यः। जन्यर्थस्त्वत्र न सम्भवत्येव, न हि हिमवान् गङ्गायाः कारणम्, सा ह्यन्येभ्य एव कारणेभ्य उत्पन्ना। हिमवति तु केवलं प्रथमत उपलभ्यत इति।

कर्मणा यमभिप्रैति स सम्प्रदानम् ॥ कर्मणा करणभूतेनेति। ननु च कथं कर्म करणं भवति ? क्रियाभेदसम्बन्धात्। तथा हि—ददातिक्रिययाऽऽसुमिष्ठतमत्वात् तस्याः कर्मत्वम्, अभिप्रायणक्रियां प्रति तस्य साधकतमत्वात् करणत्वम्। अभिप्रैतीति। अभिसम्बध्नातीत्यर्थः। यदि कर्मणा यमभिप्रैति स सम्प्रदानसंज्ञो भवति, एवमजा

भवति । अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते । उपाध्यायाय गां ददाति । माणवकाय भिक्षां ददाति ।

पदमञ्जरी

अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥ इति ।

त्यागो दानम्, त्यागस्याङ्गं शेषभूतं कर्मणा गवादिनेप्सितमाप्तुमिष्टं संप्रदानतां लभते, अनिराकरणाद्वा, एवमस्त्विति अनुमानाद्वा, देवेभ्यः सुमनसो ददाति, याचकाय भिक्षां ददाति, उपाध्यायाय गां ददाति; न तु निराकुर्वन् संप्रदानं भवतीति श्लोकार्थः ।

अत्र केचिदाहुः—'कुगतिप्रादयः' इत्यत्र वार्त्तिकम्—'उदात्तवता तिङा गतेः समासवचनम्' इति । यो जात एव प्रथमोमहस्वावो देवा क्रतुना पर्यभूषत्, यो यः शम्बरमन्वविन्दत्, यस्मान्न ऋते किं विजयन्ते, यो वै प्रयवयतामप्येनं प्रतिपद्यते—इत्याद्युदाहरणानि । अत्र सर्वत्र 'यद्वृतान्नित्यम्' इति निपातप्रतिषेधात् तिङन्तमुदात्तवत्, ततश्चायमभिप्रैतीत्यत्रापि समासे सति प्रातिपदिकत्वात् विभक्त्युत्पत्तिः स्यादिति ।

नेति वयम्; तस्य छन्दोविषयत्वात् । यदि कर्मणा यमभिप्रैति स संप्रदानम्, अजां नयति ग्राममिति अजैर्नयतिक्रिया कर्मभिस्संबध्यमानस्य ग्रामस्य संप्रदानतां प्राप्नोति ? न प्राप्नोति, किं कारणम्? कर्मणेति करणे तृतीयेत्युक्तम् । न च यथा शिष्यस्योपाध्यायसम्बन्धे गौः करणम्, एवमजा ग्रामसम्बन्धे । ईप्सितिना समानार्थे तु सुतरामप्राप्तिः । तथा हि—'यमभिप्रैति' इत्युक्ते यमिति निर्दिष्टस्य शेषित्वम्, कर्मणेति निर्दिष्टस्य गवादेः करणस्य शेषत्वं च प्रतीयते; यथा—'कर्त्रभिप्राये क्रियाफले' इति कर्तुः शेषित्वं क्रियाफलस्य शेषत्वम्, न चात्र शेषशेषिभावः प्रतीयते । किं च 'नीवह्योर्हरतेश्च' इति द्विकर्मकेषु नयतिः परिगण्यते, अतोऽपि ग्रामस्य न भविष्यति ।

अथ किमर्थं महती संज्ञा क्रियत इत्याह—*अन्वर्थसंज्ञाविज्ञानादिति* । सम्यक्

न्यासः

नयति ग्राममित्यजादिभिर्नयनक्रियाकर्मभिः सम्बध्यमानस्य ग्रामस्य सम्प्रदानसंज्ञा प्रसज्येतेत्यत आह – अन्वर्थसंज्ञाविज्ञानादित्यादि । सम्प्रदानमिति महत्याः संज्ञायाः करणस्यैतत् प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत—सम्यक् प्रकर्षेण दीयते यस्मै तत् सम्प्रदानमिति । तेन ददातेः कर्मणा यमभिप्रैति तत् सम्प्रदानमिति विज्ञायते । नन्वेवमपि रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददातीत्यत्र प्राप्नोति, नैतदस्ति; दानं हि नाम पूजानुग्रहकाम्यया स्वकीयद्रव्यपरित्यागः परस्वत्वापत्तिः, तचेह नास्ति,

पदमञ्जरी

प्रदीयते यस्मै तत्संप्रदानमित्यन्वर्थत्वात्सञ्ज्ञाया ददातिकर्मणा यमभिप्रैति स संप्रदानमित्यर्थः। एवमपि रजकस्य वस्त्रं ददाति, घ्नतः पृष्ठं ददातीत्यत्र कस्मान्न भवति ? अदानत्वात्, किं पुनर्दानम् ? दानं किञ्चदुद्दिश्यापुनर्ग्रहणाय स्वद्रव्यत्यागः, यथा—वृक्षाय जलं ददाति, देवेभ्यः सुमनसः, याचकाय भिक्षाम्, उपाध्यायाय गाम्, खण्डिकोपाध्यायस्तस्मै चपेटिकां ददाति, न शूद्राय मतिं दद्यादिति। करतलप्रहारः = चपेटिका। रजके तु पुनर्ग्रहणाद्दानाभावः, उपमानात्तु ददातिप्रयोगः, तत्र कारकशेषत्वान्नटस्य शृणोतीतिवत् षष्ठी।

कर्मणेति किम्, यावता उपाध्यायाय गां ददातीत्यत्र गोरुपाध्यायस्य चाभिप्रेयमाणत्वम्, यतो गौर्दानक्रियया करणभूतयाभिप्रेयते, गवा तूपाध्यायः; तत्र परत्वाद्गोः कर्मसंज्ञेति पारिशेष्याद् उपाध्यायस्यैव संप्रदानसंज्ञा भविष्यति ? नैतदस्ति; सत्यप्युभयोरभिप्रेयमाणत्वेऽन्तरङ्गत्वात्कर्मण एव गवादेः स्यात्। कर्मसंज्ञा तु ददातिकर्मणोऽन्यत्र सावकाशा, कारकप्रकरणे च प्रकर्षो नाश्रीयते, न त्वन्तरङ्गबहिरङ्गभावोऽपि। यंसग्रहणेऽक्रियमाणेऽभिप्रेतुरेव संप्रदानसंज्ञा स्यात्; श्रुतपदार्थसम्बन्धे सति तेनैव निराकाङ्क्षत्वादध्याहारानुपपत्तेः। सत्यपि वाध्याहारे यः स इत्येवाध्याहारात् तत उपाध्यायाय शिष्येण गौर्दीयत इत्यत्रार्थे शिष्यायोपाध्यायस्य गौर्दीयत इति स्यात्। कर्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रोपलक्षणार्थमिति तेन शिष्यस्य कर्तृत्वाभावेऽपि गोः कर्मसंज्ञा युज्यत एव। तथा च सार्थाद्धीयत इति कर्मणि लकारोत्पत्तिः।

अभिप्रग्रहणं किम्, यावता कर्मणा यमेति गच्छति प्राप्नोति संबध्नातीत्यर्थः, अभिप्रैतीत्युक्ते स एव ? अभिप्रग्रहणेऽक्रियमाणे कालविवक्षा स्यात्; ततश्च यमेव संप्रत्येति तत्रैव स्यात्, यमगात् यं चैष्यति तत्र न स्यात्; अभिप्रग्रहणे पुनः क्रियमाणे न दोषो भवति। अभिराभिमुख्ये वर्तते, प्रशब्दश्चादिकर्मणि, ततश्चोपसर्गद्वयोपादानसामर्थ्यात्कालान्तरावच्छिन्ना क्रिया नाश्रीयते। ननु यथा 'तेन दीव्यति' इत्यादौ सङ्ख्याकालयोरविवक्षा, तथेहापि संख्यावत्कालस्याप्यविवक्षा सिद्धा, सत्यम्; अयमेव न्यायसिद्धोऽर्थ उपसर्गद्वयोपादानेन प्रदर्श्यते। यदा त्वभिप्रैतीत्यस्य ईप्सतीत्यर्थः, तदाभिप्रग्रहणं कर्तव्यमेव।

न्यासः

अतो न भविष्यति। कर्मणेति किमर्थम्? 'यमभिप्रैति स सम्प्रदानम्' इत्युच्यमाने यमभिप्रैति तस्य कर्मण एव सम्प्रदानसंज्ञा स्यात्। कर्मसंज्ञायास्तु ददातिकर्मणोऽन्यत्रावकाशः स्यात्—ओदनं पचतीति। 'यं स' ग्रहणं किमर्थम्? 'कर्मणाभिप्रैति संप्रदानम्' इत्युच्यमाने योऽभिप्रैति तस्य संप्रदानसंज्ञा स्यात्। ततश्च कर्तुः संप्रदानसंज्ञा स्यात्, कर्तृसंज्ञायास्तु यत्र कर्मसम्बन्धो नास्ति, सोऽवकाशः स्यात्—आस्ते, शेते

✻ क्रियाग्रहणमपि कर्तव्यम् ✻ । क्रिययापि यमभिप्रैति स

पदमञ्जरी

क्रियाग्रहणमपि कर्तव्यमिति वार्त्तिकम्, एतद्व्याचष्टे—*क्रिययेत्यादि* । ननु क्रियामपि लोके कर्मेत्युपचरन्ति— किं कर्म करिष्यसि, कां क्रियामिति, तत्र कर्मणा यमभिप्रैतीत्येव सिद्धम् । एवमपि कर्तव्यम्; 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति' संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् । क्रियापि कृत्रिमं कर्म, तथा हि—य एव मनुष्यः प्रेक्षापूर्वकारी भवति, स बुद्ध्या तावत्कञ्चिदर्थं संपश्यति—इदमीदृशमिति, तद् दृष्टं प्रार्थयते—अयि ममेदं स्यादिति, ततस्तदुपायभूतां क्रियां पश्यति—अस्या एतत्फलमिति, ततः प्रार्थयते—कथमियं निष्पद्यतामिति, ततस्तत्साधनानि समवधार्य कर्तुमध्यवस्यति । प्रतीयमानक्रियापेक्षोऽपि कारकभावो भवत्येव, यथा—प्रविश पिण्डीमित्यत्र भक्षयेति गम्यते ।

न्यासः

इति । अथाभिप्रग्रहणं किमर्थम् ? 'कर्मणा यमेति स सम्प्रदानम्' इत्युच्यमाने कालविशेषविवक्षा स्यात्, वर्तमान एव स्यात् । ततश्चोपाध्यायाय गामदात्, उपाध्यायाय गां दास्यतीत्यत्र न स्यात्, अभिप्रग्रहणे तु सति भवति । अभिराभिमुख्ये वर्त्तते तच्चाप्यतीतेऽप्यस्ति । प्रशब्द आदिकर्मणि, प्रारम्भे । स चासन्निहितायां भाविन्यामपि क्रियायां सम्भवतीति सर्वत्र संज्ञा सिद्धा भवति । नैतदभिप्रग्रहणस्य प्रयोजनमुपपद्यते । यथैव कर्मणेत्यत्रैकत्वसंख्याया विवक्षा न भवति; यथा च 'यं' 'सः' इत्यत्र लिङ्गसंख्ययोर्विवक्षा न भवति, तथा कालस्यापि न भविष्यति । किं कारणम् ? उपलक्षणार्थत्वात् । यथा—'सोऽर्थो योऽनर्थं बाधते' इत्युक्ते योऽपि बाधितवान्, योऽपि बाधिष्यते सोऽप्यर्थ एव । एवं तर्हि ग्रन्थाधिक्यादर्थाधिक्यं यथा स्यादित्येवमर्थमभिप्रग्रहणम् । एतेन क्रिययापि यमभिप्रैति तस्यापि सम्प्रदानसंज्ञा सिद्धा भवति; अन्यथा हि यद्यपि क्रिया प्रार्थनाध्यवसानाभ्यां व्याप्तुमिष्टतमत्वात् कर्म, तथापि ददातिकर्मसम्बन्धाभावान्न सिद्ध्येत् । कथं पुनरेतदवसितम्—क्रियाया यमभिप्रैति स सम्प्रदानमित्ययमर्थोऽत्र प्रतिपादयितुमिष्टतम इति ? अभिप्रग्रहणात् । अस्ति ह्यत्राचार्यस्य कश्चिदर्थोऽधिकोऽभिमतः, यस्यावभासनायाधिकं शब्दान्तरं प्रयुक्तमिति गम्यते, न त्वर्थविशेषः । न हि तत् तस्य वाचकम् । यद्यप्यवाचकं स्यात्, तथापि लक्ष्यदर्शनवशादविच्छिन्नाचार्यपारम्पर्योपदेशाच्च विशेषावगतिर्भविष्यतीत्यद्वेष्यमेतत् ।

क्रियाग्रहणमपि कर्त्तव्यमिति । क्रियाया ग्रहणं क्रियाग्रहणम् । येन क्रिया गृह्यते, तद्व्याख्यानं कर्तव्यम् । किं पुनस्तद्व्याख्यानम् ? तच्चास्माभिरभिग्रहणस्य प्रयोजनं वर्णयद्भिः कृतमेव । का पुनरिह क्रिया, ययाभिप्रेयमाणस्य सम्प्रदानसंज्ञेष्यते ? सा विवक्षिता । अत आह—क्रिययापि यमभिप्रैतीत्यादि । निगद्यते इति । 'गर्द ग.९६

सम्प्रदानम् । श्राद्धाय निगल्हते । युद्धाय सन्नह्यते । पत्ये शेते ।

सम्प्रदानप्रदेशाः—चतुर्थी 'सम्प्रदाने' इत्येवमादयः ॥

※ कर्मणः करणसंज्ञा वक्तव्या सम्प्रदानस्य च कर्मसंज्ञा ※। पशुना रुद्रं यजते। पशुं रुद्राय ददातपीत्यर्थः ॥

## रुच्यर्थानां प्रीयमाणः ॥ ३३ ॥

### पदमञ्जरी

सूत्रकारश्च सूत्रयति—'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति। एवमपि क्रियाग्रहणं कर्तव्यम्; ददातिकर्मत्वात्। *निगर्हते इति*। नास्तिक्यान्निन्दतीत्यर्थः। 'गर्ह गल्ह कुत्सायाम्' अनुदात्तेत्। *युद्धायेति*। युद्धविषयं संनाहपूर्वकं निश्चयं करोतीत्यर्थः। नह्यतिः स्वरितेत्। *पत्ये शेते इति*। पतिमुपसृत्य शेत इत्यर्थः। यदि तर्हि क्रिययाभिप्रेयमाणस्यापि भवति कटङ्करोतीत्यादावपि प्राप्नोति, वचनाद्धि कर्मसंप्रदानसंज्ञयोः पर्यायः स्यात् ? नेतत्सार्वत्रिकम्, किं तर्हि ? प्रयोगदर्शनवशेन नियतविषयम्।

*कर्मणः करणसंज्ञेत्यादि*। एतच्छन्दोविषयम्, सर्वे विधयश्छन्दसि विकल्पन्ते, इति यथाप्राप्तमपि प्रयोगो भवति। *भाष्ये* तु ददातिकर्मणेति नाश्रितम्, प्रयोगाश्च बहवः—अर्यम्णे चरुं निर्वपेत्, देवेभ्यो ब्रह्मोदनमपक्षत्, देवेभ्यो हव्यं वहन्तः, छन्दांसि वै देवेभ्यो हव्यमूर्धा, यदङ्गमाशुषे त्वम्, शं नः करत्पर्वते इत्यादयः, तन्मते क्रियाग्रहणं न कर्तव्यम्। कथं यत्र संप्रदानत्वमिष्यते ? तत्र संदर्शनादीनां क्रियायाश्च भेदो विवक्ष्यते, ततश्च तैराप्यमाना क्रियापि कृत्रिमं कर्मेति सिद्धं तयाभिप्रेयमाणस्य संप्रदानत्वम्। यत्र तु नेष्यते तत्र भेदो न विवक्ष्यते, ततश्चोदनाद्येकफलावच्छेदेनैकीकृतया क्रिययाऽऽप्यमानस्य कर्मत्वमेव भविष्यति—कटङ्करोति, ओदनं पचतीति। गत्यर्थेषु तूभयं विवक्ष्यते—भेदः, अभेदश्च; तत्र भेदविवक्षायां ग्रामं गच्छतीति प्रयोग इति 'गत्यर्थकर्मणि' इत्येतदपि न वक्तव्यं भवति ॥

### न्यासः

कुत्सायाम्' अनुदात्तेत्। युद्धाय सन्नह्यत इति। 'नह बन्धने' दिवादौ स्वरितेत्। स चेह निश्चये वर्त्तते, युद्धे निश्चयं करोतीत्यर्थः। पत्ये शेते इति। शीङत्रोपसर्पणपूर्वके शयने वर्त्तते। पतिमुपसृप्य शेत इत्यर्थः। कर्मणः करणसंज्ञेत्यादि। एतत् पशुना रुद्रं यजते इत्येतद्विषयमेव वेदितव्यम्। यजिः स्वरितेत्। एतच्च 'व्यत्ययो बहुलम्' इति सुव्यत्ययेन सिद्धमेवेति न वक्तव्यम् ॥

रुचिना समानार्था रुच्यर्थाः। अन्यकर्तृकोऽभिलाषः = रुचिः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदतेऽपूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्त्ता।

पदमञ्जरी

*रुच्यर्थानां प्रीयमाणः॥ रुचिना समानार्था इति*। वस्तुकथनमेतत्। विग्रहस्तु रुचिरर्थो येषामिति। ते च रुचिना धातुना समानार्था भवन्ति। *प्रीयमाण इति*। 'प्रीञ् तर्पणे' इत्यस्मात् क्रैयादिकात् सकर्मकात्कर्मणि लः। देवादिकस्तु ङिदकर्मकः, तर्पमाण इत्यर्थः। *अन्यकर्तृक इति*। योऽभिलाषस्याश्रयः प्रीयमाणस्ततोऽन्यकर्तृक इत्यर्थः। कथं पुनरन्याश्रयस्याभिलाषस्यान्यः कर्त्ता भवति, यावता यदाश्रयव्यापारं धातुः प्राधान्येनाचष्टे स कर्त्ता? नेदं कर्तृलक्षणम्, किन्तु स्वातन्त्र्यमेव। तच्च क्वचिद्वास्तवम्, क्वचिद्वैवक्षिकम्। तदत्र माधुर्यातिशयेन स्वविषयं देवदत्ताश्रयमभिलाषं जनयन्मोदकस्तत्र कर्तेति गीयते। न चैवं लषेरपि प्रसङ्गः, देवदत्तो मोदकमभिलष्यतीति? अभिधानशक्तिवैचित्र्यादाश्रयकर्तृकोऽभिलाषो लषेर्वाच्यः, रुचेस्तु विषयकर्तृकः। दृष्टश्चायमभिधानप्रकारनियमोऽन्यत्रापि, तद्यथा—घटः पश्यतीति दृशेराश्रयकर्तृकं ज्ञानं वाच्यम्। घटः प्रकाशते इत्यत्र प्रकाशेर्विषयकर्तृकम्। विषय एव हि स्पष्टालोकमध्यवर्तित्वादिना सौकर्येण देवदत्ताश्रये ज्ञाने कर्तेति व्यपदिश्यते, न तु ज्ञानेन कश्चिदतिशयो विषयो जन्यते।

कोऽयं प्रकाशो नाम, यं प्राकट्यमाचक्षते *भाट्टाः*, तत्र कारकशेषत्वेन षष्ठीप्रसङ्गे वचनम्। अन्ये तु प्रीयमाणं देवदत्तं मोदकः प्रीणयतीति कर्मसंज्ञां प्राप्तां मन्यन्ते। अपरे त्वेवमाहुः—देवदत्तो रोचयति मोदकमिति हेतुत्वे प्राप्ते वचनमिति,

न्यासः

**रुच्यर्थानां प्रीयमाणः॥ रुचिना समानार्था रुच्यर्था इति**। रुच्यर्थानामित्यस्मादेव निपातनात्—मयूरव्यंसकादित्वान्मध्यपदलोपी समासः। समानार्था इति। एकार्था इत्यर्थः। यद्यपि 'रुचिर्दीप्तौ' पठ्यते, तथापीहाभिलाषे वर्त्तते, अनेकार्थत्वाद्धातूनाम्; तत्रैव प्रीयमाणार्थस्य सम्भवात्। यस्य ह्यभिलाषः स प्रीयमाणः। यस्त्वभिलषति स प्रीणाति। प्रीयमाण इति। तृप्यमाण इत्यर्थः। 'प्रीञ् तर्पणे' इत्येतस्मात् कर्मणि विहितस्य लस्य शानच्। अन्यकर्तृक इत्यादिना तमभिलाषविशेषं दर्शयन् रुचिशब्दस्यार्थमाचष्टे। प्रीयमाणापेक्षयाऽन्योऽर्थो वेदितव्यः। प्रीयमाणादन्यः कर्त्ता यस्य सोऽन्यकर्तृकः। रोचते स्वदते इति। 'रुच दीप्तौ', 'स्वद आस्वादने', अनुदात्तेतौ। देवदत्तस्थस्येत्यादिनाऽन्यकर्तृकतामभिलाषस्य दर्शयति।

प्रीयमाण इति किम् ? देवदत्ताय रोचते मोदकः पथि ॥

## श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ३४ ॥

श्लाघ-ह्नुङ्-स्था-शप—इत्येतेषां ज्ञीप्स्यमानो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति। ज्ञीप्स्यामानः = ज्ञपयितुमिष्यमाणः, बोधयितुमभिप्रेतः । देवदत्ताय श्लाघते । देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञपयितु-

पदमञ्जरी

देवदत्तं हि प्राप्य रोचते मोदको न सर्वान्, नानेच्छा हि प्राणिन इति । एव मुत्तरेष्वपि योगेषु द्रष्टव्यम् । उक्तं च—

हेतुत्वे कर्मसंज्ञायां शेषत्वे चापि कारकम् ।
रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते ॥ इति ।

*पथीति* । हेतुकर्मसंज्ञावदधिकरणसंज्ञा बाध्येतेति भावः । किं च प्रीयमाणग्रहणादेवादित्यो रोचत इति दीप्तिवाचिनामग्रहणम् ॥

*श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः* ॥ *ज्ञीप्स्यमान इति* । 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिषु पठ्यते, तस्मान्निशामनेऽर्थे हेतुमण्णिचि सनि 'आप्ज्ञपृधामीत्', 'अत्र लोपोऽभ्यासस्य', कर्मणि लटः शानजादेशः । निशामनं चेह ज्ञानमात्रमुच्यते, न चक्षुर्विज्ञानमेव, यदाह—*बोधयितुमभिप्रेत इति* । कथं तर्हि प्रयुज्यते—तज्ज्ञापयत्याचार्यः, विज्ञापना भर्तृषु सिद्धिमेतीति ? तस्मान्निशानेष्विति पाठः । 'शो तनूकरणे' ल्युडन्तः, संज्ञपितः पशुरित्युदाहरणम् । ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगः 'ज्ञप मिच्च' इति चुरादिणिजन्तस्य । अन्ये तु—'मितां ह्रस्वः' इत्यत्र 'वा चित्तविरागे' इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्चानिष्टे विषये ह्रस्वाभावमाहुः । देवदत्तं *प्रति श्लाघमानस्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थ इति* । श्लाघा स्तुतिः, प्रत्यक्षेण देवदत्तं

न्यासः

देवदत्ताय रोचते मोदकः पथीति । प्रीयमाणग्रहणादिहाधिकरणस्य पथः सम्प्रदानसंज्ञा न भवति । अथ देवदत्तो मोदकमभिलषतीत्यत्र देवदत्तस्य सम्प्रदानसंज्ञा कस्मान्न भवति ? रुच्यर्थाभावात् 'अन्यकर्तृको ह्यभिलाषो रुचिः' इत्युक्तम् । न चेहान्यकर्तृकोऽभिलाषः, किं तर्हि ? प्रीयमाणो देवदत्तो यस्तत्रस्थोऽभिलाषस्तत्कर्तृकः ।

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः ॥ ज्ञीप्स्यमान इति । 'मारणतोषणनिशामनेषु ज्ञा' इति घटादिषु पठ्यते । तस्मात् निशामने ज्ञाने वर्त्तमानाद् हेतुमण्णिच् । अथ वा 'ज्ञप मिच्च' इति चुरादौ पठ्यते । तस्माच्चुरादिणिच्, मित्त्वाद् ह्रस्वत्वम्; सन्, द्विर्वचनम्, 'आप्ज्ञप्यृधामीत्' इतीत्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः;

मिच्छतीत्यर्थः । एवं देवदत्ताय ह्नुते । यज्ञदत्ताय ह्नुते । देवदत्ताय तिष्ठते, यज्ञदत्ताय तिष्ठते । देवदत्ताय शपते, यज्ञदत्ताय शपते ।

ज्ञीप्स्यमान इति किम् ? देवदत्तः श्लाघते ॥

धारेरुत्तमर्णः ॥ ३५ ॥

धारयतेः प्रयोगे उत्तमर्णो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । उत्तममृणं यस्य स उत्तमर्णः । कस्य चोत्तममृणम् ? यदीयं धनम् ।

पदमञ्जरी

स्तौतीति यावत् । एवं हि तां देवदत्तः शक्यते ज्ञापयितुम् । अन्ये त्वाहुः— देवदत्तायात्मानं परं च श्लाघ्यं कथयतीत्यर्थ इति । तथा च *भट्टिकाव्यम्*—

श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसाधिपः ॥ इति ।

आत्मानं श्लाघ्यं परस्त्रीभ्यः कथयन्नित्यर्थः । *एवं देवदत्ताय निह्नुत इति* । 'ह्नुङ् अपनयने' देवदत्तं प्रति निह्नुवानस्तां निह्नुतिं तमेव ज्ञापयितुमिच्छतीत्यर्थः । इत्येष एवंशब्दस्यार्थः । निह्नुतिरपलापः, संनिहितमेव देवदत्तं धनिकादेरपलपतीत्यर्थः । अन्ये तु ह्नोतव्यं किञ्चिद्देवदत्तं ज्ञापयतीत्यर्थ इत्याहुः । *देवदत्ताय तिष्ठत इति* । ईदृशोऽहमिति देवदत्तस्य स्थानेन प्रकाशयतीत्यर्थः । *देवदत्ताय शपते इति* । शपथेन किञ्चित्प्रकाशयतीत्यर्थः । *देवदत्तः श्लाघते इति* । ज्ञीप्स्यमानवचनात् कर्मसंज्ञैव बाध्यते, न कर्तृसंज्ञेत्यर्थः । एवं गार्गिकया श्लाघते सभायामिति करणाधिकरणसंज्ञे न बाध्येते । क्वचित्तु *देवदत्तं श्लाघते इति* पाठः । तत्रायं भावः—यस्मायाख्यायते स ज्ञीप्स्यमान इत्याख्यायमाना द्वितीयेव न्याय्येति । ये त्वाख्यायमानं ज्ञीप्स्यमानं वदन्ति तेषां यस्मायाख्यायते ततः षष्ठी भवति—देवदत्ताय श्लाघते यज्ञदत्तो विष्णुमित्रस्येति ॥

*धारेरुत्तमर्णः* ॥ *उत्तममृणं यस्येति* । उत्तमम् = उत्कृष्टतमम्, उत्कृष्टार्थवृत्तेरुच्छब्दात्तमपि द्रव्यप्रकर्षत्वादामभावः । अर्त्तेः क्तः, ऋणम् 'ऋणमाधमर्ण्ये'

न्यासः

कर्मणि लकारः, शानच्, यक्, 'अतो लोपः' । श्लाघते इति । 'श्लाघृ कत्थने' अनुदात्तेत् । अपह्नुत इति 'ह्नुङ् अपनयने', आदादिकः । तिष्ठत इति । 'प्रकाशनस्थेयाख्ययोश्च' इति तङ् । शपत इति । 'शप उपलम्भने' इत्यनेनोपसंख्यानेन तङ् ॥

धारेरुत्तमर्णः ॥ उत्तमर्ण इति । ऋणे उत्तम उत्तमर्णः । अत एव निपातनात् समासः; सप्तमीसमासे ऋणस्य पूर्वनिपातात् । ननु चोत्तमर्णे ऋणशब्देन न भवितव्यम् । 'ऋणमाधमर्ण्ये' इत्याधमर्ण्ये तस्य निपातनात्, नैतदस्ति; कालान्तरे देयनियमोपलक्षणार्थं हि तत्राधमर्ण्यग्रहणम् । अत उत्तमर्णेऽपि भवत्येव ।

धनस्वामी प्रयोक्ता उत्तमर्णः, स संप्रदासंज्ञो भवति। देवदत्ताय शतं धारयति। यज्ञदत्ताय शतं धारयति।

उत्तमर्ण इति किम्? देवदत्ताय शतं धारयति ग्रामे॥

स्पृहेरीप्सितः॥ ३६॥

'स्पृह ईप्सायाम्' चुरादावदन्तः पठ्यते। तस्य ईप्सितो योऽर्थ-स्तत्कारकं संप्रदानसंज्ञं भवति। 'ईप्सितः' इत्यभिप्रेत उच्यते। पुष्पेभ्यः स्पृहयति। फलेभ्यः स्पृहयति।

ईप्सित इति किम्? पुष्पेभ्यो वने स्पृहयति॥

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः॥ ३७॥

पदमञ्जरी

इत्यत्र कालान्तरे देयद्रव्यविनिमयोपलक्षणार्थमाधमर्ण्यग्रहणमित्युत्तमर्णेऽपि नत्वं भवति। अत्र बहुव्रीहौ निष्ठायाः पूर्वनिपाते 'जातिकालसुखादिभ्यः परवचनम्' इति सुखादेराकृतिगणत्वादस्मादेव वा निपातनादृणशब्दस्य परनिपातः। *शतं धारयतीति*। 'धृङ् अवस्थाने', ध्रियमाणं स्वरूपेणावतिष्ठमानं स्वभावाद-प्रच्यवमानं शतं प्रयुङ्क्त इति णिच्। *ग्राम इति*। नन्वत्र परत्वादधिकरणसंज्ञेव भविष्यति; उत्तमर्णेऽपि तर्हि हेतुसञ्ज्ञा स्यात्॥

*स्पृहेरीप्सितः॥ चुरादावदन्तः पठ्यत इति*। तेन स्पृहयतीत्यत्रातो लोपस्य स्थानिवद्भावाल्लघूपधगुणो नेति भावः। *ईप्सित इति*। 'मतिबुद्धि' इत्यादिना वर्त्तमाने क्तः। ईप्सितमात्रे इयं संज्ञा। प्रकर्षविवक्षायां तु परत्वात् कर्मसंज्ञेव भवति—पुष्पाणि स्पृहयतीति। यदा त्वीप्सितमीप्सिततमं वा शेषत्वेन विवक्ष्यते, तदा षष्ठी भवति॥

*क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः॥ गुणेष्विति*। शौचाचारादिषु। दाषा-

न्यासः

शतं धारयतीति। 'धृङ् अवस्थाने', शतं ध्रियते स्वरूपेणावतिष्ठते, स्वभावान्न प्रच्यवते। तदन्यः प्रयुङ्क्त इति 'हेतुमति च' इति णिच्। ग्राम इति ग्रामस्याधि-करणस्यानुत्तमर्णस्य न भवति।

स्पृहेरीप्सितः॥ स्पृहयतीति। अतो लोपस्य 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावाद् गुणो न भवति। यदा तु पुष्पादीनामीप्सिततमत्वं विवक्ष्यते, तदा परत्वात् कर्मसंज्ञैव भवति—पुष्पाणि स्पृहयतीति।

क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः॥ क्रुधद्रुहावकर्मकौ, तत्र पष्ठ्यां प्राप्तायाम-

अमर्षः = क्रोधः । अपकारः = द्रोहः । अक्षमा = ईर्ष्या । गुणेषु दोषाविष्करणम् = असूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवति । क्रोधस्तावत्कोप एव, द्रोहादयोऽपि कोपप्रभावा एव गृह्यन्ते। तस्मात्सामान्येन विशेषणम्—यं प्रति कोप इति। देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति । देवदत्तायेर्ष्यति । देवदत्तायासूयति ।

यं प्रति कोप इति किम्? भार्यामीर्ष्यति—मैनामन्यो द्राक्षीदिति ॥

क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ ३८ ॥

पूर्वेण संप्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । क्रुधद्रुहो-रुपसृष्टयोरुपसर्गसंबद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति । देवत्तमभिक्रुध्यति । देवदत्तमभिद्रुह्यति ।

उपसृष्टयोरिति किम् ? देवदत्ताय क्रुध्यति । यज्ञदत्ताय द्रुह्यति ॥

पदमञ्जरी

*विष्करणमिति* । दम्भादिदोषाध्यास इत्यर्थः । तत्र क्रुधद्रुहावकर्मकाविति कारक-शेषत्वान्नटस्य शृणोतीतिवत् षष्ठ्यां प्राप्तायां वचनम्, इतरयोस्तु सकर्मकत्वाद् द्वितीया प्राप्नोति । अत्र च चित्तदोषरूपत्वं यद्यपि क्रोधादीनामविशिष्टम्, तथाप्यन्येषामेवञ्जातीयकानां द्वेषादीनामग्रहणार्थमवान्तरभेदविवक्षया पृथगिमे निर्दिष्टाः, न तु चित्तदोषार्थानामिति । तेनास्मान् द्वेष्टीत्यत्र न भवति, अनभि-नन्दनं ह्यस्यार्थः । तथा चाचेतनेष्वपि प्रयुज्यते—औषधं द्वेष्टीति । कथं पुनरेकेन क्रुधिना सर्वे क्रुधादयः शक्या विशेषयितुमत आह—*क्रोधस्तावदिति* । भार्या-मीर्ष्यतीत्यत्र केवलं परैर्दृश्यमानां भार्यां न क्षमते, न तु तां प्रति कोपः ॥

*क्रुधद्रुहोरुपसृष्टयोः कर्म* ॥ *उपसर्गेण सम्बद्धयोरिति* । 'उपसर्गाः क्रिया-

न्यासः

यमारम्भः, इतरौ सकर्मकौ । तत्र द्वितीयायां प्राप्तायाम् । कथं पुनरेषां भिन्ना-र्थत्वे सति 'यं प्रति कोपः' इति सामान्येन तद्विशेषणमुपपद्यत इत्याह—क्रोधस्तावदि-त्यादि । सुगमम् । क्रुध्यति, द्रुह्यतीति । 'क्रुध कोपे', 'द्रुह जिघांसायाम्' दैवादिकौ । ईर्ष्यतीति । 'ईर्क्ष्य सूर्क्ष्य ईर्ष्य ईर्ष्यार्थाः' । असूयतीति । असूयशब्दः कण्ड्वादि-पठितः । भार्यामीर्ष्यतीति । अस्ति भार्यायामीर्ष्या, न तु तां प्रति कोपः ।

## राधीक्ष्योर्यस्य विप्रश्नः ॥ ३९ ॥

राधेरीक्षेश्च कारकं संप्रदानसंज्ञं भवति । कीदृशम् ? यस्य विप्रश्नः । विविध प्रश्नः = विप्रश्नः । स कस्य भवति ? यस्य शुभाशुभं पृच्छ्यते । देवदत्ताय राध्यति । देवदत्तायेक्षते । नैमित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः ॥

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता ॥ ४० ॥

प्रति-आङ्—इत्येवम्पूर्वस्य शृणोतेः कारकं संप्रदानसंज्ञं भवति, कीदृशम् ? पूर्वस्य कर्त्ता । प्रतिपूर्वं आङ्पूर्वश्च शृणोतिरभ्युपगमे =

पदमञ्जरी

योगे' उपसृजन्तीत्युपसर्गाः, पचाद्यचि न्यङ्क्वादित्वात् कुत्वम् । तेनोपसृष्टयोरित्यस्योपसर्गेण सम्बद्धयोरित्ययमर्थो भवति । स्वनिकायप्रसिद्धिर्वा ॥

*राधीक्ष्योर्यस्य विप्रश्नः* ॥ *यस्येति* कर्मणि षष्ठी, यद्विविधं पृच्छ्यत इत्यर्थः । *यत्सम्बन्धीत्यादि* । यत्सम्बन्धिनः शुभाशुभस्य विप्रश्न इति । *देवदत्ताय राध्यतीति* । 'राधोऽकर्मकाद्वृद्धावेव' इति दिवादौ, तत्र वृद्धावित्युपलक्षणमकर्मकादिति वचनाद् वृद्धावकर्मकत्वाव्यभिचारात् । एवकारस्तु भिन्नक्रमः–राधोऽकर्मकादेव श्यन् भवति, यथा–वृद्धाविति । तेन सत्यप्येवकारे पर्यालोचनस्य वृत्तिरविरुद्धा । तत्र धात्वर्थेनोपसंग्रहाज्जीवत्यादिवद् राधोऽकर्मत्वमविरुद्धम् । निमित्तं वेद नैमित्तिकः, उल्कादिषु वसन्तादिषु वा निमित्तशब्दो द्रष्टव्यः । यस्यग्रहणमनर्थकम्, यं प्रतीत्येव, तत्र यं प्रति विप्रश्न इत्यन्वये किं नाम विवक्षितं न सिध्यति ! ॥

*प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता* ॥ द्विवचननिर्देशात् प्रत्येकमुपसर्गसम्बन्ध इत्याह—*आङ्पूर्वस्य प्रतिपूर्वस्य चेति* । कः पुनरत्र पूर्वो व्यापार इत्यत्राह—

न्यासः

केवलं परैर्दृश्यमानां तां न क्षमते । अथास्मान् द्वेष्टीत्यत्र कथं न भवति सम्प्रदानसंज्ञा ? द्विषेरक्रोधाद्यर्थत्वात् । अप्रीतौ ह्येनं स्मरन्ति, तथा चाचेतनेष्वपि प्रयुज्यते—औषधं द्वेष्टीति । नाभिनन्दतीति गम्यते ।

क्रुधद्रुहोरुपसृष्टयोः कर्म ॥ राधीक्ष्योर्यस्य विप्रश्नः ॥ राध्यतीति । 'राध साध संसिद्धौ', दैवादिकः । दैवमिति शुभाशुभं कर्म । यस्येति ग्रहणं विस्पष्टार्थम् । तथा हि—'यं प्रति' इत्यनुवर्त्तते, तत्र यं प्रति विप्रश्न इत्येवमभिसम्बन्धे क्रियमाणे यस्येत्यस्यार्थोऽप्रयुज्यमानस्यापि गम्यत एव ।

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता ॥ परेणेत्यादि । अन्येन केनचिदिदं मे क्रियतामिति प्रयुक्तो व्यापारितः सन् प्रतिजानीते । अतः प्रतिज्ञातुरन्येन प्रयुक्तस्याभ्यु-

प्रतिज्ञाने वर्त्तते । स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति । तत्र प्रयोक्ता पूर्वस्याः क्रियायाः कर्त्ता संप्रदानसंज्ञो भवति । देवदत्ताय गां प्रतिश्रृणोति, देवदत्ताय गामाश्रृणोति । प्रतिजानीत इत्यर्थः ॥

अनुप्रतिगृणश्च ॥ ४१ ॥

'पूर्वस्य कर्ता' इति वर्त्तते । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति । होत्रेऽनुगृणाति । होता प्रथमं शंसति तमन्यः प्रोत्साहति । अनुगरः,

पदमञ्जरी

*प्रत्याङ्पूर्वश्चेत्यादि* । *परेण प्रयुक्तस्येति* । इदं मे देहीत्येवं प्रार्थितस्येत्यर्थः । *पूर्वस्याः क्रियाया इति* । सूत्रे तु व्यापाररूपविवक्षया पूर्वस्येति निर्देशः, यत्र हेतुसञ्ज्ञायां प्राप्तायां देवदत्तेन प्रतिश्रृणोतीति प्रयोगनिवृत्तये वचनमित्याहुः । विवक्षान्तरे च देवदत्तो गां प्रतिश्रावयतीति भवत्येव ॥

*अनुप्रतिगृणश्च* ॥ पूर्वेण साहचर्यादत्रापि प्रत्येकमुपसर्गसम्बन्ध इत्याह—*अनूपूर्वस्य प्रतिपूर्वस्य चेति* । कः पुनरत्र पूर्वो व्यापार इत्यत्राह—*होता प्रथममित्यादि* । *अन्य इति* । अध्वर्युः । कथं पुनर्ज्ञायते—अनुप्रतिपूर्वो गृणातिः शंसितुः

न्यासः

पगमो भवति । प्रयोक्तेति व्यापारयिता । सूत्रे पूर्वस्येत्यर्थापेक्षया पुंल्लिङ्गेन निर्देशः । स त्वर्थो विचार्यमाणः क्रियैव भवति । यस्मात् कर्त्तेति क्रियाया एव भवति नान्यस्यार्थस्येत्याह—पूर्वस्याः क्रियाया इति । यश्चासौ पूर्वस्याः क्रियायाः कर्त्ता भवति, स प्रतिज्ञातुः प्रयोजको भवतीति हेतुसंज्ञायां प्राप्तायामिदं वचनम् । देवदत्ताय गां प्रतिश्रृणोति । अत्र पूर्वस्या याचनक्रियाया देवदत्तः कर्त्ता । देवदत्तेन हि मह्यं गां देहीति याचितः स यदा ददामीति प्रतिजानीते, तदैवं प्रयुज्यते—देवदत्ताय गां प्रतिश्रृणोतीति । पूर्वस्य कर्त्तेति किम् ? विना तेन गवादेरभ्युपेयमानस्य कर्मण एव स्यात् । ननु च परत्वात् कर्मसंज्ञा तस्य बाधिका भविष्यति, नैतदस्ति; नाप्राप्ते हि संज्ञान्तर इदमारभ्यत इति । इहापि च देवदत्ताय गामाश्रृणोतीति देवदत्तस्य हेतुसंज्ञा प्राप्नोति । तत्र पूर्वस्य कर्त्तेत्यस्मिन्नसति यथा देवदत्तस्य हेतुसंज्ञां बाधते, तथा कर्मसंज्ञामपि बाधेत । अथ वा—'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान्' इति कर्मसंज्ञामेव बाधेत । पूर्वस्य कर्त्तेत्यस्मिंस्तु सति हेतुसंज्ञामेव बाधते, न कर्मसंज्ञाम् ।

अनुप्रतिगृणश्च ॥ अनुप्रतिगृण इति श्नाप्रत्ययेन निर्देशात् क्र्यादिपठितस्य 'गॄ शब्दे' इत्यस्य, न 'गॄ निगरणे' इत्यस्य तौदादिकस्य । होता प्रथमं शंसतीति । एतेन

प्रतिगरः इति हि शंसितुः प्रोत्साहने वर्त्तते । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ॥

## साधकतमं करणम् ॥ ४२ ॥

क्रियासिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसंज्ञं भवति । दात्रेण लुनाति । परशुना छिनत्ति ।

### पदमञ्जरी

प्रोत्साहने वर्त्तत इत्याह—*अनुगरः प्रतिगर इत्यादि* । अनुगीर्यते प्रोत्साह्यते येन शब्देन सोऽनुगरः । एवं प्रतिगरः, ओथामो दैवेत्येवमादिकः शब्दः; तेन हि प्रतिगीर्यते ।

*साधकतमं करणम्* ॥ 'षिधू संराद्धौ' इत्यस्य हेतुमण्ण्यन्तस्य 'सिद्ध्यतेरपारलौकिके' इत्यात्वे 'राध साध संसिद्धौ' इत्यस्य वा ण्यन्तस्य साधकशब्दः । क्रियात्मकश्चार्थः । प्रयोज्यः कर्ता, सिध्यतः साध्यवतो वा क्रियात्मनोऽर्थस्य प्रयोजकतमं साधकतमम् । ननु सामग्र्यधीना क्रियासिद्धिर्नो खलु कर्त्रादीनामन्यतमापायेऽपि क्रिया निष्पद्यते, तत्किमपेक्षः कारकाणां मध्ये एकस्यातिशययोगः स्यात् ? उच्यते; दात्रादेः छेद्यद्रव्यानुप्रवेशो व्यापारः, काष्ठादेः पाके प्रज्वलनजनितोष्णस्पर्शानुप्रवेशः, तदनन्तरमेव क्रियासिद्धिः, नैवं कारकान्तरेष्वनुप्रवेशः तद्व्यापारानन्तरं वा क्रियानिष्पत्तिः समस्ति, अतः—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम् ॥

'विवक्ष्यते' इत्यनेनैतद् दर्शयति—देशकालावस्थादिवशेन यस्य क्रिया प्रत्युपयोगातिशयेन व्यापारः प्रत्यासीदन् विवक्ष्यते, तदा तस्य करणत्वं भवतीति । यथा स्थाल्यधिकरणत्वेन प्रसिद्धा, तस्या अपि तनुतरकपालतया प्रकर्षविवक्षायां करणत्वं भवति—स्थाल्या पच्यत इति । उक्तं च—

### न्यासः

स्तुतिक्रियायाः पूर्वस्या होता कर्त्तेति दर्शयति । प्रोत्साहयतीत्यनेनानुगृणातिप्रतिगृणातिशब्दयोरर्थमाचष्टे । कथं पुनर्ज्ञायते—अनुपूर्वः प्रतिपूर्वश्च शंसितुर्गृणातिः प्रोत्साहने वर्त्तत इत्याह—अनुगरः प्रतिगर इति । अनुगीर्यते=होता प्रथमं प्रशस्यते येन शब्देन सोऽयमनुगरः । एवं प्रतिगीर्यते येन स प्रतिगरः । पूर्वस्य कर्त्तेत्येव, होत्रेऽनुगृणाति सदसीत्यधिकरणस्य मा भूत् ॥

**साधकतमं करणम्** ॥ ननु च सामग्र्यधीना हि क्रियासिद्धिरेकस्याप्यभावेन न भवति । तत् कस्यात्र प्रकर्षो यत्परिग्रहाय साधकतमशब्दस्य ग्रहणमिति यश्चोदयेत्, तं प्रत्याह—क्रियासिद्धावित्यादि । प्रकृष्टम्=अत्यन्तमुपकारकम् । अथ वा—प्रकर्षः

तमब्ग्रहणं किम् ? गङ्गायां घोषः । कूपे गर्गकुलम् ।

करणप्रदेशाः—'कर्तृकरणयोस्तृतीया' इत्येवमादयः ॥

### पदमञ्जरी

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ इति ।

न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः; भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ, न च शतधनो निष्कधनेन सह स्पर्द्धते ! कथं तर्ह्यश्वेन दीपिकया रथेन सञ्चरते इति बहूनां करणत्वम्, यावता तेष्वपि यदासन्नोपकारकं तदेव करणं युक्तम् ! उच्यते; कारकान्तरापेक्षः करणस्यातिशयः, न स्वकक्षायाम्; तेन सर्वेषां क्रियानिष्पत्तौ संनिपत्योपकारकत्वात् सिद्धं करणत्वम् ।

*तमब्ग्रहणं किमिति* । कारकाधिकारात् सिद्धे साधकत्वे पुनः साधकश्रुतिः प्रकर्षार्था भविष्यतीति प्रश्नः । *गङ्गायां घोष इति* । असति तमब्ग्रहणे आधारो नाम यत्राधारात्मा व्याप्तो भवत्याधेयेन, तेनेहैव स्यात्—तिलेषु तैलम्, पयसि सर्पिरिति; गङ्गायां घोष इत्यत्र न स्यात् । तमब्ग्रहणं तु ज्ञापयति—इह प्रकरणे सामर्थ्यगम्यः प्रकर्षो नाश्रीयते, तेनेहापि भवति । यदा च देशधर्मो घोषं प्रत्याधारभावः स्रोतस्युपचर्यते, तदेवं तमब्ग्रहणस्य प्रयोजनम्; यदा तु गङ्गाशब्दस्तीरे वर्त्तते तदा न प्रयोजनम्, आधेयेन व्याप्तिसम्भवान्मुख्य एवाधारभाव इति ॥

### न्यासः

प्रकृष्टम् 'नपुंसके भावे क्तः' । प्रकृष्टेन प्रकर्षेणोपकारकं प्रकृष्टोपकारकम् यत् क्रियासिद्धिविषये प्रकर्षेणोपकारकं विवक्षितं तत् साधकतमम् । विवक्षितग्रहणं यदा प्रकृष्टोपकारकत्वेन विवक्ष्यते, तदा साधकतमव्यवहारो विज्ञायते, नान्यदेति ज्ञापनार्थम् । तथा हि—विवक्षावशाद् यदेव कदाचित् करणम्भवति—धनुषा विध्यतीति, तदेव कदाचित् स्वातन्त्र्यविवक्षायां कर्तृत्वमनुभवति—धनुर्विध्यतीति । लुनातीति । 'प्वादीनां ह्रस्वः' ।

**तमब्ग्रहणं किम् ? गङ्गायां घोष इति** । यदि तमब्ग्रहणं न क्रियेत, ततोऽत्राधिकरणसंज्ञा न स्यात् । इह हि द्विविध आधारः—गौणः, मुख्यश्च । तत्र मुख्यो य आधेयेन व्याप्यते, यथा—तिलेषु तैलमस्ति; अत्र तैलेनाधेयेनाधारभूतास्तिला व्याप्ताः । अव्याप्तो गौणो यथा—गङ्गायां घोष इति । अत्र हि सामीप्याद् गङ्गाया आधारत्वमुपचरितम्, न मुख्यम् ; व्याप्त्यभावात् । तत्रासति तमब्ग्रहणे 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति मुख्यस्यैवाधिकरणसंज्ञा स्यात्, नेतरस्य; तमब्ग्रहणात् तस्यापि भवति ; तथापीह तमब्ग्रहणं न कर्त्तव्यम्, कथम् ? विनापि तेन प्रकर्षा-

## दिवः कर्म च ॥ ४३ ॥

पूर्वेण करणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । दिवः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति, चकारात्करणसंज्ञं च । अक्षान्दीव्यति, अक्षैर्दीव्यति ॥

### पदमञ्जरी

*दिवः कर्म च* ॥ ननु चाक्षान् दीव्यतीत्यत्र पातयतीत्यर्थस्तत्र कर्मत्वं सिद्धम्; अक्षैर्दीव्यतीति, क्रीडतीत्यर्थः, तत्र करणत्वं सिद्धम्, किमर्थमिदमित्याशङ्क्याह—*पूर्वेण करणसंज्ञायामिति*। अक्षैः क्रीडतीत्यस्यामेव विवक्षायामक्षान् दीव्यतीतीष्यते, अत्र च करणसंज्ञेव प्राप्नोति, अक्षान्पातयतीत्यत्र चार्थेऽक्षैर्दीव्यतीति नेष्यते, अतः साधकतमस्यैव करणसंज्ञायां प्राप्तायामयमारम्भ इत्यर्थः । अथ किमर्थश्चकारः ? करणसंज्ञापि यथा स्यात्, नैतदस्ति प्रयोजनम्; वक्ष्यमाणमन्यतरस्यांग्रहणमिहैव करिष्यामि, तत्राह—*चकारात्करणसंज्ञं चेति* । युगपत्संज्ञाद्वयं यथा स्यादिति भावः । अन्यतरस्यांग्रहणे तु पर्यायः स्यात्—यदा कर्म न तदा करणम्, यदा करणं न तदा कर्म; चकारात्तु युगपदेव संज्ञाद्वयं भवतीत्यर्थः । यौगपद्यप्रयोजनं मनसा दीव्यतीति कर्मत्वादण् प्रत्ययः, करणत्वाच्च तृतीया 'मनसः संज्ञायाम्' इत्यलुक्—मनसा देवः । इह चाक्षैर्देवयते देवदत्तो यज्ञदत्तेनेति, अक्षैरिति तृतीयाप्रयोगेऽपि धातोः सकर्मकत्वाद् 'गतिबुद्धि' इत्यादिनाऽण्यन्तावस्थायां कर्त्तुर्यज्ञदत्तस्य कर्मसंज्ञा न भवति, 'अणावकर्मकात्' इति परस्मैपदं च । यदि तर्हि समावेशः—अक्षान् दीव्यतीति परत्वात् तृतीया प्राप्नोति; पर्याये तु नायं दोषः, कर्मसंज्ञापक्षे करणसंज्ञाया अभावात् । समावेशे तु करणसंज्ञाया अवकाशः—विदेवना अक्षाः, 'करणाधिकरणयोश्च' इति ल्युट्; कर्मसंज्ञाया अवकाशः—दीव्यन्ते भवताक्षाः, 'भावकर्मणोः' इति यगात्मनेपदे; अक्षानित्यत्र

### न्यासः

वगतेः । यथैव ह्यनभिरूपाय कन्यादानस्य प्रवृत्तिर्नास्तीत्यभिरूपाय कन्या देयेत्युक्ते विनापि प्रकर्षप्रत्ययेनाभिरूपतमायेति गम्यते; तथेहापि कारकाधिकारादसाधके संज्ञायाः प्रवृत्तिर्नास्तीति 'साधकं करणम्' इत्युक्तेऽन्तरेणापि तमब्ग्रहणं साधकतममिति गम्यते, तत् किं तमब्ग्रहणेन ? तदेतत् तमब्ग्रहणं ज्ञापनार्थं कृतम् । एतदनेन ज्ञाप्यते—'इह कारकाधिकारे इतः सूत्रादन्यत्र विना तमब्ग्रहणेन प्रकर्षो नाश्रीयते' इति । नेन 'आधारोऽधिकरणम्' इत्यनेन 'गङ्गायां घोषः' इत्यादावमुख्यस्यापि गङ्गादेर. रस्याधिकरणसंज्ञा सिद्धा भवति ॥

दिवः कर्म च ॥ दीव्यतीति । 'हलि च' इति दीर्घः ।

## परिक्रयणे संप्रदानमन्यतरस्याम् ॥ ४४ ॥

'साधकतमम्' इति वर्तते । पूर्वेण करणसंज्ञायां प्राप्तायां संप्रदानसंज्ञा पक्षे विधीयते । परिक्रयणे साधकतमं कारकमन्यतरस्यां संप्रदानसंज्ञं भवति । परिक्रयणं नियतकालं वेतनादिना स्वीकरणम्, नात्यन्तिकः क्रय एव । शतेन परिक्रीतोऽनुब्रूहि । शताय परिक्रीतोऽनुब्रूहि । सहस्रेण परिक्रीतोऽनुब्रूहि । सहस्राय परिक्रीतोऽनुब्रूहि ।

## आधारोऽधिकरणम् ॥ ४५ ॥

पदमञ्जरी

मयसंज्ञाकार्यप्रसङ्गे परत्वात्तृतीया स्यात्, नैष दोषः; कार्यकालं हि संज्ञापरिभाषम्, ततश्च 'कर्मणि द्वितीया' इत्यत्र यदस्योपस्थानं तदनवकाशमिति द्वितीया भविष्यति । अयं तर्हि समावेशे दोषः—दीव्यन्तेऽक्षा इति कर्मण्यभिहितेऽपि करणस्यानभिहितत्वात्तृतीया स्यात्, तथा देवना अक्षा इति ल्युटा करणस्याभिधानेऽपि कर्मणोऽनभिधानेन द्वितीया स्यात् ? नैष दोषः; एकैव कारकशक्तिः संज्ञाद्वययोगिनी । ततश्चैकस्मिन् कारकेऽभिहिते कारकान्तरमप्यभिहितमेव भवति; शक्तेरेकत्वात् ॥

*परिक्रयणे संप्रदानमन्यतरस्याम्* ॥ परिक्रयणशब्दे धातुगतमेव रेफमाश्रित्य 'रषाभ्याम्' इत्येव णत्वम्, प्रथमोपनिपतितत्वाद्, यथोपसर्गाभावे क्रयणमिति; न तूपसर्गस्थमाश्रित्य 'कृत्यचः' इत्यनेन तस्य पश्चादुपनिपतितत्वेन बहिरङ्गत्वात् । *वेतनादिनेति* । वेतनं भृतिः, नियतकालत्वमेव स्पष्टयति । *नात्यन्तिकः क्रय एवेति* । परिशब्दः सामीप्यं द्योतयति । क्रयो नामात्यन्तिकं स्वीकरणम्, नियतकालं तु तस्य समीपमेवेति परिशब्दस्यार्थः ॥

*आधारोऽधिकरणम्* ॥ आध्रियन्तेऽस्मिन् क्रिया इत्याधार इति 'अध्यायन्यायो-

न्यासः

परिक्रयणे संप्रदानमन्यतरस्याम् ॥ परिक्रीतिः = परिक्रयणम् । नियतकालमिति । नात्यन्तिकम् । वेतनादिनेति । आदिशब्देन बन्धकादीनां ग्रहणम् । नात्यन्तिकः क्रय एवेति नियतकालत्वं स्पष्टीकरोति । परिशब्दोऽत्र प्रत्यासत्तिं द्योतयति । क्रयो हि नामात्यन्तिकः । वेतनादिना केवलं यत्तु नियतकालं तदात्यन्तिकस्य क्रयस्य समीपमिति परिशब्देनाख्यायते ॥

आधारोऽधिकरणम् ॥ आध्रियन्ते क्रियागुणा अस्मिन्नित्याधार इति । 'अध्यायन्यायोद्याव' इत्यादिनाऽऽधारशब्दोऽधिकरणे घञन्तो न्युङ्क्वादितः । क्रियापेक्षत्वात्

आध्रियन्तेऽस्मिन् क्रिया गुणः इत्याधारः। कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणसंज्ञं भवति। कटे आस्ते। कटे शेते। स्थाल्यां पचति।

पदमञ्जरी

द्याव' इत्यादिनाऽधिकरणे घञ्। क्रियापेक्षत्वात् कारकभावस्य क्रियाग्रहणम्। यदि क्रियाधारस्याधिकरणसंज्ञा, कर्तृकर्मणोरेव स्यात्। कर्तृस्था हि क्रिया भवति कर्मस्था वा। कर्तृसंज्ञायाः कोऽवकाशः? ये कर्मस्थक्रियाः—पचत्योदनं देवदत्त इति। नन्वत्राप्यधिश्रयणादेराधारः कर्तेति स्यादेव प्रसङ्गः? अयं तर्ह्यवकाशः—देवदत्ताय रोचते मोदक इत्युक्तम्, अत्र देवदत्तस्थस्याभिलाषस्य मोदकः कर्तेति। अथाप्यनवकाशा कर्तृसंज्ञा? एवमपि पर्यायः स्यात्। अथ कर्मसंज्ञायाः को ऽवकाशः? ये कर्तृस्थक्रियाः—आदित्यं पश्यतीति। अतः कर्तृकर्मणोरेवाधिकरणसंज्ञाप्रसङ्ग इत्यत आह—*कर्तृकर्मणोरित्यादि*। कथं पुनः साक्षात्क्रियाधारे सम्भवति क्रियाधारभूतकर्तृकर्मव्यवधानेन क्रियाधारस्य गौणस्य ग्रहणं शक्यं विज्ञातुम्? करणसंज्ञायां तमब्ग्रहणेन ज्ञापितमेतद्—यथाकथञ्चित्क्रियाधारस्यापि करणसंज्ञा भवतीति। मुख्यस्यापि तु कस्मान्न स्याद्? इत्येतावदपि न, परत्वात् कर्तृकर्मसंज्ञायाम् बाधितत्वादिति गतमेतत्। *आस्त इति* कर्तृस्थायाः क्रियाया उदाहरणम्। *पचतीति* कर्मस्थायाः।

त्रिविधं च तदधिकरणम्—औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति। कटे आस्ते, गुरौ आवसति, तिलेषु तैलमिति॥

न्यासः

कारकस्येति क्रियाग्रहणम्। यद्याध्रियन्ते क्रिया यस्मिन् स आधारः इति, एवं हि सति कर्तृकर्मणोरेवाधिकरणसंज्ञा प्रसज्येत, तयोरेव हि क्रिया आध्रियन्ते। तथा हि—कर्तृस्था वा क्रिया भवति, कर्मस्था वा, अनवकाशत्वात् कर्तृकर्मणोः संज्ञा न भविष्यत्येव दोषप्रसङ्ग इति, एतच्चानुत्तरम्; सत्यपि ह्यनवकाशत्वे तयोः पर्यायः स्यात्। एकदाऽधिकरणसंज्ञा, अन्यदा कर्मसंज्ञा कर्तृसंज्ञेति यश्चोदयेत् तं प्रत्याह—कर्तृकर्मणोरित्यादि। एतेन यादृशस्याधारस्याधिकरणसंज्ञया भवितव्यं तं दर्शयति। प्रतिराभिमुख्ये। क्रियां प्रति य आधार इति। क्रियाया अभिमुखो य आधार इत्यर्थः। यश्च क्रियां धारयति स क्रियाया अभिमुखो भवति। क्रियायास्तु धारणं साक्षाद्, व्यवधानेन वा; कर्तृकर्मणोः क्रियाश्रययोर्धारणात्। तत्र पूर्वस्य व्यवच्छेदार्थम् 'कर्तृकर्मणोः' इत्युक्तम्।

तदेतदुक्तं भवति—कर्तृकर्मणोः क्रियाधारभूतयोर्धारणात् क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा भवतीति। तदेवं क्रियाधारभूतकर्तृकर्मधारणद्वारेण

अधिकरणप्रदेशाः—'सप्तम्यधिकरणे च' इत्येवमादयः ॥

## अधिशीङ्स्थासां कर्म ॥ ४६ ॥

**न्यासः**

क्रियाया अभिमुखो य आधारस्तस्याधिकरणसंज्ञा; यतोऽनेन विधीयते ततो न भवति पूर्वस्य दोषस्य प्रसङ्गः। न हि कर्तृकर्मणोरनेन प्रकारेण क्रियां प्रत्याधारत्वम्, अपि तु ाक्षादेव क्रियाधारणात्। नन्वेवमपि कर्तृकर्मणोर्मुख्यं क्रियाधारत्वम्, साक्षादेव क्रियाधारणात्, कर्तृकर्माधारस्य तु कटादेर्गौणत्वं क्रियाश्रयभूतकर्तृकर्मधारणद्वारेण क्रियाधारणात्। तत्र मुख्य आधारे सति गौणस्याधिकरणसंज्ञा न प्राप्नोतीति स दोषस्तदवस्थ एव ? नैतदस्ति; तमब्ग्रहणेन ज्ञापितमेतत्—गौणस्याप्याधारस्याधिकरणसंज्ञा भवतीति। भवतु गौणस्याधिकरणसंज्ञा, मुख्यस्यापि कर्तुः कर्मणश्च कस्मान्न भवतीति चेत्, न; परत्वादनवकाशत्वाच्च कर्तृकर्मसंज्ञाभ्यां बाध्यमानत्वात्। अधिकरणसंज्ञा हि पूर्वा गौण आधारे सावकाशा, तद्विपरीते तु कर्तृकर्मसंज्ञे इति ताभ्यां बाध्यमाना नोत्सहते तयोर्विषयमवगाहितुम्।

**कटे आस्त इति।** कर्तृस्था क्रिया यत्र पूर्वेण प्रकारेणाश्रियते तस्योदाहरणम्, आसनक्रियायाः कर्तृस्थत्वात्। **स्थाल्यां पचतीति।** कर्मस्था क्रिया यत्राश्रियते तस्योदाहरणम्; विक्लेदनक्रियायाः कर्मस्थत्वात्।

तत् पुनरधिकरणं त्रिप्रकारम्—औपश्लेषिकम्, वैषयिकम्, अभिव्यापकञ्च। तत्राद्ये—कटे आस्ते, स्थाल्यां पचतीति कटादेरप्याधारस्य ह्याधेयेन सहोपश्लेषः संयोगलक्षणोऽस्तीत्यौपश्लेपिकं तद् भवति। वैषयिकम्—गुरौ वसति, गङ्गायां घोष इति। प्रतिवसतीति विषयो ह्यनन्यत्रभावः, यथा—चक्षुष्प्रभृतीनां रूपादिभ्योऽनन्यत्रभावाच्चक्षुरादीनां रूपादयो विषया इत्युच्यन्ते, एवं शिष्यादीनां गुर्वादिभ्योऽनन्यत्रभावादेषां ते विषया इति। ननु च 'आधारोऽधिकरणम्' इत्युक्तम्, आधारश्च को भवति ? य आश्रयः; आश्रयः संयोगतः समवायतो वा भवति, न च शिष्यादीनां गुरुप्रभृतिभिः सह संयोगः समवायो वाऽस्ति, तदयुक्तं तेषामधिकरणत्वम् ? नैतदस्ति; यदायत्ता हि यस्य स्थितिः, स विनापि संयोगसमवायाभ्यां तस्याश्रयो भवति, यथा—राजायत्तस्थितित्वात् पुरुषस्य राजेति, न च राज्ञा सह पुरुषस्य संयोगसमवायौ स्तः। तथा हि—तदधीनस्थितित्वाद् राजाश्रयः पुरुष इति लोके व्यपदिश्यते, तथा शिष्यादीनां गुर्वाद्यायत्ता स्थितिरिति युक्तस्तान् प्रति गुरुप्रभृतीनामाश्रयभावः। अभिव्यापकं यथा—तिलेषु तैलम्, दध्नि सर्पिरिति। तिलादिकं तैलादिकमाधेयं व्याप्यावतिष्ठत इति तिलादिकमभिव्यापकमधिकरणम्। यद्यप्यत्र तिलादीनां तैलादिभिः सह संयोगोऽस्ति, तथापि देशविभागाभावादत्र संश्लेषव्यवहारो नास्तीत्यौपश्लेषिकात् तत् पृथगेवोपस्थाप्यते ॥

पूर्वेणाधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । अधिपूर्वाणां शीङ्-स्था-आस्—इत्येतेषामाधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते । ग्राममधितिष्ठति । पर्वतमध्यास्ते ॥

अभिनिविशश्च ॥ ४७ ॥

अभि-निपूर्वस्य विशतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते ।

कथं कल्याणेऽभिनिवेशः, पापेभिनिवेशः, या या संज्ञा यस्मिन् यस्मिन् संज्ञिन्यभिनिविशत इति ? 'अन्यतरस्याम्' इति वर्त्तते, 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' इत्यतः । सा च व्यस्थितविभाषा विज्ञायते ॥

उपान्वध्याङ्वसः ॥ ४८ ॥

उप-अनु-अधि-आङ्—इत्येवम्पूर्वस्य वसतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना, पर्वतमुपवसति । ग्राममनुवसति सेना, ग्राममधिवसति, ग्राममावसति ॥

* वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः * । ग्रामे उपवसति । भोजननिर्वृत्ति करोतीत्यर्थः ॥

पदमञ्जरी

*अभिनिविशश्च* ॥ नेरल्पाच्तरस्यापूर्वनिपाताद् 'अभिनि' इति समुदायानुकरणमित्याह- —*अभिनिपूर्वस्येति* । अन्यथाऽभिपूर्वस्य निपूर्वस्य चेति ब्रूयात् ॥

*उपान्वध्याङ्वसः* ॥ *वसेरश्यर्थस्येति* । अर्थशब्दो निवृत्तिवचनः, व्यधिकरणे षष्ठ्यौ, अश्यर्थस्य यो वाचकस्तस्येत्यर्थः । भोजननिवृत्तिवाचिन इति यावत् ।

न्यासः

अधिशीङ्स्थासां कर्म ॥ अध्यास्त इति । 'आस उपवेशने', अदादिः, अनुदात्तेत् ।

अभिनिविशश्च ॥ उपान्वध्याङ्वसः ॥ लुग्विकरणालुग्विकरणपरिभाषया 'वस निवासे' इत्यस्य भौवादिकस्य ग्रहणम्, न 'वस आच्छादने' इत्यस्यादादिकस्य ।

वसेरश्यर्थस्येत्यादि । 'उपोष्य रजनीमेकाम्' इति, त्रिरात्रमुपवसतीत्यत्र च 'कालाध्वनोः' इति द्वितीया । अथ वा 'कालभावाध्वगन्तव्य' इति कर्मत्वे । अत्रार्थशब्दो निवृत्तिवचन इति भोजननिवृत्तिवाचिन इत्यर्थः । वक्तव्यमिति व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—इहाप्यन्यतरस्यांग्रहणमनुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते; तेन वसेरश्यर्थस्य प्रतिषेधो भविष्यति ॥

## कर्तुरीप्सिततमं कर्म ॥ ४९ ॥

कर्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति ।

पदमञ्जरी

यद्वा—शीङोऽर्थः श्यर्थः, न श्यर्थस्तस्य, अस्थानार्थस्येत्यर्थः । स्थानेऽपि हि शीङ् वर्तते—जलाशयमिति । तेन ग्रामे तिष्ठतीत्यत्रार्थे ग्राममुपवसतीति भवति । अस्थानार्थत्वे तु ग्राम उपवसतीति, स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः, कथम् ? नात्रोपपूर्वस्य वसेः ग्रामोऽधिकरणम्, किं तर्हि ? अनुपसर्गस्य—ग्रामे वसन् त्रिरात्रमुपवसति । एतदुक्तं भवति—विशिष्टाधारावस्थितत्वेन निश्चिते देवदत्ते भोजननिवृत्तिविशिष्टकालं प्रतिपादयितुमिदं प्रयुज्यते—ग्राम उपवसतीति, तत्रान्तरङ्गत्वात् प्रतीयमानवसिक्रियापेक्षो ग्रामस्याधिकरणभावः । उपवसनं तु स्वरूपेणैव कालमपेक्षत इति कालेनैवान्तरङ्गः सम्बन्धः, ग्रामादिना तु बहिरङ्ग इत्यप्रयुक्तमपि त्रिरात्रादिकं कर्म भवति ॥

*कर्तुरीप्सिततमं कर्म* ॥ *कर्तुः क्रिययेत्यादि* । कर्तुर्यदाप्तुमिष्टतममित्यन्वयः, कर्तुरिति चेप्सितापेक्षया 'क्तस्य च वर्तमाने' इति कर्त्तरि षष्ठी । *ईप्सित इति* 'मतिबुद्धि' इत्यादिना वर्त्तमाने क्तः । *क्रिययेति* करणे तृतीया, कर्ता हि नाम यः क्रियामनुतिष्ठति तेन कर्तुर्यदिष्टतममित्युक्ते तत्क्रियावेशादसौ कर्त्ता भवति तया करणभूतयेति गम्यते, कर्त्रा यदाप्तुमिष्यते आत्मीयया क्रिययेत्यर्थः । ईप्सितशब्दोऽयमस्त्यभिप्रेते रूढः—ईप्सितोऽभिप्रेत इति; अस्ति क्रियाशब्दः—'आप्लृ व्याप्तौ' सन्, 'आप्ज्ञप्यृधामीत्', आप्तुमिष्टमीप्सितमिति; तत्र क्रियाशब्दस्येह ग्रहणमिति दर्शितम्—*आप्तुमिष्टतममिति* ।

*कर्मण इति* । अश्वस्य । स हि भक्षणक्रियया माषानाप्तुमिच्छति । यद्येवम्, यथाश्वस्य वस्तुतो भक्षणे कर्तृत्वे सत्यपि सम्प्रति बन्धनं प्रति कर्मत्वेन विवक्षितत्वादकर्तृत्वाद् माषाणां कर्मसंज्ञया न भवति, तथा सार्थाद्धीयत इत्यत्रापि हीयमानं सार्थो जहातीति वस्तुवृत्तेन त्यागेन कर्त्तुरपि सार्थस्य संप्रत्यपादानरूपेण विवक्षितत्वाद् अकर्तृत्वात्कर्मणि यगात्मनेपदे न स्याताम् ।

न्यासः

कर्तुरीप्सिततमं कर्म ॥ कर्तुः क्रिययेति । एतेन कर्तुरिति नेप्सिततमापेक्षया 'क्तस्य च वर्तमाने' इत्यनेनेयं षष्ठी, अपि तु क्रियापेक्षया शेषलक्षणैवेति दर्शयति । ननु च नेह क्रियोपात्ता, तत् कथं तदपेक्षया षष्ठी प्रयुज्यते ? यद्यपि नोपात्ता, तथापि कर्तुः क्रियापेक्षत्वात् कर्तृशब्दोऽयं सम्बन्धिशब्द इति कर्तृसम्बन्धिनीं क्रियामुपस्थापयतीत्यदोषः ! ईप्सितशब्दो ह्यस्ति रूढिशब्दः—ईप्सितोऽभिप्रेत इति, अस्ति च क्रियाशब्दः—आप्तुमिष्ट ईप्सित इति; तत्रेह क्रियाशब्दो गृह्यते, नेतरः; न हि रूढिशब्दस्य

कर्तुरिति किम्? माषेष्वश्वं बध्नाति। कर्मण ईप्सिता माषाः, न कर्तुः। तमब्ग्रहणं किम्? पयसौदनं भुङ्क्ते।

पदमञ्जरी

अत्राहुः—कर्मकर्तर्यत्र यगात्मनेपदे, कथम्? जहातिरयं गमनायां वर्तते—देवदत्तं सार्थो जहाति, अपगमयतीत्यर्थः, एषैव च सार्थस्यापगमना यदुत क्षुदुपघातादिना देवदत्तस्यापगमे तत्समर्थाचरणम्। यदा तु क्षुधादिना स्वयमेवापगच्छति, तदा कर्मकर्तृत्वम्, तदायं प्रयोगः। ततश्च हीयत इति सार्थः स्वयमेवापगच्छतीति, पुनः कुतो हीयते?—इत्यपेक्षायां सार्थेन सम्बन्ध इति।

*तमब्ग्रहणं किमिति*। ईप्सिततमस्यापीप्सितत्वसम्भवाद् उदाहरणसिद्धि मन्यते। *पयसौदनं भुङ्क्त इति*। करणसंज्ञा तु दात्रेण लुनातीत्यादौ सावकाशा, न हि दात्रं लवनेप्सितम्। 'तथा युक्तम्' इत्यनेनापि न भवति, द्वेष्योदासीनप्राप्ययोस्तत्र ग्रहणात्। सत्यप्यत्र पयसो भुजिक्रियायां प्रकृष्टोपकारकत्वे ईप्सायाः प्रकर्षाभावः। यत्र तर्हि पय एवेप्सिततमम्, तत्र प्राप्नोति, तद्यथा कश्चित् कञ्चिदाह—सिद्धं भुज्यतामिति, स आह—प्रभूतं भुक्तमस्माभिरिति, इतर आह—पयो भविष्यतीति, अपरस्त्वरमाण आह—पयसा खलु भुञ्जीयेति, अत्र प्राप्ताप्राप्तविवेकेन पयस एवेप्सिततमत्वं न त्वोदनस्य, अत्राप्योदनमेवेप्सिततमम्; पयसस्तु संस्कारकत्वात्करणत्वम्। न त्वस्य केवले गुणे आदरः, किं तर्हि? तत्संस्कृते ओदने, न ह्यसौ केवलस्य पयसः पानेन संतुष्यतीति। यदि तमब्ग्रहणं क्रियते, पयसौदनं भुङ्क्त इत्यत्रैव स्यात्, पचत्योदनमित्यादौ न स्यात्, न हीप्सिततमं युक्तम्, असति प्रतियोगिनि वस्तु यत्तुल्यजातीयं तदेव प्रतियोगितां भजते। कारकं चात्र न किञ्चिदिष्टमीप्सितं पयसस्त्वीप्स्यमानत्वाद् युज्यते प्रतियोगिता,

न्यासः

क्रियया कर्तृसाध्यया सम्बन्ध उपपद्यते। ईप्सित इति। 'आप्लृ व्याप्तौ', सन्, द्विर्वचनम्, 'आप्ज्ञप्यृधामीत्' इतीत्त्वम्। 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः। ईप्स इति स्थिते, क्तप्रत्यये कृते, इटि च 'अतो लोपः' इत्यकारलोपे चेप्सितशब्दः सम्पद्यते। तेनार्थद्वयमिहोपात्तम्—प्रकृत्यर्थः, प्रत्ययार्थश्च। तत्राप्तुमित्यनेन प्रकृत्यर्थं दर्शयति, इष्टतममित्यनेन प्रत्ययार्थम्।

कर्मण इति। अश्वस्य। तस्य बन्धनक्रियया आप्तुमिष्टतमत्वात् कर्मत्वम्। स हि भक्षणक्रियया माषानाप्तुमिच्छति। पयसौदनं भुङ्क्त इति। असति हि तमब्ग्रहणे पयसोऽपि स्यात्। तदपि कर्तुर्भुजिक्रियया व्याप्तुमिष्टं भवति। तमब्ग्रहणे तु सति न भवत्यतिप्रसङ्गः; प्राधान्यादोदनस्यैवेप्सिततमत्वात्। प्राधान्यं त्वोदनस्य संस्कार्यत्वात्, पयसस्त्वप्राधान्यं संस्कारकत्वात्।

कर्मेत्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। इतरथा आधारस्यैव हि स्यात्—गेहं प्रविशतीति; ओदनं पचति, सक्तूनिपबतीत्यादिषु न स्यात्। पुनः कर्मग्रहणात् सर्वत्र सिद्धं भवति।

कर्मप्रदेशाः—'कर्मणि द्वितीया' इत्येवमादयः॥

पदमञ्जरी

नैष दोषः; अत्रापि क्रियापेक्षः प्रकर्षः, आदौ हि कर्त्ता फलार्थं क्रियामभीप्सति, अतः फलार्थमिष्यमाणत्वादीप्सिता क्रिया। फलं तु स्वरूपेणेष्यमाणमीप्सिततमं क्रियाया अपि कर्मत्वं संदर्शनादिविशेषान्तरस्पर्धया। यत्र तर्हि फलाभावस्तत्र न स्यात्, क्व च फलाभावः ? विकार्ये—काष्ठानि भस्मीकरोतीति, न हि काष्ठानि फलरूपाणि। मा भूवन् तानि स्वरूपेण फलानि, भस्मात्मना तु फलानि ? प्राप्ये तर्हि न स्यात्—आदित्यं पश्यति, हिमवन्तं शृणोतीति, न ह्यत्र क्रियया कश्चिदतिशयो जन्यते। अत्राप्यतिशयो जन्यते—प्राकट्यं नाम ? यो हि यं पश्यति शृणोति वा तस्यासौ प्रकटो भवति, प्रतिपत्त्राद्यतिरिक्तपुरुषापेक्षया तु विशेषो नास्तीत्युच्यते। यद्वा—तमब्ग्रहणेन यत्रापकृष्टेच्छा तदेव व्यावर्त्यते, तेन पश्यतीत्यादावादित्यादीनामपि प्रतियोगिनोऽसत्त्वेनापकर्षाभावाद् भविष्यति, अत्र च लिङ्गम् 'ललाटकुक्कुट्यौ पश्यति' इति।

*कर्मेत्यनुवर्त्तमान इति*। अधिशीङ्स्थासामित्यतः। *आधारनिवृत्त्यर्थमिति*। प्राच्यं कर्मग्रहणमाधारेण संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति भावः। आधारानुवृत्तौ को दोषस्तत्राह—*आधारस्यैव हि स्यादिति*। क्वेत्याह—*गेहमित्यादि*। यत्र तु न स्यात्तदाह—*ओदनं पचतीत्यादि*।

न्यासः

कर्मेत्यनुवर्तमान इति। 'अधिशीङ्स्थासां कर्म' इत्यतः। पुनरित्यादि। पूर्वं कर्मग्रहणमाधारेण सम्बद्धम्, अतस्तदनुवृत्तौ तस्यानुवृत्तिः स्यादत आधारनिवृत्त्यर्थं पुनः कर्मग्रहणं क्रियते। यदि पुनराधारोऽनुवर्तते, ततः किं स्यादित्यत्राह—आधारस्यैव हि स्यादिति। 'हि' शब्दो यस्मादर्थे। यस्मादाधारस्यानुवृत्तौ तस्यैव स्यात्। तस्मात् तन्निवृत्त्यर्थं पुनः कर्मग्रहणमिति सम्बन्धः। क्व पुनराधारस्यैव स्यादित्याह—गेहमित्यादि। आधारानुवृत्तौ तु यत्र न भवति तद्दर्शयितुमाह—ओदनं पचतीत्यादि। आदिशब्देनौदनं भुङ्क्ते इत्येवमादेर्ग्रहणम्। अथ नदी कूलं कर्षतीत्यादौ कथं कर्मसंज्ञा ?, कथञ्च न स्यात् ? नद्यादेरचेतनत्वात्, अचेतनानामीप्साया असम्भवात्, नैतदस्ति; अत्र नदीति पदान्तरसम्बन्धादीप्साया अभावोऽचेतनस्यापि भावः प्रतीयते। न च पदसंस्कारे पदान्तरसम्बन्धगम्योऽर्थ उपयुज्यते, तेन कूलं कर्षतीत्यादाविच्छामात्रमाश्रिता व्याप्तिः, कर्म च संस्क्रियते। यद्यपि पश्चान्नद्या सह सम्बन्धादचेतनत्व-

पदमञ्जरी

एतच्चेप्सिततमं कर्म त्रिविधम्—निर्वर्त्यम्, विकार्यम्, प्राप्यमिति। तथा-युक्तमपि द्विविधम्—द्वेष्यम्, इतरच्च। 'अकथितं च' इत्यपरम्। संज्ञान्तरप्रसङ्गे चान्यत्—'दिवः कर्म च' इत्यादि। तदेवं सप्तविधं कर्म। उक्तं च—

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम्।
तच्चेप्सिततमं कर्म चतुर्धाऽन्यत्तु कल्पितम्॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यद्यच्चाप्यन्यपूर्वकम्॥ इति।

तथा—

यदसत् जायते सद्वा जन्मना यत् प्रकाश्यते।
तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादि भस्मवत्।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते।
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥ इति।

तत्र निर्वर्त्यम्—घटं करोतीति, व्यक्त्यभिप्रायेण जन्मसामान्याभिप्रायेण प्रकाशनम्। ननु च यदि घटः? न कर्त्तव्यः; अथ कर्तव्यः? न घटः; इत्यनुपपन्नं घटं करोतीति? नैष दोषः; तथाविधं वस्तु करोति यस्य निष्पन्नस्य घट इति संज्ञेति—अयमत्रार्थः। एवमोदनं पचतीत्यादावपि। विकार्यम्—काष्ठानि भस्म करोति, सुवर्णं कुण्डलं करोतीति। प्राप्यम्—आदित्यं पश्यतीति। न ह्यत्र प्रत्यक्षेण अनुमानेन वा क्रियाजन्यः कश्चिदतिशयो गम्यते, यथा—निर्वर्त्यविकार्ययोः रज्जुं सृजति, काष्ठं दहति, देवदत्तं रोषयतीति। कारकत्वं तु प्राप्यस्याभासो-

न्यासः

मिच्छाया अभावश्च प्रतीयते, तथापि च तद्बहिरङ्गत्वादन्तरङ्गसंज्ञाकार्यं न शक्नोति निवर्तयितुम्। अनेनैव न्यायेन यत्र व्याप्तिर्नास्ति, इच्छामात्रञ्च केवलम्, तत्रापि कर्मसंज्ञा भवति, यथा—ग्रामं गन्तुमिच्छामि न च मे गमनशक्तिरस्तीति।

तच्च कर्म त्रिविधम्—निर्वर्त्यम्, विकार्यम्, प्राप्यञ्च। तत्र निर्वर्त्यं यदसदेवोत्पाद्यते, यस्य जन्म क्रियते, तन्निर्वर्त्यम्, यथा—कटं करोति, कटो ह्यसन्नेव क्रियते। विकार्यं यल्लब्धसत्ताकमवस्थान्तरमापाद्यते, यथा—काष्ठानि भस्मीकरोति। नात्र काष्ठान्यसन्त्येव जन्यन्ते; कारणान्तरेभ्यः प्रागेवोत्पन्नत्वात्; उत्पन्नानि तु केवलं भस्माख्यामवस्थामापाद्यन्ते। प्राप्यं यत्र व्याप्तिव्यतिरेकेण क्रियाकृता विशेषा न विभाव्यन्ते, यथा—आदित्यं पश्यतीति। न हि दृशिक्रियया व्याप्यमानस्य सवितुः प्राप्तेरन्यः क्रियाकृतविशेष उपलभ्यत इति प्राप्यमेतत् कर्म।

## तथायुक्तं चानीप्सितम् ॥ ५० ॥

येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत्प्रकारेण यदनीप्सितं युक्तं भवति तस्य कर्मसंज्ञा विधीयते ।

ईप्सितादन्यत्सर्वमनीप्सितम्—द्वेष्यम्, इतरच्च । विषं भक्षयति । चौरान्पश्यति । ग्रामं गच्छन् वृक्षमूलान्युपसर्पति ॥

**पदमञ्जरी**

पगमादिभिः, आदित्यो ह्याभासमुपगच्छति, यतो दृश्यते अभिव्यक्तिमुपयाति, यतो व्यक्तमुपलभ्यते सहते च दर्शनम्, यतः शक्यते द्रष्टुं तदेवाभासोपगमः, व्यक्तिः, सोढत्वमिति कर्मणो विशेषाः प्राप्यमाणस्य क्रियासिद्धौ विवक्षिताः ॥

*तथा युक्तं चानीप्सितम् ॥ तथेति* पृथक् पदम्, नोपसमस्तम्; लक्षणाभावात् । चकारोऽवधारणे, अनेकार्थत्वान्निपातानाम्, तथेत्यस्य चानन्तरे द्रष्टव्य इत्याह—*तेनैवेति । ईप्सितादन्यत्सर्वमनीप्सितमिति ।*

यथा अधर्मानृतादिभिरुत्तरपदार्थप्रतिपक्षभूतं यद्वस्तु तत्प्रतिषेधद्वारेणाभिधीयते, तथेहानीप्सितशब्देनेप्सितप्रतिपक्षभूतं न द्वेष्यमेवाभिधीयते, किं तर्हि ? अश्व-लोष्ट-इत्यादिवदीप्सितव्यतिरिक्तं सर्वमिति सर्वशब्दस्यार्थः । *विषं भक्षयतीति ।* न कस्यापि विषमीप्सिततममिति भावः । ननु य एव मनुष्यो व्याध्यादिना सर्वतः पीडितो मरणमेव ज्यायो मन्यते, तस्य विषमपीप्सिततममेव; यदिष्टं गुडादिभ्रान्त्या विषे प्रवर्तते तस्यापि तदीप्सिततममेव, यदिष्टं गुडादि, तद्बुद्धिरेव तत्र प्रवर्तते; अतोऽत्र पूर्वेणैव सिद्धमित्युदाहरणान्तरोपन्यासः । *ग्रामं गच्छन्निति ।* नात्र वृक्षमूलानीप्सिततमानि पूर्वमनभिसंहितत्वान्नान्तरीयकं हि तदुपसर्पणम् ।

**न्यासः**

**तथायुक्तञ्चानीप्सितम् ॥** चकारोऽवधारणे । अत एव वृत्तावाह—**तेनैवेति । अनीप्सितमिति ।** यद्यप्ययं प्रसज्यप्रतिषेधः स्यात्, तदा ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादौ वृक्षमूलादीनां कर्मसंज्ञा न स्यात् । तथा हि—प्रसज्यप्रतिषेधे सत्यनेन योगेनानीप्सितस्यैव कर्मसंज्ञा विधीयते; वृक्षमूलानि च न तावदीप्सितानि, पूर्वमनभिसन्धाय प्रवृत्तेः; नाप्यनीप्सितानि, अप्रतिकूलत्वात्; ततश्चानीप्सितस्य कर्मसंज्ञा विधीयमाना तेषामीप्सितादन्यत्वेनानीप्सितान्न स्यात् । पर्युदासे तु सत्यनेन योगेनेप्सितादन्यस्य कर्मसंज्ञा विधीयते । भवन्ति च यथोक्तप्रकाराणि वृक्षमूलानीप्सितादन्यानि; अतस्तेषामपि कर्मसंज्ञा सिध्यतीत्येतदालोच्य पर्युदासोऽयमिति दर्शयितुमाह—**ईप्सितादन्यदित्यादि ।** किं पुनस्तदित्याह—**द्वेष्यमित्यादि । द्वेष्यम्** = प्रतिकूलम्, यथा—विषचौरादि । **इतरद**प्रतिकूलम्, यथा—उक्तप्रकाराणि वृक्षमूलानि । **भक्षयतीति ।** 'भक्ष अदने', चौरादिकः ॥

## अकथितं च ॥ ५१ ॥

अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति। केनाकथितम्? अपादानादिविशेषकथाभिः।

पदमञ्जरी

न चात्रापि यावद् ग्रामं गच्छन्निति न प्रयुज्यते तावन्नान्तरीयकता न प्रतीयत इति पूर्वेणैव सिद्धम्, यथा—नदी कूलं कषतीत्यत्राचेतनत्वादीप्साभावः, पदान्तरसम्बन्धात्प्रतीयमानो बहिरङ्गत्वात्कर्मसंज्ञां न प्रतिबध्नाति? भवत्वयं प्रतिपत्तारं प्रति उपपादनप्रकारः, यस्तु प्रयुङ्क्ते स पूर्वमेवेप्साप्रकर्षाभावं जानन् तत्कथं प्रयुक्तमिति पूर्वेणासिद्धिरेव। एवं च नदीकूलमित्यत्रापि अनेनैव कर्मसंज्ञा। तथा यत्र क्रियायामेव तात्पर्यं न फले, नान्तरीयका तु फलसिद्धिः, तत्राप्यनेनैव भवति।

अथ क्रियाफलयोगि कर्मेति कस्माद् नोक्तम्? यदीप्सिततमं यद् द्वेष्यमितरच्च तत्र सर्वत्रानुगतमेतद्, यदुत क्रियाफलयोगित्वं कर्तुरपि तर्हि कर्मत्वं स्यात्, क्रियाफलस्य संयोगस्य तत्रापि भावात्। अथ परसमवेतक्रियाफलयोगीति लक्षणम्? एवमप्यात्मा ज्ञातव्य इत्यत्र न स्यात्, संविदश्च स्वयं प्रकाशाभिमतायाः कर्मत्वं स्यात्। घटमहं जानामीत्यत्र हि त्रितयमेव भासते—घटः, ज्ञानम्, आत्मा चेति। तत्र ज्ञानं क्रिया, तत्फलं शब्दप्रयोगादिरूपो व्यवहारः, तेन युज्यमानस्य घटस्य यथा कर्मत्वं तथा ज्ञानस्यापि स्यात्। ज्ञानं हि क्रिया भवति व्यवहाररूपस्य फलस्याश्रयभूतम्, तस्यैव ज्ञानस्य यत् स्वरूपं तदपेक्षया यः पर आत्मा तत्र च समवेतीत्यलमियता। *चोरानित्यत्रापि* मर्तुकामो वा मित्रादिरूपेण विपर्यस्यमानो वा चोरानुपसर्पतीति पूर्वेणैव सिद्धम्॥

*अकथितं च*॥ *अकथित*शब्दोऽयमस्त्यप्रधाने रूढः, तद्यथा—अकथितोऽहमस्मिन् ग्रामे, अप्रधानभूत इति गम्यते। अस्ति च क्रियाशब्दोऽकीर्तितपर्यायः। 'कथ वाक्यप्रबन्धे', चुरादावदन्तः पठ्यते, तत्र पूर्वस्य ग्रहणे 'पाणिना कांसपात्र्यां दोग्धि पयः' इत्यत्र पाणिकांसपात्र्योरपि स्यात्। करणाधिकरणसंज्ञयोस्तु पचत्यादिरवकाशः, न हि तत्रास्य प्रसङ्गः; 'दुहियाचि' इति परिगणनात्, अतो द्वितीयस्य ग्रहणम्, तदाह—*केनाकथितम्? अपादानादिभिर्विशेषकथाभिरिति*। किमत्र प्रमाणं तदाह—*केनेति*। करणनिर्देशः। रूढिशब्देषु हि व्युत्पत्त्यर्थमेव क्रियोपादीयते; न तत्र करणादि सम्बध्यते, न हि गच्छतीति गौरि-

न्यासः

अकथितञ्च॥ अपादानादिभिर्विशेषकथाभिरिति। कारकसामान्यकथाया व्यवच्छेदार्थमेतत्। यदि हि केनाप्यकथितस्य कर्मसंज्ञा स्यात्, तदा माणवकस्य पितरं

परिगणनं कर्त्तव्यम्—

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्त्तितमाचरितं कविना ॥

उपयुज्यत इत्युपयोगः = पयःप्रभृति, तस्य निमित्तं गवादि, तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्य गवादेः कर्मसंज्ञा विधीयते । पाणिना कांस्यपात्र्यां गां दोग्धि पयः । पाण्यादिकमप्युपयोगनिमित्तं तस्य कस्मान्न भवति ? नैतदस्ति; विहिता हि तत्र करणादिसंज्ञा तदर्थमाह—अपूर्वविधाविति ।

पदमञ्जरी

त्यत्र केनेति प्रश्नो रथेनेति प्रतिवचनं वा भवति । इह 'कारके' इत्यनुवर्तनात् सत्येव कारकत्वेऽकथितस्य संज्ञया भाव्यमिति सामर्थ्याद्विशेषकथाभिरित्युक्तम् ।

*परिगणनं कर्त्तव्यमिति* । नटस्य शृणोतीत्यादौ धात्वन्तरप्रयोगे मा भूत् । प्रच्छिभिक्षीत्यत्र 'छे च' इति तुक् प्राप्तोऽनित्यत्वादागमशासनस्य स न कृतः, 'सनाद्यन्ता धातवः' 'इको यणचि' इतिवत् ।

*उपयुज्यते इत्युपयोग इति* । असंज्ञायामपि कर्मणि घञ् । *तस्य निमित्तं गवादीति* । अनेन 'गां दोग्धि पयः' इत्यादौ पयःप्रभृतेरुपयुज्यमानत्वादीप्सिततमत्वम्, गवादेस्तु तदर्थत्वादुपादानस्यानीप्सिततमत्वं च दर्शयति । तथायुक्तत्वाभावाच्च गवादेस्तथायुक्तमित्यनेनापि न सिध्यति । एतदेव दर्शयति—*तस्यैवमित्यादि* । उपयुज्यमानस्य पयःप्रभृतेर्यन्निमित्तं गवादि तस्येत्यर्थः ।

न्यासः

पन्थानं पृच्छतीत्यत्राकारकस्यापि माणवकस्य कर्मसंज्ञा स्यात् । परिगणनमिति । अन्यधातुव्यवच्छेदार्थमेतत् । तेन 'दुह प्रपूरणे' इत्येवमादीनामेव धातूनां प्रयोगेऽकथितस्य कर्मसंज्ञा विधीयते, नान्येषाम् । उपयुज्यत इत्युपयोग इति । कर्मसाधनो घञन्तः ।

उपयुज्यत इति । इष्टार्थसिद्धौ व्यापार्यत इत्यर्थः । पयःप्रभृतीति । प्रभृतिशब्देन भिक्षादीनां ग्रहणम् । तस्य निमित्तं गवादीति । अत्राप्यादिशब्देन पौरवादेर्ग्रहणम् । तस्योपयुज्यमानपयःप्रभृतिनिमित्तस्येति । उपयुज्यमानञ्च तत् पयःप्रभृति चेति विशेषणसमासं कृत्वा उपयुज्यमानपयःप्रभृतेर्निमित्तमिति षष्ठीसमासः । गवादेरिति । आदिशब्देन पौरवादेर्ग्रहणम् । ननु च पाण्यादिकमप्युपयोगनिमित्तमिति, तेन विनोपयोगस्य पयसोऽसंभवात् । आदिशब्देन कांस्यपात्रादेर्ग्रहणम् । विहिता हि तत्र करणादिसंज्ञेति । आदिशब्देनाधिकरणसंज्ञाया ग्रहणम् । तदर्थमिति । करणादेः कर्मसंज्ञानिवृत्त्यर्थमित्यर्थः । अर्थशब्दस्य निवृत्तिवचनत्वात् । अपूर्वविधाविति । पूर्वग्रहण-

ब्रुविशासिगुणेन च यत्सचते । ब्रुविशास्योर्गुणः साधनं प्रधानं कर्म धर्मादिकम्, तेन यत्संबध्यते, तदकीर्तितमाचरितं कविना = तदकथितमुक्तं सूत्रकारेण ।

पदमञ्जरी

पाण्यादिकमप्युपयोगनिमित्तमिति तेनापि विनोपयोगस्य पयसोऽसम्भवात् । *तदर्थमाहेति* । तस्य करणादेः कर्मसंज्ञानिवृत्त्यर्थमित्यर्थः, प्रयोजनवचन एव चार्थशब्दो निवर्तमानतया तु प्रयोजनत्वम्, लुङ्मुखस्वरोपचाराः प्रयोजनमितिवत् । *अपूर्वविधाविति* । यत्रान्यो विधिर्नास्ति तत्रेत्यर्थः । पूर्वग्रहणमन्यमात्रोपलक्षणम्, तेन वक्ष्यमाणयोर्हेतुकर्तृसंज्ञयोरपि विषये कर्मसंज्ञा न भवति । सूत्रेण कथितमिति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते, यथा 'पराजेरसोढः' इत्यत्रासहिष्यमाणस्याप्यपादानसंज्ञा भवति—अध्ययनात् पराजेष्यत इति, तद्वदत्रापि साधनमिति । साधनं हि प्रधानभूतां क्रियामपेक्ष्य गुणो भवति ।

*प्रधानं कर्म धर्मादीति* । तस्य तु प्राधान्यं तदर्थत्वात् प्रवृत्तेः । *सम्बध्यत इति* । सचत इत्यस्यार्थकथनमेतत्, 'षच समवाये' स्वरितेत् । केचित्तु परस्मैपदिभिः सह धातुमेनं पठन्ति 'षच समवाये' 'रप लप व्यक्तायां वाचि' इति । तत्राहुः—'षच सेवने' इत्यस्यानुदात्तेतोऽनेकार्थत्वात्समवाये प्रवृत्तिरिति, सम्बध्नातेश्च कर्मव्यापारे सचिर्वर्तत इति कर्तृपदस्य कर्मपदेनार्थकथनं नानुपपन्नम्, यथा—राध्यत्योदन इत्यस्य पच्यत इति । *उक्तमिति* । आचरितमित्यस्य विवरणम् । *सूत्रकारेणेति* । *कविशब्दो* मेधाविमात्रवचनोऽपि प्रकरणात् सूत्रकारे प्रयुक्त इति दर्शयति ।

न्यासः

मत्रान्यविधेरुपलक्षणार्थम् । एतदुक्तं भवति—यस्यान्यो विधिर्नोक्तस्तस्य कर्मसंज्ञेति । तेन यत्रापि वक्ष्यमाणे हेतुकर्तृसंज्ञे इति तत्राप्येषा संज्ञा न भवतीति दोग्धाप्युपयोगस्य निमित्तं तस्य कर्मसंज्ञा न भवति । सूत्रेऽपि 'अकथितम्' इति कथननिवृत्तिपरायां चोदनायां भूतकालो न विवक्ष्यते; उपलक्षणत्वात् । तेन योऽपि कथयिष्यमाणो हेतुकर्तृसंज्ञाभ्याम्, तस्यापि कर्मसंज्ञा न भवतीत्युक्तं भवति ।

ब्रुविशासिगुणेनेति । कः पुनर्गुण इत्याह—साधनमिति । साधनं हि क्रियाया उपकारकम् । यच्चोपकारकं तदुपकार्यम् प्रधानमपेक्ष्य गुणो भवति । कतरत् पुनः साधनमित्याह—प्रधानं कर्मेति । किं पुनस्तदित्याह—धर्मादिकमिति । आदिशब्देन पथ्यादेर्ग्रहणम् । प्रधानत्वन्तु धर्मादेस्तदर्थत्वाच्छिष्यादिप्रवृत्तेः । सम्बध्यत इति सचत इत्यस्यार्थकथनम् । तथा हि 'षच समवाये' इति पठ्यते, समवायश्च सम्बन्ध एव । सचते=तेन गुणेन सम्बन्धमुपैति । यच्च येन सम्बन्धमुपैति तत् तेन सम्बध्यते । उक्तमिति आचरितमित्यस्य विवरणम् । सूत्रकारेणेत्येतदपि कविनेत्यस्य ।

दुहि—गां दोग्धि पयः। याचि—पौरवं गां याचते। रुधि—

पदमञ्जरी

*गां दोग्धि पय इति*। ननु चात्रायमर्थः—गोः पयस्त्यजति, दोग्धा गदा पयस्त्याजयतीति; तत्र प्रयोजकव्यापारेणाप्यमानत्वात् सिद्धा गोः कर्मसंज्ञा। न च वाच्यम्—'प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादिष्वेवेत्युत्तरसूत्रे नियमादत्र न प्राप्नोति, यथा—पचन्तं देवदत्तं प्रयुङ्क्ते, पाचयति देवदत्तेनेत्यत्र' इति; ण्यन्तष्वेव स नियमः, अयं तु प्रकृत्यन्तः, नैतदस्ति; यथा ण्यन्तेषु धातुषु क्रियाविशिष्टस्य प्रयुक्तिः प्रतीयते—गमयतीति, नैवमत्र निष्क्रियस्यापि गवादेर्दोहननयनादिषु विनियोगात्। तथा ह्यदुहानापि गौर्दुह्यते, अगच्छन्तो भारादयः शिरसा नीयन्ते, तस्माद्दोग्धीत्येकस्या एव क्रियायाः श्रवणाद् गोपयसोर्भेदेन कर्मत्वं न भवति। णिचि तु सति प्रकृत्यंशस्य प्रत्ययांशस्य च भेदेन द्वे क्रिये वाच्ये इति कर्मभेदोपपत्तिः।

*गमयति ग्रामं देवदत्तमिति*। यदा तु दुहेः क्षरणमर्थः—क्षरति गोः क्षीरम्, क्षीरं क्षारयति देवदत्त इति, तदा यद्यपि गोरपायेऽवधिभावो विद्यते; तथाप्यविवक्षिते तस्मिन्निमित्तत्वमात्रापेक्षायामुदाहरणोपपत्तिः। एवं चावधित्वविवक्षायामपादानसंज्ञायां भवत्येव—गोर्दुह्यते पय इति। यदा तु पयस्येव विशेषणं गोः, तदा षष्ठी—गोः पयो दोग्धीति।

*पौरवं गां याचते इति*। पुरोरपत्यं पौरवः। ननु विहितात्रापादानसंज्ञा पौरवादसौ गामादत्ते, न याचनादेव तत आदत्ते, याचितोऽसौ यदि ददाति तत आदत्ते, ननु मा नामादिताऽऽदित्सते तावत्, तदपि न; यतः स्वभावपरिचिच्छित्सुरनादित्समानोऽपि याचते। *गामवरुणद्धि व्रजमिति*। ननु च गां व्रजं प्रवेश-

न्यासः

गां दोग्धि पय इति। 'दुह प्रपूरणे', आदादिकः। दादेर्धातोर्घः', 'झषस्तथोर्धोऽधः', 'झलां जश् झशि' इति जश्त्वम्। ननु चात्र विहिताऽपादानसंज्ञा, अस्ति ह्यत्रापायः—गोः, दुहेः क्षरणार्थत्वात्, क्षरति गोः क्षीरम्, तद् गोर्दोग्धा क्षारयति, एवञ्च तत् क्षार्यमाणं ततोऽपक्रामतीति स्पष्ट एवापायः, ततो नेदमुदाहरणमुपपद्यते? नैतदेवम्; सत्यपि ह्यपाये नात्र गोरवधित्वं विवक्षितम्, किं तर्हि? क्षीरं प्रति निमित्तभावमात्रम्। यद्येवम्, गोः कारकत्वं न स्याद्, यथा—वृक्षस्य पर्णं पततीत्यत्र वृक्षस्य न; क्षरणक्रियां प्रति निमित्तभावेनाविवक्षितत्वात्, नैतत्; अवधित्वं ह्यत्र गोर्न विवक्षितम्, क्षरणं प्रति निमित्तभावस्तु विवक्षित एव। वृक्षस्य पर्णं पततीत्यत्र तु पतनं प्रति वृक्षस्य निमित्तभावमात्रमपि न विवक्षितम्, न केवलमवधिभाव इत्यसमानम्। पौरवं गां याचत इति। ननु चात्र कथितापादानादिसंज्ञा, अस्ति ह्यसौ पौरवाद् गामादत्त इति अस्त्येवापायः? नैतदस्ति: न हि याचनादेवापायो भवति, किं तर्हि?

गामवरुणद्धि व्रजम्। प्रच्छि—माणवकं पन्थानं पृच्छति। भिक्षि—

पदमञ्जरी

यतीत्ययमत्रार्थः, ततश्च सिद्धं व्रजस्य कर्मत्वम्? अथ व्रजे गामवस्थापयतीत्यर्थः, तर्हि कथितात्राधिकरणसंज्ञा; यदा तर्ह्यवरोधनक्रियां प्रति निमित्तत्वमात्रं विवक्ष्यते न कर्मत्वं नाधिकरणत्वं तदेदमुदाहरणम्। व्रजेन हेतुनाऽवस्थापयतीत्यर्थः।

*माणवकं पन्थानं पृच्छतीति*। 'प्रच्छ ज्ञीप्सायाम्', तुदादिः, ग्रहिज्यादिना संप्रसारणम्। ननु च कथितात्रापादानसंज्ञा, स हि तस्मादुपदेशमादत्ते न प्रश्नमात्रादादत्ते, पृष्टोऽसौ यद्युपदिशति तत आदत्ते। मा नामादिता, आदित्सते तावत् तदपि न, अनादित्समानोऽपि स्वभावपरिज्ञानाया पृच्छति। भिक्षिर्याचिवद्व्याख्येयः। किमर्थं पुनर्याचिभिक्ष्योरुभयोरुपादानम्, न ह्यनयोरर्थे भेदोऽस्ति, अर्थाश्रया चेयं संज्ञा, न दुह्यादिस्वरूपाश्रया। समानार्थेऽपि हि गृह्यते—देवदत्तं शतं प्रार्थयत इति? उच्यते, अनुनयार्थस्य याचतेर्ग्रहणार्थम्। तेनाविनीतं विनयं याचते, क्रुद्धं प्रसादं याचत इत्यत्रापि भवति। सकृदुपात्तस्य चोरभयरूपानुपपत्तेः भिक्षिरपि गृहीतः।

न्यासः

याचितोऽसौ यदि ददाति तदापायेन युज्यते। गामवरुणद्धि व्रजमिति। ननु च कथितात्र व्रजस्य कर्मसंज्ञा, अधिकरणसंज्ञा वा। यदा प्रवेशयतीत्यर्थः, तदा कर्मसंज्ञा विहिता, अथ स्थापयतीत्यर्थस्तदाधिकरणसंज्ञा प्रसज्येत? सत्यमेतद् यदा व्रजस्य कर्मत्वमधिकरणत्वं वा विवक्ष्यते; न चैतदिह विवक्षितम्, किं तर्हि? अवरोधनक्रियां प्रति निमित्तभावमात्रम्। अस्याञ्चावस्थायां कर्माधिकरणसंज्ञे निरवतारे। व्रजेन हेतुना गामवस्थापयत्ययमत्रार्थो वेदितव्यः, न तु क्वावस्थापयतीत्येतदिह चिन्त्यत एव। माणवकं पन्थानं पृच्छतीति। 'प्रच्छ ज्ञीप्सायाम्', तुदादिः, ग्रहिज्यादिसूत्रेण सम्प्रसारणम्। ननु च कथितात्रापादानसंज्ञा, अस्ति ह्यत्रापायः—स हि तस्मादुपदेशमादित्सते, नैतदस्ति; नहि प्रश्नमात्रेणापायो भवति, किं तर्हि? पृष्टः सन् यद्यसावाचष्टे तदापायेन युज्यते। सत्यप्यपाये नात्र माणवकोऽवधिभावेन विवक्षितः, किं तर्हि? प्रश्नक्रियां प्रति निमित्तभावमात्रेण।

पौरवं गां भिक्षत इति। 'भिक्ष याच्ञायाम्' अनुदात्तेत्। अथ किमर्थं याचिभिक्ष्योर्द्वयोरुपादानम्, यावताऽनयोरर्थभेदो नास्ति? न चेयं संज्ञा शब्दाश्रया, किं तर्हि? अर्थाश्रया। तथा हि—याचिना समानार्थस्यान्यस्यापि ग्रहणं भवति—देवदत्तं शतं प्रार्थयते, देवदत्तं शतं मृगयत इति। तस्मात् सत्यपि शब्दभेदे न युक्तं तयोः पृथग्ग्रहणम्। एवं तर्हि याचिरत्रानुनये वर्त्तते—तेन क्रुद्धं याचते, अविनीतं याचत इति, तदर्थं पृथग् ग्रहणं स्यात्।

पौरवं गां भिक्षते । चिञ्–वृक्षमवचिनोति फलानि । ब्रुवि–माणवकं धर्मं ब्रूते । शासि–माणवकं धर्ममनुशास्ति ॥

पदमञ्जरी

*वृक्षमवचिनोति फलानीति* । यद्यप्यवचिन्वद् वृक्षान् फलमादत्ते इत्यपादान-संज्ञाया अयं विषयः, तथापि यदा वृक्षो नावधित्वेन विवक्ष्यते निमित्तरूपेणैव तु विवक्ष्यते, तदेदमुदाहरणम् ।

*ब्रूतेऽनुशास्तीति* । 'ब्रूञ् व्यक्तायां वाचि' 'शासु अनुशिष्टौ', अदादी, यद्यप्यत्र धर्मेण वचनानुशासनकर्मणा माणवकस्याभिप्रेयमाणत्वम्, तथापि ददातिकर्माभावात्संप्रदानसंज्ञाया अप्रसङ्गः। ये तु तत्र ददातिकर्मणेति नाश्रयन्ति, तेषामपि निमित्तत्वमात्रं विवक्षितं नाभिप्रेयमाणत्वमित्युदाहरणोपपत्तिः ॥

अथान्येऽपि द्विकर्मकाः—

नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च ।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः ॥

'गत्यर्थानाम्' इत्युत्तरसूत्रोपलक्षणम् । नी—अजां नयति ग्रामम् । वहि—वहति भारं ग्रामम् । हरति—भारं हरति ग्रामम् । चकारेण जयत्यादयः समुच्चीयन्ते—शतं जयति देवदत्तम्, शतं मुष्णाति देवदत्तम्, शतं दण्डयति देव-दत्तम्, कर्षति ग्रामं शाखाम् ।

इदं विचार्यते—द्विकर्मकेभ्यो धातुभ्यः कर्मणि लादय उत्पद्यमानाः किमी-प्सिततमे कर्मणि प्रधाने उत्पद्यन्ते ? आहोस्विदनेन यस्य कर्मत्वं तस्मिन् गुणकर्मणीति ? तत्रोक्तम्—

न्यासः

**वृक्षमवचिनोति फलानीति** । ननु च'त्र विहितापादानसंज्ञा, तथा हि—वृक्षात् फलान्यादत्त इत्यपायोऽत्रार्थः, नैतदस्ति; न ह्यत्र वृक्षोऽवधित्वेन विवक्षितः । किन्तर्हि ? फलावचयनस्य हेतुभावमात्रेण । वृक्षेण हेतुना फलावचयनं करोतीत्यर्थः। तस्य वृक्षस्य हेतुभावः किमवधिभूतस्य ? अधिकरणभूतस्य वा ?–इत्येवमादिका चिन्ता न कृता ।

**एवं माणवकं धर्मं ब्रूते, माणवकं धर्ममनुशास्तीति**। 'ब्रूञ् व्यक्तायां वाचि', 'शासु अनुशिष्टौ', अदादी । ननु च कथितात्र सम्प्रदानसंज्ञा, अस्ति ह्यत्र सम्प्रदानत्वम्, संप्रदेयेन धर्मेणाभिप्रेयमाणत्वात्, नैतदस्ति; ददातिकर्मणाभिप्रेयमाणस्य संप्रदानसंज्ञा विहिता, न चात्र धर्मो ददातिकर्म; ब्रुविशास्योरदानार्थत्वात् । अथापि दानार्थता स्याद् ? एवमपि माणवकेन निमित्तेन धर्मं ददातीत्ययमर्थः स्यात् । माणवकस्य सम्प्रदानत्वेनाविवक्षितत्वात् , धर्मदाननिमित्तत्वेन विवक्षितत्वात् ।

ब्रुविशासिगुणेन चेति चकारोऽनुक्तसमुच्चयार्थः । तेन नयतिप्रभृतीनां प्रयोगेऽप्य-कथितस्य कर्मसंज्ञेष्यते । तथा चोक्तम्—

पदमञ्जरी

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥ इति ।

अयमर्थः—ये द्विकर्मका धातवस्तेषां प्रधाने कर्मणीप्सिततमे वाच्ये लादीनाहुः = लादयो भवन्तीत्याहुः । लादयः = लकृत्यक्तखलर्थाः । प्रधानाप्रधानयोर्भिन्नकक्षयोर्युगपदभिधानासंभवे प्रधानस्यैवाभिधानं न्याय्यम्, प्रधानत्वादेवेति भावः । नी—नीयते ग्राममजा, नेया, नीता, सुनया । वहि—उह्यते भारो ग्रामम्, वोढव्यः, ऊढः, सुवहः । हृञ्—ह्रियते भारो ग्रामम्, हर्त्तव्यः, हृतः, सुहरः । कृष्—कृष्यते शाखा ग्रामम्, क्रष्टव्या, कृष्टा, सुकर्षा ।

अप्रधाने दुहादीनामिति । अत्र दण्डिप्रभृतयोऽपि गृह्यन्ते, न तु दुहियाचीति श्लोकपठिता एव । एतेषां दुहादीनामप्रधाने कर्मण्याख्येये लादीनाहुः । एतदपि न्यायसिद्धम् ; यतः पयोऽर्थी पूर्वं गवि प्रवर्त्तते, अतः शुद्धस्य दुहेर्गवाभिसम्बन्धः, गोदोहेन तु पयस इत्यन्तरङ्गत्वादकथितकर्मणस्तत्रैव लादयो भवन्ति । एवं सर्वत्र ।

दुहि—गौर्दुह्यते पयः, दोह्या, दुग्धा, सुदोहा । याचि—पौरवो गां याच्यते, याच्यः, याचितः, सुयाचः । रुधि—व्रजोऽवरुध्यते गाम्, अवरोध्यः, अवरुद्धः, स्ववरोधः । प्रच्छि—माणवकः पन्थानं पृच्छ्यते, प्रष्टव्यः, पृष्टः, सुप्रच्छः । भिक्षि—पौरवो गां भिक्ष्यते, भिक्षितव्यः, भिक्षितः, सुभिक्षः । चिञ्—वृक्षोऽवचीयते फलानि, अवचेतव्यः, अवचितः, स्ववचयः । ब्रूञ्—उच्यते माणवको धर्मम्, वक्तव्यः, उक्तः, सुवचः । शासु—अनुशिष्यते माणवको धर्मम्, अनुशासितव्यः, अनुशिष्टः, स्वनुशासः । दण्डि—गर्गाः शतं दण्ड्यन्ते, दण्ड्याः, दण्डिताः, सुदण्डाः । जि—शतं जीयते देवदत्तः; जेतव्यः, जितः, सुजयः । मुषि—मुष्यते देवदत्तः शतम्, मोषितव्यः, मुषितः, सुमोषः ।

ण्यन्ते कर्तुश्च कर्मण इति । अभिधान इति शेषः । अण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मणः सतोऽभिधाने लादीनाहुरित्यर्थः । एतदुक्तं भवति—ये गत्यर्थादयोऽण्यन्तावस्थायामपि सकर्मका ण्यन्तावस्थायामुत्तरसूत्रेण द्विकर्मका जाताः, तेषु ण्यन्तावस्थायां यदुत्तरसूत्रेणोपजातं कर्म तत्र लादयो भवन्तीत्यर्थः । गमयति ग्रामं देवदत्तम्, गम्यते ग्रामं देवदत्तः, गमयितव्यः, गमितः; सुगमः । बुध्यर्थः—बोध्यते माणवको धर्मम्, बोधयितव्यः, बोधितः, सुबोधः । प्रत्यवसानार्थः—भोज्यते माणवक ओदनम्, भोजयितव्यः, भोजितः, सुभोजः । शब्दकर्म—पाठ्यते माणवको वेदम्, पाठयितव्यः, पाठितः, सुपाठः । अकर्मकः—आस्यते माणवको मासम्, आसयितव्यः, आसितः, स्वासः ।

पदमञ्जरी

बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि लादय इति मतान्तरम्। बोध्यते माणवकं धर्मः, भोज्यते माणवकमोदनः, पाठ्यते माणवकं वेद इत्यादि।

तदयमत्र निर्णयः—नीवह्यिहृकृषिभ्यः प्रधानकर्मणि लादयः; तत्सम्बन्धस्य पूर्वभावित्वात्। दुह्यादिभ्यो जिदण्डमुषिभ्यश्चाप्रधाने; तत्सम्बन्धस्यानन्तरङ्गत्वात्। बुद्धिप्रत्यवसानार्थशब्दकर्मकेषु गुणकर्मणि प्रधाने वा यथेष्टम्; गत्यर्थाकर्मकयोः हृक्रोश्च ण्यन्तयोः प्रयोज्ये कर्मणीति। प्रयोज्यस्य च प्राधान्येनाभिधीयमानाप्रयोजकव्यापारेणाप्यमानत्वात् प्राधान्यम्। गुणभूतप्रयोज्यव्यापारकर्मणस्तु गुणभाव आर्थेन न्यायेन प्रयोज्यव्यापारप्राधान्यम्, तदर्थत्वात् प्रयोजकव्यापारस्य। तत्प्राधान्याच्च तत्कर्मणोऽपि प्राधान्यमित्यन्ये। सर्वथा लादयः प्रयोज्यकर्मणीति स्थितम्।

अकर्मकाणां च धातूनां कालभावाध्वगन्तव्यदेशाः कर्मसंज्ञका इष्यन्ते। उक्तं च—'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्, देशश्चाकर्मकाणां तु कर्मसंज्ञो भवतीति वक्तव्यम्' इति। अध्वगन्तव्येति—गन्तव्योऽध्वा, अध्वा गन्तव्यः, कडारादिष्वध्वशब्दो द्रष्टव्यः। गन्तव्यत्वेन प्रसिद्धस्य नियतपरिमाणस्य क्रोशादेर्ग्रहणार्थं गन्तव्यग्रहणम्, तेनाध्वानं स्वपितीति न भवति। ननु च 'कालाध्वनोः' इति सिद्धा द्वितीया, किं कर्मसंज्ञया? देशस्य तावद्वक्तव्या। कालाध्वनोरपि लादिविधानार्थं कर्मत्वमेषितव्यम्। आस्यते मासः, आसितः, आसितव्यः,

न्यासः

नीवह्योर्हरतेश्चैव गत्यर्थानां तथैव च।
द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः॥ इति[1]।

अत्रापि श्लोके चकारो जयतिप्रभृतीनां प्रयोगेऽकथितस्य समुच्चयार्थः। किमुदाहरणम्? अजां नयति ग्रामं देवदत्तः। अजां वहति ग्रामं देवदत्तः। अजां हरति ग्रामं देवदत्तः। शतं जयति देवदत्तं यज्ञदत्तः। शतं गर्गान् दण्डयतीति। ननु चोभयेषामपि 'कर्त्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मसंज्ञा सिद्धा। यदि तर्ह्यजादीनामीप्सिततमत्वं विवक्ष्यते, न ग्रामादीनाम्, तदा कथं कर्मसंज्ञा? तथापि 'तथायुक्तम्' इत्यनेन सिद्धा। यदा तर्हि ग्रामादीनामीप्सितत्वं प्रकर्षरहितं विवक्ष्यते, तदा न सिद्ध्यति। अकर्मकाणाञ्च धातूनां कालभावाध्वगन्तव्यदेशानां कर्मसंज्ञेष्यते। तथा चोक्तम्—

कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्।
देशश्चाकर्मकाणाञ्च कर्मसंज्ञा भवन्ति च॥ इति वक्तव्यम्[2] इति।

---

१. इदम् 'अकथितञ्च' इति ( १।४।५१ ) सूत्रस्थं श्लोकवार्त्तिकम्।
२. इदमपि 'अकथितञ्च' इति ( १।४।५१ ) सूत्रस्थं वार्त्तिकम्।

## गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ ॥ ५२ ॥

अर्थशब्दः प्रत्येकमभिसंबध्यते । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां तथा शब्दकर्मकाणाकर्मकाणां च अण्यन्तानां यः कर्त्ता स ण्यन्तानां कर्मसंज्ञो भवति । गच्छति माणवको ग्रामम्, गमयति माणवकं ग्रामम् । याति माणवको ग्रामम्, यापयति माणवकं ग्रामम् ।

पदमञ्जरी

स्वासः । एवं शय्यते क्रोश इत्यादि । भावः—गोदोहमास्ते । यावता कालेन गौर्दुह्यते तावन्तं कालमास्त इत्यर्थः । गोदोहादीनां मासादिवत् कालत्वेनाप्रसिद्धत्वाद्भावस्य पृथग् ग्रहणम् । देशः—कुरून् स्वपिति, कुरवः सुप्यन्त इत्यादि । 'कालाध्वनोरत्यन्तसंयोगे' इति तु सूत्रमक्रियात्यन्तसंयोगार्थम्—मासं गुडधानाः, सर्वरात्रं कल्याणी, क्रोशं कुटिला नदीति । न तर्हि वक्तव्यम्–कालाभावाध्वगन्तव्या इति ? न वक्तव्यम्, नात्रासिरासनमात्रे वर्त्तते, किं तु तत्पूर्वके व्यापने वर्त्तते—मासमास्ते । कोऽर्थः ? मासमासनेन व्याप्नोतीति । एवं सर्वत्र । एवं च कृत्वा—सकर्मकेष्वपि मासादयः कर्म भवन्ति—मासं वेदमधीते, मासं वेदाध्ययनेन व्याप्नोतीत्यर्थः । अथ 'कर्तृकर्मणोः कृति' इति षष्ठी द्विकर्मकेषु किं प्रधाने कर्मणि भवति ? आहोस्विद् गुणे भवति ? आहोस्विदुभयोः ? उभयोरिति प्राप्तं द्वितीयावद्भाष्यकारवचनात्तु गुणकर्मणि विकल्पेन षष्ठी । प्रधानकर्मणि नित्या—नेता ऽश्वस्य स्रुघ्नस्य, स्रुघ्नमिति वा ।

इहाकथितं कर्मेत्येतावदस्तु, मास्तु पूर्वसूत्रद्वयम्, तद्विषयस्याप्यकथितत्वात्, सत्यम् ; नटस्य शृणोतीत्यत्र मा भूदिति दुह्यादिपरिगणनमवश्यं कर्तव्यम्, तस्मिंश्च क्रियमाणे ओदनं पचति, वृक्षमूलान्युपसर्पतीत्यत्र न स्यादिति पूर्वमपि योगद्वयमारभ्यत इति ॥

*गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ* ॥ *गमयति माणवकं ग्राममिति* । कथमत्र ग्रामस्य कर्मत्वम्, यावता कर्तुरीप्सिततमं कर्मेत्युच्यते,

न्यासः

तस्मात् तदर्थोऽनुक्तसमुच्चयार्थश्चकारः कृतः । कालः—मासमास्ते, मासं स्वपितीति । भावः—गोदोहमास्ते, गोदोहं स्वपितीति । अध्वा गन्तव्यः—क्रोशमास्ते, क्रोशं स्वपितीति । अध्वा चासौ गन्तव्यश्चेति विशेषणसमासः । 'कडाराः कर्मधारये' इति विशेष्यस्य पूर्वनिपातः । देशः—कुरूनास्ते, कुरून् स्वपितीति । सर्व एते कालादयोऽकथिताः; पूर्वविधेः कस्यचिदप्रवृत्तत्वात् ॥

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्त्ता स णौ ॥ यापयतीति । 'अर्त्तिह्री' इत्यादिना पुक् ।

※ गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः ※ । नयति भारं देवदत्तः । नाययति भारं देवदत्तेन । वहति भारं देवदत्तः, वाहयति भारं देदत्तेन ॥

※ वहेरनियन्तृकर्तृकस्येति वक्तव्यम् ※ । इह प्रतिषेधो मा भूत्— वहन्ति यवान् बलीवर्दाः, वाहयति यवान् बलीवर्दानिति । बुद्धि— बुध्यते माणवको धर्मम्, बोधयति माणवकं धर्मम् । वेत्ति माणवको धर्मम्, वेदयति माणवको धर्मम् । प्रत्यवसानम्=अभ्यवहारः—भुङ्क्ते माणवक ओदनम्, भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम्, आशयति माणवकमोदनम् ॥

पदमञ्जरी

न च संप्रति माणवकः कर्त्ता; अनेन कर्मसंज्ञकत्वात् । तत्र यथा माषेष्वश्वं बध्नातीत्यत्र वस्तुतो भक्षणेनेप्सिततमानामपि माषाणां कर्मसंज्ञा न भवति, तत्कस्य हेतोः ? अश्वस्य संप्रत्यकर्तृत्वात्, तद्वदत्रापि न प्राप्नोति; मा भूण्णि-च्युत्पन्ने माणवकः कर्ता, प्राक्तदुत्पत्तेः प्रकृत्यर्थे कर्त्ता भवति, तदानीमेव च ग्रामस्याभिसम्बन्धः ग्रामकर्मण्यसौ गमने प्रेष्यते—ग्रामं गच्छेति । अतो यस्याम-वस्थायां ग्रामस्य कर्मत्वं न तस्यां माणवकस्य कर्मत्वम्, यस्यां च ण्यन्तावस्थायां माणवकस्य कर्मत्वं न तस्यां ग्रामस्य कर्मत्वम्; पूर्वप्रवृत्तत्वाद् । माषेष्वश्व-मित्यत्र तु नैवं संभवति । *यापयतीति* । 'या प्रापणे' इत्यत्र प्राप्त्या गतिर्लक्ष्यत-इति यातिर्गत्यर्थः ।

*नीवह्योरिति* । नन्वेतयोर्गतिफलं प्रापणमर्थो न गतिः, 'न गतिहिंसार्थेभ्यः' इत्यत्र च भाष्यम्—न 'वहिर्गत्यर्थः' इति, सत्यम्; गुणभावेनापि गतिः प्रतीयत इति मत्वा प्रतिषेध उक्तः ।

*वहेरनियन्तृकस्येति* । वक्ष्यामीति चोपक्षेपः । वाहयति बलीवर्दान्यवानि-

न्यासः

वक्तव्य इति व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—उत्तरसूत्रेऽन्यतरस्यांग्रहण-मुभयोर्योगयोः शेषभूतो विज्ञायते, सा च व्यवस्थितविभाषा; तेन नीवह्योर्न भविष्यति ।

वहेरित्यादि । नियच्छति=विशिष्टे विषयेऽवस्थापयतीति नियन्ता सारथिः, अविद्यमानो नियन्ता कर्त्ता यस्य स तथोक्तः, तस्य । 'नीवह्योः प्रतिषेधो वक्तव्यः' इति योऽनन्तरोक्तः स वहेरनियन्तृकर्तृकस्य भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—तस्यैवान्यतरस्यांग्रहणस्य व्यवस्थितविभाषात्वान्नियन्तृकर्तृकस्य वहेः कर्मसंज्ञा भविष्यतीति ।

* आदिखाद्योः प्रतिषेधो वक्तव्यः *। अत्ति माणवक ओदनम्, आदयते माणवकेनौदनम्। खादति माणवकः, खादयति माणवकेनं।

*भक्षेरहिंसार्थस्य प्रतिषेधो वक्तव्यः *। भक्षयति पिण्डीं देवदत्तः, भक्षयति पिण्डीं देवदत्तेनेति।

अहिंसार्थस्येति किम्? भक्षयन्ति बलीवर्दाः सस्यम्, भक्षयन्ति बलीवर्दान्सस्यम्।

पदमञ्जरी

त्यत्राणौ बलीवर्दाः कर्त्तारः, ण्यन्ते तु नियन्ता सारथिः कर्त्ता, तत्र प्रतिषेधप्रतिषेधाद्विधिरेव भवति। बुध्यर्थग्रहणेन ज्ञानमात्रवाचिनामेव ग्रहणम्, न तु तद्विशेषवाचिनां स्मरत्यादीनामित्याहुः। वृत्तावपि तथैवोदाहृतम्।

*आदिखाद्योरिति*। अपर आह—सर्वमेव प्रत्यवसानकार्यमदेर्न भवति, नावश्यमियमेव कर्मसंज्ञेति 'निगरणचलनार्थेभ्यश्च' इति पदमपि न भवति, इदमेकमिष्यते—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः'—इदमेषां जग्धमिति।

*भक्षेरिति*। गत्यर्थादिषु प्रायेण हेतुमण्णिच एव संभवाद् हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति चुरादिणिजन्तोऽप्यण्यन्त एवेति भक्षेः प्राप्तिः। *भक्षयति बलीवर्दान् सस्यमिति*। क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसा भवति, तस्यामवस्थायां कैश्चिच्चैतन्याभ्युपगमात्। स्वामिनो वा हिंसा द्रष्टव्या।

इह कर्मशब्देन क्वचित्क्रिया गृह्यते, यथा—'कर्त्तरि कर्मव्यतीहारे' इति, क्वचित् साधनकर्मा—'वेः शब्दकर्मणः' इति, इह शब्दक्रियाणामिति चेत्? 'ह्वयत्यादीनां प्रतिषेधः'—ह्वयति पुत्रं देवदत्तः, ह्वापयति पुत्रं देवदत्तेन; क्रन्दति पुत्रं देवदत्तः, क्रन्दयति पुत्रं देवदत्तेन; शब्दायते देवदत्तः, शब्दाययते देवदत्तेन। अकर्मकत्वादथात्र प्रसङ्गः, शब्दलक्षणकस्य कर्मणोऽन्तर्भावात् कर्मान्तरायोगाच्च। 'श्रृणोतेश्चोपसङ्ख्यानम्'—अशब्दक्रियत्वात् श्रृणोति श्लोकं देवदत्तः, श्रावयति श्लोकं देवदत्तम्; न च बुध्यर्थत्वादत्र सिद्धिः, चेतत्यादयो हि ज्ञानमात्रवचना

न्यासः

आदिखाद्योरित्यादि। अत्रापि वक्तव्यशब्दस्य पूर्ववदेवार्थः। व्याख्यानमपि पूर्ववदेव कर्त्तव्यम्। भक्षयति पिण्डीं देवदत्त इति। चुरादिणिच्। भक्षयति पिण्डीं देवदत्तेनेति हेतुमण्णिच्। भक्षयति बलीवर्दान् शस्यमिति। भक्षिरत्र हिंसार्थः। 'सर्वे सचेतना भावाः' इत्यस्मिन् दर्शने हिंसितं शस्यमिति शस्यस्य भक्षणेन देवदत्तो हिंसितो भवति। यस्य हि तच्छस्यं तस्य हिंसा गम्यते।

शब्दकर्मणाम्---अधीते माणवको वेदम्, अध्यापयति माणवकं वेदम्। पठति माणवको वेदम्, पाठयति माणवकं वेदम्। अकर्मकाणाम्---आस्ते देवदत्तः, आसयति देवदत्तम्। शेते देवदत्तः, शाययति देवदत्तम्।

पदमञ्जरी

बुध्यर्थाः। अस्तु तर्हि साधनकर्मणो ग्रहणम्, शब्दकर्मण इति चेत्? जल्पतिप्रभृतीनामुपसंख्यानम्, जल्पति पुत्रं देवदत्तः, जल्पयति पुत्रं देवदत्तम्; विलपति पुत्रं देवदत्तः, विलापयति पुत्रं देवदत्तम्; आभाषते पुत्रं देवदत्तः आभाषयति पुत्रं देवदत्तम्। दृशेः सर्वत्र, यद्यपि क्रियाग्रहणम्, अथापि साधनग्रहणम्, अथाप्युभयग्रहणम्---सर्वथा दृशेरुपसंख्यानम्। पश्यति रूपतर्कं कार्षापणम्, दर्शयति रूपतर्कं कार्षापणम्। यदा चायं दृशिः चक्षुःसाधनके ज्ञानविशेषे वर्तते तदैतद्वक्तव्यम्; ज्ञानमात्रवचनत्वे तु बुध्यर्थत्वादेव सिद्धम्; तदेवमुभयोरपि पक्षयोर्दोषान्तं भाष्यं नान्यतरः पक्षो निरणायि।

*वृत्तिकारस्तु* ये शब्दक्रियाः शब्दसाधनकर्माणश्च तानविवादसिद्धानुदाहरति---*अधीते इत्यादि*। *अध्यापयतीति*। 'क्रीङ्जीनां णौ' इत्यात्वम्, 'अर्तिह्री' इत्यादिना पुक्। निर्णयस्तु साधनकर्मणो ग्रहणं कर्मग्रहणाद्, अन्यथा 'गतिबुद्धिशब्दप्रत्यवसानार्थाकर्मकाणाम्' इत्येव सिद्धेः।

जल्पादीनां तूपसंख्यानं कर्तव्यमेव। अन्यस्त्वाह---जल्पति देवदत्त इति। वचनेन बोधयतीत्यर्थः। एवमन्यत्रापि। तत्र बुद्धयर्थत्वादेव सिद्धम्। यद्यप्यन्या बुद्धिरन्या बोधना, उपसर्जनीभूतापि तावद्बुद्धिरस्तीति बुद्धयर्थत्वमस्त्येव, उपसर्जनीभूतोऽपि च गत्यादिरर्थो गृह्यते, अन्यथा गमयतीत्यादीनामगत्यर्थत्वादेवा-

न्यास

शब्दकर्मणामिति। शब्दग्रहणेनेह पारिभाषिकं कर्म गृह्यते, न तु क्रिया। क्रियाग्रहणे हि कर्मग्रहणमनर्थकं स्यात्। कारकाधिकारादेव कारकस्य क्रियापेक्षत्वाच्च् शब्दात्मिकायां क्रियायां वर्त्तमाना धातवो ग्रहीष्यन्त इति, तत् किं कर्मग्रहणेन? यदि तर्हि पारिभाषिकं कर्म गृह्यते, जल्पति देवदत्तो जल्पयति देवदत्तम्, विलपति देवदत्तो विलापयति देवदत्तम्, आभाषते देवदत्त आभाषयति देवदत्तम्, पश्यति देवदत्तः कार्षापणम्, दर्शयते देवदत्तं कार्षापणमित्यत्र न प्राप्नोति, शब्दादन्यस्य पारिभाषिकस्य कर्मणो विवक्षितत्वात्, नैष दोषः; बुद्धयर्थत्वाद् भविष्यति। अत्र हि जल्पतिप्रभृतयस्त्रयस्तावच्छब्दसाधने बोधने वर्त्तन्ते। जल्पति देवदत्त इति। वचनेन बोधयतीत्यर्थः। एवमन्यत्रापि। पश्यति कार्षापणमित्यत्र दृशिश्चक्षुःसाधने ज्ञाने वर्त्तते। चक्षुषा जानीत इत्यर्थः। तस्माद् बुद्धयर्थत्वात् सिद्धम्। अध्यापयतीति। 'क्रीङ्जीनां णौ' इत्यात्त्वम्। 'अर्त्तिह्री' इत्यादिना पुक्। किमर्थं पुनरिदं सूत्रम्,

एतेषामिति किम्? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेनेति। अण्यन्तानामिति किम्? गमयति देवदत्तो यज्ञदत्तम्, तमपरः प्रयुङ्क्ते, गमयति देवदत्तेन यज्ञदत्तं विष्णुमित्रः॥

पदमञ्जरी

प्रसङ्गादणिग्रहणमनर्थकं स्यादिति, अस्तु चेतनविषये, एवमचेतनविषये कथम्? यः कंचिज्जल्पति तमन्यो जल्पयति, न ह्यत्र प्रबोधनाप्यस्ति।

अकर्मकाणामिति। कालभावाध्वगन्तव्यदेशव्यतिरिक्तकर्मरहितानामित्यर्थोऽत्र ग्राह्यः, अन्यथा मासमास्ते देवदत्तः, मासमासयति देवदत्तम्, गोदोहमासयति, क्रोशमासयति, कुरूनासयतीत्यत्र न स्यात्; कालादिकर्मणा सकर्मकत्वात्। एवं 'लः कर्मणि च' इत्यादावपि यत्राकर्मकग्रहणं तत्र सर्वत्र द्रष्टव्यम्, तेन मासमास्यते देवदत्तेनेत्यादौ भावे लादयः सिद्धा भवन्ति। उक्तञ्च—सिद्धं तु कालकर्मणाकर्मकत्ववचनादिति। कालग्रहणमुपलक्षणम्। वत्करणात्स्वाश्रयमपि भवति—मास आस्यते देवदत्तेन—मासकर्मणि लो भवति। स तर्ह्यकर्मकवचनाद् भावे वक्तव्यः? न वक्तव्यः; अकर्मकाणामित्युच्यते, न च कालादिभिः केचिदकर्मकाः। कालादिभिरप्यकर्मकाः, यदा ते न विवक्ष्यन्ते, तद्यथा—शेते देवदत्तो न भुङ्क्ते इति। नाप्यविवक्षितकर्माणोऽकर्मकाः, किं तर्हि? येऽत्यन्ताविद्यमानकर्माणो धातवोऽकर्मकाः, नार्थाः। यस्य धातोः स्वरूपावधिकमकर्मकत्वम्, न च कालादिकर्मणा स्वरूपावधिकमकर्मकत्वं कस्यापि सम्भवतीति सामर्थ्यात्तद्व्यतिरिक्तेन कर्मणाऽकर्मकत्वं विज्ञायते। किमर्थं पुनरिदमुच्यते, यावता स्वव्यापारे स्वतन्त्रस्यापि प्रयोज्यस्य प्रयोजकव्यापारे विवक्षिते तेन प्रधानभूतेनाप्यमानत्वाद् अन्तरङ्गत्वेन पूर्वप्रवृत्तामपि कर्तृसंज्ञां बाधित्वा कर्मसंज्ञा भविष्यतीति? एवं तर्हि सिद्धे सत्यारम्भो नियमार्थः—प्रयोजकव्यापारेणाप्यमानस्य यदि भवति गत्यर्थादीनामेव, नान्येषामिति। तेन पाचयत्योदनं देवदत्तो यज्ञदत्तेनेत्यत्र पूर्वं प्रवृत्ताया एव कर्तृसंज्ञाया अवस्थानात् कर्तरि तृतीया भवति। उक्तं च—

गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः।
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते॥ इति।

कर्तुः स्वधर्मात्तृतीया। अथ कथम्—

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक। इति?

न्यासः

यावता ण्यन्ते धातौ प्रयोजकव्यापारेण प्रेषणाध्येषणाख्येन व्याप्तुमिष्टतमत्वात् प्रयोज्यस्य 'कर्त्तुरीप्सिततमं कर्म' इत्यनेनैव कर्मसंज्ञा सिद्धा? सत्यम्, नियमार्थं वचनम्—प्रयोजकव्यापारेण व्याप्यमानस्य यदा कर्मसंज्ञा तदा गत्यर्थादीनामेव, नान्येषामिति॥

## हृक्रोरन्यतरस्याम् ॥ ५३ ॥

'अणि कर्त्ता स णौ' इति वर्तते। हरतेः करोतेश्चाण्यन्तयोर्यः कर्त्ता स ण्यन्तयोरन्यतरस्यां कर्मसंज्ञो भवति। हरति भारं माणवकः, हारयति भारं माणवकं माणवकेनेति वा। करोति कटं देवदत्तः, कारयति कटं देवदत्तं देवदत्तेनेति वा।

*अभिवादिदृशोरात्मनेपद उपसंख्यानम्*। अभिवदति गुरुं देवदत्तः, अभिवादयते गुरुं देवदत्तम्, देवदत्तेनेति वा। पश्यन्ति भृत्या राजानम्, दर्शयते भृत्यान् राजानम्, भृत्यैरिति वा।

आत्मनेपद इति किम्? दर्शयति चैत्रं मैत्रमपरः—प्राप्तविकल्प-

पदमञ्जरी

स्वतन्त्राः कवयः। यद्वा—सुतां प्रति किञ्चिदुद्वाहविषये ग्राहयितुं बोधयितुं न शशाकेत्येवं व्याख्येयम्; तत्र बुध्यर्थत्वात् सिद्धम् ॥

*हृक्रोरन्यतरस्याम्* ॥ गत्यर्थादयो निवृत्ताः, तेनोभयत्र विभाषेयम्। यदा हरतिर्गतौ वर्तते—हरति भारं देवदत्त इति, अभ्यवहारे वा—अभ्यवहरति माणवकमोदनमिति। करोतिश्चाप्यकर्मकः—ओदनस्य पूर्णाः छात्राः विकुर्वत इति, तदा पूर्वेण प्राप्ते। यदा हरतिः स्तेयादौ वर्तते—हरति सुवर्णं चोर इति, करोतिश्च सकर्मकस्तदाऽप्राप्ते। ननु 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति नियमस्यैव विकल्पो युक्तः, गत्यर्थादिष्वेवेति योऽयं नियमः स 'हृक्रोरन्यतरस्याम्' इति, ततश्च पक्षे नियमाभावात् गत्याद्यर्थादन्यत्र पक्षे कर्मत्वं पक्षान्तरे च कर्तृत्वं भवतु, गत्याद्यर्थत्वे तु नित्यवत् कर्मसंज्ञा प्राप्नोति। एवं तर्हि *वार्त्तिककारेण* उभयत्रविभाषास्वियं पठिता, तत्सामर्थ्यादनन्तरस्य विधिरिति नाश्रीयते, अविशेषेण हृक्रोर्विकल्पः प्रवर्तते।

*अभिवादिदृशोरिति*। अभिवादयतेरप्राप्ते विभाषा दृशेर्बुध्यर्थत्वात् दृशेः सर्वत्रेति वा प्राप्ते। *अभिवादयते इति*। 'णिचश्च' इत्यात्मनेपदम्। परस्मैपदे तु अभिवादयति गुरुं देवदेत्तेनेति कर्तृसंज्ञैव भवति।

*दर्शयते इति*। कर्मसंज्ञाभावपक्षे कर्मान्तरस्याभावात् 'णेरणौ' इत्यात्मनेपदम्, अन्यत्र तु 'णिचश्च' इति ॥

न्यासः

**हृक्रोरन्यतरस्याम्** ॥ गत्यर्थादयो निवृत्ताः। तेनोभयत्र विभाषेयम्। यदा हरतिर्गतौ वर्त्तते, अभ्यवहारे वा, करोतिश्चाकर्मको भवति तदा प्राप्ते। यदा तु हरतिः स्तेयादौ वर्त्तते, करोतिश्च सकर्मको भवति तदाऽप्राप्ते। उपसंख्यानमिति। प्रति-

त्वाद् द्वितीयैव । अभिवादयति गुरुं माणवकेन पिता—अप्राप्तविकल्पत्वात्तृतीयैव ॥

## स्वतन्त्रः कर्ता ॥ ५४ ॥

'स्वतन्त्रः' इति प्रधानभूत उच्यते । अगुणभूतो यः क्रियासिद्धौ

पदमञ्जरी

*स्वतन्त्रः कर्ता* ॥ स्वतन्त्रशब्दोऽयं तन्तुवायवचनोऽप्यस्ति—स्वं तन्त्रमस्य स्वतन्त्रः, विततास्तन्तवस्स्वतन्त्रमित्युच्यते; अस्ति च साधारणद्रव्ये पुरुषे वर्तते साधारणं भवेत्तन्त्रम्, स्वं धनं तन्त्रं साधारणमस्य स्वतन्त्रः; अस्ति च प्रधानवचनः—स्व आत्मा तन्त्रं प्रधानमस्य स्वतन्त्र इति । तत्राद्ययोर्ग्रहणे तयोरपादानादिविषये कर्तृसंज्ञा स्यात्, परत्वाद्विशेषविहितत्वाच्च तन्तुवायादागच्छतीत्यादौ; इह च न स्यात्–देवदत्तो गच्छतीति, इदमाद्ययोर्ग्रहणे दोषं दृष्ट्वा तृतीयमर्थमाश्रित्याह—*स्वतन्त्र इति* । *प्रधानभूत उच्यत इति* । स्वतन्त्रशब्दस्य तत्रैव प्रसिद्धतरत्वादिति भावः । किं च कारकाधिकारात् क्रियाविषयं स्वातन्त्र्यं गृह्यते, न च तन्तुवायस्तन्तुवायतया क्रियायामुपयुज्यते, किं तर्हि ? प्रधानतयैवेति तद्वाचिन एव ग्रहणं युक्तम् । यदि प्रधानभूत उच्यते, एवं सत्यप्रधानापेक्षत्वात् प्रधानभावस्य यत्राधिकरणादीन्यप्रधानानि कारकाणि सन्ति–काष्ठैः स्थाल्यामोदनं पचतीति अत्रैव 'स्यात्; न त्वास्ते शेते इत्यादावित्याशङ्क्य प्राधान्येनागुणभावो लक्ष्यत इति दर्शयति—*अगुणीभूत इति* । तेन यस्य गुणभावो नास्ति, स कर्त्ता । कारकान्तराविवक्षायामपि चागुणभावोऽस्त्येव । कः पुनरत्र कारकाणां गुणगुणिभावः ? यदा एकापायेऽपि क्रिया न निर्वर्तते, उक्तमत्र—

न्यासः

पादनमित्यर्थः । एतच्च प्रकृतत्वात् कर्मसंज्ञायाः । तत्रेदं प्रतिपादनम्—'अकथितञ्च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेनाभिवादिदृशोरप्यात्मनेपदे कर्मसंज्ञा भविष्यतीति । अभिवादयते इति । 'णिचश्च' इत्यात्मनेपदम् । दर्शयते इति । अत्रापि 'णेरणौ' इत्यादिना ।

स्वतन्त्रः कर्ता ॥ अस्त्ययं स्वतन्त्रशब्दो बहुव्रीहिः । स्वं तन्त्रं यस्य स स्वतन्त्रः । अस्ति च समासप्रतिरूपको रूढिशब्दः, प्रधानार्थवृत्तिः, यथा—स्वतन्त्रोऽयमिह देवदत्त इति, प्रधानभूत इति, गम्यते । तत्र यदि पूर्वो गृह्येत तदा तन्तुवायस्यैव स्यात्; विस्तृता हि तन्तवस्तन्त्रम्, तच्च तन्तुवायस्यैवास्ति । देवदत्तः पचतीत्यादौ न स्यात् । इतरस्य तु ग्रहणे सर्वत्र भवति । तस्माद् व्याप्तेर्न्यायात् स एव गृह्यत इति मत्वाह—स्वतन्त्र इति प्रधानभूत इति । यद्येवमप्रधानमपेक्ष्य प्रधानमुच्यत इति यत्राधिकरणादीन्यपराण्यप्रधानानि कारकाणि सन्ति, देवदत्तः काष्ठैरग्निनोदनं स्थाल्यां पचतीत्यादौ तत्रैव स्यात् । यत्र तु तेषामविवक्षा—आस्ते देवदत्तः, शेते देवदत्त इत्यादौ, तत्र न स्यादिति यो देशयेत् तं प्रत्याह—अगुणभूत

स्वातन्त्र्येण विवक्ष्यते तत्कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति। स्थाली पचति।

कर्तृप्रदेशाः—'कर्तृकरणयोस्तृतीया' इत्येवमादयः ॥

तत्प्रयोजको हेतुश्च ॥ ५५ ॥

'तत्' इति अनन्तरः कर्ता परामृश्यते। तस्य प्रयोजकः=

पदमञ्जरी

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात् ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेकेऽपि दर्शनात्।
आरादप्युपकारित्वात् स्वातन्त्र्यं कर्तुरिष्यते ॥ इति।

काष्ठादीनि कर्त्रा प्रवर्तितानि करणादिशक्तिं प्रतिलभन्ते, कर्त्ता तु प्रागेव। कर्तृसंनिधौ च करणादीनि न्यग्भवन्ति, तदधीने च तेषां प्रवृत्तिनिवृत्ती। प्रधानकर्तुश्च प्रतिनिधिर्न दृष्टः, करणादीनां तु दृष्टः—व्रीह्यपचारे नीवारैरिज्यते। प्रविवेकः=अभावः। करणाद्यभावेऽप्यास्ते, शेते इत्यादौ केवलः कर्त्ता दृश्यते, न तु कर्तुरभावे करणादीनि दृश्यन्ते।

आरादप्युपकारित्वादिति। यद्यप्यसौ तटस्थः फलसिद्धावुपकरोति, न तु करणादिवदनुप्रविश्य तथापीत्यर्थः। एतच्च प्रायेण चेतनेष्वेव सम्भवति, नाचेतनेषु—रथो यातीत्यादौ, नैष दोषः; उक्तलक्षणे कर्त्तरि द्वयं दृष्टम्—प्राधान्यम्, अगुणभावश्च। तत्रागुणभावः अचेतनेषु चेतनेष्वपि सम्भवति। स चायमगुणभावो न प्रतिनियतविषयः, यस्यैव तु विवक्ष्यते, तस्यैवेत्याह—स्वातन्त्र्येण विवक्ष्यत इति। विवक्ष्यत इत्यस्योदाहरणम्—स्थाली पचतीति।

अन्ये तु व्याचक्षते—अगुणभावेनाभिधीयमानव्यापारो गुणभूतो गुणभूतधातूपात्तव्यापारः कर्तेत्यर्थः। कस्य च व्यापारो धातुनाऽगुणभावेनोपादीयते? यस्य विवक्ष्यते तस्येति सर्वत्र सिद्धमिति ॥

*तत्प्रयोजको हेतुश्च ॥ तदित्यनेनन कर्त्ता सम्बद्ध्यते इति।* कर्तृसंज्ञाविशिष्टः

न्यासः

इति। एवं मन्यते—प्रधानेनागुणभाव उपलक्ष्यते। गुणभावो यत्र नास्ति स कर्त्तेति। कारकान्तराविवक्षायामप्यगुणभावोऽस्त्येवेति सर्वत्र भवति। ननु च सामग्र्यधीना हि क्रियासिद्धिः, एकस्याप्यभावे न सिध्यति, तत् कस्यात्र प्राधान्यं यत्परिग्रहाय स्वतन्त्रग्रहणं क्रियते? इत्याह—यः क्रियासिद्धाविस्यादि। यद्यपि क्रियासिद्धौ सर्वेषां व्यापारः, तथापि स्वातन्त्र्यं यस्य विवक्ष्यते स एव स्वतन्त्र इत्युच्यते, नान्य इति। देवदत्तः पचतीत्यत्र देवदत्तः कर्तृसंज्ञकत्वात् कर्तृप्रत्ययेनोच्यते लकारेण।

तत्प्रयोजको हेतुश्च ॥ तस्य प्रयोजकस्तत्प्रयोजक इति। ननु च 'कर्त्तरि च'

तत्प्रयोजकः। निपातनात्समासः। स्वतन्त्रस्य प्रयोजको योऽर्थः तत्कारकं हेतुसंज्ञं भवति, चकारात्कर्तृसंज्ञं च।

पदमञ्जरी

स्वतन्त्र इत्यर्थः। ननु च प्रयोजकसन्निधौ प्रयोज्यस्य पारतन्त्र्यं कर्तृसन्निधाविव करणादीनाम्, तत्कथं स्वतन्त्रः परामृश्यते? कथन्तरां च कर्तृसंज्ञाविशिष्टः? कथन्तमां च पाचयत्योदनं देवदत्तो यज्ञदत्तेनेति? प्रयोज्ये तृतीया भवति, पूर्वमेव च स्वतन्त्रस्य कर्तुः सतः प्रयुक्तिरपि किमर्था? मायं विरंसीदिति प्रयुङ्क्ते इति चेद्, भवत्वेवं प्रवृत्तप्रवर्तने, यत्र तु बलात्कारेण प्रवर्त्यते तत्र कथम्? उच्यते; अप्रवृत्तप्रवर्तनेऽपि यावत्स्वार्थादर्शनात् प्रयोज्ये न प्रवर्तते तावत्प्रयोजकः पाचयतीति न व्यपदिश्यते; प्रयोज्यप्रवृत्त्युत्तरकालमेव तु व्यपदिश्यते, तदानीमपि च स्मृत्यारूढा प्रयुक्तिर्विद्यत इति अनुवर्तमाना हि प्रसक्तिः प्रयोज्यस्याफलनिष्पत्तेः प्रवृत्तौ हेतुर्न मध्ये विच्छिन्ना। लोडादिवाच्यस्तु प्रैषः प्रयोज्यस्याप्रवृत्तावपि भवति। उक्तं च—

द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोड् विधीयते।
प्रवृत्तस्य यदा प्रैषस्तदा स विषयो णिचः॥ इति।

तदेवं णिज्वाच्या प्रयुक्तिः प्रवृत्तप्रवर्तनारूपेण प्रतीयत इति प्रकृत्यर्थे कर्तुः सतः प्रयोजक इत्यविरुद्धम्। इममेव चार्थं दर्शयितुं तच्छब्दोपादानम्; अन्यथा कस्य प्रयोजक इत्यपेक्षायाम्, प्रकृतत्वादेव स्वतन्त्रस्य प्रयोजक इति लाभादनर्थकं तत् स्यात्। *तस्य प्रयोजकस्तत्प्रयोजक इति*। ननु 'तृजकाभ्यां कर्तरि' 'कर्तरि च' इति प्रतिषेधात् कथमत्र समास इत्यत आह—*निपातनात्समास इति*। अत्र विचार्यमस्ति समासप्रकरण एव विचारयिष्यामः।

न्यासः

इत्यनेन षष्ठीसमासप्रतिषेधेनात्र भवितव्यमित्याह—निपातनात् समास इति। प्रयोजक इति। प्रेरकः=उपदेशकः, व्यापारक इत्यर्थः। न चान्येन प्रयुज्यमानस्य स्वव्यापारे स्वातन्त्र्यं हीयते; अन्यथा ह्यकुर्वत्यपि कारयतीति स्यात्। प्रयोजकत्वं द्विविधम्—मुख्यम्, इतरच्च। देवदत्तः कटं कारयतीत्यत्र देवदत्तस्य मुख्यम्। भिक्षा वासयतीत्यत्र भिक्षाणां वासहेतुत्वात् प्रयोजकत्वमुपचरितम्, न मुख्यम्। न हि भिक्षा यूयं वसथेत्येवं प्रयुञ्जते। इह च कारकाधिकारे तमब्ग्रहणव्यतिरेकेणातिशयो न विवक्षित इति 'साधकतमं करणम्' इत्यत्र तमब्ग्रहणेन ज्ञापितमेतत्। तेन यस्यापि प्रयोजकत्वमुपचरितम्, न मुख्यम्, तस्यापि हेतुसंज्ञा भवत्येव।

संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते, कारयति। हारयति। हेतुत्वाद् णिचो निमित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते।

हेतुप्रदेशाः—'हेतुमति च' इत्येवमादयः॥

**प्राग्रीश्वरान्निपाताः॥ ५६॥**

'अधिरीश्वरे' इति वक्ष्यति। प्रागेतस्मादवधेर्यानित ऊर्ध्वमनुक्रमिष्यामः, निपातसंज्ञास्ते वेदितव्याः। वक्ष्यति—'चादयोऽसत्त्वे' च, वा, ह, अह।

**पदमञ्जरी**

*संज्ञासमावेशार्थश्चकार इति*। असति हि तस्मिन् एकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यात्। *कुर्वाणं प्रयुङ्क्ते इति*। कुर्वाणदशायां या प्रयुक्तिः स्मृत्यारूढा, सेव णिज्वाच्येत्येवं विग्रहः। *हेतुत्वादित्यादिना* समावेशस्य प्रयोजनं दर्शयति॥

*प्राग्रीश्वरान्निपाताः*॥ प्राचि काले देशे वा प्राक्। *अधिरीश्वरे इति वक्ष्यतीति*। ईश्वरप्रकृतिभागस्य पूर्वपदान्तेन रेफेण सहानुकरणं द्रष्टव्यम्। अनुकार्येणार्थेनार्थवत्त्वात् विभक्त्युत्पत्तिः, *च वा* इत्यत्र निपातत्वे सति 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञा भवति। 'निपाता आद्युदात्ताः' इति तु स्वरो न भवति, उदाहृतानामनुदात्तानां गणे पाठात्। अन्येषां तु तदपि भवति।

ननु यथा 'प्रत्ययः' इत्यादिरधिकारो विनाप्यवधिनिर्देशेनाभिमतविषये प्रवर्तते, तथायमपि प्रवर्तिष्यते, निपाताः' इत्येवास्तु, नार्थोऽवधिनिर्देशेनेत्यत आह—

**न्यासः**

**संज्ञासमावेशार्थश्चकार इति**। असति तस्मिन्नेकसंज्ञाधिकारादत्र कर्तृसंज्ञा न स्यात्। अतः संज्ञासमावेशार्थश्चकारः क्रियते। हेतुत्वादित्यादिना संज्ञाद्वयस्य प्रयोजनं दर्शयति। प्रयोजकव्यापारे हि 'हेतुमति च' इति णिज् विधीयते। तस्य हेतुत्वं प्रयोजकस्य हेतुत्वे सत्युपपद्यते। हेतुत्वात् प्रयोजको णिचो निमित्तं भवति। कर्तृप्रत्ययेन च लकारेणाभिधानं कर्तृसंज्ञायां सत्यां भवतीति कर्तृत्वात् कर्तृप्रत्ययेन लकारेणोच्यत इति।

**प्राग्रीश्वरान्निपाताः**॥ च वा, ह, अह इत्यत्र निपातसंज्ञायां सत्याम् 'स्वरादिनिपातमव्ययम्' इत्यव्ययसंज्ञा भवति। 'निपाता आद्युदात्ता भवन्ति' इत्याद्युदात्तत्वञ्च। अथ किमर्थं प्राग्ग्रहणम्? यावता पञ्चम्युच्चारणसामर्थ्यादेव प्रागित्यस्य दिक्छब्दस्याध्याहारो भविष्यति। न च 'पराम्' इत्ययमपि दिक्शब्दोऽस्ति। अतो नास्याध्याहार आशङ्कनीयः। तदध्याहारे हि 'चादयोऽसत्त्वे' इत्येवमादयो योगा निपातसंज्ञासम्बन्धाभावादसम्बद्धाः स्युः। तस्मात् प्रागित्येतदेवाध्याहरिष्यते। तत् किं प्राग्वचनेन?

प्राग्वचनं संज्ञासमावेशार्थम् । गत्युपसर्गकर्मप्रवचनीयसंज्ञाभि-स्सह निपातसंज्ञा समाविशति । रेफोच्चारणम् 'ईश्वरे तोसुन्कसुनौ' इत्ययमवधिर्मा विज्ञायीति ॥

रीश्वराद्वीश्वरान्मा भूत् कृन्मेजन्तः परोऽपि सः ।
समासेष्वव्ययीभावो लौकिकं चातिवर्तते ॥

पदमञ्जरी

*प्राग्वचनमिति* । प्राग्वचनद्वारेणावधिनिर्देशस्य प्रयोजनमुक्तम् । अयमर्थः—असत्यवधिनिर्देशे 'निपाताः' इत्यस्य प्रतियोगमनुवृत्तौ सत्यामप्येकसंज्ञाधिकारात् पर्यायः स्यात्, न तु समावेशः; सति तु तस्मिन् ईश्वरात् प्राग्यावन्तः संज्ञिनः सर्वांस्तान्नैकध्यमिहापेक्ष्य सकृत्संज्ञा विधीयते, प्रतिसूत्रमधिकारात्त्वपरावृत्तिः, तस्याश्च समावेश। प्रयोजनमिति ।

अथ वा प्राग्वचनं किमर्थम्, यावता पञ्चम्येव प्रागिति दिक्शब्दोऽध्याहरिष्यते, परागित्यस्य त्वध्याहारो न भविष्यति, 'चादयोऽसत्वे', 'प्रादयः' इत्यनयोर्विधेयासम्भवेनानर्थक्यप्रसङ्गात् ? अत आह—*प्राग्वचनमिति* । अयं भावः—अध्याहारेण सिद्धे प्राग्ग्रहणसामर्थ्यात्तन्त्रेण द्वौ प्राक्छब्दावुच्चार्येते । तेनायमर्थो भवति—प्राग्रीश्वराद्ये व्यवस्थितास्ते प्राक् निपातसंज्ञा भवन्ति, निपाताः सन्तो गत्यादिसंज्ञा इति । तेन निमित्तमेव निपातसंज्ञा गत्यादिसंज्ञानामिति समावेश-सिद्धिरिति ।

रीश्वरादिति सह रेफेणानुकरणे प्रयोजनमाह—*रीश्वराद्वीश्वरान्मा भूदिति* ।

न्यासः

इत्याह—प्राग्वचनमित्यादि । एका संज्ञेत्यनुवर्त्तते । निपातसंज्ञा चादिषु प्रादिषु वा क्रियायोगे चरितार्था । तत्रासति प्राग्वचने निपातसंज्ञाया उपसर्गादिसंज्ञाभिरनव-काशाभिर्बाध्यमानत्वात् ताभिः सह तस्याः समावेशो न स्यात् । इष्यते चात्र तदर्थं प्राग्वचनम्, तस्मिन् सत्येवं सम्बन्धः क्रियते— रीश्वराद् यावन्त प्राग्व्यवस्थितास्ते सर्वे निपातसंज्ञका भवन्ति, निपाताश्च सन्त उपसर्गादिसंज्ञका इति । तेन निमित्तमेव निपातसंज्ञोपसर्गसंज्ञानां भवति । न च निमित्तिना निमित्तं व्याहन्यते, अन्यथा हि तस्य निमित्तत्वमेव न स्यात् । अध्याहृते तु प्राक्शब्दे रीश्वराद्ये प्राग्व्यवस्थितास्ते सर्वे निपातसंज्ञका भवन्त्येषोऽर्थोऽभिमतः स्यात् , न तु निपाताः सन्त उपसर्गादिसंज्ञका इत्येषोऽप्यर्थो लभ्यते । सूत्रोपात्ते तु प्राक् शब्द एषोऽर्थो लभ्यत एव; अन्यथा तस्य वैयर्थ्यं स्यात् ।

अथ किमर्थं रेफादिक ईश्वरशब्दो गृह्यते—प्राग्रीश्वरादिति, न च प्रागीश्वरादि-त्येवोच्येत, प्रत्यासत्तेरनन्तर एव हीश्वरशब्दो ग्रहीष्यत इत्यत आह—रीश्वराद्वीश्वरा-

## पदमञ्जरी

रीश्वरादित्युच्यते, 'अधिरीश्वरे' इत्ययमीश्वरशब्दोऽवधिर्यथा स्यात्, 'शकि णमुल्कमुलौ' 'ईश्वरे तोसुन्कसुनौ' इत्ययं मा भूद् इत्येवमर्थमित्यर्थः। यदा संहितया सूत्राणि पठ्यन्ते, तदा रीश्वरशब्दोऽस्तीत्यभिप्रेत्य रीश्वरादित्युक्तम्। ज्ञापकात् सिद्धम्, यदयं 'कृन्मेजन्तः' इति कृतो मान्तस्यैजन्तस्य वाऽव्ययसंज्ञां शास्ति, तज्ज्ञापयति—अनन्तर ईश्वरशब्दोऽवधिर्न व्यवहित इति, अन्यथा सेसेन्प्रभृतीनां णमुल्कमुलोश्च निपातत्वादेवाव्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात्? नैतदस्ति ज्ञापकम्, *कृन्मेजन्तः परोऽपि सः*, 'ईश्वरे तोसुन्कसुनौ' इत्यस्मात्परोऽपि कृन्मान्त एजन्तश्चास्ति कृत्यार्थे तवैकेनित्याद्येजन्तः, णमुलादिश्च मान्तः, तदर्थमेतत् स्यात्। यत्तर्ह्यव्ययीभावस्याव्ययत्वं शास्ति, तज्ज्ञापयति—अनन्तरस्य ग्रहणमिति; अन्यथा द्वितीये निपातसंज्ञाव्यापाराद् अव्ययीभावस्य निपातत्वादेवाव्ययसंज्ञायाः सिद्धत्वादनर्थकं तत्स्यात्, नैतदस्ति; 'समासेष्व-व्ययीभावः' तुल्यजातीयव्यावृत्तये नियमार्थमेतत्स्यात्, न त्वनन्तरस्य ग्रहणे ज्ञापकमित्यर्थः। एवं तर्हि लौकिकन्यायादेवानन्तरस्य ग्रहणं भविष्यति, लौकिके ह्योदकान्तात्प्रियं प्राप्यमनुव्रजेदिति य एवानन्तर उदकान्त आ ततोऽनुव्रज्य बान्धवा निवर्तन्ते तद्वदत्रापि? तत्राह—*लौकिकं चातिवर्तते इति*। लौकिकं न्यायं

## न्यासः

न्माभूदिति। रेफसहित ईश्वरो रीश्वरः। शाकपार्थिवादित्वान्मयूरव्यंसकादित्वाद्वा समासः। रीश्वरादित्युच्यमाने वीश्वरान् मा भूत्, 'अधिरीश्वरे' इत्यस्यैवेश्वरशब्दस्य ग्रहणं यथा स्यात्। ईश्वरे तोसुन्कसुनौ' इत्यत्र यो वीश्वरशब्दस्तस्य ग्रहणं मा भूत्। यस्य ग्रहणे बहूनां संज्ञा भवत्यतो व्याप्तेर्न्यायादस्यैव ग्रहणं स्यात्। ननु च वकारस्तत्र नास्त्येव, तत् किमुच्यते वीश्वरान् मा भूदिति? एवं मन्यते—यदा सूत्राणि संहितया पठ्यन्ते—'शकि णमुल्कमुलावीश्वरे तोसुन्कसुनौ' इति तदा लौशब्दस्य य औकारस्त-स्यावादेशे कृत ईश्वरशब्दो वकारसहितो भवतीति, नैतदस्ति; रेफाधिकस्येश्वरशब्दस्य ग्रहणे न प्रयोजनम्। यद्यपि परस्येश्वरशब्दस्य ग्रहणे तन्निबन्धना व्याप्तिरस्ति, तथा-प्यनन्तरस्यैवेश्वरशब्दस्य ग्रहणं भविष्यति, न परस्य; कथम्? ज्ञापकात्, यदयं 'कृन्मेजन्तः' इति कृतो मान्तस्यैजन्तस्याव्ययसंज्ञां शास्ति तज्ज्ञापयति—अनन्तरस्ये-श्वरशब्दस्य ग्रहणम्, नेतरस्येति; अन्यथा हि णमुलादीनां निपातत्वादेवाव्ययसंज्ञा सिद्धेति 'कृन्मेजन्तः' इति वचनमनर्थकं स्यात्, नैतदस्ति ज्ञापकम्; यस्माद् 'ईश्वरे तोसुन्कसुनौ' इत्यस्मात् परोऽपि कृदेजन्तो मान्तश्चास्ति। 'कृत्यार्थे तवैकेन्केन्यत्वनः' आभीक्ष्ण्ये णमुल् च' इत्येवमादिः। तत् कथं 'कृन्मेजन्तः' इत्येतज् ज्ञापकं स्यात्? एवं तर्हि यदयमव्ययीभावस्य 'अव्ययीभावश्च' इत्यव्ययसंज्ञां शास्ति, तज्ज्ञापयति—

## चादयोऽसत्त्वे ॥ ५७ ॥

चादयो निपातसंज्ञा भवन्ति, न चेत्सत्त्वे वर्तन्ते । प्रसज्यप्रति-

पदमञ्जरी

लोक एवातिवर्त्तते; यतो द्वितीयमप्युदकान्तं स्नेहातिशयादनुव्रज्य निवर्तन्ते तस्माद्वीश्वरादित्युच्यते वीश्वरान्मा भूदिति स्थितम् । ननु च 'न लोकाव्यय' इत्यत्र लोकादीनामव्ययत्वादेव षष्ठीप्रतिषेधे सिद्धे पुनरुपादानं ज्ञापकं भविष्यति–मनन्तरस्य ग्रहणमिति, नैतदस्ति; अव्ययसंज्ञाया एवाभावं ज्ञापयेत्, निपातसंज्ञा तु स्यादेव; ततश्च चिकीर्ष्वर्थं इत्यादौ 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा स्यात् । *प्रोथमिति* । पर्याप्तमित्यर्थः । 'प्रोथ पर्याप्तौ', पचाद्यचि क्रियाविशेषणत्वान्नपुंसकत्वम् ॥

*चादयोऽसत्त्वे ॥ न चेत्सत्त्वे वर्त्तत इति* । सत्त्वे चेद् वर्तते तदा संज्ञा न भवतीत्यर्थस्तदाह–*प्रसज्यप्रतिषेधोऽयमिति* । अथ पर्युदासे को दोषः ? पशु-

न्यासः

अनन्तरो य ईश्वरशब्दस्तस्य ग्रहणमिति । अन्यथा हि 'अव्ययीभावश्च' इत्येतदपार्थकं स्यात् ; निपातत्वादेवाव्ययीभावस्याव्ययसंज्ञायाः सिद्धत्वात् ।

अस्यापि ज्ञापकतामपाकर्त्तुमाह–-समासेष्वव्ययीभाव इति । सर्वेषां समासानां निपातत्वादव्ययसंज्ञायां प्राप्तायाम् 'अव्ययीभावश्च' इत्येतद्वचनं नियमार्थं स्यात्–समासेषु तत्पुरुषादिषु मध्येऽव्ययीभाव एवाव्ययसंज्ञो भवति, नान्य इति । एवं तर्हि लौकिकन्यायादनन्तरस्यैवेश्वरशब्दस्य ग्रहणं भविष्यति । लोके हि 'ओदकान्तं प्रियं प्रोथमनुव्रजेत्' इति य एवानन्तर उदकान्तस्तमेव गत्वा तत एव बान्धवा निवर्त्तन्ते, न व्यवहितात् । तस्मादिहाप्यनेनैव न्यायेनानन्तरादेवेश्वरशब्दान्निपातसंज्ञा निवर्त्तिष्यत इत्यत आह–-लौकिकं चातिवर्त्तत इति । लौकिकमपि न्यायं लोकोऽतिक्रम्य वर्त्तते, यस्मात् द्वितीयमप्युदकान्तं स्नेहात् कथाप्रसङ्गाद् वा गत्वा निवर्त्तन्ते बान्धवाः। तदेवं रेफाधिक ईश्वरशब्द उच्चार्यते। तेन वीश्वरान् मा भूदिति स्थितमेतत्।

चादयोऽसत्त्वे ॥ असत्त्व इति । पर्युदासोऽयं वा स्यात्, प्रसज्यप्रतिषेधो वा ? तत्र यद्ययं पर्युदासः स्यात्, तदा सत्त्वादन्यत्र वर्त्तमानाश्चादयो निपातसंज्ञका भवन्तीत्येषः सूत्रार्थः स्यात् । ततश्च पशुशब्दस्य चादिपरिपठितस्य जातिव्यवच्छिन्ने द्रव्ये वर्त्तमानस्य निपातसंज्ञा स्यात् । यो हि जातिविशिष्टे द्रव्ये वर्त्तते, स जातिद्रव्यसमुदायात्मकमर्थमाह । यश्चैवंविधोऽर्थः स द्रव्यात् केवलादन्यो भवति । निपातसंज्ञायां सत्यां पशुरिति सविभक्तिकस्य श्रवणं न स्यात् । प्रसज्यप्रतिषेधे त्वेष दोषो न भवति। तत्र हि यत्र द्रव्यगन्धोऽप्यस्ति तत्र सर्वत्र प्रतिषेधेन भवितव्यम् । अस्ति चेह द्रव्यगन्धः । पशुत्वजात्याश्रितस्य द्रव्यस्यापि पशुशब्देनाभिधानात् । तस्मात् प्रसज्यप्रतिषेध एवायं युक्त इत्यालोच्याह–-प्रसज्यप्रतिषेधोऽयमिति । क्व तर्हि वर्त्तमानः

षेधोऽयम्। सत्त्वम्' इति द्रव्यमुच्यते।

च। वा। ह। अह। एव। एवम्। नूनम्। शश्वत्। युगपत्। सूपत्। कूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। यत्र। नह। हन्त। माकिम्। नकिम्। माङ्। माङो ङकारो विशेषणार्थः—'माङि लुङ्' इति, इह न भवति—मा भवतु, मा भविष्यति। नञ्। यावत्।

पदमञ्जरी

शब्दोऽत्र पठ्यते स जातिविशिष्टे द्रव्ये वर्तते, तस्य निपातत्वं स्यात्, जातिद्रव्यसमुदायरूपो ह्यर्थः केवलादन्यो भवति; तथा प्रादय इत्यत्र विप्रातीति विप्रः, 'आतश्चोपसर्गे' इति कः। अत्र प्रशब्दः क्रियाविशिष्टे द्रव्ये वर्तते। तत्र क्रियाद्रव्यसमुदायस्य द्रव्यादन्यत्वान्निपातत्वे सत्यव्ययसंज्ञायां तदन्तविधेरभ्युपगमात् विप्रशब्दस्याव्ययसंज्ञा स्यात्, प्रसज्यप्रतिषेधे तु यत्र द्रव्यगन्धस्तत्र सर्वत्र प्रतिषेधो भवति। क तर्हि वर्तमानः पशुशब्दोऽसत्त्ववचनो भवति ? दृश्यर्थे, लोधं नयन्ति पशु मन्यमाना इत्यत्र दृश्यर्थेन मननं विशेष्यते—दर्शनमेतन्मननम्, सम्यक् मन्यमाना इत्यर्थः। सत्त्वशब्दोऽयं सतो भावः सत्त्वमिति सत्ताजातिवचनो गृह्यत इति भ्रान्तिमपनयति—*सत्त्वमिति च द्रव्यमुच्यते इति*। इदं तदिति सर्वनामपरामर्शयोग्यं वस्तु द्रव्यमुच्यते। उक्तञ्च—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते।
द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः॥ इति।

स्वार्थेनेति शेषः। सिद्धरूपो योऽर्थः स्वार्थेन विशेष्यतया विवक्षितस्तद् द्रव्यमित्यर्थः। उक्तं च—

स्वार्थस्य यत्र विश्रान्तिर्वाच्यं द्रव्यं तदुच्यते। इति।

एवं च कृत्वा—सीदति, निर्विशते यत्र जात्यादिकं शब्दप्रवृत्तिनिमित्तं

न्यासः

पशुशब्दोऽसत्त्ववचनो भवति ? यत्र वृत्तौ निपातसंज्ञां लभते दृश्यर्थे—यथा, लोधं नयन्ति पशु मन्यमाना इति[1]। अत्र दृश्यर्थेन पशुशब्देन मननं विशिष्यते। दर्शनमेतन्मननम्, सम्यग्ज्ञानमित्यर्थः। सत्त्वशब्दोऽयमिह सत्तायां वर्तत इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—सत्त्वमिति च द्रव्यमुच्यत इति। चशब्दोऽवधारणे। द्रव्यमेव न सत्तेत्यर्थः। यदि ह्यत्र सत्त्वशब्देन सत्तोच्यते, प्रतिषेधोऽ-

---

१. पशु सम्यगित्यर्थः। लोधमनवगतम्। पशु मन्यमानाः सम्यग्ज्ञात्वेत्यर्थः।

• निरुक्ते तु 'लुब्धमृषिं नयन्ति पशुं मन्यमानाः' इति सानुस्वारपाठात् पशुशब्दः सत्त्ववाची।

तावत् । त्वा । त्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । वषट् । स्वधा । ओम् । किल । तथा । अथ । सु । स्म । अस्मि । अ । इ । उ । ऋ । लृ । ए । ऐ । ओ । औ । अम् । तक् । उञ् । उकञ् । वेलायाम् । मात्रायाम् । यथा । यत् । यम् । तत् । किम् । पुरा । अद्धा । धिक् । हाहा । हे । है । प्याट् । पाट् । थाट् । अहो । उताहो ।

### पदमञ्जरी

विशेषणभावेनेति सत्त्वं द्रव्यम् । सदेरौणादिकस्त्वप्रत्ययः 'ताभ्यामन्यत्रोणादयः' इत्यधिकरणसाधनः । *चणिति* पठ्यते, स चेदर्थे वर्तते, णकारश्चणकच्चिद्यत्रयुक्तमिति विशेषणार्थः । *नञो* ञकारः 'नलोपो नञः' इति विशेषणार्थः । नलोपो नस्येत्युच्यमाने वामनपुत्रः—अत्रापि प्राप्नोति ? पाक्षिक एष दोषः; 'अलुगुत्तरपदे' इति वर्तते, तत्र यदोत्तरपदेनाक्षिप्तं पूर्वपदं नस्य विशेषणम्, तदा पूर्वपदभूतस्य नस्य लोप इत्युच्यमाने नैवात्र प्राप्नोति, नशब्देन पूर्वपदे विशेष्यमाणे तदन्तविधिसद्भावादत्रापि स्यात् । अथास्मिन्पक्षे 'नञः' इत्युच्यमानेऽपि स्त्रैणपुत्र इत्यत्र नञः कस्मान्न भवति ? अतुल्यत्वात्प्रत्ययस्य ञकारो वृद्धिस्वरयोश्चरितार्थः, निपातस्य त्वचरितार्थः । *तथेति* पठ्यते, सोऽव्युत्पन्नः समुच्चये वर्तते, तस्य तु थालन्तस्य लित्स्वरेणाद्युदात्तत्वं सिद्धम् । अव्ययत्वमपि 'तद्धितश्चासर्वविभक्तिः' इत्येव सिद्धम् । नन्वव्युत्पन्नस्यापि विभक्तिप्रतिरूपका इत्येव सिद्धम्, सत्यम्; प्रपञ्चार्थः पाठः । एवं *वेलायाम्, मात्रायामित्यादेरपि* ।

### न्यासः

नर्थकः स्यात् ? न हि चादिषु मध्ये शब्दः सत्तावाची कश्चिदस्ति । तस्माद् द्रव्यमेवोच्यते । इदं तर्हि सर्वनामप्रत्यवमर्शयोग्यो योऽर्थस्तद् द्रव्यमिति । तथा चोक्तम्—

> वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।
> द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥ इति ।

भेद्यत्वेन विशेष्यत्वेनेत्यर्थः । अत एवावसीदति यत्र गुणो विशेषणभावेनेति सत्त्वं तद् द्रव्यमुच्यते ।

चणिति पठ्यते । तस्य णकारो विशेषणार्थः 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' इति, स तु चेच्छब्दस्यार्थे वर्तते ।

यत्रेति पठ्यते । तस्य 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा सिद्धैव । 'निपातैर्यद्यदिहन्त' इति विशेषणार्थं निपातसंज्ञोच्यते । असति निपातत्वे 'त्रैङ् पालने' यं त्रायत इति यत्र इत्यस्य 'आतोऽनुपसर्गे कः' इति कप्रत्ययान्तस्य ग्रहणं स्यात् ।

हो । तुम् । तथाहि । खलु । आम् । आहो । अथो । ननु । मन्ये । मिथ्या । असि । ब्रूहि । तु । नु । इति । इव । वत् । चन । बत । इह । आम् । शम् । कम् । अनुकम् । नहिकम् । हिकम् । सुकम् । सत्यम् । ऋतम्[1] । श्रद्धा । इद्धा । मुधा । नोचेत् । नचेत् । नहि । जातु । कथम् । कुतः । कुत्र । अव । अनु । हाहौ । हैहा । ईहा । आहोस्वित् । छम्बट् । खम् । दिष्ट्या । पशु । वट् । सह । आनुषक् । अङ्ग । फट् । ताजक् । अये । अरे । चटु । बाट् । कुम् । खुम् । घुम् । हुम् । आईम् । शीम् । सीम् । वै[2] ।

न्यासः

नञिति पठ्यते, नञो ञकारः 'नलोपो नञः' इति विशेषणार्थः । 'नलोपो नस्य' इत्युच्यमाने पामनपुत्र इत्यत्रापि स्याद्, यदि तत्र 'अलुगुत्तरपदे' इत्युत्तरपदग्रहणसामर्थ्यलब्धं पूर्वपदं नशब्देन विशेष्यते—नान्तस्य पूर्वपदस्येति । अथ तु पूर्वपदेन नशब्दो विशेष्यते—पूर्वपदस्य नस्येत्यतोऽसत्यपि ञकारे न भवति पामनपुत्र इत्यत्र नलोप इति । न हि तर्हि नशब्दः पूर्वपदम्, किं तर्हि ? पामनशब्दः । अथ क्रियमाणेऽपि ञकारेऽनुबन्धे स्त्रैणपुत्र इत्यत्र कस्मान्न भवति ? ञकारस्य वृद्धौ प्रत्ययसम्बन्धिनश्चरितार्थत्वात् । निपातसम्बन्धिनस्तु न क्वचिच्चरितार्थत्वम् । अतस्तेन प्रत्ययसम्बन्धिना ञकारेण तु तुल्यमाख्यातुं न शक्यत इति न भवति ।

तथेति । यः 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञकः थाल्प्रत्ययान्तस्तथाशब्दः, नेह तस्येदं ग्रहणम्, तस्य 'तद्धितश्च' इत्यनेनैवाव्ययसंज्ञायाः सिद्धत्वात् । आद्युदात्तत्वञ्च लित्स्वरेण । कस्य तर्हि ग्रहणम् ? तत्सदृशस्याव्युत्पन्नस्य । ननु च तस्यापि विभक्तिस्वरप्रतिरूपकाश्चेत्यनेनैव सिद्धं निपातत्वम्, सत्यमेतत्; तस्यैवायं प्रपञ्चः ।

यथातथाशब्दस्य ग्रहणं तस्यैव प्रपञ्चः ।

अथ वेलायां मात्रायां यथाऽस्ति कथं कुत इत्येतेषामपि ग्रहणं तस्यैव प्रपञ्चः । विभक्तिप्रतिरूपकत्वात् ।

मन्ये ब्रूहीति । आद्युदात्तार्थमुभयोः पाठः । मन्य इति दिवादिः कर्मण्यात्मनेपदम् । अन्तोदात्तः प्राप्तो यक्स्वरेण । ब्रूहीति च प्रत्ययस्वरेण ।

---

१. ऋतमित्येतदुत्तरम् "वाकिर्, नकिर्, आङ्, "अ, मा, नो, ना, प्रतिषेधे," उत, दह," इत्येते क्वचित् पुस्तके दृश्यन्ते ।

२. त्वै, तुवे, नुवै, न्वै, अध, अधस्, स्मि, अच्छ, अदल, दह, हे हे, है है, नौ, मा, आस्, शस्, शुकम्, सम्, वव, वात्, ङिकम्, हिनुक्, वशम्, शिकम्, श्चकम्, सनुकम्, नुकम्, अन्त, यौ, सुक्, माजक्, अले, वद्, वाद्, कीम्—एतेऽधिकाः पुस्तकान्तरेषु ।

उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाताः। उपसर्गप्रतिरूपकाः—

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते॥

'अच उपसर्गात्तः' इति तत्वं न भवति। दुर्नीतम्। दुर्नयः। दुर्निर्णयः। 'उपसर्गात्' इति णत्वं न भवति।

असत्त्व इति किम्? पशुर्वै पुरुषः। पशुः पुरोडाशः।

निपातप्रदेशाः—'स्वरादिनिपातमव्ययम्' इत्येवमादयः॥

## प्रादयः॥ ५८॥

प्रादयोऽसत्त्वे निपातसंज्ञा भवन्ति।

प्र। परा। अप। सम्। अनु। अव। निस्। निर्। दुस्। दुर्। वि। आङ्। नि। अधि। अपि। अति। सु। उत्। अभि। प्रति। परि। उप।

### पदमञ्जरी

*स्वरप्रतिरूपका इति*। ऋति ऋ वा वचनमित्यादयः, तेषां निपातसंज्ञाविधानद्वारेण सद्भाव एव प्रतिपाद्यते, न पुनरेषां निपातत्वे किञ्चित्प्रयोजनमस्तीति॥

*प्रादयः*॥ अयं योग उत्तरस्माद्विभज्यते, पूर्वस्माच्च; यदि पुनः 'प्रादय उपसर्गाः क्रियायोगे' इत्युच्यते, नैवं शक्यमित्याह—*पृथग्योगकरणमिति*। उत्तरस्या उपसर्गसंज्ञाया एव 'क्रियायोगे' इति विशेषणं यथा स्यात्, निपातसंज्ञायां मा भूदित्येवमर्थमुत्तरस्माद् योगादस्य विभाग इत्यर्थः। अथ वा—चादिष्वेव

### न्यासः

विभक्तिप्रतिरूपकाश्च निपाता उपाजेऽन्वाजे इत्येवमादयः। स्वरप्रतिरूपका अचो ये न भवन्त्यच्सदृशाः। तथाच वक्ष्यति—'ऋतिर्ऋर्वा वचनं कर्तव्यम्। लृतिलृ र्वा वचनम्' इति एवञ्जातीयकानां निपातसंज्ञाद्वारेण सत्त्वमेवाख्यायते।

पशुर्वै पुरुषः, पशुः पुरोडाश इति। अत्र पशुशब्दः पुरुषे पुरोडाशे च सत्त्वे वर्तत इति न भवत्येव निपातसंज्ञा।

प्रादयः॥ अथ किमर्थं पृथग्योगकरणम्? न चादिष्वेव प्रादयः पठ्येरन्नित्याह—पृथग्योगकरणमित्यादि। उत्तरसंज्ञोत्तरसूत्रे कृता संज्ञोपसर्गसंज्ञा। तस्या विशेषणं व्यवच्छेदः प्रादिभ्योऽन्यस्माद्व्यावर्तनमुत्तरसंज्ञाविशेषणम्। तदर्थः प्रयोजनं यस्य

पृथग्योगकरणमुत्तरसंज्ञाविशेषणार्थम् । 'उपसर्गाः क्रियायोगे' इति चादीनामुपसर्गसंज्ञा मा भूत् । असत्त्व इत्येव—परा जयन्ति सेनाः ॥

उपसर्गाः क्रियायोगे ॥ ५९ ॥

प्रादयः क्रियायोगे उपसर्गसंज्ञा भवन्ति । प्रणयति, परिणयति । प्रणायकः, परिणायकः ।

क्रियायोग इति किम्? प्रगतो नायकोऽस्माद्देशात् प्रनायको देशः ।

पदमञ्जरी

प्रादीनपि पठित्वा पूर्वस्माद्योगात् किमर्थं विभज्यते, तत्राप्याह—*उपसर्गाः क्रियायोग इति* । *चादीनामिति* । चलोपोऽत्र द्रष्टव्य इति च—चादीनामिति । *परा जयन्ति सेना इति* । परा उत्कृष्टाः परदेशस्थिता वा द्रव्यत्वात्तत्र वर्तमानस्य पराशब्दस्य न भवति, यत्र त्वेकवचनं पठ्यते—परा जयति सेनेति, तत्र रूपोदाहरणं द्रष्टव्यम्; हल्ङ्याबिति सुलोपात्, पराशब्दस्याद्युदात्तत्वाच्च ॥

*उपसर्गाः क्रियायोगे* ॥ *क्रियायोगे इति* सहयोगे तृतीया, निपातनात् समासः, 'कर्तृकरणे कृता' इति बहुलवचनाद्वा । यद्वा—क्रियया करणभूतया प्रादीनां धातुभिर्योगात् करणे तृतीयया एव समासः । *प्रणयतीति* । उपसर्गादसमासेऽपि इति णत्वम् । *प्रनायक इति* । नन्वत्रापि गमिक्रियायोगोऽस्त्येव, सत्यम्; प्रादयः पुनरेवमात्मकाः, यदुत श्रुतायां क्रियायां तामेव विशिषन्ति, अश्रुतायां तु ससाधनां क्रियामाक्षिपन्ति । तत्र क्रियायोगग्रहणसामर्थ्याद् यत्क्रियायुक्ताः प्रादयस्तं प्रत्युपसर्गसंज्ञा भवतीत्ययमर्थो भवति । अत्र च यत्क्रियायुक्तः प्रादिः स गमिर्न प्रयुज्यते, यश्च प्रयुज्यते न तत्क्रियायुक्त इति नास्ति णत्वप्रसङ्गः ।

न्यासः

तदुत्तरसंज्ञाविशेषणार्थम् । एतदेव स्पष्टीकर्तुमाह—चादीनामुपसर्गसंज्ञा मा भूदिति । एकयोगे हि सति यथा प्रादीनामुपसर्गसंज्ञा भवति तथा चादीनामपि स्यात् । अतः प्रादीनामेवोपसर्गसंज्ञा यथा स्याच् चादीनां मा भूदित्येवमर्थं पृथग् योगः क्रियते । पराः सेना इति । सेनाया द्रव्यत्वात् तत्र वर्तमानस्य पराशब्दस्येह ग्रहणं न भवति । परा उत्कृष्टाः परदेशस्थिता वा । यत्र त्वेकवचनं पठ्यते—परा सेनेति, तत्र रूपोदाहरणं वेदितव्यम् । द्विवचनबहुवचनयोस्तु निपातत्वादव्ययसंज्ञायां सत्यां विभक्तेर्लुक्स्यात् ।

उपसर्गाः क्रियायोगे ॥ प्रणयतीति । प्रशब्दस्योपसर्गत्वाद् 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम् ।

प्रनायको देश इति । अत्र नयनक्रियया प्रशब्दस्य योगो नास्तीत्युपसर्गसंज्ञा न भवति । ननु चात्रापि गमिक्रियया योगोऽस्त्येवेति स्यादेव तस्योपसर्गसंज्ञा, नैतदस्ति;

*** मरुच्छब्दस्य चोपसंख्यानं कर्तव्यम् *। मरुद्भिर्दत्तो मरुत्तः। संज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि 'अच उपसर्गात्तः' इति तत्त्वं भवति।**

पदमञ्जरी

*मरुच्छब्दस्येति* । उपसर्गसंज्ञैवेष्यते, न निपातसंज्ञा । तस्यां हि सत्यां निपाताद्युदात्तत्वम् 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरेण स्यात्, अन्तोदात्तश्च मरुत्तशब्द इष्यते। ननूपसर्गसंज्ञायामपि 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वं स्यादेव, न; नानेनापूर्वमाद्युदात्तत्वं विधीयते, किं तर्हि ? 'निपाताः' इत्येव सिद्धेऽभेः प्रतिषेधार्थमेतत्। किं च निपातसंज्ञायामव्ययसंज्ञा स्यात्। अथ 'उपसर्गे घोः किः' 'आतश्चोपसर्गे' इत्येतौ विधी कस्मान्न भवतः ? अनभिधानात्।

*मरुत्त इति*। मरुच्छब्दतकारस्य 'अनचि च' इति द्विर्वचने 'झरो झरि' इति मध्यमस्य मध्यमयोर्मध्यमानां वा लोपे त्रैरूप्यं भवति, कथं पुनरत्र तत्वम्, यावतायमनजन्त इत्यत आह—*संज्ञाविधानसामर्थ्यादिति*। उक्तः प्रयोजनान्तराभावः। एवं तु मरुन्नयतीति तकारव्यवायेऽपि णत्वं प्राप्नोति तस्मात्तत्वविधावेवेष्यते।

न्यासः

क्रियायोगग्रहणं ह्येवमनर्थकं स्यात्। कथम् ? प्रादीनां क्रियायोगाव्यभिचारात्; तस्मात् क्रियायोगग्रहणसामर्थ्याद् यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्ति, नान्यं प्रति। न चेह नयनक्रियया युक्तः प्रशब्दः, किं तर्हि ? गमिक्रियेति नयतिं प्रत्युपसर्गसंज्ञको न भवति।

मरुच्छब्दस्योपसंख्यानमिति। तत्वविधाविति शेषः; अन्यथा हि 'निपाता आद्युदात्ताः' 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वमपि स्यात्। अन्तोदात्तश्चेष्यते मरुच्छब्दः। उपसंख्यानशब्दस्य प्रतिपादनमर्थः, मरुच्छब्दस्योपसर्गसंज्ञायाः प्रतिपादनं कर्तव्यमित्यर्थः। तत्रेदं प्रतिपादनम्—'उपसर्गाः' इति योगविभागः क्रियते। अत्र च 'प्रादयः' इति नाभिसम्बध्यते। तेन मरुच्छब्दस्य तत्वविधावुपसर्गसंज्ञा भवतीति। अत एव योगविभागाच्छ्रच्छब्दस्याङ्विधावन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा भवतीति वेदितव्यम्। योगविभागस्येदं लिङ्गम् 'प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः', 'तिरोऽन्तर्धौ' इति च निर्देशः। ततः 'क्रियायोगे' इति द्वितीयो योगः। अत्र च 'प्रादयः' इति सम्बध्यते। किमर्थमिदम् ? पूर्वेणैव सिद्धमिति पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थम्, तेन नातिप्रसङ्गः। प्रादीनामक्रियायोग उपसर्गसंज्ञा मा भूदित्येवमर्थञ्च। मरुत्त इति। 'अच उपसर्गात् तः' इति क्तप्रत्यये कृते द्वितकारनिर्देशाद्दातेः सर्वादेशः। ननु च सत्यामुपसर्गसंज्ञायां मरुच्छब्दस्यानजन्तत्वात् तत्वेन न भवितव्यमित्यत आह—संज्ञाविधानसामर्थ्यादित्यादि। यथा ह्युपसरज इत्यत्र डित्करणसामर्थ्या-

* श्रच्छब्दस्योपसंख्यानम् * । 'आतश्चोपसर्गे' इत्यङ् भवति—श्रद्धा ।

उपसर्गप्रदेशाः—'उपसर्गे घोः किः' इत्येवमादयः ॥

गतिश्च ॥ ६० ॥

गतिसंज्ञकाश्च प्रादयो भवन्ति क्रियायोगे । प्रकृत्य । प्रकृतम् । यत्प्रकरोति ।

योगविभाग उत्तरार्थः । उत्तरत्र गतिसंज्ञैव यथा स्यात्, उप-

पदमञ्जरी

*श्रच्छब्दस्येति* । अङ्विधावेवेष्यते, किप्रत्ययो हि न भवति, तदाह—*आतश्चोपसर्गे इति* । भिदादिपाठात् 'प्रज्ञाश्रद्धार्चा' इति निपातनाद्वा सिद्धम् ॥

*गतिश्च* ॥ 'गतिरनन्तरः' इति पुंल्लिङ्गनिर्देशाद् गम्यत इति गतिः, 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच्, निपातनाच्च 'न क्तिचि दीर्घश्च' इति न भवति । *प्रकृत्येति* । अत्र गतित्वात् कृत्स्वरो भवति, समासस्तु प्रादित्वादेव सिद्धः । प्रादिभ्योऽन्यत्र समासोऽपि प्रयोजनम् । *प्रकृतमिति* । 'गतिरनन्तरः' इति पूर्वपदप्रकृतिस्वरः । *यत् प्रकरोतीति* । तिङ्लक्षणस्य निघातस्य 'निपातैर्यद्यदि' इति निषेधे तिपः पित्त्वादनुदात्तत्वम्, विकरणस्य प्रत्ययस्वरो धातोः शेषनिघातः, 'तिङि चोदात्तवति' इति प्रशब्दस्यानुदात्तत्वम् । एतच्च प्रयोजनचतुष्टयं गतिसंज्ञाप्रकरणे सर्वत्र द्रष्टव्यम् ।

न्यासः

दमस्यापि टिलोपो भवति, तथेहाप्यनजन्तादपि तत्वं भविष्यति; अन्यथा हीदं वचनमपार्थकं स्यात् । मरुच्छब्दस्योपसर्गसंज्ञाया अन्यकार्याभावादिति भावः ।

श्रच्छब्दस्योपसंख्यानमिति । अत्राप्युपसंख्यानशब्दस्य स एवार्थः । प्रतिपादनमपि तदेव । ननु च भिदादिपाठादेव हि श्रद्धेति सिद्धम्, तत् कथं तत्सिद्धये श्रच्छब्दस्योपसर्गसंज्ञा क्रियते ? एवं मन्यते—अनार्षस्तत्र पाठ इति ।

गतिश्च ॥ प्रकृत्येति । गतिसंज्ञायां सत्याम् 'कुगतिप्रादयः' इति समासः । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् । प्रकृतमिति । 'क्ते च' इत्यनुवर्तमाने 'गतिरनन्तरः' इति प्रकृतिस्वरेणाद्युदात्तः प्रशब्दः । यद् प्रकरोतीति । प्रशब्दादनन्तरस्य 'तिङ्ङतिङः' इति निघाते प्राप्ते 'निपातैर्यद्यदि' इत्यादिना प्रतिषेधे तिपः पित्त्वादनुदात्तत्वम् । 'सति शिष्टस्वरस्य बलीयस्त्वमन्यत्र विकरणस्वरेभ्यः' इति विकरणस्वरस्य प्रत्ययाद्युदात्तत्वं न भवति । करोतेरेव तु भवति—'धातोः' इति । शेषमनुदात्तं

सर्गसंज्ञा मा भूत्। ऊरीस्यादित्यत्र 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वं प्रसज्येत।

चकारः संज्ञासमावेशार्थः। प्रणीतम्। अभिषिक्तम्। 'गतिरनन्तरः' इति स्वरः, 'उपसर्गात्' इति णत्वषत्वे च भवतः।

* कारिकाशब्दस्योपसंख्यानम् *। कारिकाकृत्य। कारिकाकृतम्। यत्कारिकाकरोति।

### पदमञ्जरी

*चकारः संज्ञासमावेशार्थ इति*। अन्यथैकसंज्ञाधिकारादेकत्र संज्ञाद्वयविधानाच्च पर्यायः स्यादिति भावः। *कारिकाशब्दस्येति*। कारिका क्रिया मर्यादास्थितिरित्यर्थः। यत्न इत्यपरे. धात्वर्थनिर्देश इति ण्वुल्। यस्तु कर्तरि कारिकाशब्दः कारिका दासीति, यश्च श्लोकवाची—तयोर्ग्रहणं न भवति; क्रियायोगग्रहणेन कारिकाशब्दस्य विशेषणात् क्रियावृत्तेर्ग्रहणात्। *यत्कारिकां करोतीति*। निपातत्वादव्ययत्वे सति विभक्तेर्लुक्।

### न्यासः

भवति। प्रशब्दस्य 'उपसर्गाश्चाभिवर्जम्' इत्याद्युदात्तत्वे प्राप्ते 'गतिर्गतौ' इति निघातेऽनुवर्तमाने 'तिङि चोदात्तवति' इति करोतिशब्दे तिङन्त उदात्तवति परतोऽनुदात्तत्वं भवति। तत्र हि 'पूजनात् पूजितमनुदात्तं काष्ठादिभ्यः' इत्यतोऽनुदात्तमिति वर्तते। एतच्च प्रयोजनत्रयमुत्तरत्र गतिसंज्ञाया वेदितव्यम्।

अथ किमर्थो योगविभागः, न गतिग्रहणं पूर्वयोग एव क्रियते ? इत्यत आह—योगविभाग उत्तरार्थ इति। उत्तरत्रेत्यादिना योगविभागस्योत्तरार्थतां दर्शयति। यद्युत्तरत्राप्युपसर्गसंज्ञा स्यात्, तदा किं स्यादित्यत आह—ऊरीस्यादित्यत्रेत्यादि।

चकारः संज्ञासमावेशार्थ इति। असति चकार एकसंज्ञाधिकारादेकत्र संज्ञाद्वयस्य विधानात् पर्यायः स्यात्, न समावेशः। प्रणीतमित्यादिना संज्ञासमावेशस्य फलं दर्शयति। 'गतिरनन्तरः' इति स्वर इति। उदाहरणद्वयेऽपि उपसर्गादिति णत्वषत्वे भवत इति। प्रणीतमिति। 'उपसर्गादसमासेऽपि णोपदेशस्य' इति णत्वम्। अभिषिक्तमिति। 'उपसर्गात् सुनोति' इत्यादिना षत्वम्।

कारिकेत्यादि। धात्वर्थनिर्देश एतदुपसंख्यानं कर्त्तव्यम्। योऽन्यः कर्त्तरि कारिकाशब्दो ण्वुलन्तः, तस्य कारिकां कृत्वेत्येवं भवति। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—उत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् कारिकाशब्दस्य गतिसंज्ञा भवतीति।

* पुनश्चनसौ छन्दसि गतिसंज्ञौ भवत इति वक्तव्यम् *। पुनरुत्स्यूतं वासो देयम्। 'गतिर्गतौ' इति निघातो भवति। चनोहितः। 'गतिरनन्तरः' इति स्वरः।

गतिप्रदेशाः—'कुगतिप्रादयः' इत्येवमादयः ॥

## ऊर्यादिच्विडाचश्च ॥ ६१ ॥

ऊर्यादयः शब्दाः च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञा भवन्ति। च्विडाचोः कृभ्वस्तियोगे विधानम्, तत्साहचर्यादूर्यादीनामपि तैरेव योगे गतिसंज्ञा विधीयते।

### पदमञ्जरी

*पुनरुत्स्यूतमिति*। गतित्वात्समासः। *'गतिर्गतौ' इति निघातो भवतीति*। यद्यप्यत्र 'प्रवृद्धादीनां च' इत्युत्तरपदान्तोदात्तत्वेन शेषनिघातः सिद्धः, तथापि परत्वादयमेव निघातो युक्त इति भावः। इह च *पुनराधेयमिति*। गतित्वात्समासे कृते कृदुत्तरपदप्रकृतिस्वरेण 'यतोऽनावः' इति धेयशब्द आद्युदात्तः। *चनोहित इति*। निपातत्वादाद्युदात्तस्य चनःशब्दस्य 'गतिरनन्तरः' इति प्रकृतिस्वरः ॥

*ऊर्यादिच्विडाचश्च* ॥ *च्व्यन्ता डाजन्ताश्चेति*। यद्यपि पदसंज्ञायामन्तग्रहणेन 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति ज्ञापितम्, तथापि 'क्रियायोगे' इत्यनुवृत्तेस्तदन्तग्रहणमिति भावः। न हि प्रत्ययमात्रस्य क्रियायोगः सम्भवति, स्वार्थिकत्वेन स्वयमनर्थकत्वात्, च्वेरश्रावित्वाच्च। *कृभ्वस्तियोग इति*। न केवलम्,

### न्यासः

पुनश्चनसावित्यादि। पुनश्चनःशब्दौ छन्दसि विषये गतिसंज्ञकौ च भवत इत्येतदर्थरूपं व्याख्येयमित्यर्थः। व्याख्यानं तूत्तरसूत्रे चकारस्यानुक्तसमुच्चयार्थतामाश्रित्य कर्त्तव्यम्। पुनरुत्स्यूतमिति। 'षिवु तन्तुसन्ताने', निष्ठा, उदित्त्वाद् 'उदितो वा' इति विभाषेट्त्वाद् 'यस्य विभाषा' इतीट्प्रतिषेधः, 'च्छ्वोः शूडनुनासिके च' इति वकारस्योठ्, यणादेशः। चनोहितमिति। 'दधातेर्हिः' इति हिरादेशः, 'गतिरनन्तरः' इति प्रकृतिस्वरेणाद्युदात्तत्वम्। चनःशब्दो हि 'निपाता आद्युदात्ता भवन्ति' इत्याद्युदात्तः।

ऊर्यादिच्विडाचश्च ॥ च्व्यन्ता डाजन्ताश्चेति। ननु च पदसंज्ञायामन्तग्रहणेन ज्ञापितम्—'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ति' इति, अतश्च्विडाचोरेव गतिसंज्ञया भवितव्यम्, तत् किमुच्यते—च्व्यन्ता डाजन्ताश्चेति ? एवं मन्यते—'क्रियायोगे' इति वर्त्तते, न च प्रत्ययमात्रस्य क्रियायोगः सम्भवति। तस्मात् क्रियायोगानुवृत्तिसामर्थ्यात् तदन्तस्यैव संज्ञा विज्ञायत इति भवत्येव तदन्तस्य संज्ञा। सा तु

ऊरीउररीशब्दावङ्गीकरणे विस्तारे च। उरीकृत्य, ऊरीकृतम्, यदूरीकरोति। उररीकृत्य, उररीकृतम्, यदुररीकरोति।

पापी। ताली। आताली। वेताली। धूसी। शकला। संशकला। ध्वंसकला। भ्रंशकला। एते शकलादयो हिंसायाम्। शकलाकृत्य। संशकलाकृत्य। ध्वंसकलाकृत्य। भ्रंशकलाकृत्य।

गुलुगुधा पीडार्थे। गुलुगुधाकृत्य।

सजूः सहार्थे। सजूःकृत्य।

फलू, फली, विक्ली, आक्ली—इति विकारे। फलूकृत्य। फलीकृत्य। विक्लीकृत्य। आक्लीकृत्य।

आलोष्टी, कराली, केवाली, शेवाली, वर्षाली, मस्मसा, मसमसा—एते हिंसायाम्।

वषट्। वौषट्। श्रौषट्। स्वाहा। स्वधा। बन्धा। प्रादुस्। श्रुत्। आविस्।

पदमञ्जरी

संज्ञाप्रयोगोऽप्यन्यत्र भवति, न हि भवति उरीसंपद्यते इति, श्रौषडादीनां स्वाहापर्यन्तानां चादिषु पाठाद् अक्रियायोगेऽपि निपातत्वम्। आविःशब्दस्य साक्षात्प्रभृतिषु पाठात् कृञो योगे विकल्पः, कृभ्वस्तियोगे त्वनेन नित्यम्। कथं तर्हि 'आविश्चक्षुषोऽभवदसाविव रागः,' 'अभवन् युगपद्विलोलजिह्वा युगलीढोभयसृ-

न्यासः

विशेषानुपादनाद् धातुमात्रेण योगे प्राप्नोतीत्यत आह—च्विडाचोरित्यादि। अभूततद्भावे कृभ्वस्तियोगे च्विर्विहितः। 'अव्यक्तानुकरणात्' इत्यादावपि सूत्रे कृभ्वस्तियोगस्यानुवृत्तेर्डाजपि तत्रैव विहितः। तेन च्विडाचोस्तावद् धात्वन्तरेण योगासम्भवात् कृभ्वस्तियोगे गतिसंज्ञाविधानम्। अतस्तत्साहचर्यादूर्यादीनामपि तैरेव योगे विधीयते। ऊर्यादिभ्यश्च्व्यर्थस्याप्रतीतेर्न शक्यन्ते ते च्व्यन्ता इति विज्ञातुम्। अतस्तेषां पृथग् ग्रहणम्। तामेव च तेभ्यश्च्व्यर्थस्याप्रतीतिमर्थान्तरप्रदर्शनेन प्रतिपादयितुमाह—ऊरी, उररीत्यादि। श्रौषडादीनां स्वधापर्यन्तानां चादिषु पाठादक्रियायोगेऽपि निपातसंज्ञा भवति। आविस्शब्दः साक्षात्प्रभृतिषु पठ्यते। तेन तस्य 'विभाषा

च्व्यन्ताः खल्वपि—शुक्लीकृत्य । शुक्लीकृतम् । यच्छुक्लीकरोति ।

डाच्—पटपटाकृत्य । पटपटाकृतम् । यत्पटपटाकरोति ॥

**अनुकरणं चानितिपरम् ॥ ६२ ॥**

इतिः परो यस्मादिति बहुव्रीहिः । अनुकरणमनितिपरं क्रियायोगे गतिसंज्ञं भवति । खाट्कृत्य । खाट्कृतम् । यत्खाट्करोति ।

अनितिपरमिति किम् ? खाडिति कृत्वा निरष्ठीवत् ॥

**आदरानादरयोः सदसती ॥ ६३ ॥**

प्रीत्यतिशयः = आदरः । परिभवौदासीन्यम् = अनादरः । आदरा-

पदमञ्जरी

कृधारभाविः' इति ? स्वतन्त्रा कवयः । *शुक्लीकृत्येति* । 'अस्य च्वौ' इतीत्वम् । *पटपटाशब्दः* 'वा क्यषः' इत्यत्र व्युत्पादितः ॥

*अनुकरणं चानितिपरम्* ॥ *इतिः परो यस्मादिति* । पञ्चमीसमासस्तु लक्षणाभावान्नाश्रितः । तेनेति खाट्कृत्येत्यत्र इतेः परत्वेऽपि भवति । *खाडिति कृत्वा निरष्ठीवदिति* । अत्रासति प्रतिषेधे गतिसंज्ञायां समासः स्यात्, धातोश्चानन्तरः प्रयोग इति रूपमेवैतन्न सिध्येत् । 'ष्ठिवु निरसने', 'ष्ठिवुक्लमुचमां शिति' इति दीर्घः । भूतकालोपन्यासः किमर्थः ? कस्यचित्कवेरयं प्रयोग उदाहृतः—

'चुम्बनसक्तः सोऽस्याः च्युतमूलं दशनमात्मनो वदने ।
जिह्वामूलस्पृष्टं खाडिति कृत्वा निरष्ठीवत् ॥'

*आदरानादरयोस्सदसती* ॥ *प्रीतिसंभ्रम इति* । प्रीतिपूर्विका प्रत्युत्थानादि-

न्यासः

कृञि' इति करोतियोगे विभाषा गतिसंज्ञा । शुक्लीकृत्येति । 'अस्य च्वौ' इतीत्वम् । पटपटाकृत्येति । 'वा क्यषः' इत्यत्र पटपटाशब्दो व्युत्पादितः ।

**अनुकरणं चानितिपरम्** ॥ अनितिपरमिति । अत्रेतिपरशब्द इतेः पर इति पञ्चमीति योगविभागात् तत्पुरुषो वा स्याद् ? इतिः परो यस्मादिति बहुव्रीहिर्वा ? तत्र यद्याद्यः पक्ष आश्रीयेत, तदेतिखाट्कृत्येत्यत्र प्रतिषेधः स्यात् ; इह तु न स्यात्—खाडिति कृत्वा आगत इति, अनिष्टश्चैतत् ; द्वितीये तु पक्ष एष दोषो न भवति, अतस्तमेवाश्रित्याह—इतिः परो यस्मादित्यादि । निरष्ठीवदिति । 'ष्ठिवु निरसने', 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधो वक्तव्यः' इति प्रतिषेधात् 'धात्वादेः षः सः' इति सत्वं न भवति । 'ष्ठिवुक्लमुचमां शिति' इति दीर्घत्वम् ।

**आदरानादरयोः सदसती** ॥ प्रीतिसम्भ्रम आदर इति । प्रीत्या सम्भ्रमः प्रीतिसम्भ्रमः, प्रीतिपूर्विका प्रत्युत्थानासनादिदानक्रियेत्यर्थः । परिभवौदासीन्यमिति ।

पदमञ्जरी

विषया त्वरेत्यर्थः । *परिभवौदासीन्यमिति* । अवज्ञया कर्तव्यं प्रत्युत्थानादिकं प्रत्युपेक्षेत्यर्थः । असदनादरग्रहणं किमर्थम् ? असत्कृत्येत्यत्रापि यथा स्यात् । मा भूदसच्छब्दस्य गतिसंज्ञा, सत्कृत्येत्यनेन नञ्समासो भविष्यति ? नैवं शक्यम्; सति शिष्टत्वात् कृदुत्तरपदप्रकृतिस्वरं बाधित्वा अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं स्याद् । असत्कृतमित्यत्र तु सत्कृतशब्दे 'गतिरनन्तरः' इति स्वरे प्रवृत्ते पश्चान्नञ्समासेऽपि तस्यैव स्वरः । असच्छब्दस्यापि कृतशब्देनापि समासे तस्य निपातत्वादाद्युदात्तस्य गतित्वात्प्रकृतिभावेऽपि स एव स्वर इति नास्ति विशेषः । इह च यदासत्करोतीत्यसच्छब्दस्य निघातो न स्याद्, अव्ययसंज्ञापि तस्य न स्यादित्यसच्छब्दस्यैव गतिनिपातसंज्ञे एषितव्ये । न चात्र सच्छब्देन तदन्तविधिर्लभ्यते; विशेष्यस्याभावात् ।

नन्वत्र सच्छब्दस्यैव संज्ञास्तु, कार्यप्रदेशेषु प्रकृतस्य तेन तदन्तविधिर्भविष्यति, अव्यसंज्ञायां तावदस्त्येव तदन्तविधिः--परमोच्चैरिति, यथा 'कुगतिप्रादयः' इत्यत्रापि सुबिति प्रवर्तते, सुपेत्येव निवृत्तम्, तद्गतिना विशेष्यते 'गतिरनन्तरः' इत्यत्र पूर्वपदम् 'गतिर्गतौ' इत्यत्रापि पदस्येति प्रकृतम् । भवतु तदन्तविधिना कार्यम्, अत्रादरावगतिस्तु कुतः ? असत्यनादरग्रहणे, न सदसदित्यादरनिषेधान्नैव शक्यम्, आदरप्रसङ्ग एव हि स्यात्, गुरुमसत्कृत्येति चाण्डालमसत्कृत्येत्यत्र न स्यात् । यथाऽब्राह्मण इति क्षत्रियादिरेवोच्यते, न लोष्टादिः, अनादर-

न्यासः

परिभवः=अवज्ञा । तिरस्कारः=औदासीन्यम् । कर्त्तव्यम् = प्रत्युत्थानासनादिदानं प्रत्युपेक्षा । परिभवेणौदासीन्यं परिभवौदासीन्यमिति, 'तृतीया' इति योगविभागात् समासः । अथ वा—परिभवश्चौदासीन्यञ्च परिभवौदासीन्यम् । अथ किमर्थमनादरग्रहणमसद्ग्रहणञ्च क्रियते ? नादरे सदित्येवोच्यते ? अथ कथमिदानीमनादरेऽसच्छब्दस्याव्ययसंज्ञा स्यात् ? कथञ्च समासादि कार्यम् ? तदन्तविधिनासच्छब्दस्यापि निपातसंज्ञायां गतिसंज्ञायाञ्च सत्यां सच्छब्दस्य निपातस्याव्ययसंज्ञा विधीयमानाऽव्ययसंज्ञायां तदन्तविधेरुपसंख्यानादसच्छब्दस्याप्यव्ययसंज्ञा भविष्यति । 'कुगतिप्रादयः' इत्यत्र च सुबन्तस्य प्रकृतत्वाद् गत्यन्तस्य सुबन्तस्य समासो विधीयमानोऽसच्छब्दस्यापि भविष्यति । 'गतिरनन्तरः' इत्यत्रापि पूर्वपदमित्यनुवर्त्तते । 'गतिर्गतौ' इत्यत्रापि पदस्येति । तेन गत्यन्तस्य पूर्वपदस्य प्रकृतिस्वरो विधीयमानस्तथा गत्यन्तस्य पदस्यानुदात्तो विधीयमानोऽसच्छब्दस्यापि भविष्यति; तस्यापि गत्यन्तत्वात् । भवतु तदन्तविधिना यथोक्तं कार्यम्, अनादरावगतिस्तु कथं स्याद् ? असत्यनादरग्रहणे न सदसदिति नञाऽऽदरप्रतिषेधात् । आदरश्चेत् प्रतिषिद्धः किमन्यदनादरात् स्यात् ? नैतद् युक्तमुच्यते; नञ्समासो हि तत्पुरुषः सदृशमेव कार्यं

नादरयोर्यथाक्रमं सदसच्छब्दौ गतिसंज्ञौ भवतः। सत्कृत्य, सत्कृतम्, यत्सत्करोति। असत्कृत्य, असत्कृतम्, यदसत्करोति।

आदरानादरयोरिति किम्? सत्कृत्वा काण्डं गतः। असत्कृत्वा काण्डं गतः॥

## भूषणेऽलम्॥ ६४॥

### पदमञ्जरी

ग्रहणे तु सति बहुव्रीहिर्विज्ञायते—अविद्यामानादरोऽनादर इति। बहुव्रीहिश्चात्यन्ताभावे, प्रसक्ताभावे, अप्रसक्ताभावे च भवतीति सर्वत्र संज्ञा सिध्यति, तस्मादनादरग्रहणं कर्तव्यम्। असद्ग्रहणं तु शक्यमकर्तुम्। आदरानादरयोः सदित्येवास्तु, तत्र यथा गोष्पदं सेवितेत्यत्रासेविते गोष्पदशब्दो न संभवतीत्यगोष्पदार्थमसेवितग्रहणम्; एवमनादरेऽपि सच्छब्दो न सम्भवतीत्यसच्छब्दार्थमनादरग्रहणं भविष्यति।

*सत्कृत्वा, असत्कृत्वेति*। शोभनवचनो विद्यमानवचनो वा सच्छब्दः, तद्विपरीतवचनोऽसच्छब्दः॥

### न्यासः

प्रतिपादयति, यथा—अब्राह्मणमानयेति। तत्रेह यद्यनादरग्रहणं न क्रियेत तदा सत्सदृशं यत् तदसद् यत्रादरप्रसङ्गस्तत्रैव स्यात्—गुरुमसत्कृत्य गतः। यत्र त्वप्रसक्त एवादरस्तत्र न स्यात्—भृत्यमसत्कृत्य गतः। अनादरग्रहणे तु सति बहुव्रीहिर्विज्ञायते—अविद्यमान आदरो यस्मिन्नित्यनादर इति। बहुव्रीहिश्चात्यन्ताभावे प्रसक्त्यभावे च भवतीति सर्वत्र संज्ञा सिध्यति। तस्मादनादरग्रहणं कर्तव्यम्। तस्मिंश्च क्रियमाणे सत्यसद्ग्रहणमपि कर्तव्यमेव। अन्यथा हि किमनादरग्रहणेन विशिष्येत—यस्यानादरे वर्त्तमानस्य गतिसंज्ञा विधीयते! न हि सच्छब्दस्यानादरे वृत्तिः सम्भवति। यद्यपि तस्य न सम्भवति तदन्तस्यासच्छब्दस्य सम्भवतीति चेद्, सत्यम्; सम्भवति, न तु तस्य गतिसंज्ञा लभ्यते, तदन्तविधेरभावात्। प्रकृते न हि तदन्तविधिर्भवति, न चेह किञ्चित् प्रकृतमस्ति; तस्मादसच्छब्दार्थमनादरग्रहणम्। यदि तु यथा 'गोष्पदं सेवितासेवितप्रमाणेषु' इत्यत्रासेविते गोष्पदशब्दो न सम्भवतीत्यगोष्पदशब्दार्थमसेवितग्रहणं विज्ञायते, तथेहापि सच्छब्दोऽनादरे न सम्भवतीत्यसच्छब्दार्थमनादरग्रहणं विज्ञायेत; तदा शक्यमसच्छब्दस्य ग्रहणमकर्तुम्। असद्ग्रहणं तु क्रियते तदा विस्पष्टार्थम्। सत्कृत्वाऽसत्कृत्येति। शोभनाशोभनार्थाविह सदसच्छब्दौ। विद्यमानाविद्यमानार्थौ वा॥

'अलम्' इति प्रतिषेधे सामर्थ्ये पर्याप्तौ भूषणे चेति विशेषण-मुपादीयते। भूषणे योऽलंशब्दः स गतिसंज्ञो भवति। अलंकृत्य, अलंकृतम्, यदलंकरोति।

भूषण इति किम्? अलं भुक्त्वा ओदनं गतः॥

**अन्तरपरिग्रहे॥ ६५॥**

अन्तःशब्दोऽपरिग्रहेऽर्थे गतिसंज्ञो भवति। परिग्रहः = स्वीकरणम्, तदभावे गतिसंज्ञा विधीयते। अन्तर्हत्य, अन्तर्हतम्, यदन्तर्हन्ति।

अपरिग्रह इति किम्? अन्तर्हत्वा मूषिकां श्येनो गतः। परिगृह्य गत इत्यर्थः।

* अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गसंज्ञा वक्तव्या *। अन्तर्द्धा। अन्तर्द्धिः। अन्तर्णयति॥

**कणेमनसी श्रद्धाप्रतीघाते॥ ६६॥**

**पदमञ्जरी**

भूषणेऽलम्॥ *अलमिति प्रतिषेध इत्यादि*। तद्यथा अलं—कृत्वा, अलं भोक्तुम्, अलं भुङ्क्ते, अलं करोति कन्यामिति॥

*अन्तरपरिग्रहे*॥ अन्तर्हत्वा, मध्ये हत्वेत्यर्थः। *अन्तःशब्दस्येत्यादि*। उपसर्ग-संज्ञायामेवैतन्नोक्तम्—अन्तःशब्दप्रसङ्गेन वक्ष्यामीति। यदा चोपसर्गसंज्ञोच्यते; तदान्तर्णयतीत्यादिवदन्तर्हण्यात्, अन्तर्हणनमित्यादावपि 'हन्तेरत्पूर्वस्य' इति णत्वं सिद्धम्। अन्तरयणमित्यत्रापि 'कृत्यचः' इत्येव सिद्धमिति 'अन्तरदेशे' 'अयनं च' इति सूत्रद्वयमपि देशप्रतिषेधार्थं द्रष्टव्यम्॥

*कणेमनसी श्रद्धाप्रतीघाते*॥ कणेशब्दः सप्तमीप्रतिरूपको निपातोऽभिलाषातिशये

**न्यासः**

भूषणेऽलम्॥ अलं कृत्वेति। पर्याप्ताविहालं शब्दो वर्त्तते॥

अन्तरपरिग्रहे॥ अन्तःशब्दोऽयम् मध्येऽधिकरणभूते वर्त्तते, परिग्रहे च। तत्र परिग्रहप्रतिषेधादितरत्र संज्ञा विधीयते। यस्त्वस्य स्वरादिषु पाठः, स परिग्रहेऽप्यव्य-यसंज्ञार्थः। अन्तर्हत्येति। मध्ये हत्वेत्यर्थः। 'वा ल्यपि' इत्यनुनासिकलोपः। वक्तव्य इति व्याख्येय इत्यर्थः। व्याख्यानं तु पूर्वमेव कृतम्। अन्तर्धेति। 'आतश्चोपसर्गे' इत्यङ्। अन्तर्द्धिरिति। 'उपसर्गे घोः किः' इति किप्रत्ययः। अन्तर्णयतीति। 'उप-सर्गादसमासेऽपि' इति णत्वम्।

कणेमनसी श्रद्धाप्रतीघाते॥ कणेशब्दः सप्तम्यन्तप्रतिरूपको निपातः। स चेहा-

कणेशब्दो मनस्शब्दश्च श्रद्धाप्रतीघाते गतिसंज्ञौ भवतः । कणेहत्य पयः पिबति । मनोहत्य पयः पिबति । तावत्पिबति यावदस्याभिलाषो निवृत्तः । श्रद्धा प्रतिहतेत्यर्थः ।

श्रद्धाप्रतीघात इति किम्? कणे हत्वा गतः । मनो हत्वा गतः ॥

पुरोऽव्ययम् ॥ ६७ ॥

असिप्रत्ययान्तः पुरःशब्दोऽव्ययम् । स गतिसंज्ञो भवति । समासस्वरोपचाराः प्रयोजनम् । पुरस्कृत्य, पुरस्कृतम्, यत्पुरस्करोति ।

अव्ययमिति किम् ? पूः पुरौ, पुरः कृत्वा काण्डं गतः ॥

पदमञ्जरी

वर्त्तते । मनःशब्दोऽपि साहचर्यादभिलाषावृत्तिरेव विज्ञेयः । *कणेहत्येति* । अतिशयेनाभिलष्य तन्निवृत्तिपर्यन्तं पिवतीत्यर्थः । तदाह—*तावदिति* । श्रद्धा प्रतिहन्यत इत्यर्थः । इति यावदस्येत्यपेक्षते । प्रत्युदाहरणे कणेशब्दः सूक्ष्मतण्डुलावयवोऽधिकरणभूते वर्त्तते । मनःशब्दोऽपि चेतसि ॥

*पुरोऽव्ययम्* । *असिप्रत्ययान्तः पुरःशब्दोऽव्ययमिति* । 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' इत्यसिप्रत्ययः, पूर्वशब्दस्य पुरादेशः, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा, विसर्जनीयस्थानिकः सकार उपचारः । *पुरस्कृत्येति* । पूर्वस्मिन्देशे कृत्वेत्यर्थः । *पूः पुरौ, पुरः कृत्वेति* । एतदत्र प्रत्युदाहरणम् । इतरयोस्तूपन्यासस्तत्साहचर्यात्पुर इति शसन्तम्, नाव्ययमिति प्रदर्शनार्थः । अत्र 'नमस्पुरसोर्गत्योः' इति सत्वं न भवति, समासश्च न भवति ॥

न्यासः

भिलाषातिशये वर्त्तमानो गृह्यते । तस्य हि श्रद्धाप्रतीघात इत्युपाधिः सम्भवति । मनःशब्दोऽपि तत्साहचर्यादभिलाषवृत्तिरेव विज्ञायते ।

**कणे हत्वा, मनो हत्वेति** । अत्र कणेशब्दः सूक्ष्मे तण्डुलावयवे वर्त्ततेऽधिकरणभूते, मनश्शब्दश्चेतसि ।

**पुरोऽव्ययम्** ॥ **पुरस्कृत्येति** । पूर्वस्माद् देशादागत इत्यस्मिन्नर्थे 'पूर्वाधरावराणामसि पुरधवश्चैषाम्' इत्यसिप्रत्ययः पूर्वशब्दस्य च पुरादेशः । 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययसंज्ञा विसर्जनीयस्थानिकस्य सकारस्योपचार इत्येषा संज्ञा पूर्वाचार्यप्रणीता । 'नमस्पुरसोर्गत्योः' इति सकारः ।

**पूः पुरौ, पुरः कृत्वा गत इति** । पुरः कृत्वेतीदं प्रत्युदाहरणम् । पूः पुरावित्येतयोस्तूपन्यासस्तत्साहचर्येण पुरःशब्दस्यानव्ययप्रदर्शनार्थः । 'पॄ पालनपूरणयोः', 'भ्राजभास' इत्यादिना 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम् , रपरत्वञ्च । गतिसंज्ञाया अभा-

## अस्तं च ॥ ६८ ॥

अस्तंशब्दो मकारान्तोऽव्ययमनुपलब्धौ वर्त्तते। स गतिसंज्ञो भवति। अस्तंगत्य सविता पुनरुदेति। अस्तंगतानि धनानि। यदस्तं-गच्छति। अव्ययमित्येव—अस्तं काण्डम्। क्षिप्तमित्यर्थः॥

## अच्छ गत्यर्थवदेषु ॥ ६९ ॥

अच्छशब्दोऽव्ययमभिशब्दस्यार्थे वर्त्तते। स गत्यर्थेषु धातुषु वदतौ च गतिसंज्ञो भवति। अच्छगत्य, अच्छगतम्, यदच्छगच्छति। वदतौ—अच्छोद्य, अच्छोदितम्, यदच्छवदति। अव्ययमित्येव—उदकमच्छं गच्छति॥

### पदमञ्जरी

*अस्तं च* ॥ *अस्तं कृत्वेति*। 'असु क्षेपणे', निष्ठा, उदितो वा' 'यस्य विभाषा' इति इट्प्रतिषेधः। ननु लाक्षणिकत्वादेवात्र न भवति, किमव्यय-ग्रहणानुवृत्त्या? एवं तर्ह्यस्तंशब्दोः अव्ययमिति ज्ञाप्यते। न ह्ययं चादिषु स्वरादिषु वा पठ्यते॥

*अच्छ गत्यर्थवदेषु* ॥ अच्छेत्यनुकरणत्वेऽविभक्तिको निर्देशः, 'सुपां सुलुक्' इति विभक्तेर्लुप्तत्वात्। *अभिशब्दस्यार्थ इति*। आभिमुख्ये। *अच्छोद्येति*। यजादित्वात् संप्रसारणम्, उदकमच्छं गच्छति, अकलुषमित्यर्थः॥

### न्यासः

वादिह समासादि कार्यं न भवति। 'नमस्पुरसोर्गत्योः' इति विसर्जनीयस्य सकारोऽपि न भवति। ननु च यद्यत्र गतिसंज्ञा स्याद् गतिसमासे कृते सुपो निवृत्त्या भवित-व्यम्, तदा पुर इति रूपं न स्यात्; असति तस्मिन् संज्ञापि निवर्त्तते, नैतदस्ति; यद्यपि विभक्तौ निवृत्तायां पुर इति रूपं न स्यात्, तथापि नैवं संज्ञा निवर्त्तते; एकदेशविकृतस्यानन्यत्वात्॥

अस्तं च ॥ अस्तंशब्दो मकारान्तोऽव्ययमिति। अव्ययमित्यत एव विशेषणो-पादानसामर्थ्यादव्ययत्वं विज्ञेयम्। चादेराकृतिगणत्वाद्वा। अस्तं कृत्वा काण्डं गत इति। 'असु क्षेपणे', निष्ठा, पूर्ववदिट्प्रतिषेधः। चकारः 'अव्ययम्' इत्यस्यानुकर्षणार्थः। यद्येवम्, चानुकृष्टत्वादुत्तरत्र तस्यानुवृत्तिर्न स्यात्? उत्तरत्रापि चकारस्तदनुकर्ष-णार्थोऽनुवर्त्तिष्यत इत्यदोषः॥

अच्छ गत्यर्थवदेषु ॥ अच्छशब्दोऽव्ययमभिशब्दस्यार्थ इति। अभिराभिमुख्ये। अच्छोद्येति। यजादित्वाद्वच्यादिसूत्रेण संप्रसारणम्। अच्छमित्यकलुषमित्यर्थः॥

## अदोऽनुपदेशे ॥ ७० ॥

अदःशब्दस्त्यदादिषु पठ्यते, सोऽनुपदेशे गतिसंज्ञो भवति। उपदेशः = परार्थः प्रयोगः। स्वयमेव तु यदा बुद्ध्या परामृशति तदा नास्त्युपदेश इति सोऽस्य विषयः। अदःकृत्य, अदःकृतम्, यददःकरोति।

अनुपदेश इति किम्? अदः कृत्वा काण्डं गत इति परस्य कथयति॥

## तिरोऽन्तर्द्धौ ॥ ७१ ॥

अन्तर्द्धिः = व्यवधानम्। तत्र तिरःशब्दो गतिसंज्ञो भवति। तिरोभूय, तिरोभूतम्, यत् तिरोभवति।

अन्तर्द्धाविति किम्? तिरो भूत्वा स्थितः। पार्श्वतो भूत्वेत्यर्थः॥

## विभाषा कृञि ॥ ७२ ॥

'अन्तर्द्धौ' इति वर्तते। प्राप्तविभाषेयम्। तिरःशब्दः करोतौ परतो विभाषा गतिसंज्ञो भवति। तिरःकृत्य, तिरस्कृत्य। तिरस्कृतम्। यत्तिरस्करोति। तिरःकृत्वा, तिरस्कृत्वा। अन्तर्द्धावित्येव—तिरः कृत्वा काष्ठं तिष्ठति॥

### पदमञ्जरी

*अदोऽनुपदेशे* ॥ *उपदेशः परार्थः इति*। वाक्यप्रयोग इत्यर्थाद् गम्यते। *अदःकृत्येति*। एतत्कर्तव्यमिति स्वयमालोच्येत्यर्थः॥

*तिरोऽन्तर्द्धौ* ॥ *तिरोभूयेति*। समासकृत्स्वरौ प्रयोजनम्। *तिरोभूतमिति*। भवतेरकर्मकत्वात्कर्त्तरि क्तः, 'गतिरनन्तरः' इत्यत्र च कर्मणीति वर्तते, तस्मात् समासथाथादिस्वरावत्र प्रयोजनम्। *तिरो भूत्वेति*। पार्श्वतो भूत्वेत्यर्थः॥

*विभाषा कृञि* ॥ *तिरस्कृत्येति*। 'तिरसोऽन्यतरस्याम्' इति सत्वम्। प्रत्यु-

### न्यासः

अदोऽनुपदेशे ॥ उपदेशः = परस्यार्थकथनम्। तच्च परस्य प्रत्यायनार्थं भवतीत्याह—उपदेशः परार्थ इति। अदः कृत्वेति। एतत् कृत्वेत्यर्थः॥

तिरोऽन्तर्द्धौ ॥ तिरोभूत्वा स्थित इति। अनृजुर्भूत्वा, वा पार्श्वतोभूत्वेत्यर्थः॥

विभाषा कृञि ॥ तिरस्कृत्येति। 'तिरसोऽन्यतरस्याम्'इति विसर्जनीयस्य सत्वम्॥

### उपाजेऽन्वाजे ॥ ७३ ॥

'विभाषा कृञि' इति वर्तते। उपाजेऽन्वाजेशब्दौ विभक्तिप्रतिरूपकौ निपातौ दुर्बलस्य सामर्थ्याधाने वर्त्तेते। तौ कृञि विभाषा गतिसंज्ञौ भवतः। उपाजेकृत्य उपाजे कृत्वा। अन्वाजेकृत्य, अन्वाजे कृत्वा ॥

### साक्षात्प्रभृतीनि च ॥ ७४ ॥

'विभाषा कृञि' इति वर्त्तते। साक्षात्प्रभृतीनि शब्दरूपाणि कृञि विभाषा गतिसंज्ञानि भवन्ति।

* साक्षात्प्रभृतिषु च्व्यर्थवचनम् *। साक्षात्कृत्य, साक्षात्कृत्वा। मिथ्याकृत्य, मिथ्या कृत्वा। साक्षात्। मिथ्या। चिन्ता। भद्रा। लोचना। विभाषा। संपत्का। आस्था। अमा। श्रद्धा। प्राजर्या। प्राजरुहा। वीजर्या। वीजरुहा। संसर्या। अर्थे। लवणम्। उष्णम्। शीतम्। उदकम्। आर्द्रम्। गतिसंज्ञासंनियोगेन लवणादीनां मकारान्तत्वं निपात्यते। अग्नौ। वशे। विकम्पने। विहसने। प्रहसने। प्रतपने। प्रादुस्। नमस्। आविस् ॥

**पदमञ्जरी**

दाहरणे तु न भवति, तत्र गत्यनुकार्यानुकरणयोर्भेदस्याविवक्षितत्वात् सूत्रे विभक्त्यभावः ॥

*साक्षात्प्रभृतीनि च* ॥ *साक्षात्प्रभृतिष्विति*। असाक्षाद्भूतं यदा साक्षात्क्रियते तदा यथा स्यात्, यदा यत्तु साक्षाद्भूतमेव रूपान्तरेण क्रियते तदा मा भूदित्येवमर्थम्। मिथ्याप्रभृतिष्वपि द्रष्टव्यम्। एतच्चान्तरङ्गत्वाल्लभ्यते, तथा हि—साक्षात्कृतमित्युक्ते श्रुतस्य तस्यैव रूपस्य करणं प्रतीयते, न त्वश्रुतरूपान्तरस्य।

**न्यासः**

उपाजेऽन्वाजे ॥ साक्षात्प्रभृतीनि च ॥ साक्षात्प्रभृतिषु च्व्यर्थवचनमिति। च्व्यर्थ उच्यते कथ्यते येन तच्च्व्यर्थवचनम् = च्व्यर्थव्याख्यानम्। एतेनैतदुक्तम् भवति—साक्षात्प्रभृतीनां च्व्यर्थो येन प्रतिपाद्यते अस्मिन् संज्ञाविधौ तच्च्व्यर्थवचनं कर्तव्यमित्यर्थः। किमर्थम्? असाक्षाद्भूतं यदा साक्षात् क्रियते तदा गतिसंज्ञा यथा स्यात्। यदा त्वसाक्षाद्भावो न क्रियते, किन्तु साक्षाद्भूतस्य प्रत्यक्षभावमुपगतस्यैव सतो योऽन्यो विशेषः कश्चित् क्रियते, तदा मा भूदिति। एवं मिथ्याप्रभृतीनाम्। अमिथ्याभूतानां

## अनत्याधान उरसिमनसी ॥ ७५ ॥

'विभाषा कृञि' इति वर्त्तते। अत्याधानम् = उपश्लेषणम्, तदभावेऽनत्याधाने उरसिमनसी शब्दौ विभाषा कृञि गतिसंज्ञौ भवतः। उरसिकृत्य, उरसि कृत्वा। मनसिकृत्य, मनसि कृत्वा।

अनत्याधान इति किम्? उरसि कृत्वा पाणिं शेते ॥

**पदमञ्जरी**

नन्वसत्यामपि प्रकृतिविवक्षायां तस्यैव रूपस्य करणं प्रतीयते, अथ च च्व्यर्थवृत्तिता नास्ति, तस्माच्च्व्यर्थग्रहणमेव कर्तव्यम्। अथ च्व्यन्तेष्वपि साक्षादादिषु अयं विकल्पः कस्मान्न भवति? अस्तु, अनेन मुक्ते पुनः प्रसङ्गविज्ञानाद् 'ऊर्यादिच्विडाचश्च' इत्येषा भविष्यति? नैवं शक्यम्, यदेतल्लवणादीनां मकारान्तत्वनिपातनं तदपि च्व्यन्तेषु स्यात्। एवं लवणादीनां मान्ता लवणादय आदेशाः करिष्यन्ते, तत्र यद्येकदेशविकृतस्यानन्यत्वाल्लवणीशब्दस्यापि पक्षे लवणमादेशः क्रियते न कश्चिद् दोषः; त्रैशब्द्यं हि नः साध्यम्—लवणंकृत्य, लवणं कृत्वा, लवणीकृत्येति, तच्चैवं सति सिद्धम्। *वृत्तिकारस्तु* 'मकारान्तत्वं निपात्यते' इति वदति, स मन्यते—च्व्यन्तेषु पूर्वविप्रतिषेधेन नित्या संज्ञा भवति, विकल्पेन तु सन्नियुक्तं मान्तत्वं निपातनमिति। अग्नौ,वशेप्रभृतयो विभक्तिप्रतिरूपका निपाताः, प्रादुराविशब्दयोरूर्यादित्वान् प्राप्ते विभाषा ॥

*अनत्याधान उरसिमनसी*। उरसिमनसिशब्दौ निपातौ। *उरसिकृत्येति*। अभ्युपगम्येत्यर्थः। *मनसिकृत्य*, निश्चित्येत्यर्थः ॥

**न्यासः**

मिथ्याभावो यदा क्रियते, तदा यथा स्यात्; अन्यदा मा भूत्। तदेवं व्याख्यानम्—'ऊर्यादिच्विडाचश्च' इत्यत्र च्विग्रहणम् 'अच्छगत्यर्थवदेषु' इत्यतश्चार्थग्रहणमिह मण्डूकप्लुतिन्यायेनानुवर्त्तते। तेन च्व्यर्थे वर्त्तमानानां साक्षात्प्रभृतीनां गतिसंज्ञा विधीयत इति। व्यवस्थितविभाषाविज्ञानाद्वा च्व्यर्थ एव वर्त्तमानानां तेषां संज्ञा भविष्यतीति। च्व्यर्थता चोभयथा सम्भवति—च्व्यन्तानाम्, अच्व्यन्तानाञ्च। तत्र यदा च्व्यन्तता भवति तदा 'ऊर्यादिच्विडाचश्च' इति नित्यं संज्ञा भवति, अन्यदा त्वनेन गतिसंज्ञा विभाषा भवति; व्यवस्थितविभाषया चास्य सूत्रस्य च्व्यर्थेष्वेव प्रवृत्तेः। मकारान्तत्वनिपातनमपि लवणादीनामच्व्यन्तानां न भवति। विभाषितगतिसंज्ञायाः सन्नियोगेन हि तेषां मकारान्तत्वनिपातनम्। अग्नौ, वशेप्रभृतयो विभक्तिप्रतिरूपकनिपाता द्रष्टव्याः। प्रादुराविःशब्दावूर्यादिषु पठ्येते। तयोः करोतियोगे विभाषार्थं इह पाठः।

**अनत्याधान उरसिमनसी** ॥ उरसिमनसिशब्दौ विभक्तिप्रतिरूपकौ निपातौ। **उरसिकृत्येति**। अभ्युपगम्येत्यर्थः। **मनसिकृत्येति**। निश्चित्येत्यर्थः।

### मध्ये पदे निवचने च ॥ ७६ ॥

'विभाषा कृञि' इति वर्त्तते । चकाराद् 'अनत्याधाने' इति च । मध्ये, पदे, निवचने—इत्येते शब्दा अनत्याधाने विभाषा कृञि गतिसंज्ञा भवन्ति । मध्येकृत्य, मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनम् = वचनाभावः । निवचनेकृत्य, निवचने कृत्वा । वाचं नियम्येत्यर्थः । अनत्याधान इत्येव—हस्तिनः पदे कृत्वा शिरः शेते ॥

### नित्यं हस्ते पाणावुपयमने ॥ ७७ ॥

'कृञि' इति वर्तते । 'हस्ते' 'पाणौ' इत्येतौ शब्दौ कृञि नित्यं गतिसंज्ञौ भवत उपयमने । उपयमनम् = दारकर्म पाणौकृत्य । हस्तेकृत्य । दारकर्म कृत्वेत्यर्थः ।

उपयमने इति किम् ? हस्ते कृत्वा कार्षापणं गतः ॥

### प्राध्वं बन्धने ॥ ७८ ॥

'कृञि' इति वर्तते । 'प्राध्वम्' इति मकारान्तमव्ययमानुकूल्ये वर्तते, तदानुकूल्यं बन्धनहेतुकं यदा भवति तदा प्राध्वंशब्दः कृञि नित्यं गतिसंज्ञो भवति । प्राध्वंकृत्य ।

#### पदमञ्जरी

*मध्ये पदे निवचने च* ॥ अविभक्तिको निर्देशः, मध्येपदेशब्दौ निपातौ । *निवचनं वचनाभाव इति* । तत्र निपातनादेकारान्तत्वं न पुनरेषा सप्तमी । *वाचं नियम्येति* । व्याख्यानान्निपातनं चाविशेषेण, न तु संज्ञासन्नियुक्तं निवचने कृत्वेति उदाहृतत्वादित्याहुः ॥

*नित्यं हस्ते पाणावुपयमने* ॥ *दारकर्मेति* । अन्ये तु स्वीकरणमात्रमिच्छन्ति—हस्तेकृत्य महाशाणीति, हस्तेपाणौ शब्दौ निपातौ ॥

*प्राध्वं बन्धने* ॥ *मकारान्तमव्ययमिति* । चादिषु पाठात् । *आनुकूल्ये वर्तते इति* ।

#### न्यासः

मध्ये पदे निवचने च ॥ मध्ये पदे इति । सप्तम्यन्तप्रतिरूपकौ । निवचन इति । अर्थाभावेऽव्ययीभावः, नितृणं निवुसमिति यथा । निवचनेकृत्येति । उच्चारणसामर्थ्यात् सप्तम्याः समासेऽप्यलुग् भवति । एवमुत्तरत्र ॥

नित्यं हस्ते पाणावुपयमने ॥ हस्तेकृत्य, पाणौकृत्येति । सप्तम्याः पूर्ववदलुक् । दारकर्मेति । भार्याकरणम् ॥

प्राध्वं बन्धने ॥ बन्धने इति निमित्तसप्तमीयम् । प्राध्वंशब्दस्यानुकूल्यवृत्ति-

बन्धन इति किम् ? प्राध्वं कृत्वा शकटं गतः ॥

जीविकोपनिषदावौपम्ये ॥ ७९ ॥

'कृञि' इति वर्त्तते। जीविका, उपनिषत्—इत्येतौ शब्दौ औपम्ये विषये कृञि गतिसंज्ञौ भवतः। जीविकाकृत्य। उपनिषत्कृत्य।

पदमञ्जरी

तेन बन्धने वर्तमानः प्राध्वंशब्दः इत्ययमर्थो न भवति। कथं तर्हि बन्धने इत्यस्या-न्वय इत्यत आह—*तदिति*।

*बन्धन इति*। सत्सप्तम्यर्थद्वारकश्च प्राध्वमित्यनेन सम्बन्धः, बन्धने सति यदानुकूल्यं तद्बन्धनहेतुकमिति भावः।

*प्राध्वं कृत्वा शकटं गत इति*। प्रस्थितोऽध्वानं प्राध्वः, 'अत्यादयः क्रान्ताद्यर्थे' इति समासः, 'उपसर्गादध्वनः' इत्यच् लाक्षणिकत्वादेवात्र न भविष्यति; तस्मादव्ययस्यैवायं प्रयोगः, आनुकूल्यं तु बन्धनहेतुकं न विवक्षितमिति व्याचक्षते॥

*जीविकोपनिषदावौपम्ये*। जीविका=जीवनोपायः, 'संज्ञायाम्' इति करणे ण्वुल्। ण्यन्ताद्वा कर्त्तरि उपनिपूर्वात्सदेः 'सत्सूद्विष' *इति क्विप्*, 'सदिरप्रतेः' इति षत्वम्, उपनिषद्=रहस्यं वेदान्तजन्यं ज्ञानम्, वेदान्तभागो वा। *औपम्य इति*। उपमीयतेऽनयेत्युपमा 'आतश्चोपसर्गे' इत्यङ्, तस्या भाव औपम्यम्। विषयसप्तमी चैषा, उपमानोपमेयसम्बन्धनिमित्तादभेदोपचाराद्यावुपमेयनिष्ठौ भवतः,

न्यासः

त्वाद् 'बन्धने' इत्यस्य विशेषणं नोपपद्यत इति सामर्थ्यात् तदर्थस्य विशेषणं विज्ञायत इत्यत आह—तदानुकूल्यमित्यादि। बन्धनं हेतुर्थस्य तत् तथोक्तम्। प्राध्वंकृत्येति। बन्धनेन निमित्तेनानुकूल्यं कृत्वेत्यर्थः। प्राध्वं कृत्वेति। समर्थमध्वगमने शकटम्, अध्वाभिमुखं कृत्वेति गम्यते। 'उपसर्गादध्वनः' इत्यच् समासान्तः। 'नस्तद्धिते' इति टिलोपः। प्रगतमध्वानमिति प्रादिसमासः। लक्षणप्रतिपदोक्तपरिभाषयैवात्र प्राप्तौ सिद्धायां लाक्षणिकोऽपि प्राध्वंशब्दो यत्र बन्धनेनाभिसम्बध्यते, तत्रापि गतिसंज्ञा भवतीति ज्ञापनार्थं बन्धनग्रहणम्। तेन यदा बन्धनेनैव शकटस्याध्वनि सामर्थ्यादध्वाभिमुखता विवक्ष्यते, तदा प्राध्वंकृत्य शकटं गतमित्येतदपि सिद्धं भवति॥

जीविकोपनिषदावौपम्ये॥ औपम्यविषय इति। उपमीयतेऽनयेत्युपमा। 'आतश्चोपसर्गे' इत्यङ्। तस्या भाव औपम्यम्, ष्यञ्। तत् पुनः क्रियाकारकसम्बन्धः। 'समासकृत्तद्धितेषु सम्बन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्यः' इति वचनात्। विषयग्रहणेनौपम्ये इति सप्तम्या विषयसप्तमीत्वं दर्शयति। सम्भवति च जीविकोपनिष-

औपम्य इति किम्? जीविकां कृत्वा गतः ॥

## ते प्राग्धातोः ॥ ८० ॥

पदमञ्जरी

तावौपम्यविषयौ। *जीविकाकृत्य, उपनिषत्कृत्येति*। जीविकामिव कृत्वा, उपनिषदमिव कृत्वेत्यर्थः। यद्यपि गतिसमासो नित्यः, तथापीवशब्दप्रयोगे स्वार्थनिष्ठत्वादीदृशवाक्यं भवत्येव ॥

*ते प्राक् धातोः*। नियमार्थमिदम्। स पुनर्नियमः संज्ञानियमो वा स्यात्, प्रयोगनियमो वा स्यात्? तत्र संज्ञानियमे तेशब्देन प्रादय उपनिषत्पर्यन्ताः स्वरूपेण परामृश्यन्ते, न गत्युपसर्गसंज्ञाविशिष्टेन रूपेण; संज्ञयोरनिष्पादनात्। अनेनैकवाक्यतापन्नैः पूर्वसूत्रैस्तयोर्विधानात्। ते प्रादय उपनिषत्पर्यन्ता धातोः प्रागेव प्रयुज्यमाना गत्युपसर्गसंज्ञा भवन्तीत्यर्थः। प्रयोगनियमे तु लब्धगत्युपसर्गसंज्ञाः परामृश्यन्ते। ते गत्युपसर्गसंज्ञका धातोः प्रागेव प्रयोक्तव्या इत्यर्थः।

तत्राद्ये पक्षे स्वरूपेण परामर्शः प्रादीनामिव चादीनामपि स्यात्, ततश्च निपातसंज्ञाया अपि नियमः स्यात्। अथापि गत्युपसर्गसंज्ञयोरेव नियमः, एवमप्यनर्थकं वचनम्, प्रयोग एव हि तेषामप्राङ् नेष्यते। न पुनरप्राक् प्रयुज्यमानानां संज्ञायां किञ्चिदनिष्टमापद्यते। 'छन्दसि परेऽपि' 'व्यवहिताश्च' इति रूपद्वयं चानर्थकम्, परव्यवहितानां संज्ञैव निषिद्धा, न तु प्रयोगः। न च तेनापि संज्ञैव विधीयते, निष्प्रयोजनत्वात्। किंच 'अनुकरणं चानितिपरम्' इत्यनितिपरग्रहण-

न्यासः

दावुपमाभूते प्रत्ययौपम्यविषयभावः, तेन विनौपम्यस्य अभावात्। जीविकाकृत्येत्यादि। जीविकामिव कृत्वा। उपनिषदमिव कृत्वेत्यर्थः। जीविका=जीवनोपायः। उपनिषद्-रहस्यं हेतुश्च। यत् तत्सदृशं तज् जीविकेव जीविका। उपनिषदिवोपनिषदिति जीविकोपनिषद्भ्यामुपमीयते।

ते प्राग् धातोः ॥ नियमार्थमेतत्। नियमः पुनः संज्ञानियमो वा स्यात्—ते प्रादयो यदा धातोः प्राक् प्रयुज्यन्ते तदैव गत्युपसर्गसंज्ञकाः भवन्तीति? प्रयोगनियमो वा—ते प्रादयो गत्युपसर्गसंज्ञकाः सन्तो धातोः प्राक् प्रयोक्तव्या इति? तत्र यदि पूर्वो नियम आश्रीयेत तदा संज्ञावाक्यानामयमेकदेशो विज्ञायेत—ते प्रादयो धातोः प्राक् प्रयुज्यमाना गत्युपसर्गसंज्ञका भवन्तीति। तथा च गत्युपसर्गसंज्ञयोरनभिनिर्वृत्तत्वान् ते गत्युपसर्गसंज्ञका इति प्रत्यवमर्शो न युज्यते। निपातसंज्ञायाश्चाभिनिर्वृत्तत्वात् त इत्यनेन निपाता एव प्रत्यवमृश्येरन्; ततश्च निपातसंज्ञाया नियमः स्यात्। इतरत्र तु नियमेनायं योगो गत्युपसर्गसंज्ञावाक्यानामेकदेशभूतो भवतीति न भवत्येष दोषप्रसङ्गः। संज्ञानियमस्य चाप्राक्प्रयुज्यमानानां संज्ञानिवृत्तिः फलं स्यात्, तच्चायुक्तम्; न ह्यप्रा-

ते गत्युपसर्गसंज्ञकाः धातोः प्राक् प्रयोक्तव्याः। तथा चैवोदा-

पदमञ्जरी

मनर्थकं स्यात्, 'खाडिति कृत्वा निरष्ठीवत्' इत्यत्र व्यवहितस्यानुकरणस्य गति-संज्ञैव निषिद्धा, प्रयोगस्तु केन वार्यते ! प्रयोगनियमे तु धातोः प्रागेवानुकरणस्य प्रयोगः स्याद्, न त्वितिशब्देन व्यवहितस्येति अनितिपरमिति वक्तव्यम्। अतः प्रयोगनियम एवायं युक्त इति मत्वाह—ते *गत्युपसर्गसंज्ञका इति*।

अथास्मिन्नपि पक्षे निपातानामपि तेशब्देन परामर्शः कस्मान्न भवति ? व्यवहितत्वात्। कथं तर्ह्युपसर्गाणां परामर्शः, नोपसर्गास्तेन रूपेण परामृश्यन्ते, किं तर्हि ? गतिरूपेण, तेषामपि गतित्वात्। अनेनैवाभिप्रायेण वृत्तावुपसर्गाणां पृथग् ग्रहणम्। चादयस्तु नैवमिति न ते परामृश्यन्ते। ननु यत्र लोके संकीर्णः प्रयोगः—गौर्गावीति, तत्र साधुपरिज्ञानाय शास्त्रमर्थवत्। यत्र त्वसंकीर्ण एव प्रयोगो न तत्र शास्त्रकृत्यमस्ति; न च कश्चित् प्रपचतीति प्रयोक्तव्ये पचतीति प्रेति प्रयुङ्क्ते। यद्यपि लोके प्रयोगो न दृश्यते विपरीतः, छन्दसि तु परव्यवहित-प्रयोगदर्शनाद् भाषायामपि तथा प्रयोगः शङ्क्येत, दर्शितश्चाद्यत्वेऽपि भाषायामेव गतेराविःशब्दस्य परव्यवहितप्रयोग ऊर्यादिसूत्रे। किं च 'उदि कूले रुजिवहोः' कूलमुद्वह इत्यत्र 'उदि' 'कूल' इति द्वयोरपि सप्तमीनिर्देशादुपपदत्वात्समासे कृते 'उपसर्जनं पूर्वम्' इति शास्त्रवशात्पर्यायेण पूर्वनिपातं मन्येरन् इत्युपसर्जनसंनिपाते पूर्वपरव्यवस्थार्थमिदं वक्तव्यम्। यद्येवम्, 'कर्तृकर्मणोश्च भूकृञोः'—सुखेन कटः क्रियते, सुकटंकराणि वीरणानि, दुष्कटंकराणि, अत्र सुदुसोः प्राग्धातोः प्रयोगः प्राप्नोति - कटं सुकराणीति। खलः खित्करणमिदानीं किमर्थं स्यात् ? अनव्ययस्य हि मुमुच्यते, खित्करणसामर्थ्याद् अव्ययस्य भवतु, यदि वा 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति सुकरशब्दे परतः कटस्य भविष्यति, कर्त्त-व्योऽत्र यत्नः।

न्यासः

ऽप्रयुज्यमानानां सत्यामपि संज्ञायां किञ्चिदनिष्टमापद्यते। इतरस्य तु नियमस्याप्राक्प्र-योगाभावः फलम्, तच्च युक्तम्; न हि गत्युपसर्गसंज्ञकानामप्राक्प्रयोग इष्यते। तस्मात् प्रयोगनियम एव न्याय्य इति तमाश्रित्याह—ते गत्युपसर्गसंज्ञका इति। तथा चेत्यादि। यादृशो नियमः कृतस्तदनुरूपं तत्सदृशमित्यर्थः। ननु च नैव कश्चित् प्रपठतीति प्रयो-क्तव्ये 'पठति प्र' इति प्रयुङ्क्ते, ततोऽनिष्टादर्शनादपार्थकमेतत्, नैतदस्ति; यद्यपि भाषायां धातोः परेण प्रयुज्यमानास्ते गत्युपसर्गसंज्ञका न दृश्यन्ते, छन्दसि तु दृश्यन्ते। तत्र य एव मन्दबुद्धिः प्रतिपत्ता तेषां छन्दसि धातोः परे प्रयोगं दृष्ट्वा यथैव ते छन्दसि विषये धातोः परेण प्रयुज्यन्ते, तथा भाषायामपि प्रयोक्तव्या इति मन्यते, तं प्रति व्युत्पादनार्थत्वान्नास्ति वैयर्थ्यप्रसङ्गः।

हृताः । 'ते' ग्रहणमुपसर्गार्थम् । गतयो ह्यनन्तराः ॥

## छन्दसि परेऽपि ॥ ८१ ॥

### पदमञ्जरी

धातुग्रहणमनर्थकम्, कुतः ? प्रागित्यपेक्षायां यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति विज्ञास्यते; नैवं शक्यम्, इह च कर्तुं प्रेच्छति प्रचिकीर्षतीति सन्वाच्यया इच्छया प्रशब्दस्य योग इति सन एव प्राक् प्रशब्दः प्रयुज्येत, धातुग्रहणात् तु धातोरेव चिकीर्षतेः प्राक् प्रयुज्यते ।

*तेग्रहणमुपसर्गार्थमिति* । ननु यदि गतिसंज्ञारहिताः केवलोपसर्गसंज्ञा एव प्रादयः स्युः, ततोऽसति तेग्रहणे गतीनामनन्तरत्वात्त एव संबध्येरन्, न तूपसर्गा इति तदर्थं तेग्रहणं कर्तव्यम् ? तेऽपि तु गतिसंज्ञकाः, ततश्चानन्तराणां गतीनामपि सम्बन्धे प्रादीनामपि गतित्वादेव ग्रहणं सिद्धम् । स्यादेतत्—असति तेग्रहणे गतिसंज्ञैव केवला येषाम्, तेषामेव स्याद्; नोभयसंज्ञकानां प्रादीनामिति ? न; केवलगतेरभावात् । ननु चायमस्ति 'अनुकरणं चानिति परम्' इति, न; तस्यापि निपातत्वात्, उच्यते; असति तेग्रहणे प्रकृतेष्वपेक्षा चेत् कतिपये संबध्येरन्; नोपसर्गपर्यन्ताः । व्याप्तिन्यायात्तु भूयसामपेक्षायां न प्रादिष्वेव पर्यवसाने कारणमस्तीति चादयोऽप्यपेक्ष्येरन् । तेग्रहणे तु सति गतिसंज्ञाया अनन्तरत्वात्तेन रूपेण परामर्शो न कतिपयानामेव भवतीति प्रादीनपि व्याप्नोति, चादींश्च परिसंचष्टे इति तेग्रहणमुपसर्गार्थं भवति । तत्पर्यन्तानां च यथा स्यात् तेषामेव च यथा स्यादित्यर्थः । *गतयो ह्यनन्तरा इति* । येऽनन्तरास्त एव कतिपये गृह्येरन्, प्रत्यासत्ताविति भावः । व्याप्तौ तु दोषः सुज्ञानत्वान्न कण्ठोक्तः ॥

### न्यासः

अथ किमर्थं तेग्रहणम् ? यावता प्रकृतत्वादेव गत्युपसर्गसंज्ञकानां प्राक् प्रयोगेण सम्बन्धो विज्ञास्यत इत्याह—तेग्रहणमित्यादि । असति तेग्रहणे गतिसंज्ञकानामनन्तरत्वात् त एव प्राक्प्रयोगेण सम्बध्येरन् । तेग्रहणे तूपसर्गसंज्ञा अपि निर्दिश्यन्त इति तेषामपि सम्बन्ध उपपद्यते । तस्मादुपसर्गाणामपि प्राक् प्रयोगनियमो यथा स्यादित्येवमर्थं तेग्रहणम् । ननु च यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीत्यन्तरेणापि धातुग्रहणं धातोरेव प्राक् प्रयोगो विज्ञास्यते, न हि धातोरन्यत्र क्रियास्ति, तत् कथं धातोरित्युच्यते ? नैतदस्ति ; प्रकर्तुमिच्छति प्रचिकीर्षतीत्यत्रापि धातोश्च प्राक् प्रयोगो यथा स्यात् । अत्र सनः सम्बन्धिन्यैपणक्रियया युक्तः प्रशब्द इति सनं प्रति गत्युपसर्गसंज्ञा यथा स्यात् । ततश्चासति धातुग्रहणे तत एव प्राक् प्रयुज्येत । धातुग्रहणे तु चिकीर्षतेर्धातोः प्राक् प्रयुज्यते, न सनः ॥

प्राक् प्रयोगे प्राप्ते छन्दसि परेऽभ्यनुज्ञायन्ते। छन्दसि विषये गत्युपसर्गसंज्ञकाः परेऽपि पूर्वेऽपि प्रयोक्तव्याः। न च परेषां प्रयुज्यमानानां संज्ञाकार्यं किञ्चिदस्ति। केवलं परप्रयोगेऽपि क्रियायोग एवामस्तीति ज्ञाप्यते। याति नि हस्तिना। नियाति हस्तिना। हन्ति नि मुष्टिना। निहन्ति मुष्टिना॥

व्यवहिताश्च॥ ८२॥

व्यवहिताश्च गत्युपसर्गसंज्ञकाः छन्दसि दृश्यन्ते। आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। आयाहि॥

**कर्मप्रवचनीयाः॥ ८३॥**

'कर्मप्रवचनीयाः' इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामः कर्मप्रवचनीयसंज्ञास्ते वेदितव्याः। 'अधिरीश्वरे' इति यावद्वक्ष्यति।

पदमञ्जरी

*छन्दसि परेऽपि*॥ न च *परेषामिति*। न च 'गतिर्गतौ' इत्यस्यापि सम्भवः, परभूतानामेकाकिनामेव दर्शनादिति मन्यते॥

*व्यवहिताश्च*॥ दिक्छब्दानामव्यवहिते मुख्या वृत्तिरिति प्राक् परस्ताच्च व्यवहितानां प्रयोगार्थमिदं वचनम्। अत एव भाषायां व्यवहितानामप्रयोगः। कथं तर्हि गतिव्यवाये प्रयोगः—अभ्युद्धरति, समुदाहरतीति? न तुल्यजातीयं व्यवधायकं भवति, तद्यथा - किमनन्तरे एते ब्राह्मणकुले इति पृष्टः सन्नाह—नानन्तरे, वृषलकुलमनयोर्मध्य इति विजातीयं व्यवधायकं निर्दिशति, जातेर्वा समाश्रयणान्नास्ति व्यवधायकत्वम्। एवं च गतिरनन्तरग्रहणम्, 'गतिर्गतौ' इति वचनम्, 'अभिप्रैति' इतिनिर्देशश्चोपपन्नो भवति॥

*कर्मप्रवचनीयाः*॥ वक्ष्यामाणानां संज्ञिनां बहुत्वाद्बहुवचनम्, यथा–निपाताः,

न्यासः

छन्दसि परेऽपि॥ व्यवहिताश्च॥ छन्दसि व्यवहितानां प्रयोगवचनाद् भाषायां व्यवहितानां प्रयोगो न भवतीत्युक्तं भवति। यद्येवम्, गतिव्यवधानेऽपि प्राक् प्रयोगो न प्राप्नोति—समाहरतीत्यादौ, नैष दोषः; न हि तुल्यजातीयको व्यवधायको भवति। गत्युपसर्गजातेराश्रयणान् नास्ति व्यवधानम्। आ मन्द्रैरित्यादि। अत्राङो मन्द्रैरित्यादिभिः पदैर्व्यवधानेऽपि यातेर्धातोः प्राक् प्रयोगः। आयाहीति। एतेनाङो याहीत्यनेन सम्बन्धं दर्शयति॥

कर्मप्रवचनीयाः॥ कर्मप्रवचनीया इति वक्ष्यमाणानां संज्ञिनां बहुत्वाद् बहु-

कर्मप्रवचनीयप्रदेशाः—'कर्मप्रवचनीययुक्ते द्वितीया' इत्येवमादयः ॥

**अनुर्लक्षणे ॥ ८४ ॥**

अनुशब्दो लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति । शाकल्यस्य संहितामनु प्रावर्षत् । अनडुह्यज्ञमन्वसिञ्चत् । अगस्त्यमन्वसिञ्चन्प्रजाः ।

**पदमञ्जरी**

कृत्या इति । क्वचित्तु सामान्यविवक्षयैकवचनम्, 'गतिश्च', 'प्रत्ययः' 'कृत्' इति । महासंज्ञाकरणमन्वर्थसंज्ञाविज्ञानार्थम्—कर्म = क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इति । भूते 'कृत्यल्युटो बहुलम्' इति कर्त्तरि कृत्यः । के च कर्म प्रोक्तवन्तः ? ये प्रयुज्यमाने क्रियापदे—'अनुभूयते कम्बलः' इत्यादौ क्रियाविशेषं द्योतितवन्तः, न संप्रति क्रियाविशेषं द्योतयन्ति, किं तर्हि ? सम्बन्धविशेषम्, तद्यथा—शाकल्यस्य संहितामनुप्रावर्षदिति । न ह्यत्रानुरनुभूयते इत्यादाविव क्रियाविशेषं द्योतयति, क्रियापदाभावात्; नापि षष्ठीवत्सम्बन्धमाचष्टे—संहितामिति; द्वितीयायास्तदर्थत्वात् । नापि क्रियापदमाक्षिपति, यथा—प्रादेशं विपरिलिखतीति, विशब्दो विमानक्रियां प्रादेशं विमाय परिलिखतीति । तथा हि—सति प्रादेशमितिवत् कारकविभक्तिप्रसङ्गः, शेषसम्बन्धस्य वा प्रतीतिप्रसङ्गः । तदेवमनुः संहिताप्रवर्षणयोर्यः शेषसम्बन्धो द्वितीयाभिहितस्तं विशेषेऽवस्थापयति । हेतुहेतुमद्भावेन रूपेण विशिष्टक्रियाजनितत्वेन वा सम्बन्धस्य तत्संनिधौ सम्प्रत्ययात् संहितामनुनिशम्य प्रावर्षदिति । उक्तं च –

क्रियाया द्योतको नायं न सम्बन्धस्य वाचकः ।
नापि क्रियापदाक्षेपी सम्बन्धस्य तु भेदकः ॥ इति ।

क्वचित्तु प्रवृत्तिनिमित्ताभावेऽपि वचनसामर्थ्यादियं संज्ञा प्रवर्तते, यथा—'सुः पूजायाम्' 'अतिरतिक्रमणे च' इति ॥

*अनुर्लक्षणे* ॥ *यावतेति* । यावताशब्दो निपातो नन्वित्यर्थे । अन्येत्यर्थ इत्यन्ये ।

**न्यासः**

वचनेन निर्देशः । महत्याः संज्ञायाः करणस्यैतत् प्रयोजनमन्वर्थसंज्ञा यथा विज्ञायेत—कर्म प्रोक्तवन्तः कर्मप्रवचनीया इति । भूते 'कृत्यल्युटो बहुलम्' इति कर्त्तर्यनीयर् । कर्मशब्दः क्रियावचनः । के च कर्म प्रोक्तवन्तः ? ये संप्रति क्रियां न त्वाहुः । तदेवमन्वर्थसंज्ञाकरणद्वारेण ये क्रियां द्योतितवन्तः, न तु संप्रति द्योतयन्ति, ते कर्मप्रवचनीयसंज्ञा भवन्तीत्युक्तं भवति । यदि सम्प्रति न क्रियां द्योतयन्ति, किन्तर्हि द्योतयन्ति ? सम्बन्धविशेषम् । यथा शाकल्यस्य संहितामनु प्रावर्षदित्यत्र हि निशमनक्रियया संहिताप्रवर्षणयोर्यः सम्बन्ध उपजनितो हेतुहेतुमद्भावलक्षणः, तमनुशब्दो द्योतयति । कर्मप्रवचनीयसंज्ञायां सत्याम् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया भवति ॥

अनुर्लक्षणे ॥ 'लक्षणशब्दोऽत्र चिह्ने वर्त्तते' इति मत्वा कश्चिच्चोदयति—किमर्थं-

किमर्थमिदमुच्यते, यावता 'लक्षणेत्थम्भूताख्यान' इति सिद्धैवानोः कर्मप्रवचनीयसंज्ञा ? हेत्वर्थं तु वचनम्, हेतुतृतीयां बाधित्वा द्वितीयैव यथा स्यात् ॥

पदमञ्जरी

*लक्षणेत्थम्भूताख्यानेति सिद्धेति*। तत्र चावश्यमनोर्ग्रहणं कर्तव्यमित्थंभूताख्यानादिषु यथा स्यात्। लक्षणग्रहणं च प्रत्याद्यर्थम्, अतोऽर्थान्तरसंज्ञान्तरसाधारणत्वात्तदेवास्तु, इदं तु न कर्तव्यमिति भावः। *हेत्वर्थंन्त्विति*। तु शब्दः पक्षं व्यावर्तयति। हेतुः = करणम्, अर्थः = प्रयोजनं प्रयोजकोऽस्य वचनस्येत्यर्थः। ननु च तत्र चात्र च लक्षणग्रहणमेव क्रियते, तद्यदि हेतुर्लक्षणं न भवति, इहापि न गृह्यते, अथ भवति तत्रापि गृह्येतेति पुनरपि नार्थ एतेन ? तत्राह—*हेतुतृतीयामिति*। सत्यम्; लक्ष्यतेऽनेन तल्लक्षणम् = चिह्नं ज्ञापकम्, कारणमपि नियतं कार्यविशेषावगतिहेतुत्वाद् लक्षणं भवत्येव। उक्तं *भाष्ये*—लक्षणेन हेतुरपि व्याप्तो नावश्यं तदेव लक्षणं येन पुनः पुनर्लक्ष्यते, किं तर्हि ? यत्सकृदपि निमित्तत्वाय कल्पते तदपि लक्षणमिति। किन्तु येन नाप्राप्तिन्यायेन कर्मप्रवचनीययुक्ते द्वितीया षष्ठ्या एवापवादः। ततश्च लक्षणेत्थंभूतेत्यनोर्लक्षणे कर्मप्रवचनीयसंज्ञाया अवकाशो यो हेतुर्न भवति—वृक्षमनुविद्योतते विद्युदिति, हेतुतृतीयाया अवकाशः—धनेन कुलमिति; हेतुभूते तु लक्षणे उभयप्रसङ्गे परत्वात् तृतीया स्यात्, तामपि बाधित्वा द्वितीयैव यथा स्यात्। पुनः संज्ञाविधाने कक्षान्तरप्राप्तत्वाद् द्वितीयैव तृतीयां बाधते। उक्तं च—

हेतुहेतुमतोर्योगपरिच्छेदोऽनुना कृते।
आरम्भाद्बाध्यते प्राप्ता तृतीया हेतुलक्षणा ॥ इति।

'तृतीयार्थे' इत्यनेन तु पुरस्तादपवादन्यायेन 'सहयुक्तेऽप्रधाने' इत्यस्यैव बाधः, न हेतुतृतीयाया इति वक्तव्यमेतत् ॥

न्यासः

मित्यादि। इतरस्तु 'लक्षणेत्थम्भूताख्यानभागवीप्सासु' इत्यादौ सूत्रे। तत्र चिह्ने ज्ञापके वर्त्तमानस्य लक्षणशब्दस्य ग्रहणम्, इह तु कारके हेतौ, अतस्तेन न सिध्यतीत्यनेनाभिप्रायेण तं प्रत्याह—हेत्वर्थन्तु वचनमित्यादि। तु शब्दोऽवधारणे—हेत्वर्थमेवेति। हेतुशब्दोऽत्र कारकहेतुवचनः, न ज्ञापकहेतुवचनः; अन्यथा ह्यपरिहार एवायं स्यात्। हेतुरर्थो यस्य तत् तथोक्तम्। हेतौ वर्त्तमानस्यानोः कर्मप्रवचनीयसंज्ञा यथा स्यादित्येवमर्थमिदं वचनमित्यर्थः। किमर्थं पुनर्हेतौ वर्त्तमानस्य तस्येयं संज्ञा विधीयत इत्याह—हेतौ तृतीयायामित्यादि। संहिता हि वर्षणस्य हेतुः, अनुदुद्यज्ञः सेकस्य, तथा हि—संहितामनुनिशम्य श्रुत्वा प्रावर्षत्। अनुदुद्यज्ञश्चानुनि-

## तृतीयार्थे ॥ ८५ ॥

अनुशब्दस्तृतीयार्थे द्योत्ये कर्मप्रवचनीयसंज्ञो भवति। नदीमन्ववसिता सेना। पर्वतमन्ववसिता सेना। पर्वतेन सम्बद्धेत्यर्थः ॥

## हीने ॥ ८६ ॥

'हीनः' इति न्यून उच्यते, स चोत्कृष्टापेक्षः। तेनेयं हीनोत्कृष्टसंबन्धे संज्ञा विज्ञायते। हीने द्योत्येऽयमनुः कर्मप्रवचनीयसंज्ञो भवति। अनुशाकटायनं वैयाकरणाः। अन्वर्जुनं योद्धारः ॥

## उपोऽधिके च ॥ ८७ ॥

उपशब्दः अधिके हीने च द्योत्ये कर्मप्रवचनीयसंज्ञो भवति।

### पदमञ्जरी

*तृतीयार्थे* ॥ *नदीमन्ववसितेति*। सहार्थोऽत्र तृतीयार्थः। अन्ववपूर्वात् 'षिञ् बन्धने' इत्यस्मात् कर्त्तरि क्तः ॥

*हीने* ॥ *हीनोत्कृष्टसम्बन्धे संज्ञेति*। कर्मप्रवचनीयविभक्तिस्तु तेन व्यतिरिच्यमान उत्कृष्ट एव भवति, न हीने, अभिधानशक्तिस्वाभाव्यात् नोभाभ्यामेकयैव द्वितीयया द्विष्ठस्यापि सम्बन्धस्याभिधानात् षष्ठीवत् ॥

*उपोऽधिके च* ॥ अत्राप्यधिकिना विनाधिकस्यासम्भवाद् अधिकाधिकिसम्बन्धे

### न्यासः

शम्यासिञ्चत्। तत्र यदि हेतावनोरेषा संज्ञा नोच्येत शाकल्यस्य संहितामनु प्रावर्षदित्यादौ 'हेतौ' इति तृतीया स्यात्। तस्मात् तां बाधित्वा द्वितीयैव यथा स्यादित्येवमर्थं हेताविथं संज्ञाऽनोर्विधीयते ॥

**तृतीयार्थे** ॥ नदीमन्ववसितेति। सहार्थोऽत्र तृतीयार्थः! 'सहयुक्तेऽप्रधाने' इति सहार्थयोगे तृतीयाविधानात्। अन्ववसितेति। 'षिञ् बन्धने' इत्यस्य निष्ठायां रूपम् ॥

**हीने** ॥ **अनुशाकटायनं वैयाकरणा इति**। शाकटायनमपेक्ष्यान्ये वैयाकरणा हीना इति। अपेक्षयात्र जनितो यः सम्बन्धस्तेन व्यतिरिच्यते शाकटायन इति। ततः षष्ठ्यां प्राप्तायां तदपवादेन द्वितीया विधीयते। एकयैव विभक्त्योभयस्थोऽपि सम्बन्धो द्योतित इति। तेन सम्बन्ध्यन्तरवाचिनो वैयाकरणशब्दादपरा सम्बन्धविभक्तिर्न भवति ॥

**उपोऽधिके च** ॥ अधिकमध्यारूढमुच्यते। न चानधिकेन विनाधिकं सम्भवति। तेनाधिके सम्बन्धेऽध्यारूढक्रियाजनिते संज्ञेयं विज्ञायते। चकाराद्धीने च। उपसर्गा

उपखार्यां द्रोणः । उपनिष्के कार्षापणम् । हीने—उपशाकटायनं वैयाकरणाः ॥

अपपरी वर्जने ॥ ८८ ॥

अप-परी—शब्दौ वर्जने द्योत्ये कर्मप्रवचनीयसंज्ञौ भवतः । प्रकृतेन सम्बन्धिना कस्यचिदनभिसंबन्धः — वर्जनम् । अप त्रिगर्त्तेभ्यो वृष्टो देवः । परि परि त्रिगर्त्तेभ्यो वृष्टो देवः ।

वर्जन इति किम् ? ओदनं परिषिञ्चति ॥

आङ् मर्यादावचने ॥ ८९ ॥

पदमञ्जरी

संज्ञा विधीयते । विभक्तिरप्यधिकिन एव भवति, नाधिकात् । *उपखार्यां द्रोण इति* । खारशब्दो गौरादिः, खारी तावदस्ति, अधिकोऽपि तस्यां द्रोणोऽस्तीत्यर्थः । 'यस्मादधिकम्' इति सप्तमी ॥

*अपपरी वर्जने* ॥ *प्रकृतेन* वाक्ये प्रतिपाद्यमानेनेत्यर्थः । *परिपरित्रिगर्त्तेभ्य इति* । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी, 'परेर्वर्जने' इति द्विर्वचनम्, कर्मप्रवचनीयेन पञ्चमीसहितेन द्योतितेऽपि वर्जने भवति, उभयोरपि विधानसामर्थ्यात् । *परिषिञ्चतीति* । परिः सर्वतो भावे, अत्रास्याः संज्ञाया अभावाद् उपसर्गत्वे सति 'उपसर्गात्सुनोति' इति षत्वं भवति, 'शे मुचादीनाम्' इति नुम् ॥

*आङ् मर्यादावचने*[1] ॥ मर्या मरणधर्माणो मनुष्याः, औणादिको यप्रत्ययः,

न्यासः

द्रोण इति । खार्यां द्रोणोऽधिक इत्यर्थः । 'यस्मादधिकम्' इत्यादिना सप्तमी । तयैव सम्बन्धस्याभिहितत्वाद् द्रोणशब्दात् 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीया न भवति ॥

**अपपरी वर्जने** ॥ **प्रकृतेन सम्बन्धिनेति** । वर्षादिना । **कस्यचिदिति** । त्रिगर्त्तादेः । **अप त्रिगर्त्तेभ्य इति** । 'पञ्चम्यपाङ्परिभिः' इति पञ्चमी । **परि परि त्रिगर्त्तेभ्य इति** । 'परेर्वर्जने' इति द्विर्वचनम् ।

**ओदनं परिषिञ्चतीति** । सर्वतः सिञ्चतीत्यर्थः । 'शे मुचादीनाम्' इति नुम् । कर्मप्रवचनीयसंज्ञाया अभावादुपसर्गसंज्ञैव भवति । तेन 'उपसर्गात् सुनोति' इत्यादिना षत्वं भवति ।

**आङ् मर्यादावचने** ॥ यत्राङो मर्यादायामभिविधौ च कार्यमिच्छति तत्रोभयोरपि

१. 'मर्यादाभिविध्योः' इति मुद्रितः पाठोऽसाधुः ।

'आङ्' इत्येष शब्दो मर्यादावचने कर्मप्रवचनीयसंज्ञो भवति। अवधिः—मर्यादा। वचनग्रहणादभिविधिरपि गृह्यते। आ पाटलिपुत्राद् वृष्टो देवः। आकुमारं यशः पाणिनेः। आ सांकाश्यात्। आ मथुरायाः।

पदमञ्जरी

तैरादीयते मर्यादा, 'आतश्चोपसर्गे' इत्यङ्प्रत्ययः। अवधिर्मर्यादेति। ननु यत्रावधिः कार्येण युज्यते सोऽभिविधिः, यत्र न सा मर्यादा; अवधिस्तु साधारणं तत्कथमवधिर्मर्यादा? नायमत्रार्थो योऽवधिः सा मर्यादेति, किं तर्हि? या मर्यादा सोऽवधिरित्यर्थः। *वचनग्रहणादिति*। इह मर्यादायामिति वाच्ये वचनग्रहणं क्रियते, तस्यैतत्प्रयोजनमेवं यथा विज्ञायेत—उच्यतेऽस्मिन्निति वचनम्, मर्यादाया वचनमिति कर्मणि षष्ठ्याः समासः। मर्यादाशब्दो यत्रोच्यते 'आङ्मर्यादाभिविध्योः' इति तस्याङो ग्रहणम्, स चाभिविधिवृत्तिरपीत्यत्राप्यभिविधेर्ग्रहणं भवति।

यद्वा—वचनग्रहणसामर्थ्यादवान्तरभेदो न विवक्ष्यते, अवधिमात्रं गृह्यते। *आ मथुराया इति*। वृष्टो देव इत्यपेक्ष्यते, 'मन्थ विलोडने' औणादिकः कुरच्

न्यासः

ग्रहणं करोति, यथा—'आङ्मर्यादाभिविध्योः' इत्यादि। इह तु मर्यादाग्रहणमेव कृतम्, नाभिविधिग्रहणम्, अतोऽभिविधावनया संज्ञया न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्त्तुमाह—वचनग्रहणादित्यादि। वचनग्रहणे हि सति बहुव्रीहिर्लभ्यते। 'मर्यादा' इत्येतद्वचनं यत्र सूत्रे तन्मर्यादावचनम्। तत्रायमर्थो भवति—यत्र मर्यादाग्रहणमस्ति सूत्रे, तत्र य आङ् स कर्मप्रवचनीयसंज्ञो भवति। तत् पुनः सूत्रम्—'आङ् मर्यादाभिविध्योः' इत्येतत्—तत्र चाङ् मर्यादाभिविध्योर्वर्त्तमान उपात्त इत्युभयत्रापि भवति।

अन्ये त्वाहुः—मर्यादाविशेषो ह्यभिविधिः। सैव हि मर्यादा यदा कार्येणाभिसम्बध्यते तदाभिविधिरित्युच्यते, यदा तु नाभिसम्बध्यते तदा मर्यादेति। तत्रेह वचनग्रहणाद् विशेषो नाश्रीयते। तेन मर्यादावचनमात्र उक्तिमात्रे भवति; अन्यथा हि मर्यादायामित्येवं वाच्यं स्यात्, किं वचनग्रहणेनेति? यदि तर्हि मर्यादाविशेष एवाभिविधिरिति तर्हि 'आङ् मर्यादाभिविध्योः' 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः'[1] इत्यत्राभिविधिग्रहणं किमर्थम्? मर्यादासामान्यस्यैव प्रपञ्चार्थम्। मर्यादासामान्यस्यैवायं भेद इति प्रदर्शनार्थमित्यर्थः। आ पाटलिपुत्राद् वृष्टो देव इति। पूर्ववत् पञ्चमी। आ मथुराया इति। वृष्टो देव इत्यपेक्षते। एकत्रो-

१. १।१।१४ पा० सू० भाष्यस्थोऽयं भाष्यकारीयश्लोकांशः।

मर्यादावचने इति किम् ? ईषदर्थे क्रियायोगे च मा भूत् ॥

## लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः ॥ ९० ॥

पदमञ्जरी

प्रत्ययः । ईषदर्थे *क्रियायोगे च मा भूदिति* । वाक्यस्मरणयोस्त्वङित्त्वादेवाप्रसङ्गः, तत्रेषदर्थे आ कडारः पञ्चमी न भवति, क्रियायोगे समाहार इति 'गतिर्गतौ' इति निघातो भवति ॥

*लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः* ॥ लक्ष्यते येन तल्लक्षणम् = चिह्नं ज्ञापकम् । अयं प्रकार इत्थम्, प्रथमान्तादिदमस्थमुः, इह त्विदमा प्रत्यवमृश्यस्य सन्निहितस्य कस्यचिदभावात्प्रकारविशेषमात्रवृत्तिरित्थंशब्दः । 'भू प्राप्तौ' आत्मनेपदी, 'आ धृषाद्वा' इति णिजभावपक्षे गत्यर्थत्वात्कर्तरि क्तः । तत इत्थंशब्दादव्ययादपि वृत्तिविषये सत्त्वधर्मोपादानात्कर्मणि द्वितीया, श्रितादिषु गम्यादीनामिति समासः, कञ्चित् प्रकारं प्राप्त इत्थंभूतः, इत्थंभूतस्याख्यानमि-

न्यासः

दाहरणे वर्जनक्रियाजनितमवध्यवधिमद्भावलक्षणं सम्बन्धमाङ् द्योतयति । अपरत्र व्याप्तिक्रियाजनितम् ।

कः पुनर्वर्जनस्य मर्यादायाश्च विशेषः, येन पूर्वसूत्रे वर्जनमभिधायेह मर्यादाग्रहणं करोति ? अयमस्ति विशेषः—वर्जने हि तत्परित्यागेनान्यत्र सामान्येन वर्षणादिना सम्बन्धो गम्यते, यथा—आ त्रिगर्त्तेभ्यो वृष्टो देव इति, अत्र हि यस्यां दिशि व्यवस्थितो वक्तेदं वाक्यं प्रयुङ्क्ते, तस्यां दिशि यो देशो यस्तथान्यासु दिक्षु तत्र सर्वत्रैव त्रिगर्त्तान् वर्जयित्वा वृष्ट इति गम्यते । मर्यादायां त्विदं वाक्यं प्रयुङ्क्ते—आ पाटलिपुत्राद् वृष्टो देव इति, तत्सम्बन्धिन्यामेव दिशि यो व्यवस्थितो देशस्तस्य देशस्य वर्षणेन सम्बन्धः प्रतीयत इत्येष विशेषः ।

**ईषदर्थे क्रियायोगे मा भूदिति** । ईषदर्थ आकडार इति । क्रियायोगे समाहरतीति । पूर्वत्र संज्ञाया अभावात् पञ्चमी न भवति । इतरत्र 'गतिर्गतौ' इति निघातो भवति । यस्तु वाक्यस्मरणयोराकारो वर्त्तते, तस्याङित्त्वादिह ङकारोच्चारणादेव संज्ञाया अप्रसक्तिः ।

**लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः** ॥ लक्षणं ज्ञापको हेतुश्चिह्नमिहाभिप्रेतम् । लक्ष्यते चिह्न्यते येन तल्लक्षणम् । कश्चित्प्रकारमापन्नमित्थम्भूतम्, तस्याख्यानमित्थम्भूताख्यानम् । 'भू प्राप्तौ' आत्मनेपदी । तस्माद् 'आ धृषाद्वा' इति विभाषितणिचो यदा चुरादिणिज् नास्ति, तदा क्तान्तस्य भूत इति रूपं भवति । स्वीक्रियमाणोंऽशो भागः यस्त्वस्वीक्रियमाणोंऽशो भागशब्दः प्रयुज्यते—प्रियङ्गोर्भागो नगरस्य भाग इति, स स्वीक्रियमाणांशसादृश्यात् । पदार्थान् व्याप्तुमिच्छा वीप्सा ।

लक्षणे, इत्थंभूताख्याने, भागे, वीप्सायां च विषयभूतायाम्—प्रति, परि, अनु—इत्येते कर्मप्रवचनीयसंज्ञा भवन्ति। लक्षणे तावत्—वृक्षं प्रति विद्योतते विद्युत्। वृक्षं परि। वृक्षमनु। इत्थम्भूताख्याने—साधुर्देवदत्तो मातरं प्रति। मातरं परि। मातरमनु। भागे—यदत्र मां प्रति स्यात्। मां परि स्यात्। मामनु स्यात्। वीप्सायाम्—वृक्षं वृक्षं प्रति सिञ्चति, परि सिञ्चति, अनु सिञ्चति।

पदमञ्जरी

त्थंभूताख्यानम्। स्वीक्रियमाणोंऽशो भागः, यस्त्वंशमात्रे प्रयोगः प्रियङ्गोर्भाग इति स भागसादृश्यात्। व्याप्तुमिच्छा वीप्सा, सा चाष्टमे स्पष्टयिष्यते, एते लक्षणादयो यथा विभक्तिसमीपादयोऽव्ययार्था नेवं प्रत्यादीनामर्थाः, किं तर्हि? संज्ञायाः प्रत्यादीनां विषयत्वेन निर्दिष्टाः इत्याह—*वीप्सायां च विषयभूतायामिति*। एतच्च लिङ्गविपरिणामेन लक्षणादिभिरपि सम्बन्धनीयम्। *वृक्षं प्रतीति*। अत्र वृक्षो लक्षणं विद्योतनस्य, प्रत्यादयस्तु प्राप्तिक्रियाजनितो लक्ष्यलक्षणभाव इत्येवं सम्बन्धविशेषेऽवस्थापयन्ति—वृक्षं प्राप्य विद्योतते, वृक्षे प्रदेशे विद्योतत इत्यर्थः। साधुरिति। अत्रापि प्राप्तिक्रियाजनित एव विषयविषयिभावसम्बन्धः, यथा वृक्षे दृष्टे विद्योतनं लक्ष्यते, नैवमत्रासाधुत्वापत्तिरितीत्थम्भूताख्यानग्रहणम्। *यदत्र मामिति*। यो मम भागः स दीयतामित्यर्थः। अत्र स्वीकरणक्रियाजनितः स्वस्वामिसम्बन्धः। *वृक्षं वृक्षमिति*। वीप्सा द्विर्वचनेन द्योत्यते। परिशब्दस्तु

न्यासः

एते च लक्षणादयः प्रत्यादीनां न द्योत्याः। किं तर्हि? विषयभूताः, अत एवाह—विषयभूतायामिति। एतच्चाभिधेयवल्लिङ्गवचनानि भवन्तीति लिङ्गविपरिणामं कृत्वा लक्षणादिभिः सम्बध्यते। यदि लक्षणादयः प्रत्यादीनां न द्योत्याः, तर्हि किं ते द्योतयन्ति? सम्बन्धविशेषम्। वृक्षं प्रति विद्योतते विद्युदिति। अत्र वृक्षो लक्षणम्, विद्योतमाना विद्युल्लक्ष्या; सा हि वृक्षं प्राप्य विद्योतत इति तयोः प्राप्तिक्रियाजनितोऽत्र लक्ष्यलक्षणभावः सम्बन्धः प्रतिशब्देन द्योत्यते। साधुर्देवदत्तो मातरं प्रतीति। प्रतिना देवदत्तस्य मातृविषया साधुभावापत्तिराख्यायते। अत्रापि मातरं प्राप्य साधुभावापत्तिरिति प्राप्तिक्रियाजनित एव मातुः साधुभावापत्तेश्च विषयविषयिभावलक्षणः सम्बन्धः प्रतिनाऽऽख्यायते। यदत्र मामित्यादि। यो भागो मामभिभजते स दीयतामित्यर्थः। अत्रापि विभजनक्रियाजनितः स्वीकारक्रियाजनितो वा स्वस्वामिभावः सम्बन्धः। मामिति। अस्मच्छब्दस्य 'त्वमावेकवचने' इति मादेशः। 'द्वितीयायाञ्च' इत्यात्त्वम्। वृक्षं वृक्षं प्रति सिञ्चतीति। अत्र वीप्सा द्विर्वचनेनैव द्योत्यते। प्रति-

लक्षणादिष्विति किम् ? ओदनं परिषिञ्चति ।

अथ परिशब्दयोगे पञ्चमी कस्मान्न भवति––'पञ्चम्यपाङ्परिभिः' इति ? वर्जनविषये सा विधीयते, अपशब्दसाहचर्यात् ।

अभिरभागे ॥ ९१ ॥

लक्षणादिष्वेव भागवर्जितेष्वभिः कर्मप्रवचनीयसंज्ञो भवति । वृक्षमभि विद्योतते । साधुर्देवदत्तो मातरमभि । वृक्षमभि सिञ्चति ।

अभाग इति किम् ? भागः स्वीक्रियमाणोंऽशः । यदत्र ममाभिष्यात् तद्दीयताम् । यदत्र मम भवति तद्दीयतामित्यर्थः ॥

पदमञ्जरी

क्रिययैव सम्बध्यते, द्वितीया चेह कर्मणि । कर्मप्रवचनीयसंज्ञा ह्युपसर्गसंज्ञा-निवृत्त्यर्था तेन 'उपसर्गात्सुनोति' इति षत्वं न भवति । *अशब्दसाहचर्यादिति* । परिशब्दोऽयं दृष्टापचारो वर्जने चावर्जने च कर्मप्रवचनीयः । अपशब्दस्तु वर्जने एव । कर्मप्रवचनीयाधिकारे पञ्चमी विधीयते, तत्र साहचर्यं व्यवस्थाहेतुः ॥

*अभिरभागे* ॥ *अभागइति किमिति* । अभिधेयं प्रयोजनं च परिज्ञातुं प्रश्नः । अत एवोभयं दर्शयति । भागः स्वीक्रियमाणोंऽशः । *यदत्र ममाभिष्यादिति* ।

न्यासः

शब्दस्य तु सेकक्रियाजनितो वृक्षाणां य सम्बन्धः साध्यसाधनभावलक्षणः स एव द्योत्यः । वृक्षादिनिमित्तं साधनम्, सेकः साध्यः । द्वितीया चेह सकर्मकत्वात् सिचेः सेकेन व्याप्तुमिष्टतमानां वृक्षाणां कर्मत्वे सति 'कर्मणि द्वितीया' इत्यनेनैव सिद्धा । कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया निवर्त्तितत्वाद् 'उपसर्गात् सुनोति' इत्यादिना षत्वं न भवति ।

परिषिञ्चतीति । सर्वतः सिञ्चतीत्यर्थः । अथेत्यादि चोद्यम् । वर्जनेत्यादि परीहारः । अपशब्दसाहचर्यादित्यत्रेयमुपपत्तिः । तत्र हि कर्मप्रवचनीयाधिकाराद् वर्जनार्थस्यापशब्दस्य ग्रहणं वर्जन एव । तस्य 'अपपरी वर्जने' इति कर्मप्रवचनीय-संज्ञा विहिता । तस्मात् तेन साहचर्याद् वर्जनार्थस्य परेर्ग्रहणम् । अतस्तेनापि योगे वर्जन एव विषय इयं पञ्चमी विधीयते, न लक्षणादिषु ॥

अभिरभागे ॥ यदत्र मामभिष्यादिति । 'श्नसोरल्लोपः' इत्यकारलोपः । कर्म-प्रवचनीयसंज्ञाया अभावादुपसर्गत्वमस्त्येव । तेन 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वम् । मामिति । यद्यप्यस्तिरकर्मकस्तथाप्यकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्तीति कर्मणि द्वितीया । ननु चाभिशब्दो भागसम्बन्धस्य द्योतक इति तेनास्तेः सम्बन्धो नास्ति; तत् कथं सकर्मकता ? नैतदस्ति; अस्तिसम्बन्धद्वारेण ह्यभिशब्दो

## प्रतिः प्रतिनिधिप्रतिदानयोः ॥ ९२ ॥

मुख्यसदृशः = प्रतिनिधिः । दत्तस्य प्रतिनिर्यातनम् = प्रतिदानम् । प्रतिनिधिविषये प्रतिदानविषये च प्रतिः कर्मप्रवचनीयसंज्ञो भवति । अभिमन्युरर्जुनतः प्रति । माषानस्मै तिलेभ्यः प्रति यच्छति ॥

## अधिपरी अनर्थकौ ॥ ९३ ॥

### पदमञ्जरी

ननु अन्वर्थसंज्ञाविज्ञानादेवात्र न भविष्यति, संप्रत्येव ह्यसौ विभजनक्रियां द्योतयति ? प्रत्यादीनामपि तर्हि न स्याद् ? वचनाद्भविष्यति । अभेरपि तर्हि प्राप्नोति, तस्माद् 'अभागे' इति वक्तव्यम्, तत्रोपसर्गत्वात् 'उपसर्गप्रादुर्भ्यामस्तियच्परः' इति षत्वम् । अथैवं कस्मान्न कृतम् —'लक्षणेत्थंभूताख्यानवीप्सास्वभिः, प्रतिपरी भागे च, चकाराल्लक्षणादिषु च, अनुर्लक्षणतृतीयार्थयोश्च, चकाराद्भागे लक्षणादिषु च, ततो हीने, उपोऽधिके च'; इत्येवं हि द्विरनोर्ग्रहणम्, अभाग इति च न वक्तव्यं भवति । एवं हि द्विश्चग्रहणं क्रियते इति पदयोः साम्यम्, अक्षरलाघवं तु नादृतम् ॥

*प्रतिः प्रतिनिधिप्रतिदानयोः* ॥ *मुख्सदृश इति* । मुख्यः क्वचित्कार्ये शत्रुवधादौ दृष्टसामर्थ्यः । यस्तु तदभावे तत्कार्यकरणाय प्रतिनिधीयते उपादीयते स प्रतिनिधिः, कर्मणि किप्रत्ययः । *दत्तस्येति* उत्तमर्णेन । *प्रतिनिर्यातनमिति* । प्रत्यर्पणम् । *अर्जुनतः प्रतीति* । 'प्रतिनिधिप्रतिदाने च यस्माद्' इति पञ्चमी, प्रतियोगे पञ्चम्यास्तसिः । *माषानिति* । तिलान् गृहीत्वा माषान् ददातीत्यर्थः ॥

*अधिपरी अनर्थकौ* ॥ ननु चानर्थकयोः क्रियायोगाभावाद् गत्युपसर्गसंज्ञयोः

### न्यासः

भागसम्बन्धं द्योतयति, अन्यथा हि यदि तस्यास्तिना योगो न स्यात् तदोपसर्गसंज्ञापि न स्यात् । ततश्चोपसर्गसंज्ञानिबन्धनमभिष्यादिति षत्वमपि न स्यात् ॥

प्रतिः प्रतिनिधिप्रतिदानयोः ॥ अभिमन्युरर्जुनतः प्रतीति । अर्जुनो मुख्यः । तत्सदृशोऽभिमन्युः । सोऽर्जुनमनुकरोतीत्यनुकरणक्रियाजनितः सम्बन्धविशेषोऽनुकार्यानुकरणभावः प्रतिना द्योत्यते । 'प्रतिनिधिप्रतिदाने च यस्मात्' इति पञ्चमी । प्रतियोगे 'पञ्चम्यास्तसिः' । माषानस्मै तिलेभ्य इति । तिलानां पूर्वदत्तानां माषाणां प्रतिदानमिह निर्यातनम् । तिलान् गृहीत्वा माषान् ददातीत्यर्थः । दानग्रहणक्रियाजनितोऽत्र सम्बन्ध उत्तमर्णाधमर्णभावलक्षणः ॥

अधिपरी अनर्थकौ ॥ अनर्थान्तरवाचिनाविति । एतेनानर्थान्तरवाचित्वादनर्थकावित्युक्तम् , न त्वर्थाभावादिति दर्शयति । यदि ह्यविद्यमानार्थत्वादनर्थकौ स्याताम् ,

अधिपरी शब्दौ अनर्थकौ अनर्थान्तरवाचिनौ कर्मप्रवचनीयसंज्ञौ भवतः । कुतोऽध्यागच्छति । कुतः पर्यागच्छति ।

गत्युपसर्गसंज्ञाबाधनार्था कर्मप्रवचनीयसंज्ञा विधीयते ॥

**पदमञ्जरी**

प्राप्त्यभावान्न तद्बाधनार्थं कर्मप्रवचनीयसंज्ञाविधानमुपपद्यते, नापि परिशब्दयोगे पञ्चमीविधानार्थम्, तद्विधौ वर्जनार्थस्य ग्रहणाद् । अपादानत्वाच्च सिद्धा पञ्चमी, यथाऽधिशब्दस्य प्रयोगे – कुतोऽध्यागच्छतीति । अत एव द्वितीयाविधानार्थमपि नोपपद्यते; तस्मादनर्थकयोः संज्ञाविधानमनर्थकमित्यत आह—*अनर्थान्तरवाचिनाविति* । यथा तिष्ठति, नितिष्ठति, परिभवतीत्यादौ धातूपात्तादर्थादर्थान्तरवाचित्वम्, नैवमत्रार्थान्तरवाचित्वम्; किन्त्वागच्छतीति प्रयोगे योऽर्थः स एवाधिपरियोगे ताभ्यामुच्यते । तदत्र विषये धातोरधिपर्योश्च सहाभिधायित्वम्; यथा – गजशब्दे योऽर्थः स एव मतङ्गज इति सर्वैः सहाभिधीयते । एवं वृषशब्दे योऽर्थः स एव वृषभशब्दे । तदेवमनर्थान्तरवाचित्वादनर्थककल्पत्वादनर्थकावित्युक्तम्, न त्वभावात् । तयोश्च गतिसंज्ञाबाधाय कर्मप्रवचनीयसंज्ञा विधेयेति दर्शितं भवति । *कुतोऽध्यागच्छतीति* । किंशब्दात् 'अपादाने चाहीयरुहोः' इति तसिः, तस्य 'तसेश्च' इति तसिलादेशः, 'गतिर्गतौ' इति निघाताभावः ॥

**न्यासः**

निरर्थकमिदं सूत्रं स्यात् । तथा हि—कर्मप्रवचनीयसंज्ञा गत्युपसंज्ञाबाधनार्थाऽनेन विधीयते। न चानर्थकयोरधिपर्योर्गत्युपसर्गसंज्ञाप्राप्तिरस्ति। यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपर्गसंज्ञाविधानात् । अनर्थकयोश्च क्रियायोगासम्भवात् । कुतोऽध्यागच्छतीत्यादि । कुत इत्यपादाने पञ्चमी । कर्मप्रवचनीयेति द्वितीया न भवति, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति वचनात् । सूत्रारम्भस्य तु प्रयोजनमाख्यातमेव । कुत इति, किंशब्दात् 'पञ्चम्यास्तसिल्' इति तसिल्, 'कु तिहोः' इति कुभावः । कर्मप्रवचनीयसंज्ञया गत्युपसर्गसंज्ञयोर्बाधितत्वाद् 'गतिर्गतौ' इति निघातो न भवति । ननु चागच्छतीत्युक्त आगमनं विशिष्टं प्रतीयते, अध्यागच्छति पर्यागच्छतीति—अधिपरियोगे त्वागमनस्योपरिभावः सर्वतोभावश्चावगम्यत इत्यपरो विशेषः, तत् कथमनर्थान्तरवाचित्वमनयोः ? नैतदस्ति, यदा तयोरप्यर्थयोः प्रकरणादेः कुतश्चिदवगतयोरधिपरी प्रयुज्येते तदा तयोरनर्थान्तरवाचित्वं वेदितव्यम् । कथं पुनरवगतार्थयोः प्रयोगः, 'उक्तार्थानामप्रयोगः' इति वचनात् ? सत्यम्, अवगतार्थस्यापि प्रयोगो दृश्यते, यथा—'ब्राह्मणौ द्वौ' इति । लोकस्य प्रयोगे गुरुलाघवं प्रत्यनादरात् ॥

## सुः पूजायाम् ॥ ९४ ॥

सुशब्दः पूजायामर्थे कर्मप्रवचनीयसंज्ञो भवति । सुसिक्तं भवता । सु स्तुतं भवता । धात्वर्थः स्तूयते । उपसर्गसंज्ञाश्रयं षत्वं न भवति ।

पूजायामिति किम् ? सुषिक्तं किं तवात्र ॥

## अतिरतिक्रमणे च ॥ ९५ ॥

अतिशब्दः अतिक्रमणे चकारात्पूजायां च कर्मप्रवचनीयसंज्ञो भवति । निष्पन्नेऽपि वस्तुनि क्रियाप्रवृत्तिः = अतिक्रमणम् । अति सिक्तमेव भवता, अति स्तुतमेव भवता । पूजायाम्—अति सिक्तं भवता । अति स्तुतं भवता । शोभनं कृतमित्यर्थः ।

## अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ॥ ९६ ॥

पदार्थे, संभावने, अन्ववसर्गे, गर्हायाम्, समुच्चये च वर्तमानः अपिः कर्मप्रवचनीयसंज्ञो भवति । पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः ।

### पदमञ्जरी

*सुः पूजायाम् ॥ सुसिक्तं भवतेति* । भवच्छब्दात्कर्तरि तृतीया । कर्मप्रवचनीययुक्ते द्वितीया न भवति; 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति । *सुषिक्तं किं तवात्रेति* । क्षेपोऽयम्, न पूजा ॥

*अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु ॥ पदान्तरस्येत्यादि* । स्वार्थस्तावदव्यभिचारान्न गृह्यते इति पदान्तरस्यार्थः पदार्थः । तत्रापि पदान्तरप्रयोगे सत्यपिः प्रयुज्यमानस्तदर्थे कञ्चिद्विशेषमाधत्ते । यथा—नीलशब्द उत्पले, न तु तस्मिन्नेवान्यूनानतिरिक्ते वर्तते; तथा सति पर्यायत्वप्रसङ्गेनाप्रयोगार्हत्वात् । अतः पदा-

### न्यासः

सुः पूजायाम् ॥ सुसिक्तं भवतेति । भवच्छब्दात् कर्त्तरि तृतीया । द्वितीया तु पूर्ववदेव न भवति । धात्वर्थः स्तूयत इति । शोभनोद्भावनं स्तुतिः, सैव तस्य पूजा । उपसर्गाश्रयं षत्वं न भवतीति । कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया बाधितत्वादिति भावः । सुषिक्तं किं तवात्रेति । क्षेपोऽयम् , न पूजा ॥

अतिरतिक्रमणे च ॥ अतिस्तुतमेव भवतेति । निष्पन्नेऽपि फले स्तुतिः प्रवृत्तेत्यर्थः । शोभनं कृतमित्यर्थ इति । पूजामाविष्करोति ।

अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु ॥ पदार्थे इति । अन्यस्य पदस्यार्थो

सर्पिषोऽपि स्यात् । मधुनोऽपि स्यात् । मात्रा, बिन्दुः; स्तोकमित्य-स्यार्थेऽपिशब्दो वर्त्तते । संभावनम् = अधिकार्थवचनेन शक्तेरप्रतिघाता-विष्करणम् । अपि सिञ्चेन्मूलकसहस्रम् । अपि स्तुयाद्राजानम् । अन्ववसर्गः = कामचाराभ्यनुज्ञानम्--अपि सिञ्च, अपि स्तुहि । गर्हा = निन्दा–धिग्जाल्मं देवदत्तम् अपि सिञ्चेत्पलाण्डुम्, अपि

पदमञ्जरी

न्तरस्याप्रयोग एव तदर्थे प्रवृत्तो भवतीति भावः । *सर्पिषोऽपि स्यादिति* । प्रार्थनायां लिङ्, तस्या एव दुर्लभविषयतामपिशब्दो द्योतयन् स्यादित्यनेन सम्बध्यते इति षत्वप्रसङ्गः, दुर्लभत्वं च विषयस्यैव भवति, यदि तस्य बिन्दुमात्रमपि न लभ्यत इत्यत्रापिशब्दसामर्थ्याद्बिन्दुरिति गम्यते, तदाह—*मात्राबिन्दुस्तोकमित्यस्यार्थेऽपि-शब्दो वर्त्तत इति* । तदुपजनिते च व्यतिरेके 'सर्पिष' इति षष्ठी । द्वितीया तु न भवति, अपिना योगाभावात् । स हि स्यादित्यनेन सम्बध्यत इत्युक्तम् । *अधिकार्थ-वचनेनेति* । यावत्यर्थेऽस्य सामर्थ्यं ततोऽधिकमर्थं ब्रुवन् यत् सेकादौ शक्तिमावि-ष्करोति तत्सम्भावनमित्यर्थः । *अपि सिञ्चेदिति* । सम्भावने लिङा तस्यैव दुष्कर-विषयतामपिराह । कामचार इच्छाप्रवृत्तिः । *अपि सिञ्चेदेति* । सिञ्च वा मा वा, स्तुहि वा मा वा, यथेष्टं कुर्वित्यर्थः । जाल्मोऽपशब्दः । *अपि सिञ्चेदिति* । गर्हार्थे

न्यासः

लक्ष्यते । न स्वार्थः, नापि स्वसम्बन्धिनः; पदस्यार्थः पदार्थः । स्वपदार्थग्रहणे, स्वसम्बन्धिपदार्थग्रहणे वा पदार्थग्रहणमनर्थकं स्यात् । अपिशब्दस्य हि योऽर्थः यश्चा-पिशब्दसम्बन्धिनः स्यादित्यादेः पदस्य, स पदार्थ एवेति किं पदार्थग्रहणेन ? तस्मात् पदार्थग्रहणसामर्थ्याद् विशिष्टपदस्यार्थो विज्ञायत इत्याह–पदान्तरस्येत्यादि । सर्पिषोऽपि स्यादिति । कर्मप्रवचनीयसंज्ञयोपसर्गसंज्ञाया निवर्तितत्वाद् 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वं न भवति । अथ सर्पिःशब्दाद् द्वितीया कथं न भवति ? अपिशब्देन तस्य योगाऽसम्भवात् । सर्पिषो हि या मात्रा सापिशब्देन युक्ता, न सर्पिः । मात्राशब्दात् तर्हि कस्मान्न भवति ? तस्य प्रयोगाभावात् । यदा तु प्रयुज्यते, तदा कर्मप्रवचनीय-संज्ञैव नास्ति; अप्रयुज्यमानस्य पदान्तरस्यार्थे तद्विधानात् । अधिकार्थवचनेनेति । अधिकार्थो मूलकसहस्रसेकादिः, तस्य वचनेन सेकादावर्थे क्रियायां यच्छक्तेरप्रति-घातस्याविष्करणम् = प्रकाशनं तत् सम्भावनम् । अपि सिञ्चेन् मूलकसहस्रम् । अपि स्तुयाद्राजानमिति । तस्य सेके स्तुतौ च सामर्थ्यं न विहन्यत इत्यर्थः । 'सम्भावनेऽल-मिति चेत् सिद्धाप्रयोगे' इति लिङ् । कामाचाराभ्यनुज्ञानमिति । कामाचारः =

स्तुयाद् वृषलम् । समुच्चये—अपि सिञ्च । अपि स्तुहि । सिञ्च च स्तुहि च । उपसर्गसंज्ञाबाधनात् षत्वं न भवति ॥

अधिरीश्वरे ॥ ९७ ॥

ईश्वरः = स्वामी, स च स्वमपेक्षते । तदयं स्वस्वामिसम्बन्धे कर्मप्रवचनीयसंज्ञो भवति । तत्र कदाचित्स्वामिनः कर्मप्रवचनीयविभक्तिः सप्तमी भवति कदाचित्स्वात् । अधि ब्रह्मदत्ते पञ्चालाः । अधि पञ्चालेषु ब्रह्मदत्तः ॥

पदमञ्जरी

लिङ् । *उपसर्गसंज्ञाबाधनादिति* । स्यादित्यत्र 'उपसर्गप्रादुर्भ्याम्' इति सिचः 'उपसर्गात्सुनोति' इति षत्वप्रसङ्गः ॥

*अधिरीश्वरे* ॥ *तदयमिति* । यथा 'हीने' इत्यत्र हीनोत्कृष्टसम्बन्धे संज्ञा, 'उपोऽधिके च' इत्यत्राधिकाधिकिसम्बन्धे, तथात्रापीत्यर्थः । विभक्तिस्तु तत्रान्यतरस्मादुच्यते, इह तु न तथेत्याह—*तत्र कदाचिदिति* । 'यस्य चेश्वरवचनम्' इत्यत्रार्थद्वयम्—ईश्वरशब्दो भावप्रधानः, यस्य स्वामिन ईश्वरत्वमुच्यते तस्मात्स्वामिनः सप्तमीत्येकः, यस्य स्वस्येश्वर उच्यते तस्मात्स्वात्सप्तमीत्यपरः । तत्र यदा स्वाम्यर्थे व्यतिरेकविवक्षा तदा ततः सप्तमी, स्वस्य तु व्यतिरेके तत इति । न पुनरुभाभ्यां युगपद्भवति, एकयैव विभक्त्या द्विष्ठस्यापि सम्बन्धस्याभिधानादिति मत्वा 'कदाचिद्' इत्युक्तम् । *ब्रह्मदत्त इति* । ब्रह्मदत्तस्य स्वाः पञ्चाला इत्यर्थः । *अधिपञ्चालेष्विति* । पञ्चालानां ब्रह्मदत्तः स्वामीत्यर्थः ॥

न्यासः

इच्छया प्रवृत्तिः, तस्याम्यनुज्ञानं कामचाराभ्यनुज्ञानम् । अपि सिञ्च, अपि स्तुहीति । सिञ्च वा, स्तुहि वा यथेष्टमभ्यनुज्ञातोऽसीत्यर्थः । धिग् जाल्मं देवदत्तमिति ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ॥

इत्युपसंख्यानाद् द्वितीया । अपि सिञ्चेत् पलाण्डुमिति । 'अर्हे कृत्यतृचश्च' इति लिङ् । पलाण्डुमिति कर्मणि द्वितीया । अपि सिञ्च, अपि स्तुहीति । एकस्मिन् कर्त्तरि स्तुतिसेकक्रिययोश्चीयमानता । अत्र समुच्चयः । सिञ्च च स्तुहि चेति प्रसिद्धसमुच्चयार्थस्य चशब्दस्य प्रयोगेण तमेव समुच्चयमुदाहरणे व्यक्तीकरोति ॥

अधिरीश्वरे ॥ तदयं स्वस्वामिसम्बन्ध इति । परिपालनादिक्रियाजनितोऽत्र सम्बन्धः । तत्रेत्यादि । सर्वत्र हि सम्बन्धे किञ्चिदनूद्यते, किञ्चिदाख्यायते । यत् प्रसिद्धं तदनूद्यते, यदप्रसिद्धं तदाख्यायते = विधीयते, ज्ञाप्यते; यथा—यः कुण्डली स देवदत्त

## विभाषा कृञि ॥ ९८ ॥

अधिः करोतौ विभाषा कर्मप्रवचनीयसंज्ञो भवति। यदत्र मामधिकरिष्यति। कर्मप्रवचनीयसंज्ञापक्षे गतिसंज्ञाबाधनात् 'तिङि चोदात्तवति' इति निघातो न भवति ॥

## लः परस्मैपदम् ॥ ९९ ॥

'लः' इति षष्ठी आदेशापेक्षा। लादेशाः परस्मैपदसंज्ञा भवन्ति।

### पदमञ्जरी

*विभाषा कृञि* ॥ 'अधिरीश्वरे' इत्यनुवृत्तेः प्राप्ते विभाषेयम्। यदत्र *मामधिकरिष्यतीति*। अधिपूर्वः करोतिर्विनियोगे वर्त्तते, यथा— अधिकृतोऽयमिह ग्रामे। 'स्वरितेनाधिकारः' इति च, ईश्वरो भवत्येवमत्र मां विनियोक्ष्यत इत्यर्थः। कर्मणि द्वितीयेषा। यद्येवम्, संज्ञाविधानस्य किं प्रयोजनं तत्राह—*कर्मप्रवचनीयसंज्ञापक्ष इति*। 'निपातैर्यद्यदि' इति निघातप्रतिषेधात् स्यप्रत्ययस्वरेण तिङन्तमुदात्तवत् ॥

*लः परस्मैपदम्* ॥ *ल इति षष्ठीति*। अथ प्रथमाबहुवचने को दोषः, 'आमः' इति लावस्थायामेव लुप्यमानस्य लिटः संज्ञा स्यात्। ततश्चेक्षामित्यत्राम्न स्याद्, न ह्यतो लिट्परः सम्भवति, शेषादेव परस्मैपदमिति नियमात्? ज्ञापकात्

### न्यासः

इति। कुण्डलित्वानुवादेन देवदत्तत्वं विधीयते। यच्च विधीयते तत् प्रधानम्, इतरदप्रधानं विशेषणम्। तत्र यदा स्वमप्रसिद्धत्वाद्विधीयते तदा स्वामी प्रधानत्वाद् व्यतिरेकमापद्यत इति तत इव कर्मप्रवचनीयसंज्ञायुक्तत्वाद् व्यतिरेकनिबन्धनविभक्तौ षष्ठ्यां प्राप्तायां तदपवादः 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' इति सप्तमी भवति। तथैव सम्बन्धस्य द्योतितत्वात् स्वात् प्रथमैव भवति, न सप्तमी। यदा तु स्वाम्यप्रसिद्धत्वाद् विधीयते, तदा विपर्ययो वेदितव्यः ॥

**विभाषा कृञि** ॥ अधिरीश्वर इति वर्त्तते। तेन प्राप्ते विभाषेयम्। अधिपूर्वः करोतिर्विनियोगे वर्त्तते। विनियुक्तस्यैवैश्वर्यं सम्पद्यते। यदत्र मामधिकरिष्यतीति। मामिति कर्मणि द्वितीया। अधिकरिष्यतीति, अत्र 'निपातैर्यद्यदि' इत्यादिना निघाते प्रतिषिद्धेऽस्य प्रकृतिस्वरेणाद्युदात्तत्वं भवति ॥

**लः परस्मैपदम्** ॥ ल इति प्रथमा वा स्यात्? षष्ठी वा? तत्र यदि प्रथमा स्याल्लकारस्यैव परस्मैपदसंज्ञा स्यात्, न तदादेशानां तिबादीनाम्। कामम्, तेषामपि स्थानिवद्भावेन स्यात्। 'तङानावात्मनेपदम्' इत्यत्र तु 'लः' इत्यनेन तङानयोः सम्बन्धो नोपपद्येत, न हि तङानौ लौ भवतः। अत्र तङानभावी लकार एव तङाना-

तिप्, तस्, झि। सिप्, थस्, थ। मिप्, वस्, मस्। शतृक्वसू च।
परस्मैपदप्रदेशाः—'सिचि वृद्धिः परस्मैपदेषु' इत्येवमादयः॥

पदमञ्जरी

सिद्धम्, यदयमाम्प्रत्ययवदित्याह, तज् ज्ञापयति—भवत्यात्मनेपदिभ्योऽप्यामिति। अयं तर्हि दोषो लकारस्यैव संज्ञा स्यान्न तदादेशानां तिबादीनामिति ? स्थानिवद्भावात्तेषामपि भविष्यति। 'तङानावात्मनेपदम्' इत्यत्र तर्हि 'ल' इति प्रथमान्तस्य तङानाभ्यां सम्बन्धो न स्यात्, न हि तङानौ लौ भवतः। ननु चैवं विज्ञास्यते—तङानभावी लकार एव, तङानावित्युक्त इति। एवमपि गत्यन्तरे सति न क्लिष्टकल्पना युक्ता, तस्मात् 'लः' इति षष्ठी। *आदेशापेक्षेति*। न च संज्ञापेक्षा, लकारस्य परस्मैपदमिति संज्ञा भवतीति, कुतः ? सामानाधिकरण्येन प्रायेण संज्ञाविधानात्। किञ्च—जसि यो दोषः, सोऽस्मिन्नपि स्यात्; उभयत्र लकारस्य संज्ञित्वात्। तस्मादादेशापेक्षा षष्ठी। यद्येवम्, अनवकाशा पुरुषसंज्ञा परस्मैपदसंज्ञां शतृक्वसोः सावकाशां बाधेत। जसि तु लकारस्य परस्मैपदसंज्ञा तिङां तु पुरुषसंज्ञेति भिन्नविषयत्वान्नास्ति बाधप्रसङ्गः। यद्यपि जस्पक्षेऽपि तिबादीनामादेशानामपि 'स्थानिवदादेशः' इत्यनेन परस्मैपदसंज्ञा भविष्यति; तथापि तस्या अनाकडारीयत्वात्समावेशसिद्धिः। षष्ठीपक्षेऽपि ज्ञापकात्सिद्धम्, यदयम् 'सिचि वृद्धिः परस्मैपदेषु' इत्याह, तज् ज्ञापयति—भवति तिङामप्येषा संज्ञेति। न हि सिज्विषये शतृक्वसू सम्भवतः, सामान्यापेक्षं च ज्ञापकमिति आत्मनेपदसंज्ञया पुरुषसंज्ञानां समावेशसिद्धिः, अन्यथा परस्मैपदेषु सावकाशाः पुरुषसंज्ञाः तङ्क्ष्वनवकाशयात्मनेपदसंज्ञया बाध्येरन्। अथ वा—पुरुषसंज्ञायां परस्मैपदात्मनेपदग्रहणानुवृत्तेरयमर्थो भवति, लटः परस्मैपदात्मनेपदसंज्ञकाः सतस्त्रीणि त्रीणि पदानि भूत्वा प्रथमादिसंज्ञा भवन्तीति तेन समावेशसिद्धिः॥

न्यासः

वित्येवमभिहितः। साहचर्याद्वा लादेशौ तङानावेव। 'ल' इत्युक्ताविति व्याख्येयम्। तथा च व्याख्यानद्वारेणेष्टार्थप्रतिपत्तौ साध्यायां प्रतिपत्तिगौरवं स्यात्। षष्ठीपक्षे त्वेष दोषो नास्ति, अतस्तमाश्रित्याह—'लः' इति षष्ठीत्यादि। नन्वयमपि पक्षो दोषवानेव, लादेशस्य हि परस्मैपदसंज्ञा विधीयमाना तिङां न स्यात्, तेषां परत्वात् 'तिङस्त्रीणि त्रीणि' इत्यादिना प्रथमपुरुषादिसंज्ञया भवितव्यम्। परस्मैपदसंज्ञायास्तु शतृक्वसोश्चावकाशः ? नैष दोषः; यदयं 'सिचि वृद्धिः परस्मैपदेषु' इत्याह, तज् ज्ञापयति—भवति च तिङां परस्मैपदसंज्ञेति। स हि परस्मैपदे परे सिचि विधीयते, न हि सिज्विषये शतृक्वसू सम्भवतः। 'तिप्तस्झि' इत्यादि रूपोदाहरणमात्रम्॥

## तङानावात्मनेपदम् ॥ १०० ॥

'तङ्' इति प्रत्याहारो नवानां वचनानाम्। 'आन' इति शानच्-कानचोर्ग्रहणम्। पूर्वेण परस्मैपदसंज्ञायां प्राप्तायां तङानयोरात्मनेपद-संज्ञा विधीयते। त, आताम्, झ। थास्, आथाम्, ध्वम्। इट्, वहि, महिङ्। आनः खल्वपि—शानच्कानचौ। 'लः' इत्येव—कतीह निघ्नानाः।

आत्मनेपदप्रदेशाः—'अनुदात्तङित आत्मनेपदम्' इत्येवमादयः॥

## तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः ॥ १०१ ॥

तिङोऽष्टादश प्रत्ययाः—नव परस्मैपदसंज्ञकाः, नवात्मनेपद-संज्ञकाः। तत्र परस्मैपदेषु त्रयस्त्रिकाः यथाक्रमं प्रथममध्यमोत्तमसंज्ञा भवन्ति। आत्मनेपदेष्वपि त्रयस्त्रिकाः प्रथममध्यमोत्तमसंज्ञा भवन्ति।

### पदमञ्जरी

*तङानावात्मनेपदम्* ॥ अथ कस्माल्लस्येत्यस्यानन्तरमेते संज्ञे न विहिते, एवं हि पुरुषसंज्ञाभिरन्यत्रसिद्धोऽनयोः समावेशो भवति, तत्राह—*पूर्वेणेति*। आत्म-नेपदसंज्ञया परस्मैपदसंज्ञाया बाधो यथा स्यादित्येवमर्थमस्मिन् प्रकरणेऽनयोर्विधा-नमिति भावः। महासंज्ञाकरणं पूर्वाचार्यानुरोधेन॥

*तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः*॥ *त्रीणि त्रीणीति* वीप्सायां द्विर्वचनम्। तत्र च समुदायस्यावयवस्य पृथक्पदत्वमिष्यते, आ पचसि पचसि देवदत्तेत्ये-कान्तता यथा स्यात्, कुण्डं कुण्डं वाग् वाग् अपचन्नपचन्नित्यादौ पूर्वपदेऽप्यनु-स्वारादि पदकार्यं यथा स्यादिति; तेन पदच्छेदकाले त्रीणित्रीणीत्येकं पदम्, द्वे वा। अत्र तिङो षड् त्रिकाः संज्ञास्तु तिस्र इति वैषम्यात् संख्यातानुदेशो न प्राप्नोति। अत्र यद्यप्येकैकस्य त्रिकस्यानेकसंज्ञाविधाने प्रयोजनं नास्ति, नैतावता यथाभि-मतविषयलाभः, तत्राह—*तिङोऽष्टादश प्रत्यया इति*।

### न्यासः

तङानावात्मनेपदम् ॥ कतीह निघ्नाना इति। निपूर्वाद्धन्तेः 'ताच्छील्यवयोवच-नशक्तिषु चानश्' इति चानश्प्रत्ययः। 'गमहन' इत्यादिनोपधालोपः। 'होहन्तेर्ञ्णिन्नेषु' इति कुत्वम्। यचनादेशोऽपि चानशात्मनेपदसंज्ञकः स्यात् परस्मैपदिनो हन्तेर्न स्यात्॥

तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः॥ तिङ इति प्रथमाबहुवचनम्। तिङः संज्ञिनः किंभूताः? त्रीणि त्रीणीत्येवंभूता इत्यर्थः। वचनापेक्षया नपुंसकलिङ्गेन निर्देशः। वीप्सा-यां चैतद् द्विर्वचनम्। यदि तिङस्त्रीणि त्रीणि वचनानि प्रथममध्यमोत्तमपुरुषसंज्ञकानि

तिप्, तस्, झि—इति प्रथमः। सिप्, थस्, थ—इति मध्यमः। मिप्, वस्, मस्—इत्युत्तमः।

आत्मनेपदेषु–त, आताम्, झ–इति प्रथमः। थास्, आथाम्, ध्वम्–इति मध्यमः। इट्, वहि, महिङ्—इत्युत्तमः।

प्रथममध्यमोत्तमप्रदेशाः—'शेषे प्रथमः' इत्येवमादयः॥

पदमञ्जरी

एवं मन्यते—संज्ञा अपि षडेव, कथमेकशेषनिर्देशोऽयम्? तत्र यदि प्रथमश्च प्रथमश्च प्रथमौ, मध्यमश्च मध्यमश्च मध्यमौ, उत्तमश्च उत्तमश्चोत्तमौ; प्रथममध्यमोत्तमा इति कृतैकशेषाणां द्वन्द्वः क्रियेत, ततो नाभिमतसंख्यातानुदेशः स्यात्। तस्मात्कृतद्वन्द्वानामेकशेषः–प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्च प्रथममध्योत्तमा इति। न चैवमपि विज्ञायते, किमादित आरभ्य त्रीणि वचनानि गृह्यन्ते? आहोस्विदिच्छातस्त्रिकपरिग्रह इति? न हि त्रिकपरिग्रहेऽपि यथासंख्यशास्त्रं क्रमते, किं तर्हि? विहितेषु संज्ञानां क्रमेण सम्बन्धं विधत्ते। एवं तर्हि लोकत एतत्सिद्धम्, तद्यथा—विहव्यस्य द्वाभ्यां द्वाभ्यामग्निरुपस्थेय इति, न चोच्यते आनुपूर्व्येणेति, अथ च विहव्याख्यस्य सूत्रस्यादित आरभ्य आनुपूर्व्येण द्वाभ्यां द्वाभ्यामृग्भ्यामग्निरुपस्थीयते, न याभ्यां काभ्याञ्चित्; तत्र तिङोऽष्टादश प्रत्यया इत्यनेनादित आरभ्य त्रिकाणामानुपूर्व्येण ग्रहणं नेच्छात इति दर्शयितुं तिङ्ग्रहणेन संनिवेशोऽस्तीति दर्शितम्। न च 'परस्मैपदसंज्ञकः' इत्यादिना तु कृतद्वन्द्वानामेकशेषो न कृतैकशेषाणां द्वन्द्व इति दर्शितम्। यदि वा परस्मैपदग्रहणमात्मनेपदग्रहणं

न्यासः

भवन्ति, एवं सति षट् त्रिकाः संज्ञिनः संज्ञास्तिस्र इति यथासंख्यं न प्राप्नोति; वैषम्यात्। तत्र यद्येकस्यानेकसंज्ञाविधानवैयर्थ्यादेका संज्ञा भवेन् न त्वेकैकस्य तिस्रः, तथापि सैवैकैका भवन्तीत्यव्यवस्था वा स्यात्; नैष दोषः; इह हि परस्मैपदग्रहणमात्मनेपदग्रहणञ्चानुवर्तते। तदनुवृत्तौ च द्वौ राशी भवतः—नवानां तिङां परस्मैपदसंज्ञकानामेको राशिः, तथा नवानामात्मनेपदसंज्ञकानां द्वितीयः। तत्र प्रथमे राशौ ये त्रयस्त्रिकाः, ये च द्वितीये राशौ त्रयस्त्रिकास्तैरिदं सूत्रं प्रत्येकमभिसम्बध्यते—परस्मैपदेषु तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः, तथात्मनेपदेषु तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमा इति। एवं हि सति न भवति संख्यातानुदेशाभावप्रसङ्गः। तमेवार्थं दर्शयितुमाह—तिङोऽष्टादश प्रत्यया इति। नवेत्यादिना राशिद्वयं दर्शयति। तत्रेत्यादिना प्रथमे राशौ ये त्रयस्त्रिकास्तैरस्य सूत्रस्य सम्बन्धं करोति। आत्मनेपदेष्वित्यादिनापि द्वितीये राशौ ये त्रयस्त्रिकास्तैश्च॥

## तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ १०२ ॥

तान्येकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति । एकशः = एकैकं पदम् । 'तिप्' इत्येकवचनम् । 'तस्' इति द्विवचनम् । 'झि' इति बहुवचनम् । एवं सर्वत्र ।

एकवचनद्विवचनबहुवचनप्रदेशाः—बहुषु बहुवचनमित्येवमादयः ॥

### पदमञ्जरी

चानुवर्तते, तिङ्ग्रहणं तु शतृक्वसोर्निवृत्त्यर्थम् । तदनुवृत्तौ च द्वौ राशी भवतः, तयोश्च व्यापारभेदेन सूत्रमेतत्प्रवर्तते । तत्र चैकैकं त्रयस्त्रिका इति । यथासंख्यसिद्धिः । तत्र न चेत्यादिना राशिद्वयं दर्शितम् । तत्रेत्यादिना तु व्यापारभेदः । अत्रापि महासंज्ञाकरणं पूर्ववत् ॥

*तान्येकवचनद्विवचबहुवचनान्येकशः* ॥ *एकश इति* । 'संख्यैकवचनाच्च वीप्सायाम्' इति प्रथमान्ताच्छस् । प्रकृतत्वादेव त्रीणीत्यस्य सम्बन्धे सिद्धे तानिवचनं पुरुषवचनसंज्ञयोः समावेशार्थम्, अन्यथा ह्येकसंज्ञाधिकारे वचनप्रामाण्यात्पर्यायः स्यात्, ततश्च 'आडुत्तमस्य पिच्च' 'नित्यं ङितः' इति कार्यं वचनसंज्ञापक्षे उत्तमसंज्ञाया अभावान्न स्यात् । तानीत्यस्मिंस्तु सति तान्येतानि प्रथमादिसंज्ञाविशिष्टानि त्रीणित्रीणीत्येवं परामर्शाल्लब्धप्रथमादिसंज्ञानामेकवचनादिसंज्ञाविधानाद् भवति समावेशः ।

ननु त्रिकाणां पुरुषसंज्ञा एकैकस्य वचनसंज्ञेति विषयभेदान्नायमेकसंज्ञाधिकारविषयः, तन्न; यथा वृद्धिसंज्ञा प्रत्येकमादैचां भवति, तथा पुरुषसंज्ञापि त्रीणित्रीणीति वचनात् त्रिषु प्रवर्तमानापि तिबादिषु प्रत्येकमेव प्रवर्त्तते, न समुदाये; तस्य प्रयोगेऽभावात्, प्रत्येकमेव तेषां धातोरुत्पत्तेः । त्रिग्रहणं तु मर्यादार्थमादित आरभ्य त्रयाणां प्रथमसंज्ञा भवतीति, न पुनः समुदाये संज्ञाप्रवृत्त्यर्थं तानि तिङस्त्रीणित्रीणि पदानि सूत्वेति । तिबादिसूत्रे समाहारद्वन्द्वेऽष्टादशावयवपदानि तिङ्शब्दस्य त्रीणित्रीणीति समानाधिकरणस्यापि पुंल्लिङ्गतापि सूत्रवद्भवति ॥

### न्यासः

तान्येकवचनद्विवचनबहुवचनान्येकशः ॥ तानीति बहुवचनं संज्ञासमावेशार्थम्; अन्यथा ह्येकसंज्ञाधिकारे सति वचनप्रामाण्यात् पुरुषवचनसंज्ञाः पर्यायेण प्रवर्तेरन् । एवञ्च तत्र 'आडुत्तमस्य पिच्च' इत्यादिना विधीयमानमाडादिकार्यं पाक्षिकं स्यात् । अस्मिंस्तु सति भवति संज्ञासमावेशः । तच्छब्देन हि त्रीणि त्रीणि लब्धपुरुषसंज्ञकानि तान्येवैकवचनादिसंज्ञकानि भवन्तीति प्रत्यवमृश्यन्ते, तेन यानि लब्धप्रथमपुरुषादिसंज्ञकानि तान्येवैकवचनादिसंज्ञकानि भवन्ति । ननु च त्रिकाणां प्रथमादिसंज्ञे-

## सुपः ॥ १०३ ॥

तिङां त्रिकेष्वेकवचनादिसंज्ञा विहिताः, संप्रति सुपां त्रिकेषु विधीयन्ते। सुपश्च त्रीणि त्रीणि पदानि एकश एकवचनद्विवचनबहुवचनसंज्ञानि भवन्ति।

'सु' इत्येकवचनम्। 'औ' इति द्विवचनम्। जसिति बहुवचनम्। एवं सर्वत्र ॥

## विभक्तिश्च ॥ १०४ ॥

### पदमञ्जरी

*सुपः* ॥ सुबिति प्रत्याहारग्रहणं प्रथमैकवचनादारभ्य सुपः पकारात्। कपस्तु पकारेण न भवति, प्राग्दिशीयानां विभक्तिसंज्ञाविधानात्; अन्यथा विभक्तिसंज्ञायामपि इदमेव सुब्ग्रहणमनुवर्त्तेत इति सुप्त्वादेव सिद्धेऽनर्थकं तत्स्यात्। *तिङां त्रिकेष्विति*। किमर्थं पुनरिदमुक्तम्? इह कश्चिन्मन्यते—सूत्रे चकारस्याकरणात्संज्ञामात्रमिह सम्बध्यते, नान्यत्किञ्चिदिति तत्र दृष्टान्तप्रदर्शनेन त्रीणित्रीण्येकश इत्यनयोरनुवृत्तिं दर्शयति, यथा तिङां वचनसंज्ञा विहिता तथैव सुपामपीत्यर्थः। तथा च स्वयं च शब्दं पठित्वा व्याचष्टे—*सुपश्चेत्यादि* ॥

*विभक्तिश्च* ॥ चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः। तिङां व्यवहितानामपि स्वरितत्वादनुवृत्तिः। तिङां विभक्तित्वे प्रयोजनम्—आतामादौ 'न विभक्तौ तुस्माः' इति निषेधः, सुपां तु त्यदाद्यत्वादिकमपि ॥

### न्यासः

कैकस्य चैकवचनादिसंज्ञा, तत्र विषयभेदादेकसंज्ञाधिकारेऽपि विरोधो नास्त्येवेति, नैष दोषः? तदस्ति पुरुषादिसंज्ञापि हि प्रत्येकमेव, न हि समुदायो नामान्यस्त्रिकेभ्योऽस्ति; तस्मात् तिबादयस्त्रिका एव संज्ञिनः। त्रिग्रहणन्तु मर्यादार्थम्। त्रित्वसंख्यापरिच्छिन्नास्तिङः प्रत्येकं पुरुषसंज्ञाः प्रतिपद्यन्ते। तस्मात् प्रथमादिसंज्ञानामेकवचनादिसंज्ञानाञ्चैकविषयतैवेति संज्ञासमावेशार्थं तानीत्युक्तम्।

सुपः ॥ सुबिति प्रत्याहारग्रहणम्। प्रथमैकवचनात् सुशब्दादारभ्य सप्तमीबहुवचनस्य सुपः पकारेण। अथ कपः पकारेणायं प्रत्याहारः कस्मान्न विज्ञायते? सप्तमीबहुवचनस्य पकारस्य वैयर्थ्यप्रसङ्गात्। स ह्यनुदात्तार्थः स्यात्? प्रत्याहारार्थो वा? तत्रानुदात्तार्थो न भवति; अनुदात्तस्य सुप्त्वादेव सिद्धत्वात्। तत्र यदि प्रत्याहारार्थोऽपि न स्यात् तदास्यापार्थकत्वमेव स्यात्। तस्मात् तेनैवायं प्रत्याहारो विज्ञायते, न तु कपः पकारेण; स्वरविधौ तस्य चरितार्थत्वात् ॥

विभक्तिश्च ॥ चकारः पुरुषादिसंज्ञासमावेशार्थः। विना तेनैकसंज्ञाधिकारे

'त्रीणि त्रीणि' इत्यनुवर्तते। त्रीणि त्रीणि विभक्तिसंज्ञाश्च भवन्ति, सुपस्तिङश्च ।

विभक्तिप्रदेशाः—'अष्टन आ विभक्तौ' इत्येवमादयः ॥

## युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ १०५ ॥

### पदमञ्जरी

*युष्मद्युपदे समानाधिकरणे स्थानिन्यपि मध्यमः* ॥ 'लस्य तिबादयः' इत्यनेनैकवाक्यतामापन्नेनानेन तिबादीनां विशिष्टविधानम्, उत विहितानां तिबादीनां भिन्नेनानेन वाक्येन नियमः ? इति संशये नियम इत्याह—*लस्येत्यधिकृत्येति* । विशिष्टविधाने त्वितरेतराश्रयं स्यात्—सतां तिबादीनां प्रथमादिसंज्ञा, संज्ञायां च तिबादयो भाव्यन्त इति । स पुनर्नियम उपपदनियमो वा स्याद्—युष्मदि मध्यम एव अस्मद्युत्तम एव, शेषे प्रथम एवेति; पुरुषनियमो वा—युष्मद्येव मध्यमः, अस्मद्येवोत्तमः, शेष एव प्रथम इति। तत्राद्ये पक्षे कुर्वंस्त्वं कुर्वाणस्त्वमिति युष्मदि शतृशानचौ च न स्याताम्, तृजादयश्च न स्युः—कर्ता त्वं कारकस्त्वमिति ? नैष दोषः; एतावान् विषयो युष्मदस्मदुपपदं शेषश्च सर्वश्चासौ पुरुषेषु नियतः। उच्यन्ते च तृजादयस्ते वचनाद्भविष्यन्ति। तुल्यजातीयस्य च नियमेन व्यावृत्तिः—युष्मदि मध्यम एव, न प्रथमोत्तमौ; अस्मद्युत्तम एव, न प्रथममध्यमौ; शेषे प्रथम एव, न मध्यमोत्तमाविति । एवं तर्हि तिबादिसूत्रे विधीयमानत्वात् प्राधान्यात्तेषामेव नियमो युक्तः, शेषग्रहणाच्चोपपदनियमे हि युष्मदस्मदी नियते, पुरुषा अनियताः, शेषश्चानियतः। तत्र प्रथम इत्येतावदप्युच्यमानं नियमार्थं विज्ञायते, तत्र च नियमान्तरस्यासंभवात् प्रथम एवेति नियमः; यत्र च प्रथमाप्रथमप्रसङ्गस्तत्रैवंविधो नियमः कर्त्तव्यः; शेष एव च तथा प्रसङ्ग इति तत्रैव नियमो भविष्यति, किं शेषग्रहणेन ! पुरुषनियमे तु मध्यमोत्तमौ नियतौ युष्मदस्मदी वा नियते, प्रथमश्च तत्र युष्मदस्मदोरपि प्रथमप्रसङ्गे शेष एव प्रथम इत्येवं प्रथमनियमः कर्त्तव्यः। न चान्तरेण शेषग्रहणमेवंनियमः शक्यते कर्त्तुमिति कर्त्तव्यमेव शेषग्रहणम्। अतः शेषग्रहणम् ।

### न्यासः

वचनप्रामाण्यात् पर्यायः स्यात् । तिङो विभक्तित्वे प्रयोजनम् 'न विभक्तौ तुस्माः' इतीत्संज्ञाप्रतिषेधः । सुपस्त्वेतच्च, अन्यच्च त्यदाद्यत्वादि ॥

युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः ॥ नियमार्थमेतदिति दर्श-

'लस्य' इत्यधिकृत्य सामान्येन तिबादयो विहिताः, तेषामयं पुरुषनियमः क्रियते—युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति

पदमञ्जरी

सूत्रकारस्यापि पुरुषनियम एवाभिप्रेत इति तमेवाश्रयति—*तेषामयं पुरुषनियमः क्रियत इति* । तेषामित्युद्भूतावयवभेदस्तिबादिसमुदाय उच्यते, पुरुषापेक्षयाऽवयवषष्ठी। तेषां तिबादीनामवयवो यो मध्यमपुरुषस्तस्योपपदनियमः क्रियत इत्यर्थः, सापेक्षस्यापि पुरुषशब्दस्य गमकत्वात् समासः। अथ वा तेषामिति कर्मणि षष्ठी, पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्त इत्यर्थः। उपोच्चरितं पदमुपपदम्, शाकपार्थिवादित्वादुत्तरपदलोपी समासः, उपशब्दः सामीप्ये, ततश्च व्यवहिते न भवितव्यमिति शङ्कामपनयति। *व्यवहिते चेति*। समीप इत्येव सिद्धे उपपदग्रहणादापेक्षिकस्यापि सामीप्यस्य ग्रहणम्। व्यवहितमपि च व्यवहिततरापेक्षया संनिकृष्टमिति भावः। उपपदग्रहणं तु पूर्वभूतेऽपि युष्मदि यथा स्याद्, अन्यथा 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परभूते एव स्यात्। ननु यथा स्थानिन्यपीति वचनात् सर्वथाऽप्रयुज्यमानेऽपि भवति तथा पूर्वप्रयोगेऽपि परभूतस्याप्रयोगात् स्थानिनीति भविष्यति, नैतदस्ति; सप्तमीनिर्देशात् प्रयोगपक्षे परभूत एव स्यात्।

न्यासः

यितुमाह—लस्येत्यधिकृत्येत्यादि। एतच्च नियमार्थत्वे कारणम्। सिद्धे सत्यारम्भो नियमार्थो भवति, नासिद्धे। स पुनरयं नियम उपपदार्थनियमो वा स्यात्—तिङो युष्मद्युपपदे मध्यम एव? पुरुषनियमो वा स्याद्—युष्मद्येवोपपदे मध्यम इति वा? तत्र यदि प्रथमो नियम आश्रीयते, त्वया कुर्वता त्वया कुर्वाणेनेति युष्मद्युपपदे लस्य शतृशानजादेशौ न भवतः। तस्मात् तदर्थं यत्नान्तरमास्थेयम्। इतरत्र तु न किञ्चिद् यत्नसाध्यम्, अतो द्वितीयपक्षमाश्रित्याह—तेषामयमित्यादि। व्यवहिते च, अव्यवहिते चेति। ननु च परस्परं सन्निकृष्टं यत्पदं तदुपपदमुच्यते—उपोच्चारितं पदमुपपदमिति कृत्वा, यच्च व्यवहितं तदव्यवहितापेक्षया विप्रकृष्टम्, अतो व्यवहितेन भवितव्यम्, नैष दोषः; यस्मात् सन्निकृष्टं विप्रकृष्टमित्यव्यवस्थितमेतदुभयग्रहणम्, सापेक्षत्वाद् परापरवत्। तत्र यद्यव्यवहितमपेक्ष्य व्यवहितं विप्रकृष्टं भवति, तथाप्यन्यद् विप्रकृष्टतरमपेक्ष्य सन्निकृष्टं भवतीतीतरत्र व्यवहितेनापि भवितव्यम्। यद्येवम्, उपपदग्रहणं किमर्थम्? पूर्वभूतेऽपि यथा स्यादित्येवमर्थं कृतम्। अन्यथा 'युष्मदि' इत्येतावत्युच्यमाने 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परभूत एव युष्मदि पूर्वस्य मध्यमः स्यात्, न तु पूर्वभूते परस्य। उपपदग्रहणादत्रापि भवति। पूर्वेण परेणापि प्रयुज्यमानमुपपदं भवत्येव।

समानाधिकरणे समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्य-प्रयुज्यमानेऽपि मध्यमपुरुषो भवति । त्वं पचसि, युवां पचथः, यूयं पचथ । अप्रयुज्यमानेऽपि—पचसि, पचथः, पचथ ॥

पदमञ्जरी

*समानाभिधेय इति ।* अधिकरणशब्दोऽभिधेयवचन इति दर्शयति । पुनः समानाभिधेये लकारेण नियम्यमानेन वा पुरुषेण। त्रिविधं चाभिधेयं लकाराणाम्-भावः कर्म कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना लान्तेन सामाना-धिकरण्यासंभवात् कर्तृकर्मणोरेव ग्रहणमित्याह—*तुल्यकारक इति ।* तुल्यमेकं कारकं यस्य तत्तथोक्तम्, स्थानिन्यपीति स्थानशब्द प्रसङ्गवाची, स्थानमस्यास्तीति स्थानी। तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोऽस्ति। उच्यते चेदं स्थानम-स्यास्तीति, तत्र सामर्थ्यादवधारणं विज्ञायते—प्रसङ्ग एव यस्य, न तु प्रयोग इति । यद्वा स्वनिकायप्रसिद्धिरेषा—यस्य स्थाने आदेशो विधीयते स स्थानीति । इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्या-प्रयुज्यमानेऽपीत्यर्थः । अपिशब्दात्प्रयुज्यमानेऽपि, तदाह—*स्थानिन्यपीत्यादिना ।* स्थानिन्यपीति कोऽर्थः ? प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपीत्यर्थः । उपपदग्रहण-प्राप्तस्य चार्थस्यापिशब्दोऽनुवादः । समानाधिकरण इति किम् ? त्वया गम्यत इत्यत्र मा भूत् ।

क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते, इह च अतित्वं पचति अत्यहं पचतीत्य-त्रातिक्रान्तप्रधाने समासे युष्मदस्मदोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तस्त्वं त्वत्कल्पः पचसि, मत्कल्पः पचामीति कालान्तरदृष्टगुण-रहितो युष्मदस्मदर्थ एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यत इति मध्यमोत्तमौ

न्यासः

समानाधिकरण इत्यनेन समानाभिधेय इति व्याचक्षाणोऽयमधिकरणशब्दोऽभि-धेयवचनः सूत्र उपात्त इति दर्शयति । तत् पुनरभिधेयं यत्र लकार उत्पद्यते कर्तरि कर्मणि वा कारके प्रत्यासत्तेस्तदेव विज्ञायते इत्याह—तुल्यकारक इत्यादि । तुल्यं कारकं यस्य तत् तथोक्तम्। तुल्यशब्देन समानशब्दस्यार्थो दर्शितः। प्रयुज्यमानेऽप्रयुज्य-मानेऽपीति । अनेन स्थानिन्यपीत्यस्यार्थमाचष्टे । स्थानशब्दः प्रसङ्गवाची—स्थान-मस्यास्तीति स्थानी । कस्य च स्थानम् ? तस्यैव स्थानमस्ति यस्यार्थो गम्यते, शब्दो न प्रयुज्यते । तदेतदुक्तम्भवति—अप्रयुज्यमानेऽपि युष्मदि, अपिशब्दात् प्रयुज्य-मानेऽपि । समानाधिकरणग्रहणं किम् ? 'त्वया पच्यते' इत्यत्र मा भूत्, भिन्नं ह्यत्राधिकरणम् । तथा हि—'त्वया' इत्येतत् कर्तृवाचि; कर्तरि तृतीयाविधानात् । 'पच्यते' इति कर्मवाचि; कर्मणि लकारविधानात् ।

## प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥

प्रहासः = परिहासः, क्रीडा। प्रहासे गम्यमाने मन्योपपदे धातो-

पदमञ्जरी

भवतः, तत्सदृशपदार्थान्तराभिधाने तु प्रथमः, तथा त्वत्तरः पचसि, मत्तरः पचामि, परमत्वं पचसि, परमाहं पचामीति, कालान्तरादृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव। एवं च युष्मदर्थ मध्यमः, अस्मदर्थ उत्तम इतीयता सिद्धं युष्मदस्मदर्थे चेल्लकार उत्पन्नस्तर्ह्येव मध्यमोत्तमावित्यर्थः, तथा तु न कृतमित्येव। इह चात्वं त्वं संपद्यत इति त्वद्भवतीति भवति; प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वात्। एतच्च 'आत्महृतः' इत्यत्रोपपादयिष्यामः। तथा च मन्त्रे—'यदग्ने स्यामहं त्वं त्वं वास्या अहम्' इति, अहं त्व स्यां त्वं वाहं स्याम्' इति प्रकृत्याश्रयः पुरुषो दृश्यते। इह भवान्पचत्विति युष्मदर्थप्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, न वा युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः। भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः। यथैव हि माणवकाधीष्टेत्यभिमुखीभावो गम्यते, एवं त्वमधीष्वेत्यपि। तथा च युष्मदः सर्वत्रैव संबोधने प्रथमा आमन्त्रिताद्युदात्तत्वं च भवति, पदात्परत्वे च निघात इति केचिदाहुः। उक्तं च—

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः॥
युष्मदर्थस्य सिद्धत्वान्नियतावाद्युदात्तता।
युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ॥ इति।

सत्यम्; सम्बोधनैकविषयो युष्मच्छब्दः, प्रथमा तु शुद्धैव; अभिमुखीभावेऽस्यापि प्रातिपदिकार्थ एवान्तर्भावात्, यत्र त्वनन्तर्भावः, तत्र तदभिद्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोपि; अन्यथा युवं हि स्थः स्वर्पती, यूयं यात स्वस्तिभिः, हये देवा यूयमिदापयस्थ' इति पादादावप्यन्तोदात्तत्वं पदात्परत्वेऽप्यनिघातः। तदेवं भवच्छब्दस्यासम्बोधनविषयत्वाल्लिङ्गवत्त्वाच्चायुष्मदर्थत्वाद् मध्यमो न भवतीति स्थितम्॥

*प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ प्रहासे गम्यमान इति।* यत्र भूतार्थाभावाद्वञ्चनैव केवलं तत्र वक्तुरभिप्रायाविष्करणे प्रहासो गम्यते। मन्यति-

न्यासः

प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ प्रहासे गम्यमान इति। यत्र भूतार्थाभावाद् वञ्चनैव केवलं तत्र वक्तुरभिप्रायाविष्करणेन प्रहासो गम्यते। मन्योपपद इति। मन्यतिरुपपदमुपोच्चारितं पदं यस्य स तथोक्तः। मध्यमस्य

र्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः, स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यस इति, नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते ।

प्रहास इति किम् ? एहि मन्यसे ओदनं भोक्ष्य इति । सुष्ठु मन्यसे, साधु मन्यसे ॥

**पदमञ्जरी**

शब्दस्यैकदेशानुकरणं मन्येति, मन्य उपपदं यस्य स तथोक्तः । लस्य धातोर्विधानात्तदादेशत्वाच्च मध्यमस्य धातुरन्यपदार्थ इत्याह । *मन्योपपदे धाताविति* । प्रकृतिभूते सतीत्यर्थः । *स चैकवदिति* । अर्थद्वारकश्चोत्तमस्यैकवद्भावः, एकस्य वाचको भवतीत्यर्थः, द्वयोर्बहुषु मन्तृषु एकवचनमेव भवतीति यावत् । यत्र हि द्वौ मन्तारौ बहवो वा, तत्रैकवद्भावो विधेयः; अन्यत्र तु मन्तुरेकत्वादेव सिद्धम् । *एकवच्चेति* । च शब्दोन्वाचये, तेनैकवद्भावाभावेऽपि एकस्मिन्नपि मन्तरि प्रधानशिष्टौ मध्यमोत्तमौ भवतः ।

अन्वाचयमेव दर्शयितुमयत्नसाध्यमेकं मन्तारमुदाहरति—*एहि मन्ये ओदनं भोक्ष्यस इति* । सत्यप्योदने भोक्तुमागतं श्यालादिकं प्रति एतत्प्रयुज्यत इति परिहासावगतिः । द्विबह्वोस्तूदाहरणे—एहि मन्ये ओदनं भोक्ष्येथे नहि भोक्ष्येथे भुक्तः सोऽतिथिभिः; एहि मन्ये रथेन यास्यथ यातस्तेन पिता इति । *मध्यमोत्तमयोः प्राप्तयोरिति* । युष्मदस्मदर्थस्य गम्यमानत्वात् प्रत्युदाहरणवत् प्रकृतमुपपदग्रहणं युष्मदा सम्बद्धम् । तच्च तथैवेहाप्यनुवर्त्यमिह मा भूत्—एतु भवान्मन्यते ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरिति । तदशक्यं मन्यतिना सम्बन्धुमिति पुनरिहोपपदग्रहणम्, अन्यथा मन्यतौ परत एव स्यात् । श्यनानिर्देशान्मन ज्ञानइत्यस्य ग्रहणम्,

**न्यासः**

धातोर्विधानाद् धातुरन्यपदार्थो विज्ञायत इत्याह—धातोरिति । स चैकवदिति । यत्र द्वौ मन्तारौ बहवो वा तत्रायमेकवद्भावो विधीयते । अन्यत्र तु मन्तुरेकत्वादेवैकवचनं सिद्धम् । मध्यमोत्तमयोरिति । यथाक्रमं युष्मदस्मदोरुपपदयोः समानाधिकरणयोरप्रयुज्यमानयोरप्यर्थस्य विद्यमानत्वात् । यथा प्रत्युदाहरणे पूर्वकमुपपदग्रहणं युष्मच्छब्देनाभिसम्बद्धमिहानुवर्ततेति तन्मन्यतिनाऽशक्यमभिसम्बन्धुमिति पुनरुपपदग्रहणं क्रियते । मन्यतेरिति श्यना निर्देशः, 'मन ज्ञाने' इत्यस्य दैवादिकस्य ग्रहणं यथा स्यात्; 'मनु अवबोधने' इत्यस्य तानादिकस्य ग्रहणं मा भूदित्येवमर्थः । तेनेह न भवति—एहि मनुषे रथेन यास्यामि नहि यास्यसि यातस्तेन ते पितेति । एवं हि मनोतेर्भवति ॥

## अस्मद्युत्तमः ॥ १०७ ॥

उत्तमपुरुषो नियम्यते। अस्मद्युपपदे समानाभिधेये प्रयुज्यमानेऽप्य-प्रयुज्यमानेऽपि उत्तमपुरुषो भवति। अहं पचामि। आवां पचावः। वयं पचामः। अप्रयुज्यमानेऽपि—पचामि। पचावः। पचामः॥

## शेषे प्रथमः ॥ १०८ ॥

'शेषे' इति मध्यमोत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः। पचन्ति॥

### पदमञ्जरी

न तु 'मनु अवबोधने' इत्यस्य; एहि मनुषे रथेन यास्यामीति एवं तस्य भवति। प्रत्युदाहरणे अतिथिं प्रति तथाभूतार्थवचनम्॥

*अस्मद्युत्तमः*॥ यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते, तदा लकारोऽपि भेदेनोत्पद्यते—त्वं चाहं च पचसि, पचामि चेति। सहविवक्षायां तु द्वयोरपि शक्त्योरेको लकार उत्पद्यते। तत्र युष्मदि मध्यमः, अस्मद्युत्तमो विप्रतिषेधेन—त्वं चाहं च पचावः, अहं च त्वं च वृत्रहन् संयुज्याव:' इति। यदापि त्यदादीनां यद्यत्परमित्यस्मदः शेषस्तदापि स्थानिन्य-पीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति—आवां पचावः॥

शेषे *प्रथमः*॥ उपपद इति निवृत्तम्। शेष इति विषयसप्तमी, न पुनः परत इति तदाह—*शेष इति*। *मध्यमोत्तमविषयादन्य उच्यत इति*। अन्यो विषय

### न्यासः

**अस्मद्युत्तमः** ॥ यदा युष्मदस्मदी द्वे अप्येते उपपदे स्तः, तदा कथं भवितव्यम्? यदि कर्तृशक्ती आधारप्रतिनियते अपेक्ष्येते, तदाऽख्यातमपि पृथगेव प्रयुज्यते—पचसि पचामि चेति। अथाविरोधाच्छक्तिद्वयेऽपि लकार उत्पद्यते, तदा विप्रतिषेधादुत्तम एव भवति—त्वञ्चाहञ्च पचाव इति। यद्यपि 'त्यदादीनां यद् यत् परं तच्छिष्यते'[1] इत्यस्मच्छब्दस्य शेषो भवति, तथापि स्थानिन्यपीति मध्यमस्य प्राप्तौ सत्यां परत्वादुत्तम एव भवति। आवां पचाव इत्यत्र ह्यस्मच्छब्दस्य युष्मदर्थोऽपि वाच्यः, अन्यथा हि द्विवचनं न स्यात्। न ह्यस्मच्छब्दस्यैव द्वित्वमुपपद्यते॥

**शेषे प्रथमः** ॥ मरः सन्निकर्षः संहिता ॥ परशब्दोऽतिशये वर्तते इति। यथा परं

---

[1] इदं 'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रस्थवार्त्तिकानुवादमूलकं वृत्तिकृद्वा-क्यम्। कौमुदीकारेणापीदं गृहीतम्।

## परः संनिकर्षः संहिता ॥ १०९ ॥

परशब्दोऽतिशये वर्त्तते । संनिकर्षः = प्रत्यासत्तिः । परो यः

### पदमञ्जरी

इत्यर्थः । यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्र शेष इत्यनेन युष्मदस्मदोरभावः शेषः, न पुनरन्यसद्भाव इति दर्शयति । किं सिद्धं भवति ? त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्वं चाहं च देवदत्तश्च पचाम इति । अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदायः स युष्मदस्मद्भ्यामन्यः, तथापि युष्मदस्मदी तावत्स्त इति तत्सद्भावनिमित्तौ मध्यमोत्तमौ भवतः । न तु तदभावनिमित्तः प्रथमः । अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः । यदाह—तत्र युष्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति ॥

*परः संनिकर्षः संहिता* ॥ *परशब्दोऽतिशये वर्त्तत इति* । यथा परं सुखं परं दुःखमिति, दिगादिषु वर्तमानस्य ग्रहणं न भवति सन्निकर्षस्य दिग्देशकालायोगात् । अर्थान्तरापेक्षमन्यत्वम्, अव्यभिचारिसन्निकर्षः प्रत्यासत्तिरिति, न तु संश्लेषः, तस्य वर्णेष्वसंभवात् । स हि संयोगश्चेद् द्रव्यधर्मत्वान्न शब्दस्य गुणस्य संभवति । समवायश्चेन्न वर्णे वर्णः समवैति; शब्दस्याकाशसमवायित्वात् । येषां तु शब्दो द्रव्यं तेषां न क्वापि शब्दः समवैति । अतिशयोऽपि संयोगसमवाययोः कीदृश इति न विद्मः । प्रत्यासत्तेस्त्वपेक्षाभेदात् सम्भवति प्रकर्षाप्रकर्षयोगः, तस्मात्प्रत्यासत्तिरेव सन्निकर्षः ।

ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः स्थानादयस्तेषां व्यापरोपरतौ वर्णान्तरस्य ये निष्पादकास्तेषां व्यापारारम्भः । तत्रावश्यं

### न्यासः

सुखं परं दुःखमिति । एतेन यद्यपि परशब्दो दिगादिष्वप्यर्थेषु वर्तते, तथापीहातिशये वर्तमानस्य तस्य ग्रहणमिति दर्शयति । सन्निकर्षः = प्रत्यासत्तिः, संश्लेषश्च । तत्रेह प्रत्यासत्तिर्गृह्यत इति दर्शयन्नाह—सन्निकर्षः प्रत्यासत्तिरिति । संश्लेषस्तु न गृह्यते, तस्य वर्णेष्वसम्भवाद् । संश्लेषो ह्येककालानां भवति, न च वर्णानामेककालतापत्तिः; क्रमेणोच्चारितत्वादुच्चरितप्रध्वंसितत्वात् । सत्यामपि चैककालतायां न सम्भवत्येव वर्णानां संश्लेषः । तथा हि—संश्लेषः संयोगतो वा स्यात्, समवायतो वा; तत्र पूर्वको द्रव्यस्यैव स्यात्, न तु शब्दस्य—निर्गुणा गुणा इति कृत्वा । इतरोऽपि नैव शब्दस्य सम्भवति, नहि वर्णो वर्णे समवैति; शब्दस्याकाशसमवायित्वात् । न च संयोगसमवाययोरतिशयः सम्भवति; सर्वत्रैकरूपकत्वात् । तथा च 'परः' इति विशेषणं नोपपद्यते । प्रत्या-

संनिकर्षः = वर्णानामर्धमात्राकालव्यवधानम्, स संहितासंज्ञो भवति । दध्यत्र । मध्वत्र ।

संहिताप्रदेशाः—'संहितायाम्' इत्येवमादयः ॥

### पदमञ्जरी

मध्ये कियत्यपि कालकला भवति, सूक्ष्मत्वात्तु नोपलभ्यते; पद्मपत्रशतव्यक्तिभेदवत्. तत्कथं परः सन्निकर्ष इत्यत्राह—*अर्धमात्राकालव्यवधान इति* । सत्यम्, एतावद्व्यवधानमवर्जनीयत्वात्सह्यते, अधिकेन तु कालेन व्यवधानं परग्रहणेन व्यावर्त्यत इत्यर्थः । यद्येवम्, द्रुतायामेव वृत्तौ स्यान्न मध्यमायां विलम्बितायां वा, न हि तथा तयोः सन्निकर्षो यथा द्रुतायां तुल्यः सन्निकर्षः । सर्वासु वृत्तिषु नैरन्तर्येणोच्चारणाद्यवर्णोपलम्भकभेदात्तु वृत्तिविशेषः । द्रुतायां स्वल्प उपलब्धिकालः, मध्यमायामधिकः, विलम्बितायामधिकतरः । द्विविधा हि ध्वनयः—प्राकृताः, वैकृताश्च । प्राकृता वर्णानामुत्पादकाः, वैकृते तु पुनः पुनरुपलम्भः, मध्यवर्ती तु कालः सर्वासु वृत्तिषु तावानेव । यद्वा --यस्यां वृत्तौ यावता कालेन व्यवायो-

### न्यासः

सक्तिस्त्वपेक्षाकृतभेदात् प्रकर्षाप्रकर्षाभ्यां प्रयुज्यमानापरग्रहणेन विशिष्यत इति युक्तं तस्य विशेषणत्वम् । कः पुनरसौ परः सन्निकर्ष इत्याह–अर्द्धमात्रेत्यादि । अर्द्धं मात्राया इति 'अर्द्धं नपुंसकम्' इति समासः । अर्द्धमात्रायाः कालोऽर्द्धमात्राकालः । यावता कालेनार्द्धमात्रोच्चार्यते सोऽर्द्धमात्राकालः । अतिशयेन सन्निकृष्टान् वर्णानुच्चारयति वक्तरि पूर्वस्य वर्णस्य ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य च ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपवेशनमर्द्धमात्राकालमाहुः । स वर्णानां व्यवधानः=व्यवधायको यस्मिन् सोऽर्द्धमात्राकालव्यवधानः सन्निकर्षः । यदि वर्णानामर्द्धमात्राकालव्यवधानः सन्निकर्षः, कथं तर्हि दध्यत्रेत्यादौ व्यवधायककालो नोपलभ्यते, वर्णाः संश्लिष्टा एवोपलभ्यन्ते ? नैतत् ; तस्य कालस्य सूक्ष्मतयोपलब्धुमशक्यत्वान्निरन्तरा वर्णास्तत्रोपलभ्यन्ते, न तु व्यवधायकस्य कालस्याभावात् । किमर्थं पुनरेतदारभ्यते, यावता परमेव सन्निकर्षं संहितेति वदन्त्याचार्याः, तथा हि संहितामधीष्वेत्युक्ते परं सन्निकर्षमेवाधीते शिष्यः ? नैतदेवम्; पदस्य पदान्तरेण यदानन्तर्यं सा संहितेति लोकेऽभिधीयते । तथा च वक्तारो वदन्ति—संहितामधीते न पदानि, पदान्यधीते न संहितामिति । तथा

## विरामोऽवसानम् ॥ ११० ॥

विरतिः = विरामः, विरम्यतेऽनेनेति वा विरामः । सोऽवसानसंज्ञो भवति । दधिँ । मधुँ । वृक्षः । प्लक्षः ।

### पदमञ्जरी

ऽवश्यम्भावी, ततोधिकेन व्यवायः परग्रहणेन व्यावर्त्यते । पदस्य पदान्तरेण यदानन्तर्यं तत्रैव लोके संहिताशब्दः प्रसिद्धः । तथा च–संहितामधीते न पदानि, पदान्यधीते न संहिताम् इति वक्तारो भवन्ति, ततश्च कुमार्यावित्यादौ पदावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः ॥

*विरामोऽवसानम्* ॥ *विरतिर्विराम इति* । विराम इति भावे घञ् । विरामः = वर्णोच्चारणाभावः । अर्थान्तरमाह-*विरम्यतेऽनेनेति वा विराम इति* । 'कृत्यल्युटो बहुलम्' इत्यसंज्ञायामपि 'हलश्च' इति करणे घञ्, पूर्वत्राभावः संज्ञी उत्तरत्रान्त्यो

### न्यासः

चैकपदे हि संहिताकार्यं न स्यात् 'इको यणचि' इति—कुमार्यौ, कुमार्य इति । सति ह्यस्मिन् वर्णानां सन्निकर्षविशेषस्यानेन संहितासंज्ञा विधीयत इति सर्वत्रैव भवति ॥

विरामोऽवसानम् ॥ विरतिर्विराम इति भावे घञ् । विरामो वर्णोच्चारणाभावोऽवसानसंज्ञो भवति । विरम्यतेऽनेनेति विराम इति विरामशब्दस्य द्वितीयमर्थं दर्शयति । 'कृत्यल्युटो बहुलम्' इति बहुलवचनादसंज्ञायामपि 'हलश्च' इति घञ् । अत्र पक्षे येनान्त्येन वर्णेन विरम्यते सोऽवसानसंज्ञो भवति । तत्र पूर्वस्मिन् पक्षेऽभावे पौर्वापर्याभावात् 'खरवसानयोः' इत्यत्रावसानापेक्षया विषयसप्तमीयं विज्ञायते, न परसप्तमी । खरपेक्षया तु परसप्तमीयम् ।

अन्ये तु—यद्यभावे पौर्वापर्यं न सम्भवतीत्यवसानापेक्षया 'खरवसानयोः' इति परसप्तमी नोपपद्यते, तदा 'इको यणचि' इत्यादावपि परसप्तमी नोपपद्यते । कथम् ? वर्णानां क्रममावित्वात्, उच्चरितप्रध्वंसितत्वाच्च । यदेगस्ति तदाज् नास्ति, यदा त्वजस्ति तदेग् नास्ति । अथात्र बुद्धिप्रकल्पितं पौर्वापर्यमाश्रित्य परसप्तमीष्यते, तदा 'खरवसानयोः' इत्यत्रापि तथैवेष्टव्येति मन्यमाना अवसानापेक्षयापि परसप्तमीमिच्छन्ति ।

अपरे तु–अन्त्यस्य तु वर्णस्यावसानसंज्ञायां सत्याम् 'खरवसानयोः' इति षष्ठी विज्ञायते । अत्रावसानापेक्षया स्थानषष्ठी । रेफस्यावसानस्य विसर्जनीय इति खरपेक्षया




पदमञ्जरी

वर्णः, तेन हि विरम्यते। तत्राद्ये पक्षे 'खरवसानयोः' इति परसप्तमी, कथं पुनरवसानेन, पौर्वापर्यमभावो हि सः, खरा वा, कथम् ? न हि यदा खरस्ति तदा रेफः, यदा रेफस्तदा खर्; वर्णानां क्रमभावित्वाद्, उच्चरितप्रध्वंसित्वाच्च। अथ तत्र बुद्धिपरिकल्पितं पौर्वापर्यं तदभावेऽपि समानम्। एवं 'वावसाने' इत्यत्रापि। द्वितीये तु पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परतो रेफस्य विसर्जनीयो भवति, अवसाने च रेफे स्थानिनि विसर्जनीय इति स्थान्यादेशस्य विषयता विवक्ष्यते। एवं 'वाऽवसाने' इत्यत्रापि। *दधिँ मधुँ इति*। 'अणोऽप्रगृह्यस्यानुनासिकः' अत्र 'वावसाने' इति वर्तते। ननु च लोक एवावसानशब्दो विरामे

न्यासः

त्वानन्तर्यलक्षणा षष्ठीति वदन्ति। तन्मते स्थानषष्ठ्यां हि 'रो रि' इत्यतो रेफस्यानुवृत्तस्य यत् स्थानित्वं तद् विरुध्यते। तदेवमेकापि विभक्तिर्यथायोगं विभज्यते। ननु चाभावपक्षेऽपि पूर्वस्मिन्नपि भागेऽनुच्चारणमस्ति, तत्रापि विसर्जनीयः प्राप्नोति—रथ इति, अस्ति ह्यत्रापि रेफात् प्रागुच्चारणम् ? नैष दोषः; तत्र हि प्रकृतं पदग्रहणं रेफेण विशिष्यते—रेफान्तस्य पदस्येति। न च पूर्वेण रेफेण रेफान्तं पदं भवति। नन्वेवमप्यर्थस्यैषा संज्ञा स्यादिति 'खरवसानयोः' इत्यत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषा नोपतिष्ठते। शब्दे हि सप्तमीनिर्दिष्टे सतीयमुपतिष्ठते, नार्थे। तदनुपस्थाने च परेण रेफेण रेफान्तस्य रथ इत्येतस्य पदस्य पूर्वो यो रेफस्तस्य व्यवहितस्यापि विसर्जनीयः स्यात्, नैष दोषः; ज्ञापकान्न भविष्यति, यदयम् 'उरण् रपरः' इति व्यवहितस्य रेफस्य विसर्जनीयमकृत्वा निर्देशं करोति, तज्ज्ञापयति—व्यवहितस्य रेफस्य विसर्जनीयो न भवतीति।

नन्वत्र लोके प्रसिद्धेरेवान्त्ये वर्णेऽवसानशब्दस्य संप्रत्ययो भविष्यति। प्रसिद्धो हि लोके—अन्त्ये वर्णेऽवस्यतेः प्रयोगः। तथा हि केनावस्यतीत्युक्ते वक्तारो वदन्ति—इकारेणोकारेण वेति। इकारादिवर्णेनावसानं करोतीत्यर्थः। ततः प्रदेश एवावसानग्रहणं कर्तव्यमिति नार्थः संज्ञासंज्ञिप्रणयनेन, नैतदस्ति; अवपूर्वो हि स्यतिः परिसमाप्तावपि वर्तते—अवसितो वाद इति, अवगमेऽपि वर्तते—अवसितोऽर्थ इति, पराभवेऽपि वर्तते—द्वयोर्विवादेऽवसितो देवदत्त इति। तत्र यदीयं नारभ्यते, तदावसानग्रहणे सन्देहः स्यात्—किमभिधानावसानशब्दस्य ग्रहणमिति ? 'विरामोऽवसानम्' इति तु संज्ञासंज्ञिसम्बन्धे क्रियमाणे परिसमाप्त्यादिरर्थो निवर्त्तितो भवति। एवमपि नार्थः संज्ञासंज्ञिसम्बन्धेन, प्रदेश एव ह्यन्तग्रहणं कर्त्तव्यम्—खरन्त्ययोरिति ? एतदपि नास्ति:

अवसानप्रदेशाः—'खरवसानयोर्विसर्जनीयः' इत्येवमादयः ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ

प्रथमाध्यायस्य चतुर्थः पादः ॥



पदमञ्जरी

प्रसिद्धः, यद्यप्यवपूर्वः स्यतिरवगतौ वर्तते केनैतदवसीयत इति ? पराभवेऽपि अवसितो देवदत्त इति । अवसानशब्दस्तु विराम एव प्रसिद्धः । न च नैक... वगतिपराभवयोः करणत्वं सम्भवतीति नार्थः संज्ञाकरणेन, तदाह—स... वसानयोर्लोकविदितत्वात् सिद्धमिति । संहिताशब्दोऽपि सन्निकर्षमात्रे प्रसि... पदयोरेव सन्निकर्ष इति वार्त्तिककारो मन्यते ॥

हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य चतुर्थः पादः ॥



न्यासः

एवं हि सन्देहः स्यात्—किमन्त्यस्य वर्णस्य ? उत पदस्य ? आहोस्विद् वाक्यस्येति ? तत्रान्त्यस्य विशेषणार्थं वर्णग्रहणं कर्त्तव्यं स्यात् । तस्मात् संज्ञासंज्ञिसम्बन्धः कर्त्तव्यः ।

वृक्षः, प्लक्ष इति । 'खरवसानयोर्विसर्जनीयः' । दधिँ मधुँ इति । 'अणोऽप्रगृह्यस्यानुनासिकः' इति । अत्र हि 'वावसाने' इत्यतोऽवसानग्रहणमनुवर्त्तते ।

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायां प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥



* समाप्तश्चायं प्रथमाध्यायः *

